श्रीवाजसनेयि – माध्यन्दिन –

# शतपथब्राह्मणम्

# The Śatapathabrāhmaṇa

ACCORDING TO THE
MĀDHYANDINA RECENSION
WITH THE
COMMENTARIES OF
SĀYAṆĀCĀRYA
AND
HARISVĀMIN

श्रीवाजसनेयि – माध्यन्दिन –

# शतपथब्राह्मणम्

# The Śatapathabrāhmaṇa

ACCORDING TO
THE MĀDHYANDINA RECENSION
WITH THE
COMMENTARY OF
SĀYAṆĀCĀRYA
AND
HARISVĀMIN

ॐ

श्रीमद्वाजसनेयिमाध्यन्दिन-

# शतपथ-ब्राह्मणम् ।

श्रीमत्त्रयीभाष्यकार-सायणाचार्यविरचित-
वेदार्थ-प्रकाशाख्यभाष्यसमेतम् ।

उपर्युक्तभाष्यानुपलब्धिस्थाने-
सर्वविद्यानिधानकवीन्द्राचार्यसरस्वती-
श्रीहरिस्वामिभाष्यसमेतं च ।
बहुभिर्विद्वद्भिः परिशोधितं च ।

तत्र
प्रथमद्वितीयकाण्डात्मकः पञ्चदशपथसंज्ञक

**प्रथमो भागः १**

NAG PUBLISHERS

**नाग प्रकाशक**
११ ए/यू. ए., जवाहर नगर, दिल्ली-७

ॐ

SHRIMAD-VAJSANEYI-MADHYANDIN-

# SHATPATH - BRÂHMANAM

## WITH VEDARTHAPRAKASH COMMENTARY

*By*

**SHRIMAT-TRAYIBHASHYAKAR SAYANACHARYA,**

*and*

**SARVAVIDYANIDHANA KAVINDRACHARYA SARASWATI**

**SHRI HARI SWAMI**

Edited by several learned persons

**Part I**

Chapters 1 and 2 viz. Punchdashpath dealing with Yagyas

NAG PUBLISHERS

NAG PUBLISHERS
11A/U. A. JAWAHAR NAGAR,
DELHI-110007 (INDIA)

NAG PUBLISHERS
(i) 11A/ U.A. Jawahar Nagar, Delhi-110007
(ii) 8A/3 U.A. Jawaharnagar, Delhi-110007
(iii) Jalalpur Mafi (Chunar-Mirzapur) U. P.

ISBN 81-7081-218-6 (Set)

1990

PRICE Rs 1500-00 per 5 vols. set



PRINTED IN INDIA
Published by Nag Sharan Singh for Nag Publishers, 11A/U.A. Jawaharnagar, Delhi-110007 and printed at New Gian Offset Printers, Delhi.

॥ श्रीशः शरणम् ॥

# अथ उपोद्घातः ॥

प्रारंभे कुलदेवतामिह महालक्ष्मीयुतां रेणुकां, भक्ताभीष्टकरीं मतिस्मृतियशोऽर्थायुःपरानन्ददाम् ॥
प्रत्यूहौघविदारणक्षममथो द्वैमातुरं शारदां, सूर्यं शुक्लयजुःप्रवर्तकमृषिं श्रीयाज्ञवल्क्यं नुमः ॥ १ ॥

अज्ञानवार्धिं परिशोष्य यन्मे ज्ञानं त्वदादाश्रुतितन्त्रयुग्मम् ॥
यत्क्षोणिवृन्दारकवृन्दवन्द्यं नित्यं नमामो गुरुमंडलं तत् ॥ २ ॥

ॐ नमः श्रीमत्सद्गुरुदयानन्दसरस्वतीचरणकमलेभ्यः ॥

पुराण इत्येव न सर्ववित्स्यान्नव्यो गुणी ज्ञः किमु नार्चनीयः ॥
चेदस्ति नव्येऽपि हि दोषलेशो नोपास्यते धूमयुतः किमग्निः ॥ ३ ॥

श्रुतिं शातपथीं शुक्लां वाजिमाध्यन्दिनीयकाम् ॥
उद्दिश्य वक्ष्यते कश्चिदुपोद्घातः समासतः ॥ ४ ॥

## धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः । मनुः अ. २ । १३.

विदितचरमेव वः सर्वेषां वेदशास्त्रविधारण्यसंचरिष्णूनां विद्वत्केसरिणां, तथा तत्र विहर्तुकामानां विद्यार्थिसार्थानां च । यच्छिरोनिर्दिष्टमनुवचसा धर्मं जिज्ञासमानैः परमप्रमाणत्वेन परमविज्ञानैकखनिर्धर्मार्थकामभमोक्षहेतुः कर्मोपास्तिब्रह्मकाण्डत्रयात्मिका सर्वतन्त्रस्वतन्त्रा श्रुतिरेव सम्माननीयेति । यत इह खल्वसारे संसारे संभूय महताऽभ्युदयेन विविधान् भोगानुपभुक्तवतां सतामपि ततो विमुच्य निश्रेयसस्य संसिषाधयिषया धर्मार्थकाममोक्षाख्यचतुर्विधपुरुषार्थमुपजीव्यैव प्रयतमानानां धर्म एव परमसाधनत्वेनाभिमतः । अत एव च जैमिनिः— "चोदनालक्षणोऽर्थो धर्मः" ( पू. मी. १ अ. १ पा. २ अ. ) इत्येवं धर्मलक्षणमसूत्रयत् । तथा ह्यस्य सूत्रस्य द्विधाऽभिव्यक्तिः चोदनेति क्रियायाः प्रवर्तकं वाक्यम् । चोदना—उपदेशः—विधिः—इति चानर्थान्तरम् । लक्ष्यते ज्ञायतेऽनेनेति लक्षणम् । इत्थं च चोदनैव लक्षणं करणं यद्विषयकज्ञानस्य तत्त्वे सत्यर्थवत्त्वं धर्मस्य लक्षणम् । अर्थवत्त्वं च सुखाधिकदुःखाजनकत्वमिति । अस्य सूत्रस्य—'यो धर्मः स चोदनाप्रमाणकः' इति शाब्दिको बोधः । 'यश्चोदनालक्षणकः स धर्मः' इत्यार्थिको बोधः । शाब्दिकबोधस्यापि "धर्मे चोदनैव प्रमाणं" "चोदना प्रमाणमेव" इत्येवं द्वौ प्रकारौ भवतः । आद्येन प्रत्यक्षानुमानवादिबुद्धादिमतनिरासः । द्वितीयेन वेदाप्रामाण्यनिरासः, इत्यन्यत्र विस्तरः । अत्र तु किंचित्संक्षेपतो दर्श्यते । तत्र प्रथमं धर्मस्य प्रत्यक्षादिप्रमाणागम्यत्वमुच्यते ॥

## धर्मस्य प्रमाणं प्रत्यक्षं न ।

तथाहि—ननु—प्रत्यक्षमेव धर्मे प्रमाणं मन्तव्यं तस्यान्यानपेक्षत्वाच्छब्दस्य सर्वदा प्रमाणांतरप्रमितविषयत्वादिति चेन्न, प्रत्यक्षं हि संयुक्तविषयत्वेन विद्यमानवस्तुन एवोपलंभकमतो न भविष्यति धर्मे प्रमाणं जायते । धर्मस्य तदानीमसत्त्वेनेन्द्रियागोचरत्वादिति भावः । तथाच श्लोकवार्तिके भट्टकुमारिलचरणाः—" भविष्यति न

---

१–" धर्मे सामान्यतः सिद्धे प्रमाणं चोदनोच्यते । स्वरूपादेस्ततः सिद्धिः स्वरूपं चेह सूच्यते ॥ १ ॥ द्वयमेकेन सूत्रेण कुक्षधर्माभ्यां निरूप्यते । स्वरूपे च हि तस्योक्ते प्रामाण्यं कथ्यतेऽर्थतः ॥ २ ॥ " इति श्लोकवार्तिके चोदनासूत्रे ॥

दृष्टं च प्रत्यक्षस्य मनागपि " इति । यद्यपि व्रीह्यादिद्रव्याणां प्रणीताप्रणयनादिक्रियाणां प्राक्प्रवणत्वादि-गुणानां च फलसाधनत्वाद्धर्मशब्देन व्यवहारो नापूर्वादीनामित्यादि श्रेयस्करभाष्ये शबरस्वामिभिरभिहितं, तथापि तेषां फलसाधनांश एव धर्मत्वात्फलस्य च जन्मांतरकालांतरादिभावित्वान्न स्वरूपतो धर्मत्वमतो न धर्मस्य प्रत्यक्षविषयत्वस्य संभावनेति । तदुक्तं भट्टैः श्लोकवार्तिके प्रतिज्ञासूत्रे-" द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते ॥ तेषामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्मता ॥ श्रेयःसाधनता ह्येषां नित्यं वेदात्प्रतीयते ॥ ताद्रूप्येण तु धर्मत्वं तस्मान्नेन्द्रियगोचरः " इति । अत एव च यागांगाग्नीषोमीयादिपशुहिंसादेः स्वरूपतो हिंसात्मकत्वेऽपि परिणामेऽभीप्सितफलजनकतयेष्टानुबंधित्वाच्च धर्मत्वं, श्येनादीनां विधिबोधितत्वेन स्वरूपतो धर्मत्वेऽपि परिणामेऽभीप्सितशत्रुवधलक्षणहिंसाजन्यानभीप्सितनरकरूपफलाक्रांतत्वादधर्मत्वमिति सर्वतन्त्रविदां राद्धांतः । तदेव स्पष्टीकृतं याज्ञवल्क्येन-" अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न तु " इति । अ. १ । १५६ ॥

## योगिप्रत्यक्षमपि धर्मे प्रमाणं न ।

नच भावनाबलजन्यं योगिप्रत्यक्षं यत्तद्विषयति धर्मे प्रमाणं भवेदिति वाच्यम् । भावना नाम, येषां योगा-भ्यासजनितसंस्कारविशेषाद्यन्मानसप्रत्यक्षं जायते तदित्युच्यते । तस्या अनुभूतविषयत्वान्नियतानुभूतेषु वस्तुष्वेव निश्चयरूपस्मृतिजनकतया स्मृतिष्वेवांतर्भवनात्तत एवोपरतिर्नातीन्द्रिये धर्मे प्रवृत्तिः । अत एवाह जैमिनिः-" सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलंभनत्वात् " इति । तथाच श्रुतिरप्याह-" नेंद्रियाणि नानुमानं वेदा एवैनं वेदयन्ति तस्मादाहुर्वेदाः " इति । एनं नाम धर्ममिति । तत्सिद्धं धर्मो न प्रत्यक्षस्य भूमिरिति ॥

## अनुमानमपि धर्मे प्रमाणं न ।

प्रत्यक्षपूर्वकत्वाच्चानुमानादेरपि । अनुमानं च व्याप्तिग्रहाधीनम् । व्याप्तिग्रहश्च कार्यकारणगतविशेषज्ञानावलंबी यदि च स्वतो धर्म एव लोकतो नावबुध्यते । कुतस्तरां तस्यान्येन सह कार्यकारणभावः सामान्यविशेषभावो वा लोकतोऽवबुध्येत । तथाच श्लोकवार्तिकं चोदनासूत्रे-" सामर्थ्यं नानुमानादेर्लिंगादिरहिते क्वचित् " इति । ततश्च धर्मो नानुमानगम्य इति सिध्यति ॥

## उपमानमपि धर्मे प्रमाणं न ।

नाप्युपमानं तत्र क्रमते । तस्य सादृश्यज्ञानसापेक्षत्वात् । सादृश्यज्ञानं च प्रत्यक्षमूलमेव । प्रत्यक्षं तु धर्मे सर्वथा न प्रवर्तत इत्युक्तमेव । ततश्चातीन्द्रियो धर्मो न प्रत्यक्षानुमानोपमानेति प्रमाणत्रितयेनाप्यव-गम्यत इति ॥

## धर्मस्य वेदा एव प्रमाणम् ।

किंतु धर्मस्य शब्दमूलत्वमेवाभिमन्यते शास्त्रकारैः । तथाच जैमिनिः-" औत्पत्तिकस्तु शब्दस्यार्थेन संबंधः, तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं, बादरायणस्यानपेक्षत्वात् " ( जै. सू. १।१।५।५ ) इति । अर्थेन सहौत्पत्तिकृतसम्बन्धवता शब्देन बोधितस्य धर्मस्य प्रमाणं विध्यादिरूपः शब्द एव । स चाबाधितेऽनुपलब्धे चार्थे प्रमाणं भवत्यन्यप्रमाणनिरपेक्षत्वात् । बादरायणाचार्यस्याभिमतमेतदिति । अतश्च प्रतिज्ञातं जैमिनिनैव-"चोदनालक्षणोऽर्थो धर्मः" इति । शब्दः, चोदना, विधिः, उपदेशः, इति चानर्थान्तरम् । उक्तं च श्लोकवार्तिके-" चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः " इति । तेन चात्रोपदेशशब्देन विध्याद्यात्मको वेदो विवक्षितः ॥

## अत्रार्थे सम्मतयः ।

अत एव च मनुर्जगौ " वेदोऽखिलो धर्ममूलम्, धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः " इति

( २ । ६–१३ ) । गौतमोऽप्याह–" वेदो धर्ममूलम् " इति ( १ । १ ) । किंच " यो हि पूर्वमुत्पन्नः सोऽनन्तरमुत्पत्स्यमानस्य ग्राहको भवति " इति न्यायेन वेद एव धर्मस्य यथार्थग्राहकं मूलं भवितुमर्हति । कुत एतत् ? यावत्सृष्टेर्वेदप्रभवत्वश्रवणात् । तथा च " शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् " ( ब्र. सू. अ. १ । ३ । ८ । २८ ) इत्यस्मिन्सूत्रे भाष्ये च श्रीमच्छंकराचार्यैः सुस्पष्टं विवृतमित्यास्तां तावत् । किंच लौकिकशब्दस्यानाप्तप्रणीतत्वे प्रमाणांतरसंवादेनाप्तप्रणीतत्वे च तत्प्रमाणांतरापेक्षया यथा प्रामाण्यं, न तथा वैदिकशब्दस्यापौरुषेयत्वेनोभयानपेक्षत्वात् । तथाच श्लोकवार्तिके औत्पत्तिके सूत्रे–" स्वप्रत्यान्तरापेक्षा स्यादनाप्तनरोक्तिषु । आप्तोक्तिषु परापेक्षा नोभयं चोदनासु तत् " इति । एवं च वेद एव धर्मस्य मुख्यं प्रमाणमिति निर्गलितोऽर्थः । इति ॥

## वेदा ह्यपौरुषेयाः ।

ननूक्तं वैदिकशब्दस्यापौरुषेयत्वं तत्कथं संघटत इति चेदुच्यते । तत्राहि–अध्येतृपरंपरयाऽध्ययनाध्यापनसंप्रदायस्याविच्छेदे सत्यपि कर्तुरस्मरणादात्मवत् । न च प्रलये संप्रदायविच्छेदः संभवतीति वाच्यम् । सृष्टिप्रलयमनंगीकुर्वाणाः पूर्वतन्त्रज्ञा हि वेदाध्ययनविषयिणीं गुरुशिष्यप्रणालीमविच्छिन्नामनादिं च वर्णयन्ति तस्मात् । तदुक्तं श्लोकवार्तिके वाक्याधिकरणे–" वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम् । वेदाध्ययनसामान्यादधुनाऽध्ययनं यथा" इति । ननु–भारतेऽप्येवं वक्तुं शक्यते इति चेन्न, तत्र व्यासः कर्तेति "को ह्यन्यः पुंडरीकाक्षान्महाभारतकृद्भवेत् " इत्यनया स्मृत्या महाभारतकर्तुः स्मर्यमाणत्वात् ॥

## अथ वेदस्य पुरुषास्वातन्त्र्यमात्रमपौरुषेयत्वम् ।

किंच ये तु श्रुतिस्मृतिपुराणेतिहासवशात्सृष्टिप्रलयावंगीकृत्य " शास्त्रयोनित्वात् " इत्यस्मिन्वैयासिकसूत्रे श्रीमच्छंकराचार्यैर्दर्शितदिशा " अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदः " ( बृ. २।४।१० ) इत्यादिश्रुतेः सर्वज्ञं सर्वविदं च परमात्मानं नित्यस्यापि वेदस्य योनिमिच्छन्ति तेऽपि वेदेषु परमात्मनः स्वातंत्र्यं न मन्यन्ते । तथाहि " धाता यथापूर्वमकल्पयत् " ( ऋ. सं. १०।१९०।३ ) " यः कल्पः स कल्पपूर्वः " इत्यादिश्रुत्या न्यायतश्चेतरसृष्टिवद्वेदस्यापि पूर्वकल्पानुसारेण स्वाध्यायाध्ययनमभ्युदयनिश्रेयसकारणं तदेवान्यथाकरणेऽनर्थकारणम् अश्वमेधादयो यागाः पुण्यहेतवो ब्रह्महत्यादयश्च नरकहेतवः इत्यादिनियतानुपूर्व्या एव स्मरणेन पुरुषनिश्वासवदप्रयत्नेन विरचनात् । भट्टकुमारिलपादा अपि वेदस्य पुरुषास्वातंत्र्यमात्रमपौरुषेयत्वमभिलषंति । तदुक्तं श्लोकवार्तिके शब्दनित्यत्वाधिकरणे–" यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता " इति । यदि सर्वज्ञस्य सर्वशक्तिमतः पुराणपुरुषस्यापि वेदे न स्वातन्त्र्यं तर्ह्यस्मादृशां पुंसां कुतस्तदिति ॥

## अथ प्रकारांतरेण पौरुषेयत्वाक्षेपपरिहारो ।

नन्वीश्वरस्य वेदं प्रति न केवलं निश्वासवदुपलब्धिनिमित्तत्वं, किंतु " प्रजापतिर्वेदमसृजत " इति ( श. प. ब्रा. ११ ) " तस्माद्यज्ञात्सर्वहुतऽ ऋचः सामानि जज्ञिरे । छंदांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत " इति वाजसनेयश्रुतौ पुरुषमेधे । " प्रजापतिर्वा इदमेक आसीत् । स तपोऽतप्यत । तस्मात्तेपानात्त्रयो देवा असृज्यन्ताग्निर्वायुरादित्यः । ते तपोऽतप्यन्त । तेभ्यस्तेपानेभ्यस्त्रयो वेदा असृज्यन्त । अग्नेर्ऋग्वेदो वायोर्यजुर्वेद आदित्यात्सामवेदः " इति । " स [ प्रजापतिः ] चतुर्होत्राऽतप्यत । सोऽताम्यत् । स भूरिति व्याहरत् । स भूमिमसृजत । अग्निहोत्रं दर्शपूर्णमासौ यजूंषि । स द्वितीयमतप्यत । सोऽताम्यत् । स भुव इति व्याहरत् । सोऽन्तरिक्षमसृजत । चातुर्मास्यानि सामानि । स तृतीयमतप्यत् । सोऽताम्यत् । स सुवरिति व्याहरत् । स

दिवमसृजत । अग्निष्टोममुक्थ्यमतिरात्रमृचः । एता वै व्याहृतय इमे लोकाः । इमान्खलु वै लोकाननु प्रजाः पशवश्छन्दांसि प्रजायन्ते " ( तै. ब्रा. २ । २ । ४ ) इत्यादिभिः श्रुतिभिर्जनकत्वमपि श्रूयत इति चेन्न । अत्रत्यानि ' असृजत् ' ' जज्ञिरे ' ' अजायत ' ' असृज्यन्त ' इतीमान्यपि आख्यातपदानि श्रुत्यन्तरैकवाक्यतया निश्वासवदुपलब्धिनिमित्तमात्रपरतयैव व्याख्येयानि भूयसीनामन्यासां श्रुतिस्मृतीनामनुग्रहात् ॥

## अत्रार्थे श्रुतिस्मृतीनां सम्मतयः ।

तथाहि-" यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै " इति श्वेताश्वतरश्रुतिः ( ६ । १८ ) । तया ब्रह्मणो वेदोपलब्धिरुपदेशद्वारेणैव निर्दिष्टा । किंच ' यज्ञेन वाचः पदवीयमायन् । तामन्वविन्दन्नृषिषु प्रविष्टाम् " इति ऐतरेयश्रुत्या वेदस्य लब्धिरेव निर्दिष्टा । तथा " ऋचामग्निर्दैवतम् । तदेव ज्योतिः । गायत्रं छन्दः । पृथिवी स्थानम् । अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ॥ इत्येवमादिं कृत्वा ऋग्वेदमधीयते । यजुषां वायुर्दैवतम् । तदेव ज्योतिः । त्रैष्टुभं छन्दः । अन्तरिक्षं स्थानम् । इषे त्वोर्जे त्वा वायव स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे ॥ इत्येवमादिं कृत्वा यजुर्वेदमधीयते । साम्नामादित्यो दैवतम् । तदेव ज्योतिः । जागतं छन्दः । द्यौः स्थानम् । अग्न आयाहि वीतये गृणानो हव्यदातये । नि होता सत्सि बर्हिषि ॥ इत्येवमादिं कृत्वा सामवेदमधीयते । अथर्वणां चन्द्रमा दैवतम् । तदेव ज्योतिः । सर्वाणि छंदांसि । आपः स्थानम् । शन्नो देवीरभिष्टये । इत्येवमादिं कृत्वाऽथर्ववेदमधीयते " इति ( गोपथब्रा. १ । २९ ) इत्यस्मिन्गोपथब्राह्मणे क्रमादृग्यजुःसामाथर्ववेदानां पृथिव्यन्तरिक्षं द्यौरापः स्थानानि, अग्निवाय्वादित्यचन्द्रमसो दैवतानीति वर्णितम् । अर्थात्तदभिधायकमंत्रानारम्यैव ऋग्यजुःसामाथर्वलक्षणमाविर्बभूवेति तात्पर्यम् । अत एव च " वाचा विरूपया नित्यया " इति ( ऋ. ८ । ६४ । ६ ) इत्यस्यां श्रुतौ च नित्यत्वाम्नानं संगच्छते । तथा स्मृतयोऽपि " अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा । आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः " इति ( ऐत. ब्रा. साय. भाष्ये उप. ) अस्यां स्मृतौ वेदवाण्या निश्वासवदुत्सर्जनमेव स्पष्टमभिहितम् । तथा " युगान्तेऽन्तर्हितान्वेदान्सेतिहासान्महर्षयः । लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा " इति ( ऐत. ब्रा. साय. भाष्ये उप. ) अनया स्मृत्या वेदानां लाभ एवोपदिष्टः । अत्रेतिहासः श्रुत्यन्तर्भूत एव मंतव्यः सहत्वोक्तेः । तथा " अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम् । दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम् " इति ( मनुः १ । २३ ) अत्र च दोहनं नामाध्यापनमेव । दोहनमध्यापनं च परसंक्रांतिसामान्येनेति मेधातिथिना व्याख्यातत्वात् । तथा " न कश्चिद्वेदकर्ता स्याद्वेदस्मर्ता चतुर्मुखः । वेदो नारायणः साक्षात्स्वयंभूरिति शुश्रुम " इति पराशरः । अत्र च स्पष्टः कर्तृनिषेधः । वस्तुतस्तु-उक्तश्रुतिस्मृतीनामर्थवादपरत्वान्न कर्तृत्वादिप्रतिपादकत्वं संभवति । तदुक्तं श्लोकवार्तिके वाक्याधिकरणे-" वेदेऽपि तत्स्मृतिर्या तु साऽर्थवादनिबन्धना । पारंपर्येण कर्तारं नाध्येतारं स्मरंति हि ॥ तेषामनेवमात्मत्वाद्भ्रान्तिः सेति च वक्ष्यते " इति ॥

## अथ पुनः प्रकारांतरेण पौरुषेयत्वाक्षेपपरिहारौ ।

ननु-काठकं कालापकं तैत्तिरीयकं कौथुमं माध्यंदिनीयकं इत्यादि समाख्याश्च कर्तृनिमित्ताः । ततश्च कृतकत्वाद्वेदानां पौरुषेयत्वमिति चेन्न, समाख्यानां हि योग्यतासत्त्वेऽपि कर्त्रस्मरणलक्षणानुपलब्ध्या साधिते कर्त्रभावे प्रवचननिमित्तत्वेनाप्युपपद्यमानत्वात् । संभवति च प्रवचनादिद्वारा संप्रदायप्रवर्तकविषयत्वेनासाधारण्यमिति नोक्तविशेषणत्वानुपपत्तिः । अथवा कठादिशब्दानां नित्यानां तच्छाखाविशेषाणामभिधायकत्वात्तत्तच्छाखीयैः पुरुषैः परंपरया अधीयमानाः शाखाः कठादिशब्दवाच्याः । ततोऽपि न विशेषणत्वानुपपत्तिः । तदुक्तं श्लोकवार्तिके वेदनित्यताधिकरणे " नित्यमेव निमित्तं वा कठत्वं जातिरस्ति नः । काठकादिप्रवृत्त्यर्थं व्यावृत्तं चरणान्तरात् "-इति ॥

## अथ पुनः प्रकारान्तरेण पौरुषेयत्वाक्षेपपरिहारौ ।

ननु—जननमरणवतां बबरादीनां " बबरः प्रावाहणिरकामयत । कुसुरुविन्द औद्दालकिरकामयत । हरिश्चन्द्रो राजा बभूव ह । कुशिकस्य सूनुः, आर्ष्टिषेणो होत्रमृषिभिर्निषीदन् " इत्यादिमन्त्रब्राह्मणयोरुभयत्र श्रवणात्तेभ्योऽर्वाक्तनत्वं वेदानामतस्ते पौरुषेया इति चेन्न, बबरादीनां पुरुषादिव्यक्तेरनभिमतत्वात् । तथाहि "परं तु श्रुतिसामान्यमात्रम्" (जै. सू. १।१।८।३१ ) इत्यस्मिन्सूत्रे शबरः प्राह—" यच्च प्रावाहणिरिति । तन्न, प्रवाहणस्य पुरुषस्यासिद्धत्वात् । नापि प्रवाहणस्यापत्यं प्रावाहणिः । प्रशब्दः प्रकर्षे सिद्धो वहतिश्च प्रापणे न त्वस्य समुदायः कचित्सिद्धः । इकारस्तु यथैवापत्ये सिद्धस्तथा क्रियायामपि कर्तरि । तस्माद्यः प्रवाहयति स प्रावाहणिः । बबर इति शब्दानुकृतिः । तेन यो नित्योऽर्थस्तमेवैतौ शब्दौ वदिष्यतः । अत उक्तं " परं तु श्रुतिसामान्यमात्रम् " इति । एवमेवान्यासां श्रुतीनां संगतिरुन्नेया " इति ॥

## समाधानान्तरम् ।

अथवा ऋतुलिंगन्यायेन प्रतियुगमनुवर्तमाना बबरादयः प्रवाहनित्यतया नित्याः, अतो न वेदस्यानित्यत्वं तन्मूलकं पौरुषेयत्वं वा प्रापयन्तीति । तथाच दर्शितं स्मृतिवशाच्छ्रीमदाचार्यचरणैः—"समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च " ( ब्र. सू. १ । ३ । ९ । ३० ) इत्यस्मिन्सूत्रे देवताऽधिकरणे । सा च स्मृतिरेवंरूपा स्मर्यते—" ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः । शर्वर्यन्ते प्रसूतानां तान्येवैभ्यो ददात्यजः । यथर्तुष्वृतुलिंगानि नानारूपाणि पर्यये । दृश्यन्ते तानि तान्येव तथा भावा युगादिषु । यथाऽभिमानिनोऽतीतास्तुल्यास्तैः सांप्रतैरिह । देवा देवैरतीतैर्हि रूपैर्नामभिरेव च " इति । शर्वर्यन्ते प्रलयांते । पर्यये घटीयन्त्रवदावृत्तौ । मनुरपि " सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक् । वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे " ( म. स्मृ. १ । २१ ) इति । अयं भावः । वेदे याः संज्ञास्ता एव तदुत्तरं उत्पन्नेभ्यो दत्ताः । यथेदानीन्तना दशरथपुत्रे दृष्टां श्रीरामेतीमां संज्ञां स्वपुत्रेभ्यो ददति तथेति ॥

## अथ पुनः प्रकारान्तरेण पौरुषेयत्वाक्षेपपरिहारौ ।

ननु—पदसंघातानि वाक्यानि तानि खल्वमूनि पुरुषकृतानि दृश्यन्ते । वेदा अपि वाक्यसमुदायात्मका एव । ततश्चैषां पौरुषेयत्वमिति चेत्तदपि न, औत्पत्तिकसूत्रेण पदपदार्थयोरनादिवृद्धपरंपरया " सोऽयं गकारः " इत्यादिप्रत्यभिज्ञाबलेन च नित्यत्वस्य साधितत्वाद्वाक्यवाक्यार्थयोस्तन्मूलकत्वेनैव नित्यत्वस्यार्थसिद्धत्वान्न तन्मूलकं पौरुषेयत्वमुत्प्रेक्षितुं शक्यम् । आक्रांतं चात्र बहुभिः पूर्वाचार्यैः सूरिभिश्चेत्युपरम्यते ॥

## निष्कर्षस्तु—

प्रमीयमाणकर्तृकत्वरूपं स्मरणगोचरकर्तृकत्वरूपं वा पौरुषेयत्वं न कर्तुरस्मरणादेः । न सजातीयोच्चारणानपेक्षोच्चारणविषये पुरुषबुद्धेः स्वातन्त्र्यरूपं पूर्वकल्पीयवेदानामेवास्मिन्कल्पे स्मरणपूर्वकं परमात्मना प्रवर्तमानत्वात् । नापि काठकादिसमाख्यामूलं पौरुषेयत्वं तासां प्रवचनादिनोपपत्तेः । नापि जनिमृतिवत्पुरुषश्रवणमूलकं पौरुषेयत्वं तेषामनित्यत्वेऽपि तत्संज्ञानां पूर्वकल्पीयवेदोद्धृतत्वात् । नाप्यनित्यशब्दमूलकं पौरुषेयत्वं शब्दनित्यत्वस्य "सोऽयं गकारः" इति प्रत्यभिज्ञया साधितत्वात् । नापि वाक्यत्वसामान्यात्तन्निमित्तं पौरुषेयत्वं नित्ययोः पदपदार्थयोर्द्वारा वाक्यवाक्यार्थयोरपि नित्यत्ववर्णनात् । नापि पुरुषादुत्पन्नत्वरूपं वा प्रमाणान्तरेणार्थमुपलभ्य तत्प्रकाशनाय नूतनानुपूर्व्या रचितत्वरूपं पौरुषेयत्वं निश्वासादिश्रुत्या दोहनादिस्मृत्या च स्वयंप्रादुर्भूतत्वप्रतिपादनात् । सिद्धे चैवं सर्वथा पौरुषेयत्वाभावे वेदा अपौरुषेया इति यदुक्तं तत्सर्वं निरवद्यम् ॥ इति ॥

## वेदाः स्वतः प्रमाणम् ।

यदि वेदा अपौरुषेयाश्चेति तदा नास्ति तेषां प्रमाणान्तरैः प्रयोजनं प्रत्यक्षवत् । अत उक्तं भगवता जैमिनिना—

"तत्प्रमाणं बादरायणस्यानपेक्षत्वात्" इति। यतो नास्ति वेदानां स्वबोध्यार्थबोधने प्रमाणान्तरापेक्षा। अतस्ते स्वतःप्रमाणम्। अत एव चाहुः सर्वदर्शनसंग्रहे जैमिनीये माधवाचार्याः-"वेदवादिनः प्रमाणत्वं स्वतः प्राहुः परतश्चाप्रमाणता" इति। स्वतःप्रामाण्यं चात्र "कारणगुणसंवाद्यर्थक्रियाज्ञानानधीनत्वे सति कारणदोषबाधकदोषवर्जितत्वे सति चानधिगताबाधितार्थबोधकत्वम्। प्रामाण्यप्रतियोगिकमप्रामाण्यं च परतो बोध्यम्। परतस्त्वं कुत इति चेद् बाधकज्ञानकारणदोषविसंवादिज्ञानाधीनत्वात्तस्य। ननु-कथं कारणगुणसंवाद्यर्थक्रियाज्ञानानधीनत्वं प्रतिपाद्यत इति चेदत्रोच्यते-"प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते। एनं विन्दति वेदेन तस्माद्वेदस्य वेदता" इति। इमां निरुक्तिमाश्रित्य-**वेदा ज्ञानलक्षणाः** इति आस्तिकपथे वर्तमानैः सर्वैः शास्त्रकृद्भिः स्वीकृतो राद्धान्तः। यदि च वेदा ज्ञानलक्षणास्तर्हि यावज्ज्ञानं प्रकाशकत्वसाधर्म्यात्स्वतः प्रमाणं रविरिव रूपविषये जायते। ज्ञाने हि स्वविषयस्य याथार्थ्येनाभिद्योतने उपादाने वा या विशिष्टा शक्तिरास्ते तस्याः स्वोत्पत्तिसहकृतत्वात्। नचात्माश्रयत्वदोषप्रसक्तिरिति वाच्यम्। तस्याः सवितुरुत्पत्तिशिष्टप्रकाशकत्वशक्तिवद्गुणत्वाभ्युपगमात्। वेदानां सृष्टेः प्राक्तनत्ववर्णनेन प्राथम्यात्तेषु आत्माश्रयत्वदोषप्रसरानवसराच्च ॥

ननु-च सैषा शक्तिः कारणगुणसंवाद्यर्थक्रियाविशिष्टज्ञानादिभिरुत्पाद्यत इति चेन्न। उक्तविशिष्टज्ञानस्याप्यन्यविशिष्टज्ञानस्यापेक्षा, तस्यापीतरविशिष्टज्ञानस्याप्यन्यविशिष्टज्ञानस्यापेक्षा। एवमनवस्थापरंपरापातप्रसंगात्। तां च परंपरां प्रतिरोद्धुं बलवत्तरकारणानुपलंभान्मूलतः प्रामाण्योच्छित्तिर्दुर्निवारैव स्यात्। तथा चाभ्यधायि शास्त्रदीपिकायां पार्थसारथिमिश्रैः-"प्रसिद्धानि प्रत्यक्षादीनि प्रमाणानि तदन्तर्गतं च शास्त्रम्। अतस्तदपि प्रमाणमेव। नच प्रसिद्धमन्येन परीक्षितव्यम्। स्वत एव तस्य स्वविषयोपस्थापने सामर्थ्यात्। यदि च परीक्ष्येत ततो येन परीक्ष्येत तस्याप्यन्येन परीक्ष्येत तस्याप्यन्येनेत्यनवस्था स्यात्" इति ॥

नन्विदं प्रामाण्यस्य स्वतस्त्वमुक्तयोग्यतासत्त्वेऽपि बाधकज्ञानकारणैर्भ्रमकरुणाविप्रलिप्सामिथ्यावादित्वापाटवादिदोषैरपहन्यत इति चेत्तदपि न संभाव्यते। कुत इति चेत्तत्रोच्यते-इमे पुरुषावलंविनो दोषाश्च वेदानामपौरुषेयत्वेन सर्वथा पुरुषबुद्धिसंस्पर्शाभावात्तेषु न प्रसज्यन्ते। अत एव श्लोकवार्तिके औत्पत्तिकसूत्रे प्रत्यपादि भट्टचरणैः-"औत्पत्तिकगिरा दोषः कारणस्य निवार्यते। अबाधोऽव्यतिरेकेण स्वतस्तेन प्रमाणता। सर्वस्यानुपलब्धेऽर्थे प्रामाण्यं स्मृतिरन्यथा" इति। अत एव च बृहदारण्यकोपनिषद्भाष्यवार्तिके द्वितीयाध्याये-"न च वेदोक्तितो वेदः श्रद्धेयार्थ इहेष्यते। कित्वमानत्वहेतूनां वेदवाक्येष्वसंभवात्। प्रामाण्यं वेदवाक्यानां न च मानान्तराश्रयात्। अक्षादेरपि मानत्वं यथोक्तादेव कारणात्" इति सुरेश्वराचार्यैरुक्तं संगच्छते। तत्सिद्धं वेदाः स्वतः प्रमाणमित्येतन्नापह्नोतुं शक्यमिति ॥

## वेदाश्च नित्या एव।

यथा च वेदाः स्वतः प्रमाणं तथा नित्या अपि संति। तथा च सूत्रितं देवताधिकरणे बादरायणाचार्येण-"अत एव च नित्यत्वम्" (ब्र. सू. १।३।९।१९) इति। तत्कथमुपपद्यत इति चेदत्र वदामः। सायणाचार्योक्तदिशा स्वीकर्तव्या नित्यतेति। तथा च तैः प्रतिपादितमैतरेयब्राह्मणभाष्योपक्रमे-"नित्यत्वस्य व्यावहारिकत्वात्। सृष्टेरूर्ध्वं संहारात्पूर्वो व्यवहारकालस्तस्मिन्नुत्पत्तिविनाशादर्शनात्। कलाकाष्ठादयो यथा नित्या एवं वेदोऽपि व्यवहारे कालिदासवाक्यवत्पुरुषविरचितत्वाभावान्नित्यः। आदिसृष्टौ तु कलाकाष्ठादिवद्वेदोत्पत्तिराम्नायते इत्यन्यदेतत्" इति। वस्तुतस्तु मीमांसकाः सृष्टिमनादिमेव मन्यन्ते बीजांकुरन्यायेनाखंडप्रवाहन्यायेन वा। तस्मात् "शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम्" इति वैयासिकसूत्रे दर्शितदृशा सृष्टिधारकाः किं बहुना सृष्ट्युत्पादका वेदा अपि उक्तन्यायद्वयेनैव नित्याः स्युरेवेति सिध्यतीति पृथग्वक्तव्यं नैव भवति ॥

## वेदा एवांतिमं प्रमाणम् ।

तात्पर्यन्तु यथा व्यवहारे कुत्रचन प्रमाणस्य परा सीमा मंतव्या भवति तां विना विवादास्पदवस्तुनो निर्णयासंभवात् । तथैव धर्मशास्त्रस्य निर्णयेऽपि परमं प्रमाणं वेदा एव । तेषां प्रागुक्तापौरुषेयत्वस्वतःप्रमाणत्वनित्यत्वेति गुणत्रयवैशिष्ट्यात्प्रमाणप्रमेयशास्त्ररूपत्वाच्च । प्रमाणशास्त्रत्वं धर्माधर्मनिर्णायकतया, प्रमेयशास्त्रत्वं च धर्माधर्मस्वरूपनिरूपकतया चेति । अत एव च " कदाचिदपि वयं वेदोदितमुपपादयितुं शक्नुमः, परं तु न वेदमंशांशतोऽपि पर्यनुयोक्तुं प्रभवामः " इति धर्मशास्त्रविदां घंटाघोष इति दिक् ॥

## वेदानां वेदत्वम् ।

वेदशब्दश्च ' विद ज्ञाने ' इति धातोः सकाशात्करणार्थीयघञ्प्रत्यययोगतोऽभवत् । वेद्यन्ते बोध्यन्ते प्रमाणांतरैरनधिगताबाधिताः दृष्टफलका अदृष्टफलकाः कचिच्च दृष्टादृष्टफलकाः क्रियाकलापा एभिरिति वेदा इति करणव्युत्पत्त्या वेदशब्दोऽयं सर्वत्र व्युत्पादितः । कचिच्च " नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः " ( ३ । १ । १३४ ) इति पाणिनीयसूत्रविहितान्प्रत्यययोगतः " वेदयति कर्म ब्रह्म च यः स वेदः " इत्येवं व्युत्पादितो दृश्यते । अत्र वेदशब्दविषये श्रीमदाचार्यपादानां भाष्यमत्यन्तं दर्शनीयमस्ति । तथाहि–" एकस्य वेदस्य वेद्यमिदं रूपमनिदं वेदरूपं, वेदनं वेदो ज्ञानम्, एकस्याद्वितीयस्य संविद्रूपस्येत्यर्थः । तस्यैकवेदस्य ब्रह्मणोऽनवगमादृगादयो वेदा बहवोऽभवन् । अत्र ऋगादिवेदास्तत्प्रतिपत्त्यर्थं विचारं कुर्वन्तीति वेदाख्यामवाप्नुयुः । अथवा सद्भावं साधयन्तीति वेदाः । अथवा विदन्ति वेदनभूता इति वा वेदाः । अथवा ब्रह्माधीनं परमात्मानं लभन्त इति वेदाः । अथवा ब्रह्मादीनामात्मानं लभन्त इति वेदाः । ब्रह्मण आवृतस्य लाभहेतव इति वा वेदाः । विद विचारणे; विद सत्तायां; विद ज्ञाने; विद्लृ लाभे; एतेषां धातूनां विषये वर्तन्ते यस्मात्ततो वेदा इत्युक्ताः । स एको वेदः । सत्यस्यास्य वेदस्वरूपस्य ब्रह्मणोऽनवगमाद्वेदा बहवः ख्याताः सर्वे वेदास्तदर्थदर्शनहेतवः " इति सनत्सुजातीये । अत एव चोच्यते " प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते । एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता " इति । श्रुतावपि–" नेन्द्रियाणि, नानुमानं, वेदा एवैनं वेदयन्ति तस्माद्वेदाः " इति । एनं नाम धर्ममिति । धर्ममित्युपलक्षणम् । तेन च तदादिकं पुमर्थचतुष्टयं बोध्यम् ॥

## वेदशब्दो ग्रंथवाची ।

स च वेदशब्दोऽलौकिकाबाधितानधिगतार्थबोधकवाक्यराशिलक्षणग्रंथवचनोऽपि भवति । तथाहि–" अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः " इति निश्वासाद्यनेकश्रुतेः । " वेदांश्चैके सन्निकर्षं पुरुषाख्याः " ( जै. सू. १ । १ । ८ । २७ ) " वेदो वाऽप्रायदर्शनात् " ( जै. सू. ३ । । ) इत्यादिदर्शनकृतां प्रवृत्तेः । " श्रुतिः स्त्री वेद आम्नायः " इत्यादिकोशाच्च ॥

## वेदशब्दस्य यज्ञियपदार्थविशेषवाचकत्वम् ।

अन्यश्च वेदशब्दो दर्भमुष्टिवचनः । ' वेदं कृत्वा वेदिं करोति कुशमुष्टिं॰ सव्यावृत्तं वत्सज्ञुं त्रिवृत्समूलकार्यम् " ( का. श्रौ. सू १ । ) इति कातीयसूत्रात् ॥

## वेदशब्दस्य स्वावांतरावयवसमुदायवाचकत्वम् ।

अपरश्च वेदशब्दो यः " ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः " इत्यादिषु ऋग्यजुःसामाथर्वभिः सह समस्तः स ऋग्यजुःसामाथर्वणां समूहवाचको भवति । " यदेतन्मण्डलं तपति तन्महदुक्थं ता ऋचः स ऋचां लोकोऽथ

यदेतदर्चिर्दीप्यते तन्महाव्रतं तानि सामानि स साम्नां लोकोऽथ य एष एतस्मिन्मण्डले पुरुषः सोऽग्निस्तानि यजूꣳषि स यजुषां लोकः सैषा त्रय्येव विद्या तपति " ( शत. १० । ५।२ । १ ) इति " अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवेतानि निश्वसितानि " ( बृ. उप. २ । ४ । १० ) इति । " एवमिमे सर्वे वेदा निर्मिताः सरहस्याः सब्राह्मणाः " ( गोपथब्रा. पू. २ । १ ) इत्यादिश्रुतिगतवेदशब्दोऽजहत्स्वार्थलक्षणया स्वस्वावान्तरावयवसमुदायवचनो भवतीति प्रोक्तश्रुतिवचोनिकरस्वरसात्प्रतीयते ॥

## पूर्वं वेदस्य यजुर्वेद इति संज्ञा ।

पुरा तेषां ऋग्यजुःसामाथर्वसमूहानामेकराशिभावेन स्थितत्वाद्यजुर्वेद इतीयं संज्ञाऽऽसीदनन्तरं श्रीवेदव्यासेन तेषां यज्ञप्रकरणानुरोधेन व्यसनादृगादिवेदसंज्ञा बभूवुः । स चेतिहासः " एक एवासीद्यजुर्वेदस्तं चतुर्धा व्यकल्पयत् । चातुर्होत्रमभूत्तस्मिंस्तेन यज्ञमकल्पयत् ॥ आध्वर्यवं यजुर्भिस्तु ऋग्भिर्वै हौत्रमेव च । औद्गात्रं सामभिश्चक्रे ब्रह्मत्वं चाप्यथर्वभिः ॥ ब्रह्मत्वमकरोद्यज्ञे वेदेनाथर्वणेन तु । ततः स ऋचमुद्धृत्य ऋग्वेदं समकल्पयत् ॥ होतृकं कल्प्यते तेन यज्ञवाहं जगद्धितम् । सामभिः सामवेदं च तेनौद्गात्रमरोचयत् । राज्ञस्त्वथर्ववेदेन सर्वकर्माण्यकारयत् " इत्यादिभिर्वायुपुराणे सुस्पष्टः । अत्रार्थे श्रुतिसम्मतिरप्यास्ते—" तदाहुः—यदृचा हौत्रं क्रियते यजुषाऽऽध्वर्यवं साम्नोद्गीथोऽथ केन ब्रह्मत्वमित्यनया त्रय्या विद्ययेति ह ब्रूयात् " इति ( शत. ब्रा. ११।५।८।७ ) । सीतोपनिषद्यपि—" ऋचो यजूंषि सामानि अथर्वांगिरसस्तथा । चातुर्होत्रप्रधानत्वाल्लिंगादित्रितये त्रयी ॥ अथर्वांगिरसं रूपं सामऽऋग्यजुरात्मकम् । तथाऽऽदिशन्त्याभिचारसामान्येन पृथक्पृथक् " इति । अत्र अथर्ववेदे ऋग्यजुःसाम्नां त्रयाणामप्यन्तर्भावात्त्रय्या विद्ययेत्युक्तमिति न श्रुतिपुराणयोर्विरोधः । तत इयं ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद इत्येषा वेदचतुष्टयी प्रसिद्धा समजनि ।

## वेदो द्विविधः ।

स च वेदो द्विविधः । मन्त्ररूपो ब्राह्मणरूपश्चेति । " मन्त्रब्राह्मणयोर्वेदनामधेयम् " इति कात्यायनापस्तम्बादिभिः प्रतिज्ञातत्वाच्च ॥

## मन्त्राणामनेकविधत्वम् ।

तत्र प्रथमं मन्त्रस्वरूपमुच्यते । तथाच कातीयश्रौतसूत्रीये प्रथमे परिभाषाऽध्याये निरूपितं, तद्यथा " ऋचो यजूंषि सामानि निगदा मन्त्राः " ( का. श्रौ. सू. ३ । ) इति । अस्यार्थः—' नियतपादाक्षरावसाना ऋचः ' ' अनियतपादाक्षरावसनानि यजूंषि ' ' गीतिविशिष्टा ऋच एव सामानि ' ' परसम्बोधनार्थाः प्रैषादयः ' निगदाः । एते हि अवयवा मन्त्रा इत्युच्यन्ते । प्रायो हीमे ऋग्यजुःसामरूपास्त्रयोऽवयवाः ऋग्यजुःसामाथर्वेषु चतुर्ष्वपि वेदेषु संदृश्यन्ते । अत एव वेदस्त्रयीशब्दवाच्यः । ' त्रयी ' इत्यत्रावयवार्थे तयप् प्रत्ययो न तु संख्यार्थे । किंच ऋग्वेदादिषु " यज्ञैरथर्वा प्रथमः पथस्तते " ( ऋ. १।८३।५ ) " चत्वारि शृंगा त्रयो अस्य पादाः " ( मा. सं. १७ । ९१ ) "अस्य यज्ञस्य तत्साधनभूतवेदस्य चत्वारि शृंगा शृंगाणि ब्रह्मोद्गातृहोत्रध्वर्य्वाख्यानि, त्रयः पादाः ऋग्यजुःसामलक्षणाः " इति उवटमहीधराभ्यां व्याख्यातम् । " वेदा वा एते उक्ताः " ( निरु. परि. १ । ७ ) इति यास्कोऽपि बभाषे । तेनाथर्ववेदः पश्चात्संजातस्तस्य च यज्ञसंस्थायां घटकत्वेनानुप्रवेशो नास्ति, इत्याद्यधुनातनानामैतिहासिकपरिपाट्याऽनुमिताः कुकल्पनाः परास्ता भवन्तीति । पुनरेषां

मन्त्राणां पंचविधत्वम् । १ करणमन्त्राः, २ क्रियमाणानुवादिनो मन्त्राः, ३ अनुमंत्रणमंत्राः, ४ जपस्तुतिरूपादिमन्त्राः, ५ वस्तुतत्त्वाख्यापकमन्त्राश्चेत्यादिभेदात् । तेषु केचन मन्त्राः प्रत्यक्षाः, केचन परोऽक्षाः, केचनाध्यात्मिका भवंति । तथोक्तं निरुक्ते–" तास्त्रिविधा ऋचः परोऽक्षकृताः प्रत्यक्षकृता आध्यात्मिक्यश्च । तत्र परोऽक्षकृताः सर्वाभिर्नामविभक्तिभिर्युज्यन्ते प्रथमपुरुषैश्चाख्यातस्य । अथ प्रत्यक्षकृता मध्यमपुरुषयोगास्त्वमिति चैतेन सर्वनाम्ना । अथाध्यात्मिक्य उत्तमपुरुषयोगा अहमिति चैतेन सर्वनाम्ना " इति ( निरु. ७ । २ । १ । १–३ ) । स्पष्टार्थमेतदिति न पुनर्विविच्यते । एषां सर्वेषां मन्त्राणां चातुर्होत्रे यज्ञे प्रयोगकालिकपदार्थोपस्मारकतया श्रवणमननाद्युपकारकतया चोपयोग इत्यन्यत्र विस्तरः ॥

## ब्राह्मणभागः ।

तत्र प्रथमं ब्राह्मणपदं निरुच्यते–" ब्रह्मणो वेदस्य मन्त्रराशेरिदं नाम यज्ञक्रियावस्तुतत्त्वादिनिरूपकं प्रवचनं ब्राह्मणम् " इति ब्राह्मणपदस्य निर्वचनम् । ब्रह्मशब्दस्य मन्त्ररूपोऽर्थस्तु वेदेनैव दर्शितः । तथाहि–" ब्रह्म वै मन्त्रः " ( श. प. ब्रा. ७ । १ । १ । ५ ) इति । यथा " पवित्रे करोति " इत्यत्र " पवित्रे स्थौ वैष्णव्यौ " ( वा. सं. १ । १२ ) इत्यमुं मन्त्रमादाय " यज्ञो वै विष्णुर्यज्ञिये स्थ इत्येवैतदाह " ( श. प. ब्रा. १ । १ । ३ । १ ) इति च तस्य प्रवचनलक्षणं ब्राह्मणम् । एवमन्यदप्युदाहार्यम् । किञ्च भाष्यकारैरपि सर्वत्र एतदनुगुणतया स्वस्वभाष्ये ब्राह्मणपदं व्याख्यातम् । तथाहि–" ब्राह्मणं नाम कर्मणस्तन्मन्त्राणां च व्याख्यानग्रन्थः " ( तै. सं. १ । ५ । १ ) इत्यत्र भट्टभास्करः । " तत्र शतपथब्राह्मणस्य मंत्रव्याख्यानरूपत्वाद्व्याख्येयमन्त्रप्रतिपादकः संहिताग्रन्थः पूर्वभावित्वात्प्रथमो भवति" इति कण्वसंहिताभाष्ये सायणः । "यद्यपि मन्त्रब्राह्मणात्मको वेदस्तथापि ब्राह्मणस्य मन्त्रव्याख्यानरूपत्वान्मंत्रा एवादौ समाम्नाताः " इति च तैत्तिरीयसंहिताभाष्ये सायणः । " नैरुक्त्यं यस्य मन्त्रस्य विनियोगः प्रयोजनम् । प्रतिष्ठानं विधिश्चैव ब्राह्मणं तदिहोच्यते " इति वाचस्पतिमिश्राः । " तच्चोदकेषु मन्त्राख्या "–" शेषे ब्राह्मणशब्दः " ( पू. मी. सू. २ । १ । ७ । ३२–३३ ) इति च जैमिन्याचार्यो निरवोचत् । इति ॥

## ब्राह्मणभागस्य वेदत्वम् ।

ननु–मन्त्रराशिर्वेदत्वेनानादिकालमारभ्याद्यावधि यथा प्रसिद्धः सर्ववादिसम्मतश्च, न तथा ब्राह्मणराशिस्तद्विषये वादिविप्रतिपत्तिसंभवात् ।

## स्वामिदयानंदप्रभृतिवादिमतप्रत्याख्यानम् ।

तथा च स्वामिदयानन्देन स्वर्ग्वेदादिभाष्यभूमिकायां वेदसंज्ञाविचाराख्यप्रकरणे " मन्त्रा एव वेदपदवाच्या न ब्राह्मणानि " इत्यभाणि । तत्समर्थनाय च वहवो हेत्वाभासा अप्युपक्षिप्ताः । तेषां सर्वेषां यथावदुद्धरणपूर्वकं खण्डनं महामोहविद्रावणग्रन्थकर्त्राऽत्यर्थं सूक्ष्मेक्षिकयाऽकारि । स च महामोहविद्रावणस्थाक्षेपतत्परिहाररूपोंऽशः सनातनधर्मप्रदीपे प्रमाणप्रकाशे विस्तरतः प्रतिपादितोऽस्ति । स तत्रैव द्रष्टव्यः । विस्तरभिया नात्रोद्ध्रियते । तथा पंडितश्रेष्ठसारस्वतदीनानाथशास्त्रिमहोदयैरपि स्वामिदयानन्दस्य षडपि हेत्वाभासाः मर्मस्पृशा पाण्डित्येन सर्वथा सम्यक्तया खण्डिताः । स च खण्डनांशोऽस्माभिः संपाद्याग्रे पृथक् संयोजयिष्यते, सोऽवश्यमालोचनीयः । पुनश्च स्वामिदयानन्दस्य हेत्वाभासान्द्रढयितुकामेन लाहोरनिवासिप्रो. भगवद्दत्तमहोदयेन स्वीयवैदिकवाङ्मयेतिहासस्य द्वितीयभागे ' क्या ब्राह्मण वेद है ? ' इति शीर्षकांकितमेकं प्रकरणं विलिख्य महानट्टहासो व्यधायि । तदीयाल्पस्वल्पमहत्सुमहदाद्याक्षेपाणां खण्डनायाग्रिममेवोत्तरं प्रभवि-

व्यवस्ति । तथाहि–"अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वांगिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि निश्वसितानि" ( बृ. उ. २।४।१० ) इति । अत्र श्रीशंकराचार्याः–" इतिहास इत्युर्वशीपुरूरवसोः संवादादिरूप उर्वशी हाप्सरा इत्यादि ब्राह्मणमेव । पुराणमसद्वा इदमग्र आसीदित्यादि । विद्या देवजनविद्या सोऽयमित्याद्या । उपनिषदः प्रियमित्येनदुपासीतेत्याद्याः । श्लोका ब्राह्मण-प्रभवा मन्त्रास्तदेते श्लोका इत्यादयः । सूत्राणि वस्तुसंग्रहवाक्यानि वेदे यथाऽऽत्मेत्येवोपासीतेत्यादीनि । अनु-व्याख्यानानि मन्त्रविवरणानि । व्याख्यानान्यर्थवादाः । अथवा वस्तुसंग्रहवाक्यविवरणान्यनुव्याख्यानानि । यथा चतुर्थाध्याये आत्मेत्येवोपासीतेत्यस्य यथा वाऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवमित्यस्यायमेवाध्याय-शेषः । मन्त्रविवरणानि व्याख्यानानि । एवमष्टविधं ब्राह्मणम् । एवं मन्त्रब्राह्मणयोरेव ग्रहणम् । नियतरचनावतो विद्यमानस्यैव वेदस्याभिव्यक्तिः पुरुषनिश्वासवन्न च पुरुषबुद्धिप्रयत्नपूर्वकः । अतः प्रमाणनिरपेक्ष एव स्वार्थे । तस्माद्यत्तेनोक्तं तत्तथैव प्रतिपत्तव्यम्, आत्मनः श्रेय इच्छद्भिर्ज्ञानं वा कर्म वा इति "। इति अस्यां हि श्रुतौ संहिता ब्राह्मणमित्युभावपि वेदभागौ ब्रह्मणो निश्वसितमित्युक्तम् । " अस्य महतो भूतस्य निश्वसितम् " "अस्यै-वैतानि निश्वसितानि " इत्युपक्रमोपसंहाराभ्यां मध्येऽभ्यस्ता इतिहासपुराणादयो वेदान्तर्भूता एवेत्यवश्यं मन्तव्यं भवति । अत एव च श्रीशंकराचार्यैः स्वभाष्ये " एवमष्टविधं ब्राह्मणम् " " एवं मन्त्रब्राह्मणयोर्ग्रहणम् " इत्युपसंहृतम् । अस्यां च श्रुतौ " ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः " इति ऋगाद्युक्तवेदशब्देन मन्त्र-ब्राह्मणयोर्द्वयोरपि ग्रहणमुपदर्शितं तदेव युक्तम् । तेन च प्रोफेसरमहाशयैः स्वं पक्षमुपोद्बलयितुं यत्प्रमाणसर्वस्वं " एवमिमे सर्वे वेदा निर्मिताः सब्राह्मणाः " इत्यादिगोपथब्राह्मणमुपन्यस्तं तदपि उपर्युपनिविष्टा बृहदारण्यकश्रुतिश्च विषयैक्यतया न भिन्नार्थे । " शब्दोपात्तानुमितयोरर्थयोः शब्दो-पात्तोऽर्थो ज्यायान् " इति न्यायेन प्रोफेसरमहाभागैर्गोपथश्रुतितोऽनुमितोऽर्थः प्रत्यक्षया बृहदारण्यकश्रुत्या तत्समानार्थिकया स्वाश्रयभूतया गोपथश्रुत्या च बाधितत्वाद्धेत्वाभास एवेति सुस्पष्टम् । एवमेव प्रोफेसरमहा-भागानामितरेऽप्याक्षेपाः आनुमानिका इति पूर्ववदेव श्रुतिबाधितत्वादकिंचित्करा इति स्थालीपुलाकन्यायेन बोध्यम् । विस्तरभिया नाधिकमाक्रम्यतेऽत्र विषये । तदेतत्सकलमस्मत्सूत्रभाष्यकाराणां दृक्पथे आसीदत एव तैस्तत्र तत्र स्वस्वसूत्रभाष्यादौ मंत्रब्राह्मणयोर्वेदसंज्ञा प्रतिज्ञाता । तथाहि–" मंत्रब्राह्मणयोर्वेदनामधेयम् " ( का. प्र. परि. सू. १ । १ ) ( आप. श्रौ. सू. २४ । १ । ३१ ) ( सत्या. श्रौ. सू. १ । १ । ७ ) " मंत्रब्राह्मणं वेद इत्याचक्षते " ( बौ. गृ. सू. २। ६ । ३ ) ( बौ. ध. सू. २ । ९ । ७ ) " आम्नायः पुनर्मंत्राश्च ब्राह्मणानि च " (कौ. सू. १ । ३ ) " मंत्राश्च ब्राह्मणं च वेदः " ( शबरस्वामी २ । १ ।३३) " मंत्रब्राह्मणयोर्वेदनामधेयम् " ( भट्टकुमा. तंत्रवा. १ । ३ । १० ) " वेदशब्देन ऋग्यजुःसामानि ब्राह्मण-सहितान्युच्यन्ते" ( मेधातिथिः मनु. २ । ६ ) " वेदो मंत्रब्राह्मणाख्यो ग्रंथराशिः " ( मस्करिः तै. सं. भा. १ । १ ) " मंत्रब्राह्मणात्मको वेदः " ( सायणाचार्यः तै. सं. भा. उप. १ । १ ) " ऋग्वेदादिगिरोच्यन्ते ऋग्यजुःसामलक्षणाः । अथर्वाङ्गिरसस्तद्वन्मंत्राः स्युर्ब्राह्मणोद्भूताः ॥ इतिहासादिसंभेदभिन्नं ब्राह्मणमेव तु । ब्राह्मत्र प्रसिद्धस्तु नेतिहासादिरिष्यते ॥ मंत्रब्राह्मणयोर्वेदनामधेयत्वकारणात् । ऋग्वेदादिगिरा तस्मान्मंत्रब्राह्मणयोर्ग्रहः " ( सुरेश्वराचार्यः बृ. उप. भा. वा. २ । ४ ) " तच्चोदकेषु मंत्राख्या " " शेषे ब्राह्मणशब्दः " ( जैमिनिः २ । १ । ३३ ) इत्यादि । तेन सिद्धं यन्मंत्रब्राह्मणे उभे अपि वेदपदभाजी इति ।

## ब्राह्मणस्य स्वगतत्रैविध्यम् ।

ब्राह्मणमपि स्वगतविषयनिर्वचनभेदेन त्रैविध्यमावहति " विधिर्निन्दा प्रशंसाऽध्यात्ममधियज्ञमधिदैवतमधिभूत-

मनुवचनं परकृतिः पुराकल्पः सृष्टिरिति ब्राह्मणम् ” इति प्रतिज्ञापरिशिष्टे कात्यायनः ब्राह्मणं दशधा दर्शितवान् । “ हेतुर्निर्वचनं निन्दा प्रशंसा संशयो विधिः । परक्रिया पुराकल्पो व्यवधारणकल्पना ॥ उपमानं दशैते तु विधयो ब्राह्मणस्य तु ” इति मीमांसाभाष्ये ( २ । १ । ८ ) त्रयीविख्याताः शबरस्वामिनोऽपि दशधा प्रोचुः । “ इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानि ” इति बृहदारण्यकोपनिषदि ( २ । ४ । १० ) तु श्रुत्या स्वयमष्टधात्वं प्रत्यपादि । “ विधिर्विधेयस्तर्कश्च वेदः ” ( पार. गृ. सू. २ । ९ ) इति विधितर्कात्मकौ द्वावेव भागौ पारस्कराचार्यो व्यकल्पयत् । इत्यादि ब्राह्मणस्य विभक्तीकरणं स्वयं श्रुत्या कात्यायनादिभिश्च व्यधायि । एतेषामुदाहरणानि त्वग्रे स्पष्टीभविष्यन्ति ।

## ब्राह्मणशब्दस्य ग्रंथवाचकत्वम् ।

एवमुपर्युक्तदिशा ब्राह्मणशब्दः स्वावयवानुक्त्वा तत्समुदायमपि निर्वक्ति । यथा वेदशब्दो ग्रन्थवचनस्तथैतेन ब्राह्मणशब्दोऽप्येतत्प्रतिपादकग्रन्थाभिधायको भवतीति सुव्यक्तम् । स च ब्राह्मणशब्दः नपुंसकलिंगत्वेन रूढः । जातिवाचकब्राह्मणशब्दस्तु पुंल्लिंगत्वेन यथाऽऽहुर्मेदिनीकोशकाराः—“ ब्राह्मणं ब्रह्मसंघाते वेदभागे नपुंसकम् ” इति । ब्रह्माणि नाम मन्त्राः संहन्यन्ते स्पष्टीक्रियन्ते व्याख्यायन्ते वा यस्मिंस्तादृशे वेदभागे ब्राह्मणशब्द इत्यर्थः । ब्राह्मणेष्वपि तत्र तत्र “ दूरोहणं रोहति तस्योक्तं ब्राह्मणम् ” ( ऐ. ब्रा. ६ । २२ ) “ यद्गौरवीतं तस्योक्तं ब्राह्मणम् ” ( ऐ. ब्रा. ८ । २ ) “ यद्वाकोवाक्यं ब्राह्मणं तदेवैतेनाप्नुवन्ति ” ( शत. ब्रा. ४।६।९।२० ) “षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहोरात्रे इति च ब्राह्मणं समासेन ” “ सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्रा इति च ब्राह्मणं विभागेन विभागेन ” ( निरु. ४ । २७ ) इति नपुंसकलिंग्येव ब्राह्मणशब्दः प्रयुक्तो दृश्यते । क्वचित् “ मन्त्राः सब्राह्मणाः प्रोक्तास्तदर्थं ब्राह्मणं स्मृतम् । कल्पना च तथा कल्पाः कल्पश्च ब्राह्मणस्तथा ” ( विष्णुधर्मोत्तरे खं. ३ अः ७ ) इत्यत्र विष्णुधर्मोत्तरादौ उभयलिंग्यपि दृक्पथमेति । महाभारते उद्योगपर्वण्यपि “ य इमे ब्राह्मणाः प्रोक्ता मन्त्रा वै प्रोक्षणे गवाम् । एते प्रमाणं भवत उताहो नेति वासव ” ( अ. १६ ) इति ब्राह्मणशब्दः पुंल्लिंग्येव नियुक्तो व्यासेन । यद्यप्येवं ग्रन्थवाचकब्राह्मणशब्दस्योभयलिंगत्वेन व्यवहारो विलोक्यते तथापि तत्रापि विशेषतः नपुंसकलिंग्येव वाहुल्येन दृश्यते, तत्रैतदेव कारणं स्याद्यत् पुंल्लिंगी ब्राह्मणशब्दो यथा ग्रन्थवाचकस्तथा जातिवाचकोऽपीति तस्मिन्नुच्चरिते को वाऽर्थः प्रतिपत्तव्य इति सन्देहे प्रकरणादिकमालोच्यानन्तरं विवक्षितार्थोपलब्धिः । एवं विलंबो मा भूत्किन्तु झटित्यर्थोपस्थापकत्वं भवतु । इत्येतेनैव हेतुना जातिवाचको ब्राह्मणशब्दः पुंल्लिंगी, ग्रन्थवाचको ब्राह्मणशब्दो नपुंसकलिंगी इत्येवं व्यवस्थया रूढिमापद्यते स्मेति प्रतिभाति ।

## वेदे सम्प्रदायद्वयम् ।

वेदे तावत् द्वौ सम्प्रदायौ—एको ब्रह्मसम्प्रदायोऽपरश्चादित्यसम्प्रदायः । कल्पादौ[1] भगवता श्रीविष्णुना शंखासुरापरनामानं हयग्रीवदैत्यं व्यापाद्य तदाहृतो वेदो तत आनीय ब्रह्मणे प्रददे । ब्रह्मा च तं द्वेधा विभज्यैकं भागं भगवत्यादित्ये निहितवान् । अन्यं च भागं स्वपुत्रादिभ्यो वसिष्ठांगिरोमरीच्यत्रिप्रभृतिभ्योऽध्ययनविधिना प्रायच्छत् । तेऽपि स्वपुत्रपौत्रप्रपौत्रशिष्यप्रशिष्येभ्यः प्रायच्छन् । ततोऽग्रे द्वापरान्ते, भगवान्वेदव्यासोऽल्पप्रज्ञानल्पशक्तींल्लोकाननुजिघृक्षुः एकं वेदं ऋग्यजुःसामाथर्वभिदा चतुर्धा व्यस्य क्रमात्पैलवैशंपायनजैमिनिसुमन्तूनध्यापयामास । तैश्चैते वेदा अग्रे शाखाप्रभेदादिना परंपरया विस्तारं नीताः । सैषा वेदचतुष्टयी ब्रह्मसम्प्रदायः इति प्रसिद्धिं लेभे ।

---

1-इयं चाख्यायिका वराहपुराणादौ प्रसिद्धा ।

भगवान्योगीश्वरो याज्ञवल्क्योऽप्यस्यां ब्रह्मपरंपरायामेव तिष्ठमानः सन्महर्षेर्विदग्धशाकल्याद्वेदमधिजगे । परन्तु केनचिदाकस्मिककारणेन गुरुणा सह विवदमानः सन्गुरोः शापभिया ततोऽधीतं वेदं तत्याज । ततो वेदविवर्जितो याज्ञवल्क्यः स्वमातामहं महर्षिं वैशंपायनमुपेत्य यजुर्वेदमधीतवान् । परं च दैवदुर्विलासादत्रापि गुरुणा सह कलहे संवृत्ते तदधीतं वेदं त्यक्तवान् । ततश्च पुनरपि वेदवर्जितो याज्ञवल्क्य इदानीमहं मानुषमाचार्यं नोपैमीति निश्चयपूर्वकं सुदृढं तपस्तप्त्वा भगवन्तं त्रयीमयमादित्यं सन्तोष्य च तस्माच्चतुरो वेदानृग्यजुःसामाथर्वाख्यांश्चाधिजगे । गुर्वनुज्ञया च तान् शाखाप्रशाखादिभिदा परम्परया वितेने । सैषा वेदचतुष्टयी—**आदित्यसंप्रदायः** इति प्रसिद्धिमापन्ना ॥

ननु—याज्ञवल्क्येन तु रवेः केवलं यजूंष्येव समधिगतानीति श्रीमद्भागवतादिषु[1] प्रसिद्धेर्भवद्भिः कथमुच्यते स चतुरो वेदानधिजग इति, किं वाऽत्र प्रमाणमिति चेत् ? मैवं शंक्यताम् । प्रमाणमपि दीयते श्रृणुत ! "स तथेति प्रतिज्ञाय प्रविश्यादित्यवाजिनः । कर्णेऽपठत्ततो वेदांश्चतुरोऽपि च तन्मुखात्" इति (स्कांदे नागरखण्डे अ.२७८) तथा "इत्युक्तो भगवान्सूर्यो याज्ञवल्क्यं महामुनिम् । वेदान्षडंगसहितान्रहस्यादिसमन्वितान् । चतुरोऽध्यापयामास स्थापयित्वा रथे निजे" इति ( आत्मपुराणे अ. ७ । ३८–४० ) तथा "अथ ह याज्ञवल्क्यः स्वमेव ब्रह्मचारिणमुवाचैता गाः सौम्योदज सामश्रवा३ इति ता होदाचकार" इति (शतपथब्राह्मणे बृहदारण्यकोपनिषदि) । अत्र श्रीमच्छंकराचार्यभाष्यं—"अथ ह याज्ञवल्क्यः स्वमात्मीयमेव ब्रह्मचारिणमन्तेवासिनमुवाचैता गाः हे सौम्य ! उदजोद्गमयास्मद्गृहान्प्रति हे सामश्रवः ! सामविधिं हि श्रृणोत्यतोऽर्थाच्चतुर्वेदो याज्ञवल्क्यः" इति ( बृ. आ. उप. भाष्ये ३ । १ । २ ) तदेतैः प्रमाणैः स्पष्टमभवद्याज्ञवल्क्येन रवेस्त्रयी चतुष्टयी लब्धेति ॥

## एवं वेदे वेदचतुष्टय्या द्वित्वेन संप्रदायद्वितयत्वम् ।

तच्च स्पष्टमभिहितं जाबालसंहितायां—" ब्रह्मणः संप्रदायोऽयं व्याससंदर्शितोऽभवत् । विभक्तस्यैव वेदस्य संप्रदायो द्विधा मतः । ब्रह्मणः संप्रदायस्तु आदित्यस्य तथा मतः । अयातयामसंज्ञोऽयं कृत्स्नकर्मप्रकाशकः । यावद्ब्रह्मप्रकाशको रविरूपश्च यो मतः । ब्रह्मणः संप्रदायस्तु मिश्रत्वान्न तथा मतः " इति ( जा. सं. अ. १ )॥

## शुक्लकृष्णत्वे कारणानि ।

तत्रादित्यसम्प्रदायः शुक्लः, ब्रह्मणः सम्प्रदायः कृष्णः इत्युच्यते । शुक्लत्वे च कारणं मन्त्रब्राह्मणयोः पार्थक्येनाभिधानं, कृष्णत्वे च कारणं तयोर्व्यामिश्रत्वम् । एतच्चेदानीमेवानुपदोक्तजाबालसंहितावचोभिः स्पष्टं प्रतीयते । यद्यप्यत्र जाबालसंहितावचोभिः शुक्लत्वकृष्णत्वे सामान्येन संप्रदायद्वयस्य मते तथापि ते उभयसम्प्रदायगतयजुर्वेदविषयक इत्यवधेयमन्यभूयःप्रमाणांतरसंवादात् । तथाहि—"प्रवर्तितः खण्डशस्तैर्न सम्यग्बुध्यते बुधैः । आध्वर्यवं क्वचिद्धौत्रं क्वचिदित्यव्यवस्थया ॥ बुद्धिमालिन्यहेतुत्वात्तद्यजुः कृष्णमीरितम् । याज्ञवल्क्यस्ततः सूर्यमाराध्यास्मादधीतवान् ॥ व्यवस्थितप्रकरणं यजुः शुक्लं तदीर्यते । पौराणिकीं कथामेतां वेदव्याख्यान आदरात् " इति ( कण्वसंहिताभाष्योपक्रमे श्रीसायणाचार्याः प्राहुः ) । किं चार्यविद्यासुधाकराख्यवैदिकवाङ्मयेतिहासे पं. यज्ञेश्वरभट्टा अपि श्रीसायणाचार्योक्तिमेवानुवदंति स्म । वैयासिकचरणव्यूहभाष्यकारैस्तु अन्यदेव कारणमुट्टंकितं तद्यथा—" एतत्सखिलं सशुक्रियं मध्याह्ने शुक्लवर्णेन सूर्येण दत्तं तच्छुक्लयजुः परिसंख्यातमित्यर्थः । वेदोपक्रमणे चतुर्दशीयुक्तपूर्णिमाग्रहणात् शुक्लयजुः, तैत्तिरीयकैर्वेदोपक्रमणे औदयिकपर्वग्रहणादर्थात्कृष्णप्रतिपद्विद्धपौर्णमासीग्रहणात्कृष्णयजुरिति वा " इति । आत्मपुराणे चान्यदेव

---

१–इयं च कथा श्रीमद्भागवतात्मपुराणादौ अंशांशतः प्रसिद्धा ।

कारणमुक्तं तद्यथा—"शुक्लं कृष्णं यजुर्द्वेधा कृष्णं स्यात् तैत्तिरीयकम् । शुक्लं वाजसनेयिनामिति कात्यायनोऽब्रवीत् ॥ वांत्या च भक्षणेनापि कृष्णान्यासन्यजूंष्यपि " ( आत्मपु. अ. १० । २६ ) इति । शतपथब्राह्मणे तु—" आदित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते "—( श. प. १४ । ९ । ४ । ३३ ) इति ॥ यजूंषि शुक्लानि, अर्थात्तदितराणि कृष्णानीति गम्यते । केवलं शुक्लत्वमुक्तं तत्र कारणं तु नोक्तम् । आदित्यादागतानि आदित्यानि ॥

## यातयामत्वमयातयामत्वं च।

एतेन यातयामत्वायातयामत्वे च निरुक्ते भवतः । तथा चोक्तं देवीभागवते—" अयातयामानि तु भानुगुप्तान्यन्यानि जातानि तु नीरसानि । यजूंषि तेषामथ याज्ञवल्क्यो ह्ययातयामानि रवेरवाप " इति ( दे. भा. स्कं. ९ अ. ९ ) । " वांतोच्छिष्टत्वं यातयामत्वम् " इति निरुक्ते यास्को निरवोचत् । यातयामत्वाद्भिन्नमयातयामत्वमित्यर्थान्निर्गच्छति । एतदेव च प्रकृत्य चिंतितं भगवता कात्यायनेन—" यजुर्वेदः कल्पतरुः शुक्लः कृष्ण इति द्विधा । सत्त्वप्रधानाच्छुक्लाख्यो यातयामत्ववर्जितात् ॥ १० ॥ कृष्णस्तु तित्तिरेर्भक्षात्तामसाद्यातयामतः । अतः शुक्लस्य यजुषो नोपाकुर्यान्न चोत्सृजेत् ॥ ११ ॥ तदुपाकर्म चोत्सर्गः किन्त्वध्यापनतो व्रजेत् । कृष्णस्य तद्यातयामनिवृत्त्यर्थं हि चोच्यते " इति मन्त्रभ्रांतिहरापरपर्यायसूत्रमन्त्रप्रकाशिकायाम् । एतेन कात्यायनमते तु सत्त्वप्रधानमयातयामत्वं शुक्लत्वे, तमःप्रधानं यातयामत्वं कृष्णत्वे च हेतुरित्युक्तं भवति । केनापि कारणेन भवतु यजुर्वेदे शुक्लः कृष्ण इति द्वविधत्वमस्ति इति यावत् ॥

## प्रतिवेदं शाखाभेदाः।

महाभाष्यकृता पतंजलिना " सर्वे देशान्तरे " एतद्वार्तिकव्याख्यानावसरे प्रतिवेदं शाखाभेदा दर्शिताः । ते च यथा—" चत्वारो वेदाः सांगाः सरहस्या बहुधा भिन्ना एकशतमध्वर्युशाखाः सहस्रवर्त्मा सामवेद एकविंशतिधा बाह्वृच्यं नवधाऽथर्वणो वेदः " इति । तथा कौर्मेऽपि—"एकविंशतिभेदेन ऋग्वेदं कृतवान्पुरा । शाखानामेकशतेन यजुर्वेदमथाकरोत्॥ सामवेदं सहस्रेण शाखानां च विभेदतः । आथर्वणमथो वेदं बिभेद नवकेन तु " इति ( कूर्मपुराणे ४९।५१—५२ ) । तथा " एकविंशत्यध्वयुक्तमृग्वेदमृषयो विदुः । सहस्राध्वा सामवेदो यजुरेकशताध्वकम् । नवाध्वाऽऽथर्वणोऽन्ये तु प्राहुः पंचदशाध्वकम्" इति सर्वानुक्रमणिकाभाष्ये षड्गुरुशिष्यो बभाषे । एवमुक्तप्रमाणत्रितयेन वेदचतुष्टय्यामुभयसम्प्रदायं मिलित्वा ऋग्वेदे एकविंशतिशाखाः, यजुर्वेदे एकशतं शाखाः, सामवेदे सहस्रशाखाः, आथर्वणवेदे नव शाखाः सन्ति । " ऋग्वेदस्य तु शाखाः स्युरेकविंशतिसंख्यकाः । नवाधिकशतं शाखा यजुषो मरुदात्मज ॥ सहस्रसंख्यया जाताः शाखाः साम्नः परंतप । आथर्वणस्य शाखाः स्युः पञ्चाशद्भेदतो हरे ॥ १२—१३ " ( इति मुक्तिकोपनिषदि ) तथा " एकविंशतिशाखायामृग्वेदः परिकीर्तितः । शतं च नव शाखासु यजुषामेव जन्मनाम् ॥ साम्नः सहस्रशाखाः स्युः पंच शाखा ह्यथर्वणः " ( इति सीतोपनिषदि ) इति । ताश्चिता मुक्तिकोपनिषत्सीतोपनिषदुक्ताः एकशतादुपरितना अष्टौ शाखाः " स उ एव यजुस्तेजाः । यजुरेकशतविधो यानि पंचाशत्प्रथमानि यजूंषि यानि चोत्तमानि । ताः शतं विधाः । अथ यान्येतदन्तरेण यजूंषि क्रियन्ते । सैवैकशततमी विधा । एवमु सप्तविध एकशतविधो भवति " ( शत. ब्रा. १० । २ । ६ ।१२ ) इत्येतच्छतपथश्रुतिविरुद्धा । अतो न प्रामाणिका इत्याभाति । तथाऽऽथर्वणिकाऽपि पंच वा पंचाशदिति वा शाखाभेदसंख्या न प्रमाणान्तरसंवादिनी भवति किं तूक्तप्रमाणविरुद्धैवेति । कदाचिदियं संख्याऽऽथर्वणे बहुवेदनसंकुलत्वात्तत्तद्विषयसूत्रभेदमूलिकाऽपि स्यादिति सम्भाव्यते । चरणव्यूहे तु—" ऋग्वेदस्य

पंच शाखाः, यजुर्वेदस्य कृष्णस्य षडशीतिभेदाः, शुक्लानां वाजसनेयिनां सप्तदश भेदाः, सामवेदस्याखिल-सहस्रभेदा आसन्नथर्ववेदस्य नव भेदाः " इति उक्तम् चरणव्यूहकारैस्तु ऋग्वेदे पंचैव शाखाः यजुर्वेदैकदेशे शुक्ले द्वे शाखे अधिके इति न्यूनाधिकभावेन या संख्या प्रतिपादिता । तत्र ऋग्वेदशाखानां पंचसंख्योक्तिस्तु तदानींतनकालीयविलुप्तशाखा वर्जयित्वा विद्यमानशाखा उद्दिश्य च स्यादिति सुदृढं सम्भाव्यते । निरुक्ते शुक्लयजुषोऽधिके द्वे शाखे अर्थात्ते गृहीत्वा सप्तदशसंख्योक्तिस्तु प्रागुक्तशतपथश्रुतिविरोधिनी, तथा " शुक्लस्य यजुषः पंचदशशाखाश्च ताः स्मृताः । कृष्णस्य यजुषः शाखाः षडशीतिरुदाहृताः ॥ एवमेकोत्तरं शतं शाखाः प्रोक्ता हि याजुषे " ॥ ( ६३ । ६४ ) इति मन्त्रभ्रान्तिहरापरपर्यायसूत्रमन्त्रप्रकाशिकास्थकात्यायनवचन-विरोधिनी चैवेत्युपेक्षणीये इति दिक् ॥

ताः एताः शाखाः संख्यया कोष्टकतो विन्यस्य स्फुटतरं दर्शयामि ।

## शाखाभेदसंख्यादर्शनकोष्ठकम् ।

| ग्रन्थनाम. | ऋग्वेदे. | यजुर्वेदे. | सामवेदे. | अथर्ववेदे. | संकलनं. |
|---|---|---|---|---|---|
| महाभाष्ये. | २१ | १०१ | १००० | ९ | ११३१ |
| कूर्मपुराणे | २१ | १०१ | १००० | ९ | ११३१ |
| षड्गुरुभाष्ये | २१ | १०१ | १००० | ९ | ११३१ |
| मुक्तिकोपनिषदि. | २१ | १०९ | १००९ | ५० | ११८० |
| सीतोपनिषदि. | २१ | १०० | १००० | ५ | ११८० |
| चरणव्यूहे. | ५ | १०३ | १००० | ९ | १११७ |

उक्तशाखाभेदेषु काः शाखा आदित्यसंप्रदाये काश्च शाखा ब्रह्मसंप्रदाये तासां नामानि च कानि ताश्च कथं कया प्रणाड्या प्रवृत्ताः ? इत्यादि सर्वं विस्तरभिया न प्रपंच्यते किंतु तत्सर्वं वंशपट्टेषु संक्षिप्य दर्श्यते ततोऽवगंतव्यम् ॥

## शाखापदार्थविमर्शः ।

शाखा नाम वेदैकदेशः । प्रागुक्ततत्तद्वेदगतभेदेष्वन्यतमैकेति यावत् । यथा यजुर्वेदे शुक्ले प्रभागे पंचदश-स्वन्यतमा माध्यन्दिनीति । " ममाग्ने " इत्यस्य सूत्रस्य व्याख्यानावसरे " तथैकदेशाध्ययनेनापि अधिकारं स्मरंति " इत्यनेन ज्ञापितं च कर्कोपाध्यायैः शाखाशब्दो वेदैकदेशवाची इति । ननु--शाखाशब्दस्य वेदावयव-वाचित्वे 'एकस्याः शाखाया अन्यस्याः शाखायाः । तस्या अप्यन्यस्यास्तस्या अप्यन्यस्या एवं परंपरयाऽन्योन्य-मपेक्षणात्सर्वासां शाखानामर्थात्तद्घटितस्य समग्रस्यैकवेदस्याध्ययनमेकस्मिञ्जन्मनि महाप्रज्ञावताऽपि कर्तुं न पार्येत । ततश्च " स्वाध्यायोऽध्येतव्यः " ( शत. ब्रा. ११ । ३ । ८ । ३ ) इत्यध्ययनविधेरचरितार्थता

स्यादिति चेन्न; कुत इति चेदुच्यते । स्वाध्यायो वेदश्चेत्यनर्थान्तरम् । आभ्यां शब्दाभ्यां नैकशाखाप्रशाखाप्रभिन्नो वेद इत्यर्थोऽभिधीयते, असति बाधके वाच्यार्थस्य परित्यागायोगात् । अत एव च "वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम्" (म.स्मृ. ३।२) "वेदं समाप्य स्नायात्" ( पार.गृ.सू. २।६।१ ) इत्यादौ वेदशब्दप्रयोग-दर्शनात् । किंच-"सहस्रं शाखाः (साम्नः) ह्यर्यतो वेदशब्दः" इति मीमांसाभाष्यकृतः शबरस्वामिनः प्रसिद्धिरप्य-मुमेवार्थं पुष्णाति । अपि च-एकवेदगतानां सर्वासामपि शाखानां परस्परं साकांक्षत्वमस्त्येव । नो चेत्कर्मणोऽसिद्धिः स्यात् । यथा दर्शपूर्णमासयागीयो मन्त्रकदंबको माध्यंदिनशाखायां यो नास्तिसः " यस्ते प्राणः पशुषु प्रविष्टः, आप्यायतां ध्रुवा हविषा, ततोऽसि तंतुरसि " इत्यादिः कण्वादिशाखात उपसंहृत्य पूरितः सूत्रकृता । एष न्याय इतरेषामपि कर्मणाम् । अत एव च "सर्वशाखाप्रत्ययमेकं कर्म"इति जैमिन्यृषिणा शाखोपसंहारः सूत्रितः । तथा तत्तत्कल्पकारैः शाखोपसंहारं कृत्वैव स्वस्वसूत्रजातं प्राणायि । तथाच-"ममाग्ने वर्चः" (का. श्रौ.सू. २।३.) इत्यत्र सूत्रे कर्कोपाध्यायाः "स्मरंति हि पंचदशशाखोपनिबन्धनं कृतमाचार्येणेति । शाखाद्वयमधिकृत्य तात्पर्येणानु-प्रवृत्त आचार्यः" इत्यादि स्पष्टं प्रोचुः । यदा चाचार्यैः कल्पाः प्रणीतास्तदा तु शाखानां परस्परं नैराकांक्ष्यं सम्पन्नम् । तदेव नैराकांक्ष्यमादाय " समुदायेषु हि वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते " इति महाभाष्योक्तन्यायेन स्वाध्यायः, वेदः, इत्यादिशब्दाः स्वावयवभूतासु शाखास्वपि प्रवर्तितास्तदुत्तराचार्यैर्विचक्षणप्रवरैश्च । तदपि दर्शितं कर्कोपाध्यायैरुक्तसूत्रव्याख्याने एवाग्रे ." अथ सर्वशाखाप्रत्ययकर्मोपसंहारेणैवाधिक्रियेत । तथा सति-अशक्यशब्दार्थोपदेशात्सर्वशाखानामानर्थक्यमेव स्यात् । स्मर्यते हि एकशतमध्वर्युशाखानामिति । तथैकदेशाध्य-यनेनापि अधिकारं स्मरंति-"वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम् । अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेत्" ( म. स्मृ. २ । ३ ) इति । तथाच लिंगम्-" यो वै ज्ञातोऽनूचानस्तमवकाशयेत् " इति ( ९ । ७ ) । सर्व-शाखाप्रत्ययत्वे ह्यनूचानो न कश्चित्स्यादिति " इति । एतदाशयेनैवोक्तां मनुस्मृतिं कुलूकको व्याचख्यौ । तथाहि-" वेदशब्दोऽयं भिन्नवेदशाखापरः । स्वशाखाध्ययनपूर्वकं वेदशाखात्रयं द्वयमेकां वा शाखां मन्त्रब्राह्मण-क्रमेणाधीत्य गृहस्थाश्रममनुतिष्ठेत् " इति । तथा " उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते " इत्यत्रापि " यो ब्राह्मणः शिष्यमुपनीय कल्परहस्यसहितां वेदशाखां सर्वामध्यापयति तमाचार्यं पूर्वे मुनयो वदन्ति " इति । इत्याचार्यलक्षणकथनावसरे मन्वादिभिस्तद्व्याख्या-तृभिः सूत्रभाष्यकारैश्चैकशाखाध्ययनपक्षेऽपि केवलं मन्त्रब्राह्मणात्मकमध्ययनं न विवक्षितं किंतु तत्सहैव कल्पाध्ययनमप्यावश्यकत्वेन दर्शितं तदैव च सर्वा शाखाऽधीता भवति । कल्पेऽधीते च स्वशाखातो विशेषतया भिन्नशाखास्ववस्थितपदार्थोपस्मारकं मन्त्राध्ययनं क्रियाप्रख्यापकं ब्राह्मणाध्ययनं च कृतं भवति । तेन च यथा कथंचित्सकलशाखासमन्वितो वेदोऽप्यधीतो भवति इति न स्वाध्यायविधेश्चारितार्थ्यम् । चिंतायाः प्रयोजनं तु शाखापदार्थो भिन्नो वेदपदार्थो भिन्नश्चैवं सत्यप्यध्येतृशक्त्यशक्त्यपेक्षया कदाचन तौ परस्परचारि-तार्थ्यनिर्वाहकौ भवतः । एतेन च सत्यां शक्तौ सर्वशाखायुक्तः समग्रो वेदोऽध्येतव्यः । असत्यां च तस्यां कल्पेन सहकृतां शाखामधीत्यैव यथाकथंचित्समग्रं वेदाध्ययनं संपादयितव्यमिति । ततश्च पितृपितामहादिपारम्पर्येण वाऽऽचार्यपारम्पर्येण वा यच्छाखाध्ययनं यस्य कुले समागतं सा तस्य स्वीया शाखा । एतदपि ज्ञापितं कात्या-यनाचार्येण मन्त्रभ्रांतिहरे " यच्छाखाऽध्ययनं यस्य पारम्पर्यागतं भवेत् । तच्छाखीयां श्रुतिस्तस्य स्वीया स्यादि-तरा परा " ( १९ ) " इति ।

## शुक्लयजुःशाखाः ।

तत्सिद्धं शाखा नाम संहिता, ब्राह्मणं, कल्पाश्चेति । तत्र संहिताविषये किंचिदुच्यते । संहितापदार्थः पाणिनि-यास्काभ्यां लक्षितः "परः सन्निकर्षः संहिता" ( पा. सू. १।४। १०९ ) ( निरु. १।६।११ ) अस्यार्थः—अर्धा

अभिश्रहलां च परस्परं स्वभावतोऽर्धमात्रात्किंचिदधिककालव्यवधानेनोच्चारणमिति । पुनरन्यत्र ऋक्प्रातिशाख्ये निरुक्ते च " पदप्रकृतिः संहिता " ( निरु. १।६ । १२ ) एतत्सूत्रं तु द्विधा व्याख्यातं वृत्तिकृद्भिः, एकदा ' पदानां संधीयमानानां एकत्रीकरणमूलकारणं प्रकृतिः संहिता " इति तत्पुरुषः कृतः । अन्यदा " पदान्येव प्रकृतिर्यस्याः सा " इति बहुव्रीहिः कृतः । उभावपि समासावुक्तार्थमेव द्रढयतः । अर्वाक्तनैरैतिहासिकैस्तु-" संहन्यन्ते एकत्रीक्रियन्ते भिन्नर्षिकृताः मंत्राः सूक्तानि वा यस्यां सा संहिता " इत्येवं संहिताशब्दं विगृह्य ' ऋषयो मन्त्रकर्तारो न तु द्रष्टारः " भिप्रेतमर्थमुपवर्णयंति । तदेतदुक्तलक्षणप्रतिहतत्वात्तुच्छम् । किंच ऋषयो न मन्त्रकर्तारः किं तु द्रष्टारः, द्रष्टृत्वमपि न मन्त्राणां सूक्तानां वाऽऽविर्भावे " यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै " इति श्वेताश्वतरश्रुतेर्विरोधात् । तर्हि तत्तेषां विनियोगे प्रयोज्यप्रयोजककार्यकारणभावादौ चेति स्पष्टं ब्रवीति मुण्डकोपनिषत्-" तदेतत्सत्यं मन्त्रेषु कर्माणि कवयो यान्यपश्यंस्तानि त्रेतायां बहुधा सन्ततानि " इति ( मुण्ड. उप. २।१ ) " संहन्यन्ते एकत्रीक्रियन्ते पदानि यस्यां सा संहिता " इति श्रुत्यनुगुणायां व्युत्पत्तौ सम्भाव्यमानायां सत्यां क्लृप्तस्य बाधेऽक्लृप्तस्य परिकल्पने प्रयासस्तुषावघातावलम्बनः । ताश्च संहिताः तथा तत्प्रवचनरूपाणि ब्राह्मणानि च शुक्लयजुःशाखीयानां पंचदश भवन्ति । तन्मध्ये इदानीं माध्यन्दिनीया, काण्वीया, चेति द्वे संहिते उपलभ्येते । अन्यास्त्रयोदशाध्ययनतो ग्रन्थतश्च विलुप्ताः । तासां मध्ये कासांचनोल्लेखः समागच्छति वैदिके वाङ्मये । तथाहि-" वायुर्वा त्वा मनुर्वा त्वा गन्धर्वाः " ( निरु. १।९।१ ) अनुष्टुबेषा ( यजु. ९।७ ) वाजपयेऽश्वयोजने विनियुक्ता इयं चोक्तानुपूर्व्या माध्यंदिनीयसंहितायां कण्वसंहितायां च नास्ति । उक्ता तु शुक्लयजुष्ट्वेन ततोऽनुमीयते ताभ्यामितरस्यां कस्यांचिच्छाखायां वर्तत इति । तथा " ओषधे त्रायस्व स्वधितेऽनं मा हिंसीः " "घृतेन यज्ञं प्रतिदेवय(ड्) दृम्यः" इमावपि पाठौ सूत्रभाष्यादौ पंचदशशाखीयान्यतरशाखीयत्वेनोदाहृतौ । एतावपि पाठौ माध्यन्दिनकण्वा न पठंति । ततोऽनुमीयते तदितरशाखीयाविति । एते ह्यस्पष्टा उल्लेखाः । स्पष्टा उल्लेखास्तु-" नाशे च" इति ( प्राति. सू. ३।४ ) प्रातिशाख्यसूत्रभाष्ये अनंतदेव आह " दुः नाशं " "दुर्णाशं संख्यं तव" इति शाबीयादिशाखीयमिति । गोपीनाथभट्टयां तापनीयश्रुतिरपि, " सप्तद्वीपवती भूमिर्दक्षिणार्थं न कल्पते " इति तापनीयश्रुतिरुल्लिखिता । " अरुणपाराशरशाखाब्राह्मणस्य कल्परूपत्वात् " ( व्या. म. भाष्ये ४।२।६० ) ( भट्टकुमारिलतन्त्रवार्तिके च ) इत्यत्र पाराशरशाखा उल्लिखिता । "नववतीश्चिर्कार्षेदिति जाबालिः " इति ( हौत्रसूत्रे ) " न मन्तु स्तोममग्नये " इत्यादि जाबालसंहितामन्त्रा उद्धृताः । " स यदा राजानमुन्नेतोन्नयति । अथैनस्विन उपतिष्ठन्ते । अत उपब्रुवते । इत्थं ब्राह्मणमवधिषमित्थं गुरोर्जायामभ्यगामिति । निरुक्तमेनो यथा तानृत्विजो राजा च ब्रूयुरश्वमेधावभृथपूता भवथेति । तेऽपोऽभ्यवयन्ति । यथाऽहिस्त्वचो निर्मुच्यते । एवं सर्वस्मात्पाप्मनो निर्मुच्यन्ते । तान्न जुगुप्सेयुः । स यावन्तमश्वमेधेनेष्ट्वा लोकं जयति । त्रिस्तावंतं जयति । यस्यैवं विदुष एवमेनस्विनोऽवभृथमभ्यवयन्ति । " इति याज्ञवल्क्यस्मृतेः(३।२३७) विश्वरूपाचार्यकृतव्याख्यायां जाबालब्राह्मणमप्युल्लिखितम् । " ततोऽन्यागारकरणं समचतुरस्रं पंचारत्नि दक्षिणपूर्वे द्वारे ह्यरत्निके " इति जाबालश्रुतेर्नामाद्युपलब्धम् एवं जाबालब्राह्मणस्योल्लेखो भर्तृयज्ञानुसारिस्थपतिगर्गपद्धतावावसथ्याधानप्रकरणे समागतः । " गालवा एव ह्रस्वान्प्रयुंजीरन् " इति व्याकरणमहाभाष्ये ( १।१।४४ ) गालवशाखोपवर्णिता । सोमप्रकरणे " सावित्रनिवृत्तिः श्रुतिविरोधाभ्याम् " इत्यातिथ्येष्टिविषयकसूत्रव्याख्याने "एवं च बैजवापायनाचार्येण सूत्रितं न सावित्रमाहेतीति" पितृभूतिभाष्यात् । "उदवसानीयायामाग्नेयः , पंचकपालः समारूढनिर्मथिते " इति पितृभूतिकर्कानन्तदेवैर्बैजवापीया शाखा निर्दिष्टा । " औज्झिहायनकैर्माध्यन्दिनमतानुसारिभिः । अवग्रहो यदा नीच उच्चगो मध्यतः क्वचित् ॥ ताथाभाव्यो भवेत्कंपस्तन्नून्नश्चेति दर्शनम् । पदपाठे तु भवति कंप इति " इति प्रातिशाख्यदीपिकायामौखेयशाखोल्लेखः ।

" समुद्रो वा एष यदहोरात्रस्तस्यैतेऽगाधतीर्थे यत्सन्धी तस्मात्सन्धौ होतव्यमिति कात्यायनब्राह्मणं भवति। नक्षत्रं दृष्ट्वा प्रदोषे निशायां वा सायम्। " इत्यग्निनौयानमीमांसायां कात्यायनब्राह्मणमुद्धृतम्। एवं प्रतिशाखं संहिता ब्राह्मणानि च पृथक्पृथगेव सन्ति ॥

कल्पाश्च प्रामुख्येन त्रिविधाः—गृह्यं, श्रौतं, धर्मश्चेति। शुक्लयजुषां पंचदशशाखीयानां पारस्करापरनामधेय-कात्यायनचरणैः प्रणीतं पारस्करगृह्यसूत्रं कात्यायनश्रौतसूत्रं धर्मांशपूरकं यज्ञपार्श्वादि चैकमेव न प्रतिशाखं पृथक्पृथगिति। एतत्कल्पांशत्रयपूरकतया परिशिष्टसूत्राणि श्रीयाज्ञवल्क्यतनुजनुषा भगवता कात्यायनेन प्रणीतानि। संहितायां सूत्रेषु च के के विषयाः, का वाऽऽनुपूर्वी, अन्तर्विभागाश्च कथं, इत्यादिः प्रपंचोऽस्मदीये प्रकाशिते महाराष्ट्रभाषामये याज्ञवल्क्यचरित्रे उत्तरार्धे वैदिकवाङ्मयपरिचयेंऽशे विलोक्यताम्। नात्र विस्तर-भिया प्रपंच्यते ॥

## शतपथब्राह्मणम्।

शुक्लयजुषां ब्राह्मणान्यपि संहितावत्पंचदश भवन्ति। तेषामुल्लेखास्तूपरि दर्शिता एव। तेषां सर्वेषामपि शतपथ-ब्राह्मणमिति सामुदायिकी संज्ञाऽऽस्ते यथा सर्वासां संहितानां वाजसनेयी श्रुतिः, वाजसनेयी संहिता, इति सामु-दायिकी संज्ञा भवति तथेति। अपि चैषां संहिताब्राह्मणानां स्वस्वशाखाप्रदर्शकमप्यन्यन्नाम कण्वब्राह्मणं, माध्य-न्दिन ब्राह्मणं, जाबालब्राह्मणं, इत्यादि वर्तते। तथा च ज्ञापितं श्रीसायणाचार्यैः कण्वसंहिताभाष्योपक्रमे—"यद्यप्ययं वेदः स्वयम्भूपरमेष्ठ्यादिपरम्परया प्राप्त आदित्यशिष्येण याज्ञवल्क्येन बहुभ्यः शिष्येभ्य उपदिष्टः, तथापि महता तपसाऽऽराधितस्येश्वरस्यानुग्रहात्कण्वसम्बन्धितयैव लोके प्रख्यायते। तमेतं काण्ववेदमधीयते विदन्ति वेति व्युत्पत्त्या कण्वशिष्यप्रशिष्यादिपरंपरया वर्तमानाः सर्वेऽपि काण्वा इत्युच्यन्ते। एवं ज्ञात्वा जाबालादिषु द्रष्टव्यम्। " इति। एषु च ब्राह्मणेषु इदानीं माध्यन्दिनशतपथब्राह्मणं कण्वशतपथब्राह्मणं चेति द्वे एव ब्राह्मणे उपलभ्येते। अन्यानि तु संहितावदध्ययनतो ग्रन्थतश्च विलुप्तानि दृश्यन्ते ॥

## शुक्लयजुर्वेदे द्वौ समाम्नायौ।

पंचदशसु शाखासु प्राधान्येनेमे द्वे शाखे एवाधिकृत्य मध्ये मध्येऽन्यशाखा उपसंहृत्य च भगवान्कात्यायनः सूत्राण्यरीरचत्। एतच्च स्पष्टमुक्तं कर्कोपाध्यायैः " ममाग्ने वर्चः " ( का. श्रौ. सू. ३ । ३ ) इति सूत्र-व्याख्यायां—" शाखाद्वयमधिकृत्य तात्पर्येणानुप्रवृत्त आचार्यः " इत्यादिना। तेन च शुक्लयजुःपंचदश-शाखासु माध्यंदिनी काण्वी चेति द्वे शाखे प्रधानतमे स्तः। उर्वरितासु त्रयोदशसु च काश्चन शाखा माध्यं-दिनानुगाः काश्चन शाखाः काण्वानुगाश्च संति। अनुगत्वं च समाम्नायाश्रयेण, समाम्नायो नामाध्ययनधर्मः क्रतुधर्मश्च। ननु—कोऽयमध्ययनधर्मः क्रतुधर्मश्च कथं प्रवृत्त इत्यपेक्षायां कथ्यते। यदा याज्ञवल्क्येन भगवत-स्त्रयीतनोर्वेदाः संप्राप्तास्तदा कृष्णयजुषः श्रुतर्षेर्बौधायनस्यात्मभूर्महामुनिः कण्वो याज्ञवल्क्यं शिष्यत्वेनोपगम्य तस्माच्छुक्लयजूंष्यधिगतवान्। परंतु स्वपितृकुलस्याभिमानवशेन यकारखकारोच्चारणाद्यध्ययनधर्मं याज्ञवल्क्यस्य न स्वीचक्रे। तथा मातुलसुतोद्वाहाद्या आचाराः तथाऽवभृथादौ दशाहुतिपक्षादिक्रतुधर्माः स्वपितृकुल्या एवांगी-कृताः। अयं च कथांश आदित्यपुराणे—" बौधायनपितृत्वाच्च प्रांशिष्यत्वाद्विवस्पतेः। शिष्यत्वाद्याज्ञवल्क्यस्य कण्वोऽभून्महतां महान् " इत्यादिना सूचितः। तात्पर्यं तु—शुक्लयजुःपंचदशशाखाप्रवर्तकश्रुतर्षीणां मध्ये येऽङ्गिरःकुलोत्पन्नास्ते कण्वसमाम्नायिनः। ये च विश्वामित्रगणोत्पन्नास्ते माध्यंदिनसमाम्नायिनः। एतच्च " सोऽहं कौशिकपक्षः शिष्यः कात्यायनः " इति प्रतिज्ञापरिशिष्टस्थकात्यायनवचसा, " ता वाऽएताः षडाहुतयो भवंति। षड्वा ऋतवः संवत्सरस्य। संवत्सरो वरुणः। तस्मात्षडाहुतयो भवंति ॥ १८ ॥ एतदादित्याना-

मयनम् । आदित्यानीमानि यजूंषीति वा आहुः । स यावदस्य वशः स्यात्—एवमेव चिकीर्षेत् । यद्युऽएनमितरथा यजमानः कर्तवै ब्रूयात् । इतरथो तर्हि कुर्यात् । एतानेव चतुरः प्रयाजानपबर्हिषो यजेत् । द्वावाज्यभागौ । वरुणमग्नीवरुणौ । द्वावनुयाजावपबर्हिषौ । तद्दश । दशाक्षरा वै विराट् । विराड्वै यज्ञः । तद्विराजमेवैतद्यज्ञमभिसंपादयति ॥ १९ ॥ एतदंगिरसामयनम् । अतोऽन्यतरत्कृत्वा " इत्यादिशतपथब्राह्मण ( ४ । ४ । ५ । १९-२१ ) निर्वचनेन च स्पष्टं दरीदृश्यते । अयं च शाखाभेदस्त्वध्ययनधर्ममात्रभेदेन, न तु कर्मणा प्रयोगकल्पानामैक्यात् । एवमन्येष्वपि वेदेषु भिन्नभिन्नसमाम्नाया वर्तंते त इह विस्तरभिया न प्रपंच्यन्ते । जिज्ञासुभिरस्मत्प्रकाशिते याज्ञवल्क्यचरित्रे महाराष्ट्रभाषामये द्रष्टव्याः ॥

## कण्वशतपथब्राह्मणे काण्डादिकम् ।

| काण्डांकः | काण्डनामानि. | अध्यायाः | ब्राह्मणानि. | कण्डिकाः |
|---|---|---|---|---|
| १ | एकपात्काण्डम्. | ६ | २२ | ३७६ |
| २ | हविर्यज्ञकाण्डम्. | ८ | ३२ | ५३२ |
| ३ | उद्धारिकाण्डम्. | २ | २२ | १२४ |
| ४ | अध्वरम्. | ९ | ३६ | ६४९ |
| ५ | ग्रहनाम. | ८ | ३८ | ९७४ |
| ६ | वाजपेयकाण्डम्. | २ | ७. | ७०० |
| ७ | राजसूयकाण्डम्. | ५ | १९ | २८९ |
| ८ | उषासंभरणम्. | ८ | २७ | ५११ |
| ९ | हस्तिघटकाण्डम्. | ५ | १६ | २५७ |
| १० | चितिकाण्डम् | ५ | २० | २४३ |
| ११ | साग्निचिति. | ७ | २० | ४३७ |
| १२ | अग्निरहस्यम्. | ६ | २८ | २८६ |
| १३ | अष्टाध्यायी. | ८ | ३१ | २४१ |
| १४ | मध्यमम्. | ९ | २८ | ३९२ |
| १५ | अश्वमेधकाण्डम्. | ८ | ४४ | ३०८ |
| १६ | प्रवर्ग्यकाण्डम्. | २ | ८ | १९२ |
| १७ | बृहदारण्यकम्. | ६ | ४७ | २९५ |
| १७ | ० | १०४ | ४३५ | ६८०६ |

## माध्यंदिनशतपथाब्रह्मणे काण्डादिकम् ।

| काण्डाङ्कः | काण्डनामानि. | अध्यायाः | प्रपाठकाः | ब्राह्मणानि. | कण्डिकाः |
|---|---|---|---|---|---|
| १ | हविर्यज्ञम् . | ९ | ७ | ३७ | ८३७ |
| २ | एकपादिका ( एकवै ) | ६ | ५ | २४ | ५४९ |
| ३ | अध्वरम्. | ९ | ७ | ३७ | ८५९ |
| ४ | ग्रहनाम | ६ | ५ | ३९ | ६४८ |
| ५ | सवम् | ५ | ४ | २५ | ४७१ |
| ६ | उषासम्भरणम् | ८ | ५ | २७ | ५३० |
| ७ | हस्तिघटम् . ( षट् ) | ५ | ४ | १२ | ३९८ |
| ८ | चितिः | ७ | ४ | २७ | ४३७ |
| ९ | संचितिः | ५ | ४ | १५ | ४०२ |
| १० | अग्निरहस्यम् | ६ | ४ | ३१ | ३६९ |
| ११ | अष्टाध्यायी ( संग्रहः ) | ८ | ४ | ४२ | ४३७ |
| १२ | मध्यमम् . (सौत्रामणी) | ९ | ४ | २९ | ४५९ |
| १३ | अश्वमेधम् | ८ | ४ | ४३ | ४३२ |
| १४ | बृहदारण्यकम् | ९ | ७ | ५० | ७९६ |
| १४ | १४ | १०० | ६८ | ४३८ | ७६२४ |
| संकलनया. | | श्लोकसंख्या. २४००० | | अक्षरसंख्या. ७६८००० | |

एवमुभयत्र काण्डाध्यायप्रपाठकब्राह्मणकण्डिकाख्यैरन्तर्भेदैर्ग्रंथविमागो वर्तते । स च ब्रह्मयज्ञादिनित्यस्वाध्यायादि-विधावध्ययनाध्यापनाद्यौपयिकतयेष्ट इति सूत्रकारैः " ओंकारमुक्त्वा त्रिश्च सावित्रीमध्यायादीन्प्रब्रूयात् " ( पार. गृ. सू. २।१०।१८ ) "क्षपणं प्रवचनं च पूर्ववत्" ( पार. गृ. सू. २ । १२ । ४ ) इत्युपाकर्मो-त्सर्जनसूत्राभ्यां ज्ञापितम् । तत्र माध्यन्दिनशतपथे प्रपाठकात्मको विभागोऽस्ति काण्वीये शतपथे तु स सुतरां नास्ति । तेन प्रपाठकात्मको विभागो वैदिकैरेव समग्रं ग्रन्थं कण्ठस्थीकर्तुं प्रकल्पित इति समापतति । अतः सोऽनार्ष इत्यप्याभाति । तथा शतपथान्तर्वर्त्तिनां ब्राह्मणानां स्वस्वप्रतिपाद्यविषयापेक्षया सृष्टिब्राह्मणं, संभार-ब्राह्मण, नक्षत्रब्राह्मणं, उद्गीथब्राह्मणं, प्राणविद्याब्राह्मणं, मण्डलब्राह्मणं, इत्याद्याः संज्ञा भाष्यकृद्भिर्व्यवहारार्थं दत्तास्ता सर्वा अत्र विस्तरभिया दातुं न शक्नुमः । जिज्ञासुभिस्ता भाष्ये ऋजुपाठादौ चैव तत्र तत्र द्रष्टव्याः ॥

## माध्यन्दिनकण्वशतपथयोर्विषयक्रमः ।

माध्यन्दिनशतपथे प्रथमकाण्डमारभ्य नवमकाण्डपर्यन्तं एकं पिण्डपितृयज्ञं वर्जयित्वा प्रायः माध्यन्दिनसंहितायाः क्रमेण विषयाः समागताः । संहितायां पिण्डपितृयज्ञो दर्शपूर्णमासानन्तरमस्ति ब्राह्मणे त्वाधानानन्तरमित्येतावान्भेदः । अवशिष्टेषु दशमादिकाण्डेषु संहिताक्रमेणैव विषयक्रमो दृश्यते । काण्वमाध्यन्दिनयोः संहितायाः प्रारंभो दर्शपूर्णमासयागमारभ्यैव वर्तते । परंतु शतपथब्राह्मणारंभ उभयोरपि भिन्नः । माध्यंन्दिनशतपथप्रारंभो दर्शपूर्णमासमारभ्य काण्वशतपथप्रारंभस्त्वाधानमारभ्य वर्तते । अर्थान्माध्यंदिनकण्वशतपथयोः प्रथमद्वितीययोः परस्परं विपर्ययः । अन्यत्सर्वं प्रायः समानं क्वचित्क्वचिद्विषयक्रमवैपरीत्यमप्यास्ते । तच्चोभयब्राह्मणयोरग्रिमयोः स्थूलविषयसूच्योर्दर्शनेन सहजतया ज्ञायेत ॥

### माध्यंदिनशतपथे ।

| काण्डांकः | विषयाः |
|---|---|

१—दर्शपूर्णमासेष्टिः ॥

२—आधानपुनराधाने, अग्निहोत्रं, उपस्थानं, प्रवत्स्यदुपस्थानं, आगतोपस्थानादि, पिण्डपितृयज्ञः, आग्रयणं, दाक्षायणयज्ञः, चातुर्मास्ययागः ॥

३—सोमयागो दीक्षाभिषवपर्यंतः ॥

४—सोमयागे सवनत्रयगतं कर्म, षोडशीप्रभृतिसोमसंस्थाः, द्वादशाहयागः, त्रिरात्राहीन—दक्षिणा, सत्रधर्माः ॥

५—वाजपेययागः, राजसूययागः ॥

६—उषासम्भरणम्, विष्णुक्रमः, वात्सप्रोपस्थानम्, वनीवाहनकर्म ॥

७—चयनयागः, गार्हपत्यचयनं, निर्ऋतिचयनम्, अग्निक्षेत्रसंस्कारः, दर्भस्तम्बाद्युपस्यासादनान्तं कर्म ॥

८—प्राणभृत्सादनादि, चयनसमाप्तिः ॥

९—शतरुद्रियहोमादि, धिष्ण्यचयनम्, पुनश्चितिः, चित्युपस्थानम् ॥

१०—चितिसम्पत्तिः, चयनयागस्तुतिः, चित्यपक्षपुच्छविचारः, चित्याग्निवेदिमानम्, तत्सम्पत्तिः, चयनकालादिकम्, चित्याग्नेश्छन्दोऽवयवसम्पत्, संवत्सरतदवयवसम्पत्, यजुष्मतीलोकम्पृणादिकयोः संख्या, उपनिषद्रूपेणाग्नेरुपासना, मनःसृष्टिः, लोकादिरूपेणाग्नेरुपासना, अग्नेः सर्वतोमुखत्वम्, संप्रदायप्रवर्तकऋषिवंशः, इत्यादि ॥

११—आधानकालः, दर्शपूर्णमासदाक्षायणयज्ञयोरवधिः, दाक्षायणयज्ञः, पथिकृदिष्टिः, अभ्युदितेष्टिः, दर्शपूर्णमासीयपदार्थानामर्थवादाः, अग्निहोत्रीयार्थवादः, ब्रह्मचारिणः कर्तव्यम्, मित्रविन्देष्टिः, हविःसमृद्धिः, चातुर्मास्यार्थवादः, पंचमहायज्ञाः, स्वाध्यायप्रशंसा, प्रायश्चित्तानि, अंश्वदाभ्यग्रहौ, अध्यात्मविद्या, पशुबन्धप्रशंसा, हविर्यज्ञसवविधयोर्लक्षणम्, षड्ढोतृहोमः ॥

१२—सत्रे दीक्षाक्रमः, सत्राणि, पृष्ठ्याभिप्लवस्वरसामविषुवन्महाव्रतप्रभृतीनां निरूपणम्, गवामयनम्, अग्निहोत्रप्रायश्चित्तम्, सौत्रामणीयागः मृतकाग्निहोत्रम्, मृतकदाहः, ॥

१३—अश्वमेधः, तद्गतप्रायश्चित्तम्, पुरुषमेधः, सर्वमेधः, दशरात्रः, पितृमेधः ।

१४–प्रवर्ग्यकर्म, घर्मः, महावीरः, प्रवर्ग्योत्सादनम्, प्रवर्ग्यकर्तृनियमाः, ब्रह्मविद्या, कार्म्यं श्रीमन्थपुत्रमन्थादिकम्, वंशः इत्यादि ।

## कण्वशतपथे ।

| काण्डांकः | विषयाः |
|---|---|
| १ | आधानपुनराधाने, अग्निहोत्रम्, आग्रयणम्, पिण्डपितृयज्ञः, दाक्षायणयज्ञः, उपस्थानादि, चातुर्मास्ययागः । |
| २ | दर्शपूर्णमासेष्टिः । |
| ३ | अग्निहोत्रीयोऽर्थवादः, दर्शपूर्णमासीयोऽर्थवादः । |
| ४ | सोमयागदीक्षा, अभिषवादि कर्म च । |
| ५ | सोमयागः, सवनत्रयगतं कर्म, षोडशीप्रभृतिसोमसंस्थाः, द्वादशाहयागः, त्रिरात्राहीनदक्षिणा, चतुस्त्रिंशद्धोमः, सत्रधर्माः । |
| ६ | वाजपेययागः । |
| ७ | राजसूययागः । |
| ८ | उखासम्भरणम् । |
| ९–१२ | चयनयागः । |
| १३ | आधानकालः, पथिकृदिष्टिः, प्रयाजानुमन्त्रणम्, शंयुवाकः, पत्नीसंयाजः, ब्रह्मचर्यम्, दर्शपूर्णमासशेषः, पशुबन्धः । |
| १४ | दीक्षाक्रमः, पृष्ठ्याभिप्लवादि, सौत्रामणीयागः, अग्निहोत्रप्रायश्चित्तम्, मृतकाग्निहोत्रम् । |
| १५ | अश्वमेधः । |
| १६ | सांगोपांगं प्रवर्ग्यकर्म । |
| १७ | ब्रह्मविद्या । |

## शतपथब्राह्मणस्य स्वरूपम् ।

सामान्यस्वरूपं तु पूर्वं प्रपंचितम् । इदानीं विशेषस्वरूपं निगद्यते । तथा च तदुक्तं कात्यायनेन–" विधिर्निन्दा प्रशंसाऽध्यात्ममधिदेवतमधिभूतमनुवचनं परकृतिः पुराकल्पः सृष्टिरिति ब्राह्मणम् " ( का.तृ.प्र.प. सूत्रे ) क्रमेणैषामुदाहरणानि १–विधिः–" स एष उभयत्राच्युत आग्नेयोऽष्टाकपालः पुरोडाशो भवति " ( श. प. १ । ५ । १ । ५ ) इति । २–निन्दा–" तदु ह स्माहापि वर्कुर्वार्ष्णो माषान्मे पचत, न वा एतेषां हविर्गृह्णन्तीति तदु तथा न कुर्यात् " ( श. प. १ । १ । १ । १० ) इति । ३–प्रशंसा–" अग्निर्वै देवानाम्मृदुहृदयतमः । यं वै मृदुहृदयतमं मन्येत तमुपधावेत् । तस्मादग्नय एव " ( श. प. १ । ६ । २ । १० ) इति । ४–अध्यात्मम्–" अथाध्यात्मम् । प्राणो वा अर्कः । तस्यान्नमेव कम् । अन्नं हि प्राणाय कम् । इति नु एवार्कस्य " ( श. प. १० । ६ । २ । ७ ) इति । ५–अधियज्ञम्–" अथाधियज्ञम्–यदेवाम्नावन्नमुपधीयते–तदन्नम् । या आपस्तत्प्रनम् । परिश्रित एव श्रीः " इत्यादि ( श. प. १० । २ । ६ । १७ ) इति । ६–अधिदेवतम्–"अथाधिदेवतम्–या वै सा वागग्निरेव सः । यत्तच्चक्षुः–असौ स आदित्यः" इत्यादि ( श. प. १० । ३ । ३ । ७ ) इति । ७–अधिभूतम्–" तस्मादाहुर्यावती वेदिस्तावती पृथिवी, इति " इत्यादि ( श. प. १ । २ । ५ । ७ ) इति । अथवा " अयं वाव लोक एषोऽग्निश्चितः । तस्याप एव परिश्रितः "

इत्याद्यभिधायान्ते "एनं भूतमेतत्सर्वमभिसम्पद्यते" ( श. प. १० । ५ । ४ । १ ) इति । ८—अनुवचनम्—"अग्निर्वै हिमस्य भेषजम्" ( श. प. १३ । ६ । १ । १ ) इति । ९—परकृतिः—"पुरुषो ह नारायणोऽकामयत" इत्यादि ( श. प. १३ । ६ । ४ । २ ) इति । १०—पुराकल्पः—"एतेन हेन्द्रोतो दैवापः शौनको जनमेजयं पारिक्षितं याजयाञ्चकार" इत्यादि ( श. प. १३ । ५ । ४ । २ ) इति । ११—सृष्टिः—"असद्वा इदमग्र आसीत्" इत्यादि ( श. प. ६ । १ । १ । १ ) इत्येवमेकादशधा स्वरूपेण शतपथब्राह्मणे प्रवचनशैली कात्यायनेन प्रत्यभिज्ञापिता । वाचस्पतिमिश्रैस्त्वन्यथा प्रत्यभिज्ञापिता । तथाहि "नैरुक्त्यं यस्य मन्त्रस्य विनियोगः प्रयोजनम् । प्रतिष्ठानं विधिश्चैव ब्राह्मणं तदिहोच्यते । इत्येवं याज्ञवल्क्यस्य ब्राह्मणस्य तु लक्षणम्" इति । अस्योदाहरणम्—"अथाभ्याधाय जपति"—"सूर्यस्त्वा पुरस्तात्पातु कस्याश्चिदभिशस्त्यै" ( वा. सं. २ । ५ ) इति । "गुप्त्यै वाऽअभितः परिधयो भवंति । अथैतत्सूर्यमेव पुरस्ताद्गोप्तारं करोति । नेत्पुरस्तान्नाष्ट्रा रक्षांस्यभ्यवचरानिति । सूर्यो हि नाष्ट्राणां रक्षसामपहन्ता" ( श. प. १ । ३ । ४ । ८ ) इति । अत्र वाचस्पतिमिश्रोक्ताः सर्वेऽप्यंशाः सुस्पष्टाः प्रतीयन्ते । बृहदारण्यकोपनिषच्छ्रुत्या तु इतोऽन्यथैव प्रत्यभिज्ञापिता । सा चेत्थम्—"इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानि" ( बृ. उ. २ । ४ । १० ) इति । क्रमेणैषामुदाहरणानि—१—इतिहासः "उर्वशी हाप्सराः" ( श. प. ११ । ५ । १ । १ ) इति । २—पुराणम्—"असद्वा इदमग्र आसीत्" ( श. प. ६ । १ । १ । १ ) इति । ३—विद्या—"देवजनविद्या वेदः सोऽयमिति" ( श. प. १३ । ४ । ३ । १० ) इति । ४—उपनिषदः—"प्रियमित्येनदुपासीत" ( श. प. १४ । ६ । १० । ३ ) इति । ५—श्लोकाः—ब्राह्मणप्रभवा मन्त्राः—"तदप्येते श्लोकाः—अणुः पंथा विततः" इत्यादयः ( श. प. बृ. १४ । ४ । २ । ११ ) इति । ६—सूत्राणि वस्तुसंग्राहकवाक्यानि वेदे—"आत्मेत्येवोपासीत" ( श. प. बृ. १४ । ४ । २ । २८ ) इति । ७—अनुव्याख्यानानि मन्त्रविवरणानि । अथवा, वस्तुसंग्राहकवाक्यानां विवरणवाक्यानि—"प्राणा वै सत्यम्" ( श. प. १४ । ५ । १ । २३ ॥ १४ । ५ । २ । ३ ) इत्यादि शिशुमूर्तामूर्तब्राह्मणे । ८—व्याख्यानानि—अर्थवादाः । अथवा, "मेधया हि तपसाऽजनयत्पिता" ( श. प. १४ । ४ । ३ । २ ) इत्यादीनि मन्त्रविवरणानि । एवं त्रिविधा प्रवचनशैली दृश्यते । सा विषयपार्थक्यानुरोधेनैव भवति, न परस्परोपमर्दं सहते । ये तु विध्यादीनां सूक्ष्माः उत्पत्तिविधिरधिकारविधिर्विनियोगविधिरित्याद्या भेदा मीमांसानुशासने प्रसिद्धास्ते सर्ववेदतद्गतशाखासाधारणाः इति विस्तरभिया नात्र प्रपंच्यन्ते । ते तत एवावगन्तव्याः । तथा प्रकृतशतपथस्थविविधविषयाणामवगाहनं तदध्ययनाध्यापनेनैव कर्तव्यम् । नात्र विस्तरभिया तदपि प्रपंच्यते । यदि प्रपञ्चयिष्यामि तदा न जानेऽयमुपोद्घातः कियतीं वृद्धिं गमिष्यति । अतस्ततो विराम एव श्रेयस्कर इति मन्ये ।

## शतपथब्राह्मणस्य संज्ञाऽऽन्वर्थक्यम् ।

"शतपथब्राह्मणम्" इतीयं संज्ञा च तस्य शताध्यायात्मकत्वात् । तथाच शतपथव्युत्पत्तिरपि "शतं पन्थानो मार्गा नामाध्याया यस्य तच्छतपथम्" इति तदनुगुणैव जायते । तदुक्तं स्पष्टतया भाषिकसूत्रभाष्ये "शतपथवत्ताण्ड्यभाल्लविनां ब्राह्मणस्वराः" इत्येतत्सूत्रव्याख्यानावसरे "शतपथश्च शताध्यायैः" इति । यद्यपि कण्वशतपथस्य चतुरुत्तरशताध्यायाः सन्ति तथापि तस्य "छत्रिणो यान्ति" इति न्यायेन शतपथसंज्ञा चरितार्था भावयितव्या तत्रापि शतपथसंज्ञाया रूढत्वात् इति । किञ्च तृतीये प्रतिज्ञापरिशिष्टे कात्यायनेन शतपथब्राह्मणे "षष्टिपथोऽशीतिपथोऽनवद्यः सम्मितः पंचदशपथः" इत्यनेन 'षष्ट्यध्यायसंमितो भागः षष्टिपथः, अशीत्यध्यायसंमितो भागोऽशीतिपथः, पञ्चदशाध्यायसंमितो भागः पञ्चदशपथः' इतीमा अवान्तर-

विभागसंज्ञाः प्रतिपादिताः। प्रथमं द्वितीयं च काण्डं पञ्चदशाध्यायाः, एतदन्तेन ग्रन्थेन हविर्यज्ञियापरनामकमैष्टिकं याज्ञिकं सर्वं निरूपितम्। तेनैतत्प्रकरणस्य पञ्चदशपथसंज्ञा सार्थका भवति । प्रथमहविर्यज्ञकाण्डादारभ्य संचिति-नामनवमकाण्डपर्यंतं षष्ट्यध्यायाः तृतीयकाण्डादारभ्य एतदन्तेन ग्रन्थेन आध्वरिकापरनामकं सौमिकं याज्ञिकं सर्वं निरूपितमित्येतत्प्रकरणपर्यन्तस्य ग्रन्थस्य षष्टिपथसंज्ञा युक्तैव भवति । प्रथमकाण्डादारभ्य द्वादशकाण्डीय-षडध्याय्यन्तमशीत्यध्यायाः, अग्निरहस्याख्यदशमकाण्डमारभ्य मध्यमसंज्ञकद्वादशकाण्डीयषडध्याय्यन्तेन ग्रन्थेन उत्तरक्रतुयाज्ञिकं सर्वं निरूपितम्। तेनैतत्प्रकरणपर्यन्तस्य ग्रन्थस्याशीतिपथसंज्ञा युक्तियुक्ता भवति । अवशिष्टै-रध्यायैः सौत्रामण्यश्वमेधादियागाः पूर्वमनुक्तास्ते ब्रह्मविद्या चेति निरूपितम्। तेन परिशेषोत्तरभागनिरूपकग्रन्थांते प्राग्दर्शितया आदितोऽध्यायगणनया पद्धत्या समग्रो ग्रन्थः शतपथसंज्ञकः इति ।

## एतदध्ययनपद्धतिः ।

शतपथषष्टिपथशब्दाभ्यां " क्रतूक्थादिसूत्रान्ताट्ठक् " ( पा. सू. ४ । २ । ६० ) इति सूत्रस्थेन " शतषष्टेः षिकन्पथः " " शतशब्दात्षष्टिशब्दाच्च परो यः पथिन्शब्दस्तदन्तात् षिकन्वाच्यः " इति वार्तिकेन षिकन्प्रत्यये विहिते ' शतपथमधीते शतपथिकः, षष्टिपथमधीते षष्टिपथिकः ' इति शब्दौ सिध्यतः । आशीतिपथः पांचदशपथः इतीमौ शब्दौ तु अध्येत्रणन्तौ संगमनीयौ । तथा " अव्ययं विभक्तिसमीप० " ( पा. सू. २।१।६ ) एतत्सूत्रस्थांतशब्दोदाहरणे " अग्निग्रन्थपर्यन्तमधीते साग्निः " " अग्निशब्दश्च तद्बोधके ग्रन्थे वर्तते " इति तद्व्याख्यातारः । अग्निशब्देन चयनयागो रूढया विवक्षणीयः तदन्तग्रन्थस्याध्ययनं साग्नीति यावत् । पूर्वमेतदुक्तप्रणाल्या शतपथाध्ययनपरिपाटी आसीदिति प्रतीयते । इयं च पद्धतिरिदानीं लुप्तैव । यत्र कुत्रचन वैरल्येन शतपथाध्ययनपरम्पराऽऽस्ते सा एतद्विसदृशी । तथा च श्रीक्षेत्रनाशिके बडोदाराजधान्यां मुल्हेरक्षेत्रे च शतपथाध्ययनपरम्पराऽद्याप्यास्ते परंतु सा चतुर्दश-काण्डमध्यात्कांश्चिद्विशिष्टानष्टौ प्रपाठकान्विचित्य तावन्तः कंठस्थीकरणीया इत्येवंरूपा प्रवर्तमानाऽस्ति। ते चाष्टौ प्रपाठका इमे—प्रथमकाण्डस्थाः क्रमेणादितस्त्रयः, द्वितीयकाण्डस्थौ क्रमेण द्वौ, तृतीयकाण्डस्थ एकः प्रथमः, पञ्चमकाण्डस्थ एकः प्रथमः, एकादशकाण्डस्थ एकः प्रथमः, एवमष्टौ । इति। अस्तु, वैदिकैरियमनार्षी पाठ-प्रणालीं त्यक्त्वा पुनरार्षी उपरि दर्शिता प्रणाली प्रवर्तनीयेति तान्प्रत्यस्माकं विज्ञप्तिः ॥

यथा शतपथस्योपरितना विभागाः कात्यायनेन विभाजिताः तथा महाभारतेऽपि श्रीव्यासमुनिना केचन विभागाः कृता दृश्यन्ते । तथा चोक्तं तेन " ततः षष्टिपथं कृत्स्नं सरहस्यं ससंग्रहम् । चक्रे सपरिशेषं च सोत्तरं च प्रहर्षतः " इति ( महाभारते शांतिपर्वणि मोक्षधर्मे ४३ अ. १६ श्लो. ) प्रथमकाण्डादारभ्य नवमकाण्ड-पर्यन्तानि काण्डानि षष्टिपथ इति पूर्वं प्रोक्तमेव । दशमं काण्डं रहस्यमर्थादग्निरहस्यसंज्ञकं प्रागुक्तकर्मणां रहस्य-प्रतिपादकत्वात्तत्सहितम्। एकादशं काण्डं संग्रहं प्रागुक्तकर्मापेक्षितानुक्तसंग्राहकत्वात्तत्सहितम्। द्वादशत्रयोदशकाण्डे चतुर्दशकाण्डान्तर्गतप्रवर्ग्यकाण्डं च परिशेषः उक्तकर्मणां अवशिष्टकर्माभिधायकत्वात्तत्सहितम्। चतुर्दशकाण्डा-न्तर्गता षडध्यायी मधुयाज्ञवल्क्यखिलकाण्डत्रयवती बृहदारण्यकोपनिषत् उत्तरं कर्मोत्तरकालिकज्ञान-काण्डप्रतिपादकत्वात्तत्सहितम् । एतादृशषष्टिपथमर्थात्समग्रं शतपथं याज्ञवल्क्यः चक्रे प्रवचनविषयी-चकारेति तदर्थः ॥

## प्रो. एग्लिंग्प्रभृतिकृताक्षेपप्रत्याख्यानम् ।

अत्र च द्वादशकाण्डस्य मध्यममिति नामधेयाश्रयेण प्रो. एग्लिंग्प्रभृतयः स्वीयशतपथभूमिकायां बहुतरं कल्पनाजालं निर्ममिरे । तेषामाशयस्तु—" यतो द्वादशकाण्डस्य ' मध्यमं काण्डम् ' इति संज्ञाऽस्तदानी-

न्तनदिष्टे १०–१४ इमान्येव पञ्चकाण्डानि प्रधानानि प्राचीनानि च समासन् । तदनन्तरं च अर्वाक्तनानि १–९ काण्डानि संयोजितानि स्युः " इति । परन्तु नैतद्युक्तियुक्तमुत्पश्यामः । महाभारते एतद्वैपरीत्येन १–९ काण्डानि प्रधानानि तदितराणि १०–१४ तत्परिपोषकानि इति भंग्यन्तरेण प्रतिपादितत्वात् । द्वादशकाण्डस्य मध्यमसंज्ञा तु तद्गतप्रतिपाद्यविषयसाधारण्येनास्ति । नैतत्तिरोहितं विपश्चिताम् । तात्पर्यन्तु–उपर्युक्तमहाभारतविरोधेन प्रतिहतत्वादुपेक्ष्यमेव किल तद्वचः । यच्चान्यत्तेन प्रोच्यते–" माध्यन्दिनशब्दो मध्यमवाचकः,तेनेयं माध्यन्दिनी शाखाऽप्यतिप्राचीना स्यादिति न निश्चेतुं शक्यम्" इति । एतदपि न संगच्छते । कुतः माध्यन्दिनशब्दो मध्यमवाचीति क्वापि संस्कृतवाङ्मये न केनापि प्रायुज्जि । नाप्ययमर्थस्तस्माद्रूढया योगेन योगरूढया वा निर्गच्छति । प्रत्युत यथा " कण्वेन महर्षिणा दृष्टा शाखा काण्वी " इत्युच्यते तथा " मध्यन्दिनेन मुनिना दृष्टा शाखा माध्यन्दिनी " इति वक्तव्या । एतदर्थकयोगबलसहकृतया रूढया शाखाविशेषे रूढः । यद्यपीयं शाखा प्राचीनाऽस्ति, तथापि तत्त्वे कारणमन्यदेव । नेदं कारणम् । तच्च दर्शितं शाखाविभागरूपं पूर्वमेव ॥

किंच–शतपथब्राह्मणे ६–१० काण्डेषु महर्षिशाण्डिल्यस्योल्लेखो बहुवारमायातस्तावता पाश्चात्यपण्डितै र्वेबर–एग्लिंग्प्रभृतिभिस्तदनुवक्तृभिः प्रो. भगवद्दत्तमहाशयैरेवमनुमीयते यत् " ६–१० इमानि काण्डानि शाण्डिल्यमहर्षिप्रणीतानि स्युः " इति । एतच्च तेषामनुमानमसदेव । उक्तकाण्डेषु शाण्डिल्याचार्याणां मतं तन्नामोल्लेखपूर्वकमनूदितं तथा दशमकाण्डे तन्नाम्ना प्रख्याता शाण्डिल्याग्निविद्या च प्रतिपादिता । नहि तावतोपरिन्यस्तमनुमानं कर्तुं शक्यते ॥

किंच–ज्ञानकोशे डॉ. श्रीधर व्यंकटेश केतकर महोदयैरेवमाक्षिप्यते यत्–शतपथब्राह्मणे ये शुक्लयजुर्वेदाचार्या उल्लिखितास्ते अमुक्यमुक्या अमुकोऽमुकः पुत्र इति जननीप्राधान्येन वर्णिता इति । अत्रैतावदेव वक्तुमिष्यते–यदियं वंश परम्परा न जन्यपुत्रपौत्रवंशपरंपरा, किन्तु शिष्यप्रशिष्यात्मिका विद्यावंशपरंपरा इति । तस्याश्च स्त्रीप्राधान्येन वर्णने कारणं श्रीमच्छंकराचार्येण दर्शितं तदेव योग्यम् । तथा चोक्तं तैः " अथेदानीं समस्तप्रवचनवंशः । स्त्रीप्राधान्याद्गुणवान्पुत्रो भवतीति प्रस्तुतम् । अतः स्त्रीविशेषणेनैव पुत्रविशेषणादाचार्यपरम्परा कीर्त्यते " इति ( बृह. उप. भाष्ये अन्ते ) ॥

अपिच डॉ. महोदयैरुच्यते–षकारस्य खकारः, यकारस्य जकारः, अतिशयोक्तिपूर्णः वकारादिगतद्वित्वयुक्तः स्पष्टोच्चारः इत्यादिनियमविधायकशुक्लयजुःप्रातिशाख्यत एवमपि कल्प्यते यदेषां नवीनानां ब्राह्मणानां वैदिकमन्त्रोच्चारणे काठिन्यं समापन्नमासीत् " इति । अत्रोच्यते–डॉ. महोदयैः पुराणा ब्राह्मणाः, नवीना ब्राह्मणाः इति स्वकपोलकल्पितं भेदं मत्वोक्ताक्षेपः कृतः, परंतु–अयं भेदः प्रमाणशून्यः । केन प्रमाणेनायं भेदस्तैः प्रतिपाद्यते तन्न जानीमहे । यो ब्राह्मणः " यज्ञेन यज्ञमयजन्त " इत्यत्र ' अयजन्त ' अत्रत्यस्य यकारस्य यकारमुच्चारयितुं शक्नोति तस्य ' यज्ञेन ' अथवा ' यज्ञम् ' अत्रत्ययकारस्य यत्वेनोच्चारो दुर्घटः किम् ? अथवा यो ब्राह्मणः यस्मिन्क्षणे ' षडस्य विष्ठाः ' इत्यादिस्थले ' ष्ठा ' इति संयुक्ताक्षरे षकारं षत्वेनैवोच्चारयति तस्मिन्नेव क्षणे तस्य ' षट् ' अत्रत्यः षकारः षत्वेनोच्चारयितुं दुर्घटः किम् ? । कदाऽपि नैवं वक्तुं शक्यते । ' पद्भ्यां शूद्रो अजायत ' इत्यादौ श्रुतोऽन्तिमोऽकारो बह्वचैर्यथाऽध्ययनधर्म इति कृत्वा दीर्घः पठ्यते तथा शुक्लयजुर्वेदिभिरपि षकारः खकारत्वेन यकारो जकारत्वेनाध्ययनधर्मं मत्वा पठ्यते इति जानन्तु डॉ. महोदयं प्रति श्रद्धालवो जनाः । कृष्णयजुर्वेदतः शुक्लयजुर्वेदस्य पार्थक्यं दर्शयितुं वा तस्यायातयामत्वं प्रख्यापयितुं प्रातिशाख्यकृता वकारगतद्वित्वादिपरिभाषा संकलिता । साऽपि पूर्ववदध्ययनधर्मं मत्वा प्रयुज्यते तैः । एतावता डॉ. महोदयानामाक्षेपा असमंजसा इति स्पष्टमभवत् ॥

## शतपथब्राह्मणान्तर्भूता बृहदारण्यकोपनिषत् ।

बृहदारण्यकोपनिषदि—एकमागमप्रधानं मधुकाण्डम्, द्वितीयमुपपत्तिप्रधानं याज्ञवल्क्यकाण्डम् । तृतीयमुभयशेषभूतं खिलकाण्डम्, एवं काण्डत्रितयं वर्तते । इयं चोपनिषद् ग्रन्थतोऽर्थतश्च महत्त्वात्तथाऽस्या ब्रह्मविद्याया विस्तरशः प्रतिपादकत्वात् बृहत्त्वम् । अरण्येऽनूच्यमानत्वादारण्यकत्वम् । ब्रह्मविद्याद्वारा ब्रह्मभावापादकत्वादुपनिषदिति सार्थकं नामधेयमिति । अस्याः कण्वपाठे आदिमे द्वे ब्राह्मणे माध्यन्दिनपाठे न स्तः । ते तु माध्यन्दिनीयपाठे दशमकाण्डे एवान्ते प्रतिपादिते इति वैलक्षण्यं दर्शनीयम् । अन्यदपि आनुपूर्व्यां पौर्वापर्यरूपं वैलक्षण्यमस्ति, तत्तु पाठतोऽवगन्तव्यम् । विषयसाधारण्यं तूभयोः । सर्वासूपनिषत्सु इयमुपनिषत्त्वं प्राधान्यं प्रख्यापयति सार्वात्म्येन ब्रह्मविद्यायाः प्रतिपादकत्वात् । इति ।

## शतपथब्राह्मणस्य महत्त्वम् ।

तात्पर्यन्तु—यः शतपथब्राह्मणं मर्मज्ञतया समग्रमध्येष्यते स यज्ञविद्यायां ब्रह्मविद्यायां तदुपोद्बलकासु बहुलासु विद्यासु सर्वश्रेष्ठतमः पण्डितः सम्पत्स्येत । सम्यक्तयाऽधीते च शतपथब्राह्मणे सर्वेषां वेदानामर्थावगमः सहजतया जायेत । तत्सहैव विविधं वैदिकविषयकं ज्ञानम्, प्राचीनादर्शेतिहासज्ञानं चोत्कृष्टतया भविष्यति नात्र संशयलेशस्याप्यवसरः । एतत्साक्ष्यं शतपथब्राह्मणभाष्योपक्रमकारकाः सायणीयाः श्लोका दास्यन्ति । तथाहि—" विजितारातिव्रातो वीरः श्रीहरिहरः क्षमाधीशः । धर्मब्रह्माध्वन्यः समादिशत्सायणाचार्यम् ॥ ऋग्यजुः-सामशाखानामेकैका व्याकृता त्वया । तावता तत्समानार्था ज्ञातुं शक्यास्ततः पराः ॥ वासना विशदा यत्र मन्त्रार्थानामशेषतः । प्रायेणाध्वर्यवं कर्म पूर्णं शाखान्तरैर्विना ॥ करामलकवद्यत्र परं तत्त्वं प्रकाशितम् । या काचित्तादृशी शाखा त्वया व्याख्यायतामिति ॥ सर्वतः सायणाचार्यो विमृश्योदीरितान्गुणान् । माध्यन्दिने शतपथे ब्राह्मणे व्याकरोति तत् " ॥ इति ॥

## शतपथब्राह्मणस्य कालः ।

शतपथब्राह्मणस्य वेदत्वाविशेषादेव सृष्ट्यारम्भककालिकत्वमर्थतः सिद्धमेव । सृष्टेर्वेदप्रभवत्वं च प्रागुपन्यस्तमेव । तथाप्यर्वाचां मतमालोच्य कालविषये किंचिद्विविच्यते । यः काल आधुनिकैरुत्पत्तिकालत्वेन स्वीक्रियते सोऽस्माभिः वेदव्यसनैतिह्यालोचनेनाभिव्यंजककालत्वेनोरीक्रियते । एतावदेव वैषम्यमर्वाचां प्राचां च मध्ये इति प्रथममवधेयम् । स चाभिव्यक्तिकालः पं. दीनानाथशास्त्रिचुलेटमहाभागाः स्वे वेदकालनिर्णयाख्यपुस्तके "समे शंकुं निखाय" (का.शु.सू.१।१।२) इति कातीयशुल्बसूत्रस्थस्य "दक्षिणायने तु चित्रां यावदादित्य उपसर्पति । उदगयने स्वातिमेति विषुवतीये त्वहनि चित्रास्वात्योर्मध्य एवोदयः" इति कर्कभाष्यस्याधारेण वसंतसंपातगणनया कर्ककाल इतः पूर्वं १९००० प्राक्तन इति निश्चितवन्तः । अर्थादेतत्पूर्वं सूत्रकालः । अर्थाच्छकपूर्वं २३-६७९ वर्षात्प्रागेव सूत्राणि समभवन् । ततः पूर्वं ब्राह्मणकालः । अर्थाद्यानि ब्राह्मणान्युपजीव्य श्रौतसूत्राणि जातानि तानि ब्राह्मणानि तत्पूर्वाणि अर्थात्तेषां मते शकपूर्वं ९४००० वर्षात्प्राग्ब्राह्मणकालः सिध्यति । पं. शंकरबाळकृष्णदीक्षितमहोदयाः स्वे भारतीयज्योतिःशास्त्राख्ये ग्रन्थे " कृत्तिकास्वादधीत । एता ह वै प्राच्यै दिशो न च्यवन्ते । सर्वाणि ह वा अन्यानि नक्षत्राणि प्राच्यै दिशश्च्यवन्ते " ( श. प. २।१।२।२ ) इत्यादि शतपथान्तर्गतप्रमाणेन नक्षत्रगतिविषयकगणितपद्धत्या स्थूलमानतो ब्राह्मणकालः शकपूर्वं ३००० वर्षात्प्राङ्निश्चितवन्तः । अयमेव कालः भारताचार्यचिंतामणिरायवैद्यमहोदयाः स्वे महाभारतोपसंहारे समादृतवंतः । नक्षत्रविज्ञाने ज्योतिषाचार्यव्यंकटेशबापूजीकेतकरमहोदयैरितः पूर्वं ४९०० वर्षात्प्राक्तनो निश्चितः । स्वनामधन्यबाळगंगाधरटिळकमहाभागैः स्वे वेदकालनिर्णये इतः पूर्वं ६००० वर्षात्प्राक्तनो निश्चितः ।

अन्यैरपि विद्वद्भिः सर्वैरयमेवादृतः । तथाऽस्माभिरयमेव कालः प्रकारान्तरेण प्रदर्श्यते । तथाहि-" एतेन हेन्द्रोतो दैवापः शौनको जनमेजयं पारिक्षितं याजयाञ्चकार " ( श. प. १३ । ५ । ४ । ७ ) इति जनमेजयस्योल्लेखो भूतकालविशिष्टो दृश्यते । अयं च युधिष्ठिरात्पूर्वं द्वाचत्वारिंशत्तमस्तत्पूर्वजः पुरुषः । युधिष्ठिरप्रपौत्रो जनमेजयस्त्वस्माद्भिन्नः । तस्यात्र न कोऽपि सम्बन्धः । युधिष्ठिरकालस्तु इतः पूर्वं ५०४० वर्षात्प्राक्तनः । ततः पूर्वं ' प्रतिपुरुषं विंशतिवर्षाणि ' इत्येवं द्वाचत्वारिंशत्पुरुषवर्षगणनया ८४० वर्षाणि भवन्ति । इयं च गणना वंशमाने स्थूला परंतु सर्वसाधारणेति सर्वैः समादृता । एतेन ५०४०-८४० मिलित्वा ५८८० वर्षात्प्राक्तनः कालः शतपथब्राह्मणाभिव्यक्तेः, इति सिध्यति । स्वल्पान्तरस्यादोषत्वाद्युक्तम् ६००० वर्षाणीति । इतोऽप्यधिकतरं विवरणं अस्मत्प्रकाशिते याज्ञवल्क्यचरित्रे द्रष्टव्यम् । नात्र विस्तरभिया विक्रियते ।

## संक्षेपेण याज्ञवल्क्यचरितम् ।

१-महामुनिर्याज्ञवल्क्यः-चमत्कारपुरं वृद्धनगरं ( वडनगर इति उत्तरगुजराथप्रान्ते प्रसिद्धम् ) वा अधिवसति स्म । यदा च जनकराजस्य देशिकपदमंगीचकार तदानीं मिथिलामध्युषितवान् ।

२-अयं च ६००० कालात्पूर्वं संजातः ।

३-असौ विश्वामित्रवंश्यः चारायणः, देवरातः, ब्रह्मरातः, यज्ञवल्कः, वाजसनिः इत्याद्यनेकनामभिः प्रख्यातस्य ऋषेः पुत्रः ।

४-अयं च श्रीशंकरानुमतसावित्रीशापाद्ब्रह्मणस्त्रिगुणात्मकस्यादित्यस्य राजसोंऽशाच्चारायणमुनेस्तपसा सन्तुष्टः संस्तत्प्रार्थनया यज्ञियाग्नेरवतीर्णः ।

५-अस्य मातुर्नाम सुनंदा इति ।

६-अस्य जन्मवासरः केषांचिन्मते ज्येष्ठशुक्लदशमी, केषांचिन्मते कार्तिकशुक्लनवमी, केषांचिन्मते फाल्गुनशुक्लपंचमी, इमाः सर्वास्तिथयो यथार्थप्रमाणविधुरा इति कृत्वा न सर्वसंमताः । अस्मन्मते तु श्रावणशुक्लचतुर्दशीविद्धपूर्णिमायां मध्याह्ने याज्ञवल्क्याय वेदाः श्रीसूर्येण दत्ताः । अतः सा तिथिरेवोत्सवादौ समादरणीयेति ।

७-याज्ञवल्क्येन पूर्वं कुलपतेः श्रीशाकल्यमुनेर्ऋग्वेदोऽधीतः । परंतु आनर्तराजस्य कृते गुरुणाऽत्यन्तं भर्त्सितोऽन्ते तच्छापभीत्या तदाज्ञया तदधीतमृग्वेदं तत्याज ।

८-ततः स्वमातामहान्महामुनेर्वृद्धाद्वैशम्पायनाद्यजुर्वेदमधीतवान् । परन्तु तत्रापि गुरुणा स्वोक्तमन्यथा गृहीत्वा भर्त्सिते सति अंते च तच्छापात्तदाज्ञयैव यजुर्वेदाध्ययनमपि तत्याज ।

९-ततो मानुषं गुरुमिदानीं नोपैमीति प्रतिज्ञाय चतुर्विंशलक्षसंख्याकगायत्रीमन्त्रपुरश्चरणादितपस्यया भगवंतं त्रयीमयमादित्यं तोषयित्वा तस्माच्चतुरो वेदानधीतवान् ॥

१०-ततो गुरुदक्षिणां दत्वा संन्यासार्थं प्रवृत्तो याज्ञवल्क्यो गुरोरादेशादेव कियत्कालपर्यंतं संन्यासग्रहणं सन्निरुध्य मैत्रेयीकात्यायनीभ्यां सह क्रमादुद्वाहं कृत्वा गृही समभवत् ॥

११-तत्र च गृहस्थाश्रमे आदित्याल्लब्धवेदचतुष्टय्यां शिष्यप्रशिष्यद्वाराऽनेकाः शाखाः विस्तारिताः । शतपथब्राह्मणं चाभिव्यक्तिं नीतम् । याज्ञवल्क्यस्मृतिर्याज्ञवल्क्यगीता च प्रणीता । जनकसभायां महान्तम्ब्रह्मवादं कृत्वा सर्वजित्समभवत् । तेन जनकराजदेशिकत्वं स्वीकृत्य तस्मै ब्रह्मज्ञानमुपदिदेश श्रीसूर्यलब्धसामर्थ्येन स्वविरोधिनं शाकल्यं मृत्युपथं नीतवांश्च । अनेकेषु यज्ञेष्वार्त्विज्यं विधाय स्वयमप्यनेकान्यज्ञानकार्षीत् । कात्यायन्यां श्रीकात्यायननामकं पुत्रं च संजनयामास ॥

१२—पिप्पलादमुनिसंबन्धिन्या कयाचिदप्रतर्कितघटनया याज्ञवल्क्यो भगवन्तं सदाशिवं शरणमन्विष्य तस्माद्योगीश्वरपदवीं सम्पादयामास ॥

१३—महामुनिना पारस्करापरनाम्ना कात्यायनाचार्येण स्वपित्रा श्रीयोगीश्वरयाज्ञवल्क्येन प्रतिष्ठापितस्यादित्यसंप्रदायस्य स्मार्तश्रौतसूत्रतत्परिशिष्टादिविविधग्रथप्रणयनं कृत्वा तद्द्वारा सर्वतः परिपोष्य सर्वविधा संधारणा व्यधायि । अयमेवांते संयोजितसूत्रद्वयस्य कर्तेति ॥

१४—अन्ते च ज्येष्ठभार्यायै ब्रह्मवादिन्यै मैत्रेय्यै स्वनिष्ठं ब्रह्मविद्याधनं कनिष्ठायै सद्योवध्वै कात्यायन्यै गृहपश्वादिलौकिकं धन प्रदाय स्वयं संन्यस्य ब्रह्मभावं समाययौ ।

१५—निर्वाणवासरस्तु नोपलब्धः ।

एवं संक्षेपतः सिद्धांतमार्गेण श्रीयाज्ञवल्क्यचरितमत्र विवृतम् । विस्तारः प्रमाणजातं कात्यायनकृता ग्रन्थाश्च सर्वमस्मत्प्रकाशिते याज्ञवल्क्यचरित्रे विलोकनीयम् । अतिविस्तरभिया नात्र विवृतम् ॥

## शतपथब्राह्मणभाष्यकाराः ।

## हरिस्वामी ।

माध्यन्दिनशतपथब्राह्मणे श्रीमदाचार्यहरिस्वामिनां भाष्यं वर्तते । स च स्वीये भाष्ये प्रत्यध्यायमन्ते श्लोकद्वयं श्लोकत्रयं वा लिलेख । तथाहि—" नागस्वामिसुतोऽवन्त्यां पाराशर्यो वसन्हरिः । श्रुत्यर्थं दर्शयामास शक्तितः पौष्करीयकः । श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य भूपतेः । धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम् ॥ भूभर्त्रा विक्रमार्केण कल्पितां कनकवेदिकाम् । दानाध्यक्षस्य कृतवान् श्रुत्यर्थविवृतिं हरिः " ॥ " इति श्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीनां श्रीहरिस्वामिनां कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये प्रथमे हविर्यज्ञकाण्डे नवमोऽध्यायः समाप्तः । " ॥ एतच्छ्लोकानां पर्यालोचनेनायं हरिस्वामी पाराशरगोत्रोद्भवस्य पुष्करणाब्राह्मणकुलावतंसस्य वा पुष्करक्षेत्रवासिनो नागस्वामिनः सूनुः । स चोज्जयिन्यपराभिधावन्तीक्षेत्रमध्युष्य महाराजस्य श्रीविक्रमार्कस्य धर्माध्यक्षपदं दानाध्यक्षपदं चाधिष्ठाय माध्यन्दिनशतपथब्राह्मणे " श्रुत्यर्थविवृतिः " इत्याख्यं भाष्यमकरोत् । अस्य च सर्वविद्यापारदृश्वत्वनिदर्शकं " सर्वविद्यानिधानकवीन्द्राचार्यसरस्वती " इत्युपपदमप्यासीत् । अयं च विक्रमार्कसमयेऽर्थादितः पूर्वं १९९९ वर्षात्प्रागिमां भूमिं भूषयामास । अस्य च समग्रं भाष्यं नोपलभ्यते । यदुपलभ्यते तदपि लेखकप्रमादादशुद्धिबहुलम् । अस्य भाष्यं तु अतीव गभीरमस्ति । तस्योपलब्धौ संशोधने च विद्वद्भिरवश्यं प्रयतितव्यमिति ॥

## सायणाचार्यः ।

अनेन च स्वज्येष्ठभ्रात्रा श्रीमाधवाचार्येण प्रेरितस्य श्रीपरमेश्वरवैदिकमार्गप्रवर्तकस्य सम्राजः श्रीहरिहरमहाराजस्याज्ञया चतुर्ष्वपि वेदेषु भाष्याणि विलिख्य तानि ज्येष्ठभ्रातुरादरार्थं ' माधवीयानि ' इति विशेषणेन भूषयित्वा प्रसिद्धिं नीतानि, इति " स प्राह नृपतिं राजन्सायणार्यो ममानुजः । सर्वं वेत्त्येष वेदानां व्याख्यातृत्वेन युज्यताम् । इत्युक्तो माधवार्येण वीरबुक्कमहीपतिः । अन्वगात्सायणाचार्यं वेदार्थस्य प्रकाशने " ॥ आभ्यां श्लोकाभ्यां ज्ञायते । वीरबुक्क इति श्रीहरिहरमहाराजस्य नामान्तरम् । तेषु वेदभाष्येषु मध्ये ऋग्यजुःसामवेदानामेकैकस्याः शाखाया वेदस्य भाष्यं कृत्वाऽनंतरं माध्यन्दिनशतपथब्राह्मणे सायणाचार्येण भाष्यं व्यरचीति " ऋग्यजुःसामशाखानामेकैका व्याकृता त्वया । तावता तत्समानार्था ज्ञातुं शक्यास्ततः पराः ॥ वासना विशदा यत्र मन्त्रार्थानामशेषतः । प्रायेणाध्वर्यवं कर्म पूर्णं शाखान्तरैर्विना ॥ करामलकवद्यत्र परं तत्त्वं

प्रकाशितम् । या काचित्तादृशी शाखा त्वया व्याख्यायतामिति ॥ सर्वतः सायणाचार्यो विमृश्योदीरितान्गुणान् । माध्यन्दिने शतपथे ब्राह्मणे व्याकरोति तत् " इति तदीयभाष्योपक्रमस्थश्लोकैः स्पष्टं भवति । अस्य भाष्यस्य च नाम ' वेदार्थप्रकाशः ' इति प्रत्यध्यायस्थसमाप्तिलेखोल्लिखितेन " माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये " इति भाष्यविशेषणेन स्पष्टीभवति । तथैवैतत्समाप्तिलेखोल्लिखितेन " श्रीहरिहरसाम्राज्यधुरन्धरेण " इति स्वस्मै दत्तविशेषणेन श्रीहरिहरमहाराजस्यायं प्रधानतमोऽमात्य आसीदित्यपि प्रतीयते । अयं च आत्मपुराणगीताव्याख्यादिग्रन्थकर्तृत्वेन विश्रुतयशसः श्रीशंकरानन्दापरनामधेयविद्यातीर्थस्य गुरोः शिष्य इत्यपि " यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः " इति प्रत्यध्यायस्थादिमान्तिमश्लोकाभ्यामवबुध्यते । अयं च विजयनगरसाम्राज्यस्य प्रधानतमोऽमात्य आसीदित्यनेनैव विक्रमार्कसंवत् १३७२–१४२९ मिते काले इमां भारतवसुन्धरामलंचकारेत्युक्तं भवति । अयं च संन्यस्य श्रीशंकराचार्यपदमप्यधिष्ठितवान् । संन्यासाश्रमे तु " विद्यारण्यस्वामी " इति नाम्ना प्रथितोऽभूत् । अनेन च भारतीयवाङ्मये प्रतिश्रेण्यां बह्वी ग्रन्थसम्पत्तिर्निरमायि । अयं च भारतेऽभूतपूर्वः पण्डितः समजनि । अस्य च सकलं चरित्रं बहुत्र प्रसिद्धमतो नात्र विस्तरभिया वितन्यते ॥

## पाठकोपाभिधो गणेशशास्त्री ।

अनेनापि माध्यंदिनशतपथब्राह्मणे ' स्वरप्रकाशाख्यं ' भाष्यं व्यलेखि । अयं च शांडिल्यगोत्रोत्पन्नस्य पाठकोपाभिधस्य श्रीरंगनाथस्य सूनुः । अयं च मूलतः पश्चिमखान्देशांतर्गतपाह्वोळाग्रामनिवासी पश्चाच्छ्रीमतो यशवंतरायमहाराजस्य धारानरेशस्याश्रयेण धारानगरीमध्युवास, अग्रे तृतीयस्य श्रीमतोऽनंदरायमहाराजस्य राज्यसमये तदीयो दानाध्यक्षश्चासीत् । अनेनेदं भाष्यं संवत् १९२९–१९४० मिते समये विरचितमस्ति । एतस्य भाष्यस्यैका प्रतिकृतिर्धारानगर्यां तदीयपौत्रस्य श्री. रघुनाथमुकुंदपाठकइत्येतस्य सविधेऽस्ति । प्रकृतग्रन्थप्रकाशनाय यदा प्रवृत्ता एतत्प्रेसस्वामिनस्तदा मया पं. मुकुंदशास्त्रीपाठकमहोदयाः बहुवारं प्रार्थिताः यदेतद्भाष्यं मह्यं दीयतामहं सायणभाष्येण साकमिदं भाष्यमपि संयोज्य प्रकाशयिष्ये । परं च तैर्न दत्तम् । तैरुक्तं धाराधिपतिर्यदा प्रकाशयिष्यति तदा प्रकाशितं स्यात्, नान्यदा । आस्तां नाम । एतस्य भाष्यस्य विशेषस्तावत्तदीयैरेवांतिमश्लोकैः प्रथितो भवति । तथाहि–"प्रयोगसिद्ध्यै स्वरसाधनाय यत्कल्पितं क्वापि धिया बुधास्तत् । विरुध्यते चेत्त्रिमुनिप्रणीतशास्त्रेण सोढव्यमिदं तथापि ॥ छन्दसि दृष्टानुविधिर्बाहुलकं व्यत्ययः परादिरिति । संज्ञासु धातुरूपाणीत्यादिवचोभिरभ्यनुज्ञानात् ॥ यत्कृतमिह साहसमिदमखिलं क्षंतव्यमेव विद्वद्भिः । अपुरोभागिभिरस्य च गुणंग्रहणकौतुकान्वितैः पुरुषैः ॥ व्याख्यानपौनरुक्त्यं दूरस्थस्य स्मृतिप्रलंभाय । त्यक्तं न गौरवभिया यावच्छक्यं लाघवं व्यरचि ॥ गुरुतया न चकार च भाष्यकृच्छतपथे स्वरलेखनमित्यदः । व्यरचि तत्कृतिवीक्षणलब्धया निजधिया परिशिष्टमिदं मया ॥ इति श्रीपाठकोपनामकरंगनाथसुतगणेशविरचितं शतपथव्याख्यानं स्वरप्रकाशाख्यं सम्पूर्णम् । " इति ।

## महाभारतव्याख्याता नीलकण्ठः ।

सुप्रसिद्धस्य महाभारतव्याख्यातुश्चतुर्धरवंशविभूषणगोविंदसूनोः श्रीनीलकण्ठस्य काण्वीये शतपथे भाष्यमस्तीति महाभारते वनपर्वणि अ. १६३ श्लो. ११ इत्यत्र–टीकायां " तामिस्रं प्रथमं पक्षम् । केचित्तु–इत एव प्रथमशब्दान्मासारम्भे कृष्णपक्षस्य प्राथम्यमिच्छंति । तदसत् " इत्याद्युपक्रम्य " सूर्यामासौ विचरतो दिवीति " मंत्रवर्णात् । सूर्यामासौ सूर्यचन्द्रमसावित्यर्थः । निपुणतरमुपपादितमेतदस्माभिः काण्वशतपथभाष्ये एकपादिकाकाण्डे " इति । अस्माल्लेखात्प्रतीयते । नेदमिदानीं भाष्यमुपलभ्यते । अयं च प्रायः इतः पूर्वं ५०० वर्षात्प्राक् महाराष्ट्रभूमिं मण्डयति स्म ॥ इति ॥

## बृहदारण्यकोपनिषद्भाष्याणि ।

बृहदारण्यकोपनिषदि श्रीसायणाचार्यकृतं भाष्यं तथा श्रीहरिस्वामिकृतं भाष्यं नोपलब्धम् । अस्ति तूभयोरपि भाष्यं परं च लुप्तप्रायमेव । तल्लब्धौ संशोधकमाहाभागैर्यतितव्यमवश्यमेव ॥

## प्रकृतभाष्यकर्ता–वासुदेवब्रह्मभगवान् ।

अनेन माध्यन्दिनपाठमाश्रित्य बृहदारण्यकोपनिषदि वासुदेवप्रकाशिकाख्यं भाष्यं कृतम् । अयं च श्रीपाठकानिरुद्धस्य पुत्रः श्रीहृषीकेशब्रह्मभगवत्पूज्यपादस्य शिष्यः परमहंस आसीदिति तदीयभाष्यसमाप्तिलेखतो दृश्यते । अयं च कदा कां भूमिं भूषितवानित्यादि तदीयैतिह्यं नोपलब्धम् ॥

## द्विवेदगंगः ।

अनेनापि माध्यन्दिनपाठमाश्रित्यैव बृहदारण्यकोपनिषदि मुख्यार्थप्रकाशिकानामकं भाष्यं कृतम् । अयं च विद्वज्जनतिलकपदमण्डितस्य द्विवेदश्रीनारायणस्य सुतः । अयं च गुर्जरनागरब्राह्मण इति प्रसिद्धः । इदं च भाष्यं जर्मनदेशे मुद्रितपुस्तके संगृहीतमस्ति ॥

## नित्यानन्दाश्रममुनिः ।

अयं च पुरुषोत्तमाश्रमपूज्यपादशिष्यत्वेनात्मानं प्रथयति । अनेन कण्वपाठमाश्रित्य बृहदारण्यकोपनिषदि मिताक्षरानामकं व्याख्यानमकारि । तच्च पुण्यपत्तनस्थानन्दाश्रमे मुद्रणालये मुद्रितमेव ॥

प्राय इदं व्याख्यानत्रयमन्योऽन्यसादृश्यमावहति । त्रयाणामपि कालानुपलब्ध्या कः पूर्वः को मध्यः क उत्तरः केन किं व्याख्यानमुपजीव्य स्वं व्याख्यानं निर्मितमिति विमृष्टेऽपि न निश्चेतुं शक्यते ॥

## दिगंबरानुचरः ।

अनेन बृहदारण्यकोपनिषदि बृहदारण्यकार्थप्रकाशाख्यं व्याख्यानं कृतम् ॥

## श्रीमच्छंकराचार्याः ।

आचार्यपादानां काण्वपाठाश्रितं बृहदारण्यकोपनिषद्भाष्यं सर्वविश्रुतम् । तेषां चरित्रमपि सर्वविदितम् ॥

## आनंदगिरिः ।

अनेन त्वाचार्यभाष्यं विवृतम् । स्वातन्त्र्येण मूलं न विवृतम् ॥

## सुरेश्वराचार्यः ।

एतेनाप्याचार्यभाष्यमुपजीव्यैव बृहदारण्यकोपनिषदि वार्तिकं व्यरचि । अस्यापरं नाम मण्डनमिश्र इति । अस्य सकलं चरित्रमाचार्यपादचरित्रेण सहैव सर्वविश्रुतम् ॥

## भर्तृप्रपंचः ।

बृहदारण्यकोपनिषदि अस्यापि भाष्यमस्ति । अयं च श्रीमच्छंकराचार्येभ्यः प्राचीनः "तस्या इयमल्पग्रन्था वृत्तिरारभ्यते" इत्याचार्यभाष्यव्याख्यायाः "तस्या इति । भर्तृप्रपंचभाष्याद्विशेषान्तरमाह । अल्पग्रन्थेति ।" इत्यानन्दगिर्युक्तेर्भाति । अयं भर्तृप्रपंचः कात्यायनश्रौतस्मार्तसूत्रव्याख्याता भर्तृयज्ञश्च एको भिन्नो वेति विद्वद्भिर्निश्चेतव्यम् । मन्मते त्वेक एवाभाति ॥

## उपनिषद्भाष्यम् ।

यथा भागवते चूर्णिका तथैव इदं च बृहदारण्यकोपनिषदि चूर्णिकेति मन्तव्यम् । इदं च मत्सविधेऽस्ति । अत्र कर्तृनामाद्युल्लेखो नास्ति ॥

## इतराण्यपि बहूनि भाष्याणि ।

१–सिद्धान्तदीपिका, २–रघूत्तमकृता परब्रह्मप्रकाशिका, ३–गंगाधरेन्द्रकृता दीपिका, ४–मथुरानाथकृता लघुविवृतिः, ५–नारायणकृता दीपिका, ६–विज्ञानभिक्षुकृतं भाष्यम्, ७–बृहदारण्यकविवेकः, ८–बृहदारण्यकविषयनिर्णयः, ९–राघवेन्द्रकृतः बृहदारण्यकोपनिषत्खण्डार्थोऽथवा बृहदारण्यकोपनिषदर्थसंग्रहः, १०–व्यासतीर्थकृतं भाष्यं, ११–आनन्दतीर्थकृतं भाष्यं, १२–आनन्दतीर्थकृता शांकरभाष्यटीका, १३–श्रीमद्रामानुजाचार्यकृतं भाष्यं, १४ श्रीमद्वल्लभाचार्यकृतं भाष्यं, १५ श्रीमन्मध्वाचार्यकृतं भाष्यं, १६–एवमेव भिन्नभिन्नसंप्रदायाचार्यतच्छिष्यप्रशिष्यादीनां व्याख्यानोपव्याख्यानानि बहूनि सन्ति ।

तेषु कानिचित्प्रसिद्धानि कानिचिदप्रसिद्धानि । सर्वेषामत्र विवरणं ग्रन्थगौरवमावहेदतो न क्रियते ॥

## शतपथब्राह्मणोक्तकर्मणां प्रकृतिविकृतिविमर्शः ।

अथ शतपथोक्तकर्मजातसंबंधि विषयावगाहनं सुगमतया भवत्वेतदर्थं श्रौतकर्मणां प्रकृतिविकृतिभावविषये किंचिद्विमृश्यते । तथाहि—

**कर्मणां प्रकृतीरनुक्रमिष्यामः ।** कर्मणां वैकृतानां कर्मणां विध्यादिविध्यंतवती प्रकृतिः, यत्र पुनर्विध्यादिमात्रमस्ति विध्यंतो नास्ति सा विकृतिः, इति "गृह्यस्थालीपाकानां कर्म" ( पा. गृ. सू. १ । १ । १ ) इति सूत्रभाष्ये कर्कः । ताः प्रकृतीः क्रमेण कथयामः ।

**अथातः प्रकृतयः ।** अथेति मन्त्रब्राह्मणविवरणानन्तर्ये । अत इति हेत्वर्थे, अग्रे यज्ञानां वक्ष्यमाणतया तत्प्रकृतीनामावश्यकं कथनम् ॥

**पूर्णाहुतिराहुतीनाम् ।** पूर्णाहुतिरिति कर्मणो नामधेयं तत्स्वरूपमग्न्याधेये आचार्येण प्रदर्शितं –"निरूप्याज्यं गार्हपत्येऽधिश्रित्य स्रुक्स्रुवं च संमृज्योद्वास्योत्पूयावेक्ष्य गृहीत्वाऽन्वारब्ध एवं सर्वत्र स्वाहेति" ( का. श्रौ. सू. ४ । २४७ ) एवं सर्वत्रेति यत्राऽव्यक्ता जुहोतिचोदना तत्राधिश्रयणादि प्रवर्तते । कुत एतत् जुहोतिशब्दात् अव्यक्ततासामान्याच्चेति तत्रैव कर्कः । पूर्णाहुतिधर्माश्च अनुद्धृताभ्यस्तमयाहुतौ विहिताः । तथाच श्रुतिः–"तदाहुर्यस्याहवनीयमनुद्धृतमादित्योऽभ्यस्तमियात्किं तत्र कर्म का प्रायश्चित्तिः" इत्युपक्रम्य– "तमुपसमाधाय प्रतिपरेत्य गार्हपत्य आज्यमधिश्रित्योद्वास्योत्पूयावेक्ष्य चतुर्गृहीतमाज्यं गृहीत्वा समिधमुपसंगृह्य प्राङुदाद्रवत्यथाहवनीये समिधमभ्याधाय दक्षिणं जान्वाच्य जुहोति विश्वेभ्यो देवेभ्यः स्वाहेति" ( श. प. १२ । ४ । ६ । ६ ) इयं तु विहितधर्मका अग्न्याधेयोक्ता तु अविहितधर्मका, ततश्चोदनासारूप्येण ततो धर्मान् गृह्णाति । अत आचार्येण तदीय. [illegible] इहोपदिष्टाः । तत्रान्वारंभणवरदाने न विहिते, अतस्तयोरनतिदेशः । वाग्यमोऽपि चेहैवेति, नातिदिश्यते इति "तत्रैव वरं ददामीति वाग्विसर्जनम्" ( का. श्रौ. सू. ४ । २४८ ) इति सूत्रभाष्ये कर्कः । इति पूर्णाहुतिस्वरूपम् । सा पूर्णाहुतिः अव्यक्तजुहोतिचोदनानामाहुतीनां प्रकृतिर्बोध्या ॥

**दर्शपूर्णमासाविष्टीनां दर्वीहोमानां च ।** तथाच श्रौतसूत्रं "दर्शपूर्णमासधर्मा इष्टिपशुषु सामर्थ्याद्दर्शनाच्चेति" ( का. श्रौ. सू. ४ । ३ । २ । ३ ) "दर्वीहोमाः पौर्णमासधर्मा जुहोत्यविशेषाज्जुहूदर्शनाच्चेति च" ( का. श्रौ. सू. ६ । १० । १७ । १८ ) पौर्णमासशब्दश्च दर्शस्याप्युपलक्षणम् । दर्वीहोमानामिति अव्यक्तचोदनानां यजतीनामुपलक्षणम् । तथा चात्रैव सूत्रे कर्कः पौर्णमासशब्दश्च दर्शस्याप्युपलक्षणम् । पयःसाधनेषु हि द्रव्यसामान्यात्सान्नाय्यधर्मा इष्यंते । कुत एतत्, पौर्णमासधर्मा इति जुहोत्यविशेषात् । जुहोतियजत्यो-

र्यतः अविशेषः। उभयत्र हि द्रव्यदेवतावत्त्वं, "त्र्यम्बकान्निर्वपति रौद्रान्" इति निर्वपतिशब्देनौषधमवगम्यते, सौर्यादिषु दृष्टत्वात्, तथाऽन्यत्र धानाभिर्जुहोति सक्तुभिर्जुहोति लाजैर्जुहोतीति द्रव्यविधानं, मांत्रवार्णिक्यो देवताः, तेनोभयत्र द्रव्यदैवतावत्त्वात् यजतिजुहोत्योरविशेषः, अयमेकाश्च दर्वीहोमाः, धर्मापेक्षायां च सत्यां द्रव्यदेवतावत्त्वसामान्यात् पौर्णमासधर्मा इति युक्तरूपता, मारुतानि प्रकृत्य श्रूयते, "कथमस्यैते पुरोऽनुवाक्यवन्तो याज्यवन्तो वषट्कृते स्रुचा हुता भवन्ति" इति प्रश्नपूर्वकमाह—"एतेषां वै सप्तपदानां मारुतानां यानि त्रीणि प्रथमानि पदानि सा त्रिपदा गायत्री पुरोऽनुवाक्याऽथ यानि चत्वार्युत्तमानि सा चतुष्पदा त्रिष्टुब् याज्येदमेव कपुच्छलमयं दंडः स्वाहाकारो वषट्कार एवमु हास्यैते पुरोऽनुवाक्यवंतो याज्यवन्तो वषट्कृते स्रुचा हुता भवन्तीति" (श. प. ९। ३। १। १७) चयनप्रकरणे। श्रुत्यर्थः—एतेषां सप्तपदानां मारुतानामित्यत्र मारुतशब्देन तद्धोमसाधनभूताः शुक्रज्योतिश्चेत्यादयो मन्त्रा विवक्ष्यन्ते, ते च सप्तपदा भवन्ति "अतश्च तेषां मन्त्राणां यानि प्रथमानि त्रीणि पदानि संति सा त्रिपदा गायत्री, इयमेव पुरोऽनुवाक्या भवति, अथ यानि चत्वार्युपरितनानि सन्ति तानि चतुष्पदा त्रिष्टुप्, सैव याज्या भवति" इदमेवेति प्रसृतिरभिनयेन प्रदर्श्यते। कपुच्छलमिति स्रुङ्मुखमुच्यते। अयमिति बाहुदंडः प्रदर्श्यते। एवं बाहुरेव स्रुग् इत्युक्तं भवति, स्वाहाकार एव वषट्कारो भवति। इत्थमुक्तप्रकारेण अस्याग्नेः यजमानस्य वा संबंधिनः एते मारुताः पुरोनुवाक्यायाज्यावन्तो वषट्कृते स्रुचा हुता भवन्ति इदमेव कपुच्छलमयं दंड इति स्रुगनुग्रहः। एतेषां च पौर्णमासदृष्टानामनुग्रहं ब्रुवन् पौर्णमासधर्मित्वं दर्शयतीति कर्कः॥

**दर्शः पयोद्रव्याणाम्**—पशुसाधनकेषु हि द्रव्यसामान्यात्सान्नाय्यधर्मा इष्यन्ते, इति "दर्शपौर्णमासधर्मा इष्टिपशुषु" (का. श्रौ. सू. ४। ८०) इति सूत्रभाष्यस्थकर्कात्॥

**पशुश्चाग्नीषोमीयः पशूनामैंद्राग्नसौर्यप्राजापत्यानां च।** ज्योतिष्टोमान्तर्गतः अग्नीषोमीयः पशुः ऐन्द्राग्नसौर्यप्राजापत्येति विकल्पितदैवतनिरूढपशोः तदितरेषां सौत्रामण्यादिसर्वश्रौतपशूनां च प्रकृतिः। प्रकारः समुच्चयार्थः। यत्तु दर्शपूर्णमासधर्मा इष्टिपशुष्विति सूत्रेण चास्य निरूढपशोः दर्शपूर्णमासप्रकृतित्वमुक्तं, तत्तु निरूढपशोर्हविर्यज्ञत्वसामान्यात्। कुत एतत् निरूढपशुर्द्विविधः, हविर्यज्ञविधः सवविधश्चेति। तथाच श्रुतिः "हविर्यज्ञविधो वा अन्यः पशुबन्धः सवविधोऽन्यः सहैष हविर्यज्ञविधो यस्मिन् व्रतमुपनयति यस्मिन्नपः प्रणयति यस्मिन् पूर्णपात्रं निनयति यस्मिन् विष्णुक्रमान् क्रमयत्यथ हैष सवविधो यस्मिन्नेतानि न क्रियन्ते" इति, (श. प. ११-७ २-१) इत्येवं निरूढपशोर्द्वैविध्यं, अतोऽस्य च प्राग्निसाधनकत्वसामान्यात् अग्नीषोमीयविध्यन्तग्राहकत्वमिति कर्कोऽपि निरूढपशौ आद्यसूत्रविवरणात्प्रथमं उभयप्रकृतित्वं सिद्धांतितवान्। अतः कर्कपादैर्दर्शपूर्णमासधर्मा इष्टिपशुष्विति सूत्रे इष्टिषु पशौ चेति द्रष्टव्यम्। पश्वन्तरेषु हि अग्नीषोमीयधर्मप्राप्तिं वक्ष्यति अग्नीषोमीयदर्शनादिति (का. श्रौ. सू. ६-१०-१४)।

**स्मार्तपशूनामपि अग्नीषोमीय एव प्रकृतिः।** तथाच श्रौतकल्पे, "अग्नीषोमीयात्पशुषु" इति सर्वत्र श्रौतस्मार्तपशुषु अग्नीषोमीयप्रकृतिमुक्त्वा स्मार्तपशुषु शाखानियोजनं, वपां हुत्वा त्रीणि पंच सर्वाणि वाऽवद्यति न सर्वाण्येवेति सर्वाभावे शेषात्स्विष्टकृतः इत्याद्यपवादमाचार्यो वदति (का. श्रौ. सू. ६।१०।२९।३२) यत्तु निरूढपशुबन्धमङ्गीकृत्य अग्नीषोमीयधर्मानुकथनं कृतमाचार्येण तद्युक्तरूपम्। अग्नीषोमीयधर्माणां हि सौमिकैर्धर्मैरत्यंतव्यतिषंगादिति कर्कः। अग्नीषोमीयः पशुः सर्वपशूनां प्रकृतिभूतोऽपि स्वयं सान्नाय्यविकृतिः, तत्रापि पयोविकृतिभूतः।

**सौत्य एकादशिनानाम्।** सौत्य अग्निष्टोमीयसवनीयः पशुः एकादशिना वा विहृताः (का. श्रौ. सू. १२ ६।१४) इति द्वादशाहविहृतादीनां सर्वेषामेकादशिनानां पशूनां प्रकृतिः॥

**एकादशिनः पशुगणानाम्** । सूत्रत्रय्यामेकादशिनशब्दोऽकारांतः पुमान्, एकादशिनेतिशब्देनाव्यवहृताः अनेके यत्र पशवस्ते पशुगणाः, तेषां एकादशिनः पशुः प्रकृतिः । यथा वाजपेये सप्तदशप्राजापत्यपशुगणः । एवमितरेषां पशुगणानाम् ।

**वैश्वदेवं चातुर्मास्यानाम्** । तथाहाचार्यः " वैश्वदेवधर्माश्चातुर्मास्येषु वचनप्रवृत्तिभ्यामिति " ( का. श्रौ. सू. ४।३।४। ) ॥

**सोमावभृथोऽवभृथानाम्** । तथाहाचार्यः " सोमाद्यावभृथे सामप्रतिषेधात् " ( का. श्रौ. सू.४।३।५ ) अवभृथ इति जातावेकवचनं,ततश्च वरुणप्रघाससौत्रामण्याद्यवभृथाः सर्वे सर्वेषामवभृथानां सौमिकोऽवभृथः प्रकृतिः॥

**प्रातःसवनं सवनानाम्** । ' सर्पणादिमाध्यंदिनम् " ( का. श्रौ. सू. १०।१।१ ) " समन्वारब्धनिष्क्रमादि करोत्यग्नीदग्नीनिति प्रैषात् " ( का. श्रौ. सू. १० । १ । १४ ) अत्र सर्पणमादित्यग्रहस्य प्राक् तृतीयसवनश्रुतेः " ( का. श्रौ. सू. १० । ४ । १३ ) " प्रातःसवनप्रभृत्यासंवादाच्छ्रुतेः शामित्रनुशासनप्रभृतीडांतं कृत्वा पुरोडाशादि चेडाभक्षात् " ( का. श्रौ. सू. १० । ९ । ७ ) इत्यादि, प्रातःसवनधर्माणामितरयोः सवनयोः समाम्नानात् प्रातःसवनं प्रकृतिः । ऋतूनां भूयस्त्वापेक्षया सवनानामिति बहुवचनम् ।

**अंश्वदाभ्यौ ग्रहाणाम्** । द्वादशाहे विहितौ " अपो निधायांऽश्वदाभ्यग्रहणम् " ( का. श्रौ. सू. १२।१।६ ) " बुभूषतोऽदाभ्यं गृह्णाति " ( का. श्रौ. सू. १२।५।१९ ) इति सन्नियोगशिष्टौ एतत्संज्ञौ ग्रहौ, अंशुश्चादाभ्यश्चेति द्वंद्वः । अनयोर्ग्रहणं सत्रादिषु विहितम् । तथाच द्वादशाहे सूत्रं "सत्र–सहस्र- सर्ववेदस–वाजपेय–राजसूय–विश्वजित्–सर्वपृष्ठेषु–ग्रहणमवकाश्यश्चेत्" ( का. श्रौ. सू. १२।५।१३ । ) इति । एतौ अग्रिमग्रहाणां प्रकृतिः ।

**सुपर्णश्चित्यानाम्** । श्रौतकल्पे षोडशसप्तदशाष्टादशेति अध्यायत्रिकोक्तः सुपर्णचित्यः गरुडाकृतिचित्योऽग्निः एकशतविधानां चित्याग्नीनां प्रकृतिः । तथाच तत्रैव–" उत्तरेषु पुरुषोच्चयेनैवैकशतविधानात् " " यथाग्निवेदीष्टकाप्रमाणं " " अन्तःपात्यगार्हपत्ययोरिच्छन्निति " ( का. श्रौ. सू. १६ । ८ । २०–२२ ) इति ॥

**ज्योतिष्टोम एकाहानां द्वादशाहानां च** । तथाऽऽहाचार्यः–" ज्योतिष्टोमधर्माः एकाहद्वादशाहयोस्तद्गुणदर्शनात् " ( का. श्रौ. सू. १२ । १ । १ ) उत्पत्तिवाक्ये देवताऽनभिधानतया अव्यक्तचोदनाचोदितो ज्योतिष्टोमः अव्यक्तचोदनाचोदितोद्भिदादिवैकृतयागानां अव्यक्तत्वसामान्यात् प्रकृतिः । तत्रैतावान् विशेषः–एकाहेषु चत्वारो व्रात्यस्तोमाः, षट् साद्यस्काः, चत्वारोऽग्निष्टुतश्च, तत्र प्रथमे व्रात्यस्तोमे, साद्यस्के, अग्निष्टुति च ज्योतिष्टोमः प्रकृतिः । द्वितीयादित्रिषु व्रात्यस्तोमेषु प्रथमो व्रात्यस्तोमः प्रकृतिः । एवं द्वितीयादिसाद्यस्केषु प्रथमः साद्यस्कः प्रकृतिः । त्रिष्वग्निष्टुत्सु प्रथमोऽग्निष्टुत्प्रकृतिः । तथाऽऽहाचार्यः–" प्रथमस्य व्रात्यस्तोमसाद्यस्केषु वचनात् " ( का. श्रौ. सू. १२ । १ । २ ) " अग्निष्टुत्सु चैके " ( का. श्रौ. सू. १२ । १ । ३ ) एके इति पूजार्थं, न तु विकल्पार्थम् । वचनादिति उच्यते अनेनेति वचनं नामातिदेशोऽयम् ॥

**पूर्व उत्तरेषाम्** । अग्निष्टोमाः सप्त ७ । अग्निष्टोमः १ अत्यग्निष्टोमः २ उक्थ्यः ३ षोडशी ४ वाजपेयः ५ अतिरात्रः ६ अप्तोर्यामः ७ । एषां मध्ये यः पूर्वः प्रथमः अग्निष्टोमः स उत्तरेषां षण्णां सोमानां प्रकृतिः । षडुत्तरे अग्निष्टोमविकाराः । तथाऽऽहाचार्यः–" एष प्रथमः सोमः " ( का. श्रौ. सू. १० । ९ । २५ ) " षडुत्तरेऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्यामः " ( का. श्रौ. सू. १० । ९ । २७ ) इति एष प्रथमः सोम इति अग्निष्टोमस्य प्राथम्यात् उत्तरेषां षण्णामग्निष्टोमानुष्ठित्यनन्तरमनुष्ठानं, न ततः प्राक् ।

षडुत्तरे इति विकारप्रज्ञप्तिः, न तु क्रमबोधः। तेन षडुत्तरे षट् विकारा इत्यर्थः। तथाच तत्रैव कर्कः—उत्तरो हि विकारो भवति प्रकृत्यपेक्षया प्रकृतिश्च पूर्वेति। तत्रापि उत्तरेषां षण्णां मध्ये केषांचित् क्रतुविकारत्वेऽपि संस्थाविकारत्वम्। उक्थ्यषोडश्यतिरात्रात्यग्निष्टोमानामग्निष्टोमविकारत्वम्। वाजपेयः षोडशिक्रतुपशूनां दर्शनात् षोडशिविकारः। अप्तोर्यामः अतिरात्रक्रतुतिरोह्न्यानां दर्शनात् अतिरात्रविकारः। अतः सोमविकृतित्वं संस्थाविकृतित्वं च। तेन स्वप्रकृत्यपेक्षया क्रतुत्वम्। ततश्च स्वातन्त्र्येणैषां क्रतुत्वेनानुष्ठानं क्रियते॥

**ज्योतिरतिरात्राणाम्।** अग्निष्टोमसंस्थः सौमिकदक्षिणो ज्योतिर्नामा द्वितीय एकाहः नवसप्तदशादि-सर्वस्तोमान्तानां त्रयोदशानामहीनानामपि एकाहधर्मिणां अतिरात्राणां प्रकृतिः॥

**द्वादशाहः सत्राहीनानाम्।** तथा च श्रौतं सूत्रं—"द्वादशाहधर्मः सत्रेषु तद्गुणदर्शनात्" (का. श्रौ. सू. १३। १। १) द्वादशरात्रादीनां शतोक्थ्यान्तानां संवत्सरावराणां सत्राणां द्वादशाहः प्रकृतिरिति। "अभिप्लवं पूर्वं पुरस्ताद्विषुवत उपयन्ति पृष्ठ्यमुत्तरमिति" (का. श्रौ. सू. १२। २। ३। ४) तथा "पृष्ठ्यमुपरिष्टाद्विषुवतः पूर्व्वमुपयन्तीति चेति" (का. श्रौ. सू. १२। ३। ४) पौर्वापर्यविधिपरे वाक्ये द्वादशाहिकपृष्ठ्यदर्शनादहीनानां च प्रकृतिः।

**गवामयनं सांवत्सरिकादीनाम्।** गवामयनं संवत्सरसाध्यानां संवत्सरत्रयसाध्यानां महासत्राणां सारस्वतसत्राणां च प्रकृतिः, तथाच श्रौतसूत्रं, "संव्वत्सरप्रभृतीनि गवामयनप्रकृतीनि तद्गुणदर्शनादिति" (का. श्रौ. सू. २४। ४। २)॥

इति प्रकृतिविकृतिविमर्शः।

## शतपथस्य बहुगुणवचनत्वम्।

निरुक्ते हि—"बहुभक्तिवादीनि ब्राह्मणानि भवन्ति। पृथिवी वैश्वानरः, सम्वत्सरो वैश्वानरो, ब्राह्मणो वैश्वानर इति"॥ (निरु. ७। ७। २४) भक्तिर्नाम गुणकल्पना, येन केनचिद्गुणेन ब्राह्मणं सर्वं सर्वथा ब्रवीति। तत्र तत्त्वमन्वेष्टव्यम्भवति। एवमादि किमपि ब्राह्मणेन बहु वैश्वानरशब्देनोच्यते। एवं ब्राह्मणग्रन्थे—एकशब्देन गुणवचनत्वं दर्शितम्। तदेतच्छतपथेऽपि सम्भवति। तथा चोदाहरणम्—"मेध्या वाऽ आपः" (मा. श. प. १। १। १। १) "वज्रो वाऽ आपः" (मा. श. प. १। १। १। १७) "योषा वाऽ आपः" (मा. श. प. १। १। १। १८) "शान्तिरापः" (मा. श. प. १। २। २। ११) एवमन्यदप्युन्नेयम्। इति॥

## शतपथब्राह्मणस्याध्ययनप्रकाराः।

"वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः। तद्दानं चैव शिष्येभ्यो वेदाभ्यासो हि पंचधा" इति मिताक्षरायाम्। १-द्विजैः पूर्वं गुरोः सकाशादक्षराद्यानुपूर्व्या वेदस्य स्वीकरणं नाम—अपूर्वमध्ययनम्। २—ततो गृहीतस्य वेदस्य विचारो नाम—अर्थावगतिसम्पादनम्। ३—ततोऽभ्यसनं नाम—कण्ठस्थीकरणम्। ४—ततो जपो नाम—ब्रह्मयज्ञाख्यो नित्यः स्वाध्यायः, पारायणादिको नैमित्तिकः स्वाध्यायश्च। ५—ततः शिष्येभ्यो दानं नाम—अध्यापनं प्रवचनं च। इत्येवं पञ्चप्रकारो वेदो यदाऽधीयते तदैव स्वाध्यायविधिश्चरितार्थ इति ध्येयम्। ब्रह्मयज्ञपारायणविध्यादयस्त्वन्यतो ज्ञेयाः। तेषामतिविस्तृतत्वान्नात्रोद्ध्रियन्ते॥

## अध्ययनादेः फलम्।

अथास्य स्वाध्यायादिकरणे फलं तु स्वयं श्रुत्यैव दर्शितम्। "अथातः स्वाध्यायप्रशंसा। प्रिये स्वाध्यायप्रवचने भवतः। युक्तमना भवति। अपराधीनोऽहरहरर्थान्साधयते। सुखं स्वपिति। परमचिकित्सक आत्मनो

भवति । इन्द्रियसंयमश्च । एकारामता च । प्रज्ञावृद्धिः । यशोलोकपक्तिः । प्रज्ञा वर्धमाना चतुरो धर्मान्ब्राह्मणमभिनिष्पादयति । ब्राह्मण्यं प्रतिरूपचर्यां यशोलोकपक्तिम् । लोकः पच्यमानश्चतुर्भिर्धर्मैर्ब्राह्मणं भुनक्ति—अर्चया च दानेन चाज्येयतया चावध्यतया च " इति ( श. प. ११ । ५ । ७ । १ ) । स्फुटार्था चेयं श्रुतिः । इतोऽप्यधिकं प्रशंसनमुक्तस्थले मूलग्रन्थे एव विलोकनीयं जिज्ञासुभिः । इति शिवम् ॥

प्रख्याते भुवि भारते क्षितिरसव्यालेन्दु १८६१ संज्ञे शके स्वब्देऽस्मिन् दुरितप्रमाथिनि नभःशुक्ले दशम्यां गुरौ ॥
प्रस्तावोऽभिनवः श्रुतेः शतपथाख्याया व्यलेखि प्रगे संतुष्येयुरनल्पसूक्ष्ममतयो निर्मत्सराः कोविदाः ॥ १ ॥
दूरमुत्सार्य मात्सर्यं सदसद्व्यक्तिकारणाः । शास्त्रं गृह्णन्तु संशोध्य प्रार्थयामीति सादरम् ॥ २ ॥
श्रीगोदातटगार्च्यनासिकगतो माध्यन्दिनाम्नायवित् श्रौतस्मार्तविधानकौशलमतिर्ह्यार्षेयपाराशरः ॥
वारे इत्युपनामसत्कुलजनिर्जैरामपौत्रः सुधीरात्याजीसुत आस्त वेदतिलकः श्रीश्रीमदण्णाभिधः ॥ ३ ॥
श्रौतस्मार्तविधौ कुशाग्रधिषणो धर्मागमे मर्मभित् मीमांसानयकोविदः श्रुतिकृती वेदार्थबद्धादरः ॥
काव्ये तीर्थपदं दधद्विजवरः श्रीश्रीधरस्तत्सुतः सद्विद्याभरणेत्युपाधिसहितः प्रास्ताविकं व्यालिखत् ॥ ४ ॥

इति श्रीगोदातटिनीतटनिकटवर्तिश्रीमन्नासिकमहाक्षेत्रवासिना " वारे " इत्युपनाम्ना ज्योतिर्विज्जयरामप्रपौत्र-भट्टात्याजीसूरिपौत्रश्रीमज्जगद्गुरुशंकराचार्यदत्त " वैदिकतिलक " पदसंभूषितश्रीमदण्णाशास्त्रिसूनुना काव्यतीर्थ-मीमांसक-विद्याभरणेत्युपाधिमता श्रीधरशर्मणा श्रीशुक्लयजुर्वेदीयमाध्यन्दिनशतपथब्राह्मण-मधिकृत्य प्रणीतोऽल्पतर उपोद्घातश्चरमवर्णध्वंसमगात् । इति ॥

## निवेदनम् ।

अस्य माध्यन्दिनशतपथब्राह्मणस्य मुद्रणमद्यावधि द्वित्रिवारं जातम् । एकं मुद्रणं प्रुष्यजनपदे ( जर्मनदेशे ) बर्लिननगर्यां संवत् १८९९ मध्ये प्रो. अल्बेर्तेन वेबरमहोदयेन सम्पादितम् । अस्मिंश्च मुद्रणे आदौ तत्तत्काण्डस्य सस्वरं मूलं पश्चात्तत्तत्काण्डस्य सायणभाष्यं सायणभाष्यानुपलब्धौ क्वचिद्धरिस्वामिभाष्यमुपनिषद्भागे द्विवेदगङ्गकृतं मुख्यार्थप्रकाशिकाख्यं भाष्यं च संक्षिप्य संगृहीतम् । तत्र केषुचित्काण्डेषु भाष्यं सर्वथा नास्ति । इदं च शुद्धमस्ति । अपरं मुद्रणं कलकत्तानगर्यां सन् १९०१ मध्ये पं. सत्यव्रतसामाश्रमिणा कलकत्ताएशियाटिकसोसायटीकृते संपादितम् । एतच्च संस्करणं प्रथमद्वितीयतृतीयपंचमषष्ठकाण्डात्मकमेव । एतदपि प्रतिकाण्डमादौ मूलं ततः संपूर्णं सायणभाष्यं सायणभाष्यानुपलब्धिस्थले हरिस्वामिभाष्यं चेत्येवंरूपेण संस्कृतं सम्यक् शोधितं चास्ते । तृतीयं मुद्रणं अजमेरनगरीस्थवैदिकयन्त्रालये मूलमात्रं संपादितं वर्तते । इदानीं श्रीकाश्यां पण्डितप्रवरमहामीमांसकश्रीचिन्नस्वामिशास्त्रिवर्यैः कण्वशतपथब्राह्मणं मूलमात्रं कतिचित्काण्डात्मकं मुद्रापितमिति श्रूयते । इमानि च मुद्रणान्यसंपूर्णान्यतो नित्यस्वाध्यायादौ तदर्थपरिशीलनादौ चानुपयुक्तानि सन्ति ॥

प्रकृतं संस्करणं चोपरिनिर्दिष्टां क्षतिं परिहर्तुकामैः बंबईनगरस्थश्रीवेङ्कटेश्वरस्टीम्यन्त्रालयस्य तथा कल्याणनगरीस्थश्रीलक्ष्मीवेंकटेश्वरमुद्रणयन्त्रालयस्याध्यक्षैरस्मदादिद्वारा सम्पादितम् । अस्मिंश्च संस्करणे पाठकमहाभागानां तदर्थमधिगन्तुमनसां च सौकर्यार्थं प्रथमं सर्वस्मादुपरि सस्वरं वैदिकपरिभाषया संस्कृतं मूलं, तदधो वैदिकपरिभाषाविहीनोऽथसुलभत्वाय मूलपाठस्य ऋजुपाठः, तदधो भाष्यं, तदधः क्वचिद्विषमतापरिहाराय क्वचित्स्पष्टप्रतिपत्तये क्वचित्पाठान्तरबोधनाय क्वचिद्विरोधपरिहाराय क्वचित्तत्समानार्थकस्थलान्तरस्थविषयबोधनायेत्येवं विविधप्रयोजननिर्वर्तयित्रीभिष्टिप्पणीभिः परिष्करणमित्येवंलक्षणा पद्धतिः समादृता । मध्ये मध्ये विविधयज्ञविहारबोधकाः पट्टा आवश्यकानि विविधप्रसंगबोधकानि चित्राण्यपि

संयोजितानि । तथाऽन्ते वैदिकपरिभाषास्वरयोर्विज्ञानाय श्रीमत्कात्यायनकृतं प्रतिज्ञासूत्रं भाषिकसूत्रं च सभाष्यं संग्रथितम् । तृतीयकाण्डादौ पशुवदानविवेकोऽपि सन्निवेशितः । भाष्यसंकलने तु यत्र श्रीसायणाचार्यभाष्यं न सम्प्राप्तं तत्रार्थात्प्रथमकाण्डे सप्तमाध्यायस्य चतुर्थब्राह्मणमारभ्य काण्डसमाप्तिं यावत्, तथा चतुर्थकाण्डेऽन्तिमेऽध्यायत्रये, तथाऽष्टमकाण्डे चतुर्थाध्यायस्य चतुर्थब्राह्मणमारभ्य काण्डसमाप्तिं यावत्, तथा द्वादशे त्रयोदशे च काण्डे श्रीहरिस्वामिभाष्यं, दशमकाण्डेऽन्तिमे ब्राह्मणद्वये श्रीमच्छंकराचार्यभाष्यं, तथा चतुर्दशे काण्डे बृहदारण्यकोपनिषदि श्रीवासुदेवब्रह्मभगवत्कृतं भाष्यं, तथा दशमकाण्डस्यमण्डलब्राह्मणे सायणभाष्येण सहैव पंडितमण्डनसंज्ञकं द्वितीयं सुविस्तृतं भाष्यं च सन्निवेशितम् । अनेन च भाष्यविवर्जितः कोऽप्यंशो नोर्वरितः । आदौ चायमुपोद्घातस्तथा पण्डितश्रेष्ठदीनानाथशास्त्रिसारस्वतप्रणीतः'ब्राह्मणभागस्यापि वेदता ' इति शीर्षकांकितः प्रबन्धश्च संस्थापितः । तदुभयमपि प्रेक्षावत्प्रवृत्तिं पुरस्करिष्यतीति सुदृढो विश्वासः । अनया सरण्या संस्कृतोऽयं महान् शुक्लयजुर्वेदीयमाध्यन्दिनशतपथब्राह्मणग्रन्थ इति बोध्यम् ।

अस्य च संस्करणस्य संशोधनावसरेऽध उपक्षिप्तानां पुस्तकानां साहाय्यं समभवत् ।

१—प्रो. वेबरमहाशयसंपादितं शुद्धं सभाष्यं मुद्रितं पुस्तकम् ।

२—पं. सत्यव्रतसामाश्रमिसंपादितं शुद्धं सभाष्यं मुद्रितं पुस्तकम् ।

३—अस्मदीयसंग्रहस्थं मूलमात्रं शुद्धं हस्तलिखितं पुस्तकम् ।

४—मामकीनं प्रथमद्वितीयतृतीयदशमैकादशकाण्डात्मकं भाष्यमात्रं प्रायः शुद्धं हस्तलिखितं पुस्तकम् ।

५—श्रीक्षेत्रकाशीवासिनां श्रौतस्मार्तपारदृश्वनां स्वर्वासं गतानां गौरीनाथदीक्षितजावजीभट्टमहोदयानां संग्रहस्थं तदीयपुत्रभ्रातृव्याभ्यां विद्वद्वराभ्यां श्रीसखारामदीक्षित-गणेशदीक्षितमहाशयाभ्यां दत्तं द्वादशकाण्डोपनिषद्भागवर्जितं समग्रं भाष्यमात्रं हस्तलिखितं प्रायः शुद्धं पुस्तकम् ।

६—विकानेरदरबारलायब्रेरीत आनीतं चतुर्थषष्ठाष्टमकाण्डात्मकं भाष्यमात्रं हस्तलिखितमत्यन्ताशुद्धं पुस्तकम् ।

७—पुण्यपत्तनस्थभाण्डारकरओरिएन्टल्‌रिसर्चइन्स्टिटयूटनामकसंस्थातः समानीतं पंचमाध्यायस्य पंचमब्राह्मणांतमुपनिषद्भाष्यमात्रं शुद्धं हस्तलिखितं पुस्तकम् ।

८—बडोदाराजधानीस्थओरिएन्टल्‌लायब्रेरीतः समानीतं समग्रमुपनिषद्भाष्यमात्रं शुद्धं हस्तलिखितं पुस्तकम् ।

किञ्चास्य ग्रन्थस्य संशोधनायास्मत्पूर्वं स्वर्गतैः पं. गोविंदशास्त्रिरावेरकरमहोदयैस्तथा जयपुरराजधानीस्थपण्डितैः महामहोपाध्यायैः विद्यावारिधि-मधुसूदनजीओझा इत्येतैः तथा स्वर्गतैः पं. रंगाचार्यशास्त्रिवर्यैर्यन्त्रालयस्थितैश्च कतिचित्काण्डेषु प्रयतितम् । यदा चैतत्संस्करणमस्मद्धस्ते संशोधनाय समायातं तदानीमपि बहुभिर्विद्वद्भिरस्मत्साहाय्यं कृतम् । तन्मध्ये विशेषत आदितोऽन्तपर्यन्तं पल्वलाचल (पलुश्शान) ग्रामवासिभिः पं० श्रीवैद्यलिंगशास्त्रिसूनुभिः पं० श्रीहरिहरशास्त्रिभिः सूक्ष्मेक्षिकया दृशा विद्वत्तापूर्णं साहाय्यमकारीति सानंदं प्रकाशयामि ।

किञ्चास्मिन्संस्करणे संशोधने प्रेसकॉपीकरणे टिप्पणीसंयोजने तत्तद्यागीयविहारपट्टनिबंधने च मासत्रयादर्वागेव कैलासावासमापन्नानां प्रातःस्मरणीयानां स्वनामधन्यानां वैदिकतिलकानां 'श्रीमदण्णाशास्त्रिवारे ' इत्येतेषामस्मत्पूज्यपितृपादानां महीयांसः परिश्रमा आयुषोऽन्तिमक्षणपर्यन्तमासन्न कदापि तानहं विस्मरामि ॥

## धन्यवादाः ।

एवमुपरिदर्शितैर्यैर्यैर्महाभागैः संस्थाभिश्च पुस्तकप्रदानादिना साहाय्यमाचरितं तथा संशोधनादिकार्येऽपि यत्सुमहत्साचिव्यं चाचरितं तेषां सर्वेषामहमधमर्णोऽस्मि ।

विशेषतोऽस्य महतो ग्रन्थस्य सर्वांगसुन्दरतया प्रकाशनाय भूयोद्रव्यव्ययं कृत्वा वैकुण्ठपदमधितिष्ठतं स्वपितृचरणानां **श्रीक्षेमराजश्रीकृष्णदासश्रेष्ठिवर्याणां** पूर्वसंकलितं कार्यं पूर्णतां नीतवद्भ्यां बंबईकल्याणोभय-नगरीस्थश्रीवेङ्कटेश्वरमुद्रणयन्त्रालयश्रीलक्ष्मीवेंकटेश्वरमुद्रणयन्त्रालयसंचालकाभ्यां परमोदारचरिताभ्यां धार्मिकग्रन्थ-प्रकाशनवासनावासितान्तःकरणाभ्यां वैदिकधर्मश्रद्धालुभ्यां वैश्यकुलावतंसाभ्यां सुगृहीतनामधेयाभ्यां श्रीमद्भ्यां **रंगनाथक्षेमराजश्रेष्ठि श्रीनिवासक्षेमराजश्रेष्ठिमहोदयाभ्यां** भ्रातृभ्यां बहून्धन्यवादानानन्दसन्दोहपुरःसरं वितरामि ॥

**क्वाप्येतन्न किलाप्यते शतपथं शुद्धं जनैः पुस्तकं**<br>
**स्याच्चेदप्यथ नैव यास्यति बहिर्हस्तान्निजस्वामिनः ।**<br>
**ईदृक्पुस्तकदौर्लभ्यमधुना विद्राव्य मुद्रापणे**<br>
**सन्नद्धौ सुकृतार्थिनौ विडधिपौ धन्यावमू श्रेष्ठिनौ ॥**

## अन्ते चेयं विज्ञापना ।

एतादृक्प्रभूतपरिश्रमेण विहितेऽस्मिन्संस्करणे मितमनिमानुषस्वभावसुलभतया प्रमादात् दृग्दोषाद्वा यत्स्खलितं तन्निर्मत्सरा गुणैकपक्षपातिनो विचक्षणवरेण्याः संशोध्य कृपयाऽस्मत्कर्णपथं नेष्यन्ति येन पुनर्मुद्रणावसरे तान्दोषान्परिमार्जयामि, इति तान्दयार्द्रदृष्टीन्विबुधवरान्मुहुर्मुहुः साञ्जलिबन्धं सप्रश्रयं विज्ञाप्य विरमामि ।

कल्याणनगर्याम्<br>
श्रावणशुक्लदशमी<br>
गुरुवासरः शकः १८६१<br>
ता. २४।८।१९३९.

विद्वद्वशंवदः<br>
श्रीक्षेत्रनासिकवासी वारे इत्युपाह्वः<br>
वैदिकतिलकश्रीमदण्णाशास्त्रिसूनुः<br>
**श्रीधरशर्मा.**

# ब्राह्मणभागस्यापि वेदता ।

**निबन्धा—श्रीदीनानाथशर्म्मा शास्त्री सारस्वतः ।**
( ' मुलतान ' स्थ—स० ध० संस्कृतकालेजोपाध्यायः )

पाठकानां करकमले सायणभाष्यसंवलितं ' शतपथब्राह्मणम् ' विराजते । इदं वेदस्य ब्राह्मणभागनाम्ना आख्यायते । यस्य च शुक्लयजुर्वेदस्य इदं ब्राह्मणम्, स मन्त्रभागनाम्ना आख्यायते । इमावुभौ भागौ सम्भूय ' वेद ' नाम्ना व्यवह्रियेते । यथा मन्त्रभागो वेदस्य भागत्वाद् वेदोऽस्ति; तथैव ब्राह्मणभागोऽपि वेदस्य भागत्वाद् वेदोऽस्ति ।

परं केचिद् अकृतविशिष्टविचारा वादिनो मन्त्रभागमात्रं वेदं मन्यन्ते, न ब्राह्मणभागम् । ते उपोद्बलक-रूपेण ' छन्दोब्राह्मणानि च तद्विषयाणि ' ४ । २ । ६६ इति पाणिनिसूत्रम् ' एवमिमे सर्वे वेदा निर्मिताः.... सब्राह्मणाः ' १ । २ । १० इति गोपथकण्डिकाञ्चोदाहरन्ति । तेषामिदमभिप्रेतं यद्—यदि ब्राह्मणभागोऽपि वेदोऽभविष्यत्; तर्हि उक्तपाणिनिसूत्रे ' छन्दो ' ग्रहणेनैव ब्राह्मणभागस्यापि स्वयमेव ग्रहणमभविष्यत् । पृथग्-ग्रहणेन सिध्यति यद्—ब्राह्मणभागो न वेदः । एवं द्वितीयप्रमाणेऽपि ' वेदाद् ' ब्राह्मणशब्दो भिन्नतया स्थापित इति ।

अस्मिन्नाक्षेपे इदं प्रत्युच्यते यद्—वेदशब्दः छन्दश्शब्दो वा समुदायवाचकोऽस्ति शब्दः । परन्तु समुदाय-शब्दोऽवयववाचकोऽपि भवति । तथा च महाभाष्ये पस्पशाह्निके—" समुदायेषु हि वृत्ताः शब्दा अवयवेष्वपि वर्त्तन्ते, पूर्वे पञ्चाला उत्तरे पञ्चालाः, घृतं भुक्तं तैलं भुक्तमित्यादि " । एवं वेदान्तदर्शनस्य ३ । ३ । ९ सूत्रस्य शाङ्करभाष्येऽप्युक्तम्—" समुदायेषु हि प्रवृत्ताः शब्दा अवयवेष्वपि प्रवर्त्तमाना दृष्टाः पटग्रामादिषु" इति ।

फलतश्छन्दश्शब्दोऽथवा वेदशब्दः केवलमन्त्रभागस्यापि वाचकः, केवलब्राह्मणभागस्यापि, उभयस्यापि च । इदानीमेतद् वक्तुरिच्छायामवलम्बितं यत्—स समुदितशब्दमवयवपरकत्वेन स्थापयतु समुदायपरकत्वेन वा । एतत्सिद्धान्तानुसारं श्रीपाणिनिना उक्तसूत्रे ' छन्दः ' शब्दो मन्त्रभागमात्रवाचको निहितः । यथा पाणिनिनाऽत्र केवलमन्त्रभागपरकश्छन्दश्शब्दो निहितः, तथा तेनैव ' मन्त्रे श्वेतवह ' ३ । २ । ७१ ' विजुपे छन्दसि ' ३ । २ । ७३ अत्र च्छन्दश्शब्दः केवलब्राह्मणभागवाचको निहितः, यतो मन्त्रभागस्य तु अनुवृत्तिः ७१ सूत्राद् वर्त्तते एव । ततोऽग्रिमसूत्रे उपात्तश्छन्दःशब्दो ब्राह्मणभागमात्रपरः । अत एवात्र सूत्रे काशिकायामुक्तम्—" छन्दोग्रहणं ब्राह्मणार्थम् " इति ।

एवं ' जुष्टार्पिते च च्छन्दसि ' ६ । १ । २०९ ' नित्यं मन्त्रे ' ६ । १ । २१० अस्मिन् सूत्रेऽपि छन्द-श्शब्दः केवलब्राह्मणभागवाचकः, यतो ' नित्यं मन्त्रे ' इति २१० सूत्रे ' मन्त्रभागः ' साक्षाद् गृहीतः । एवं यदि ' छन्दो ब्राह्मणानि च ' ४ । २ । ६६ इति छन्दश्शब्दात् पृथग् ग्रहणेन ब्राह्मणभागस्य वेदभिन्नत्वं वादिजनमतेन; तथाऽस्मत्प्रदर्शितेषु सूत्रेष्वपि वादिमतानुसारं मन्त्रभागस्यापि वेदभिन्नता स्यात् । यदि अयं पक्षो वादिजनसम्मतो न; तथा पूर्वस्तदीयपक्षोऽपि न युक्तिसहः ।

' छन्दो ब्राह्मणानि च ' इति सूत्रसदृक्षमेव पाणिनेरन्यदपि सूत्रं जागर्त्ति । तत् खल्विदम्—' तनादि-कृञ्भ्य उः ' ३ । १ । ७९ तनादिधातुषु कृञपि पठ्यते । पुनरपि सूत्रे पाणिनिना कृञ् तनादितः पृथक् तस्य वैशिष्ट्याय स्थापितः । एवं प्राक्तनसूत्रेऽपि छन्दःश्शब्देन गृह्यमाणस्यापि ब्राह्मणस्य तद्वैशिष्ट्यद्योतनार्थं

पृथक् प्रयोगः । तदैव तु उक्तसूत्रस्य काशिकावृत्तावुक्तम्-" ब्राह्मणग्रहणं किम्, यावता छन्द एव तद् ( ब्राह्मणम् ) ? । " एतत्प्रश्नस्य तत्रेदमुक्तम्-" ब्राह्मणविशेषप्रतिपत्त्यर्थम्, इह तद्विषयता मा भूद्-याज्ञवल्क्येन प्रोक्तानि ब्राह्मणानि याज्ञवल्कानि " इति ।

एवं वैयाकरणमूर्धन्येन कैयटेनापि १ । ३ । १० सूत्रस्य महाभाष्ये प्रदीपे एतत्सूत्रकृते प्रोक्तम्-" गोबलीवर्दन्यायेन छन्दश्शब्देन मन्त्राणां ग्रहणम्, यथा-' जुष्टार्पिते च छन्दसि ' इति सूत्रे छन्दःपदेन ब्राह्मणानां ग्रहणम् ' नित्यं मन्त्रे ' इति मन्त्रग्रहणात् । च्छन्दोग्रहणेनैव तु ब्राह्मणानां ग्रहणे सिद्धे ब्राह्मणविशेषप्रतिपत्त्यर्थं पुनर्ब्राह्मणग्रहणं कृतम् । तेन याज्ञवल्कानि ब्राह्मणानीति तद्विषयता न भवति " । एतेन स्पष्टं यद्-ब्राह्मणभागोऽपि वेदः । ' छन्दो ब्राह्मणानि च ' इत्यत्र ब्राह्मणभागस्य वैशिष्ट्यद्योतनार्थं ' ब्राह्मणवसिष्ठ ' न्यायेन पृथगुपादानं कृतम्, नतु तस्य च्छन्दोऽभावत्वद्योतनार्थम्, अन्यथा पाणिनिवचनान्तराणां व्याकोपात् । नहि ' ब्राह्मणा आयाताः, वसिष्ठोऽपि चाऽऽयातः ' इति वाक्ये वसिष्ठस्य अब्राह्मणत्वं केनापि मुग्धेनापि मन्येत ।

ईदृक्षमेवोत्तरं ' सर्वे वेदा निर्मिताः .... सब्राह्मणाः ' इति गोपथप्रमाणेऽपि ज्ञेयम् । अत्रापि स्पष्टतायै ब्राह्मणं वेदाद् भिन्नमुक्तं विशिष्टतायै वा । 'स होवाच-ऋग्वेदं भगवोऽध्येमि यजुर्वेदᳪ सामवेदमाथर्वणं चतुर्थम्, इतिहासपुराणं पञ्चमं वेदानां वेदम् ' छान्दोग्य० ७ । १ । २ एतदादिप्रमाणेषु च वेदशब्देनैव ब्राह्मणभागो गृह्यते स्वयमेव ।

'सर्वे वेदा निर्मिताः....सब्राह्मणाः' इति गोपथप्रमाणे यथा वेदशब्दᳪ केवलमन्त्रभागवाचकः, तथा वेदशब्दᳪ केवलब्राह्मणभागवाचकोऽपि भवति । तथाच-' तेऽवरेभ्योऽसाक्षात्कृतधर्म्मभ्य उपदेशेन **मन्त्रान्** सम्प्रादुः । उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणाय इमं ग्रन्थं समाम्नासिषुर्वेदञ्च वेदाङ्गानि च ' निरुक्ते १ । २० । २ अत्र वेदशब्दो ब्राह्मणभागवाचकः, यतोऽमन्त्रभागस्य साक्षान्नाम प्रागागतमेव ।

एवं ' पुरुषविद्याऽनित्यत्वात् कर्म्मसम्पत्तिर्मन्त्रो वेदे ' निरुक्ते १ । २ । ७ अत्रापि मन्त्रात् पृथग् गृहीतो वेदशब्दो ब्राह्मणभागवाचकः । यतᳪ कर्म्मसम्पादकमन्त्रा ब्राह्मणभागे समाम्नाता नतु मन्त्रभागे । मन्त्रभागे तु कर्म्मोपासनाज्ञानसम्पादकास्त्रिविधा मन्त्राः । त्रिपुत्रस्त्रिपुत्र एव कथ्यते, न खल्वेकपुत्रः । ब्राह्मणभागे यज्ञोपयुक्तकेवलकर्म्मकाण्डसम्पादकमन्त्रसमाम्नानवशात् ' कर्म्मसम्पत्तिर्मन्त्रो वेदे समाम्नातः ' इति कथनमुपपद्यते ।

एतेन सिद्धं यद्-ब्राह्मणभागोऽपि वेदः । यथा श्रीयास्केन निरुक्ते ' ओषधे ! त्रायस्वैनम् ' यजुः ४ । १ इत्ययं मन्त्रः ' आम्नायवचनात् ' १ । १६ । ६ । ६ इति आम्नायो मतः, तथैव ' एतद् रोहात् प्रत्यवरोहश्चिकीर्षितः ' एतद् ब्राह्मणमपि " आम्नायवचनाद् एतद् भवति " निरु० ७ । २४ । ४ इत्यादिना आम्नायत्वेन मतम् । आम्नायशब्दो वेदे रूढ इति " इति माहेश्वराणि " इति दीक्षितवचनस्य व्याख्यानाऽवसरे लघुशब्देन्दुशेखरे उक्तम् । तथाच-' आम्नायसमाम्नायशब्दौ वेदे एव रूढौ ' ।

एवं निरुक्ते २।३।१ 'यस्मात्परं नापरमस्ति किञ्चित् .... तेनेदं पूर्णं पुरुषेण सर्वम्, इत्यपि निगमो भवति' इति कृष्णयजुर्वेदीय 'श्वेताश्वतर' कण्डिकाऽपि ३.९ निगमो ( वेदो ) मतः । आर्यसमाजप्रवर्त्तकेन स्वा. दयानन्देनोक्तम्-'छन्दोवेद**निगम**श्रुतीनां पर्यायवाचकत्वात् ' ऋग्वेदादिभाष्यभूमिकायां ७९ पृष्ठे । ' तथा व्याकरणेऽपि ' मन्त्रे घस ' 'छन्दसि लुङ् ' ' वा षपूर्वस्य **निगमे** ' अत्रापि छन्दोमन्त्रनिगमाः पर्यायवाचिनः सन्ति । एवं छन्दआदीनां पर्यायसिद्धेर्यो भेदं ब्रूते तद्वचनमप्रमाणमेवास्तीति विज्ञायते ' ऋ० भा०भू०पृ८० । उपनिषद्भागः प्रायो ब्राह्मणभागान्तर्गतः । तेन तस्यापि वेदत्वं सिद्धं निरुक्तरीत्या । एवं ३ । १ । ७ सूत्रस्य महाभाष्ये ' शृणोत ग्रावाणः ' १।३।१२।१ इति कृष्णयजुर्वेदोऽपि श्रीपतञ्जलिना ऋषिः ( वेदः ) मतः । एवं ' भद्रं

वद दक्षिणतः' इति ऋग् निरुक्ते ९। १९। १ उद्धृता। नैषा वर्त्तते वर्त्तमानशाखासु। तेन शाखान्तराणामपि वेदता सिद्धा।

यत्तु—आर्यसमाजप्रवर्त्तकेन स्वा. दयानन्देन ऋग्वेदादिभाष्यभूमिकायां वेदसंज्ञाविचारप्रकरणे एव ८६ पृष्ठे निम्नस्तर्काभास उपस्थापितो ब्राह्मणभागस्य अवेदत्वे; तत्र मीमांसामहे। स खल्वयं तर्काभासस्तदीयः "लौकिकास्तावद् गौरश्वः पुरुषो हस्ती शकुनिर्मृगो ब्राह्मण इति। वैदिकाः खल्वपि 'शं नो देवीरभिष्टये। इषे त्वोर्जे त्वा। अग्निमीळे पुरोहितम्। अग्न आयाहि वीतये इति। यदि ब्राह्मणग्रन्थानामपि वेदसंज्ञाऽभीष्टाऽभूत्, तर्हि तेषामप्युदाहरणमदाद् महाभाष्यकारः। अत एव महाभाष्यकारेण मन्त्रभागस्यैव वेदसञ्ज्ञां मत्वा प्रथममन्त्रप्रतीकानि वैदिकेषु शब्देषूदाहृतानि। किन्तु यानि गौरश्व इत्यादीनि लौकिकोदाहरणानि दत्तानि, तानि ब्राह्मणादिग्रन्थेष्वेव घटन्ते। कुतः? तेष्वीदृशशब्दव्यवहारदर्शनादिति"।

धन्यो मस्करिमहाभागः। यदि अस्य तर्कस्य हेतोः सः 'तर्कधीवरः' इति पदव्या विभूष्येत; तर्हि मस्कारितायाः शोभाऽत्यर्थं वर्धेत। अयि मस्कारिमहोदय! महाभाष्यकृत् तु मन्त्रभागं ब्राह्मणभागञ्चोभयमेव वेदं मन्यते। अत एव स मन्त्रभागोपलक्षणेनैव ब्राह्मणभागमुदाहृतं मेने। अन्यथा इमे उद्धृतमन्त्रा एव अथर्ववेदयजुर्वेदऋग्वेदसामवेदा मन्तव्याः स्युः। तदग्रिममन्त्राणां तु लौकिकत्वमेव मन्तव्यं स्यात्। अन्या च महती त्रुटिरियं यत्—स्वा. दयानन्दो यां शौनकीयशाखामथर्ववेदसंहितां मन्यते, तस्या आदिममन्त्रः—'ये त्रिषप्ता परियन्ति' इति वर्त्तते, न तु 'शं नो देवी' रिति। एवं सति स्वाजमेरीयवैदिकयन्त्रालयमुद्रिताया अथर्ववेदसंहितायाः स्वा. दयानन्देन वेदत्वाद् बहिष्कारः कर्त्तव्यः स्यात्। अथवा महाभाष्यकारसम्मतः 'शं नो देवी' रित्यादिममन्त्रधारी अथर्ववेदोऽवैदिको मन्तव्यः स्यात्। अथवा 'पैप्पलादादिभिन्नशाखा अपि वेदा मन्तव्याः स्युः।

अयं तर्कोऽपि स्वा. दयानन्दस्याऽद्भुतो यद्—'गौरश्वः' आदि लौकिकोदाहरण ब्राह्मणग्रन्थोंमें घटते हैं' बत!!! किं 'गौः, अश्वः' इत्यादयः कस्यचिद् ब्राह्मणस्य आदौ सन्ति यद्—महाभाष्यकारेण ते प्रतीकरूपेण धृताः?। यदि न, तर्हि कथमेषां शब्दानां ब्रह्मणभागेन सह सम्बन्धो योजितः स्वामिना? । किमिमे शब्दा मन्त्रभागे न सन्ति? अवधीयतां क्रमशः--

'गौः' 'अश्वः'—इमौ शब्दौ यजुर्वेदे ३१। ८ मन्त्रे आगच्छतः। 'पुरुष' शब्दो यजुषि ३१। १ द्रष्टव्यः। 'हस्ति' शब्दोऽथर्ववेदे ३। २२। ६ द्रष्टव्यः। 'शकुनि' शब्द ऋग्वेदे २। ४२। १ द्रष्टव्यः। 'मृग' शब्द ऋग्वेदे १०। १८०। २ विलोकनीयः। 'ब्राह्मण' शब्दो यजुर्वेदे २२। २२ द्रष्टव्यः। तर्हि किं स्वा० दयानन्दो मन्त्रभागमपि लौकिकं मंस्यते तत्र एतदादिशब्ददर्शनात्?। यदि न, तर्ह्येतेन ब्राह्मणभागेऽपि न काऽप्यवैदिकताऽऽपतति। न च भाष्यकृतस्तथाऽभिप्रेतम्।

अधुनाऽस्माभिः स्वा० दयानन्दमान्यस्य महाभाष्यकृतस्तानि प्रमाणानि समुपस्थाप्यन्ते येषु तेन ब्राह्मणभागोऽपि वेदो मतः। अवधीयताम्—

पस्पशाह्निके 'वेदे खल्वपि—' इत्युक्त्वा 'पयोव्रतो ब्राह्मणो यवागूव्रतो राजन्यः' इत्यादि 'बैल्वः खादिरो वा यूपः स्यात्'। 'अग्नौ कपालान्यधिश्रित्य अभिमन्त्रयते' इमा ब्राह्मणकण्डिकाः शास्त्रस्य धर्मनियमप्रकरणे वेदस्योदाहरणे दत्ताः। स्वा० दयानन्दस्य संस्कारविधेः (७९ पृष्ठ) कथनानुसारं 'पयोव्रतः' इति शतपथब्राह्मणवचनम्। 'बैल्वः खादिरो वा' इति ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकारम्भे। एवमन्यत्। परं भाष्यकारेण एतदादिकवचनं वेदस्य मतम्। सुतरां तन्मते ब्राह्मणभागोऽपि वेदः सिद्धः।

तत्रैव आह्निके शब्दस्य ज्ञानतो धर्म्म इति पक्षस्य निराकरणप्रकरणे "आचारे पुनर्ऋषिः (वेदः) नियमं वेदयते—' तेऽसुरा हेलयो' इत्यादि"। एतदपि ब्राह्मणं महाभाष्यकृता वेदनाम्ना दत्तम्। अग्रे च ज्ञानप्रयोगेत्यु-

भयतो धर्माख्यायकवार्त्तिकसिद्धान्तपक्षप्रदर्शनाऽवसरे ' शास्त्रपूर्वके प्रयोगे अभ्युदयस्तत् तुल्यं वेदशब्देन ' एतद्वार्त्तिकस्य वेदोदाहरणं ' योऽग्निष्टोमेन यजते ' एतदादिब्राह्मणकण्डिकया दत्तम् ।

द्वितीये प्रत्याहाराह्निके ' ऋलृक् ' सूत्रे ' अनुकरणं शिष्टाऽशिष्टाप्रतिषिद्धेषु ' यथा लौकिकवैदिकेषु ' अत्र वैदिकोदाहरणे ' य एवं विश्वसृजः सत्राण्यध्यासते ' इदं ब्राह्मणमेवोद्धृतम् । **लौकिकोदाहरणं च महाभाष्यकृताऽन्येन वा केनापि प्राचा ब्राह्मणभागप्रमाणं न दत्तमिति** विशेषतोऽवधेयम् ।

तृतीयाह्निके १ । १ । १ सूत्रे ' यथा लौकिकवैदिकेषु ' इति वार्त्तिकस्य वैदिकोदाहरणे ' वेदेऽपि याज्ञिकाः सञ्ज्ञां कुर्वन्ति स्फ्यो यूपश्चषाल इति, तत्रभवतामुपचाराद् अन्येऽपि जानन्ति इयमस्य सञ्ज्ञेति ' इत्यादिर्ब्राह्मणभाग एवोदाहृतः । अग्रे १ । १ । ५६ सूत्रस्य भाष्ये ' वेदेऽपि सोमस्य स्थाने पूतीकतृणान्यभिषुणुयादित्युच्यते ' इदं मन्त्रभागस्योदाहरणं न, किन्तु ब्राह्मणभागस्य ।

५ । २ । ९४ सूत्रे ' सन्मात्रे चर्षिदर्शनात् ' इति वार्त्तिकस्य विवरणे भाष्यकृता लिखितम्–' सन्मात्रे च पुनरृषिः ( वेदः ) दर्शयति मतुपम्–' यवमतीभिरद्भिर्यूपं प्रोक्षतीति ' । अयं पाठोऽपि ब्राह्मणभागस्य । ऋषिरित्यनेन वेदो गृह्यते यथा शतपथे–' तस्मादेतद् ऋषिणाऽभ्यनूक्तम् ' १४ । १ । १ । २९ एवं ' सम्बुद्धौ शाकल्येस्यतावनार्षे ' १ । १ । १६ अत्र सूत्रेऽपि आर्षशब्दो वैदिकवाचकः ।

६ । १ । ८४ सूत्रे भाष्ये लिखितम्–" वेदे खल्वपि भृसन्ते ब्राह्मणोऽग्निष्टोमादिभिः क्रतुभिर्यजेतेति ' । अत्रापि भाष्यकृता ब्राह्मणं वेदत्वेन मतम् । अन्यदपि दृश्यताम्–' चतुर्थ्यर्थे बहुलं छन्दसि ' २ । ३ । ६२ इति वार्त्तिकस्य वैदिकोदाहरणे भाष्यकारेण श्रीपतञ्जलिना ' या खर्वेण पिबति तस्यै खर्वो जायते ' इत्यादिर्ब्राह्मणभाग एव उदाहृतः ।

अत्र भाष्यकृतः प्रमाणान्तराण्यपि दातुं शक्यन्ते, परं विस्तरभयाद् उपेक्ष्यते । जिज्ञासवः स्वयं महाभाष्यपारायणं कुर्वन्तु । छन्दस उदाहरणे तेन क्वचिद् मन्त्रभागः क्वचिच्च ब्राह्मणभाग उदाहृतः । यथा–' छन्दसि निष्टर्क्य ३ । १ । १२३ सूत्रस्य भाष्ये पतञ्जलिमुनिना ' निष्टर्क्यं चिन्वीत पशुकामः ' इति ब्राह्मणं छन्दस उदाहरणं दत्तम् । एवमन्यत्र । फलतो यस्य भाष्यकारस्य वचसा स्वा० दयानन्देन ब्राह्मणभागस्य वेदभिन्नता दर्शिता, तेनैव भाष्यकारेण स्वा० दयानन्दमतं कीदृगारभटया खण्डितम् ।

यत्तु स्वपक्षपोषणार्थं स्वा० दयानन्देन पाणिनिमतं दर्शितं तद् यथा–" द्वितीया ब्राह्मणे २ । ३ । ६०, चतुर्थ्यर्थे बहुलं छन्दसि " २ । ३ । ६२ इत्यष्टाध्याय्यां सूत्राणि । अत्रापि पाणिन्याचार्य्यैः वेदब्राह्मणयोर्भेदेनैव प्रतिपादनं कृतमस्ति । यद्यत्र छन्दोब्राह्मणयोर्वेदसंज्ञाऽभीष्टा भवेत्; तर्हि ' चतुर्थ्यर्थे बहुलं छन्दसि ' इत्यत्र छन्दोग्रहणं व्यर्थं स्यात् कुतः ? द्वितीया ब्राह्मणेति ( ? ) ब्राह्मणशब्दस्य प्रकृतत्वात् । अतो विज्ञायते न ब्राह्मणग्रन्थानां वेदसञ्ज्ञाऽस्तीति " ऋग्वेदादिभाष्यभू० पृ० ८६–८७ अत्रापि स्वा० दयानन्दस्य महती भ्रान्तिः स्पष्टा । श्रीपाणिनिरपि ब्राह्मणभागं वेदं मन्यते । अवधीयताम्–' द्वितीया ब्राह्मणे ' २ । ३ । ६० इदं सूत्रं केवलं ब्राह्मणभागकृते निर्म्मितम्, न खलु मन्त्रब्राह्मणेत्युभयभागकृते । ततोऽग्रिमं सूत्रं ' चतुर्थ्यर्थे बहुलं छन्दसि ' २ । ३ । ६२ इति सूत्रं तु मन्त्रब्राह्मणयोरुभयोरेव भागयोः कृते प्रणीतम् । अत एव छन्दोग्रहणमत्र सार्थकम् । यद्यत्र ' छन्दसि ' इति नाऽस्थापयिष्यत, किन्तु ' ब्राह्मणे ' इत्यस्यैवाऽनुवृत्तिरपेक्षिताऽभविष्यत्; तर्हि एष विधिः केवलं ' ब्राह्मणभागे ' अभविष्यत् । यद्यत्र ' मन्त्रे ' इत्यस्थापयिष्यत; तर्हि भिन्नसूत्रत्वाद् मन्त्रभागमात्रे एवाऽभविष्यदेष विधिः । * अत एवोभयोरुपादानाय अत्र ' छन्दसि '

---

* यतः पाणिनिर्यदा कञ्चिद् विधिं मन्त्रभागमात्रे चिकीर्षति, तत्र ' मन्त्रे ' इति वक्ति । यदा च ब्राह्मणभागमात्रे चिकीर्षति, तदा ' ब्राह्मणे ' इति वक्ति । यदा चोभयोश्चिकीर्षति, तदा ' छन्दसि ' इति वक्ति । क्वचिच्च स **' छन्दः ' पदेन केवलं–**

इत्युपन्यस्तं पाणिनिना; यतो 'ब्राह्मणे' इति 'मन्त्रे' इति च वेदस्य भिन्नभिन्नभागस्य नाम; तेन नैकेन उभयोर्ग्रहणसम्भवः। 'छन्दसि' इत्यनेन 'वेदे' 'निगमे' इत्यनेन वा तु उभयोरेव वेदत्वाद् उभयोर्ग्रहण-सम्भवः। अत एवाऽत्र 'छन्दसि' इत्युपात्तं प्राक्तने सूत्रे 'ब्राह्मणे' इत्यस्य विद्यमानतायामपि। यतः प्राक्तनसूत्रं केवलं ब्राह्मणभागे विधानार्थं वर्त्तते नोभयत्र विधानार्थम्। यदि 'चतुर्थ्यर्थे बहुलं छन्दसि' २।३।६२ एतत्स्थेन 'छन्दसि' इत्यनेन वादिमतानुसारं केवलं मन्त्रभागमात्रमभिसन्धित्सितमभविष्यद् न खलु ब्राह्मण-भागोपादानमपि; तर्ह्यस्य सूत्रस्य छान्दसवार्त्तिकोदाहरणे महाभाष्यकृद् 'या खर्वेण पिबति तस्यै खर्वः' इति ब्राह्मणभागं नोदधरिष्यत्।

यत्तु—ऋग्वेदादिभाष्यभूमिकायाः ३७७ पृष्ठे स्वा० दयानन्देन अयं व्याजः कृतो यद्—"भाष्यकारेण छन्दोवन्मत्वा ब्राह्मणानामुदाहरणानि प्रयुक्तानि। अन्यथा ब्राह्मणग्रन्थस्य प्रकृतत्वाच्छन्दोग्रहणमनर्थकं स्यादिति" सोऽसङ्गतः। एतदीयमुत्तरं दत्तचरमेव। महाभाष्यकृता ब्राह्मणं वेदवन्न मतम्, किन्तु वेदत्वेन मतमित्यस्माभिः साधितचरम्। ये विधयः 'छन्दसि' इत्यादिना वेदेऽभिधीयन्ते पाणिनिना, ते उभयत्रैव भवन्ति, न तु मन्त्र-भागमात्रे। यथा—'सुपां सुलुक्' ७।१।३९ इति छान्दससूत्रेण यथा 'सविता प्रथमेऽहन्' यजुः ३९।६ इति मन्त्रे ङेर्लुक्, तथा 'यश्चाऽयं दक्षिणेऽक्षन् पुरुषः' शतपथ० १४।६।८।३ इति ब्राह्मणभागेऽपि अनङन्तेऽक्षिशब्दे ङेर्लुक्कृतः। उभयत्रैव छान्दसत्वाद् 'न ङिसम्बुद्ध्योः' ८।२।८ इति नलोपाऽभावः।

'प्रथमायाश्च द्विवचने भाषायाम्' ७।२।८८ इति आकारस्य प्रत्युदाहरणं यथा भाषा (लोक) भिन्ने मन्त्रभागे 'युव ँ सुराममश्विना' यजुः २०।७६ इत्यादिना दृश्यते, तथैव ब्राह्मणभागेऽपि मन्त्र-भागवद् 'युवाम्' इति लौकिकप्रयोगभिन्नो 'युवम्' इति प्रयोगो दृश्यते। तथाच—'युवं वै ब्रह्माणौ भिषजौ' शतपथे. ८।२।१।३, ९।१।४।२९ 'युवमिदं निष्कुरुतम्' ऐतरेये २।२८। एतेन स्पष्टं जातं यद्—ब्राह्मणभागो न वेदवत्, किन्तु साक्षाद् वेदः। पाणिनिना स क्वापि वेदवन्न मतः, किन्तु वेदो मतः। अर्थात् स नाऽऽतिदेशिकवेदत्ववान्, किन्तु साक्षादेवं वेदः।

यदि स्वा. दयानन्दस्याऽयमभिप्रायः स्याद् यद्—'ब्राह्मणे' इति कथनेनाऽप्युभयोर्वेदत्वाद् उभयोः सदा समानो विधिर्भवेत्। एवं 'मन्त्रे' इत्यभिधानेनापि उभयोः समानकार्य्यं भवेदिति, परं मन्दमेतत्। इमे नाम्नी तु भागमात्रस्य सत्त्वाद् ऐकदेशिके। तेन ऐकदेशिकनामग्रहणेन तत्कार्य्यं सार्वदेशिकतायां न भवतीत्युक्तचरम्। ऋगादयश्चत्वारः स्वा. द. मतेनापि वेदाः; तर्हि किमेषु सदा सर्वे समाना एव भवन्ति विधयः ? अथवा वेदेषु सर्वः समानो विधिरिष्यते, अन्यथा वेदता न भविष्यतीति' किं स्वामी मनुते व्याप्तिमिमाम् ? यद्येवं तर्हि यजुःसामवेदयोरनुस्वारस्य र—श—ष—स—हेषु वर्ण्णेषु परेषु ँकारो भवति, परन्तु ऋग्वेदाऽथर्ववेदयोस्तु न।

---

—'मन्त्रभागम्' आचष्टे, क्वचिच्च 'छन्दः' पदेन केवलं 'ब्राह्मणभागमाचष्टे। तथाहि—[१] 'द्वितीया ब्राह्मणे' २।३।६० इत्यनेन पाणिनिर्दिवस्तदर्थस्य कर्मणि द्वितीयां ब्राह्मणभागे करोति, न मन्त्रभागे। अत एव 'छन्दसि' इत्यनुक्त्वा 'ब्राह्मणे' इत्याचष्टे। एवं सः 'मन्त्रे श्वेतवह' ३।२।७१ इति मन्त्रभागे ण्विनं करोति न तु ब्राह्मणभागे. अत एव 'छन्दसि' इत्यनुक्त्वा 'मन्त्रे' इत्याचष्टे। यदा च मन्त्रब्राह्मणयोरुभयोः कार्य्यं कार्य्यम्भवति, तदा स खलु 'मन्त्रे च ब्राह्मणे च.' इति पार्थक्येन अनुक्त्वा 'छन्दसि' इत्याचष्टे। यथा 'चतुर्थ्यर्थे वहुलं छन्दसि' २।३।६२। अत एव महाभाष्ये एतदुदाहरणे 'या खर्वेण पिबति' इति ब्राह्मणभागोदाहरणमपि सङ्गच्छते। एवं केवल मन्त्रभागमपि पाणिनिश्छन्द आचष्टे क्वचित्। यथा—'छन्दो ब्राह्मणानि च तद्विषयाणि' ४।२।६ एवं केवलब्राह्मणभागमपि सः 'छन्द' आचष्टे क्वचित्। यथा—'जुष्टार्पिते च च्छन्दसि' ६।१।२०९ इति जुष्टशब्दस्य छन्दसि विकल्पेन आद्युदात्तोमतः। 'नित्यं मन्त्रे' ६।१।२१० इति। पूर्वा-ऽव्यवहिते सूत्रे मन्त्रभागे नित्याद्युदात्तत्वविधानात् 'छन्दसि' इतीदं 'ब्राह्मणभागस्य' कृते निहितम्। एवमन्यत्र। इति हृदयम्।

तर्हि किं यजुःसामवेदौ वेदौ न भविष्यतः ? । 'देवसुम्नयोर्यजुषि काठके' ७ । ४ । ३८ इदं यजुर्वेदस्य कठशाखायामाकारविधायकसूत्रम् । परन्त्वयं विधिर्ऋग्वेदीयकठशाखायां वेदान्तरे च न भवति ।

'प्रकृत्याऽन्तःपादम्' ६ । १ । ११५ 'यजुष्युरः' ६ । १ । ११७ अयं प्रकृतिभाव ऋग्यजुर्भिन्ने वेदे न भवति । एवम् 'ऋचि तुनुघ' ६ । ३ । १३३ 'ऋचि त्रेरुत्तर (वा. ६ । १ । ३४ ) इत्यादिषु ऋगादयः शब्दाः साभिप्रायाः, तेन एतदादिविधय ऋचो भिन्ने मन्त्रे न भवन्ति; तर्हि किं समानविधित्वाऽभावान्मन्त्रभागोऽपि स्वामिना वेदो न मंस्यते ? । यद्येवं न; तर्हि क्वचिद् मन्त्रभागब्राह्मणभागयोर्मध्ये असमानविधित्वाद्, ब्राह्मणभागस्य वेदभिन्नता न भाविनी । अत्र ऐकदेशिकनामकारणादेव उभयोः समानविधिर्न भवति । यथा च ऋग्यजुरादिनामानि मन्त्रभागस्यैकदेशिकानि; तेषु च मियोभिन्नभिन्नविधिरपि दृश्यते; तथैव 'मन्त्रो, ब्राह्मणम्' इति नाम्नी अपि वेदस्य ऐकदेशिके, अतस्तयोरपि भवति भिन्नभिन्नविधिर्जातु । परं नैतेन अन्यतरस्याऽवेदता भवितुमर्हति ।

यदि स्वा. दयानन्दस्य विलक्षणतर्कानुसारं ६० सूत्रे ब्राह्मणशब्दस्य, तथा ६२ सूत्रे छन्दःशब्दस्य उपादानेन ब्राह्मणभागः छन्दसो ( वेदाद् ) भिन्नो मन्येत; तर्हि तु तत्तर्कस्यैवानुसारं 'मन्त्रे श्वेत' ३ । २ । ७१ अत्र ७१ सूत्रे मन्त्रभागस्य ग्रहणाद् 'विजुपे छन्दसि' ३ । २ । ७३ इति ७३ सङ्ख्याके च सूत्रे छन्दश्शब्दस्य ग्रहणाद्, मन्त्रभागोऽपि वेदत्वाद् भिन्नो मन्येत । धन्यः स्वामी !-परपक्षं प्रत्याचक्षाणः-'यच्चोक्तं छन्दोमन्त्रयोर्भेदोऽस्ति, इति, तदप्यसङ्गतम् । कुतः ? छन्दोवेदनिगममन्त्रश्रुतीनां पर्य्यायवाचकत्वात्' ऋग्वेदादिभाष्यभू. पृ. ७९ 'तथा व्याकरणेऽपि 'मन्त्रे वस' 'छन्दसि लुङ्' 'वा षपूर्वस्य निगमे' अत्रापि छन्दोमन्त्रनिगमाः पर्यायवाचिनः सन्ति । एवं छन्दआदीनां पर्यायसिद्धेर्यो भेदं ब्रूते, तद्वचनमप्रमाणमेवास्तीति विज्ञायते' ऋग्वेदादिभू. पृ. ८० इति स्वपक्षमपि प्रत्याचष्ट । वस्तुतः कृत्रिमतायामेवं भवत्येव । तेन एतदादिकैः प्रागुक्तैश्च पाणिनिसूत्रैरपि ब्राह्मणभागस्यापि वेदता सिद्धैव ।

यत्तु-स्वा० दयानन्देन ऋग्वेदादिभाष्यभूमिकायाः ८७ पृष्ठे ब्राह्मणभागस्य वेदत्वखण्डने 'ऋषिभिरुक्तत्वाद्' इति हेतुर्दत्तः । तत्र च 'पुराणप्रोक्तेषु ब्राह्मणकल्पेषु' ४ । ३ । १०५ इति पाणिनिसूत्रं प्रमाणीकृत्य 'प्राचीनैर्ब्रह्मादृषिभिः ( ? ) प्रोक्ता ब्राह्मणकल्पग्रन्थाः' इति व्याख्याय च ब्राह्मणभागस्य ऋषिप्रोक्तता अत एव वेदभिन्नता च विज्ञापिता, साऽप्यत्यन्तं मान्द्यं वहति । यतो ब्राह्मणभागवन्मन्त्रभागोऽपि ऋषिप्रोक्तः । तथा च-'ये एव मन्त्र-ब्राह्मणस्य द्रष्टारः प्रवक्तारश्च' न्यायदर्शने ४ । १ । ६२ अत्र मन्त्रब्राह्मणेत्युभयभागस्यैव द्रष्टारः प्रवक्तारश्च मताः । प्रोक्तत्वेन 'कृत' त्वं न जायते ।

सत्यार्थप्रकाशे १२९-१२६ पृष्ठयोः स्वयं मेने स्वामी यद्-ऋषिभिः परमात्मस्वरूपे × समाधिर्योजितः; तर्हि तैर्मन्त्रा अपि प्राप्तास्तदर्था ब्राह्मणरूपा अपि । तेन स्वा. दयानन्दस्य उक्तहेतुरसङ्गतः । स्वामिना ब्राह्मणभागस्य ऋषिप्रोक्तत्वं दर्शितम्; तत्र प्रोक्तशब्देन नाऽस्मन्मतहानिः । वयं 'मन्त्रकृत्' इत्येवं 'कृत्' शब्दं दर्शयामः, तर्हि किं स्वामी मन्त्रभागमपि ऋषिकृतं मंस्यते ? । द्रष्टव्यम्-'सूर्य्य ऋषिर्मन्त्रकृत्' ऐतरेयब्राह्मणे ६ । १ 'यत्र धीरा मनसा वाचमक्रत' ऋ० १० । ७१ । २ 'ऋषिः कुत्सो भवति, कर्त्ता स्तोमानामित्यौपमन्यवः' निरुक्ते । ३ । २ । ५ 'ऋषे ! मन्त्रकृतां स्तोमैः' ऋग्वेदे ९ । ११४ । २ किमेतदादिप्रमाणैः स्वा० दयानन्दो मन्त्रभागमपि लौकिकं मंस्यते 'कृत्' शब्दे साक्षाद् विद्यमानेऽपि ? । यदि न, तर्हि 'ऋषिप्रोक्त' शब्देन ब्राह्मणभागोऽपि ऋषिदृष्ट एव सेत्स्यति न तु ऋषिप्रणीतः ।

---

× क्यन्तघुत्वात् समाधिः पुंसि ।

ब्राह्मणभागस्याऽवेदत्वे तत्रैव ८० पृष्ठे स्वामिनोक्तः ' अनीश्वरोक्तत्वाद् ' इति हेतुः स्वयं स्वामिनो विरुद्धः। यतः स्वामी ब्राह्मणभागं मन्त्रभागस्य व्याख्यानं मन्यते । सत्यार्थप्रकाशे स ऋषीणां परमात्मद्वारैव मन्त्रप्राप्तिं परमात्मद्वारैव च तदर्थप्राप्तिं मेने। अत एव ईश्वरोक्तता सिद्धाऽस्य मन्त्रभागवद् । नचाऽप्यस्य हेतोस्साधनार्थं तेन किमपि प्रमाणं दत्तम्, तेन साध्यकोटिकत्वादयं हेत्वाभास एव।

यत्तु तत्रैव ग्रन्थे ८६ पृष्ठे स्वामिना " ब्राह्मणानि तु वेदव्याख्यानान्येव सन्ति नैव वेदाख्यानीति " हेतुरुक्तः, स तु प्रामादिकः। कीदृशी तुच्छयुक्तिर्यद्–वेदस्य परमात्मप्रोक्तमेव व्याख्यानं वेदो नेति । किञ्चिद् विविच्यताम्–स्वा० दयानन्देन मूलर्ग्वेदादिभाष्यभूमिका संस्कृते लिखिता, तस्याश्च स्वयं हिन्दीव्याख्यानमपि कृतम्; तर्हि किं तद् हिन्दीव्याख्यानमधुना ' ऋग्वेदादिभाष्यभूमिका ' न भविष्यति ? तत् किं पुनः सा ' बाइबल ' ' कुरान ' नामिका भविष्यति ? हन्त ! ! !

अन्यद् दृश्यताम्। महाभाष्यं व्याकरणस्य व्याख्यानम्; तर्हि किं तद् व्याकरणं नाख्यास्यते ?। अत्र स्वा०दयानन्दस्यैव साक्ष्यं श्रूयताम्–' मैथिल पण्डितने कहा–महाभाष्य तो व्याकरणही नहीं '। स्वामीजीने उठते हुए कहा कि–'यह एक विलक्षण सभा है जिसमें महाभाष्य व्याकरण नहीं माना जाता। और यह पण्डितजीभी एक विचित्र बुद्धिके धनी हैं, जो भाष्यकी गणना व्याकरणमें नहीं करते ' श्रीमद्दयानन्दप्रकाशे गङ्गाकाण्ड दूसरा सर्ग ७१ पृष्ठ। इत्थमयं स्वामिनो हेत्वाभासः स्वामिन एव स्वयुक्त्या खण्डितः।

अथ चात्र प्रष्टव्योऽसौ मस्करी यद्–यदि परमात्मकर्तृकं व्याख्यानं वेदो न; तर्हि वेदस्य व्याख्यानं केन कृतम् ?। यदि ऋषिभिरिति, तर्हि तैर्ऋषिभिस्तेऽर्थाः कुतोऽधिगताः ? । ईश्वरादृते तदीयवेदस्यार्थं कः कर्तुं शक्नुयात् ?। एवं स्पष्टं जातं यथा ईश्वरेण ऋषीणां मनसि मन्त्राः प्रादुर्भाविताः, तथा तदीया अर्था ब्राह्मणरूपा अपि। ' स पूर्वेषामपि गुरुः ' योगदर्शनसमाधिपादे २६ सूत्रे । यथा ऋषिभिः समाधिद्वारा दृष्टा मन्त्रा ऋषिकृता नोच्यन्ते किन्तु ऋषिदृष्टा एव; तथा ऋषिभिः समाधिद्वारा दृष्टा मन्त्रार्था ब्राह्मणरूपा अपि ऋषिदृष्टा एव, न किल ऋषिप्रणीताः। प्रणेता च तेषामपीश्वर एव। तर्हि मूलं पुस्तकं तद् व्याख्यानपुस्तकं च समानकर्तृकत्वे समानविषयकमेव भवति, न भिन्नविषयकम् । उभयोर्मन्त्रब्राह्मणेति भिन्ननामत्वेऽपि वेदविषयतया उभयोर्वेदतैव।

यत्तु केचिद् ब्राह्मणभागस्य मन्त्रभागभाष्यतया मन्त्रभागतः पश्चान्निर्मितत्वात् तदेककालिकत्वाऽभावेन तस्य अवेदत्वमाचक्षते; तदपि यत् किञ्चित्। अन्यथा ऋग्यजुःसामाथर्वात्मके मन्त्रभागेऽपि क्रमदर्शनेन यजुरादीनामपि ऋगादिभ्यः पश्चात् प्रणीतत्वेन तेषामप्यवेदताप्रसङ्गः। एवन्तु ऋग्वेदस्य द्वितीयादिमण्डलानामपि प्रथममण्डलोत्तरं प्रणीतत्वेन अवशिष्टमण्डलानामप्यवेदत्वप्रसङ्गः। प्रत्युत ' अग्निमीळे पुरोहितं ' ऋ० १।१।१ एतदुत्तरमन्त्राणामेतदुत्तरकालप्रणीतत्वेन सर्वेषामपि मन्त्राणां वेदत्वाभावप्रसङ्गः। यद्येषु यौगपद्यम्; तर्हि मन्त्रभाग ब्राह्मण भागयोरपियौगपद्यं ज्ञेयम्। शब्दानामर्थेन सम्बन्धो नित्यो भवति ।

अन्यो हेतुर्दत्तः स्वामिना ब्राह्मणभागस्याऽवेदत्वे पुराणेतिहाससञ्ज्ञकत्वादिति । तत्र च ऋग्वेदादिभाष्यभूमिकायां ८४–८९ पृष्ठयोन्यायदर्शनस्य तदीयश्रीवात्स्यायनभाष्यस्य च प्रमाणं दत्तं तत्तु सर्वथा व्यर्थमेव। यतो न्यायदर्शनकर्त्ता श्रीगोतमस्तद्भाष्यकर्त्ता वात्स्यायनश्च–उभावेव ब्राह्मणभागं वेदं मन्येते। पुराणेतिहासं च तौ ब्राह्मणभागाद् भिन्नं मन्येते। तथाहि–

' तदप्रामाण्यमनृतव्याघातपुनरुक्तेभ्यः ' न्यायदर्शने२।१।५७ अनेन सूत्रेण श्रीगौतमेन वेदप्रामाण्यं द्रढयितुं × स्थूणानिखननन्यायेन शङ्का कृता। अस्मिन् सूत्रे अनृतव्याघातपुनरुक्ताख्यास्त्रयो दोषा वेदे आसञ्जिताः।

---

× द्रढयितुम्। अत्र णेरिष्ठवत्त्वाद् ' र ऋतो '- इति ऋकारस्य रेफः।

अत्र उद्धरणानि ब्राह्मणभागस्य दत्तानि । 'पुत्रकामः पुत्रेष्ट्या यजेत' । 'उदिते होतव्यम्' ऐतरेय ब्रा॰ ५।५।२९। 'श्यावोऽस्याहुतिमभ्यवहरति य उदिते जुहोति' । 'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्' ऐत॰ १ । ३ । १३, शतप॰ ११।२।१।४ इमानि त्रीण्यपि प्रमाणानि ब्राह्मणभागस्य ।

ये खलु ब्राह्मणशब्दस्य वेदशब्दवाच्यतां दृष्ट्वा तत्स्तुतिमात्रं मन्वते, न वास्तविकताम्, तेऽत्र दृष्टिपातमवश्यं कुर्वन्तु । केवलं स्तुतिमात्रेणैव ब्राह्मणानां वेदशब्दव्यपदेशे मते, वेदोदाहरणे प्रदातव्ये ब्राह्मणोदाहरणं कथमपि न न्यायतां कलयितुमर्हति । यदि च वेदोदाहरणे प्रदेये ब्राह्मणभागस्य वाक्यमुद्ध्रियते प्राचीनैः, तर्हि तेनेदं सिद्धं यद्—ब्राह्मणानां वेदशब्दवाच्यता वास्तविक्येव, न खलु स्तुतिमात्रफलिका । अन्यथा नैष न्यायो यत्—खण्डनं चिकीर्ष्येत वेदस्य, महिमा वा प्रदिदर्शयिष्येत * वेदस्य; तत्र प्रमाणं दीयेत ब्राह्मणभागस्य । तेन तस्य वेदता सिद्धैव । स्तुतिकल्पना तु वादिनां स्वपक्षरक्षणार्थं व्याजमात्रमेव । अन्यथा कश्चिन्मन्त्रभागस्यापि परमात्मप्रणीतत्वे स्तुतिमात्रं मन्येत, तर्हि किं वादिनस्तथा मन्येरन् ! ।

यदि भाष्यकारो वात्स्यायनमुनिर्ब्राह्मणभागं वेदं नाऽमंस्यत; तर्हि कोऽयं न्याय आसीद् यत्—खण्डनीयो भवेद् वेदः, तत्खण्डनार्थं चोद्धरणं दीयेत ब्राह्मणभागस्य । अत एव स्पष्टं यत्—श्रीवात्स्यायनो ब्राह्मणभागमपि मन्त्रभागवद् वेदं मेने । केवलं वात्स्यायनस्यैव नैव, प्रत्युत सूत्रकारस्य श्रीगोतमस्याऽपि अयमेव पक्षः । तदैव तु स पुत्रेष्ट्यनृततायां उत्तरे 'न, कर्मकर्तृसाधनवैगुण्यात्' २।१।५८ इति सूत्रं जग्रन्थ । 'उदिते होतव्यम्' इत्यादिव्याघातस्योत्तरे 'अभ्युपेत्य कालभेदे दोषवचनात्' २।१।५९ इति सूत्रयामास । 'त्रिः प्रथमामिति' पुनरुक्तस्योत्तरे 'अनुवादोपपत्तेश्च' २ । १ । ६० इति सूत्रं निर्म्ममे । अतो यदा सूत्रकारभाष्यकारौ उभावेव ब्राह्मणभागं वेदं मन्येते; तर्हि स्वा॰ दयानन्देन तद्वैपरीत्यं प्रदर्श्य जनता कथं प्रतारिता ? ।

प्रत्युत भाष्यकारः श्रीवात्स्यायनस्तु मन्त्रभागं ब्राह्मणभागं च समकक्षं मेने, पुराणेतिहासं च ब्राह्मणभागाद् भिन्नं मेने । श्रूयतां तदीयं स्पष्टं प्रमाणम्—

"विषयव्यवस्थापनाच्च यथाविषयं प्रामाण्यम् । अन्यो मन्त्रब्राह्मणस्य विषयः, **अन्यश्चेतिहासपुराण-धर्मशास्त्राणाम् ।**" ४ । १ । ६२ हन्त मस्करिन् ! श्रीवात्स्यायनस्तु ब्राह्मणभागस्य विषयमन्यमादिशति, पुराणेतिहासस्य च विषयं तद्भिन्नमामनति । मन्त्रब्राह्मणयोश्च विषयं समं मन्यते । स्वे स्वे विषये च स मन्त्रं, ब्राह्मणं, पुराणेतिहासं, धर्म्मशास्त्रञ्च एतत्सर्वं स्वतः प्रमाणं मनुते । दृश्यतामग्रे श्रीवात्स्यायनस्य स्पष्टवचनम् ।

"यज्ञो मन्त्र-ब्राह्मणस्य' लोकवृत्तमितिहासपुराणस्य, लोकव्यवहारव्यवस्थापनं धर्म्मशास्त्रस्य विषयः । तत्र एकेन न सर्वं व्यवस्थाप्यते—इति यथाविषयमेतानि प्रमाणानि इन्द्रियादिवदिति" ४।१।६२ ।

अत्र श्रीवात्स्यायनेन कथं स्पष्टरूपेण मन्त्रब्राह्मणयोः समानविषयः प्रतिपादितः, इतिहासपुराणस्य च ताभ्यां भिन्नो विषयः स्पष्टं प्रतिपादितः । तेनैव तत्सूत्रभाष्यं इदमप्युक्तम्—"प्रमाणेन खलु ब्राह्मणेन इतिहासपुराणानां प्रामाण्यमभ्यनुज्ञायते" । अत्र ब्राह्मणानां प्रामाण्येन इतिहासपुराणानां प्रामाण्यं मतम् । यदि ब्राह्मणान्येव इतिहासपुराणानि स्युः; तदा स्वेन स्वसिद्धिः कथं भवेत् ? नहि पटुरपि बटुः स्वस्कन्धमारोढुं पटुः । नहि 'ब्राह्मणेन' 'ब्राह्मणप्रामाण्यं कथमपि भवितुमर्हति' । नहि साक्षी अभियुक्तश्च कदाचित समानौ भवतः । तेनाऽप्येषः ब्राह्मणपुराणेतिहासानां मिथो भिन्नता सिध्यति ।

---

* प्रदिदर्शयिष्येत । ण्यन्तसन्नन्तस्य कर्मण्ययं प्रयोगो लिङि ॥

इत्थं यदा न्यायदर्शनस्य सूत्र-भाष्य-कारौ ब्राह्मणस्य पुराणेतिहासस्य च परस्परं भेदं मन्वाते; तर्हि स्वा० दयानन्देन यत् तदीयसूत्रभाष्याणि उद्धृतानि, तानि प्रयासमात्रफलकत्वाद् व्यर्थानि। यतस्तेषु स्वामिनोऽभीष्टवर्णनस्य गन्ध एव नेति न्यायमर्म्मजुषां विदुषां प्रत्यक्षम्। तेन च ब्राह्मणभागस्य वेदता स्पष्टा।

यत्तु–'प्रमाणं शब्दो यथा लोके विभागश्च ब्राह्मणवाक्यानां त्रिविधः' इति वात्स्यायनभाष्यं ८४ पृष्ठे उद्धृत्य तदग्रे–'अयमभिप्रायः–ब्राह्मणग्रन्थशब्दा लौकिका एव न वैदिकाः' इति स्वा० दयानन्देन लिखितम्, तत्र स्पष्टं छलं कृतम्। यतः–"प्रमाणं शब्दो यथा लोके" एतत्पाठपर्य्यन्तं २।१।६० सूत्रस्य भाष्यं समाप्तं भवति। अग्रे "विभागश्च ब्राह्मणवाक्यानां त्रिविधः" इति तु २।१।६१ सूत्रस्य अवतरणिकाऽस्ति। स्वा० दयानन्देन इमे वाक्ये यौगपद्येन संहृत्य साधारणजनतादृष्टौ धूलिप्रक्षेपः कृतः। अत एव तत्प्रदर्शितोऽभिप्रायोऽपि निर्म्मूल एव।

यदि लोकस्य दृष्टान्तं दत्त्वा मन्त्रभागः परिपोष्येत; तर्हि किं मन्त्रभागोऽपि मस्करिणो मतेन लौकिको भविष्यति ?। हन्त दूरदर्शिते !!! "न भिद्यते लौकिकाद् वाक्याद् वैदिकं वाक्यं प्रेक्षापूर्वकारिपुरुषप्रणीतत्वेन" ४।१।६० तर्हि किमेतन्न्यायभाष्यकथनेन मस्करी वैदिकवाक्यमपि लौकिकं मंस्यते ?। यास्कमुनिना निरुक्ते १।१६।१–४–७–९ कौत्समतखण्डनावसरे यत्र मन्त्रभागस्य सार्थक्यं साधितम्, तत्र सर्व्वे लौकिका एव दृष्टान्ता दत्ताः। तर्हि किं मन्त्रभागोऽपि लौकिकोऽथवा वेदो भवेन्मस्करिनयेन ?। एवं तर्हि धन्यो मस्करी।

'प्रमाणं शब्दो यथा लोके' इति वात्स्यायनभाष्यस्य अयमर्थो यत् शब्दः–वेदः प्रमाणम्, यथा लौकिकवाक्यं प्रमाणं भवति। (एतदेव निरुक्ते यास्केन कथितम्–'अर्थवन्तः शब्दसामान्यात्' १।१६।१ अत्र दुर्गाचार्यः–"य एव गोशब्दो लोके स्वरसंस्कारसंयुक्तः स एव मन्त्रेष्वपि"।) ततस्तदग्रे वात्स्यायनेन अग्रिमसूत्रस्य अवतरणिका दत्ता यद् ब्राह्मणवाक्यानि त्रिधा भवन्ति इति। अनेन स्पष्टं ब्राह्मणभागस्य शब्दता (वेदता) सिद्धा। अथ च 'प्रमाणं शब्दो यथा लोके' अत्र 'यथा' शब्द उपमावाचकः। अत्र वाक्यगता श्रौती उपमा। उपमा च भिन्नवस्तुनोः साधर्म्ये एव भवति। 'चन्द्रवन्मुखम्' अत्रोपमानोपमेये मिथो भिन्ने एव। अत उक्तं काव्यप्रकाशे–'साधर्म्यमुपमा भेदे' दशमे उल्लासे। तेन लौकिकप्रामाण्योपमया ब्राह्मणभागस्य लोकतो भिन्नता सिद्धा। अन्यथा वेदप्रकरणे प्रचलति सति ब्राह्मणभागवर्णनमप्रकृतं स्यात्।

विध्यर्थवादानुवादवचनविनियोगात् न्यायदर्शने २।१।६२ इति सूत्रे श्रीगौतमेन ब्राह्मणभागस्य प्रकारत्रयं निर्दिष्टम्। ततः क्रमशः–'विधिर्विधायकः' २।१।१।६३ स्तुतिर्निन्दा परकृतिः पुराकल्प इत्यर्थवादः २।१।६४ विधिविहितस्याऽनुवचनमनुवादः' २।१।६५ इति सूत्रेषु उक्तभेदत्रयस्य लक्षणमुक्तम्। तद्भाष्ये च 'अग्निहोत्रं जुहुयात् स्वर्गकामः' 'सर्वजितो वै देवाः सर्वमजयन्' 'एतेनाऽनिष्ट्वाऽन्येन यजते गर्ते पतति' इत्याद्युदाहरणानि विध्यादीनां दर्शितानि।

ततः ६९ सूत्रस्य भाष्ये श्रीवात्स्यायनेन एषां ब्राह्मणवाक्यानां सार्थक्याय लौकिकोदाहरणानि दत्तानि। तानि यथा–"लोकेऽपि च विधिरर्थवादोऽनुवाद इति च त्रिविधं वाक्यम्। 'ओदनं पचेत' इति विधिः। 'आयुर्वर्चो बलं सुखं प्रतिभानञ्चाऽन्ने प्रतिष्ठितम्' इति अर्थवादः। पचतु पचतु भवान् इत्यभ्यास इत्यनुवादः। एवं लौकिकवाक्यानामुदाहरणं दत्त्वा श्रीवात्स्यायनोऽग्रे 'अग्निहोत्रं जुहुयाद्' इत्यादिब्राह्मणवाक्यानां सामञ्जस्यं घटयति–"यथा लौकिके वाक्ये (ओदनं पचेद् इत्यादिके) विभागेन अर्थग्रहणात् प्रमाणत्वम्, एवं वेदवाक्यानामपि ('अग्निहोत्रं जुहुयाद् इत्यादिप्रागुक्तब्राह्मणवाक्यानां) विभागेन अर्थग्रहणात् प्रमाणत्वं भवितुमर्हति" २।१।६९।

हन्त ! कियती स्पष्टता । अत्र यावन्ति लौकिकवाक्यानि भाष्यकृता वात्स्यायनेन उदाहृतानि, तेषु ब्राह्मणभागस्यैकमपि वाक्यं नास्ति । वेदवाक्यानि च यानि तेनोद्धृतानि, तानि ब्राह्मणभागस्यैव, मन्त्रभागस्यैकमपि नोद्धरणममुत्र । तत्रैव ब्राह्मणप्रकरणे " एवं वेदवाक्यानामपि विभागेनाऽर्थग्रहणात् प्रमाणत्वं भवितुमर्हति " इत्यादिना वेदवाक्यनाम्ना उपसंहाराद्, उपक्रमोपसंहारयोश्चैक्यस्य प्रसिद्धत्वाद् न्यायसूत्र-भाष्य-कारयोर्मतानुसारं तानि वेदवाक्यानि सिद्धानि। तेन तन्मते ब्राह्मणभागस्य स्पष्टं वेदता सिद्धा।

स्वा० दयानन्देन साधारणजनतायाः प्रतारणार्थमेव न्यायदर्शनस्य सूत्रभाष्याण्युद्धृतानि । तत्र स्वा० दयानन्दस्य कोऽप्यभीष्टसिद्धान्तो न सिध्यतीति समेरीनादमस्माभिर्जोघुष्यते । विज्ञपाठकाः स्वयमृग्वेदादिभाष्यभूमिकायाः ८४—८९ पृष्ठे पश्यन्तु । लौकिकोदाहरणप्रदर्शनमुखेन तु ब्राह्मणभागस्य प्रामाण्यसाधनेन यदि ब्राह्मणभागस्य वेदत्वाऽभावं कश्चिद् वक्तुमुत्सहेत; तर्ह्यसौ दूरत एव नमस्कर्त्तव्यः । अन्यथा निरुक्ते मन्त्रभागस्य लौकिकोदाहरणोपन्यासमुखेन प्रामाण्ये मन्त्रभागस्याऽप्यवेदताऽऽपत्तिः स्यादिति अनुपदमुक्तम् । एवं ' मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यम् ' २ । १ । ६८ इति न्यायसूत्रेण लौकिकायुर्वेददृष्टान्तमुखेन वेदस्य प्रामाण्ये साध्यमाने वादिनां मते वेदो लौकिकोऽवेदो वा मन्तव्यः स्यात्; परं वादिनामनिष्टमेतत् । अथ च ब्राह्मणभागस्य वेदत्वाऽभावे वेदप्रकरणे ब्राह्मणभागस्य वर्णनमप्रकृततां वहेत् । ब्राह्मणभागप्रकरणे च ६९ सूत्रे ' एवं वेदवाक्यानामपि प्रमाणत्वं भवितुमर्हति ' इत्युपसंहरणमपि अप्रकृतं स्यात् । परं नैवमस्ति । अत एव सिद्धा ब्राह्मणभागस्य वेदता न्यायमतेऽपि ।

यत्तु मुण्डिना ऋग्वेदादिभाष्यभूमिकायाः ८९ पृष्ठे ' न चतुष्ट्वमैतिह्यार्थापत्तिसम्भवाऽभावप्रामाण्यात् ' २ । २ । १ इति न्यायसूत्रमुद्धृत्य ' न चत्वार्येव प्रमाणानि, किं तर्हि—ऐतिह्यमर्थापत्तिः सम्भवोऽभाव इत्येतान्यपि प्रमाणानि ' इति तद्वात्स्यायनभाष्यमुद्धृत्य, ततो वात्स्यायनभाष्यस्थम् ' इति होचुरित्यनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यमैतिह्यम् ' इत्यैतिह्यलक्षणमुल्लिख्य तदग्रे " अनेन प्रमाणेनापीतिहासादिनामभिर्ब्राह्मणान्येव गृह्यन्ते नाऽन्यदिति " इति स्वसंस्कृतं लिखितम्, अत्र तेन सुमहच्छलं कृतम् । अहो ! एतावत् साहसम् ! यद्—यत्र प्रमाणे क्वापि ब्राह्मणभागस्य चर्चैव न, न च ब्राह्मणभागप्रकरणम्, तत्र स्वकपोलकल्पनया ' अस्मिन् प्रमाणे ब्राह्मणमितिहासग्रन्थो मतो न वेदः ' इति वचनं कियच्छलं सूचयति । हन्त मुण्डिन् ! एतत्प्रत्यक्षाऽसत्यं लिखन् भवान् ईश्वरादपि न बिभाय ?

यत्तु स्वपुस्तकस्य ८१ पृष्ठे दण्डिना ब्राह्मणभागे एष दण्डः प्रक्षिप्तो यद्—" यथा ब्राह्मणग्रन्थेषु मनुष्याणां नामलेखपूर्वका लौकिका इतिहासाः सन्ति, न चैवं मन्त्रभागे इति " । एतदपि स्वच्छमसत्यम् । मन्त्रभागेऽपि बहव इतिहासाः । ब्राह्मणभागे ये इतिहासास्ते मन्त्रभागकथितेतिहासस्य विवरणरूपाः सन्ति, न स्वतन्त्राः ! अस्माभिर्मन्त्रभागाद् बहव इतिहासाः सङ्कलिताः, तत्र वादिनामाक्षेपा अपि निराकृताः । दिदृक्षवोऽस्मत्प्रणीते ' श्रीसनातनधर्म्मालोके ' पश्यन्तु ।

अग्रे स्वा० दयानन्दस्य ' त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम् । यद् देवेषु त्र्यायुषं तन्नो अस्तु त्र्यायुषम् ' यजुः ३ । ६२ अत्र मन्त्रे स्वयमितिहासस्य शङ्का समजनि । परं ' चक्षुर्वै जमदग्निर्ऋषिः ' एतच्छतपथप्रमाणात् स्वामिना जमदग्नेरर्थपरिवर्त्तनं कृतम् । एवमन्यत् । परन्तु ' जमदग्नेः ' चक्षुरिति गौणोऽर्थः, यतो वेदे आध्यात्मिकाधिदैविकाधिभौतिकास्त्रयो भावा भवन्ति। अतस्तस्य ऋषिविशेषार्थोऽपि नापसारयितुं शक्यः।

अन्यथा—' त्रयो वेदा एते एव, वागेवर्ग्वेदः, मनो यजुर्वेदः, प्राणः सामवेदः ' १४ । ४ । ३ । १२ इति शतपथब्राह्मणानुसारं ' तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायत ' यजुः ३१ । ७ इत्यादिमन्त्रेष्वपि ऋग्यजुःसाम्नां वाङ्मनःप्राणार्थः कर्त्तव्यः स्यात् । तदा किं स्वा० दयानन्दः स्वर्ग्वेदादिभाष्यभूमिकायाः ९ पृष्ठे कृतं प्रकृतमन्त्रस्य " तस्माद् यज्ञात्—सच्चिदानन्दादि-

लक्षणात् पूर्णात् पुरुषाद् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदश्च, चत्वारो वेदास्तेनैव प्रकाशिता इति वेद्यम् " इति स्वकृतं वेदेतिहासप्रदर्शकमर्थं शतपथानुसारमशुद्धं मन्तुमुद्यतो भवेत् ? । यदि न; तर्हि ' त्र्यायुषं जमदग्नेः ' इत्यादौ मन्त्रेऽपि जमदग्निप्रभृतिपदानामृषिविशेषार्थोऽपि नाऽपासयितुं शक्यते ।

परन्तु पक्षपातावरणोपेतः स्वा. दयानन्दः कथमेतद् विवेक्तुं प्रभवेद् यद्—ब्राह्मणभागस्य शैली एव ईदृशी यद्— एकशब्दस्य तत्र बहवोऽर्थाः क्रियन्ते । तथा चात्र निरुक्तकारस्यापि साक्ष्यम् ' बहुभक्तिवादीनि हि ब्राह्मणानि भवन्ति, अग्निर्वैश्वानरः, संवत्सरो वैश्वानरः, ब्राह्मणो वैश्वानरः ' ७ । २४ । ६ ।

ब्राह्मणभागे केषाञ्चित् पदानाम् ' आयुर्वै घृतम् ' इतीव महत्त्वमपि ख्यापितम् । तर्हि किं वादिनो ' घृतम् ' आयुषः पर्य्यायवाचकमर्थं वा मंस्यन्ते ? यदि न, तर्हि तैस्तथाऽत्रापि ज्ञेयम् । ' चक्षुर्वै जमदग्निर्ऋषिः ' अत्र जमदग्नेश्चक्षुर्वच्छ्रेष्ठत्वं मतम् । यथा ' आयुर्वै घृतम् ' अत्र घृतस्य आयुष्ट्वं मतम् । नैतेन जमदग्नेरभावो मन्तव्यः, अन्यथा घृतस्यापि आयुर्व्यतिरिक्तत्वं न मन्येत । कार्य्यकारणभावादिसम्बन्धानामभेदव्यवहारः प्रसिद्ध एव, लुप्तोपमाऽलङ्कारश्च मस्करिणोऽतिशयपरिचित एव । तेन मस्करिणा उक्तपूर्वा कल्पना निर्मूलैव कृता ।

' त्र्यायुषम् ' इति मन्त्रस्य स्वा. दयानन्देनैवमर्थः कृतः—' हे जगदीश्वर ! भवत्कृपया नोऽस्माकं जमदग्नि-सञ्ज्ञकस्य चक्षुषः कश्यपाख्यस्य प्राणस्य च त्र्यायुषं—त्रिगुणमर्थात् त्रीणि शतानि वर्षाणि यावत्, तावदायु-रस्तु । देवेषु—विद्वत्सु यद् विद्याप्रभावयुक्तं त्रिगुणमायुर्भवति, तन्नो अस्तु त्र्यायुषम् ' इत्यादि. पृ. ८१ हन्त ! यजुष्कण्डिकयाऽनया सह कीदृशं बलात्कृतं मस्करिणा इति खेदविषयः । पूर्वार्धे ' नः अस्तु ' इत्यनयोः सम्बन्धो बलाद्योजितः । वस्तुतस्तु मन्त्रभागाद् इतिहासमपासयितुमेव मस्करिणा इयं कृत्रिमकल्पना कृता । स्वामिनाऽत्र देवपदस्याऽर्थो विद्वानिति कृतः । यद्यपि स न युक्तः, तथापि तदयुक्तत्वमप्रकृतमियाऽनुपन्यस्य इत्थं पृच्छ्यते यत्—स्वामिनाऽत्र विदुषां ३०० वर्षाणामथवा ४०० वर्षाणामायुर्मतम् । तत्र प्रष्टव्यम्, यत्— स्वा. दयानन्दस्यानुयायिनः स्वा. तुलसीरामपूर्णानन्ददर्शनानन्दप्रभृतय आर्यसमाजस्य स्वर्गीयनेतारो विद्वांस आसन् नो वा ? । यदि आसन्; तर्ह्येषां ३००—४०० वर्षाण्यायुः कुतो न जातम् ? । यदि एते विद्वांसो नासन्; तर्हि किमिमे शूद्रा आसन् ? एतन्निर्धारणं तत्समाजाधीनम् ।

मन्त्रेऽत्र येषां विदुषां ३००—४०० वर्षायुर्निर्दिष्टम्, ते विद्वांसोऽस्मान्मन्त्रात् पश्चाज्जाताः ? एतन्मन्त्रात्पूर्व्वं वा ? । यदि पूर्व्वं तर्हि मन्त्रभागोऽपि तत्पाश्चात्त्यः सिद्धः, यतः स्वामिना स्वयमेव लिखितं यद्—'इतिहास जिसका हो उसके जन्मके पश्चात् लिखा जाता है, वह ग्रन्थ भी उसके जन्मके पश्चात् होता है ' सत्यार्थ प्र. ७ पृ. १२७ । यदि ते मन्त्रभागतः पाश्चात्त्याः; तर्हि मन्त्रभागेऽपि भविष्यदितिहासः सिद्धः । पुनरितिहासागमनेन ब्राह्मणभाग एव कथमवेदः स्यात् ? ।

स्वा. दयानन्देन ' अग्ने ! देवेषु प्रवोचः ' ऋ. १ । २७ । ४ मन्त्रस्य भाष्ये लिखितम्—' अग्ने !—अनन्त-विद्यामय जगदीश्वर ! देवेषु सृष्ट्यादौ जातेषु पुण्यात्मसु अग्निवाय्वादित्याङ्गिरस्सु मनुष्येषु प्रवोचः—प्रोक्तवान् ' । अधुना कथ्यताम्—अयमर्थः शुद्धो वाऽशुद्धो वा ? यद्यशुद्धः तर्हि स्वा. दयानन्दो वादिनां मतेऽप्यशुद्धार्थकर्त्ता सिद्धः । तेन तदर्थमात्रेण मन्त्रभागे इतिहासो वारयितुं न शक्यः । यदि उक्तमन्त्रार्थः स्वामिनः शुद्धो मन्येत; तर्हि मन्त्रभागेऽपि इतिहासः सिद्धः । तदा मन्त्रभागस्य यथा वेदता साधयिष्यते, तथा ब्राह्मणभागस्यापि साधयितुं सुशका ।

अन्यद् दृश्यताम्—ऋग्वेदादिभाष्यभूमिकायाः ३१९ पृष्ठे स्वामिना लिखितम्—" ननु इमं मे गङ्गे यमुने सरस्वतीति गङ्गादिनदीनां वेदे प्रतिपादनं कृतमस्ति त्वया कथं न मन्यते ? । अत्रोच्यते—मन्यते तु मया तासां नदीसञ्ज्ञेति । ता गङ्गादयो नद्यः सन्ति । ताभ्यो यथायोग्यं जलशुद्ध्यादिगुणैर्यावानुपकारो भवति, तावत् तासां मान्यं करोमि ' अत्र प्रष्टव्यं यद्—ऋग्वेदस्थः ' इमं मे गङ्गे ! यमुने ! सरस्वति । ' १० । ७५ । ५ ।

इति मन्त्रो गङ्गादिनदीनां प्राकट्योत्तरं प्रणीतः ? प्राग् वा ? । यदि प्रागिति, तर्हि यदि मन्त्रे जमदग्निकश्यपादीनां नामापि परमात्मना तत्तज्जन्मतः प्राक् प्रतिपादितम् । तर्हि तदर्थपरीवर्त्तस्य काऽऽवश्यकता ? । तथा ब्राह्मणभागेऽपि मन्तव्यम् ।

अग्रे वयं स्वा० दयानन्दस्यैकं स्पष्टं प्रमाणमस्मिन् विषये लिखामः । तेन ऋग्वेदादिभाष्यभूमिकाया अस्मिन्नेव प्रकरणे ८२–८३ पृष्ठयोर्लिखितम्–" तमितिहासश्च पुराणं च गाथाश्च नाराशंसीश्च अनुव्यचलन् " अथर्व० १९ । ३० । १ ' इतिहासस्य च.... वै स पुराणस्य च प्रियं धाम भवति य एवं वेद ' अ० १९ । ३० । ४ ( षष्ठपर्याये १२ ) एतैः प्रमाणैः ब्राह्मणग्रन्थानामेव ग्रहणं जायते न श्रीमद्भागवतादीनामिति " ।

अत्र मस्करी प्रष्टव्यो यद्–यदि भवन्मतानुसारमत्र अथर्ववेदस्य इतिहासपुराणशब्दैर्ब्राह्मणग्रन्थानां ग्रहणं तर्ह्ययं मन्त्रो ब्राह्मणभागनिर्म्माणोत्तरं प्रणीत आहोस्वित् ततः प्राक् ? अत्र स्वामिनो यदुत्तरं तदेव ब्राह्मणभागस्येतिहासस्यापि ज्ञेयम् । यदि स्वामी ब्राह्मणभागमितिहासत्वाद् वेदत्वात् पृथक् करोति, तयैव दिशा तेन मन्त्रभागोऽपि वेदत्वात् पृथक् कर्त्तव्यः स्यात् । यदि नैवं तर्हि ब्राह्मणानां पुराणेतिहाससञ्ज्ञकत्वादिति अवेदत्वे दत्तो हेतुर्निरस्तः । 'आश्वलायनगृह्यसूत्रे अ० ३ पञ्चयज्ञप्रकरणे 'ऋचो यजूंषि सामान्यथर्वाङ्गिरसो ब्राह्मणानि.... इतिहास–पुराणानि ' अत्र पुराणेतिहासा ब्राह्मणेभ्यः पृथङ् निर्दिष्टाः । ' तैत्तिरीयारण्यके २ प्र० ९ अनु० २ मं०–'ब्राह्मणानीतिहासान् पुराणानि....' अत्रापि ब्राह्मणेभ्यः पृथगेवेतिहासपुराणानि निर्दिष्टानि । गोपथब्राह्मणे 'एवमिमे सर्वे वेदा निर्मिताः....सब्राह्मणाः सेतिहासाः सपुराणाः ' १ । २ । १० अत्रापि ब्राह्मणेभ्य इतिहासपुराणानि पृथक् कीर्तितानि । न्यायदर्शनप्रमाणञ्चैतद्विषये प्रागुदत्तमेवेति स्वामिनः पुराणेतिहाससञ्ज्ञकत्वादिति हेतुर्निष्पिष्ट एव ।

' कात्यायनभिन्नैर्ऋषिभिर्वेदसंज्ञायामस्वीकृतत्वात् ' इति ब्राह्मणभागस्याऽवेदत्वे स्वा. दयानन्देन दत्तो हेतुरपि तदीयाऽल्पश्रुतत्वख्यापकः । १–कात्यायनस्य ब्राह्मणभागस्य वेदतायां साक्ष्यं स्वयं स्वामिना स्वीकृतम् । ततो न्यायदर्शनसूत्रकारभाष्यकारयोः २-३–अष्टाध्यायीसूत्रकार–वार्त्तिककार-महाभाष्यकाराणां ४-५-६–च तत्र साक्ष्यमस्माभिर्निर्दिष्टचरमेव । अधुनाऽन्यदीयानि साक्ष्याण्यपि अत्र समुपस्थाप्यन्ते ।

७–' तच्चोदकेषु मन्त्राख्या' २ । १ । ३२ इति मीमांसादर्शने वेदैकदेशमन्त्रभागलक्षणमाचक्षाणस्य जैमिनिमुनेः ' शेषे ब्राह्मणशब्दः ' २ । १ । ३३ इति ब्राह्मणभागलक्षणे–' मन्त्रभागादवशिष्टे वेदैकदेशे ब्राह्मणशब्दः ' इत्यर्थकं ' शेषे ' इति पदं सङ्गच्छते । तेन तन्मतेऽप्युभयोरेव वेदस्य भागत्वम् । अन्यथा ' शेष ' पदं व्यर्थं स्यात् । न हि ' नलचम्वाः ' शेषः ' उत्तरमीमांसा ' भवति । एवञ्च नहि ब्राह्मणभागो वेदाद् अन्यस्य शेषो भवितुमर्हति ।

केचिदनेनैव लक्षणेन ब्राह्मणं वेदभिन्नं मन्वते शेषशब्ददर्शनात् । तदसत् । यदि प्राक्तनसूत्रे वेदलक्षणं निर्दिष्टमभविष्यद्, द्वितीयसूत्रे च ब्राह्मणलक्षणम्; तदा तु कथञ्चिद् ब्राह्मणस्य वेदभिन्नताऽभविष्यत् । परं मीमांसाकृता तु वेदस्य उभयोरेव भागयोर्मन्त्रब्राह्मणयोः पृथक् पृथग् लक्षणं कृतम् । यद्येतेन द्वितीयो भागो वेदभिन्नो मन्यते; तर्हि प्रथमोऽपि भागो वेदभिन्नो मन्तव्यः स्यात्, समानन्यायात् ।

८–जैमिनिसूत्राणां विख्यातव्याख्याता भाष्यकारः शबरस्वाम्यप्याह–' मन्त्राश्च ब्राह्मणञ्च वेदः । तत्र मन्त्रलक्षणे उक्ते परिशेषसिद्धत्वाद् ब्राह्मणलक्षणमवचनीयम् । मन्त्रलक्षणवचनेनैव सिद्धम् ' मीमांसा० २।१ । ३३।

९–' आम्नायः पुनर्मन्त्राश्च ब्राह्मणानि च ' इत्यथर्ववेदीयकौशिकसूत्रम् १ । ३ ।

१०–' मन्त्रब्राह्मणं वेद इत्याचक्षते ' ' मन्त्रब्राह्मणयोर्वेदनामधेयम् ' बौधायनीयगृह्यसूत्रे । २ । ६ । २–३, ३ । २ । ६३ । ११–' मन्त्रब्राह्मणयोर्वेदनामधेयम् ' आपस्तम्बश्रौतसूत्रे २४ । १ । ३१ । १२–मन्त्रब्राह्मणयोर्वेदनामधेयम् ' सत्याषाढश्रौतसूत्रे १ । १ । ७ । १३–मन्त्रब्राह्मणयोराहुर्वेदशब्दं महर्षयः ' इति सर्वा-

नुक्रमणिकावृत्तिभूमिकायां षड्गुरुशिष्यः । १४—मन्त्रब्राह्मणात्मकत्वं तावद् वेदस्याऽदुष्टं लक्षणम्, इति ऋग्वेद-भाष्योपोद्घाते सायणः । १५—यास्कस्य प्रमाणानि निर्दिष्टचराण्येव ।

१६—'स्याद् वाऽऽम्नायधर्मित्वाच्छन्दसि नियमः' १।४ इति वाजसनेयिप्रातिशाख्यसूत्रस्य व्याख्यानाव-सरे उवटः—'आम्नायो वेदः' इत्युक्त्वा 'ब्राह्मणं विध्यर्थवादरूपम्, मन्त्रस्तु कर्माङ्गभूतद्रव्यदेवतास्मारकः' इत्युभयस्यैव आम्नायत्वं प्रोक्तवान्।

१७—'साक्षात्कृतधर्माण ऋषयो बभूवुः । तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् सम्प्रादुः उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणाय इमं ग्रन्थं समाम्नासिषुः, वेदञ्च वेदाङ्गानि च' इति निरुक्तपाठे श्रीसत्य-व्रतसामाश्रमी—"यतोऽत्र 'मन्त्रान् सम्प्रादुः' इति कथनानन्तरमेव पुनरुक्तं 'वेदञ्च' इति, अतो—ज्ञायते नेह वेदशब्देन मन्त्राणां बोधोऽपि तु तदतिरिक्तभागानां ब्राह्मणानामेव' निरुक्तालोचने२९१० ।

१८—'उदितेऽनुदिते चैव समयाध्युषिते तथा । सर्वथा वर्तते यज्ञ इतीयं वैदिकी श्रुतिः' मनु०२।१५ इति मनुनापि ऐतरेयादिब्राह्मणभाग (पञ्चि० ५ । २९) मात्रोपलभ्यमानोदितादिहोमस्य 'वैदिकी श्रुतिः' इति कथनेन ब्राह्मणभागस्य वेदता मेने । एवं 'राज्ञश्च दद्युरुद्धारमित्येषा वैदिकी श्रुतिः' ७।९७ एषा श्रुति-र्ब्राह्मणभागे सुलभा न मन्त्रभागे । स्वा. दयानन्दो मनुस्मृतिं सृष्टेरादौ प्रणीतामाचष्ट । तथा च तदीयाः शब्दाः— 'यह मनुस्मृति जो सृष्टिकी आदिमें हुईहै उसका प्रमाण है' सत्यार्थप्रकाशे ११ समुल्लासारम्भे १७२ पृष्ठे । यदा खलु तन्मते मनुस्मृतिः सृष्ट्यादौ प्रणीता सिद्धा; तर्हि ब्राह्मणभागे वेदत्वव्यवहारोऽपि सृष्ट्यादि-कालिकः सिद्धः । मनुं केवलं स्वा०दयानन्दः सृष्ट्यादिभवं मेने—इति नास्ति, किन्तु तन्मान्यः श्रीमान् यास्कोऽपि स्वनिरुक्ते—'विसर्गादौ (सृष्ट्यादौ) मनुः स्वायम्भुवोऽब्रवीत्' ३।४।२ इति मनुं सृष्ट्यादिकालिकं मेने । तेन ब्राह्मणभागे वेदत्वव्यवहारोऽपि तात्कालिकः सिद्धः । मनुस्मृतिप्रवक्ता भृगुरपि सृष्ट्यादिकालिक एव इति मनु० १।३५ पद्ये द्रष्टव्यम् ।

१९—शुक्रनीतौ—'मन्त्रब्राह्मणयोर्वेदनाम प्रोक्तमृगादिषु' ४ । २७१ शुक्रनीतिं स्वा० दयानन्दः प्रमाण-यति । २० 'बुद्धिपूर्वा वाक्यकृतिर्वेदे' वैशेषिकदर्शने ६।१।१ इति सूत्रभाष्ये 'स्वर्गकामो यजेत' इति ब्राह्मणवाक्यस्य वेदनाम्नाऽऽख्यानात् कणभक्षपक्षेऽपि ब्राह्मणभागस्य वेदता सिद्धा ।

२०—'श्रुतेस्तु शब्दमूलत्वाद्' वेदान्तदर्शने २।१।२७ इत्यादौ बहुत्र श्रुतिप्रमाणे ब्राह्मणभागस्तदन्तर्गतो वा उपनिषन्निकर एव उपोद्धृतः । 'श्रुतिस्तु वेदो विज्ञेयः' मनु०२।१० ।

२१—अथ च 'वेदोऽखिलो धर्ममूलम्' २।६ इति मनुवचनात् । 'श्रुतिप्रमाणो धर्मः स्यात्' महाभारत० वन० २०६।४१ इति वचनाच्च सर्व्वस्य वेदस्य धर्म्ममूलकता निर्दिष्टा । धर्म्मस्य लक्षणं 'चोदनालक्षणो धर्मः' मीमांसादर्शने १।१।२ विहितकर्म्मजन्यो धर्म इति तर्कसंग्रहे गुणनिरूपणम् । 'स्वर्गकामो यजेत, अहरहः सन्ध्यामुपासीत, अष्टवर्षं ब्राह्मणमुपनयीत' इत्यादिविधिवाक्यान्येव च चोदना । मन्त्रभागे तु 'कुर्यात् क्रियेत कर्तव्यं भवेत् स्यादिति पञ्चमम् । एतत् स्यात् सर्ववेदेषु नियतं विधिलक्षणम्' मीमांसादर्शन० ४।३।३ इति विधीनां सत्तैव न । प्रायः प्रार्थनास्तत्र दृश्यन्ते । विधीनां तु ब्राह्मणभागे सद्भावः । तर्हि मन्त्रभागे विधीना-मभावाद् 'वेदोऽखिलो धर्ममूलम्' मनु० २।६ एतत् स्यात् सर्ववेदेषु नियतं विधिलक्षणम्' मीमांसादर्शने ४।३।३ 'श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन् हि मानवः । ....प्रेत्य चानुत्तमां गतिम्' मनु० २।९ इत्यभियुक्तोक्तिर्निर्विषयता-मानर्थक्यं वाऽऽपद्येत यदि ब्राह्मणभागोऽपि वेदो न स्वीक्रियेत । अत एव 'धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः" २।१३ इति मनुपद्ये श्रुतिशब्देन वेदभागस्य ब्राह्मणस्यैव ग्रहणम्, धर्म्मस्य (विधेः) तस्मिन्नेव सत्त्वात् एतेनापि ब्राह्मणानां वेदत्वं सिद्धम् ।

मीमांसादर्शनं साक्षाद् वेदव्यवस्थापनपरं मन्यते । तत्र ' अथातो धर्मजिज्ञासा १।१।१ इत्यत आरभ्य ' अन्वाहार्ये च दर्शनात् ' १२।४।४२ इति सूत्रान्तं द्वादश सन्त्यध्यायाः । तत्र तृतीयषष्ठदशमाध्यायेषु अष्टावष्टौ पादाः सन्ति, इतरत्र तु चत्वारश्चत्वारः पादाः प्रत्यध्यायं सन्ति । इत्थं ६० पादात्मकेऽस्मिन् दर्शने प्रायो नवशतमधिकरणानि सन्ति । एषु प्रायो ब्राह्मणभागवाक्यान्येव उदाहृतानि । मन्त्रभागवाक्यानि त्वत्र अंगुलिगणनीयानि ।

मीमांसादर्शनेऽत्र पौरुषेयव्यपदेश्यानां स्मृतीतिहासादीनां न मीमांसा, किन्तु अपौरुषेयवेदवाक्यार्थविचार एवाऽत्र । यदि ब्राह्मणभागस्य वेदता नाऽभविष्यत्; तर्हि ' मीमांसा नाम वेदविचारः ' ' एवं वेदवाक्यान्येव एभिर्व्याख्यास्यन्ते ' मीमांसादर्शन० १ । १ । १ इत्यादिपरिभाषणं नाऽभविष्यत् । उत्तरमीमांसायाम् ( वेदान्तदर्शने ) अपि प्रायो ब्राह्मणभाग एव प्रमाणित उदाहृतश्च । तेन स्पष्टं यद्--ब्राह्मणभागो वेद एव । अन्यथा वेदव्यवस्थाप्रकाशनार्थमवलम्बितब्राह्मणभागा दार्शनिकमुनयः प्रमत्ता मन्येरन् ।

' आम्नायस्य क्रियार्थत्वात् ' १ । २ । १ इति मीमांसासूत्रे अर्थवादात्मकब्राह्मणभाग आम्नायत्वेन मतः । एवम् ' औदुम्बरो यूपो भवति ' १ । २ । १९ इति सूत्रभाष्ये उक्ता विधिवन्निगदा अर्थवादाः १ । २ । २० सूत्रभाष्ये ' तद्वद् वेदेऽपि भविष्यति ' इति वेदशब्देनोदिताः । ' वेदे व्यक्तमसंवादः, ऊर्जोऽवरुद्ध्यै इत्यप्रसिद्धं वचनम् . ऊर्ग्वा उदुम्बर इति हेतुत्वञ्चाऽप्रसिद्धम् ' मी० १ । २ । २१ वेदे इत्युक्त्वा ब्राह्मणभाग उदाहृतः । ' शूर्पेण जुहोति, तेन ह्यन्नं क्रियते—सत्यमेवं लोके, विधायिष्यते तु वचनेन वेदे ' मीमांसा० १।२। २६ अत्रापि ब्राह्मणस्य वेदता कथिता । ' उक्तं हि समाम्नायैदमर्थ्यम् ' १ । ४ । १ अत्र विध्यर्थवादयुक्तं ब्राह्मणं समाम्नायत्वेन प्रोक्तम् । एवं ' ....तत्सामर्थ्यं समाम्नाये ' १ । ४ । १७ अत्र ' वैश्वानरं द्वादशकपालं निर्वपेत् ' इति ब्राह्मणस्य समाम्नायता प्रोक्ता ।

' श्वस्त्वेकेषां तत्र प्राक् श्रुतिर्गुणार्था ' मी० ३ । ६ । २० अत्र सूत्रे ' आग्नेयं पशुमालभते ' इति ब्राह्मणं श्रुतित्वेन मतम् । ' श्रुतितो व्यपदेशाच्च ' ४ । ४ । ३४ इति सूत्रे ' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ' इति ब्राह्मणं श्रुतित्वेन मतम् । ' कर्तुर्वा श्रुतिसंयोगात् ' ६ । १ । ५ अत्र ब्राह्मणभागस्य विधिवाक्यानि श्रुतिशब्देन कीर्तितानि ।

' वेदे हि त्रयाणां निर्देशो भवति—वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यं, वर्षासु वैश्यम् ' ६ । १ । ३३ इति ब्राह्मणवचनं वेदवचनं मतम् । ' विधौ तु वेदसंयोगात् ' ६ । ७ । २९ अत्र ' माषान्मे पचत ' इति ब्राह्मणं वेदशब्देन निर्दिष्टम् । ' आम्नायवचनं तद्वत् ' ११।२।४१ अत्र 'यदेवाऽध्वर्युः करोति' इति ब्राह्मणमाम्नायवचनं मतम् ' आम्नायवचनाच्च ' १२।४।३२ अस्मिन्नपि मीमांसादर्शनसूत्रे ' यो वै सत्रे बहूनां यजमानानां गृहपतिः ' इत्यादि ब्राह्मणवचनमाम्नायत्वेन मतम् ३ । ४ । २८ सूत्रे ' पौण्डरीकेऽश्वसहस्रं दक्षिणा ज्योतिष्टोमे गौश्चाऽश्वश्च ' इति वैदिकोऽश्वप्रतिग्रहो निर्दिष्टः, नचायं मन्त्रभागे किन्तु ब्राह्मणभागे । अस्तु ।

यस्तु खलु स्वा० दयानन्देन ब्राह्मणभागस्य वेदत्वनिषेधः कृतः, सोऽपि ब्राह्मणभागस्य वेदत्वे प्रमाणम् । तत्र । प्रष्टव्योऽसौ यद् भवता यो ब्राह्मणभागस्य वेदत्वनिषेधः कृतः, स तस्य वेदत्वप्राप्तौ सत्यां कृतः, अथवा तदप्राप्तौ ? अप्राप्ताविति चेत् कृतं धाष्टर्येन, प्राप्तौ सत्यामेव निषेधात् । कथमन्यथा स गृह्यसूत्रमनुस्मृत्यादीनामपि वेदत्वं न पृथक्तया स्पष्टं प्रत्याचष्ट । प्राप्तावेव ब्राह्मणभागस्य वेदत्वनिषेधोऽस्माभिः कृत इति चेत् तत्र प्रष्टव्यः स्वामी यत्-तत्ताप्राप्तिः कुत उपलब्धा भवता ? । यदि लोकव्यवहारस्तत्र कारणमित्युच्येत, तर्हि स व्यवहारः प्राचीनोऽर्वाचीनो वा ? । अर्वाचीन इति व्यर्थम्, तत्र प्रमाणाऽभावात् । यतस्तत्प्राचीनताऽस्माभिः साधितपूर्वैव । यदि च प्राचीनः परम्परीणश्च स व्यवहार इति चेत् स्वामिपक्षः खण्डितः ।

यदि कथ्येत यद्—आपस्तम्बकात्यायनादिभिः ' मन्त्रब्राह्मणयोर्वेदनामधेयम् इत्यादिवाक्येन स व्यवहारः प्रचालित इति, एतदपि यत् किञ्चित् । एतदादिवाक्ये नेदमभिहितं यद् मन्त्रब्राह्मणयोर्वेदनाम इति स्यादिति, प्रत्युत तत्र एतदुक्तं यत्—तयोर्नाम वेद इति वर्त्तते प्राचीनकालाद्, नतु अस्माभिरर्वाचीनतया प्रचालितः स व्यवहार इति । यद्येतन्न मन्येत स्वामी तदनुयायी वा कश्चित्; तर्हि मन्त्रेऽपि वेदव्यवहारोऽप्राचीनतामर्थाद् अर्वाचीनतां स्प्रक्ष्यति, उभयोरेवोक्तवाक्ये सध्रीचीनतया उक्तत्वात् । तेन सिद्धं यद्—आर्यसमाजप्रवर्त्तक स्वा० दयानन्दात् प्राक्तनकालपर्य्यन्तं मन्त्रभागवद् ब्राह्मणभागोऽपि वेदो मन्यते स्म । परं स्वा० दयानन्दकालादेव सनातनधर्म्मस्य सङ्कोचनार्थं ब्राह्मणभागस्याऽवेदताकथा प्रचलिता । तेनाऽयमेव व्यवहारोऽर्वाचीनोऽस्त एवाऽश्रद्धेयोऽसिध्यत् ।

वस्तुतस्तु स्वा. दयानन्दाधीनस्य ईश्वरस्यापि मते ब्राह्मणभागो वेदः । स्वामी सत्यार्थप्रकाशे २९ पृष्ठे वक्ति— ' कुलीन शूद्र हो तो उसको मन्त्रसंहिता छोडके सब शास्त्र पढाने ' । पुनरसौ ४४ पृष्ठे ईश्वरप्रमाणेन शूद्राणामपि वेदाधिकारमाचष्टे । पूर्वं शूद्राणां मन्त्रभागे निषेधसूचनाद् अत्र च वेदे शूद्राधिकारनिरूपणात् स्वामिपरतन्त्रेश्वरस्यापि वेदोऽत्र ब्राह्मणभाग एवेष्टः । अन्यथा ईश्वरस्य का शक्तिर्यत्-स्वाम्यनुसारं मन्त्रभागान-धिकृते शूद्रे मन्त्रभागाधिकारं दद्यात् । अन्यथा साकारत्वादिव निराकारत्वादपि रहितमीश्वरं कृत्वा तदस्तित्वमपि नाशयेत् स्वामी ।

अन्तिमो हेतुः स्वा. दयानन्दस्य ऋग्वेदादिभाष्यभूमिकायां वर्त्तते 'मनुष्यबुद्धिरचितत्वाच्चेति' ब्राह्मणभागस्याऽ-वेदत्वे परन्तु ब्राह्मणभागे का सा मनुष्यबुद्धिः, मन्त्रभागे च सा का न इति स्वामिना न साधितम् । तेनाऽयं हेतुः साध्यकोटिकोऽस्त एव हेत्वाभासः सिद्धः । एवं तदीयानां षण्णां हेतूनां सम्यगुपमर्द्दाद् ब्राह्मणभागस्यापि मन्त्रभागवद् वेदता स्पष्टं सिद्धा ।

यत्तु ऋग्वेदादिभिः सह वेदशब्दः संहिताशब्दो वा प्रयुज्यते न शतपथादिना, अत एव न ब्राह्मणभागो वेद इत्युच्यते, तदपि मन्दम् । अन्यथा ' आयुर्वेद—सर्पवेद—पिशाचवेद—पुराणवेद—सुश्रुतसंहिता चरकसंहिता-ऽत्रिसंहितादीनामपि वेदसंहितादिपदसध्रीचीनताकारणाद् एतेषामपि वेदता मन्तव्या स्याद् वादिभिः । मन्त्र भागे "तस्माद् यज्ञात् सर्वहुत ऋचः ' यजुः ३१ । ७ इत्यादौ ऋगादिनामभिः सह ' वेद ' शब्दप्रयोगाऽ-दर्शनात्, प्राचीनकाले च एकमेव ऋग्वेदयजुर्वेदसामवेदाथर्ववेदानां शाकल्य-माध्यन्दिनी ( वाजसनेयी ) कौथुमी—शौनकी—शाखानाम्ना ख्यातत्वेन ' वेद ' शब्दराहित्याद् मन्त्रभागस्यापि अवेदता मन्तव्या स्याद् । यदा खलु प्राचीनैर्मन्त्रभागवद् ब्राह्मणभागोऽपि ऋषिराख्यायते, वेदे उदाहर्त्तव्ये स उदाह्रियते, आम्नायत्वेन कीर्त्यते, तदा तस्य वेदता स्पष्टैव ।

स्वा० दयानन्दादिभिः प्रयुज्यमानो ब्राह्मणभागे ' भाग ' शब्द एव तस्य वेदत्वसाधकः । भागस्य भागी अवश्यं भवति । ब्राह्मणभागस्य भागी मन्त्रभागो नास्ति, यतः सोऽपि ' भाग ' शब्दवाच्यः । तेन मन्त्रभागो ब्राह्मणभागश्च--इत्युभौ भागौ सिद्धौ । भागी तु वेदः सिद्धः । अर्थाद्--इमौ भागौ सम्भूयैव वेदतां स्पृशतः । तेन यदि मन्त्रभागो वेद इत्यत्र वादिनामविवादः, तर्हि ब्राह्मणभागोऽपि वेद इति निर्विवादं सिद्धम् ।

अथ चैतत् प्रागुक्तं यत्--छान्दसकार्य्याणि यदा ब्राह्मणभागेऽपि भवन्ति; तदा स्पष्टमसौ वेदः सिद्धः । अत्र केचिदाचक्षते—छान्दसकार्य्याणि तु पाणिनिसूत्रेष्वप्युपलभ्यन्ते, पुराणेतिहासेष्वपि दृश्यन्ते, अत एव ' आर्षोऽयं प्रयोगः इति तत्र समाधीयते, एवं काव्येष्वपि दृश्यन्ते छान्दसप्रयोगाः; तथापि यथा पाणिनिसूत्राणि पुराणे-तिहासाश्च वेदनाम्ना नाख्यायन्ते किन्तु वेदाङ्गनाम्ना; तथा ब्राह्मणभागेऽपि ' आर्षा इमे प्रयोगाः ' इति समाधाय तेषां लौकिकताऽभिमतिरेव ज्यायसी । आम्—तदीयवेदाऽङ्गताऽङ्गीकारे नास्माकमापत्तिरिति, अत्रोच्यते—

पाणिन्यादिसूत्राणां कृते तु ' छन्दोवत् सूत्राणि भवन्ति ' इति परिभाषा निबद्धा वर्त्तते तदीयातिदेशिक च्छन्दस्त्वमात्रनिरूपणेन क्वचित् छान्दसकार्य्याणि विधातुम्, एवं ' छन्दोवत् कवयः कुर्वन्ति ' इति पुराणेति हासादीनामपि कृते भाष्यकारैरिष्टिर्विद्यते, अत एव नेमे वेदा इति स्पष्टीभूतम् । परं ' छन्दोवत् सूत्राणि भवन्ति ' ' छन्दोवत् कवयः कुर्वन्ति ' इतीव ' छन्दोवद् ब्राह्मणानि भवन्ति ' इति क्वापि परिभाष्य तेषामातिदेशिकं छन्दस्त्वं नाऽमानि. किन्तु साक्षादेव स भागो वेदो मतः । तदीयाऽऽतिदेशिकच्छन्दस्त्ववचनस्य क्वचिदपि अप्राप्तत्वाद्, क्वापि वा नद्यादिसञ्ज्ञावत् तत्कृते सञ्ज्ञासूत्रस्य परिभाषासूत्रस्य वाऽप्रणयनाद् ब्राह्मणभागः स्पष्टं वेदः सिद्धः । तस्मिन्नितिहासपुराणादिवत् क्वाचित्का न सन्ति छान्दसप्रयोगाः, किन्तु ' मन्त्रे ' इति विहाय ' छन्दसि निगमे ' इत्यादिना विहितास्सर्वे एव वैदिकादेशास्तस्मिन्नादिश्यन्ते दृश्यन्ते च । प्रत्युत ' मन्त्रे घस ह्वर ' २ । ४ । ८० इति च्लिविधायकसूत्रस्य मन्त्रविषयत्वेऽपि एतत्सूत्रस्थजनधातोरुदाहरणे मन्त्रोपलक्षणेन ' अज्ञत वा अस्य दन्ताः ' इति ब्राह्मणोदाहरणमपि स्वीकृतम् । तर्हि कः कथयितुमीष्टे विना पक्षपातोपनेत्र-धारिणं यद्–ब्राह्मणभागे स्तुत्या वेदशब्दप्रयोगः ? । तेन स्पष्टं यद्- ब्राह्मणभागे वेदत्वव्यवहारो नाऽविकार्थे वचनरूपोऽर्थवादः, नचापि वा पारिभाषिकः, नापि वा पारिषदकृतिः, न चाप्येकदेशिकः, किन्तु मन्त्रभागस्य वेदत्वव्यवहारेणैव सध्रीचीनः, प्राचीनः, सार्व्वत्रिको वास्तविकश्च ।

यत्तु खलु स्वा. दयानन्देन तदनुयायिभिर्वा ब्राह्मणभागस्याऽवेदत्वे प्रयत्नः कृतः क्रियते च, तस्य मूलकारण-मेतद् यद्-ब्राह्मणभागेन सनातनधर्म्मस्य बहव एव सिद्धान्ताः सिध्यन्ति । तेषां वैदिकता मा भूदिति वेदमार्ग-सङ्कोचनार्थं सनातनधर्मविद्विषा ( शत्रुणा ) तेन ब्राह्मणभागस्याऽवेदत्वसाधने पराक्रान्तम्, नान्यत् किमपि कारणान्तरम् । तेन ' स्वार्थी दोषान् न पश्यति ' इति तेनाऽनुपपत्तयो दृष्टा अपि न दृष्टाः । अस्माभिस्तद्विवरणं विज्ञपाठकानां समक्षं स्थापितमेव । आशास्यते—तैः प्रणिधानेन तत्र विचारे कृते स्वयमेव ब्राह्मणभागस्य वेदता मन्येत । अन्यथा तैर्ज्ञेयं यद्–ब्राह्मणभागस्य वेदत्वाऽभावे मते सन्ध्याशिखायज्ञोपवीतादिविविधविधीनां मन्त्रभागे स्पष्टतयाऽवर्ण्णनात् तेषामवैदिकतैव मन्तुमापतेत; तदा चैतावत्प्रयोजनानां तृतीयजनानां स्वार्थसिद्धिरस्मदीय-प्राचीनधर्म्मस्य च महिष्ठा क्षतिर्भवेद्—इति किं बहुना ।

स एव वेदस्तस्यापि शतपथब्राह्मणं सायणभाष्यसंवलितं नासिकवास्तव्यैः ' वारे ' पं० श्रीधर अण्णा-शास्त्रिभिः प्रयत्नेन सम्पादितं पाठकानां करकमले समुपस्थाप्यते । ते चेदं प्राप्य प्रसीदन्तुतमामित्युदीर्य्याऽत्र विरम्यते । अधिकमेतद्विषये दिदृक्षवो मत्प्रणीतग्रन्थं ' श्रीसनातनधर्म्मालोकं ' पश्यन्तु ।

निवेदकः—

मुलतानसिटी.
८–८–३९.

**दीनानाथशर्म्मा शास्त्री सारस्वतः,**
**शुजाबादाभिजनः,**
सनातनधर्म्मसंस्कृतकालेजोपाध्यायः ।

# अथ ब्रह्मसंप्रदाय [परंपरा] द्योतकः (१)

## वंशपटः *




---

* अस्मिन्वंशपटे एकः पुत्रवंशोऽपरो विद्यावंशः, तद्वंशद्वयानुक्रमेण च शाखाप्रवर्तनं सम्पन्नमिति ॥

+ ब्रह्माणमारभ्य व्यासपर्यन्तं पुत्रपरम्परया वेदप्रवृत्तिः ॥

× एते च पैलादयो व्यासशिष्याः । एतदादितः शिष्यपरम्परया शाखाप्रवृत्तिर्जाता ॥

# ब्रह्मसंप्रदाय ऋग्वेदवंशपटः ।






---

* एतल्लक्ष्मवती शाखाऽऽदित्यसम्प्रदायिनी, तदितरा लक्ष्मवर्जिताः सर्वाः शाखा ब्रह्मसम्प्रदायगता इति ज्ञेयम् ॥

# ब्रह्मसंप्रदायगतः कृष्णयजुर्वेदशाखापटः ॥



१ वैशंपायनः
२ लौहित्यः
३ शावधः
४ पलांडुः
५ आलंबिः
६ कलिंगः ( पलः )
७ कमलाहः
८ ऋचाभः
९ आरुणिः
१० तंडी
११ श्यामायनः
१२ कठः
१३ कलापः
१४ चुलभिः
१५ सुमतिः
१६ देववरः
१७ अनुकृष्णः
१८ आयुः
१९ अनुभूमिः
२० आप्रीतः
२१ कशाश्वः
२२ सुनूलिः
२३ बाष्कलिः
२४ शुकः
२५ लौकिः
२६ भूरिश्रवाः
२७ सोमाविः
२८ आतुनांतक्यः
२९ धौम्यः
३० काश्यपः
३१ औल्यः
३२ इलकः
३३ उपमन्युः

३४ विदः
३५ भार्गवः
३६ मधुकः
३७ पिंगः
३८ श्वेतकेतुः
३९ प्रजादर्पः
४० कहोडः
४१ याज्ञवल्क्यः
४२ शौनकः
४३ आनंगः
४४ उनिरः
४५ तालः
४६ यास्कः ( पैंगिः )
४७ खांडायनः कठांतेवासी
४८ पिंजुलकठः क्रौंचद्वीपे
४९ औदलकठः शाकद्वीपे
५० सपिच्छवकठः ”
५१ मुद्गलकठः काश्मीरदेशे
५२ शृंगलकठः सृजदेशे
५३ सौभरकठः सिंहलदेशे
५४ मौरसकठः कुशद्वीपे
५५ चुचुककठः यवनदेशे
५६ योगकठः ”
५७ हापिलकठः ”
५८ दौसलकठः सिंहलदेशे
५९ धौषकठः क्रौंचद्वीपे
६० जूंभककठः श्वेतद्वीपे
४८–६० इति त्रयोदश कठाः वेदवृक्षपटे ।
६१ चरकः
६२ आह्वरकः
६३ भ्राजिष्ठवकठः
भृष्ठकपिष्ठलकठः

६४ प्राच्यकठः
६५ कापिष्ठलकठः
६६ वारायणः
६७ चारायणः
६८ श्वेतः
६९ श्वेताश्वतरः ( उपमन्युः )
७० पातांडिः
७१ मैत्रेयः
६१–७१ इति चरणव्यूहे चरकाणां द्वादश भेदाः ।
७२ मनुः
७३ वराहः
७४ दुंदुभिः
७५ एकिः
७६ हरिद्रुः
७७ श्यामः
श्यामायनः
७२–७७ इति चरणव्यूहे मैत्रायणीयानां सप्त भेदाः ।
७८ हारिद्रुणः
७९ छगलिः
८० तुंबुरुः
८१ उलुपिः
७८–८१ इति कलापानां चत्वारो भेदाः पातञ्जलमहाभाष्ये तत्त्वबोधिन्यां च
८२ आसुरिः
८३ गर्गः
८४ शर्कराक्षः
८५ मृगः
८६ वसवः
८२–८६ इति हारिद्रुणविणां पंच भेदाः चरणव्यूहे ।

# ब्रह्मसंप्रदायगतः सामवेदशाखावंशपटः ।




÷ सम्प्रदायद्वयेऽप्येतावतीनां शाखानां नामान्युपलब्धानि । एषु काश्चन विद्यमानाः काश्चन नाममात्रावशिष्टाः ॥

* एतल्लक्ष्मांकिता ऋषिपुत्राः । ऽऽ निरंका निश्चिह्नास्तत्तच्छाखाध्येतारः शिष्यभूता ऋषयः, न तु शाखाप्रवर्तकाः । + एतच्चिह्नांकिताः शाखाः आदित्यसम्प्रदायिन्यस्तदितरा ब्रह्मसम्प्रदायिन्य इति ज्ञेयम् ।

# ब्रह्मसंप्रदायगतोऽथर्ववेदशाखा—

## वंशपटः



- सुमंतुः
  - कबंधः
    - पथ्यः
      - ॥ जाजलिः
      - ॥ कुमुदादिः
      - ॥ शौनकः
        - ॥ बभ्रुः
        - ॥ सैंधवायनः
          - ॥ मुंजकेशः ×
    - वेदस्पर्शः
      - मोदः
      - ब्रह्मबलः
      - पिप्पलादः
      - शौकायनिस्तपनः

---

॥ एतल्लक्ष्म यस्य नाम्न आदौ वर्तते सा तत्प्रवर्तिता शाखाऽऽदित्यसम्प्रदायांतर्गतेति बोध्यम् । तदितराः शाखा ब्रह्मसम्प्रदायान्तर्गता बोद्धव्याः ॥

×—मुंजकेशस्य संहिता द्विप्रकारा । एका संहितेति प्रसिद्धा । अन्या नक्षत्रकल्पः, वैतानकल्पः, अंगिराकल्पः, शान्तिकल्पः, इति कल्पचतुष्टयत्वेन प्रसिद्धा ॥

# आदित्यसंप्रदाय [ परंपरा ] द्योतक:

## वंशपटः । (६)

आदित्यः

|

योगीश्वर–याज्ञवल्क्यः

|

| शांखायनः | कण्वमाध्यंदिनादिः | सामश्रवाः [ कौथुमः ] | शौनकप्रभृतिः |
|---|---|---|---|
| ऋग्वेदी. | यजुर्वेदी. | सामवेदी. | अथर्ववेदी. |

# आदित्यसंप्रदाय ऋग्वेदवंशपटः । (७)

योगीश्वर–याज्ञवल्क्यः

|

( शांखायनः कौषीतकी )

# आदित्यसंप्रदायगतः शुक्लयजुर्वेदपंचदशशाखा-वंशपटः । (८)

योगीश्वरयाज्ञवल्क्यः

| शाखा | |
|---|---|
| १ जाबालाः | नार्मदाः वैदर्भदेशे ( वऱ्हाडप्रांते ) । |
| २ बौधेयाः | रणावटाः दक्षिणे देशे आभीरे गुर्जरे ( ओंझा ) । |
| * ३ कण्वाः | क्वचित्कर्णावटा इत्यपि ख्याताः कर्णाटके द्राविडे महाराष्ट्रे |
| ४ माध्यंदिनाः | प्रायः सर्वत्र ( उत्तरप्रदेशे शरयूपारीणा इति ) श्रुताः । |
| ५ शापेयाः | नागराः गुर्जरदेशे । |
| ६ तापायनीयाः | नारमदवाः नर्मदातीरे ( नेमाडप्रांते ) । |
| ७ कपोलाः | भृगुगौडाः गुर्जरदेशे ( भगोरा, भार्गव इति ) श्रुताः । |
| * ८ पौंड्रवत्साः | त्रिवाडीमेवाडा इति ख्याता गुर्जरदेशे । |
| ९ आवटिकाः | श्रीमाळवी इति ख्याता गुर्जरदेशे । |
| १० परमावटिकाः | आद्यगौडाः मरुदेशे ( मारवाडप्रांते ) । |
| ११ पाराशराः | गुर्जरदेशे मरुदेशे च प्रसिद्धाः । |
| * १२ वैनधेयाः | कंकराः बौध्यपर्वते । |
| १३ गालवाः | माळवी इति ख्याताः वैदर्भे सौराष्ट्रे च ( काठीयावाडप्रांते ) । |
| १४ कात्यायनाः | कास्ताः वैदर्भे नर्मदासंगमे महाराष्ट्रे च । |
| १५ बैजवापाः | नारायणसरोवरप्रदेशे ( काठीयावाडप्रांते ) । |

---

* एतल्लक्ष्मलक्षिताः शाखाः कण्वसमाम्नायानुगास्ततोऽन्या माध्यन्दिनसमाम्नायानुगाश्चेति विज्ञेयम् ।

# आदित्यसंप्रदायगतः सामवेदशाखा--

## ❀ वंशपटः । (९)

- योगीश्वर–याज्ञवल्क्यः
  - ✱ सामश्रवाः कुथुमिः
    - रसपारसः
    - पाराशरः
      - आसुरायणः
        - वैशाखी
          - प्राचीनयोगपुत्रः पतंजलिः
            - लांगलिः
              - भालुकिः
              - कामहानिः
              - शालिहोत्रः
                - कंडः
                - कोलहः
              - जैमिनिः
              - लोभगामी
    - भागवित्तिः
    - तेजस्वी

---

× एतस्मिन्वंशपटे निर्दिष्टशाखास्वपि बह्व्यः शाखा अनुपलब्धाः सन्ति ।

✱ इमौ न भिन्नव्यक्ती किंतु एकैव व्यक्तिः । सामश्रवा इत्येतन्नाम बृहदारण्यकोपनिषदि समागतम्, कुथुमिनाम्न उल्लेखस्तथा कियान्कथांशः स्कांदे नागरखण्डे समागतः ।

# आदित्यसंप्रदायगतोऽथर्ववेदशाखा--

## वंशपटः । (१०)

- योगीश्वर–याज्ञवल्क्यः
  - शौनकः
    - कुमुदादिः
    - जाजलिः–जाबालः
    - सैंधवायनः
      - × मुंजकेशः
    - बभ्रुः

---

✱ मुंजकेशस्य संहिता द्विप्रकारा । एका संहिता इति प्रसिद्धा । अन्या नक्षत्रकल्पः वैतानकल्पः, अंगिराकल्पः, शान्तिकल्पः इति कल्पचतुष्टयत्वेन प्रसिद्धा इति ज्ञेयम् ॥

श्रीशः शरणम् ।

# दर्शपूर्णमासादियज्ञोपयुक्तपात्राणि ।

**यज्ञभाजनानि यथोक्तानि कात्यायनसूत्रे–" वैकङ्कतानि पात्राणि खादिरः स्रुवः स्फ्यश्च पालाशी जुहूर्भवति ( आश्वत्थ्युपभृत् ) वारणान्यहोमसंयुक्तानि बाहुमात्र्यः स्रुचः पाणिमात्रपुष्करास्त्वग्बिला हंसमुखप्रसेका मूलदण्डा भवन्त्यरत्निमात्रः स्रुवोऽङ्गुष्ठपर्ववृत्तपुष्करः स्फ्योऽस्याकृतिरादर्शाकृतिः प्राशित्रहरणं चमसाकृति वा ॥"**

**यथा–उलूखलमुसलकूर्चेडापात्रीपिष्टपात्रीपुरोडाशपात्रीशम्याग्रृतावदानाभ्र्युपवेषान्तर्धानकटप्राशित्रहरणषडवत्तब्रह्मयजमानासनहोतृषदनादीनि, एतानि वारणान्यहोमसंयुक्तानि । होमसंयुक्तानि तु वैकङ्कतादीनि भवन्ति ॥**

आज्यस्थाली. चरुस्थाली. पुरोडाशपात्री. प्रणीता.






**आज्यस्थाल्यादीनामाकृतयः–**" आज्यस्थाली तैजसी वा मृन्मयी वा प्रकीर्तिता । द्वादशाङ्गुलविस्तीर्णा प्रादेशोच्चा शुभा स्मृता ॥ आज्यस्थालीसमानैव चरुस्थाली प्रशस्यते ॥ पुरोडाशस्य पात्री तु चतुरस्रा समानतः । खातेन वर्तुलेनैव युता यज्ञे प्रशस्यते ॥ प्रणीता वारणा[1] ग्राह्या द्वादशाङ्गुलसंमिता । खातेन हस्ततलवदाकृत्या पद्मपत्रवत् ॥

जुहूः स्रुक् उपभृत्स्रुक् ध्रुवास्रुक् पुष्करस्रुक् अग्निहोत्रहवनी वैकंकतः स्रुवः








खादिरो बाहुमात्रस्तु जुहूस्रुक्संज्ञकः स्रुवः । अरत्निमात्रो हंसास्यो वर्तुलोऽङ्गुष्ठपर्ववत् । अर्धपर्वप्रणाल्या च युक्तो नासाकृतिर्भवेत् ॥ उपभृत्स्रुक् ध्रुवा स्रुक् च पुष्करस्रुक् तथैव च । अग्निहोत्रस्य हवनी तथा वैकङ्कतः स्रुवः ॥ एते चान्ये च बहवः स्रुवभेदाः प्रकीर्तिताः । वर्तुलास्याः शङ्कुमुखाः पर्वखाताः समानकाः ॥

---

1–वारणा, वरणवृक्षकाष्ठनिर्मिता ।

## यज्ञपात्राणि ।

उलूखलम्  मुसलम्  शूर्पम्  शम्या  स्फ्यः



उलूखलं च मुसलं स्वायते सुदृढे तथा । इच्छाप्रमाणे भवतः शूर्पं वैणवमेव च ॥ अन्यच्च—" खादिरं मुसलं कार्यं पालाशः स्यादुलूखलः । यद्वोभौ वारणौ कार्यौ तदभावेऽन्यवृक्षजौ ॥ " शम्या प्रादेशमात्रा स्यात्खादिरः स्फ्यः प्रकीर्तितः । खड्गाकारोऽरत्निमात्रो वज्ररूपो मखे स्मृतः ॥

श्रृतावदानम्.  उपवेषः.  मकराकारकूर्चः.  दृषत्.  उपलः.



अंगुष्ठपर्वमात्रं तु तीक्ष्णाग्रं पृथुवक्रकम् । शृतावदानं प्रादेशमात्रं दीर्घमुदाहृतम् ॥ उपवेषोऽरत्निमात्रो हस्ताकारस्तु खादिरः । कौशः कूर्चो बाहुमात्रो मकराकार उच्यते । इच्छाप्रमाणा तु दृषत्प्रोक्ता पाषाणसंभवा । उपलो वर्तुलः प्रोक्तो वितस्तिपरिमाणकः ॥

षडवत्तम्.  अग्निः.  अधरारणिः.  उत्तरारणिः  चात्रम्.  ओविली.



षडंगुलप्रमाणं तु षडवत्तं युगात्मकम् । तथा चोभयतःखातं वारणं तत्प्रचक्षते ॥ अग्निस्तीक्ष्णमुखा ज्ञेया खादिराऽरत्निसंमिता । अश्वत्थो यः शमीगर्भः प्रशस्तोर्वीसमुद्भवः ॥ तस्य या प्राङ्मुखी शाखा उदीची चोर्ध्वगाऽपि वा । अरणिस्तन्मयी प्रोक्ता तन्मध्ये चोत्तरारणिः ॥ संसक्तमूलो यः शम्याः स शमीगर्भ उच्यते ॥ अलाभे त्वशमीगर्भादाहरेदविलम्बितः । चतुर्विंशतिरंगुष्ठैर्दैर्घ्यं षडपि पार्थिवम् ॥ चत्वार उच्छ्रये मानमरण्योः परिकीर्तितम् । सारवदारवं चात्रमोविली च प्रशस्यते ॥

प्रमन्थः



नेत्रम् अथवा रज्जुः.



अष्टांगुलः प्रमन्थः स्यान्नेत्रं स्याद्द्वादशांगुलम् । ओविली द्वादशैव स्यादेतन्मन्थनयन्त्रकम् । अंगुष्ठांगुलमानं तु यत्र यत्रोपदिश्यते ॥ तत्र तत्र बृहत्पर्वग्रन्थिभिर्मिनुयात्सदा ॥ गोवालैः शणसंमिश्रैस्त्रिवृत्तममलात्मकम् । व्यामप्रमाणं नेत्रं स्यात्प्रमथ्यस्तेन पावकः ॥ मूर्धाक्षिकर्णवक्त्राणि कन्धरा चापि पञ्चमी । अंगुष्ठमात्राण्येतानि द्व्यगुंष्ठं वक्ष उच्यते ॥ अंगुष्ठमात्रं हृदयं त्र्यंगुष्ठमुदरं स्मृतम् । एकांगुष्ठा कटिर्ज्ञेया द्वौ बस्तौ द्वौ च गुह्यकम् ॥ ऊरू जङ्घे च पादौ च चतुस्त्र्येकैर्यथाक्रमम् । अरण्यवयवा ह्येते याज्ञिकैः परिकीर्तिताः ॥ यत्तद्गुह्यमिति प्रोक्तं देवयोनिस्तु सोच्यते । अस्यां यो जायते वह्निः स कल्याणकृदुच्यते ॥

अन्तर्धानकटः



हविर्धानपात्री.



प्राशित्रहरणम्.



चमसः.



इडापात्री.



अन्तर्धानकटः प्रोक्तो द्वादशांगुलसंमितः । अर्धचन्द्रसमाकारः किञ्चिदुच्छ्रितशीर्षकः ॥ प्रोक्ता हविर्धानपात्री विपुला द्वादशांगुला । पिष्टपात्री च सैवोक्ता चतुरस्रा प्रकीर्तिता ॥ प्राशित्रहरणं चान्यत्कीर्तितं द्वादशांगुलम् । चमसानां तु वक्ष्यामि दण्डाः स्युश्चतुरंगुलाः ॥ त्र्यंगुलस्तु भवेत्स्कन्धो विस्तारश्चतुरंगुलः । पलाशाद्वा वटाद्वाऽन्यवृक्षाद्वा चमसाः स्मृताः ॥ इडापात्री तथा चान्याऽरत्निमात्रा प्रकीर्तिता ॥

यजमानासनम्.



पत्न्यासनम्.



होत्रासनम्.



ब्रह्मासनम्.



यजमानासनं पत्न्या आसनं च पृथक्पृथक् ॥ होत्रासनं तथा ब्रह्मासनं विस्तारयोगतः । अरत्निमात्राण्येतानि कथितानि मनीषिभिः ॥

यजमानपात्री.



पत्नीपात्री.



कृष्णाजिनम्.



यजमानस्य पात्री च पत्नीपात्री तथैव च । मखे कृष्णाजिनं ग्राह्यं तदखण्डं विशिष्यते ॥ "

इति यज्ञपात्राणि ॥

---

## अथ माध्यन्दिनशतपथब्राह्मणस्य-अध्ययनोपक्रमः ।

अस्य श्रीमध्यन्दिनशतपथब्राह्मणस्य, योगीश्वरो याज्ञवल्क्यः श्रुतर्षिः, सर्वं यजुः क्वचिदन्तराऽन्तरोद्धृतानि गायत्र्यादीनि छन्दांसि, भगवांस्त्रयीमय आदित्यो देवता, अपूर्ववेदस्वीकरणादिपञ्चविधस्वाध्यायाध्ययने, विनियोगः ।

हरिः + ॐ ३ ।

❀ भूर्भुवः स्वः । तत्सवितुर्वरेण्यम्भर्गो देवस्य धीमहि ।
धियो यो नः प्रचोदयात् ॥ १ ॥

---

१–" आदित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते " ( श. प. १४ । ९ । ४ । ३३ ) इति श्रुतेः । " सौराणि ब्राह्मणानि च " इत्यादिसर्वानुक्रमसूत्राच्च ॥

+ " प्रणवं प्राक्प्रयुञ्जीत व्याहृतीस्तदनन्तरम् । सावित्रीं चानुपूर्व्येण ततो वेदादिमारभेत् " इति याज्ञवल्क्यशिक्षावचनात् ॥

* अभ्यासार्थे द्रुतां वृत्तिं प्रयोगार्थे तु मध्यमाम् । शिष्याणामुपदेशार्थं कुर्याद्वृत्तिं विलम्बिताम् " इति । इत्यपि विशेषो धर्मोऽत्र याज्ञवल्क्यशिक्षावचनाद्बोध्यः । अन्यन्नियमजातं तत्रैव याज्ञवल्क्यशिक्षायां द्रष्टव्यम् ॥

श्रीशः शरणम् ।

# अथ माध्यन्दिनशतपथब्राह्मणस्य विषयानुक्रमणिका ।

## प्रथमे हविर्यज्ञकाण्डे दर्शपूर्णमासयागः ।

इति सप्तमोऽध्यायः।

## अथ अष्टमोऽध्यायः।

इति प्रथमे हविर्यज्ञकाण्डं दर्शपूर्णमासयागः।

# अथ द्वितीय एकपादिकाकाण्डे—

## अग्न्याधानम् ।

श्रीशः शरणम्।

# माध्यन्दिनशतपथब्राह्मणगतविशिष्टनाम्नाम्

## अकाराद्यनुक्रमेण सूची।

### प्रथमकाण्डे-

| नामानि | अ. ब्रा. क. |
|---|---|
| अग्निः ( देवानां दूतः ) | ४ । १ । ३४ |
| अत्रिः ( ऋषिः ) | ४ । ५ । १३ |
| अररुः ( असुरविशेषः ) | २।४।१७-१८ |
| अर्वावसुः ( देवानां होता ) | ५ । १ । २४ |
| आकुलिः ( असुरपुरोहितः ) | १ । ४ । १६ |
| आप्त्याः | २ । २ । १८ |
| आरुणिः | १ । ३ । ११ |
| आषाढः सावयसः | १ । १ । ७ |
| आसुरिः | ६ । ३ । २६ |
| इडः | ५।३।११, ४।३ |
| ऋषभः | १ । ४ । १४ |
| औपोदितेयः ( वैयाघ्रपद्यः ) | ९ । ३ । १६ |
| कः ( ब्रह्मा ) | १ । १ । १३ |
| किलातः ( असुरपुरोहितः ) | १।४।१४-१६ |
| कुरुः पाञ्चालः ( देशविशेषः ) | ७ । २ । ८ |
| गोतमः राहूगणः | ४ । १ । १० |
| जातवेदाः | ४ । २ । १७ |
| तनूनपात् | ५।३।८ इत्यादि ५।४।२ |
| त्रितो द्वित एकतश्च. | २ । ३ । १ |
| दनायूः | ६ । ३ । ९ |
| दनुः | ६ । ३ । ९ |
| दर्शपूर्ण[illegible] | १ । १ । ० |
| दानवः ( वृत्रासुरः ) | ६ । ३ । ९ |
| द्यावापृथिवी | ८।१।२९,८।३।१२ ७९।१।४ |
| नराशंसः | ५।१।२०, ८।२।१२ |
| परावसुः | ५ । १ । २३ |
| [illegible] ऋषिः | २ । ५ । ९ |
| बर्कुर्वार्ष्णिः ऋषिः | १ । १ । १० |
| भगः | ७ । ४ । ६ |
| भवः ( रुद्रः—अग्निः ) | ७ । ३ । ८ |
| भाल्लवेयः ( इन्द्रद्युम्नो राजा ) | ७ । ३ । १९ |
| भृगुः ( अङ्गिराः ) | २ । १ । १३ |
| मनावी ( मनुपत्नी | १ । ४ । १६ |
| मनुः | १।४।१४ इत्यादि ८।१।८ |
| महेन्द्रः | ६ । ४ । २१ |
| मातरिश्वा | ७ । १ । ११ |
| याज्ञवल्क्यः | १।१।९, ३।१।२१—२६, ९।३।१६ |
| रक्षः | १ । १ । १६ |
| राहूगणः ( गोतमः ) | ४ । १ । १० |
| वामदेव्यं ( सामविशेषः ) | ८ । १ । १९ |
| वास्तव्यः ( रुद्रः ) | ७ । ३ । १ |
| विदेघो माथवः ( राजा ) | ४।१।१० इत्यादि. |
| विश्वरूपः ( त्वष्टुः पुत्रस्त्रिशीर्षा ) | २।३।२, १।६।३ |
| शंयुः शम्युर्वा ( बृहस्पतेः पुत्रः ) | ९।१।२४—२९ |
| शर्वः ( रुद्रः ) | ७ । ३ । ८ |
| सहरक्षाः ( असुराणां दूतः ) | ४ । १ । ३४ |
| हिरण्यस्तूपः ( आङ्गिरसः ) | ६ । ४ । २ |

### द्वितीयकाण्डे-

| नामानि | अ. ब्रा. क. |
|---|---|
| अनश्नन् ( साङ्गमनः सभ्याग्निः ) | ३ । २ । १ |
| अर्जुनी ( फल्गुनीनक्षत्रम् ) | १ । २ । ११ |
| अरुणः ( औपवेशिर्गोतमः ) | १ । २ । २० |
| असत्पांसवः ( भस्मोद्वापः ) | ३ । २ । १ |
| आग्रयणेष्टिः ( यागविशेषः ) | ४ । ३ । १ |
| आसुरिः | १।४।२७, ६।१।९ |
| उक्थ्यम् ( महदुक्थ्यम् ) | ३ । ३ । २० |
| औपवेशिः ( अरुणो गोतमः ) | २ । २ । २० |
| करीराणि ( फलविशेषाः ) | ५ । २ । ११ |
| कहोडः ( कौषीतकी ) ऋषिः | ४ । ३ । १ |
| कुरवः ( देशविशेषाः ) | ४ । ४ । ५ |

## श. प. ब्रा. विशिष्टनाम्नां सूची ।



इति विशिष्टनाम्नां सूची ।



ॐ

श्रीमद्वाजसनेयिमाध्यन्दिन-

# शतपथब्राह्मणम् ।

सायणभाष्यसमेतम् ।

तत्र

## प्रथमं काण्डम् १ ।

तत्र

( सप्तमाध्यायस्य चतुर्थब्राह्मणादाकाण्डान्तं
हरिस्वामिभाष्यसंवलितम् । )

ॐ

## श्रीशुक्लयजुर्वेदमाध्यन्दिनकल्पतरुः ।

सन्मूलो यजुराख्यवेदविटपी
जीयात्स माध्यन्दिनी,
शाखा यत्र [१४]युगेन्दुकाण्डसहिता
यत्रास्ति सा संहिता ॥
यत्रा[४०]भ्राब्धिलता भवन्ति शरशै-
लाङ्के[१९७५]न्दुभी ऋग्दलैः,
[१०५२५]पञ्चद्वीषुनभोऽङ्कवर्णमधुपैः
[१२३०]खाग्न्यर्कगुंगुञ्जितैः ॥ १ ॥

इति कल्पतरौ ।

ॐ

# अथ सायणाचार्यकृत-वेदार्थप्रकाशाख्यभाष्य-सहितं

## माध्यन्दिन-

# शतपथ-ब्राह्मणम् ।

॥ श्रीगणेशाय नमः ॥ श्रीपरब्रह्मणे नमः ॥

### सायणभाष्यम् । *

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे । यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥१॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ २ ॥
तत्कटाक्षेण तद्रूपं दधतो बुक्कभूपतेः । कृतावतरणः क्षीरसागरादिव चन्द्रमाः ॥ ३ ॥
विजितारातिव्रातो वीरः श्रीहरिहरः क्षमाधीशः । धर्मब्रह्माध्वन्यः समादिशत्सायणाचार्यम् ॥४॥
ऋग्यजुःसामशाखानामेकैका व्याकृता त्वया । तावता तत्समानार्था ज्ञातुं शक्यास्ततः पराः ॥५॥
वासना विशदा यत्र मन्त्रार्थानामशेषतः । प्रायेणाध्वर्यवं कर्म पूर्णं शाखान्तरैर्विना ॥ ६ ॥
करामलकवद्यत्र परं तत्त्वं प्रकाशितम् । या काचित्तादृशी शाखा त्वया व्याख्यायतामिति ॥७॥
सर्वतः सायणाचार्यो विमृश्योदीरितान् गुणान् । माध्यन्दिने शतपथे ब्राह्मणे व्याकरोति तत् ॥८॥
संचारः पदवाक्यार्थन्यायानां दर्शितः पुरा । वेदानामर्थवत्त्वादि यच्चान्यदुपयुज्यते ॥
सर्वशाखासमत्वेन विज्ञेयं तदिहाखिलम् ॥ ९ ॥ यच्च संदिग्धमज्ञातमत्र तद्विवरिष्यते ।
संमत्या कल्पसूत्राणां ब्राह्मणानां च संग्रहात् ॥ १० ॥

इह हि चरमे चतुर्दशे काण्डे करतलामलकवत् परतत्त्वं प्रकाशितम् । ततः प्राक्तनैश्च त्रयोदशभिः काण्डैस्त्रेताग्निसाध्यो धर्मः प्राधान्येन प्रतिपादितः । अग्नयश्चाधानपवमानेष्टिभिर्निष्पाद्याः । पवमानेष्टयश्च दर्शपूर्णमासविकृतितया तदधिगमसापेक्षज्ञाना इति प्रथमे काण्डे दर्शपूर्णमासौ प्रतिपाद्येते । तदनुष्ठानारम्भश्च पूर्णमासपूर्वकः; अतश्च तस्य पूर्णमासस्य प्रथमं यदङ्गं व्रतोपायनं[4], तदङ्गत्वेनापामुपस्पर्शनं विधत्ते—

---

* क्वचित्पुस्तके एतदनन्तरमेष श्लोकोऽधिकः—" श्रुतिपङ्कजार्थलक्ष्मीं यो विकासयति हृद्गतः । स पायात्सच्चिदानन्दः सूर्यमण्डलगो हरिः " इति । १–अर्थवशादत्र षड्भिः पादैरेकः श्लोकः पूर्यते । २–बृहदारण्यकोपनिषदि । ३–गार्हपत्याहवनीयदक्षिणाग्नयस्त्रेतेति समाख्यायन्ते । तथा चामरकोषः—" दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नयः । अग्नित्रयमिदं त्रेता प्रणीतः संस्कृतोऽनलः"—इति । २. ७. २० । "त्रेता त्वग्नित्रये" इति च तत्रैव ३.३.६८ । ४–व्रतोपायनं=व्रतग्रहणं । व्रतशब्देन कर्माङ्गभूताः शास्त्रतो नियमा उच्यन्ते । " कर्माङ्गभूतयमनियमा व्रतम्। तदुपगमार्थो " ऽग्ने व्रतपते " इत्ययं मन्त्रः" इत्युक्तं तन्त्ररत्ने इति ( का. २. १. ११. सू. वृ. ) । तच्च दर्शपौर्णमासयोरग्न्यन्वाधानानन्तरं भवति पशौ तु ब्रह्मवरणानन्तरमिति विशेषः । विहितश्चैतत्कात्यायनेन " अपराह्णे व्रतोपायनीयमश्नीतः सर्पिषा सुहितौ " इत्यादिसूत्रद्वयेन ( २. १. १०. ११ ) अस्मिन्नेव सूत्रभाष्ये कर्कस्त्वेवमाह—" व्रतोपायनीयमिति । व्रतं भोजनमुच्यते यथाऽन्यत्र तद्व्रतः स्यात् । पयोव्रतमिति च । तद्येनोपेयते अमाषादिना तद्व्रतोपायनीयम् " इति ॥

# प्रथमे काण्डे प्रथमः प्रपाठकः ।

## प्रथमोऽध्यायः प्रारभ्यते ।

### तत्र प्रथमं ब्राह्मणम् ।

हरिः॑ ओ३म् । व्र॒तमु॑पै॒ष्यन् । (व्र॒) अ॒न्त॒रे॒णा॒ह॒व॒नी॒यञ्च॒ गार्ह॑पत्यञ्च॒ प्राङ् ति॒ष्ठ॒न्नप॒ऽउ॒प॒स्पृ॒श॒ति त॒द्यदप॒ऽ उ॒प॒स्पृ॒श॒त्य॒मे॒ध्यो वै पु॒रु॒षो य॒द॒नृ॒तं व॒द॒ति ते॒न पू॒ति॒र॒न्त॒र॒तो मे॒ध्या वा॒ऽ आपो॑ मे॒ध्यो भू॒त्वा व्र॒त॒मु॒पा॒या॒नी॒ति प॒वि॒त्रं वा ऽआपः॑ प॒वि॒त्र॒पू॒तो व्र॒त॒मु॒पा॒या॒नी॒ति त॒स्मा॒द्वा॒ऽअप॒ऽ उ॒प॒स्पृ॒श॒ति ॥ १ ॥

---

## ऋजुपाठः ।

### अथ दर्शपूर्णमासप्रारम्भः ।

#### व्रतोपायनम् ।

व्रतमुपैष्यन्नन्तरेणाहवनीयं च गार्हपत्यं च प्राङ् तिष्ठन्नप उपस्पृशति । तद्यदप उपस्पृशति । अमेध्यो वै पुरुषो यदनृतं वदति, तेन पूतिरन्तरतः । मेध्या वा आपः । मेध्यो भूत्वा व्रतमुपायानीति । पवित्रं वा आपः । पवित्रपूतो व्रतमुपायानीति । तस्माद्वा अप उपस्पृशति ॥ १ ॥

---

**व्रतमुपैष्यन्निति** । पूर्णमासस्य प्राथम्यम्, अत्रैवाग्रे पौर्णमासप्रयोगमभिधाय पश्चाद् दर्शप्रयोगाभिधानात् । कात्यायनेनापि तथाभिधाय "पौर्णमासवदन्यत्" ( श्रौ. सू. ४ अ. ७२ सू. ) इति पौर्णमासतन्त्रस्य दर्शेऽतिदेशात् । तथैव ब्राह्मणे प्रजापतिपर्वसन्धानप्रस्तावे "पौर्णमासेन चैवामावास्येन च, पौर्णमासीं चामावास्यां च तत्पर्वाभिषज्यन्" ( श. ब्रा. १.६.३.३६ ) इति पौर्णमासप्राथम्यम् । तथा तैत्तिरीयके—"पौर्णमास ँ हविरिदमेषां मय्यामावास्य ँ हविरिदमेषां मयि" ( तै. ब्रा. ३.७.४.८ ) इत्यन्वाधानानुमन्त्रणयोर्यजमानमन्त्रयोः पाठक्रमादपि पौर्णमासप्राथम्यमवगम्यते ।

ननु पूर्वोऽयं पाठक्रमः । श्रुत्यैव तु पौर्णमासप्राथम्यं प्रतिषिध्यते श्रुतिश्च पाठाद्बलीयसी, श्रुत्यर्थपाठमुख्यस्थानप्रवृत्तीनां क्रमप्रमाणानामपि श्रुतेः प्राथम्येन प्राबल्यात् । श्रूयते हि पौर्णमासप्राथम्यस्य निन्दा— "यत्पौर्णमासीं पूर्वामालभेत, प्रतिलोममेवैनावालभेत" ( तै. सं. ३.१.१.९ ) इति । न । तस्य वाक्यस्य "सारस्वतौ होमौ पुरस्ताज्जुहुयादमावास्या वै सरस्वत्यनुलोममेवैनावालभते" ( तै. सं. ३. ५. १. ६ ) इति सारस्वतहोमविधिशेषत्वेन पौर्णमासप्राथम्यनिन्दार्थवादात् । अत उक्तरीत्या पौर्णमासप्राथम्यमुपपन्नम् ।

---

१–अत्रैव प्रथमकाण्डे ६ । ३ । ३६ द्रष्टव्यम् । २–अत्र च "श्रुतिलक्षणमानुपूर्व्यं तत्प्रधानत्वात्" ( मी. सू. ५ । १ । १ ) इत्यादिपांचमिकप्रयोगविधिसहकारिभूतानां षण्णां प्रमाणानां प्रपञ्चोऽनुसंधेयः । तथा "स्याद्वाऽनुपूर्व्यनियमः श्रुत्यर्थक्रमेभ्यः" "विरोधेऽर्थस्तत्परत्वात्" "श्रुतिः क्रमादानुमानिकत्वात्" इत्यादि ( १ । ५ । ५ । १ । ३ । ७ ) कात्यायनीया परिभाषाऽप्यनुसंधेयेति ।

उपस्पर्शनं चेहाचमनं विवक्षितम् । नन्वापस्तम्बेन–" अप आचामत्युपस्पृशति वा " ( आप. श्रौ. सू. ४. ३. २. ९ ) इत्याचमनप्रतिद्वन्द्विभावेनोपस्पर्शनाभिधानात् स्पर्शनमात्रं तत्प्रतिभाति । सत्यं तत्र तथा । इह तु " तेन पूतिरन्तरतः " इति वाक्यशेषादपोऽश्नात्यन्तरत एव मेध्यो भवतीति वदताऽऽचमनमेव । यथा " अक्ताः शर्करा उपदधाति " इत्यत्र घृततैलादिष्वञ्जनसाधनत्वेन संदिह्यमानेषु " तेजो वै घृतम् " ( तै. ब्रा. ३. १२. ५. १२. ) इति वाक्यशेषाद् घृतमिति निश्चयः, तद्वत् । सूत्रितं हि–" संदिग्धेषु वाक्यशेषात् " ( मी. सू. १. ४. २९ ) इति । तस्य च व्रतोपायनाङ्गत्वम्, उपैष्यन्निति ' शतृ ' प्रत्ययेन व्रतोपायनस्याचमनं प्रति हेतुत्वाभिधानात्; " लक्षणहेत्वोः क्रियायाः " ( पा. सू. ३. २. १२६ ) इति स्मृतेः । प्रधानं हि स्वनिष्पत्त्यर्थमङ्गमनुष्ठापयत् तदनुष्ठाने हेतुर्भवति । न च लक्षणेऽपि शतुर्विधानात् कथं हेत्वर्थनिश्चय इति वाच्यम् । तदा हि भविष्यता व्रतेन लक्षितो हि यस्तत्पूर्वकालः तत्सम्बन्धमाचमनस्य विधातुं व्रतमुपैष्यन्नित्येतत्स्यात् । तत्कालसम्बन्धस्त्वाचमनानन्तरं व्रतोपायनस्य विधानात् पाठादपि सिध्यतीति लक्षणार्थस्वीकारे वचनमनर्थकमिति । ननु व्रतोपायनादपि प्रथममाहवनीयप्रणयनमन्वाधानं च । अत एवापस्तम्बः–" प्रातरग्निहोत्रꣳ हुत्वान्यमाहवनीयं प्रणीयाग्नीनन्वादधाति " ( आप. श्रौ. सू. १. १. २ ) इति । कात्यायनस्त्वप्रणीतस्याहवनीयादेरन्वाधानासंभवादर्थसिद्धं प्रणयनं मत्वा[1] अन्वाधानमेव प्रथममाह–" अग्न्यन्वाधानमध्वर्युर्यजमानो वा " ( श्रौ. सू. २. २. ) इति । ब्राह्मणं तु तदनभिधाय ततः पराचीनं व्रतोपायनं तदङ्गमाचमनं वा कथं प्रथममभिदधाति । अत्राभिधीयते । नियमेन याजमानानां[2] मध्ये व्रतोपायनमेव प्रथमम् । अग्न्यन्वाधानं हि नियमेन न याजमानम् । अध्वर्युर्यजमानो वेति ( का. श्रौ. सू. २. २ ) कात्यायनोक्तेः ॥ नन्वन्वाधानमन्त्रस्य " ममाग्ने वर्चः " ( तै. सं. ४. ७. १४. १. ) इत्यस्य प्रत्यगाशीष्ट्वान्नियमेन याजमानत्वं युक्तम् । यथा " आयुर्दा अग्नेऽस्यायुर्मे देहि " ( तै. सं. १. ९. ९. १३ ) इत्यादेः । तस्य हि समाख्ययाऽऽध्वर्यवत्वप्राप्तावपि प्रत्यगाशीष्ट्वलिङ्गेन प्रबलेन समाख्यां बाधित्वा याजमानत्वं निर्णीतम्–" मन्त्राश्च कर्मकरणास्तद्वत् " ( मी. सू. ३. ८. १९. ) इति । सत्यम् । अकरणमन्त्रत्वात्तत्र तथाऽस्तु, ममाग्ने वर्च इति तु करणमन्त्रत्वादाध्वर्यवक्रियायां विनियुक्तत्वाद् यजमानेन प्रयोगे तत्प्रतिपादनासामर्थ्यादध्वर्युणैव प्रयोज्यमित्युक्तमुत्तराधिकरणे–" करणेष्वर्थवत्त्वात् " ( मी. सू. ३. ८. २९ ) इति । अत उक्तयुक्तेस्तत्करणमन्वाधानमप्यध्वर्युणैवानुष्ठेयम् । यत्तु कात्यायनेनाध्वर्युर्यजमानो वेत्युक्तम्, तत्र याजमानत्वं शाखान्तरमूलम् । एतच्छाखानुसारेण त्वापस्तम्बादिभिः केवलाध्वर्यवत्वमुक्तमिति विभागः । अथवा । यथाऽप्रणीतस्यान्वाधानानुपपत्त्या प्रणयनमप्यन्वाधानविधिनैव संगृहीतं कात्यायनसूत्रे, तथा ' अन्तरेणाहवनीयं च गार्हपत्यं च प्राङ् तिष्ठन् ' इति वचनादेवाग्निप्रणयनं तत्प्रबलीकरणरूपमन्वाधानं चार्थसिद्धत्वादनुक्तमित्युच्यमानाङ्गमध्ये व्रतोपायनस्य प्राथम्यमविरुद्धम् ।

विहितमुपस्पर्शनमनूद्य प्रशंसति–**तद्यदिति** । ' तत् ' प्रकृतं ' यत् ' उपस्पर्शनं तेनान्तरतः ' पूतिः ' पवित्रता भवति । अनृतवदनेन हि पुरस्तात् संभावितमपवित्रत्वमिति । ननूपस्पर्शनस्य फलमेवेदं पवित्रत्वं किं न विधीयते ? कथमपि सम्बन्धाभावेऽपि हि फलविधित्वं दृष्टम्, यथा–" प्रतितिष्ठन्ति य एता रात्रीरुप-

---

१–कर्कोपाध्यायसिद्धान्तस्तु–नाचमनं किंत्वालम्भमात्रम् । तद्भाष्यं च " आलंभमात्रं वा । आचमनानुपदेशात् । तस्य च नैमित्तिकत्वात् । शब्दसामर्थ्याच्च । अप उपस्पृशतीति लिङ्गमर्थवादमात्रं दीक्षास्नानवदिति " इति ( का. श्रौ. सू. अ. २ । ११ ) तथा निगमे कात्यायनः " पिबत्याचामति–स्पृशत्युपस्पृशति " इति । खं. ८ ॥ २–मन्वानोऽन्वाधानमिति पा० । ३–यजमानसम्बन्धिकर्मणामित्यर्थः । ४–" ममाग्ने वर्चो विहवेष्वस्तु वयन्त्वेन्धानास्तन्वं पुषेम । मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाध्यक्षेण पृतना जयेम " इत्याहवनीये समिधमादधाति ( श्रौ. सू. २. ३ ) । ५–कर्कसिद्धान्तस्तु–कातीयसूत्रे प्रतिपाद्यमानं सर्वं याजमानं शुक्लयजुःपञ्चदशशाखामूलम् । तद्भाष्यं च " एवं हि स्मरन्ति–या एव काश्चन पञ्च दश वा शाखा उपनिबध्यन्ते । तत्रैव नैयमिकांगप्रधानकर्मोपसंहारः संभाव्यते । किमुत पञ्चदशशाखोपनिबन्धन इति " इति ( का. श्रौ. सू. २-२ ) ।

सोऽग्निमेवाभीक्षमाणो व्व्रतमुपैति । (त्यु) अग्ने व्व्रतपते व्व्रतञ्चरिष्यामि तुच्छकेयन्तन्मे राध्यतामित्यग्निर्वै देवानांव्व्रतपतिस्तस्माऽएवैतत् प्राहव्व्रतञ्चरिष्यामि तुच्छकेयन्तन्मे राध्यतामिति नात्र तिरोहितमिवास्ति ॥ २ ॥

---

सोऽग्निमेवाभीक्षमाणो व्रतमुपैति–" अग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम् " ( १ अ. ५ मं. ) इति । अग्निर्वै देवानां व्रतपतिः, तस्मा एवैतत्प्राह–व्रतं चरिष्यामि तच्छकेयम्, तन्मे राध्यतामिति । नात्र तिरोहितमिवास्ति ॥ २ ॥

---

यन्ति " इति रात्रिसत्रे । अत्रोच्यते । रात्रिसत्रस्य हि अनन्यशेषत्वेन स्वतन्त्रतया विधीयमानस्य युक्तं यदर्थवादोऽप्यपेक्षितं फलं समर्पयतीति । उपस्पर्शनस्य तु संस्कारतया संस्कार्येणैव प्रयोजनेन निरपेक्षितस्य कथमपेक्षितं फलं समर्थोऽर्थवादः समर्पयितुम् ? यथा–" यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते " ( तै. सं. ६. १. १. १७ ) इति । अत्र ह्यञ्जनस्य संस्कारतया फलमनपेक्षमाणस्य भ्रातृव्यचक्षुर्वर्जनं न फलमिति । सूत्रितं च " द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात् " ( मी. सू. ४. ३. १ ) इति । ननु साध्यसाधनेतिकर्तव्यतालक्षणेंऽशत्रयेऽननुप्रविष्टं कंचिदप्यर्थमनभिदधानस्य वाक्यस्यानर्थक्यमेव प्राप्तम्, "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" ( मी. सू. १. २. १ ) इति । तत्रैव कस्यचिदंशस्य स्तुत्यापि भवत्यर्थवत्तेति चेत् न । प्रवृत्तिविशेषमकुर्वाणया किं स्तुत्या । अपि च यः स्तुतश्चास्तुतश्च तावानेव सोऽर्थः । अत्रोच्यते । इह लिङादियुक्तेषु वाक्येषु द्वे भावने–शब्दात्मिका चार्थात्मिका च । उक्तं च–

" अभिधां भावनामाहुरन्यामेव लिङादयः ।
अर्थात्मभावना त्वन्या सर्वाख्यातेषु गम्यते " इति ।

एकैका च सा साध्यसाधनेतिकर्त्तव्यताभिस्त्रिभिरंशैरंशत्रयवती । अर्थभावनायां हि स्वर्ग एकः साध्योंऽशः, तत्करणमाग्नेयादिः साधनम्, प्रयाजादिरितिकर्तव्यतारूपः । तत्रैवार्थभावनायां पुरुषप्रवृत्तिः शब्दभावनाया भाव्यम्, लिङादिस्तद्व्यापारो वा करणम्, आर्थवादिकी स्तुतिरितिकर्तव्यता । तत्रार्थभावनाया अंशत्रयानभिधानेऽपि शब्दभावनेतिकर्तव्यताभूतां स्तुतिं ब्रुवाणोऽर्थवादः कथमनर्थकः स्यात् । यदाह सूत्रकारः–" विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः " ( मी. सू. १. २. ७ ) इति । स्तुतिविरहे ह्यंशवैकल्यादपरिपूर्णशब्दभावनया न प्रवृत्तिरर्थभावनायां पुरुषस्येति तस्या अप्यानर्थक्येन मूलोच्छेदप्रसङ्ग इति कथमनर्थिका स्तुतिः स्यात् । यत्त्वर्थवादरहितं केवलं विधिवाक्यम्, तत्र विधिरेव स्तुतिमाक्षिपतीति नोक्तदोषावतारः, इह प्रत्यक्षश्रुतायां स्तुतौ सत्यां किमाक्षेपक्लेशेनेत्यलम् । अयं च विचार उत्तरत्र सर्वेष्वेवार्थवादेषु द्रष्टव्य इति । अनृतवदननिमित्ताशुद्धिपरिहारेणोपस्पर्शनस्य प्राशस्त्यमभिधाय तत्साधनभूतानामपां स्वतः शुद्धत्वात्स्वसंबन्धिशुद्धिहेतुत्वाच्च तत्प्रशस्तमित्याह--**मेध्या वा** इति ॥ १ ॥

इदानीमग्निदर्शनलक्षणेनाङ्गान्तरेण सहितं समन्त्रकं व्रतोपायनं विधत्ते--**सोऽग्निमिति** । ' सः ' यजमानः ' अग्निम् ' आहवनीयम् । मन्त्रार्थस्तु--हे व्रतस्य पालक ! अग्ने ! अनृतवदनत्यागादिरूपं ' व्रतं ' चरिष्यामि । तत्कर्तुं शक्तो भूयासम् । शक्नोतेर्लिङ्याशिष्ययम् । मदीयं ' तद् ' व्रतं समृद्धं भवत्विति ।

व्रतपतिपदं व्याकरोति--**अग्निर्वै देवानामिति** । उभयवाक्यस्याव्याख्येयत्वमत्र--शकेयं राध्यतामिति । तत्र च हेतुमाह--**नात्रेति** । ' तिरोहितम् ' अविस्पष्टार्थं पदम् ॥ २ ॥

---

१–" द्वादशरात्रादीनि रात्रिसत्राणि " इति ( का. श्रौ. सू. २४ । १ । १ ), ताण्ड्यब्राह्मणे सत्रकाण्डे च ।
२–यतोऽत्र अविस्पष्टार्थं पदं नास्ति, अतो व्याख्याने प्रयोजनाभाव इति ।

(स्त्यु) अथ सुᳪंस्थिते विसृजतेऽग्ने व्रतपते व्रतमचारिषन्तदशकन्तन्मेराधीत्यशकद्ध्येतद्यो यज्ञस्य सᳪंस्थामगन्नराधि ह्यस्मै यो यज्ञस्य सᳪंस्थामगन्नेतेन न्वेव भूयिष्ठा ऽइव व्रतमुपयन्त्यनेन त्वेवोपेयात् ॥३॥

(द्व) द्वयं वा ऽइदन्न तृतीयमस्ति । सत्यञ्चैवानृतञ्च सत्यमेव देवाऽ अनृतम्मनुष्या ऽइदमहमनृतात्सत्यमुपैमीति तन्मनुष्येभ्यो देवानुपैति ॥ ४ ॥

स वै सत्यमेव वदेदेतद्ध वै देवा व्रतञ्चरन्ति यत्सत्यन्तस्मात्ते यशो यशो ह भवति य ऽएवं विद्वान्त्सत्यं वदति ॥ ५ ॥

---

अथ संस्थिते विसृजते–" अग्ने व्रतपते व्रतमचारिषं तदशकं तन्मेऽराधि " ( २ अ. २८ मं. ) इति । अशकद्ध्येतद्–यो यज्ञस्य संस्थामगन् । अराधि ह्यस्मै–यो यज्ञस्य संस्थामगन् ॥ एतेन न्वेव भूयिष्ठा इव व्रतमुपयन्ति, अनेन त्वेवोपेयात् ॥ ३ ॥

द्वयं वा इदं न तृतीयमस्ति–सत्यं चैवानृतं च सत्यमेव देवाः, अनृतं मनुष्याः । " इदमहमनृतात्सत्यमुपैमि " ( १ अ. ५ मं. ) इति । तन्मनुष्येभ्यो देवानुपैति ॥ ४ ॥

स वै सत्यमेव वदेत् । एतद्ध वै देवा व्रतं चरन्ति–यत् सत्यम्; तस्मात्ते यशः । यशो ह भवति–य एवं विद्वान् सत्यं वदति ॥ ५ ॥

---

स्वीकृतस्य व्रतस्य यागसमाप्तिपर्यन्तताम् आह–**अथेति** । ' संस्थिते ' यागे पर्यवसिते । विसर्जनमन्त्रमाह–**अग्ने व्रतपते व्रतमचारिषमिति** । अत्राशकमराधीति पूर्वमन्त्राद् वैलक्षण्यम् । तत्र हेतुमाह–**अशकद्धीति** । यो यज्ञस्य पर्यवसानं प्राप्तवान्, ' एतत् ' कर्म कर्तुम् ' अशकत् ' शक्तोऽभूत् । तस्मै तेन कर्मणा ' अराधि ' सिद्धम्, तत्कर्म असिद्ध्यदित्यर्थः । अगन्निति गमेर्लुङि " मन्त्रे घसेति " ( पा. सू. २. ४. ८० ) च्लेर्लुकि, हल्ङ्यादिलोपे " मो नो धातोः " ( पा. सू. ८. २. ६४. ) इति मकारस्य नकारः । अत्र व्रतोपायने मन्त्रान्तरं विधातुं पूर्वमन्त्रात्तस्यैव विशेषमाह–**एतेनेति** । यतः ' एतेन ' वक्ष्यमाणेनेदमहमित्यादिना बहवो व्रतमुपयन्ति अतस्तु हेतोरनेनैवोपेयात् । एवकारेणैष मन्त्रः प्रशस्यते, न तु पूर्वो निषिध्यते । अत एव कात्यायनो द्वयमप्याह–"अग्ने व्रतपते " ' इदमहमिति वा ' ( श्रौ. सू. २. ११ ) इति ॥ ३ ॥

इदमहमिति मन्त्रे कर्मत्वेनापादानत्वेन च सत्यानृतयोरुभयोरेवोपादाने कारणमाह–**द्वयं वा** इति । यद् ' इदं ' जगत् तत्सर्वमनृतं सत्यं चेति कोटिद्वयमेव, न तृतीया कोटिरस्ति । सत्यमेव देवाः, चिरावस्थानात्, नियमेन सत्यवादित्वाद्वा । अनृतं मनुष्याः, स्वप्नदृष्टवदल्पकालावस्थानात् प्रायेणानृतवादित्वाद्वा । तथा च देवमनुष्याणां सत्यानृतवादित्वमैतरेयकेऽप्याम्नातम्–" सत्यसंहिता वै देवा अनृतसंहिता मनुष्याः " ( ऐ. ब्रा. १. १. ६ ) इति । सत्यानृतवदनसाहित्यं हि तत्र विवक्षितोऽर्थः;–"तस्माद्दीक्षितेन सत्यमेव वदितव्यम्" इति वाक्यशेषात् । यदनेन मन्त्रेणोच्यते ' तन्मनुष्येभ्यो देवानुपैति' इत्येवमात्मकमिममर्थमयं मन्त्र आहेत्यर्थः ॥ ४ ॥

अनेन मन्त्रेण व्रतमुपेयुषो नियममाह–**स वा** इति । ' सः ' इत्थं कृतव्रतोपायनः ' सत्यमेव ' इत्येवकारकरणादनृतं न वदेदित्यर्थः । असत्येवकारे यद्यत् सत्यं, तत्तदवश्यं वक्तव्यं स्यात्,–ग्रहं संमार्ष्टीतिवदेकत्वस्याविवक्षितत्वात्; अनृतवचनं चाप्रतिषिद्धं स्यात्, इष्यते च तन्निषेधः । अत एव तैत्तिरीयके दर्शपौर्णमासप्रकरणे

---

१–इदमहमिति वक्ष्यमाणेन मन्त्रेण वा व्रतग्रहणं कुर्यादित्यर्थः । २–' अन्तरेणापराग्नी गत्वा परेणाहवनीयं प्राङ् तिष्ठन्नग्निमीक्षमाणोऽप उपस्पृश्य व्रतमुपैत्यग्ने व्रतपत इदमहमिति वा ' ( श्रौ. सू. २. ११ ) ।

**( त्यु ) अथ सुꣳस्थिते विसृजते । इदुमहं यु ऽएवास्मि सोऽस्मीत्युमा-**

अथ संस्थिते विसृजते–"**इदमहं य एवास्मि सोऽस्मि**" ( २ अ. २८ मं. ) इति । अमानुष

समाम्नायते–" तस्यैतद् व्रतं–नानृतं वदेत् " ( तै. सं. २. ५. ५. ११ ) इति । यद्यप्याहिताग्निमात्रस्यानृतवदन-मन्यत्र प्रतिषिध्यते–" तस्मादाहिताग्निर्नानृतं वदेत्[1] " इति, तथाप्यनृतवदनवर्जनस्य दर्शपूर्णमासाङ्गत्वसिद्धये पुनरिह वक्तव्यमेव, इतरथा ह्यनृतवदनेऽपि पुरुष एव प्रत्यवेयात्, क्रतुः पुनरविगुण एव स्यात्–" को नाम क्रतुमध्यस्थः कलञ्जादीनि भक्षयेत् । न क्रतोस्तत्र वैगुण्यं यथा चोदितसिद्धितः ॥ " इति न्यायात् । नन्वनेनापि वचनेन कथमनृतवदननिषेधस्य कर्माङ्गत्वसिद्धिः ? वदेदिति प्रत्ययार्थस्य कर्तुः प्राधान्यात् तदर्थ एवायं प्रतिषेध इति हि युक्तम् । कर्मप्रकरणात् कर्माङ्गतेति चेत्, न; प्रतिषेध्यपाठादपि क्रियायास्तावत्कर्तृशेषता पदश्रुत्या प्रतीयते, तदर्थं प्रतिषेध्यम्; तादर्थ्येनैव प्रतिषेधोऽपि चाभिधीयते इति श्रौतेन पुरुषार्थत्वेन प्रबलेन प्राकरणिकी दर्शपूर्णमासार्थता बाध्यते । ननु न वदेदिति पदद्वयगम्यप्रतिषेधस्य कर्तुः संबन्धः, पदद्वयं वाक्यमिति कथं प्रतिषेधस्य कर्तुः संबन्धः । श्रौत इति चेत्, न; यथा ग्रहं संमार्ष्टीति पदद्वयगम्यसंमार्गस्य ग्रहशेषता, तथापि द्वितीयायाः क्रियासामान्यं प्रति ग्रहस्य शेषत्वाभिधानात् तद्विशेषस्य संमार्गस्य पदान्तरेणोपस्थापनेऽपि शेषशेषिभावस्य श्रौतता, तद्वत् । अत इह पुरुषार्थो निषेधो विधीयते । स्मृत्यैव विहित इति चेत्, तथापि हि तस्या एषैव श्रुतिर्मूलं भविष्यति; द्वयोरर्थसाम्यात् । अतो युक्तः श्रुत्या प्रकरणबाध इति । अथ मतम्--अविरोधे न दुर्बलं प्रबलेन निराक्रियते, न तु स्वयं प्रबलमित्येव दुर्बलस्य हिंसा न्याय्या । न चेह प्रकृतक्रियया कर्तुः संबन्धे प्रकरणबाधः, अतो न केवलक्रत्वर्थतेति । ननु पुरुषमात्रार्थोऽनृतनिषेधः स्मृत्यैव सिद्धः, स एव क्रतुगतपुरुषार्थोऽपि भविष्यतीति किमनेन विशेषनिषेधेन ? न च तस्याः स्मृतेरियं श्रुतिर्मूलमिति युक्तम्; सामान्यविशेषतया मूलमूलिभावासंभवात् । एवं तर्हि सर्वविशेषगामिना सामान्येन स्मृतिसिद्धस्य निषेधस्य प्रकरणाबाधायात्र क्रतुगतपुरुषविशेषेऽनुवादोऽस्तु, तस्य प्रत्ययार्थत्वेन प्राधान्यादित्युक्तम् । स्यादेवं यदि कर्तुः प्रत्ययार्थत्वं स्यात्, न त्वेतदस्ति । अनन्यलभ्यस्यैव शब्दार्थत्वात् । अवश्याभिधातव्यया भावनयैवाक्षेपात् कर्तुः प्रतीतेः । न च " लः कर्मणि च " ( पा. सू. ३. ४. ६९ ) इति स्मृतिबलात् कर्तुः प्रत्ययार्थता । तस्याः स्मृतेः " द्व्येकयोः " ( पा. सू. १. ४. २२ ) इत्यनेनैकवाक्यत्वे प्रत्ययाभिधेयत्वेनोच्यमानयोर्द्वित्वैकत्वयोर्व्यावर्तकत्वेनैव कर्तुः समर्पणात्; कर्तृद्वित्वे द्विवचनं कर्त्रेकत्व एकवचनमिति । अतो भावनया सख्यया वाक्षेपादेव कर्तुः प्रतीतिः सिद्धेति न स प्रधानतया प्रत्ययार्थः । अतः क्रियाया एव प्राधान्यात् तस्या एवाङ्गत्वेनानृतनिषेधो विधीयते । न च स्मृत्या पुरुषार्थतया विहितस्यानृतवदननिषेधस्य कथमिह प्रकरणात् क्रत्वर्थतेति वाच्यम्; " खादिरो यूपो भवति" "खादिरं वीर्यकामस्य" ( ऐ. ब्रा. २. १. १. ) इतिवत् संयोगपृथक्त्वेनोभयार्थत्वसिद्धेः । उक्तं हि–"एकस्य तूभयत्वे संयोगपृथक्त्वम्" ( मी. सू. ४. ३. ५ ) इति । अतः सत्यमेव वदेदिति दर्शपूर्णमासांगत्वेनानृतप्रतिषेधस्य विधिरयमिति सिद्धम् । तदाह कात्यायनः "इदमहमिति वा सत्यवाद्यतः; " कर्माङ्गमुत्तरे सत्यवदनम् " ( श्रौ. सू. २. ११. १३. ) इति । **तस्मात्ते यश** इति । यशस्विनां देवानां यशोऽपि यशः प्रतिपादनाय प्रशस्तम् 'एवम्' ॥ ९ ॥

"अग्ने व्रतपते" इति मन्त्रवत् मन्त्रेणाभ्युपेतस्य व्रतस्य प्रसङ्गाद्विसर्जनमाह--**अथ संस्थित** इति । अत्रत्य-

---

१–" नवाऽऽहिताग्निनाऽनृतं वदितव्यम् " इत्यग्रेऽत्रैव ( २ । २ । २ । २० ) ज्ञेयम् ।

२–अस्मिन्नेव ब्राह्मणे ३ । ६ । २ । १२ इत्यत्रास्ति ।

नुष ऽइव वा ऽएतद्भवति यद्व्रतमुपैति न हि तदवकल्पते यद्ब्रूयादिदमहꣳ सत्यादनृतमुपैमीति तदु खलु पुनर्मानुषो भवति तस्मादिदमहं य ऽएवास्मि सोऽस्मीत्येव व्रतं विसृजेत ॥ ६ ॥

( ता ) अथातोऽशनानशनस्यैव । तदु हाषाढः सावयसोऽनशनमेव व्रतं मेने मनो ह वै देवा मनुष्यस्याजानन्ति त ऽएनमेतद्व्रतमुपयन्तं विदुः प्रातर्नो यक्ष्यत ऽइति तेऽस्य विश्वे देवा गृहानागच्छन्ति तेऽस्य गृहेषूपवसन्ति स ऽउपवसथः ॥ ७ ॥

( स्तु ) तन्न्वेवानवक्लृप्तम् । यो मनुष्येष्वनश्नत्सु पूर्वोऽश्नीयादथ किमु यो देवेष्वनश्नत्सु पूर्वोऽश्नीयात्तस्मादु नैवाश्नीयात् ॥ ८ ॥

---

इव वा एतद् भवति—यद् व्रतमुपैति । न हि तदवकल्पते यद् ब्रूयाद्—'इदमहं सत्यादनृतमुपैमि'—इति, तदु खलु पुनर्मानुषो भवति । तस्मादिदमहं य एवास्मि सोऽस्मीत्येव व्रतं विसृजेत ॥ ६ ॥

अथातोऽशनानशनस्यैव । तदु हाषाढः सावयसोऽनशनमेव व्रतं मेने । मनो ह वै देवा मनुष्यस्याऽऽजानन्ति, त एनमेतद् व्रतमुपयन्तं विदुः—' प्रातर्नो यक्ष्यते ' इति । तेऽस्य विश्वेदेवा गृहानागच्छन्ति, तेऽस्य गृहेषूपवसन्ति—स उपवसथः ॥ ७ ॥

तन्वेवानवक्लृप्तम्—यो मनुष्येष्वनश्नत्सु पूर्वोऽश्नीयात्, अथ किमु—यो देवेष्वनश्नत्सु पूर्वोऽश्नीयात् । तस्मादु नैवाश्नीयात् ॥ ८ ॥

---

विसर्जनमन्त्रस्यायमर्थः । व्रतोपायनात् प्रागहं य एव मनुष्योऽस्मि, व्रतं मुक्त्वा स एव मनुष्यः ' इदमस्मि'; न तु व्रतसमय इव देवः । इदमिति क्रियाविशेषणत्वान्नपुंसकम् । नन्वसौ मनुष्यो व्रतसमयेऽपि मनुष्य एव, तत्किमुच्यते य एव मनुष्योऽस्मि स एवेदमस्मीति ? तत्राह--**अमानुष इवे**ति । मनुष्योऽपि हि तदाऽन्यात्मकत्वात् सत्यवदनाद्वा देव इवेत्युक्तम्, व्रतत्यागे तु कृते व्रतारम्भात् प्रागिव स्वभावसिद्धं मनुष्यत्वमेवेति । ननु यथा व्रतोपायनेऽनृतात् सत्यमुपैमीत्युक्तम्, एवं तत्त्यागे सत्यादनृतमुपैमीति किं नोक्तमित्यत आह—नहीति । महत उत्कृष्टदेवत्वात् प्रच्युतत्वेनात्यन्तनिकृष्टमानुषत्वप्राप्तिकथनस्य परुषत्वादनवकल्पनं, तदाह--**तदु खल्वि**ति ॥ ६ ॥

व्रतप्रसङ्गादागतं तद्विसर्जनं समाप्य पूर्वेद्युर्यजमानेन व्रतानन्तरं यत् कर्त्तव्यं तत् प्रतिजानीते--**अथात** इति । यतो व्रतानन्तरमशनानशनापरनामकमारण्याद्यशनमेव यजमानेन कर्तव्यम्, 'अतः' तदनन्तरमेव तस्य निरूपणं क्रियत इत्यर्थः । प्रतिज्ञातस्याशनानशनपक्षस्य प्रशंसार्थं केवलानशनपक्षं निरसितुमपन्यस्यति--**तदु हे**ति । ' तत्' तस्मिन्नशनानशनविषये सवयसः पुत्रः ' सावयसः ' 'अषाढ' नामकः सर्वात्मनाऽशनत्यागमेव व्रतं मेने । तथा मन्यमानस्याषाढस्याशयमाह--**मनो** हेत्यादि । अनुपन्यस्तमपि मनुष्यस्य मनः'आ' समन्तात् [ देवाः ] जानन्ति । अतो योऽसौ यजमानो व्रतमुपैति, एष नः प्रातरवश्यं यक्ष्यते इति ज्ञात्वा 'विश्वे' सर्वे ते देवाः व्रतदिवसे यजमानस्य गृहानागच्छन्ति उपवसथनामनिर्वचनेन देवानामागमनं द्रढयति--**तेऽस्ये**ति । 'उप' समीपे यजमानस्य वसन्ति देवा अस्मिन्निति पर्वदिवस 'उपवसथ'—नामक इत्यर्थः ॥ ७ ॥

अस्तु किं ततः ? इति चेत्--**मनुष्येष्वि**ति । गृहे मनुष्येष्वागतेषु अनश्नत्सु 'यः' कश्चिद् यजमानः स्वयं

---

१–" व्रतं विसृजते येनोपेयात् " इति ( का. श्रौ. सू. ३ । ८ । २९ ) पूर्वं हि व्रतग्रहणे द्वौ मन्त्रावुक्तौ "अग्ने व्रतपते–इदमहमिति वे"ति ( का. श्रौ. सू. २ । १ । ११ ) अत्रेदमहमित्येव मंत्रः श्रुतिसंमतः इति हरिस्वामिनः । श्रुतिश्चैहैवाग्रे ( १ । ९ । ३ । २३ ) द्रष्टव्या ।

( त्तु ) तदु होवाच याज्ञवल्क्यः । ( ल्क्यो ) यदि नाश्नाति पितृदेवत्यो भवति यद्यु ऽअश्नाति देवानुत्यश्नातीति स यदेवाशितमनशितन्तदश्नीयादिति यस्य वै हविर्न गृह्णन्ति तदशितमनशितꣳ स यदश्नाति तेनापितृदेवत्यो भवति यद्यु तदश्नाति यस्य हविर्न गृह्णन्ति तेनो देवान्नात्यश्नाति॥९॥

स वा ऽआरण्यमेवाश्नीयात् । ( या ) या वा ऽआरण्या ऽओषधयो यद्वा व्वृक्ष्यं तदु ह स्माहापि व्वर्कुर्व्वार्ष्णो माषान्मे पचत न वा ऽएतेषाꣳ हविर्गृह्णन्तीति तदु तथा न कुर्याद्व्रीहियवयोर्व्वा ऽएतदुपचं यच्छमीधान्यं तद्व्रीहियवावेवैतेन भूयाꣳसौ करोति तस्मादारण्यमेवाश्नीयात् ॥ १० ॥

---

तदुहोवाच याज्ञवल्क्यः । यदि नाश्नाति–पितृदेवत्यो भवति, यद्यु अश्नाति–देवानत्यश्नाति, इति स यदेवाशितमनशितं तदश्नीयाद्–इति । यस्य वै हविर्न गृह्णन्ति तदशितम्–अनशितम् । स यदश्नाति–तेनापितृदेवत्यो भवति। यद्यु तदश्नाति--यस्य हविर्न गृह्णन्ति तेनो देवान् नात्यश्नाति ॥९॥

स वा आरण्यमेवाश्नीयात् । या वा आरण्या ओषधयः, यद्वा वृक्ष्यम् । तदु ह स्माऽऽहापि वर्कुर्वार्ष्णः–'माषान्मे पचत, न वा एतेषां हविर्गृह्णन्तीति' तदु तथा न कुर्यात् । व्रीहियवयोर्वा एतदुपचम्–यच्छमीधान्यम्, तद् व्रीहियवावेवैतेन भूयांसौ करोति । तस्मादारण्यमेवाश्नीयात् ॥१०॥

---

पूर्वं भुञ्जीतेति यत् तदेवानुचितमिति वितर्कयामः । अथ यः कश्चिद् देवेष्वनश्नत्सु पूर्वोऽश्नीयादिति यत्, तस्यानवक्लृप्तिः किमु वक्तव्या ? कैमुतिकन्यायफलमाह--तस्माद्विति । 'उ' इत्यसन्देहे तस्मादेव हेतोरशनवर्जनलक्षणेऽर्थे नास्ति सन्देह इत्यर्थः ॥ ८ ॥

अषाढेन चेन्मुनिना निर्णीतोऽनशनपक्षः, तर्हि स एव परमार्थः; कथमशनानशनपक्षः ? इति चेत्, अस्यादि मुनिनैव याज्ञवल्क्येन सोपपत्तितो निर्णीतत्वादित्याह--तदुहेति । 'तदु' तस्मिन्नप्यशनानशनपक्षे याज्ञवल्क्य उपपत्तिम् 'उवाच' आह । अशनानशनलक्षणस्वमतसमर्थनाय प्रत्येकपक्षौ दूषयति--यदीति । दैविके हि कर्मणि देवान् प्रत्युद्दिष्टस्यैव हविषः प्रथममनुपयोगः, काममन्यस्य; पित्र्ये पुनरतिनियमाद्धविषोऽन्यदप्यनुपयोज्यमिति पितृदेवत्यतामापादयतीति याज्ञवल्क्यस्याशयः । तत्किं दैविके कर्मणि प्रागपि भोक्तव्यमिति यस्तमाशयमजानानः शङ्कते, तं प्रत्याह--यद्यु इति । 'यद्यु' यदि त्वश्नाति, तदा अशिशिषतो देवानतिक्रम्य स्वयं भुक्तवान् स्यात् । अशनानशनपक्षयोरुभयोरपि दोषश्चेत् का गतिः ? इति तत्राह–स यदिति । यद् द्रव्यमशितमप्यनशितवद् भवति तदश्नीयात् । किं तदिति तदाह–यस्येति । 'यस्य' द्रव्यस्य संबन्ध्यन्नं "हविः" देवा न गृह्णन्ति तदशितमपि सदनशितवद् भवति । तथात्वे यथोदीरितदोषद्वयाभावमाह–स यदिति । अशनादेव न पितृदेवतात्वम्; अश्यमानस्य देवायोग्यत्वादेव न देवानामतिक्रमः ॥ ९ ॥

अथ किं तादृक् प्राश्यद्रव्यम् ? इति तदाह–स वा इति । आरण्यग्रहणं प्रकृतदर्शपूर्णमासहविर्व्यतिरिक्तोपलक्षणम् । 'वृक्ष्यं' वृक्षोद्भवं फलम् । भुक्तोपलक्षणत्वे मुनिविशेषव्यवहारं प्रमाणयति–तदु हेति । वृषा नाम कश्चित्, तस्य पुत्रो 'वार्ष्णः' तस्य नाम 'वर्कुः' इति । मुनेर्मतमप्यवदति–तदु तथेति । तत्र हेतुः–व्रीहियवयोरिति । 'शमीधान्यं' तिलमाषादि । उपचिनोतीति 'उपचम्' । अल्पेनापि माषपिष्टेन मिश्रितं

---

१–अस्यैव विशेषतया संपत्तिः ( कां. ११ अ. १ प्र.१ ब्रा. ७ ) इत्यत्र प्रतिपादिता ।

( त्सु ) स ऽआहवनीयागारे वैताᳬंरात्रिᳬंशयीत । गार्हपत्यागारे वा देवान्वा ऽएष ऽउपावर्त्तते यो व्रतमुपैति स यानेवोपावर्त्तते तेषामेवैतन्मध्ये शेतेऽधः शयीताधस्तादिव हि श्रेयस ऽउपचारः ॥ ११ ॥

स वै प्रातरप ऽएव । प्रथमेन कर्मणाभिपद्यतेऽपः प्रणयति यज्ञो वा ऽआपो यज्ञमेवैतत्प्रथमेन कर्मणाभिपद्यते ताः प्रणयति यज्ञमेवैताद्वितनोति ॥१२॥

---

स आहवनीयागारे वैतां रात्रिं शयीत, गार्हपत्यागारे वा । देवान् वा एष उपावर्तते-यो व्रतमुपैति । स यानेवोपावर्तते–तेषामेवैतन्मध्ये शेते । अधः शयीत । अधस्तादिव हि श्रेयस उपचारः ॥ ११ ॥

**अपां प्रणयनम् ।**

स वै प्रातरप एव प्रथमेन कर्मणाभिपद्यते । अपः प्रणयति । यज्ञो वा आपः–यज्ञमेवैतत् प्रथमेन कर्मणाभिपद्यते । ताः प्रणयति--यज्ञमेवैतद् वितनोति ॥ १२ ॥

---

व्रीहिपिष्टं त्रिचतुरान् यामानपि स्थापितम् ' उपचितं ' बहु भवति इति प्रसिद्धं तदाह–**व्रीहियवावि**ति । अतो माषोपयोगे व्रीहियवावेव यत उपयुक्तौ स्याताम्, अतस्तथा न कुर्यात् । अतो युक्तमारण्यमेवाश्नीयादिति । तदेवं व्यवस्थितं सकृदशनम् ॥ १० ॥

**स आहवनीये**ति । तां रात्रिमाहवनीयागारे गार्हपत्यागारे वा शयीत[2] । तत्रैव शयने हेतुः–**देवान् वा** इति । ' उपावर्तते ' समीपे शेते । ' अधः शयीत ' । न पुनः खट्वाद्युपरि । यत उपरि[3] स्थितं श्रेयांसमध एव स्थिता उपचरन्ति ॥ ११ ॥

अथ प्रभातेऽध्वर्योः कर्तव्यतामाह–**स वा** इति । ' सः ' प्रसिद्धोऽध्वर्युः प्रथमेन कर्मणाऽप एवाभिमुख्येन प्राप्नोति । किं तत्प्रथमं कर्म ? तदाह–**अपः प्रणयती**ति । एतच्चापां प्रणयनम् " अथ[4] संयौति " इति वक्ष्यमाणसंयवनार्थम्[5] । अतः संयवनात् प्राक् प्रणीतानां नाशे पुनः प्रणयनं कार्यम्, कृते तु संयवने तन्नाशेऽपि प्रयोजनस्य जातत्वान्न पुनः प्रणेतव्यम् । ननु अन्तर्वेदि प्रणीता निनयति[6]–इत्युपरितननिनयनार्थं पुनः कस्मान्न प्रणयनमिति चेत्, न; संयवनप्रसक्तौ तासामेवापां प्रतिपत्तिमात्रम्, अतो न तदपां प्रणयनस्य प्रयोजकम्; न हि चात्वाले प्राशनं कृष्णविषाणां प्रयुङ्क्ते । अथोभयं साधयतः प्रणयनस्य कथं संयवनमेव प्रयोजनम्, न तु अन्तर्वेदि निनयनमिति चेत् ( न । ) " पूर्णपात्रं निनयति[7] " इति द्वितीययाऽपां संस्कारकर्मत्वप्रतीतेर्निनयनस्योपयुक्तसंस्कारतया प्राशनवत् प्रतिपत्तित्वात् । संयवने तु समानप्रकरणे शाखान्तरे " प्रणीताभिः

---

१–" वृक्षारण्यौषधीनामश्नीयाद्वा " ( श्रौ. सू. २. १४. ) । २–" आहवनीयगृहशाय्यधो गार्हपत्यस्य वा " ( श्रौ. सू २. १५. ) । ३–' उपस्थितं श्रेयांसः अध उपस्थिता ' इति पा. । ४–इहैवाग्रे २. २. ३. द्रष्टव्यम् । ५–कर्कसिद्धान्तस्तु–प्रणीताः सर्वार्था एव न संयवनार्थाः । तद्भाष्यं च " तत्र केचित्प्रणीताभिः संयौतीति वाक्यसामर्थ्यात्संयवनार्थतामाहुः । द्रव्यप्रक्लृप्तेः परार्थत्वात्तत्र चाविशेषात्सर्वार्थत्वादनुवादोऽयमित्यपरे । किंचाग्नीषोमीयप्रतिषेधानुपपत्तेः । संयवनार्थत्वे हि तदभावादेव प्रणीता न स्युर्व्यर्थः प्रतिषेध इति । निरूढे च प्रतिप्रसवानुपपत्तेः । तत्रापि हि नैव संयवनमस्ति । सर्वार्थत्वे पुनः प्रतिषेधप्रतिप्रसवावुपपद्येते । सूत्रकारप्रस्थानाच्च प्रणीताद्युपसदिति । तस्मात्सर्वार्थाः " इति । ( का. श्रौ. अ. २–५ ) । ६–अत्रैव ब्राह्मणे ( २ । २ । २ ) । ( का. श्रौ. सू. ) " श्रपणस्य पश्चादुपविशत्यन्तर्वेदि वा–उपसर्जनीरानयत्यन्यः " इति ( २ । ५ । ११ । १२ ) ॥ ७–अत्रैवाग्रे ९ । ३ । १ द्रष्टव्यम् ।

स प्रणयति । कुस्त्वा युनक्ति स त्वा युनक्ति कुस्मै त्वा युनक्ति तुस्मै त्वा युनक्तीत्येताभिरनिरुक्ताभिर्व्याहृतिभिरनिरुक्तो वै प्रजापतिः प्रजापतिर्यज्ञस्तत्प्रजापतिमेवैतद् यज्ञं युनक्ति ॥ १३ ॥

यद्वेवापः प्रणयति । (त्य) अद्भिर्वा ऽइदꣳ सर्वमातन्तत्प्रथमेनैवैतत्कर्मणा सर्वमाप्नोति ॥ १४ ॥

---

स प्रणयति--" कस्त्वा युनक्ति, स त्वा युनक्ति, कस्मै त्वा युनक्ति, तस्मै त्वा युनक्ति " ( १ अ. ६. मं ) इति--एताभिरनिरुक्ताभिर्व्याहृतिभिः । अनिरुक्तो वै प्रजापतिः, प्रजापतिर्यज्ञः--तत्प्रजापतिमेवैतद् यज्ञं युनक्ति ॥ १३ ॥

यद्वेवापः प्रणयति । अद्भिर्वा इदं सर्वमाप्तम् । तत्प्रथमेनैवैतत्कर्मणा सर्वमाप्नोति ॥ १४ ॥

---

( हवींषि ) संयौति " ( आप. श्रौ. सू. १. २४. ३. ) इति तृतीययाऽपां संयवनं प्रति गुणत्वप्रतीतेः । अतः संयवनार्थमेव प्रणयनम् । उक्तं प्रणयनं प्रशंसति--यज्ञो वा इति । अपां यज्ञसाधनतया यज्ञरूपत्वात्तद्विस्तरात्मकस्य प्रणयनस्य यज्ञविस्तारूपत्वात् प्राशस्त्यम् ॥ १२ ॥

उक्तं प्रणयनमनूद्य कस्त्वेति व्याहृतिचतुष्टयात्मकं मन्त्रं विधत्ते--स प्रणयतीति । हे प्रणीतोदक ! को नाम त्वां यज्ञेन ' युनक्ति ' योक्तुं समर्थः ? यः समर्थः ' सः ' युनक्ति । " कस्मै " त्वा प्रयोजनाय युनक्ति ? यस्मै युनक्ति, तस्मै युनक्ति । योजने कर्ता प्रयोजनं च दुर्ज्ञातमित्यर्थः । व्याह्रियन्त इति व्याहृतयो मन्त्राः, दुर्ज्ञानत्वाभिधानादनिश्चित्य वचनाच्च ' अनिरुक्ताः ' । व्याहृतिविशेषणस्यानिरुक्तत्वस्य प्रयोजनमाह--अनिरुक्तो वा इति । अनिर्ज्ञातो हि पदार्थः क इति पर्यनुयुज्यते । अतोऽसावनिरुक्तः प्रजापतिश्च ' कः ' इत्युच्यते । " को ह वै नाम प्रजापतिः " ( तै. ब्रा. २. २. १० ) इति श्रुतिः । अतः श्रुतिसाम्यात् प्रजापतेरनिरुक्तत्वम् । अथवा वाचकमन्त्रोच्चारणमन्तरेण मनसैव प्रजापतेर्होमादपि प्रजापतिरनिरुक्तः । " यत्तूष्णीं तत्प्राजापत्यं स मनसा जुहोति, मन इव हि प्रजापतिः " ( तै. सं. ६. ६. १०. ३ ) इति श्रुतेः । अस्त्वनिरुक्तः प्रजापतिः, प्रस्तुते किमायातमित्यत आह--प्रजापतिर्यज्ञ इति । " प्रजापतिर्यज्ञमसृजत " ( तै. ब्रा. १. ७. १. ४. ) इति यज्ञस्रष्टृत्वश्रुतेः कार्यस्य कारणादभेदात् । तथा " एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्तः " ( तै. सं. १. ६. ११. १ ) इति सप्तदशसमुदायात्मकस्य प्रजापतेः सकलयज्ञानुगमश्रुतेः । अनुगन्छतश्च सामान्यादेर्लोके न पृथग् अनुगन्तव्यः । व्यक्तावभिमानदर्शनात् । यस्मात् प्रजापतिर्यज्ञः, अतोऽनिरुक्ताभिर्व्याहृतिभिः प्रणयनादनिरुक्तप्रजापत्यात्मकतया निरुक्तं यज्ञमेव 'युनक्ति' प्रारभत इत्यर्थः ॥ १३ ॥

प्रशब्दोपात्तप्रकर्षसूचितप्राथम्यद्वारा प्रणयनं प्रागस्तावीत्--यज्ञो वा इति । तत्र नयतिपदोपात्तप्रापणात्मकविस्तारद्वारत इति ' अथापः '--इत्यस्यावयवार्थपर्यालोचनयापि द्विधा स्तौति--यद्वेवेति । अनियोग एवकारः । न नियोगेन प्रागुक्तरीत्या स्तुतिः, किं त्वेवमप्यस्तीत्यर्थः । आप्नुवन्ति सकलं जगदित्यापः । तादृशामपां प्रणयनात् प्रथममेव सर्वमाप्तं स्यादित्यपि प्रशस्तं तत्प्रणयनमित्यर्थः ॥ १४ ॥

---

१--" अनिरुक्तं वा उपांशु " इति, " अनिरुक्तं हि मनोऽनिरुक्तं ह्येतद्यत्तूष्णीम् " इति चेहैव ( १ । ३ । ५ । १०=२ । ४ । ४ । ५ ) । २-( ऐ. ब्रा. ७ । ४ । १ ) । ३-इदं पदं क्वचिन्नास्ति ।

यद्देवास्यात्र । होता वाध्वर्युर्वा ब्रह्मा वाग्नीध्रो वा स्वयं वा यजमानो नाभ्यापयति तदेवास्यैतेन सर्वमाप्तम्भवति ॥ १५ ॥

यद्वेवापः प्रणयति । देवान् ह वै यज्ञेन यजमानाँस्तानसुररक्षसानि ररक्षुर्न्न यक्ष्यध्व ऽइति तद्यदरक्षँस्तस्माद्रक्षाᳬंसि ॥ १६ ॥

ततो देवा ऽएतं व्वज्रन्ददृशुः । (यँ) यदपो व्वज्रो वा ऽआपो व्वज्रो हि वा ऽआपस्तस्माद् येनैता यन्ति निम्नङ्कुर्व्वन्ति यत्रोपतिष्ठन्ते निर्दहन्ति तत्त ऽएतं व्वज्रमुदयच्छँस्तस्याभयेऽनाष्ट्रे निवाते यज्ञमतन्वत तथोऽएवैषऽएतं व्वज्रमुद्यच्छन्ति तस्याभयेऽनाष्ट्रे निवाते यज्ञन्तनुते तस्मादपः प्रणयति ॥ १७

---

यद्वेवास्यात्र होता वा अध्वर्युर्वा ब्रह्मा वा अग्नीध्रो वा स्वयं वा यजमानो नाभ्यापयति--तदेवास्यैतेन सर्वमाप्तं भवति ॥ १५ ॥

यद्वेवापः प्रणयति । देवान् ह वै यज्ञेन यजमानांस्तानसुररक्षसानि ररक्षुः--'न यक्ष्यध्व' इति । तद यदरक्षन् तस्माद्रक्षांसि ॥ १६ ॥

ततो देवा एतं वज्रं ददृशुः--यदपः । वज्रो वा आपः । वज्रो हि वा आपस्तस्माद् येनैता यन्ति, निम्नं कुर्वन्ति; यत्रोपतिष्ठन्ते, निर्दहन्ति । तत एतं वज्रमुदयच्छन् । तस्याभयेऽनाष्ट्रे निवाते यज्ञमतन्वत । तथो एवैष एतं वज्रमुद्यच्छन्ति । तस्याभयेऽनाष्ट्रे निवाते यज्ञं तनुते । तस्मादपः प्रणयति ॥ १७ ॥

---

अथवाऽस्य कर्मणो यदेवाङ्गं प्रापयितव्यमध्वर्य्वादयः प्रमादान्न प्रापयन्ति, तद्वैकल्यमुदकाचमनप्रोक्षणादिना परिहरन्त आपयन्ति, अतोऽप्याप इति तत्प्रणयनं प्रशस्तम् ॥ १५ ॥

न केवलमवयवार्थपर्यालोचनया, उदकप्रभावपर्यालोचनयापि प्राशस्त्यं वक्तुमारभते--**देवान्** हेति । असुराश्च रक्षांसि च 'असुररक्षसानि' । "अनसन्तान्नपुंसकाच्छन्दसि" (पा. सू. ५. ४. १०३.) इत्यसन्तत्वात् समासान्तः । 'न यक्ष्यध्व इति' यष्टुं न लभध्वं यूयमिति वदन्तो 'ररक्षुः' प्रतिबन्धयेयुरित्यर्थः[1] ॥ १६ ॥

**ततो देवा** इति । इत्थं प्रतिबद्धा देवाः 'एतम्' अब्लक्षणं वज्रं ददृशुः । अपां वज्रत्वं 'ता एता आपो वज्री भूत्वा' (तै. ब्रा. १. ७. १. ६. ७.) इत्यादिश्रुत्यन्तरे प्रसिद्धम्[2] । तदाह--**वज्रो वा** इति । न केवलं प्रसिद्धिबलाद्वज्रत्वम्, उपपत्तिबलाच्चेत्याह--**वज्रो** **हीति** । उपपत्तेः प्रसिद्धिं वैशब्द आह । तां प्रसिद्धामुपपत्तिं दर्शयति--**तस्मादि**ति । यस्मादापो वज्रः, तस्मादेता आपः 'येन' पथा गच्छन्ति, तं पन्थानं 'निम्नं' गर्तं कुर्वन्ति । गत्वा वा 'यत्र' तृणगुल्मादावुपतिष्ठन्ते, तत् 'निर्दहन्ति' निःसारं कुर्वन्ति । ते देवाः 'एतम्' उदकलक्षणं वज्रम् 'उदयच्छन्' उक्तप्रकारप्रणयनात्मकमुद्यमनं तस्य कृतवन्त इत्यर्थः । 'तस्य' वज्रस्य संबन्धिनि 'अभये' तेन वज्रेण परिहृतभये 'अनाष्ट्रे' नाशयन्तीति नाष्ट्राण्यसुररक्षसानि--तद्रहिते 'निवाते' तत्संस्पृष्टेन वातेनापि रहिते, स्थाने । यथा देवाः कृतवन्तः, तथैवैषामध्वर्युः ॥ १७ ॥

---

१--प्रतिबबन्धुरिति क्वचित्पाठः । २--"अपां फेनेन नमुचेः शिर इन्द्रोदवर्तयः ।" (माध्यं. सं. अ. १९-७१) (ऋ.सं.८।१४।१३)।

ता ऽउत्सिच्योत्तरेण गार्हपत्यꣳसादयति योषा वा ऽआपो वृषाग्निर्गृहा वै गार्हपत्यस्तद् गृहेष्वेवैतन्मिथुनम्प्रजननं क्रियते वज्रं वा ऽएष ऽउद्यच्छति योऽपः प्रणयति यो वा ऽअप्रतिष्ठितो वज्रमुद्यच्छति नैन ꣳ शक्नोत्युद्यन्तुꣳ स ꣳ हैन ꣳ शृणाति ॥ १८ ॥

स यद्गार्हपत्ये सादयति । गृहा वै गार्हपत्यो गृहा वै प्रतिष्ठा तद्गृहेष्वेवैतत्प्रतिष्ठायाम्प्रतितिष्ठति तथो हैनमेष वज्रो न हिनस्ति तस्माद्गार्हपत्ये सादयति ॥ १९ ॥

ता ऽउत्तरेणाहवनीयम्प्रणयति । योषा वाऽआपो वृषाग्निर्मिथुनमेवैतत्प्रजननं क्रियतऽएवमिव हि मिथुनं क्लृप्तमुत्तरतो हि स्त्री पुमाꣳसमुपशेते॥२०॥

---

ता उत्सिच्योत्तरेण गार्हपत्यं सादयति । योषा वा आपः, वृषाग्निः । गृहा वै गार्हपत्यः । तद् गृहेष्वेवैतन्मिथुनं प्रजननं क्रियते । वज्रं वा एष उद्यच्छति-योऽपः प्रणयति । यो वा अप्रतिष्ठितो वज्रमुद्यच्छति-नैनं शक्नोत्युद्यन्तुम्, सं हैनं शृणाति ॥ १८ ॥

स यद् गार्हपत्ये सादयति । गृहा वै गार्हपत्यः, गृहा वै प्रतिष्ठा, तद् गृहेष्वेवैतत् प्रतिष्ठायां प्रतितिष्ठति । तथो हैनमेष वज्रो न हिनस्ति । तस्माद् गार्हपत्ये सादयति ॥ १९ ॥

ता उत्तरेणाहवनीयं प्रणयति । योषा वा आपः, वृषाग्निः--मिथुनमेवैतत्प्रजननं क्रियते एवमिव हि मिथुनं क्लृप्तम्--उत्तरतो हि स्त्री पुमांसमुपशेते ॥ २० ॥

---

प्रणयनप्रकारमाह--**ता उत्सिच्ये**ति । चमसादिपात्रस्योपरि सिक्त्वा पूरयित्वा । न पुनस्तेन पात्रेण कुतश्चिज्जलाशयादुद्धृत्य । गार्हपत्यस्योत्तरभागे स्थापयेत् । आपस्तम्बेस्तु[1] स्थापितपात्रस्य समन्त्रकं पूरणमाह, इह ब्राह्मणे पूरितस्य स्थापनम् । अतस्तथैवोक्तं कात्यायनेन--" गार्हपत्यमुत्तरेणोदपात्रं निधाय " ( श्रौ. सू. २. ३. १. ) इति ॥ अवश्यं प्राङ्नेतव्यानामपां[2] किं गार्हपत्यस्योत्तरदेशे स्थापनेनेत्याशङ्क्य तत्प्रयोजनकथनेन स्तौति--**योषा वा आप** इति । अप्शब्दस्य स्त्रीलिङ्गत्वात् । **वृषे**ति । अग्निशब्दस्य पुँल्लिङ्गत्वात् । " गृहपतिना संयुक्ते ञ्यः " ( पा. सू. ४. ४. ९०. ) इत्यग्निविशेषो गार्हपत्यः । तदावास इह लक्षणया गार्हपत्य उच्यते । अत एव तस्य गृहत्वमुक्तम्[3]--गृहा वै गार्हपत्यः--इति । उदपात्रस्थापनं प्रयोजनान्तरेण स्तौति--**वज्रं वा** इति । अप्रतिष्ठितः असंबद्धः । **नैनमि**ति । तमेनमशक्तम्, अनुद्यन्तारं ' संशृणाति ' हिनस्ति । " शॄ हिंसायाम् " ( क्र्या. प. १६ ) " प्वादीनां ह्रस्वः " ( पा. सू. ७. ३. ८०. ) अतो हिंसापरिहाराय स्वयं संनद्ध एवोद्यच्छेत ॥ १८ ॥

उद्यन्तुः प्रतिष्ठामुक्त्वा उद्यन्तव्यस्यापि प्रतिष्ठामाह--**स यदि**ति । **गृहा वै प्रतिष्ठे**ति । कोशे स्थापितस्यासेरिव वातादिस्पर्शविरहात्तैक्ष्ण्यस्याविनाशो वज्रस्य प्रतिष्ठा । तीक्ष्णीभूतः स वज्रः स्वप्रयोक्तुरभिमतफलनिष्पादनात् तद्विरहदुःखात्मिकां हिंसामस्य न करोतीत्याह--**तथो** हेति । गार्हपत्योपश्लिष्टे तदुत्तरभागे । ' वटे गावः सुशेरते ' इतिवदौपश्लेषिकाधिकरणे सप्तमी[4] ॥ १९ ॥

सादितानामपां प्रणयनमाह--**ता उत्तरेणे**ति । आहवनीयस्य संनिहितोत्तरभागे ' प्रणयति ' नीत्वा

---

१-( आप. श्रौ. ४।१।४ )। २-एता एवापः प्रणीता इत्युच्यन्ते उपरिष्टात् अष्टाविंशतितमे ( २८ ) पृष्ठे तृतीया टिप्पणी द्रष्टव्या। ३-इहैव पूर्वं ( १।१।१८ )। ४ ( पा. सू १।४।४५ )। "औपश्लेषिको वैषयिकोऽभिव्यापकश्चेत्याधारस्त्रिधा" इति सि. कौ.।

**ता नान्तरेण सञ्चरेयुः । (नें) नेन्मिथुनञ्चर्यमाणमन्तरेण सञ्चरानिति ता नातिहृत्य सादयेन्नो ऽअनाप्ताः सादयेत्स यदतिहृत्य सादयेदस्ति वा ऽअग्नेश्चापाञ्च विभ्रातृव्यमिव स यथैव ह तदग्नेर्भवति यत्रास्याप ऽउपस्पृशन्त्यग्नौ हाधि भ्रातृव्यं वर्द्धयेद्यदतिहृत्य सादयेद्यद्यु ऽअनाप्ताः सादयेन्नो हाभिस्तङ्काममभ्यापयेद्यस्मै कामाय प्रणीयन्ते तस्मादु सम्प्रत्येवोत्तरेणाहवनीयम्प्रणयति ॥ २१ ॥**

---

ता नान्तरेण संचरेयुः--नेन्मिथुनं चर्यमाणमन्तरेण संचरानिति । ता नातिहृत्य सादयेत्, नो अनाप्ताः सादयेत् । स यदतिहृत्य सादयेत्--अस्ति वा अग्नेश्चापां च विभ्रातृव्यमिव । स यथैव ह तदग्नेर्भवति यत्रास्याप उपस्पृशन्ति, अग्नौ हाधि भ्रातृव्यं वर्द्धयेत्--यदतिहृत्य सादयेत् । यद्यु अनाप्ताः सादयेत्--नो हाऽभिस्तं काममभ्यापयेद्--यस्मै कामाय प्रणीयन्ते । तस्मादु संप्रत्येवोत्तरेणाहवनीयं प्रणयति ॥ २१ ॥

---

सादयति । "एनबन्यतरस्यामदूरेऽपञ्चम्याः" ( पा. सू. ५. ३. ३५ )--इत्यनेन 'एनप्' । "एनपा द्वितीया" ( पा. सू. २. ३. ३१ )--इति षष्ठ्यर्थे द्वितीया । अपामग्नेश्च मिथुनतामुपपादयति--**एवमिव हि मिथुनं क्लृप्तमिति** ॥ २० ॥

**ता नान्तरेणे**ति । अन्तरेणेति बलादग्निमिति लभ्यते । तासामपामग्नेश्च मध्ये नं संचरेयुरित्यर्थः । तत्र कारणमाह--**नेदि**ति । नेदिति परिभये । "अथापि नेत्येष इदित्येतेन संप्रयुज्यते परिभये" ( १. ३. ६ ) इति हि निरुक्तम् । संचारे हि चर्यमाणं मिथुनमन्तरेण परस्परं संगतयोः स्त्रीपुंसयोर्मध्ये संचारान्मिथुनविच्छेद-लक्षणा भीतिः 'संचरान्' संचरेयुरिति । हेतुहेतुमद्भावरूपे लिङर्थे 'लेट्[3]' । झेर[4]न्तादेशः, "इतश्च लोपः" ( पा. सू. ३. ४. ९७ ) इतीकारलोपे संयोगान्तलोपः, तस्यासिद्धत्वान्नलोपा[6]भावः ॥ साक्षा-दुत्तरभागे आहवनीयप्रणयनं विवक्षितमिति दर्शयितुं ततः प्राक् प्रत्यगासादनं निषेधति--**ता नातिहृत्ये**ति । 'अतिहृत्य' उत्तरभागमतीत्य प्राग्भागे । 'अनाप्ताः' उत्तरभागमप्राप्ताः, प्रत्यगपि नासादयेत् । तदतिहरण-पक्षमनुवदति--**स यदि**ति ॥ तत्र दोषं वक्तुमुपोद्घातमाह--**अस्ति वा** इति । "व्यन्त्सपत्ने" ( पा. सू. ४. १. १४५ ) इति स्मृतेः 'भ्रातृव्यः' शत्रुः, तस्य भावो भ्रातृव्यं शात्रवम्, युवादित्वाद् भावेऽण्[7] । विशिष्टं भ्रातृव्यम् । अग्नेरपां च परस्परविनाशकत्वान्महदस्ति वैरमित्यर्थः । अस्तु, किं तत इत्याह--**स यथैवे**ति । 'तत्' अद्भिः सह महद्वैरमग्नेर्यथा 'भवति' स्वकार्यनिर्वापणरूपमुपद्रवं कर्तुं प्रभवति, तथा 'सः' अति-हरन्नध्वर्युः कुर्यादित्यर्थः । तथाऽकरणे का हानिः ? तत्राह--**यत्रे**ति । 'यत्र' कर्मणि 'अस्य' प्रणयन-पात्रस्य संबन्धिनीरप 'उपस्पृशन्ति' ऋत्विग्यजमानाः । तत्रोपस्पर्शनमग्नौ 'भ्रातृव्यम्' शत्रुमुदकलक्षणम् 'वर्धयेत्' उत्तेजयेत् । अतिहरणस्य वैरकरणसंबन्धार्थः प्रथमोऽनुवादः, चरमस्तु भ्रातृव्यवर्द्धनसमर्थनार्थं

---

१--"अनुज्ञात उत्तरेणाहवनीयं सम्प्रति निदधाति कस्त्वेति" ( २।३।२ ) । २--"नान्तरेण गच्छेयुः" ( का. श्रौ. सू. २ । ३ । ४ ) । ३--( पा. सू. ३ । ३ । १५६ ) । ४--( पा. सू. ३ । ४ । ७ ) । ५--( पा. सू. ८ । २ । २३ ) । ६--( पा. सू. ८।२।१ ) । ७--"हायनान्तयुवादिभ्योऽण्" इति ( पा. सू. ५।१।१३० ) ।

**(त्यु) अथ तृणैः परिस्तृणाति । द्वन्द्वम्पात्राण्युदाहरति शूर्पञ्चाग्निहोत्रहवणीञ्च स्फ्यञ्च कपालानि च शम्याञ्च कृष्णाजिनञ्चोलूखलमुसले दृषदुपले तद्दश दशाक्षरा वै विराड्विराड् वै यज्ञस्तद्विराजमेवैतद्यज्ञमभिसम्पादयत्यथ यद्द्वन्द्वं द्वन्द्वं वै वीर्यं यदा वै द्वौ सꣳरभेते ऽथ तद्वीर्य्यम्भवति द्वन्द्वं वै मिथुनम्प्रजननम्मिथुनमेवैतत्प्रजननं क्रियते ॥ २२ ॥**

**इति प्रथमकाण्डे प्रथमप्रपाठके प्रथमाध्याये वा प्रथमं ब्राह्मणम् ।**

---

**पात्रासादनम् ।**

अथ तृणैः परिस्तृणाति । द्वन्द्वं पात्राण्युदाहरति–शूर्पं चाग्निहोत्रहवणीं च । स्फ्यं च कपालानि च । शम्यां च कृष्णाजिनं च । उलूखलमुसले । दृषदुपले । तद्दश । दशाक्षरा वै विराट् । विराड् वै यज्ञः । तद्विराजमेवैतद्यज्ञमभि संपादयति । अथ यद् द्वन्द्वम् । द्वन्द्वं वै वीर्यम् । यदा वै द्वौ संरभेते–अथ तद्वीर्यं भवति । द्वन्द्वं वै मिथुनं प्रजननम् । मिथुनमेवैतत्प्रजननं क्रियते ॥ २२ ॥

---

इत्यपौनरुक्त्यम् ॥ अतिहरणपक्षे दोष उक्तः । अनाप्तिपक्षे दोषमाह–**यद्यु** इति । स्वसमयेऽप्राप्तत्वात् तासामपां कामप्रापकत्वं दूरापास्तमित्यर्थः । इत्थं तमुपोद्घातमुक्त्वौपोद्घातिकमाह–**तस्मादि**ति । 'संप्रत्येव' सम्यगुत्तरभाग एव, न पुरतो न पश्चात् । अत उक्तं कात्यायनेन–" उत्तरेणाहवनीयꣳसंप्र ति निदधाति " ( श्रौ. सू. २. ३. ३ ) इति ॥ २१ ॥

प्रणीताप्रणयनानन्तरं परिस्तरणं पात्रासादनं चाह–**अथ तृणै**रित्यादि । 'द्वन्द्वं' द्वे द्वे । " द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु " ( पा. सू. ८. १. १५ ) इति निपातितम् । पात्रपदं यज्ञनिर्वर्तकानां स्फ्यादीनामप्युपलक्षकम्[2] । अर्थतः प्राप्तां संख्यामनूद्य प्रशंसति–**तद्दशे**ति । तस्मिन् प्रयोग एवं परिगणने कृते दश संपद्यन्ते । विराजश्छन्दसोऽक्षरेषु दशत्वमस्ति । प्रथमश्च यज्ञो ज्योतिष्टोमः । " एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः[3] " ( तै. सं. ७. ४. १०. ११ ) इति श्रुतेः । तत्र च नवत्युत्तरशतसंख्याकाः स्तोत्रियाः । तास्वेकोनविंशतिसंख्यया विभज्यमानासु दश लभ्यन्त इत्यस्ति तत्रापि दश संख्या । अतो दशसंख्यायोगाद् विराड्यज्ञयोरैकत्वादिह दशसंख्यासंपत्त्या विराडात्मको यज्ञ एव साकल्येन संपादितो भवति । एवं दशत्वं स्तुत्वा द्विशः प्रयोगमनूद्य स्तौति–**अथ यदि**ति । 'संरभेते' 'रभ राभस्ये' ( भ्वा. आ. ९९९. ) राभस्यं कार्योपक्रमः, किमपि कार्यं कर्तुमुपक्रमेते ॥ २२ ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथभाष्ये

प्रथमाध्याये प्रथमं ब्राह्मणम् ।

---

१–" तृणसंज्ञास्तु ये दर्भा एकपत्राः स्मृतास्तु ये । ते बर्हिःसंज्ञका दर्भा रत्निमात्राधिकाश्च ये " इति कात्यीये यज्ञपार्श्वे ।
२–उपलक्षणमिति क्वचित्पाठः । ३–( ऐ. ब्रा. ३ । ४ । ५ ) ( ताण्ड्य. ब्रा. १६ । १ ) ।

## अथ द्वितीयं ब्राह्मणम् ।

**अथ शूर्पञ्चाग्निहोत्रहवणीञ्चादत्ते । कर्म्मणे वां व्वेषाय वामिति यज्ञो वै कर्म यज्ञाय हि तस्मादाह कर्मणे वामिति व्वेषाय वामिति व्वेवेष्टीव हि यज्ञम् ॥ १ ॥**

**(मु) अथ व्वाचं यच्छति । वाग्वै यज्ञोऽविक्षुब्धो यज्ञं तनवाऽइत्यथ प्रतपति प्रत्युष्टꣳरक्षः प्रत्युष्टाऽअरातयो निष्टप्तꣳरक्षो निष्टप्ताऽअरातयऽइति वा ॥ २ ॥**

---

अथ शूर्पं चाग्निहोत्रहवणीं चादत्ते--"**कर्म्मणे वां वेषाय वाम्**" ( १ अ. ६ मं. ) इति । यज्ञो वै कर्म्म, यज्ञाय हि । तस्मादाह--कर्मणे वामिति, वेषाय वामिति; वेवेष्टीव हि यज्ञम् ॥ १ ॥

अथ वाचं यच्छति । वाग् वै यज्ञः । अविक्षुब्धो यज्ञं तनवा इति । अथ प्रतपति "**प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयो निष्टप्तꣳरक्षो निष्टप्ता अरातयः**" ( १ अ. ७ मं. ) इति वा ॥२॥

---

पात्रासादनानन्तरं कर्त्तव्यमाह--**अथ शूर्प**मिति । एतच्चादानं हविर्निर्वापार्थम् । वामिति मन्त्रगतद्विवचनलिङ्गादुभे सहादीयेते । अत एव सूत्रे--"शूर्पाग्निहोत्रहवण्यादाय" (श्रौ. सू. २. ३. १०.) इति । इतरेतरयोगद्वन्द्वः । **यज्ञो वा** इत्यादि । यज्ञाय हि तदादानम्; अतः कर्मशब्दः कर्ममात्रपरोऽपि तद्विशेषं यज्ञमेव ब्रूते । इज्यतेऽनेनेति 'यज्ञः' हविः; तदिह निर्वापकाले व्रीहिरूपम् । तदग्निहोत्रहवण्या शूर्पे निर्वपन् वेवेष्टीव' परिवेषणं करोतीव, यथान्नं दर्व्या भोजनपात्रे । अतो वेषाय वामित्युक्तम् । वेवेष्टीत्यत्र परिरूपोपसर्गो लुप्तो निर्दिष्टः । "विष्लृ व्याप्तौ" ( जु. उ. १३ ) "निजां त्रयाणां गुणः श्लौ" ( पा. सू. ४. ४. ७९. ) इत्यभ्यासस्य गुणः । **अथ शूर्प**मित्यथशब्दादनुष्ठेयपदार्थपौर्वापर्यलक्षणं क्रममाहुः । अतस्तद्विशिष्टाः पदार्था विधीयन्ते । ननु चैष चेदनुष्ठेयलक्षणः क्रमः, स च सर्वेषु पदार्थेष्वेक एव, नैकैकपदार्थग इति तद्विशेषणतया तद्विधिभिः कथं विधातुं शक्यते ? तर्हि संघातविशेषणतया तद्विधानेनैव विधीयतामिति चेत्, न, संघातस्याविधेयत्वात्, तस्य चैकत्वेन नियमेनानेकपदार्थाश्रितस्य क्रमस्यासम्भवात् । नैष दोषः । यथा संयोगादय एकैकवस्तुन्यपर्यवसिता अपि वस्त्वन्तरमपेक्ष्यैकत्रापि पर्यवस्यन्तस्तद्विशेषणतया तद्विविभिर्विधीयन्ते, तद्वत् क्रमोपि किं न विधीयते ? न च शब्देनानभिधानादविधानमिति मन्तव्यम् । प्राकृतोपकारवदनभिहितस्यापि वैतत्यलक्षणक्रमस्यार्थाद्बुद्धावुपस्थितस्य विधिसम्भवात् । न चावश्यं वैतत्यलक्षण एव क्रमः; अस्ति ह्यसावानुपूर्व्यलक्षणोऽपि । तथा च यथा--अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयतीति 'क्त्वा'-प्रत्ययेनाभिहितः पौर्वापर्यलक्षणः क्रम एवार्थविशेषणतया विधीयते, एवमत्र अथशब्दैरभिहितो विधीयत इति किमुपपन्नम् ? तदुक्तं जैमिनिना--"श्रुतिलक्षणमानुपूर्व्यं तत्प्रधानत्वात्" ( मी. सू. ५. १. १. इति ॥ १ ॥

**वाग्वै यज्ञ** इति । यच्छति--पदसन्निधानान्नियम्यमानैवेह वाग विवक्षिता, तस्याश्च यज्ञसाधनत्वाद्यज्ञसाध-

---

१-" कर्मणे वामिति शूर्पाग्निहोत्रहवण्यादाय वाचं यच्छति " ( श्रौ. सू. २. ५५ ) । २-' निर्वपति ' इति पाठान्तरम् । ३-' एकैकत्र वस्तुनि ' इति ज. । ' एकैकपर्यवसिता अपि वस्त्वन्तरमपेक्ष्यैकत्राप्यपर्यवस्यन्तः ' इति पाठान्तरम् । ४-इहैवोपरिष्टाद्दीक्षाप्रकरणं समाम्नातं ( का १२ प्र. १ ) ।

देवा ह वै यज्ञं तन्वानाः । (स्ते) तेऽसुररक्षसेभ्य आसङ्गाद्विभयाञ्चक्रुस्तद्य-ज्ञमुखादेवैतन्नाष्ट्रा रक्षाᳬंस्यतोऽपहन्ति ॥ ३ ॥

(न्त्य) अथ प्रैति । ( त्यु ) उर्व्वन्तरिक्षमन्वेमीत्यन्तरिक्षं वाऽ अनु रक्षश्च-रत्यमूलमुभयतः परिच्छिन्नं यथायं पुरुषोऽमूलऽउभयतः परिच्छिन्नोऽन्त-रिक्षमनुचरति तद्ब्रह्मणैवैतदन्तरिक्षमभयमनाष्ट्रं कुरुते ॥ ४ ॥

---

देवा ह वै यज्ञं तन्वानाः । तेऽसुररक्षसेभ्य आसङ्गाद्विभयाञ्चक्रुः । तद्यज्ञमुखादेवैतन्नाष्ट्रा रक्षां-स्यतोऽपहन्ति ॥ ३ ॥

अथ प्रैति--"उर्वन्तरिक्षमन्वेमि" ( १ अ० ७ मं० ) इति। अन्तरिक्षं वा अनु रक्षश्चरत्य-मूलमुभयतः परिच्छिन्नं यथाऽयं पुरुषोऽमूल उभयतः परिच्छिन्नोऽन्तरिक्षमनुचराति । तद्--ब्रह्मणै-वैतदन्तरिक्षमभयमनाष्ट्रं कुरुते ॥ ४ ॥

---

नतामुपपादयति--**आविक्षुब्ध** इति । वाङ्नियमे हि चित्तविक्षोभहेतोर्वाग्व्यवहारस्याभावात्तदैकाग्र्ये सत्यविकलो यज्ञो यतः संपद्यते । क्षुभेरुदात्तोपदेशत्वेऽप्यागमानुशासनस्यानित्यत्वादिडभावः । "क्षुब्धस्वान्त--" (पा. सू. ७. २. १८) इति ज्ञापकात् । शूर्पञ्चाग्निहोत्रहवणीं च प्रतपति--**अथ प्रतपती**ति । शूर्पमग्निहोत्रहवणीं चेत्य-नुषङ्गात्तदुभयमित्यर्थः ! **निष्टप्ता अरातय इति** वेति । व्रीह्यनुष्ठानपक्षे यववाक्यस्य--प्राप्तप्रामाण्यत्यागः, आप्राप्ताप्रामाण्यस्वीकारः, पुनर्यवानुष्ठाने स्वीकृताप्रामाण्यस्य त्यागः, त्यक्तप्रामाण्यस्वीकारश्चेति चत्वारो दोषाः । इत्थं व्रीहिवाक्येऽपि चत्वार इत्यष्टौ दोषा यद्यपि, तथापि गत्यभावाद्विकल्प इत्युक्तं भट्टाचार्यैः—

> " एवमेषोऽष्टदोषोऽपि यद्व्रीहियववाक्ययोः ।
> विकल्प आश्रितस्तत्र गतिरन्या न विद्यते" ( मी. भ. १२. अ. ३. पा. ) इति ।

इह पुनर्वाशब्देनाधस्तादप्यनुकृष्टेन मन्त्रद्वयैपाक्षिकत्वस्य श्रुत्यैवाभिधानान्निकोऽपि दोषः । एतदर्थमेव च "एकार्थास्तु विकल्पेरन्" ( मी. सू. १२. ३. १०. ) इति व्रीहियववदेव न्यायप्राप्तस्यापि विकल्पस्य, वेति स्वशब्देनोपादानम् ॥ २ ॥

मन्त्रकरणकतायै साध्यस्य निरासस्योपयोगसिद्धये निरसनीयानां प्रसक्तिमाह—**देवा ह वा** इति । 'असुर-रक्षसेभ्यः—' इति षष्ठ्यर्थे चतुर्थी । तेषाम् 'आसङ्गात्' संसर्गाद्भीताः । बिभेतेर्लिटि "भीह्रीभृहुवाम्" (पा. सू. ३. १. ३९. ) इत्याम्प्रत्ययः, श्लुभावश्च । नाशयन्तीति 'नाष्ट्राः' आसुर्यः प्रजाः, ताश्च रक्षांसि च 'तत्' अतो 'यज्ञमुखात्' यज्ञप्रारम्भादपहन्ति । 'एतत्' इति क्रियाविशेषणम् ॥ ३ ॥

**अथ प्रैती**ति । शूर्पप्रतपनानन्तरमुर्विति मन्त्रेण हविर्निर्वापार्थं शकटसमीपं 'प्रैति' प्रगच्छेत् । मन्त्रप्रयो-जनमाह--**अन्तरिक्षं वे**ति । यथा वृक्षो मूलैः पृथिवीमनुप्रविष्टस्तिष्ठत्येव, न च गच्छति; यथा व्याघ्रादिरभितः पाशाभ्यां बद्ध्वा ध्रियमाणः नैवं पुरुषो मूलवान्, नाप्युभयतः केनचित् संसर्गिणा प्रतिबद्धः, किन्तु

---

१—"आगमशास्त्रमनित्यम्" ( प. शे. ९५ ) ( म. भा. ८ । ४ । १६ ) । २—अतोऽग्रे क्षुब्धेति निपातितम् इति क्वचित् पुस्तके-ऽधिकमुपलभ्यते । ३—" प्रतपनं प्रत्युष्टं निष्टप्तमिति वा " ( श्रौ. सू. २. ५६. ) । ४—वस्तुतस्तु—" मन्त्राणां सन्निपातित्वादेकार्थानां विकल्पः स्यात्" इति ( मी. सू. १२।३।२९ ) सूत्रस्यैवायं विषयः । ५ " गच्छत्युर्वन्तरिक्षमिति श्रपणस्य पश्चादनस्तिष्ठत्समाङ्गे " ( श्रौ. सू. २. ५७ ) ॥

स वा॑ऽ अन॑स ए॒व गृ॑ह्णीयात्। (द्व) अनो॑ ह वा॑ऽ अ॒ग्रे प॒श्चेव॑ वा॒ऽ इ॒दं य॒च्छाल॒ᳪ स य॒देवा॒ग्रे त॒त्करवा॑णीति त॒स्माद॑नस ए॒व गृ॑ह्णीयात् ॥ ५ ॥

(द्व) भूमा वा॑ऽअनः। (नो) भूमा हि वा॑ऽ अन॒स्तस्मा॒द्यदा॑ ब॒हु भ॒वत्यनो-वा॒ह्यमभू॑दि॒त्याहु॒स्तद्भू॒मानमे॒वैत॒दु॑पैति त॒स्माद॑नस ए॒व गृ॑ह्णीयात् ॥ ६ ॥

(द्य) य॒ज्ञो वा॑ऽ अनः। (नो) य॒ज्ञो हि वा॑ऽ अन॒स्तस्मा॒द॑नस ए॒व य॒जूᳪंषि स॒न्ति न॒ कौ॒ष्ठ॒स्य न॒ कु॒म्भ्यै॒ भ॒स्त्रायै॑ ह॒ स्मर्षयो॑ गृह्ण॒न्ति त॒दृ॒षीन्प्रा॒ति भ॒स्त्रायै॑ य॒जूᳪंष्या॒सु॒स्तान्ये॑त॒र्हि प्राकृ॑तानि य॒ज्ञाद्य॒ज्ञं निर्मि॒मी॑ऽइति त॒स्माद॑नस ए॒व गृ॑ह्णीयात् ॥ ७ ॥

स वा अनस एव गृह्णीयात्। अनो ह वा अग्रे, पश्चेव वा इदम्–यच्छालं; स यदेवाग्रे तत् करवाणीति। तस्मादनस एव गृह्णीयात् ॥ ५ ॥

भूमा वा अनः। भूमा हि वा अनस्तस्माद्–यदा बहु भवति, अनोवाह्यमभूदित्याहुः। तद् भूमानमेवैतदुपैति। तस्मादनस एव गृह्णीयात् ॥ ६ ॥

यज्ञो वा अनः। यज्ञो हि वा अनस्तस्माद्–अनस एव यजूंषि सन्ति। न कौष्ठस्य न कुम्भ्यै।

'परिच्छिन्नः' प्रतिबन्धकासंसृष्टः सन् अन्तरिक्षे विश्रम्भं चरति। तथैव निर्वप्स्यमानं[2] हविरादानार्थं रक्षोऽप्युक्त-विशेषणविशिष्टं सत् तं निर्वप्स्यन्तं पुरुषमनुगच्छेत् अतस्तदेतत्पुरुषेण गम्यमानमन्तरिक्षप्रदेशे 'ब्रह्मणा' उर्वित्यनेनैव मन्त्रेण 'अनाष्ट्रम्' हिंसाकररहितम्। अत एवाभयं कुरुते। 'उरु' विस्तीर्णं प्रतिबन्धक-रक्षोलक्षणमूर्त्तद्रव्यविरहादिति हि मन्त्रार्थः ॥ ४ ॥

अनस एव सकाशाद् ग्रहणे कारणमाह–**अनो ह वा** इति। अन एव हि प्रथमं धान्यस्याधिकरणम्। अनसः सकाशान्नीयमानं धान्यं 'पश्चेव' पश्चादेव। किं तत्? यत् 'शालम्' एतच्छालागतं भवति। "पश्च पश्चा च च्छन्दसि" (पा. सू. ५. ३. ३३.) इति निपातितम्। शालाशब्दाच्छान्दसत्वेन छस्य विकल्पितत्वादण्। यत् 'अग्रे' गृहप्रवेशात्प्रागनसि स्थितम्। अत एव गृहिणामाशयानुपहतं तदेव यज्ञसाधनं करवाणीति योग्यत्वे हेतुः। तस्मादनस एव सकाशात् सोऽध्वर्युर्गृह्णीयान्न शालातः ॥ ५ ॥

अथानसोऽप्यग्रे खलादानीयमानं मूतस्थं[3]मेव किं न निरूप्यते? इत्यत आह–**भूमा वा** इति। मूतस्थं ह्यवाल्पम्, ततो निरूप्यमाणं हविर्हिंसितभिक्षावद्देवा न गृह्णीयुः। अपि स्मर्यते हि–

"आत्मानं पीडयित्वा तु भिक्षां यः संप्रयच्छति।
सा भिक्षा हिंसिता ज्ञेया न सा ग्राह्या कदाचन" इति ॥

बहोर्भावः 'भूमा' भवितारि भावोपचारोऽतिशयार्थः। मूर्तिभूतं ब्रह्मण्यमेवायं पुनातीतिवत्। अतो बहु-तरं भूमा अन इत्यर्थः। तस्यार्थे लोकप्रसिद्धिमाह–**भूमा हीति**। प्रसिद्धिं लोकव्यवहारेण साधयति–'अनो-वाह्यम्' अनसा वोढमहम्। **तदित्यादि**। तदेतदनस्स्थं हविरुपयच्छन् भूयिष्ठमेवोपैति। अतो हिंसितभिक्षा निराकृता ॥ ६ ॥

अनस एव ग्रहणे हेत्वन्तरमाह–**यज्ञो वा** इति। यज्ञसाधनत्वादनसि साधनस्तुत्यै यज्ञत्वोपचारः।

१–'निर्ममा' इति पा. भाष्यसम्मतश्च। २–निर्वर्त्यमान इ. पा.। ३–मूतं बद्धम्। मूतस्थं बद्धावस्थमित्यर्थः।

(दु) उतो पात्र्यै गृह्णन्ति । (न्त्य) अनन्तरायमुतर्हि यजूꣳषि जपेत्स्फ्यमु तर्ह्यधस्तादुपोह्य गृह्णीयाद्यतो युनजाम ततो विमुञ्चामेति यतो ह्येव युञ्जन्ति ततो विमुञ्चन्ति ॥ ८ ॥

---

भस्त्रायै ह स्मर्षयो गृह्णन्ति । तद्वृषीन् प्रति भस्त्रायै यजूंष्यासुः । तान्येतर्हि प्राकृतानि—यज्ञाद्यज्ञं निर्मिमा इति । तस्मादनस एव गृह्णीयात् ॥ ७ ॥

उतो पात्र्यै गृह्णन्ति । अनन्तरायमु तर्हि यजूंषि जपेत् । स्फ्यमु तर्ह्यधस्तादुपोह्य गृह्णीयात्—यतो युनजाम ततो विमुञ्चामेति । यतो ह्येव युञ्जन्ति ततो विमुञ्चन्ति ॥ ८ ॥

---

इज्यतेऽनेनेति करण एव वा ‘ नेङ्[1] ’ प्रत्ययः । वै—शब्दस्तस्य विधिश्रुतिसिद्धं यज्ञसाधनत्वं स्तोतुं स्मारयति । न केवलं श्रुतिसिद्धं तस्य तत्साधनत्वम्, अपि तु प्रत्यक्षादिप्रमाणैरपि तस्य साधनत्वं सिद्धमित्याह—**यज्ञो ही**ति । अनसोऽसाधारण्ये हेत्वन्तरमाह—**तस्मादि**ति । यस्मादनस एव ग्रहणम्, तस्माद्ग्रहणमन्त्राः “ धूरसि ” ( वा. सं. १. ८. ) “ अह्रुतमसि हविर्द्धानम्—” ( वा. सं. १. ९. ) इत्यादयोऽनोऽवयवलिङ्गा दृश्यन्ते । न पुनः कोष्ठ[2]गतस्य—कुम्भी[3]गतस्य वा धान्यस्य । कुम्भी—शब्दस्तन्निष्ठधान्यं लक्षयति, मञ्चाः क्रोशन्तीतिवत् । लुप्तनिर्दिष्टा षष्ठी । ऋषिमतमाह—**भस्त्रा[4]या** इति । षष्ठ्यर्थे चतुर्थी । तस्मिन् पक्षे भस्त्रायाः के मन्त्रा इत्याह—**तद्वृषीनि**ति । उस्त्वर्थे । तदा तु तान्येव यजूंषि भस्त्रायाः प्रतिपादकानि स्युरित्यर्थः । अनःपक्षे हे अनः ! यत् त्वं ‘ धूरसि ’ त्वमुद्भूतमतुलं हविर्द्धानमसीति । भस्त्रापेक्षे तु हे भस्त्रे ! इत्येव विशेषः । मन्त्रदारिद्र्य इव कस्मात्तान्येव ? अन्यानि चेत्, भस्त्रायाः के मन्त्रा इत्यत आह—**तान्येतर्ही**ति । तैरेव यजुर्भिर्ग्रहणे यानि यजूंषि प्रकृतावनस्यासन्, तान्येवैवं सति विकृतौ भस्त्रायामपि स्युः । तथात्वस्यापि किं फलमिति चेत्तत्राह—**यज्ञादि**ति । यज्ञसाधनमन आश्रित्य सकृत्प्रयुज्य तत इदमुक्त्वैव यज्ञं भस्त्रादिकं ‘ निर्ममे ’ अनुतिष्ठानि, इत्येवमनुष्ठातुराशय इत्यर्थः । ननु प्रकृतावेव पक्षान्तरं भस्त्रा, यथा यवः; तत् किमुच्यते प्राकृतानीति ? सत्यम् । प्राकृतमुपदिश्यमानं यथा प्रथमम्, वैकृतन्त्वतिदेशाच्चरमं प्रतीयते; एवं स्वशब्देनाभिधानात्प्रथमप्रतिपत्तेरेव प्राकृतमुच्यते । तल्लक्षितापूर्वसाधनत्वात्तु पश्चात्प्रतीतेर्भस्त्रा विकृतिवद्विकृतिः । अतो भस्त्रायामपि यववदुपदेशादेव धर्मसंबन्धो नातिदेशात् । व्रीहीनवहन्तीति अपूर्वं व्रीहयः प्रकृतिद्रव्यमपहन्तीति यथा, तथाऽनेन पदेनापि भस्त्राविपरिग्रह इति ॥ ७ ॥

पात्रीतो ग्रहणे धर्मविशेषमाह—**उतो पात्र्या** इति । ‘ उतो ’ अपि तु यदि पात्र्यां[6] गृह्णीयात्, तदा धूर्राषाद्यभावेन तदुपस्थानविरहादननुष्ठानकृतं व्यवधानमन्तरायमन्तरेण तत्प्रकाशकयजूंषि “ धूरसि ” “ देवानामसि ” इत्यादीनि जपेत् । तत्रैव धर्मान्तरमाह—**स्फ्यमु तर्ही**ति । तस्मिन् पात्रीपक्षे तस्या अध-

---

१—पा. सू. ३-३-९० । २—यत्र प्रभूतं धान्यं चिरं निधायापि न विक्रीयते तादृग्धान्यसंरक्षकप्रबन्धविशेषः कोष्ठपदवाच्यः । लोके हिन्दीभाषायां ‘ खलियान ’ महाराष्ट्रभाषायां ‘ कोठा ’ ‘ कणगा ’ इति प्रसिद्धम् । ३—एकसंवत्सरपर्याप्तं धान्यं क्रीत्वा सुगुप्त्यै भस्ममिश्रं च कृत्वा यत्र पात्रे निधीयते तत्पात्रं कुम्भीपदवाच्यम् । लोके हिन्दीभाषायां ‘ झाल ’ ‘ मटका ’ ‘ पातला ’ महाराष्ट्रभाषायां ‘ खारा ’ ‘ पंचपात्र ’ इति प्रसिद्धम् । ४ संवत्सरादधिककालपर्याप्तं धान्यं क्रीत्वा यत्रेष्टकादिनिर्मिते स्थाने निधीयते तत्स्थानं भस्त्रापदवाच्यं भवति । लोके हिन्दीभाषायां ‘ बुखारी ’ महाराष्ट्रभाषायां ‘ पेव ’ ‘ बळद ’ इति प्रसिद्धम् । ५—एतच्च पक्षद्वयं ( का. श्रौ. सू. २ । ३ । ३८ ) द्रष्टव्यम् । ६—पात्र्याम् इति कुत्रचित्पाठः । वस्तुतस्तु—पात्र्या इति पञ्चम्यर्थे चतुर्थी । ( का. सू. वृ. २ । ३ । २८ ) इति ।

**तस्य वाऽ एतस्यानसः। (सोऽग्नि) अग्निरेव धूरग्निर्हि वै धूरथ युऽ एनद्वह- न्त्यग्निदग्धमिवैषां व्वहं भवत्यथ युञ्जघनेन कस्तम्भीं प्रऽउगं व्वेदिरेवास्य सा नीडऽएव हविर्द्धानम् ॥ ९ ॥**

---

**तस्य वा एतस्यानसोऽग्निरेव धूः । अग्निर्हि वै धूः । अथ य एनद् वहन्ति–अग्निदग्धमिवैषां वहं भवति । अथ यं जघनेन कस्तम्भीं, प्रउगं–वेदिरेवास्य सा । नीड एव हविर्द्धानम् ॥ ९ ॥**

---

स्तात् स्फ्यमुपनिधाय गृह्णीयात् । यदाह कात्यायनः–" पात्र्यां वा स्फ्योपहितायां धूरीषारोहणानि पात्रीबिले जपति " ( श्रौ. सू. २. ७२. ७३ ) इति । अनसो ग्रहणे स्फ्योपहितपात्रीतो ग्रहणेऽतिशयितं प्रयोजन- माह–**यतो युनजामे**ति । योऽयं स्फ्यमाश्रित्य ' युनजाम ' यज्ञेन योगं प्राप्नवाम, ततस्तस्मिन्नेव स्फ्ये ' विमुञ्चाम–'इति वियोगमपि करवाम । ( इति ) योगवियोगसामानाधिकरण्यसिद्धिः । स्फ्योपहितपात्रीतो ग्रहणपक्षे अनःपक्षादतिशय इत्यर्थः । अयमत्राभिप्रायः–अनसो निर्वापपक्षे हि जुहूपभृतौ शकटस्य धुरोर्निद- ध्यात् । पात्रीतः पुनर्निर्वापे तदाधारभूते स्फ्ये तयोर्निधानं विमोकः । तदुक्तं कात्यायनेन–" घृताचीऽ इति धुरि निदधात्यनसि चेद्ग्रहणम् " "स्फ्ये पात्र्यां चेत्" (श्रौ.सू.२.१३७.१३८) इति । तथाऽपां प्रणयनं च स्फ्येन सहेत्युक्तमापस्तम्बेन–" स्फ्येनोपसंगृह्याविषिञ्चन् हरति " ( आ. श्रौ. सू. १. १६. ८ ) इति । एवं च स्फ्येनैव योगः, स्फ्य एव वियोगात्मको विमोकोऽपीति पात्रीतो ग्रहणे योगवियोगयोः सामानाधिकरण्यलाभो- ऽतिशय इति । अथ तयोर्वैयधिकरण्यात् सामानाधिकरण्योक्तोऽतिशय इत्याशङ्क्य लोकप्रसिद्ध्यनुसरणमतिशय इत्याह–**यतो ह्येवे**ति । सार्वविभक्तिकस्तसिः । यत्रैव योगः, तत्रैव वियोगो न्याय्यः; न हि कर्णे युक्तः कट्या विमुच्यत इत्यर्थः ॥ ८ ॥

अथ धुरः समन्त्रकमभिमर्शनं विधास्यंस्तदुपोद्घातत्वेन देवतारूपतां तस्याः प्रतिपादयति–**तस्ये**त्यादिना । अग्निरेव धूरिति यद्धुरोऽग्न्यात्मकत्वं प्रतिज्ञातम्, तस्योपपादनम्–**अग्निर्हि वा** इत्यादि । अनसो या धूर्बलीवर्द- वहनस्थानम्, तस्याग्न्यात्मकत्वमन्वयव्यतिरेकाभ्यां लोकप्रसिद्धमिति 'हि'–शब्दार्थः । तामेव प्रसिद्धिं दर्शयति– **अथ य एनदि**ति । ' एनद् ' धुराक्षम्, अनसो योगे खलु बलीवर्दा वहन्ति एषाम् ' वहम् ' वहनसाधनं कन्धरूपमङ्गमग्निदग्धमिव दृश्यते । अतो नूनम् ' धूर् ' वोढव्या धूरग्न्यात्मिकेत्यवसीयत इत्यर्थः । शकटा- न्निर्वापस्य प्राशस्त्यातिशयं द्योतयितुं तस्मिन् वेदिहविर्द्धानयोः संपत्तिमाह–**अथ यञ्जघनेने**ति । शकटस्याधः- पतनं वारयितुमीषादण्डप्रोत्तम्भनार्था मेथी ' कस्तम्भी ' । ईषाद्वयं यत्र संस्नुतं ततः प्रत्यग्भागः, तयोरीषयो- र्मध्यदेशः ' प्रउगम् ' । तच्च पश्चाद्विस्तृततम्, पुरस्ताद्भूसीयः । ' वेदिः ' अपि तथाविधा, " त्रिंशत्पदानि पश्चात्तिरश्ची भवति, षट्त्रिंशत्प्राची, चतुर्विंशतिः पुरस्तात् तिरश्ची " (तै. सं. ६. २. ९. ८ ) इति श्रुतेः ।

---

१–स्फ्यो नाम बाहुमात्रः खड्गाकारकाष्ठविशेषः । इति ( तै. सं. १ । ६ । ८ । २ ) सा. भाष्ये । तथा का. श्रौ. सू. ' स्फ्योऽस्याकृतिः ' ( १ । ३ । ३९ ) ' खादिरः स्फ्यः ' इति चेहैव ( ३ । ६ । २ । १२ ) । २–तथाऽत्र वैद्यनाथमिश्रास्तु " स्फ्योपहितायां–स्फ्यस्य उप समीपे हितायामिति ' सूत्रार्थप्रतीतेः । अन्यथा–उपशब्दो व्यर्थः स्यादिति । न चैवं वाच्यं " स्फ्यमुतर्ह्यधस्तादुपोह्ये " ति श्रुतिगतोऽधःशब्दो व्यर्थो भविष्यतीति । स तु स्फ्यस्यानसो लघुत्वात्पात्र्या उपर्यपि निधानं प्राप्नोतीति तद्वारणेन सार्थक इति । अधःशतादधस्तादिव हि श्रेयसोऽपचार इतिवत् । अतएव सूत्रकृत् अधःशब्दं तत्याज । सूत्रकृता त्यक्तत्वादेव श्रुतिरुपेक्ष्यैव वरुणप्रघासमार्जनवदिति । ३–" युगस्य प्रान्तौ धूःशब्देनोच्येते, यावनडुत्स्कन्धयोरुपरि निधीयेते " इति ( का. श्रौ. सू. २ । ३ । १३ वृ. ) ।

(९) स धुरमभिमृशति । धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान्धूर्वति तं धूर्व यं व्वयं धूर्वाम इत्यग्निर्वाऽ एष धुर्यस्तमेतदत्येष्यन्भवति हविर्ग्रहीष्यं-स्तस्माऽ एवैतान्निह्नुते तथो हैतमेषो ऽअतियन्तमग्निर्धुर्यो न हिनस्ति॥ १०॥ तद्ध स्मैतदारुणिराह । (ह्ा) अर्द्धमासशो व्वाऽ अहꣳसपत्नान्धूर्वामी-त्येतद्ध स्म स तदभ्याह ॥ ११ ॥

(ह्ा) अथ जघनेन कस्तम्भीमीषामभिमृश्य जपति । देवानामसि व्वह्नितम-ꣳसस्नितमं पप्रितमं जुष्टतमं देवहूतमम् ॥ अह्रुतमसि हविर्द्धानं दृꣳहस्व

---

स धुरमभिमृशति–" धूरसि, धूर्व धूर्वन्तं, धूर्व तं–योऽस्मान् धूर्वति, तं धूर्व–यं वयं धूर्वामः " ( १ अ० ८ मं० ) इति । अग्निर्वा एष धुर्यः, तमेतदत्येष्यन् भवति–हविर्ग्रहीष्यन् । तस्मा एवैतान् निह्नुते । तथो हैतमेषोऽतियन्तमग्निर्धुर्यो न हिनस्ति ॥ १० ॥

तद्ध स्मैतदारुणिराह–'अर्द्धमासशो वा अहं सपत्नान् धूर्वामि'–इति । एतद्ध स्म स तदभ्याह॥ ११॥

अथ जघनेन कस्तम्भीमीषामभिमृश्य जपति–" देवानामसि वह्नितम ꣳ सस्नितमं पप्रि-

---

अतस्तत्सारूप्यात्प्रउगस्य वेदित्वव्यपदेशः । नीड एवेति । धान्यनिधानाय परिश्रितप्रदेशो नीडः ' । हविर्द्धान-मपि परिश्रितम् । परिश्रयणसाम्यान्नीडस्य हविर्द्धानत्वम् ॥ ९ ॥

औपोद्घातिकं समन्त्रकमभिमर्शनं विधत्ते–स धुरमिति । अस्याभिमर्शस्य प्रयोजनमाह–अग्निर्वा इति । युगस्य धुरि भवोऽग्निः ' धुर्यः ' । " भवे च्छन्दसि " ( पा. सू. ४. ४. ११० ) इतिं यत् । हविर्ग्रहणाय शकटस्य ' परिश्रितप्रदेशम् ' पश्चाद्भागं यास्यन्, ' तं ' धुर्यं पौरस्त्यमग्निमतिक्रमिष्यन् भवति । तदतिक्रमे च स क्रुध्येत् । तस्य प्रसादनाय ' एतद् ' धूरसीति मन्त्रोच्चारणेन ' तस्मै ' एवाग्नये ' निह्नुते ' अपनयति । अतिक्रमजनितं स्वापराधं प्रशमय्य प्रसादयति । " ह्नुङ् अपनयने " धातुः ( अदा. आ. ७२. ) । " श्लाघ-ह्नुङ्स्थाशपाम्–" ( पा. सू. १. ४. ३४ ) इति तच्छब्दाच्चतुर्थी । यश्चास्माकं हिंसिता, योऽप्यस्माभिर्हिंस्यः, ' तं ' द्विविधं शत्रुमेव ' धूर्व ' हिंस्याः, योऽस्मानिति हि मन्त्रार्थः । तथा सत्येवं प्रार्थितोऽग्निरतिक्रामन्तमप्य-ध्वर्युं न बाधत इत्यर्थः ॥ १० ॥

तन्मन्त्रोच्चारणेन शत्रुहिंसनं महर्षिव्यवहारेण संवादयति–तद्धेति । ' तत् ' तत्राभिमर्शनविषये ' एतदारुणिराह स्म ' । एतच्छब्दपरामृश्यं दर्शयति–अर्द्धमासश इति । मासस्यार्द्धमर्द्धमासः । " अर्द्धं नपुंसकम् " ( पा. सू. २. २. २ ) इत्येकवद्भावः । अर्द्धमासेऽर्द्धमासे; पौर्णमास्यां दर्शे च । " सङ्ख्यैकवचनाच्च वीप्सायाम् " ( पा. सू. ५. ४. ४३ ) इति शस्प्रत्ययः । ' एतद्ध स्म '–इति ऋषेरभिप्रायकथनम् । ' एतत् ' इति धूरसीत्यभिमर्शनमित्यर्थः ॥ ११ ॥

अथ समन्त्रकमीषाभिमर्शनं विधत्ते–अथ जघनेनेति । ' कस्तम्भी ' व्याख्याता । अन एवेति । यद्यप्ययं

---

१–शकटस्योपस्थरूपः पश्चाद्भागः । ( का. श्रौ. सू. ७ । ९ । ६ । वृ. ) । २–( का. श्रौ. सू. ८ । ३ । २१ । इति ) । ३–" धूरसीति धूरभिमर्शनम् " श्रौ. सू. २. ५८ ॥ ४–'धौरस्त्यम् ' इति ' धौरेयम् ' इति च पाठान्तरम् । ५–शकटस्य दीर्घ काष्ठमीषा, तदग्रस्य भूमिस्पर्शो मा भूदिति तदाधारत्वेन स्थापितं काष्ठमुपस्तम्भनम् । तस्य पश्चाद्भागे तामीषां स्पृशेदित्यर्थः । ६–" देवानामित्युपस्तम्भनस्य पश्चादीषाम् " ( का. श्रौ. सू. २ । ५९ ) ।

मा ह्वारित्यन एवैतदुपस्तौत्युपस्तुताद्रातमनसो हविर्गृह्णानीति मा ते यज्ञ-पतिर्ह्वार्षीदिति यजमानो वै यज्ञपतिस्तद्यजमानायैवैतदह्वलामाशास्ते ॥१२॥

(स्तेऽथा) अथाक्रमते। विष्णुस्त्वाक्रमतामिति यज्ञो वै विष्णुः स देवेभ्य इमां विक्रान्तिं विचक्रमे यैषामियं विक्रान्तिरिदमेव प्रथमेन पदेन पस्पाराथेदमन्तरिक्षं द्वितीयेन दिवमुत्तमेनैतामेवैष एतस्मै विष्णुर्यज्ञो विक्रान्तिं विक्रमते ॥ १३ ॥

(तेऽथ) अथ प्रेक्षते। (तऽ) उरु वातायेति प्राणो वै वातस्तद्ब्रह्मणैवै-तत्प्राणाय वातायोरुगायं कुरुते ॥ १४ ॥

---

तमं जुष्टतमं देवहूतमम्" (१ अ० ८ मं०) "अह्रुतमसि हविर्द्धानं, दृꣳहस्व, मा ह्वाः" (१ अ० ९ मं०) इति अन एवैतदुपस्तौति–'उपस्तुताद्रातमनसो हविर्गृह्णानि'–इति। "मा ते यज्ञपतिर्ह्वार्षीत्" (१ अ० ९ मं०) इति। यजमानो वै यज्ञपतिः। तद्यजमा-नायैवैतदह्वलामाशास्ते ॥ १२ ॥

अथाक्रमते "विष्णुस्त्वाक्रमताम्" (१ अ० ९ मं०) इति। यज्ञो वै विष्णुः। स देवेभ्य इमां विक्रांतिं विचक्रमे। यैषामियं विक्रान्तिः। इदमेव प्रथमेन पदेन पस्पार, अथेदमन्तरिक्षं द्वितीयेन, दिवमुत्तमेन। एतामु–एवैष एतस्मै विष्णुर्यज्ञो विक्रान्तिं विक्रमते ॥ १३ ॥

अथ प्रेक्षते–"उरु वाताय" (१ अ० ९ मं०) इति। प्राणो वै वातः, तद् ब्रह्मणैवैत-त्प्राणाय वातायोरुगायं कुरुते ॥ १४ ॥

---

मन्त्र ईषाभिमर्शने जप्यः, तथाप्यवयविस्तुत्यावयवोऽपि स्तुतो भवतीत्यभिप्रेत्यैतन्मन्त्रवाक्यं वोढृतमत्वादिगुण-कथनेनान एवोपस्तौति। अभिमृष्टव्येषापरित्यागेन तदवयवि शकटं स्तुवतोऽभिप्रायमाह–उपस्तुतादित्यादिना। 'धातं' तृप्तम्। देवानां तृप्तिजनने पर्याप्तमित्यर्थः। "ध्रै तृप्तौ"–इति भौवादिको (९३२) धातुः। अह्वलामाशास्ते इति। 'यज्ञपतिर्मा ह्वार्षीत्' कुटिलगतिर्मा भवत्विति मन्त्रवाक्ये प्रतिपादनात् ह्वरणनिषेध एव 'अह्वला–' शब्दार्थः ॥ १२ ॥

शकटस्यारोहणं विधत्ते–अथाक्रमत इति। हे शकट! त्वां विष्णुरेवाक्रमताम्, नाहमिति मन्त्रार्थः। विष्णोरेवाक्रमणं किमिति प्रार्थ्यते? इति चेत्, तत्राह–यज्ञो वा इत्यादि। विष्णोर्यज्ञस्य च व्यापनसामा-न्यात्तादात्म्यव्यपदेशः 'एषाम्' देवानामर्थे या 'इयम्' वैष्णवी विक्रान्तिः, इमामिति पूर्वत्रान्वयः। का पुन-रियमिति? तां दर्शयति–इदमेवेत्यादिना। त्रैविक्रमसमये 'इदमेव' परिदृश्यमानं पृथिव्याख्यं स्थानं प्रथमेन पादनिधानेनाक्रममाणः 'पस्पार' पालयामास। "स्पृ प्रीतिपालनयोः" (स्वा. प. ३३) इति धातुः। निगदसिद्धमन्यत् ॥ १३ ॥

पुरोडाशीयानां व्रीहीणां समन्त्रकमवेक्षणं विधत्ते–अथ प्रेक्षत इति। प्राणो वा इति। "वायुः प्राणो

---

१–'रातं'···इति पा.। मूलपुस्तकेषु च सर्वत्र रातमित्येवोपलभ्यते। "रा दाने" अ. प. "रै. शब्दे" भ्वा. प.। २–'ह्वरनिषेधे' इति पा.। ३–'ह्वलह्मल चलने' भ्वा. प.। ४–" विष्णुस्त्वेत्यारोहणम्" (श्रौ. सू. २. ६०)। ५–पुनरिहोपरिष्टात्–(९. ३. ९) द्रष्टव्यम्। ६–'प्रेक्षत उरुवातायेति हविर्घ्यान्' (श्रौ. सू. २. ६१)।

( तेऽथा ) अथापास्यति । ( त्यु ) अपहतꣳरक्ष इति यद्यत्र किञ्चिदापन्नं भवति यद्यु नाभ्येव मृशेत्तन्नाष्ट्रा एवैतद्रक्षाꣳस्यतोऽपहन्ति ॥ १५ ॥

( न्त्यु ) अथाभिपद्यते । यच्छन्तां पञ्चेति पञ्च वाऽ इमा अङ्गुलयः पाङ्क्तो वै यज्ञस्तद्यज्ञमेवैतदत्र दधाति ॥ १६ ॥

(त्यु) अथ गृह्णाति । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं गृह्णामीति सविता वै देवानां प्रसविता तत्सवितृप्रसूत एवैतद्गृह्णात्यश्विनोर्बाहुभ्यामित्यश्विनावध्वर्यू पूष्णो हस्ताभ्यामिति पूषा

---

अथापास्यति–" अपहत ꣳ रक्षः " ( १ अ० ९ मं० ) इति । यद्यत्र किञ्चिदापन्नं भवति, यद्यु नाभ्येव मृशेत्, तन्नाष्ट्रा एवैतद्रक्षांस्यतोऽपहन्ति ॥ १५ ॥

अथाभिपद्यते–" यच्छन्तां पंच " ( १ अ० ९ मं० ) इति । पञ्च वा इमा अङ्गुलयः, पाङ्क्तो वै यज्ञः । तद्यज्ञमेवैतदत्र दधाति ॥ १६ ॥

अथ गृह्णाति–" देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं गृह्णामि " ( १ अ० १० मं० ) इति । सविता वै देवानां प्रसविता । तत्सवितृप्रसूत एवै-

---

भूत्वा नासिके प्राविशत् " ( ऐ. ब्रा. १. ४. २. ४ ) इति श्रुतेः प्राणवातयोरेकत्वम् । ' तत् ' तथा सति ' ब्रह्मणा ' मन्त्रेणैव प्राणात्मकाय ' वाताय ' एतत् ' उरुगायम् ' ऊरुभवनं कीर्त्तनं कुरुत इत्यर्थः ॥ १४ ॥

यद्यत्रेति । ' अत्र ' पुरोडाशीयेषु व्रीहिषु यदि किञ्चित्तृणादिकम् ' आपन्नम् ' क्षिप्तं भवेत्, तत् " अपहतम् " इति मन्त्रेण निरस्येदित्यर्थः । यदि तु तत्र तृणादिकं न भवेत्, तदा पुरोडाशीयं व्रीहिसमूहमेवानेन मन्त्रेणाभिमृशेदित्यर्थः ॥ १५ ॥

हविर्ग्रहणाय समन्त्रकं स्पर्शनं विधत्ते[3]–**अथाभिपद्यत** इति । ' अभिपद्यते ' आलभते[3], स्पृशति । हविर्ग्रहीतुं बध्नन्तु पञ्चाङ्गुलय इत्यर्थः । मन्त्रगतपञ्चशब्दार्थमाह–**पाङ्क्तो वा** इति । " पञ्चपदा पङ्क्तिः[4] " ( ऐ. ब्रा. ६. ४. ४. ) यज्ञोऽपि धानाकरम्भादिपञ्चहविष्क इति पञ्चसंख्यायोगसाम्यात् ' पाङ्क्तः ' । तथा च तैत्तिरीयकम्–" धानाः करम्भः परिवापः पुरोडाशः पयस्या, तेन पङ्क्तिराप्यते; तद्यज्ञस्य पाङ्क्तत्वम्[5] " ( तै. सं. ६. ५. ११. ८. ) इति । ' तत् ' तथा सति ' एतत् ' एतेन पञ्चशब्दोपेतमन्त्रोच्चारणेन ' अत्र ' अस्मिन् शकटे ' पाङ्क्तम् ' यज्ञमेव धारयतीत्यर्थः ॥ १६ ॥

अथ समन्त्रकं हविर्ग्रहणं विधत्ते[6]–**अथ गृह्णातीति** । अनुष्ठेयहविर्ग्रहणानुगुण्यं मन्त्रस्य दर्शयति–**सविता वा** इत्यादिना । ' देवानाम् ' मध्ये ' सविता ' खलु ' प्रसविता ' स्वस्वव्यापारेषु सर्वस्य लोकस्य प्रेरयिता । " सुते

---

१–" अपहतमिति निरस्यत्यन्यत् " " अविद्यमानेऽभिमृशेत् " श्रौ. सू. २. ६२. ६३ । २–" यच्छन्तामित्यालभते " ( श्रौ. सू. २. ६४ ) । ३–" हस्तेनालम्भनमिति " निगमेऽष्टमखण्डे कात्यायनः । ४–( पिङ्गलछन्दःसूत्रे ५ । ६ । १२ । ) ' पञ्च पदानि परिमाणमस्येत्यर्थे " ( पा. सू. ५ । १ । ५९ ) । ५–" भृष्टा धाना यवाः, आज्यसंयुक्ताः सक्तवः करम्भः, व्रीहिजन्या लाजाः परिवापाः, पिष्टविकारः पुरोडाशः, क्षीरविकारः पयस्या " इति तै. सं. १ । ४ । २८ । सा. भाष्ये । ६–' देवस्य त्वेति गृह्णात्याग्नेयं चतुरो मुष्टीन् ' इति ( का, श्रौ. सू. २. ३. २० ) ।

भागदुघोऽशनं पाणिभ्यामुपनिधाता सत्यं देवा अनृतं मनुष्यास्तत्सत्येनैवैतद्गृह्णाति ॥ १७ ॥

(त्य) अथ देवताया आदिशति । सर्वा ह वै देवता अध्वर्युꣳ हविर्ग्रहीष्यन्तमुपतिष्ठन्ते मम नाम ग्रहीष्यति मम नाम ग्रहीष्यतीति ताभ्य एवैतत्सहसतीभ्योऽसमदं करोति ॥ १८ ॥

यद्वेव देवताया आदिशति । यावतीभ्यो ह वै देवताभ्यो हवीꣳषि गृह्यन्त ऋणमु हैव तास्तेन मन्यन्ते यदस्मै तं कामꣳ समर्द्धयेयुर्यत्काम्या गृह्णाति तस्माद्वै देवताया आदिशत्येवमेव यथापूर्वꣳ हवीꣳषि गृहीत्वा ॥ १९ ॥

---

तद् गृह्णाति । आश्विनोर्बाहुभ्यामिति । अश्विनावध्वर्यू । पूष्णो हस्ताभ्यामिति । पूषा भागदुघः, अशनं पाणिभ्यामुपनिधाता । सत्यं देवाः, अनृतं मनुष्याः, तत्सत्येनैवैतद्गृह्णाति ॥ १७ ॥

अथ देवताया आदिशति । सर्वा ह वै देवता अध्वर्युं हविर्ग्रहीष्यन्तमुपतिष्ठन्ते–' मम नाम ग्रहीष्यति, मम नाम ग्रहीष्यति'–इति । ताभ्य एवैतत् सहसतीभ्योऽसमदं करोति ॥ १८ ॥

यद्वेव देवताया आदिशति । यावतीभ्यो ह वै देवताभ्यो हवींषि गृह्यन्ते, ऋणमु हैव तास्तेन

---

प्रेरयतीति सविता " ( निघ. ९. ४. २०. )–( निरु. ७. ७. ९. ) इति तन्नामव्युत्पत्तेः । **अश्विनावध्वर्यू** इति । पुरा खलु देवकर्तृके यज्ञेऽश्विनावध्वर्यू अभूताम्, अतस्तयोरेव बाहुभ्यां हविर्गृह्णामीत्यस्यार्थस्य प्रतिपादको मन्त्रभागो युक्त इत्यर्थः । **पूषा भागदुघ** इति । भागं दोग्धीति ' भागदुघः ' भागप्रद इत्यर्थः । " दुहः कप् घश्च " ( पा. सू. ३. २. ७०. ) इति कप्घत्वे । तादृशः पूषा पाणितलाभ्यां सर्वस्य जनस्य ' अशनम् ' भोज्यमन्नम् ' उपनिधाता ' उपनिधातुमुपस्थापयितुं शीलवान् । ताच्छीलिकस्तृन्[1] । " न लोकाव्ययनिष्ठा–" ( पा. सू. २. ३. ६९ ) इति कर्मणि षष्ठ्याः प्रतिषेधः । तथा च पूषदेवताया हस्ताभ्यां हविर्ग्रहणं युक्ततरमिति भावः । इतोऽप्यश्विनोर्बाहुभ्यामित्यादिकं युक्तमित्याह–**सत्यं देवा** इति । ' देवाः ' इति यत् । तत् ' सत्यम् '; अमरणत्वेन विनाशाभावात् । मनुष्यास्तु तद्वैपरीत्यादनृतरूपाः । तस्मादश्विनोर्बाहुभ्यामित्यादिमन्त्रभागोच्चारणादेवतारूपेण ' सत्येनैव ' तद्धविर्ग्रहणं कृतं भवतीत्यर्थः ॥ १७ ॥

" अग्नये जुष्टम्[2] "–इति देवतादेशनस्यावश्यकर्तव्यतां प्रतिपादयति–**सर्वा ह वा** इत्यादिना । स्वस्वनामग्रहणसंभावनयोपास्थितानां मध्ये कस्याश्चिदग्न्यादिदेवताया आदेशने सति सहवर्तमानाः । ताभ्यः षष्ठ्यर्थे चतुर्थी[3] । तासां देवतानाम् ' असमदम् ' अकलहं परस्परमविरोधं[4] करोति ॥ १८ ॥

प्रकारान्तरेणापि देवतादेशनस्य कर्तव्यतां प्रतिपादयति–**यावतीभ्य** इति । यत्परिमाणविशिष्टाभ्य इत्यर्थः । **ऋणमु हैवेति** । स्वस्वनामोद्देशेन गृहीतं हविर्ऋणमेव ' ताः ' सर्वा देवता मन्यन्ते । कुत इदमवगतम् ? इति चेदुच्यते–' यत्काम्या ' यस्य फलस्येच्छया हविर्गृह्णाति, ' तं कामम् ' काम्यमानं फलविशेषम् ' अस्मै ' यजमानाय ' यद् ' यस्मात् समर्द्धयेयुः । तेन कारणेन हविष ऋणरूपत्वमवगतमित्यर्थः । यत्काम्येति यच्छब्दादिच्छार्थे " काम्यच्च " ( पा. सू. ३. १. ९. ) इति काम्यच्, तदन्तादकारप्रत्यये तृती-

---

१–(पा. सू. ३ । २ । १३५) । २–(माध्यं. सं. १ । १० । २) (का. श्रौ. सू. २ । ३ । २१) । ३–(पा. सू. २ । ३ । ६२ । वा. षष्ठ्यर्थे चतुर्थी वाच्या) । ४–(पा. सू. ३ । ३ । १०२) ।

( त्वाथा ) अथाभिमृशति । भूताय त्वा नारातयऽ इति तद्यतऽएव गृह्णाति तदेवैतत्पुनराप्याययति ॥ २० ॥

( त्य ) अथ प्राङ्प्रेक्षते । स्वराभिविख्येषमिति परिवृतमिव वाऽएतदनो भवति तदस्यैतच्चक्षुः पाप्मगृहीतमिव भवति यज्ञो वै स्वरहर्देवाः सूर्य्य-स्तत्स्वरेवैतदतोऽभिविपश्यति ॥ २१ ॥

---

मन्यन्ते—यदस्मै तं कामं समर्द्धयेयुः, यत्काम्या गृह्णाति । तस्माद्वै देवताया आदिशति । एवमेव यथापूर्वं हवींषि गृहीत्वा ॥ १९ ॥

अथाभिमृशति—" भूताय त्वा नारातये " ( १ अ० ११ मं० ) इति । तद्यत एव गृह्णाति—तदेवैतत्पुनराप्याययति ॥ २० ॥

अथ प्राङ् प्रेक्षते—" स्वराभिविख्येषम् " ( १ अ० ११ मं० ) इति । परिवृतमिव वा एत-दनो भवति । तदस्यैतच्चक्षुः पाप्मगृहीतमिव भवति । यज्ञो वै स्वरहर्देवाः सूर्यः । तत्स्वरेवैतद-तोऽभिविपश्यति ॥ २१ ॥

---

याया लुक् । ( पा. सू. ७ । १ । ३९ ) । **तस्मादिति** । ' तस्मात् ' हविषि देवतानामृणत्वाभिमानात् । फल-प्रदानेन तत्प्रत्यर्पणार्थं तत्र देवतानामावश्यमादेष्टव्यमित्यर्थः । अग्नीषोमीयादिहविरन्तरेऽप्युक्तमतिदिशति—**एवमेवेति** । ' एवमेव ' आग्नेयवदेव ' यथापूर्वम् ' यथाक्रमम्, अग्नीषोमीयादीनि ' हवींषि ' गृह्णीयादित्यर्थः । अत एव मन्त्रकाण्डे आग्नेयहविर्ग्रहणमन्त्रानन्तरम् "अग्नीषोमाभ्यां जुष्टं गृह्णामि " ( वा. सं. १. १० ) इति ग्रहणमन्त्रशेष आम्नातः । कात्यायनोऽप्यसूत्रयत्—" एवमग्नीषोमीयम् " यथादेवतमन्यत् " ( श्रौ. सू. २. ६६ ६७. ) इति ॥ १९ ॥

निरस्तशेषस्य समन्त्रकमभिमर्शनं विधत्ते—**अथेति** । **तद्यत एवेति** । ' तत् ' तत्र शकटे ' यत एव ' यस्मादेव स्थानाद् गृह्णाति, ' तदेव ' तत्स्थानमेवानेन मन्त्रेण पुनः 'आप्याययति' वर्द्धयति । ' भूताय ' प्रभू-ताय समृद्ध्यर्थं त्वामभिमृशामि ' अरातये ' अदानायासमृद्ध्ये नाभिमृशामि, इत्यस्यार्थस्य मन्त्रेण प्रतिपादनात् । सूत्रितं हि—" भूताय त्वेति शेषाभिमर्शनम् " ( श्रौ. सू. २. [illegible]. ८ ) इति ॥ २० ॥

अथ समन्त्रकं प्रागवेक्षणं विधत्ते—**अथ प्राङिति** । **परिवृतमिव** वेत्यादि । परिवेष्टितमेव खल्वनो भवति, धान्यनिधानार्थम् । तन्मध्येऽवस्थितस्याध्वर्योश्चक्षुः ' पाप्मगृहीतमिव ' काचकामलादिदोषदूषितमिव द्रष्टुं न समर्थं भवति, तत्र सहकारिण आलोकस्याभावात् । कथं तस्य दर्शनोपायः इति, तदुच्यते—अवेक्षणमन्त्र-गत-स्वरितिशब्देन स्वर्गवाचिना तत्साधनभूतो यज्ञोऽभिधीयते; अहरादीनि च तेन लक्षणया प्रतिपाद्यन्ते । अत एव ' स्वर् '—शब्दस्य सूर्यनामत्वमुक्तं यास्केन—" स्वरादित्यो भवति " इति । " सु अरणः, सु ईरणः " ( निरु० १. ४. २ ) इति । ' तत् ' तथा सत्येतन्मन्त्रकरणकेन प्रेक्षणेन स्वर्-शब्दप्रति-

---

१—अत्र कर्काशयस्तु—"साकाङ्क्षत्वान्मन्त्रस्य परिशेषयामीत्यध्याहारः । न ह्यत्राभिमर्शनक्रियापदमेकवाक्यतामुपैति । किमिति । भूताय प्रभवायाविच्छेदाय नारातये अदानाय कृपणतया परिशेषयामीत्येकवाक्यता । न ह्यस्याविच्छेदायाभिमर्शनं परिशेषणं वाऽविच्छेदाय भवति । तस्माद्यथोक्त एव वाक्यशेषः " इति । २—" स्वरिति प्राङीक्षते " इति ( का. श्रौ. सू. २ । ३ । २४ ) ।

(त्य) अथावरोहति । दृꣳहन्तां दुर्य्याः पृथिव्यामिति गृहा वै दुर्य्यास्ते हैत ईश्वरो गृहा यजमानस्य योऽस्यैषोऽध्वर्युर्यज्ञेन चरति तं प्रयन्तमनु प्रच्योतोस्तस्येश्वरः कुलं विक्षोब्धोस्तानेवैतदस्यां पृथिव्यां दृꣳहति तथा नानुप्रच्यवन्ते तथा न विक्षोभन्ते तस्मादाह दृꣳहन्तां दुर्य्याः पृथिव्यामित्यथ प्रैत्युर्व्वन्तरिक्षमन्वेमीति सोऽसावेव बन्धुः ॥ २२ ॥

स यस्य गार्हपत्ये हवीꣳषि श्रपयन्ति । गार्हपत्ये तस्य पात्राणि सꣳसादयन्ति जघनेनो तर्हि गार्हपत्यꣳसादयेद्यस्याहवनीये हवीꣳषि श्रपयन्त्याहवनीये तस्य पात्राणि सꣳसादयन्ति जघनेनो तर्ह्याहवनीयꣳसादयेत्पृथिव्यास्त्वा नाभौ सादयामीति मध्यं वै नाभिर्म्मध्यमभयं तस्मादाह पृथिव्यास्त्वा नाभौ सादयामीत्यदित्याऽ उपस्थऽ इत्युपस्थऽ इवैनद-

---

अथावरोहति–" दृꣳहन्तां दुर्याः पृथिव्याम् "–( १ अ० ११ मं० ) इति । गृहा वै दुर्याः । ते हैत ईश्वरो गृहा यजमानस्य–योऽस्यैषोऽध्वर्युर्यज्ञेन चरति–तं प्रयन्तमनु प्रच्योतोः, तस्येश्वरः कुलं विक्षोब्धोः; तानेवैतदस्यां पृथिव्यां दृंहति । तथा नानुप्रच्यवन्ते, तथा न विक्षोभन्ते; तस्मादाह दृꣳहन्तां दुर्याः पृथिव्यामिति । अथ प्रैति–" उर्वन्तरिक्षमन्वेमि "–( १ अ० ११ मं० ) इति । सोऽसावेव बन्धुः ॥ २२ ॥

स यस्य गार्हपत्ये हवींषि श्रपयन्ति गार्हपत्ये तस्य पात्राणि संसादयन्ति । जघनेनो तर्हि

---

पादितं यज्ञादिचतुष्टयमर्थजातं प्राच्यां दिशि प्रथमत उपलभ्यमानम् ' अतः ' अस्माच्छकटस्थानात् ' अभिविपश्यति ' अवलोकयति ॥ २१ ॥

अथ समन्त्रकं शकटादवरोहणं विधत्ते–**अथावरोहती**ति । **ते हैत** इत्यादि । ' अस्य ' यजमानस्य य एषोऽध्वर्युः ' यज्ञेन चरति ' हविर्ग्रहणादिकं यज्ञसाधनमनुतिष्ठति, तं ' प्रयन्तम् ' शकटस्थानात् प्रगच्छन्तम् ' अनु '–सृत्य यजमानस्य ' ते ' गृहाः ' इतः ' अस्माद्भूलोकात् ' प्रच्योतोरीश्वराः ' प्रच्युतिं प्राप्तुं समर्थाः । तथा ' तस्य ' यजमानस्य कुलं ' विक्षोब्धोः ' विक्षोभयितुं समर्थाः । " ईश्वरे तोसुन्कसुनौ " ( पा० सू० ३. ४. १३. ) इति च्यवतेः क्षुभेश्च तोसुन् प्रत्ययः । अनेन मन्त्रेणावरोहन्नध्वर्युः ' तानेव ' यजमानस्य गृहान् ' अस्याम् ' पृथिव्याम् ' दृंहति ' दृढीकरोति । " दृह–दृहि वृद्धौ " ( भ्वा. प० ७३४, ७३५ ) इति धातुः । एवं सत्युक्तदोषनिवृत्तिमाह–**तथे**ति । निरुप्तेन हविषा सहाग्निसमीपगमनं विधत्ते–**अथ प्रैती**ति । उर्वित्ति मन्त्रस्य प्रागाम्नातं ब्राह्मणमत्रातिदिशति–**सोऽसावि**ति । अन्तरिक्षं वा अनुरक्षश्चरति "–इत्यादिको यो वाक्यशेषः, ' सोऽसावेव ' अत्राम्नातस्यापि तस्य मन्त्रस्य ' बंधुः ' अनुकूलः, अतोऽत्राप्यनुषज्य योजनीय इत्यर्थः ॥ २२ ॥

आहृतस्य हविषः सादनं विधत्ते–**स यस्ये**त्यादिना । गार्हपत्य आहवनीये वा यस्मिन्नग्नौ श्रपणम् । तस्य पश्चात् ' पात्रासादनम् ' निरुप्तस्य हविषः सादनं च कर्त्तव्यमित्यर्थः । सादनमन्त्रगत–' नाभि '–शब्दस्या-

---

१–" दृंहन्तामित्यवरोहति " इति श्रौ० सू० २. ७०. । २–" प्रच्यवयितुं समर्थाः " इति पा० । ३–" गच्छन्त्युर्वन्तरिक्षमिति श्रपणस्य पश्चात्सादयति पृथिव्यास्त्वेति "–इति श्रौ. सू. २. ७१. । ४–इहैव ब्रा. पूर्वं ( १।२।४ ) द्रष्टव्यम् ।

भार्षुरिति वाऽआहुर्यत्सुगुप्तं गोपायन्ति तस्मादाहादित्याऽ उपस्थ इत्यग्ने हव्य ꣳ रक्षेति तदग्नये चैवैतद्धविः परिददाति गुप्त्याऽअस्यै च पृथिव्यै तस्मादाहाग्ने हव्य ꣳ रक्षेति ॥ २३ ॥ २ ॥

**इति प्रथमकाण्डे प्रथमप्रपाठके प्रथमाध्याये वा द्वितीयं ब्राह्मणम्॥१॥२॥**

---

गार्हपत्यं सादयेत्। यस्याहवनीये हवींषि श्रपयन्ति, आहवनीये तस्य पात्राणि संसादयन्ति। जघनेनो तर्ह्याहवनीयं सादयेत्–"पृथिव्यास्त्वा नाभौ सादयामि"–( १ अ. ११ मं. ) इति। मध्यं वै नाभिर्मध्यमभयं तस्मादाह–पृथिव्यास्त्वा नाभौ सादयामीति। "अदित्याऽउपस्थे-" ( १ अ. ११ मं. ) इति उपस्थ इवैनदभार्षुरिति वा आहुर्यत्सुगुप्तं गोपायन्ति, तस्मादाह–अदित्याऽउपस्थ इति। "अग्ने हव्यꣳरक्ष–" ( १ अ. ११ मं. )। इति। तदग्नये चैवैतद्धविः परिददाति गुप्त्या, अस्यै च पृथिव्यै; तस्मादाह–अग्ने हव्य ꣳ रक्षेति ॥ २३ ॥ २ ॥ ( १।२ )

---

भिप्रेतमर्थमाह–**मध्यं वा** इति। मनुष्यादिशरीरेषु नाभेर्मध्यदेशेऽवस्थानात् पृथिव्या नाभिरिति मध्यमेवोच्यते। तच्च मध्यम् 'अभयम्' भयरहितम्; प्रान्तदेशे हि चौरव्याघ्रादिभयम्। अतः पृथिव्याः संबन्धिनि राक्षसादिभयरहिते स्थाने त्वां सादयामि इति मन्त्रभागस्यार्थः। "अदित्या उपस्थे" इति मन्त्रस्य द्वितीयभागं व्याचष्टे–**उपस्थ इवेति**। 'यद्' वस्तु 'सुगुप्तम्' सुष्ठु रक्षितं यथा भवति तथा 'गोपायन्ति' रक्षन्ति। एतत् 'उपस्थ इव' उत्सङ्ग इव। उदरमध्य इव वा। 'अभार्षुः' भृतवन्त इति खलु वदन्ति लौकिकाः। अतश्च यस्मिन् स्थाने सादितं हविः सुगुप्तं भवति। तत् स्थानमुपस्थशब्देन मन्त्रगतेन विवक्षितम्। अभार्षुरिति "भृञ् भरणे" ( भ्वा. उ. ९२३ ) इत्यस्माल्लुङि सिचि वृद्धिः ( पा. सू. ७. २. १. ) 'गोपायन्ति' इति "गुपूधूपविच्छि" ( पा. सू. ३. १. २८. ) इति आयप्रत्ययः। अन्तिमं भागमाचष्टे–**अग्ने हव्यमिति**। "इयं वा अदितिः" ( ऐ. ब्रा. ३. ६. ७. ) ( तै. सं ३. २. ४. ७. ) इति श्रुतेः। अदितिर्हि पृथ्वी तस्याश्चाधिपतिरग्निः[1]; स चात्र गार्हपत्यरूप आहवनीयरूपो वा तस्मै च 'अग्नये' तेनाधिष्ठितायै पृथिव्यै च रक्षणार्थम्। 'एतद्धविः' अनेन मन्त्रभागेन दत्तं भवतीत्यर्थः ॥ २३ ॥ २ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथभाष्ये
प्रथमाध्याये द्वितीयं ब्राह्मणम्॥ १ ॥ २ ॥

---

१–"पतिः पृथिव्याः" ( माध्यं. सं. ३। १२ ) ( निरु. ७।२।१; ३।१ )।

## अथ तृतीयं ब्राह्मणम्।

पवित्रे करोति। पवित्रे स्थो वैष्णव्याविति यज्ञो वै विष्णुर्यज्ञियेस्थऽ-इत्येवैतदाह ॥ १ ॥

ते वै द्वे भवतः। (तोऽ) अयं वै पवित्रं योऽयं पवते सोऽयमेकऽइवैव पवते सोऽयं पुरुषेऽन्तः प्रविष्टः प्राङ् च प्रत्यङ् च ताविमौ प्राणोदानौ तदेतस्यैवानुमात्रां तस्माद्द्वे भवतः ॥ २ ॥

---

### प्रोक्षणम्।

पवित्रे करोति--"पवित्रे स्थो वैष्णव्यौ" ( १ अ. १२ मं. ) इति। यज्ञो वै विष्णुः। यज्ञिये स्थ इत्येवैतदाह ॥ १ ॥

ते वै द्वे भवतः। अयं वै पवित्रम्--योऽयं पवते। सोऽयमेक इवैव पवते। सोऽयं पुरुषेऽन्तः प्रविष्टः प्राङ् च, प्रत्यङ् च। ताविमौ प्राणोदानौ। तदेतस्यैवानुमात्राम्। तस्माद् द्वे भवतः ॥ २ ॥

---

पवित्रकरणमन्त्रगतस्य वैष्णव्याविति पदस्य तात्पर्यमाह--**यज्ञो वा** इति। वेवेष्टि व्याप्नोतीति व्युत्पत्त्या यज्ञ एव विष्णुः। तथा च मन्त्रगतस्य वैष्णव्याविति शब्दस्य, हे दर्भनाड्यौ! युवां यज्ञसम्बन्धिन्यावेव भवथ इत्ययमर्थः प्रतिपादितो भवतीत्यर्थः ॥ १ ॥

संख्यान्तरं वारयितुं पवित्रयोर्द्वित्वं विधत्ते--**ते वा** इति। तदेतदुपपादयति--**अयं वा** इति। 'यः' पवमानो वायुः, अयमेव 'पवित्रम्' पवनसाधनम्। शुद्धिहेतुः। "पुवः संज्ञायाम्" ( पा. सू. ३. २. १८९. ) इति करण इत्रप्रत्ययः। "पन्थानश्च विशुद्ध्यन्ति सोमसूर्यांशुमारुतैः" इत्यादिस्मृतेः ( नि. सं. २३. ४०. ) वायोः शुद्धिहेतुत्वम्। **एक इवैवेति**। 'सः' च बाह्ये वर्तमानो वायुरेकरूप एव वाति, 'सः' एव पुरुषशरीरानुप्रविष्टः सन् वृत्तिभेदेन 'प्राङ् च प्रत्यङ् च चरति'। इडापिङ्गलादिनाडीद्वारा बहिर्निर्गच्छन् प्राणः प्राङित्युच्यते, तयैव द्वारा पुनरन्तः प्रविशन् प्रत्यङ्ङिति; तावेतौ वृत्तिभेदौ 'प्राणोदानौ'--इत्युच्येते। तत्र प्राङ् संचरन् प्राणः 'उद्' ऊर्द्ध्वदेशादानयाति, अन्तः प्रविश्यानुगुणं चेष्टत इति 'उदानः'। तस्य 'च' शब्देन प्रत्यङ्मुखोऽपानो विवक्षितः, न तूत्क्रान्तिहेतुरुदानवृत्तिरिति; तस्या ऊर्द्ध्वमुखत्वेन प्रत्यङ्ङुत्क्रमानुपपत्तेः। अत एव तैत्तिरीयके समानप्रकरणे पवित्रयोः प्राणापानरूपत्वमाम्नायते-- "प्राणापानौ पवित्रे यजमान एव प्राणापानौ दधाति" ( २. १. १०. २. ) इति। एवं द्विधाभिन्नस्यैतस्यैव वाय्वाख्यस्य पवित्रस्य 'मात्राम्' परिमाणम् 'अनु'--सृत्य, तत्पवित्रयोर्द्वित्वम् ॥ २ ॥

---

१--वैष्णवे इति प्राप्ते 'व्यत्ययो बहुलम्' इति ( पा. सू. ३। १। ८५ ) स्त्रीत्वम्। इति मही. भा.। २--( निघ. ३। १७। १२ ) ( निरु. १२। १। ७ )। ३--'विष्णुर्वै यज्ञः' इति ( तै. सं. २। १। ८। ३ ), ( ऐ. ब्रा. १। ३। ४ )।

(त्रो॒ऽथो) अथो॒ऽअपि॒ त्रीणि॑ स्युः। (व्या॑) व्या॒नो हि तृ॒तीयो॒ द्वे॒ त्वे॒व भ॑वत॒स्ताभ्या॑मे॒ताः प्रो॑क्ष॒णीरु॒त्पूय॒ ताभिः॒ प्रो॑क्षति॒ तद्यदे॒ताभ्या॑मु॒त्पुना॑ति ॥ ३ ॥

वृ॒त्रो ह॒ वा॒ऽ इ॒द ᳝ᳫ सर्व्वं॑ वृ॒त्वा शि॒श्ये। य॒दि॒दमन्त॑रेण॒ द्यावा॑पृथि॒वी स॒ य॒दि॒द ᳝ᳫ सर्व्वं॑ वृ॒त्वा शि॒श्ये त॒स्माद्वृ॒त्रो नाम॑ ॥ ४ ॥

---

अथो अपि त्रीणि स्युः। व्यानो हि तृतीयः। द्वे त्वेव भवतः। ताभ्यामेताः प्रोक्षणीरुत्पूय ताभिः प्रोक्षति। तद्यदेताभ्यामुत्पुनाति ॥ ३ ॥

वृत्रो ह वा इदं सर्वं वृत्वा शिश्ये—यदिदमन्तरेण द्यावापृथिवी। स यदिदं सर्वं वृत्वा शिश्ये—तस्माद् वृत्रो नाम ॥ ४ ॥

---

त्रित्वपक्षमभ्युपन्यस्यति--**अथोऽपी**ति। पक्षान्तरद्योतकः 'अथो अपि' शब्दः। तत्रोपपत्तिः--**व्यानो ही**ति। मुख्यपवित्रस्य वायोः प्राणोदानवद् व्यानाख्यो वृत्तिभेदस्तृतीयः 'हि' यस्माद् विद्यते तस्मात्पवित्रत्रित्वमप्युक्तमित्यर्थः[1]। द्वित्वपक्षमेव निगमयति—**द्वे त्वेवे**ति। "अथ यः प्राणापानयोः सन्धिः, स व्यानः" (छा. उ. १. ३. ३.) इति श्रुतेर्व्यानस्य सन्धिरूपतया तदुभयानतिरिक्तत्वाद् द्वित्वपक्ष एव श्रेयानित्यर्थः। कात्यायनस्तु पक्षद्वयमपि सूत्रयामास—"कुशौ समावप्रशीर्णाग्रावनन्तर्गर्भौ कुशैश्छिनत्ति पवित्रे स्थ इति" "त्रीन् वा" (श्रौ. सू. २. ७५. ७६) इति। अथोत्पवनं विधत्ते[2]—**ताभ्यामि**ति। प्रोक्षत्याभिरिति 'प्रोक्षण्यः[3]'-आपः। करणे ल्युट् (पा. सू. ३. ३. ११७)। 'ताभिः[4] प्रोक्षति' इत्युत्पवनस्य प्रयोजनकथनम्; न तु प्रोक्षणविधिः। यस्मादुत्पूताभिरद्भिः प्रोक्षणं कर्तव्यम्, तस्मात् पवित्राभ्यां तासामुत्पवनं कार्यमित्यर्थः। तदेतदुत्पवनं स्तोतुमनुवदति—**तद्यदि**ति ॥ ३ ॥

उत्पवननिवर्त्यामशुद्धिं दर्शयितुमितिहासमुदाहरति—**वृत्रो** हेति। **वृत्वा शिश्ये** इति। आवृत्य शयनं कृतवान्। शीङो लिटि (अदा. आ.) "एरनेकाचः—" (पा. सू. ६. ४. ८२.) इति यण्। **द्यावापृथिवी** इति। द्यौश्च पृथिवी च द्यावापृथिव्यौ (पा. सू. ६। ३। ३०) इति द्यावादेशः। "अन्तरान्तरेण" (पा. सू. २. ३. ४.) इति द्वितीया। द्यावापृथिव्योर्मध्य इत्यर्थः। वरणाद् 'वृत्र'[5] इति नाम निर्वक्ति—**स यदि**ति ॥ ४ ॥

---

१—"स वा अयं प्राणस्त्रेधा विहितः प्राणोऽपानो व्यान इति" (ऐ. आ. २. ४. ५.)। २—"हविर्ग्रहण्यामपः कृत्वा ताभ्यामुत्पुनाति सवितुर्व इति" "ताः स्थानं तयोः" (श्रौ. सू. २. ७७. ७८.)। ३—"प्रणीताः, प्रोक्षणीः, उपसर्जनीः, मदन्तीः, वसतीवरीः, पन्नेजनीयाः, निग्राभ्याः, अभिषेचनीयाः इत्यपां पर्यायशब्दाः" इति निगमे सप्तमखण्डे कात्यायनः। ४—"ताभ्यामेताः प्रोक्षणीरुत्पूय ताभिः प्रोक्षति" इति श्रुतेः पवित्रयोः प्रोक्षण्युत्पवन एव प्रोक्षणीनामेव च प्रोक्षणे च विधानान्न पवित्राभ्यां प्रोक्षणं हविःपात्रादीनामिति वैद्यनाथमिश्राः। ५—"यदिमाँल्लोकानवृणोत्, तद् वृत्रस्य वृत्रत्वम्"—इति (तै. सं. २. ४. १२.२.)। "वृत्रो वृणोतेर्वा, वर्ततेर्वा, वर्द्धतेर्वा" इत्यादिनिरु. २। ५। ३। "तत्को वृत्रः? मेघ इति नैरुक्ताः, त्वाष्ट्रोऽसुर इत्यैतिहासिकाः, अपाञ्च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते, तत्रोपमार्थे न युद्धवर्णा भवन्ति" इत्यादि च तत्रैव २। ५। २।

तमिन्द्रो जघान । स हतः पूतिः सर्वतऽएवापो ऽभिप्रसुस्राव सर्वत इव ह्ययꣳ समुद्रस्तस्माद् हैका आपो बीभत्साञ्चक्रिरे ताऽउपर्युपर्यतिपुप्लुविरेऽत इमे दर्भास्ता हैताऽअनापूयिता आपोऽस्ति वाऽइतरासु सꣳसृष्टमिव यदेना वृत्रः पूतिरभिप्रास्रवत्तदेवासामेताभ्यां पवित्राभ्यामपहन्त्यथ मेध्याभिरेवाद्भिः प्रोक्षति तस्माद्वाऽएताभ्यामुत्पुनाति ॥ ५ ॥

सऽ उत्पुनाति । सवितुर्व्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिरिति सविता वै देवानां प्रसविता तत्सवितृप्रसूतऽएवैतदुत्पुनात्यच्छिद्रेण पवित्रेणेति यो वाऽ अयं पवतऽ एषोऽच्छिद्रं पवित्रमेतेनैतदाह

---

तमिन्द्रो जघान । स हतः पूतिः सर्वत एवापोऽभिप्रसुस्राव । सर्वत इव ह्ययं समुद्रः । तस्माद्ध हैका आपो बीभत्साञ्चक्रिरे । ता उपर्युपर्यतिपुप्लुविरे । अत इमे दर्भाः । ता हैता अनापूयिता आपः । अस्ति वा इतरासु संसृष्टमिव–यदेना वृत्रः पूतिरभिप्रास्रवत् । तदेवासामेताभ्यां पवित्राभ्यामपहन्ति । अथ मेध्याभिरेवाद्भिः प्रोक्षति । तस्माद्वा एताभ्यामुत्पुनाति ॥ ५ ॥

स उत्पुनाति–" सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः " ( १ अ० १२ । १ ) इति । सविता वै देवानां प्रसविता, तत्सवितृप्रसूत एवैतदुत्पुनाति–अच्छिद्रेण

---

**स हत** इत्यादि । पूतिर्दुर्गन्धः । सर्वत एवापोऽभिलक्ष्य प्रस्रुतोऽभूत् । अत एव खल्वयमपि समुद्रः, सर्वतः सर्वमावृत्य वर्तते । ' तस्माद् ' दुर्गन्धात् स्रुताद् वृत्रादिमा आपो ' बीभत्साञ्चक्रिरे ' जुगुप्सन्ते स्म । " मान्बधदान्शान्भ्यः "–( पा. सू. ३. १. ६ ) इति बधेर्वैरूप्ये सन्-प्रत्ययः । बीभत्समानाः ' ताः ' आपः तत्संस्पर्शं परिहर्तुमुपर्युपरि वर्तमानाः ' अतिपुप्लुविरे[1] ' जलाशयमतिक्रम्य तीरदेशं प्राप्ता आसन् । "प्लुङ् गतौ" ( भ्वा. आ. ९८३ ) इति धातुः । प्लुताश्च 'ताः' आपो दर्भात्मना परिणताः । अयमर्थस्तैत्तिरीयकेऽपि विस्पष्टमाम्नातः–" इन्द्रो वृत्रमहन्त्सोऽपोऽभ्यम्रियत, तासां यन्मेध्यं यज्ञिय ꣳ सदेवमासीत्; तदपोदक्रामत्. ते दर्भा अभवन् " ( तै० ब्रा० ३. २. ५. १ ) इति । **अनापूयिता** इति । ' आ ' समन्तात् पूयं दौर्गन्ध्यं प्राप्ता आपूयिताः, न आपूयिताः ' अनापूयिताः ' । " पूयी विशरणे दुर्गन्धे च–" ( भ्वा. आ. ४८५ ) इत्यस्मात् कर्तरि निष्ठायां छान्दस इट् । यद्वा ' आ ' समन्तात् पूयमासां संजातमिति ' आपूयिताः ' । " तदस्य सञ्जातम- " ( पा० सू० ५. २. ३६ ) इति तारकादित्वादितच् । **इतरास्विति** । दर्भात्मना परिणतजलव्यतिरिक्तासु अमेध्यत्वापादकं किञ्चित्संसृष्टमिव भवति । अत्र हेतुः–**यदेना** इति । एवमनापूयितापूविकारदर्भमयाभ्याम् ' आसाम् ' अपामुत्पवनं कुर्वन् पूयसंसर्गकृतम् ' तद् ' अमेध्यत्वमपहन्ति । ततश्च विधास्यमानं प्रोक्षणं च ' मेध्याभिः ' मेधार्हाभिः शुद्धाभिरेवाद्भिः कृतं भविष्यतीत्यर्थः । 'तस्माद् '–इत्युत्पवननिगमनम् ॥ ५॥

विहितमुत्पवनमनूद्य मन्त्रं विधत्ते–**स** इति । सविता वा इत्यादि[2] पूर्ववत् । अच्छिद्रशब्दार्थमाह–**यो वा**

---

१–' पुप्लुविरे ' इति भाष्यसम्मतः पाठः । २–" देवानां मध्ये सविता खलु प्रसविता स्वस्वव्यापारेषु सर्वस्य लोकस्य प्रेरयिता " सूते प्रेरयतीति सविता " इति तन्नामव्युत्पत्तेः । " इहैव ब्राह्मणे पूर्वं ( १ । २ । १७ सा० भाष्ये ) ।

सूर्य्यस्य रश्मिभिरित्येते वाऽउत्पवितारो यत्सूर्य्यस्य रश्मयस्तस्मादाह सूर्य्यस्य रश्मिभिरिति ॥ ६ ॥

ताः सव्ये पाणौ कृत्वा । दक्षिणेनोदिङ्गयत्युपस्तौत्येवैनाऽएतन्महयत्येव देवीरापोऽअग्रेगुवोऽअग्रेपुवऽइति देव्यो ह्यापस्तस्मादाह देवीरापऽइत्यग्रेगुवऽइति ता यत्समुद्रं गच्छन्ति तेनाग्रेगुवोऽग्रेपुव इति ता यत्प्रथमाः सोमस्य राज्ञो भक्षयन्ति तेनाग्रेपुवोऽग्रऽइममद्य यज्ञं नयताग्रे यज्ञपतिꣳ सुधातुं यज्ञपतिं देवयुवमिति साधु यज्ञꣳ साधु यजमानमित्येवैतदाह ॥ ७ ॥

---

पवित्रेणेति । यो वा अयं पवते—एषोऽच्छिद्रं पवित्रम् । एतेनैतदाह—सूर्यस्य रश्मिभिरिति । एते वा उत्पवितारः—यत्सूर्यस्य रश्मयः । तस्मादाह—सूर्यस्य रश्मिभिरिति ॥ ६ ॥

ताः सव्ये पाणौ कृत्वा दक्षिणेनोदिङ्गयति, उपस्तौत्येवैनाः, एतन्महयत्येव—"**देवीरापो ऽअग्रेगुवोऽअग्रेपुवः**" ( १ अ० १२ मं० ) इति । देव्यो ह्यापः तस्मादाह—देवीराप इति । अग्रेगुव इति । ता यत्समुद्रं गच्छन्ति, तेनाग्रेगुवः । अग्रेपुव इति । ता यत्प्रथमाः सोमस्य राज्ञो भक्षयन्ति तेनाग्रेपुवः । "**अग्र इममद्य यज्ञं नयताग्रे यज्ञपतिꣳ सुधातुं यज्ञपतिं देवयुवम्**" ( १ अ० १२ मं० ) इति । साधु यज्ञं साधु यजमानम्—इत्येवैतदाह ॥ ७ ॥

---

इति । योऽयं वायुः पवते, एष खल्वविच्छेदेन सर्वत्र वर्तमानश्छिद्ररहितं पवनसाधनम् । **एते वा** इति । 'एते' सूर्यस्य रश्मयः, 'उत्' उत्कृष्टम्, पवितारः' शोधकाः, अतस्तैः करणभूतैरुत्पवनं युक्तमित्यर्थः ॥ ६ ॥

उत्पवनानन्तरं कर्त्तव्यं विधत्ते—**ता** इति । 'ताः' प्रोक्षणीरपोऽग्निहोत्रहवण्या पात्रेण साकं सव्ये पाणौ धारयन् "देवीरापः" इति मन्त्रेण दक्षिणेन हस्तेन 'उदिङ्गयति' ऊर्ध्वं सेचनेन चालयति । "इगि रिगि लिगि गत्यर्थाः" ( भ्वा० प० १९३--१९५ ) इति धातुः । मन्त्रतात्पर्यमाह—**उपस्तौती**ति । 'एतत्' एतेन, देवीराप इति मन्त्रपठनेन 'एनाः' अपः प्रशंसत्येव । तेन च प्रशंसनेन 'महयति' पूजयत्येव । कस्तर्ह्यासां स्तावकस्तथाविधो मन्त्र इति तं दर्शयति—**देवीरि**ति । स्तुतिरूपतामुपपादयति—**देव्य** इत्यादिना । अपां देवतारूपत्वेन देवीत्वं प्रसिद्धमिति 'हि'—शब्दार्थः ।

**ता यदि**त्यादि । 'अग्रे' पुरतो वर्तमानं समुद्रं गच्छन्तीति 'अग्रेगुवः' । अग्रेगूशब्दस्य समुद्रगामित्वं विवक्षितमिति भावः । 'ऊङ् च गमादीनाम्' इति गमेरूकारः ( पा. सू. ६ । ४ । ४० । अत्रत्यं वार्तिकम् १ ) । **ता यत्प्रथमा** इति । आपः खल्वभिषवार्थमासिच्यमाना यष्टव्यदेवताभ्यः पूर्वं सोमरसमास्वादयन्ति । तेन सोमपानेन 'अग्रे' प्रथमं स्वात्मानं पुनन्तीति 'अग्रेपुवः' । उभयत्र "तत्पुरुषे कृति बहुलम्" पा० सू. ६. ३. १४ ) इति अग्रशब्दात् सप्तम्या अलुक् ।

**साधु यज्ञमि**त्यादि । 'अग्र इमम्' इत्यत्र 'अग्र'—शब्दः प्राशस्त्यवाची । 'अग्रे' प्रशस्ते 'अद्य' अस्मिन् काले 'इमम्' यज्ञं प्रापयतेति प्रतिपादयता मन्त्रेण 'साधु यज्ञं नयत'—इत्येवोक्तं भवति, प्राशस्त्यं

---

१—"सव्ये कृत्वा दक्षिणेनोदिङ्गयति देवीराप इति" इति श्रौ० सू० २. ७९. । २—'आपो देवी' रित्यादि–तै० सं० १. १. ५. २. तै० ब्रा० ३. २. ५ । ३—पुनातिश्च गमादेरन्तर्गतः ।

यु॒ष्मा॑ऽ इ॒न्द्रो॑ ऽवृणीत वृत्र॒तू॑र्य्ये॑ऽ इ॒ति । ( त्ये ) ए॒ता॑ऽ उ॒ ह्यी॑न्द्रो॑ ऽवृणीत वृ॒त्रेण॑ स्पर्द्ध॑मानऽ ए॒ता॒भि॒र्ह्ये॑न॒मह॒ꣳस्त॒स्मा॑दाह यु॒ष्मा॑ऽ इ॒न्द्रो॑ ऽवृणीत वृत्र॒तू॑र्य्ये॑ऽ इ॒ति ॥ ८ ॥

यू॒यमि॑न्द्रमवृणीध्वं वृत्र॒तू॑र्य्ये॑ऽ इ॒ति । (त्ये) ए॒ता॑ऽ उ॒ ह्यी॑न्द्रमवृणत वृ॒त्रेण॑ स्पर्द्ध॑मानमे॒ता॒भि॒र्ह्ये॑न॒मह॒ꣳस्त॒स्मा॑दाह यू॒यमि॑न्द्रमवृणीध्वं वृत्र॒तू॑र्य्ये॑ऽइ॒ति ॥९॥

प्रोक्षि॑ताः स्थे॒ति । त॒दे॒ता॒भ्यो नि॒ह्नु॒ते॑ऽथ ह॒विः प्रो॑क्षत्ये॒को वै॒ प्रो॒क्षण॑स्य॒ ब॒न्धु॒र्मे॑ध्य॒मे॒वै॒तत्क॑रो॒ति ॥ १० ॥

---

" युष्मा॑ऽइन्द्रो॑ऽवृणीत वृत्रतूर्ये "–( १ अ० १३ मं० ) इति । एता उ हीन्द्रोऽवृणीत वृत्रेण स्पर्द्धमानः । एताभिर्ह्येनमहन्, तस्मादाह–युष्मा इन्द्रोऽवृणीत वृत्रतूर्य इति ॥ ८ ॥

" यूयमिन्द्रमवृणीध्वं वृत्रतूर्ये " ( १ अ० १३ मं० ) इति । एता उ हीन्द्रमवृणत वृत्रेण स्पर्द्धमानम् । एताभिर्ह्येनमहन्, तस्मादाह–यूयमिन्द्रमवृणीध्वं वृत्रतूर्य इति ॥ ९ ॥

" प्रोक्षिताः स्थ "–( १ अ० १३ मं० ) इति । तदेताभ्यो निह्नुते । अथ हविः प्रोक्षति । एको वै प्रोक्षणस्य बन्धुः–मेध्यमेवैतत्करोति ॥ १० ॥

---

प्राप्तस्य साधुत्वनियमात् । यज्ञस्य पतिः यज्ञपतिः, तमिति । यज्ञशब्देन यजमानो विवक्षित इति व्याचष्टे–**साधु यजमान**मिति । अत्रापि पूर्ववत् ' अग्ने ' शब्दव्याख्यानम् । साध्विति विशेषणम् ॥ ७ ॥

**युष्मा इन्द्र** इति । हे आपः ! युष्मान् वृत्रं हन्तुकाम इन्द्रः साहाय्यकरणार्थं प्रार्थयामास । ताश्च यूयं वृत्रशरीरनिरुद्धा विस्रम्भगमनार्थं वृत्रं हन्तुमिन्द्रं प्रार्थितवत्यः । अत ईदृग्विधं परस्परप्रार्थनं युष्मा इन्द्र इत्यादिना मन्त्र[2]भागेन प्रतिपाद्यत इत्यर्थः ॥ ८ ॥ ९ ॥

**तदेताभ्य** इति । यद्यपि प्रोक्षणीनामपां स्वातिरिक्तजलेन शुद्ध्यर्थं प्रोक्षणं नास्ति, तथापि " प्रोक्षिताः स्थ "–इति स्वात्मनैव प्रोक्षिता भवतीति मन्त्रेण प्रतिपादनात् प्रोक्षणवत्त्वसिद्धेः ' तत् ' तेन मन्त्रपाठेनाप्रोक्षणजनितमपराधम् ' एताभ्यः ' प्रोक्षणीभ्यः ' निह्नुते ' अपनयति । प्रोक्षणपात्रगतेनैवोदकेन तत्पात्रगतमुदकमनेन मन्त्रेण प्रोक्षितव्यमिति ता[3]त्पर्यार्थः । अत एवोक्तं सूत्रकृता कात्यायनेन–" प्रोक्षिताः स्थेति तासां प्रोक्षणम् " ( श्रौ० सू० २. ८० ) इ[4]ति । तैत्तिरीयकश्रुतिस्तु एतन्मन्त्रपठनमेवासां प्रोक्षणं मेने, यदाह–" प्रोक्षिताः स्थेत्याह तेनापः प्रोक्षिता " इति ( तै. सं. १ । १ । ५ । ३ ।, तै. ब्रा. ३ । २ । ५ ।) एवं संस्कृताभिरद्भिर्हविषः प्रोक्षणं विधत्ते–**अथ हवि**रिति । वक्ष्यमाणस्य हविःप्रोक्षणविधिशेषार्थवादस्य सर्वप्रोक्षणविधिसाधारण्यमाह–**एको वा** इति । ' वन्धुः ' अनुकूलं स्तावकमर्थवादवाक्यम्, सर्वस्यापि प्रोक्षणस्य ' एको वै ' एकविधमेव; अतस्तत्सर्वत्र योजनीयमिति भावः । किंपुनस्तदित्याह–**मेध्यमि**ति ॥ १० ॥

---

१–तैत्तिरीयपाठस्तु ' युष्मानिन्द्रो '–इति । (सं. १ । १ । ५ ।) (ब्रा., ३ । २ । ५) । २–यद्यप्ययं संहितायां कण्डिकान्तरगतत्वात्पृथङ्मन्त्र एव बुध्यते, तथापि–एतद्ब्राह्मणविधितो ' देवीराप ' इति मन्त्रस्यैवांशविशेष इति स्वीकार्यः; अतएव नास्य विनियोगान्तरं दर्शितं कात्यायनेनेति । ३–' तत् तेन ' इत्यारभ्य ' तात्पर्यार्थः '–इत्यन्तस्य स्थाने " प्रोक्षणपात्रगतेनैवोदकेन तत्पात्रगतमुदकं प्रोक्षयित्वा तत्तेन मन्त्रपाठेन प्रोक्षणजनितमपराधमेताभ्यः प्रोक्षणीभ्यो निह्नुते अपनयति " इति क्वचित्पुस्तके पाठः । ४–प्रणीतवारिणा कर्कः स्वैकदेशेन याज्ञिकाः । मन्त्रोच्चारणमात्रेण प्रोक्षणं केचिदूचिरे " इति वैद्यनाथमिश्राः ।

**स प्रोक्षति । ( त्य ) अग्नये त्वा जुष्टं प्रोक्षामीति तद्यस्यै देवतायै हवि-र्भवति तस्यै मेध्यं करोत्येवमेव यथापूर्वꣳ हवीꣳषि प्रोक्ष्य ॥ ११ ॥**

**(क्ष्या) अथ यज्ञपात्राणि प्रोक्षति । दैव्याय कर्मणे शुन्धध्वं देवयज्यायाऽ इति दैव्याय हि कर्मणे शुन्धति देवयज्यायै यद्वोऽशुद्धाः पराजघ्नुरिदं वस्तच्छुन्धामीति तद्यदेवैषामत्राशुद्धस्तक्षा वान्यो वामेध्यः कश्चित्परा-हन्ति तदेवैषामेतदद्भिर्मेध्यं करोति तस्मादाह यद्वोऽशुद्धाः पराजघ्नुरिदं वस्तच्छुन्धामीति ॥ १२ ॥**

**इति प्रथमकाण्डे प्रथमप्रपाठके प्रथमाध्याये वा**
**तृतीयं ब्राह्मणम् ॥ १ ॥ ३ ॥**

---

स प्रोक्षति–" **अग्नये त्वा जुष्टं प्रोक्षामि** "–( १ अ. १३ मं. ) इति । तद् यस्यै देव-तायै हविर्भवति–तस्यै मेध्यं करोति । एवमेव यथापूर्वं हवींषि प्रोक्ष्य ॥ ११ ॥

अथ यज्ञपात्राणि प्रोक्षति–" **दैव्याय कर्मणे शुन्धध्वं देवयज्यायै** " ( १ अ. १३ मं. ) इति । दैव्याय हि कर्मणे शुन्धति देवयज्यायै–" **यद्वोऽशुद्धाः पराजघ्नुरिदं वस्तच्छु-न्धामि** "–( १ अ. १३ मं. ) इति । तद्यदेवैषामत्राशुद्धस्तक्षा वा, अन्यो वाऽमेध्यः कश्चित् परा-हन्ति–तदेवैषामेतदद्भिर्मेध्यं करोति । तस्मादाह–यद्वोऽशुद्धाः पराजघ्नुरिदं वस्तच्छुन्धामीति ॥ १२ ॥ १।३

---

विहितं प्रोक्षणमनूद्य मन्त्रं विधत्ते–**स प्रोक्षती**ति । **अग्नय** इति मन्त्रे देवतादेशनस्य प्रयोजनमाह–**तद्यस्या** इति । उक्तमन्यत्रादिशति–**एवमि**ति । ' एवं ' अनेनैव प्रकारेण, यस्यै देवतायै हविर्गृहीतं भवति, तत्तन्नाम-चतुर्थ्यन्तेनादिशेदित्यर्थः ॥ ११ ॥

हविःप्रोक्षणानन्तरं यज्ञपात्राणां समन्त्रकं प्रोक्षणं विधत्ते–**अथे**ति । **दैव्याये**ति । देवानामिदं ' दैव्यम् ' । " देवाद्यञञौ " ( पा. सू. ४ । १ । ८३ ।, ४ । १ । ८९. वा. २ । ) इति प्रागदीव्यतीयो यञ् । 'शुन्धति' शोधयति । ' शुन्ध–विशुद्धौ ' ( भ्वा. प. ७४ ) इति धातुः । **देवयज्यायै**–इति । देवयजनरूपाय कर्मणे इत्यर्थः । मन्त्रस्यापरभागमनूद्य व्याचष्टे–**यद्व** इति । ' तक्षा ' वर्द्धकिः, ' अन्यः ' तद्व्यतिरिक्तो वृषलादिः; स सर्वोऽप्यशुद्धत्वात् ' अमेध्यः ' । तत्संस्पर्शकृतं यत् ' तत् ' ' एषां ' पात्राणां दोषजातम्, ' एतत् ' अनेन प्रोक्षणेनैषां निवर्तयन्, ' तत् ' सर्वं पात्रं यज्ञार्हं करोति । अत ईदृग्विधस्यार्थस्य प्रत्यायनाय यद्व इति मन्त्र-भागः पठितव्य इत्युपसंहरति–**तस्मादि**ति । **पराजघ्नुरि**ति । पराहतं दूषितं चक्रुरित्यर्थः ॥ १२ ॥ ( १ । ३ )

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथभाष्ये
प्रथमाध्याये तृतीयं ब्राह्मणम् ॥ १ ॥ ३ ॥

---

१–" हविश्चाग्नये त्वाग्नीषोमाभ्यां त्वेति " " यथादेवतमन्यत्–" ( श्रौ. सू. २. ८१–८२. ) । २–" पात्राणि दैव्यायेति "–( श्रौ. सू. २. ८३ ) ।

## अथ चतुर्थं ब्राह्मणम् ।

अथ कृष्णाजिनमादत्ते । यज्ञस्यैव सर्व्वत्वाय यज्ञो ह देवेभ्योऽपचक्राम स कृष्णो भूत्वा चचार तस्य देवाऽअनुविद्य त्वचमेवावच्छायाजहुः ॥ १ ॥

( स्त ) तस्य यानि शुक्लानि च कृष्णानि च लोमानि । तान्यृचां च साम्नां च रूपं यानि शुक्लानि तानि साम्नाꣳ रूपं यानि कृष्णानि तान्यृचां यदि वेतरथा यान्येव कृष्णानि तानि साम्नाꣳ रूपं यानि शुक्लानि तान्यृचां यान्येव बभ्रूणीव हरीणि तानि यजुषाꣳ रूपम् ॥ २ ॥

( ꣳ ) सैषा त्रयी विद्या यज्ञः । ( स्त ) तस्या एतच्छिल्पमेष वर्णस्तद्यत्कृष्णाजिनं भवति यज्ञस्यैव सर्व्वत्वाय तस्मात्कृष्णाजिनमधिदीक्षन्ते यज्ञस्यैव सर्व्वत्वाय तस्मादध्यवहननमधिपेषणं भवत्यस्कन्नꣳहविरस-

---

पुरोडाशकरणम् ।

अथ कृष्णाजिनमादत्ते यज्ञस्यैव सर्वत्वाय । यज्ञो ह देवेभ्योऽपचक्राम, स कृष्णो भूत्वा चचार । तस्य देवा अनुविद्य त्वचमेवावच्छायाऽऽजहुः ॥ १ ॥

तस्य यानि शुक्लानि च कृष्णानि च लोमानि—तान्यृचां च साम्नां च रूपम् । यानि शुक्लानि तानि साम्नां रूपम्, यानि कृष्णानि तान्यृचाम् । यदि वेतरथा—यान्येव कृष्णानि तानि साम्नां रूपम्, यानि शुक्लानि तान्यृचाम् । यान्येव बभ्रूणीव हरीणि तानि यजुषां रूपम् ॥ २ ॥

सैषा त्रयी विद्या यज्ञः । तस्या एतच्छिल्पम्—एष वर्णः । तद्यत् कृष्णाजिनं भवति । यज्ञस्यैव

---

अथ निरुप्तव्रीहियवावहननार्थं[2] कृष्णाजिनादानं विधत्ते—**अथे**ति । सर्वत्वाय इति । अवयवकात्स्न्यायेत्यर्थः । कथं कृष्णाजिनादानेन यज्ञस्य कात्स्न्यर्मित्येतदुपपादयितुं पुरावृत्तमुदाहरति—**यज्ञो ह**त्यादिना । ‘ कृष्णो भूत्वा—’ इति, कृष्णमृगस्य रूपमास्थाय । ‘ अवच्छाय’—इति, अपच्छिद्येत्यर्थः । “ छो छेदने ” ( दि० प० ४० ) इत्यस्मात् क्त्वो ल्यप् ( पा. सू. ७ । १ । ३७ ) ॥ १ ॥

तस्य कृष्णाजिनस्य यज्ञरूपतां वक्तुं त्रयीमयत्वं प्रतिपादयति—**तस्य यानी**त्यादिना । शुक्लकृष्णलोम्नां संग्रहात् ऋक्सामात्मकतामुक्त्वा विभज्यापि दर्शयति—**तस्य यानि शुक्लानी**ति । ‘ यदि वा ’ इति पक्षान्तरकथनम् । ‘ इतरथा ’ उक्तवैपरीत्येनेत्यर्थः । तदेव दर्शयति—**यान्येवे**ति । एवं कृष्णाजिनस्य ऋक्सामतामुक्त्वा यजूरूपत्वमप्याह—**यान्येव बभ्रूणी**ति । पिङ्गलवर्णानीव यानि लोमानि ‘ हरीणि ’ हरितवर्णानि, तानि यजुषां रूपम्[3] ॥ २ ॥

अस्त्वेवमृक्सामयजुरात्मकत्वं कृष्णाजिनस्य, तदादानेन कथं यज्ञस्य कात्स्न्यर्मित्यत आह—**सैषे**ति । सैषा

---

१–‘ मेवावत्सायाजहुः ’–इति कुत्रचित्पाठः । २–‘ व्रीह्यवहननार्थं’–इति पा० । ३–( तै० सं० १. २. २. ७. ) द्रष्टव्यम् ।

दिति तद्यदेवात्र तण्डुलो वा पिष्टं वा स्कन्दात्तद्यज्ञे यज्ञः प्रतितिष्ठादिति तस्मादध्यवहननमधिपेषणं भवति ॥ ३ ॥ [ अर्धप्रपाठकः॥६०॥ ]

( त्यु ) अथ कृष्णाजिनमादत्ते । शर्मासीति चर्म वाऽ एतत्कृष्णस्य तदस्य तन्मानुषꣳ शर्म देवत्रा तस्मादाह शर्मासीति तदवधूनोत्यवधूतꣳ रक्षोऽवधूताऽअरातयऽइति तन्नाष्ट्रा एवैतद्रक्षाꣳसि स्यतोऽपहन्त्यतिनुत्येव पात्राण्यवधूनोति यद्ध्यस्यामेध्यमभूत्तद्ध्यस्यैतदवधूनोति ॥ ४ ॥

---

सर्वत्वाय । तस्मात्कृष्णाजिनमधिदीक्षन्ते-यज्ञस्यैव सर्वत्वाय । तस्मादध्यवहननमधिपेषणं भवति-अस्कन्नं हविरसदिति । तद्यदेवात्र तण्डुलो वा पिष्टं वा स्कन्दात्-तद्यज्ञे यज्ञः प्रातितिष्ठादिति । तस्मादध्यवहननमधिपेषणं भवति ॥ ३ ॥

अथ कृष्णाजिनमादत्ते- " शर्मासि "-( १ अ० १४ मं० ) इति । चर्म्म वा एतत्कृष्णस्य, तदस्य तन्मानुषम्, शर्म्म देवत्रा । तस्मादाह-शर्म्मासीति । तदवधूनोति-" अवधूतꣳ रक्षोऽवधूता अरातयः "-( १ अ० १४ मं० ) इति । तन्नाष्ट्रा एवैतद्रक्षांस्यतोऽपहन्ति । अतिनत्येव पात्राण्यवधूनोति । यद्ध्यस्यामेध्यमभूत्-तद्ध्यस्यैतदवधूनोति ॥ ४ ॥

---

ऋग्यजुस्सामात्मिका त्रयी विद्या, सैव यज्ञः; तत्साध्यत्वात् । य एष शुक्लकृष्णादिलक्षणो वर्णः, एतत्तस्यास्त्रय्या उक्तरीत्या ' शिल्पम् ' चित्रं रूपम् । अत एवोपरिष्टात् सोमप्रकरणे मन्त्र आम्नास्यते-" ऋक्सामयोः शिल्पे स्थः "-( ४ अ० ९ मं० )-इति । एवमपक्रान्तस्य यज्ञरूपस्य कृष्णाजिनस्यादानं यज्ञस्य कात्स्न्याय भवतीत्यर्थः । **कृष्णाजिनमधिदीक्षन्ते** इति । यस्मादेवं कृष्णाजिनं त्रयीरूपत्वेन यज्ञरूपम्, ' तस्मात् ' सोमाङ्गभूता दीक्षापि कृष्णाजिनस्योपरि क्रियते । कृष्णाजिनादानस्य प्रयोजनान्तरमाह-**तस्मादधी**ति । ' अधि ' उपर्यर्थः । कृष्णाजिनस्योपर्यवहननं पेषणं च कर्तव्यम् । तथा सति तद्धविः ' अस्कन्नम् ' स्कन्नरहितम ' असद् ' भवेदिति बुद्ध्या यदि भूम्यामेवावहननादिकं कुर्यात्, तदा तस्य हविषोऽवश्यं स्कन्नदोष[1] इत्यभिप्रायः । एतदेव विवृणोति-**तद्यदेवे**ति । अवहननसमये तण्डुलो वा पेषणसमये पिष्टं वात्र कृष्णाजिने ' यदि ' नाम ' स्कन्दात् ' स्कन्देत् । लेटयाडागमः । ( पा. सू. ३।४।९४ ) ' तत् ' तदा यज्ञ एव यज्ञः प्रतितिष्ठेत्; न तु तस्य स्कन्नदोष इत्यर्थः ॥ ३ ॥

उक्तमादानमनूद्य मन्त्रं विधत्ते[2]-**अथे**ति । मन्त्रगत ' शर्म ' शब्दस्य तात्पर्यमाह-**चर्म वा** इति । यत् ' एतत् ' कृष्णस्य ' चर्म ' अजिनम्, ' अस्य ' यज्ञस्यैतदजिनं ' तत् ' लोकप्रसिद्धचर्मशब्दाभिधेयं सत् ' मानुषम् ' मनुष्यसंबन्धि रूपं भवति । एतदेव ' देवत्रा ' देवेषु, सुखकरत्वात् शर्मेत्युच्यते । अतो वैदिके कर्मणि ' शर्मासीति ' तत्स्तुतिरुपपन्ना । देवत्रेति " देवमनुष्य "( पा० सू० ५. ४. ५६ ) इत्यादिना त्राप्रत्ययः । उपात्तस्य कृष्णाजिनस्यावधूननं विधत्ते[3]-**तदवधूनोती**ति । **तन्नाष्ट्रा** इति । ' तत् ' तेन समन्त्रकावधूननेन । गतमन्यत् । कृष्णाजिनवत् प्रसक्तमवधूननं पात्राणां निषेधति-**अतिनत्येवे**ति । न [illegible]धूननस्य

---

१-' स्कन्दनदोष ' इति पा. । २-" शर्मासीति कृष्णाजिनादानम् "-इति ( श्रौ० सू० २ । ८५ ) । ३-" अपस्यपात्रेभ्योऽवधूनोत्यवधूतमिति "-( श्रौ० सू० २. ८६. ) ।

तत्प्रतीचीनग्रीवमुपस्तृणाति । ( त्यु ) अदित्यास्त्वगसि प्रतित्वादितिर्वेत्त्विति । इयं वै पृथिव्यदितिस्तस्याऽअस्यै त्वग्यदिदमस्यामधि किं च तस्मादाहादित्यास्त्वगसीति प्रतित्वादितिर्वेत्त्विति प्रति हि स्वः संजानीते तत्संज्ञामेवैतत्कृष्णाजिनाय च वदति नेदन्योन्यं हिनसात ऽइत्यभिनिहितमेव सव्येन पाणिना भवति ॥ ५ ॥

( त्यु ) अथ दक्षिणेनोलूखलमाहरति । नेदिह पुरा नाष्ट्रा रक्षाᳪंस्याविशानिति ब्राह्मणो हि रक्षसामपहन्ता तस्मादभिनिहितमेव सव्येन पाणिना भवति ॥ ६ ॥

---

तत्प्रतीचीनग्रीवमुपस्तृणाति-"आदित्यास्त्वगसि प्रतित्वादितिर्वेत्तु"-( १ अ० १४ मं० ) इति । इयं वै पृथिव्यदितिः । तस्या अस्यै त्वग्--यदिदमस्यामधि किञ्च । तस्मादाह-आदित्यास्त्वगसीति । प्रतित्वादितिर्वेत्त्विति । प्रति हि स्वः सञ्जानीते । तत्संज्ञामेवैतत्कृष्णाजिनाय च वदति । नेदन्योन्यं हिनसात इति । अभिनिहितमेव सव्येन पाणिना भवति ॥ ५ ॥

अथ दक्षिणेनोलूखलमाहरति । नेदिह पुरा नाष्ट्रा रक्षांस्याविशानिति । ब्राह्मणो हि राक्षसामपहन्ता, तस्मादभिनिहितमेव सव्येन पाणिना भवति ॥ ६ ॥

---

रक्षोपहननमेव प्रयोजनं किं तु अयज्ञियविक्षेपोऽपीत्याह-**यद्धचस्ये**ति । रक्षःप्रकृतिसंपर्कात् यत् खलु 'अस्य' कृष्णाजिनस्य 'अमेध्यम्' मेधानर्हमयज्ञियरूपमभूत्, तदेवास्यैतेन मन्त्रेण 'अवधूनोति' निरस्यति ॥ ४ ॥

तस्य समन्त्रकं प्रकारविशिष्टं स्तरणं विधत्ते-**तादि**ति । 'प्रतीचीना' प्रत्यग्दिशि स्थिता ग्रीवा यथा भवति तथा । **इयं वा** इत्यादि । 'दितिः' खण्डनं न विद्यतेऽस्या इति व्युत्पत्त्या अत्र मन्त्रगतादितिशब्देनेयमेव पृथिवी विवक्षिता । कथमन्यदीया त्वगन्यस्य त्वग्भवतीत्याशंक्याह-**तस्या** इति । 'अस्याम्' भूम्यां 'अधि' उपरिभागे 'यदिदं किं च' किमपि वस्त्ववस्थितम् 'तस्यै-अस्यै' पृथिव्यै, सा 'त्वक्' कृष्णाजिनमप्युपर्यवस्थानात् तस्या एव त्वगिति स्तुतिः । मन्त्रस्य द्वितीयं भागमनूद्य व्याचष्टे-**प्रती**ति । 'स्वः' स्वकीयो जन आत्मीयं जनं प्रति 'संजानीते' परस्परानुकूल्यं प्रकटयितुं संज्ञां करोति । 'तत्' तथा कृष्णाजिनभूम्योः समानज्ञानतामेवायं मन्त्रभागो वदति । संज्ञानस्य प्रयोजनमाह-**नेदि**ति । परस्परानुकूल्यज्ञानाभावे ह्यन्यमन्यो हिंस्यात् । नैव तादृश्यन्योऽन्यहिंसा भवत्वित्यनेनाभिप्रायेणेत्यर्थः ॥ उलूखलनिधानपर्यन्तं कृष्णाजिनस्यानुत्सर्जनं विधत्ते-**अभिनिहितमि**ति ॥ ५ ॥

सव्येन स्पृशतोऽभिप्रायमाह-**नेदि**ति । यदि ह्युलूखलनिधानात् प्रागेव कृष्णाजिनस्पर्शमुत्सृजेत्, 'तत्' तदा 'इह' अस्मिन् कृष्णाजिने राक्षसादिकं प्रविशेत्, तन्नैव भवत्विति । 'विशान्'-इति विशतेर्लेटि बहुवचने

---

१-कृष्णाजिनास्तरणं चोभाभ्यां हस्ताभ्याम् । अभिनिहितमेव सव्येन पाणिनेति श्रुतिस्थ एवकारोऽन्यथा न समर्थः स्यात् । एकहस्तेन स्तरणाशक्यत्वाच्चेति वैद्यनाथमिश्राः । कर्कोपाध्यायैरपि-"अभिन्यस्यत्यग्नीदुत्करमररोदिवम्" इत्यस्मिन्सूत्रे अभिन्यासश्च हस्तद्वयेन भवति नैकेन पाणिना । कुत एतत् । लिङ्गात् । "अभिनिहित एव सव्येन पाणिना भवत्यथ दक्षिणेन जुहूं परिगृह्णाति" इति । एवमन्यत्रापि ज्ञेयम् । २-प्रत्यग्ग्रीवमास्तृणात्यादित्यास्त्वगिति"-(श्रौ. सू. २. ८७) । ३-( निघ० १. १. १४ ) ( निरु० ४. ४. १ ) द्रष्टव्यम् ।

( त्यु ) अथोलूखलं निदधाति । ( त्यु ) अद्रिरसि व्वानस्पत्यो ग्रावासि पृथुबुध्नऽइति वा तद्यथैवादः सोम ꣳ राजानं ग्रावभिरभिषुण्वन्त्येवमेवैतदुलूखलमुसलाभ्यां दृषदुपलाभ्या ꣳ हविर्यज्ञमभिषुणोत्यद्रयऽ इति वै तेषामेकं नाम तस्मादाहाद्रिरसीति व्वानस्पत्यऽ इति व्वानस्पत्योह्येष ग्रावासि पृथुबुध्नऽ इति ग्रावा ह्येष पृथुबुध्नो ह्येष प्रति त्वादित्यास्त्वग्वेत्त्विति तत्संज्ञामेवैतत्कृष्णाजिनाय च व्वदति नेदन्योन्य ꣳ हिनसातऽ इति ॥ ७ ॥

---

अथोलूखलं निदधाति–" **अद्रिरसि व्वानस्पत्यो ग्रावासि पृथुबुध्नः** " ( १ अ० १४ मं० ) इति वा । तद्यथैवादः सोमं राजानं ग्रावभिरभिषुण्वन्ति,--एवमेवैतदुलूखलमुसलाभ्यां दृषदुपलाभ्यां हविर्यज्ञमभिषुणोति । अद्रय इति वै तेषामेकं नाम । तस्मादाह--अद्रिरसीति । वानस्पत्य इति । वानस्पत्यो ह्येषः । ग्रावासि पृथुबुध्न इति । ग्रावा ह्येषः, पृथुबुध्नो ह्येषः । " **प्रति त्वादित्यास्त्वग् वेत्तु** " ( १ अ० १४ मं० ) इति । तत्संज्ञामेवैतत्कृष्णाजिनाय च वदति--नेदन्योन्यं हिनसात इति ॥ ७ ॥

---

आडागमः ( पा. सू. ३ । ४ । ९४ ) झेरन्तादेशे ( पा. सू. ७ । १ । ३ ) " इतश्च लोपः " ( पा. सू. ३. ४. ९७ )–इतीकारलोपः । ननु स्पर्शेऽपि उलूखलनिधानात् पुरा कुतो रक्षांसि न प्रविशन्ति तत्राह–**ब्राह्मण** इति । 'हि' यस्माद् ब्राह्मणो रक्षसामपहन्ता मन्त्रप्रभावेण, तस्मात् तेन स्पृश्यमानं राक्षसादिर्न प्रवेष्टुं शक्नोतीति भावः ॥ ६ ॥

अथ समन्त्रकमुलूखलस्य निधानं विवक्ते–**अथे**ति । ग्रावासीति वैकल्पिको मन्त्रः । अत एव सूत्रकृतोक्तम्–" सव्याशून्ये निदधात्युलूखलमद्रिरसि ग्रावासीति वा " ( श्रौ० सू० २. ८८ ) इति । तत्राद्यमन्त्रस्याभिप्रायमाह–**तद्यथे**ति । 'अदः'–शब्दो लुप्तविभक्तिकः, अमुत्र सोमयागे यथा यागसाधनस्य सोमस्य ग्रावभिरभिषवः, एवमेवोलूखलादिभिर्हविर्यज्ञसाधनं व्रीह्यादिकम् 'अभिषुणोति' वितुषीकरणादिभिः संस्करोति । कुत एतदित्याह–**अद्रय इती**ति । 'तेषां' सोमाभिषवहेतूनां ग्राव्णाम्, पुरोडाशनिष्पत्तिहेतूनामुलूखलादीनां च अद्रय इत्येतत् साधारणं नाम; अतो नामसाम्यात् उलूखलादिसाध्यमवहननादिकं ग्रावसाध्येन सोमाभिषवेण तुल्यमित्यर्थः । एवं च हे उलूखल ! त्वम् 'अद्रिरसि' सोमाभिषवहेतुः । ग्रावासीति ग्रावत्वारोपणं मन्त्रेण विवक्षितमिति व्याख्यातं भवति । वनस्पतिविकारत्वं प्रसिद्धमिति वानस्पत्यपदतात्पर्यमाह–**वानस्पत्यो** हीति । वैकल्पिकं मन्त्रमनूद्य व्याचष्टे–**ग्रावासी**ति । **पृथुबुध्नो ही**ति । उलूखलस्य विस्तीर्णमूलत्वं प्रसिद्धमित्यर्थः । प्रतित्वेत्यादिकं मन्त्रद्वयपक्षमनूद्य व्याचष्टे–**तदि**ति । कृष्णाजिनोलूखलयोरन्योऽन्यं हिंसा मा भूदिति पृथिवीकृष्णाजिनयोरिवैकमत्यप्रार्थनं वदतीत्यर्थः ॥ ७ ॥

---

१–पञ्चमीकण्डिकान्तर्गत " कृष्णाजिनमप्युपर्यवस्थानादित्यारभ्य–सोमाभिषवहेतुः " इत्यन्तो भाष्यग्रंथो वेवरमहोदयेन संपादितपुस्तके नास्ति । तेन न दृष्ट इति तल्लेखतो ज्ञायते । २–" प्रतित्वेत्युभयोः " ( श्रौ० सू० २ । ८९ ) ।

( त्य ) अथ हविरावपति। ( त्य ) अग्नेस्तनूरसि वाचो विसर्जनमिति यज्ञो हि तेनाग्नेस्तनूर्वाचो विसर्जनमिति यां वा ऽअमूं हविर्ग्रहीष्यन्वाचं यच्छत्यत्र वै तां विसृजते तद्यदेतामत्र वाचं विसृजतऽ एष हि यज्ञऽ उलूखले प्रत्यष्ठादेष हि प्रासारि तस्मादाह वाचो विसर्जनमिति ॥ ८ ॥

स यदि पुरा मानुषीं वाचं व्याहरेत् । ( त्र ) तत्रो वैष्णवीमृचं वा यजुर्वा जपेद्यज्ञो वै विष्णुस्तद्यज्ञं पुनरारभते तस्यो हैषा प्रायश्चित्ति-र्देववीतये त्वा गृह्णामीति देवानवदित्यु हि हविर्गृह्यते ॥ ९ ॥

---

अथ हविरावपति-" **अग्नेस्तनूरसि वाचो विसर्जनम्** " ( १ अ० १९ मं० ) इति। यज्ञो हि। तेनाग्नेस्तनूः। वाचो विसर्जनमिति। यां वा अमूं हविर्ग्रहीष्यन् वाचं यच्छति-अत्र वै तां विसृजते। तद्यदेतामत्र वाचं विसृजते-एष हि यज्ञ उलूखले प्रत्यष्ठात्। एष हि प्रासारि। तस्मादाह-वाचो विसर्जनमिति ॥ ८ ॥

स यदि पुरा मानुषीं वाचं व्याहरेत्--तत्रो वैष्णवीमृचं वा यजुर्वा जपेत्। यज्ञो वै विष्णुः। तद्यज्ञं पुनरारभते। तस्यो हैषा प्रायश्चित्तिः--" **देववीतये त्वा गृह्णामि** "--( १ अ० १९ मं० ) इति। देवानवदित्यु हि हविर्गृह्यते ॥ ९ ॥

---

उलूखले हविषः प्रक्षेपणं समन्त्रकं विधत्ते-**अथेति**। **यज्ञो हीति**। यस्माद् 'यज्ञः' यज्ञसाधनं हविः, अतोऽग्नेः शरीरमेव तदित्यर्थः। **यां वा** इत्यादि। हविर्ग्रहणार्थम्, " अथ वाचं यच्छति " इति 'या वाग् नियमिता' 'अत्र' अस्मिन्समये तामेवानेन मन्त्रभागेन 'विसृजते'। अतो विसृज्यते अनेनेति 'विसर्जनम्' हविरिति मन्त्रपाठस्यार्थः। एतद्वाग्विसर्जनमुपपादयति-**तद्यदिति**। 'एतां वाचमत्र विसृजते' इति यत, तद्युक्तम्; 'हि' यस्मादेषः 'यज्ञः' यज्ञसाधनं हविः, उलूखले 'प्रत्यष्ठात्' प्रतिष्ठितमभूत्, यस्माच्च 'एषः' यज्ञः 'प्रासारि' प्रसारितो विस्तारितोऽभूत्; अतो हेतोर्वाग्यमनस्य प्रयोजनं नास्तीति तद्वि-सर्जनमेव युक्तमित्यभिप्रायः ॥ ८ ॥

हविरावपनात् पूर्वं लौकिकवाग्व्यवहारे प्रायश्चित्तमाह-**स यदीति**। 'वैष्णवीमृचम्' इति, "इदं विष्णु-र्विचक्रमे" ( वा० सं० ५ अ० १५ मं० ) इत्यादिकाम्। यजुरपि वैष्णवमेव जप्यम्। 'देववीतये' इति मन्त्रशेषस्याभिप्रायमाह-**देवानवदितीति**। यष्टव्यान् देवान् 'अवत्' अवतु तर्पयत्विति। अनेनैवाभिप्रायेण हि हविर्गृह्यते, अतः 'देववीतये' देवानां तृप्तये इति मन्त्रपदाभिप्रायः ॥ ९ ॥

---

१-" हविरावपत्यग्नेस्तनूरिति "--( श्रौ० सू० २, ९० )। २-इहैव ब्राह्मणे पूर्वं १ । १ । २ । २ ॥ ३-' मन्त्रपदस्यार्थः '-इति पा०। ४-" वाचं विसृजते, यजमानश्च" ( श्रौ० सू० २. ९१. ९२. ) अग्रे च विशेष उक्तः-" हविष्कृता वा, नानाबीजेष्वन्ते सामर्थ्यात् " ( श्रौ० सू० २. ९३. ९४। ) ५-"अंघ्रिणा विष्णो मात्वावक्रमिषं " ( माध्यं. सं. अ. २। ८ )। " विष्णो हव्य ँ रक्ष " ( माध्यं. सं. अ. १। ४ ) इति वा। ६-'पितृयज्ञे-पितृवीतये'-इति ऊहमाह याज्ञिकदेवः।

(तेऽथ) अथ मुसलमादत्ते । बृहद्ग्रावासि वानस्पत्य इति बृहद्ग्रावा ह्येष वानस्पत्यो ह्येष तदवदधाति स इदं देवेभ्यो हविः शमीष्व सुशमि शमीष्वेति स इदं देवेभ्यो हविः संस्कुरु साधु संस्कृतꣳ संस्कुर्वित्येवैतदाह ॥ १० ॥

(द्वा) अथ हविष्कृतमुद्वादयति । हविष्कृदेहि हविष्कृदेहीति वाग्वै हविष्कृद्वाचमेवैतद्विसृजते वागु वै यज्ञस्तद्यज्ञमेवैतत्पुनरुपह्वयते ॥ ११ ॥

तानि वा एतानि । चत्वारि वाच एहीति ब्राह्मणस्यागह्याद्रवेति वैश्यस्य च राजन्यबन्धोश्चाधावेति शूद्रस्य स य एव ब्राह्मणस्य तदाहैतद्धि यज्ञियतममेतदु ह वै वाचः शान्ततमं यदेहीति तस्मादेहीत्येव ब्रूयात् ॥ १२ ॥

---

अथ मुसंलमादत्ते–" बृहद्ग्रावासि वानस्पत्यः "–( १ अ० १९ मं० ) इति । बृहद्ग्रावा ह्येषः । वानस्पत्यो ह्येषः । तदवदधाति–" स इदं देवेभ्यो हविः शमीष्व सुशमि शमीष्व "–( १ अ० १९ मं० ) इति । स इदं देवेभ्यो हविः संस्कुरु, साधु संस्कृतं संस्कुरु–इत्येवैतदाह॥१०॥

अथ हविष्कृतमुद्वादयति–"हविष्कृदेहि हविष्कृदेहि "– ( १ अ० १९ मं० ) इति । वाग् वै हविष्कृत् । वाचमेवैतद् विसृजते । वागु वै यज्ञः–तद्यज्ञमेवैतत्पुनरुपह्वयते ॥ ११ ॥

तानि वा एतानि चत्वारि वाचः । एहीति–ब्राह्मणस्य । आगह्याद्रवेति–वैश्यस्य च राजन्यबन्धोश्च ।

---

समन्त्रकं मुसलादानं विधत्ते–**अथ मुसलमादत्त** इति । **बृहद्ग्रावासी**ति । सोमसंस्कारकग्राववत् मुसलस्यापि हविस्संस्कारकत्वसाम्याद्ग्रावत्वम्, दीर्घत्वाच्च बृहत्त्वमिति ' बृहद्ग्राव'–शब्दाभिधेयता मुसलस्य प्रसिद्धेत्यर्थः । तस्य मुसलस्योलूखले प्रक्षेपणं समन्त्रकं विधत्ते–**तदवदधाती**ति । ' शमीष्व '–इति पदस्यार्थमाह–**हविः संस्कुरु**–इति । ' शमीष्व ' शमय; दोषोपशमनेन हविः संस्कुर्वित्यभिप्रायः । सुशमि शमीष्वेति मन्त्रस्याभिप्रायमाह–**साधु संस्कृतमि**ति ॥ १० ॥

हविष्कृत आह्वानं विधत्ते–**अथ हविष्कृतमि**ति । ' उद्वादयति ' उच्चैराह्वयतीत्यर्थः । हविष्कृदेहीति मन्त्रस्य द्विः पाठो मन्त्रकाण्डे[3] द्विराम्नानात् । हविष्कृच्छब्दार्थमाह–**वाग्वै हविष्कृदि**ति । निर्वापादौ मन्त्ररूपाया वाचो हविष्करणसाधनत्वाद् वागेव हविष्कृत्; अतस्तामनेनैव मन्त्रेणाह्वयन् हविर्ग्रहणकाले नियमितां वाचं विसृजेत् । अत एव कात्यायनेन " अग्नेस्तनूरसि " इति मन्त्रेण, " हविष्कृदेहि " इति मन्त्रेण वा वाग्विसर्जनं कर्तव्यमिति विकल्पेन सूत्रितम् ।–" अग्नेस्तनूरिति–वाचं विसृजते " ( श्रौ० सू० २. ९१ ) " यजमानश्च " ( श्रौ. सू. २ । ९२ ) "हविष्कृता वा–"( श्रौ० सू० २. ९३ ) इति । **वागु वा** इति । या वाग् हविष्कृत् सैव खलु यज्ञः, तस्य तन्निर्वर्त्यत्वात् । ' तत् ' तथा सति ' एतत् ' एतेन वागात्मिकाया हविष्कृत आह्वानेन यज्ञमेव पुनराह्वयते ॥ ११ ॥

ब्रह्मक्षत्रादिवर्णभेदोपजीवनेन हविष्कृदाह्वानमन्त्रे विशेषमाह–**तानि वा एतानि चत्वारी**ति । ' वाचः '

---

१–'बृहद्ग्रावेति मुसलमादत्ते '–(श्रौ० सू० २. ९५.) । २–" स इदमित्यवदधाति "–(श्रौ० सू० २. ९६ ) । पितृयज्ञे–'स इदं पितृभ्य ' इति विपरिणम्यत इति याज्ञिकदेवः । ३–मन्त्रकाण्डे संहितापाठे । तत्र च त्रिराम्नानं न तु द्विः । महीधरोऽपि ' त्रिवारमुक्तमर्थं देवा मन्यन्त इति त्रिराम्नानम् '–इत्याह । कात्यायनोऽपि–" हविष्कृदेहीति त्रिराह्वयति "–इति २. ९७ ॥

**( त्तु ) तुद्ध स्मैतुत्पुरा । जायैव हविष्कृदुपोत्तिष्ठति तुदिदमप्येतर्हि य एव कश्चोपोत्तिष्ठति स यत्रैष हविष्कृतमुद्वादयति तदेको दृषदुपले समाहन्ति तद्युदेतामत्र व्वाचं प्रत्युद्वादयन्ति ॥ १३ ॥**

**मनोर्ह वाऽ ऋषभऽआस । तुस्मिन्नसुरघ्नी सपत्नघ्नी व्वाक्प्रविष्टा स तुस्य ह स्म श्वसथाद्रवथादसुररक्षसानि मृद्यमानानि यन्ति ते ह्रासुराः समूदिरे पापं बत नोऽयमृषभः सचते कथं न्विमं दभ्नुयामेति किलाताकुलीऽ इति हासुरब्रह्मावासतुः ॥ १४ ॥**

---

आधावेति--शूद्रस्य । स यदेव ब्राह्मणस्य--तदाह, एतद्धि यज्ञियतमम् । एतदु ह वै वाचः शान्ततमम्--यदेहीति । तस्मादेहीत्येव ब्रूयात् ॥ १२ ॥

तद्ध स्मैतत्पुरा जायैव हविष्कृदुपोत्तिष्ठति । तदिदमप्येतर्हि य एव कश्चोपोत्तिष्ठति । स यत्रैष हविष्कृतमुद्वादयति--तदेको दृषदुपले समाहन्ति । तद्यदेतामत्र वाचं प्रत्युद्वादयन्ति ॥ १३ ॥

मनोर्ह वा ऋषभ आस । तस्मिन्नसुरघ्नी सपत्नघ्नी वाक् प्रविष्टा स तस्य ह स्म श्वसथाद् रवथाद् असुररक्षसानि मृद्यमानानि यन्ति । ते हासुराः समूदिरे--पापं बत नोऽयमृषभः सचते, कथं न्विमं दभ्नुयामेति । किलाताकुली--इति हासुरब्रह्मावासतुः ॥ १४ ॥

---

संबन्धीनि ' चत्वारि ' रूपाणि । कानि पुनस्तानीत्याह--एहीत्यादि[1] । ' वैश्यस्य ' हविष्कृदागहीति मन्त्रः । ' राजन्यबन्धोः ' क्षत्रियजातेः " हविष्कृदाद्रवेति । आपस्तम्बस्तु राजन्यवैश्ययोर्वैपरीत्येनासूत्रयत्--" हविष्कृदेहीति ब्राह्मणस्य, हविष्कृदागहीति राजन्यस्य, हविष्कृदाद्रव इति वैश्यस्य, हविष्कृदाधावेति शूद्रस्य " ( आ० श्रौ० सू० १. १९. ९ )--इति ।

एवं पूर्वपक्षतया ब्राह्मणक्षत्रादिवर्णप्रयुक्तं विशेषमुपन्यस्य स्वमतं निगमयति--**स यदेव ब्राह्मणस्येति** । **एतद्धीति** । ' एहीति ' एतत् खलु ' यज्ञियतमम् ' अतिशयेन यज्ञार्हम्; " इड एह्यदित एहि "--( ३ अ० २७ मं० ) इत्यादावन्यत्रापि यज्ञे प्रयोगात् । " शान्ततमम् " इति, आगह्याद्रवेत्यादेः सकाशादेहीत्येतदेवातिशयेन शान्तम्; प्रार्थनावाक्येष्वेहीत्येव सर्वत्र प्रयोगादागह्यादीनां च निकृष्टप्रेषणरूपत्वाच्चेत्यर्थः ॥ १२ ॥

कोऽसौ हविष्कृदिति तं दर्शयति--**तद्धेति** । पुरा खल्वेतदाह्वानानन्तरं ' जायैव हविष्कृदुपोत्तिष्ठति ' अतस्तदानीं जायैव हविष्कृदभूत् । ' तत् ' तस्मादिदानीमप्येतदाह्वानानन्तरं जाया वा, अन्यः[2] ' कोऽपि ' ऋत्विग्वोपोत्तिष्ठति, स एव हविष्कृदित्यर्थः । तदप्युक्तं सूत्रकृता--" हविष्कृदेहीति त्रिराह्वयति; अतः पत्न्यवहन्त्यन्यो वा " ( श्रौ० सू० २. ९७--९८. ) इति । हविष्कृदाह्वानसमये दृषदुपलयोः शम्यया समाहननं विधत्ते--" **स यत्रैष हविष्कृतमुद्वादयति** " इति । समाहननजनितां वाचं प्रशंसितुमनुवदति--**तद्यदिति** ॥ १३ ॥

अथ यज्ञायुधध्वनेर्[3]यज्ञविघातकासुरराक्षसादिनिवृत्तिहेतुतामुपपादयितुमितिहासमुदाहरति--**मनोर्ह वा इति** । पुरा किल मनोः सबन्धिन ऋषभस्य प्रश्वासाद् रवाच्च यज्ञविघातिनोऽसुरराक्षसादयो बाध्यमाना गताः । ते च परस्परं संवादं कृतवन्तः । 'ह'--इति खेदे । ' अयम् ' ऋषभः ' नः ' अस्माकम् ' पापम् ' निकर्ष--

---

१--एते तु मन्त्रा इहैवाम्नाताः । २--'अन्यशब्देनाग्नीध्रस्य ग्रहणं' इति कर्कदेवादयः । ३ समाहननजनिताया वाच इत्यर्थः ।

(स्तौ) तौ होचतुः । श्रद्धादेवो वै मनुरावं नु वेदावेति तौ हागत्योचतुर्मनो याजयाव त्वेति केनेत्यनेनर्षभेणेति तथेति तस्यालब्धस्य सा वागपचक्राम ॥ १५ ॥

सा मनोरेव जायां मनावीं प्रविवेश । तस्यै ह स्म यत्र वदन्त्यै शृण्वन्ति ततो ह स्मैवासुररक्षसानि मृद्यमानानि यन्ति ते हासुराः समूदिरऽ इतो वै नः पापीयः सचते भूयो हि मानुषी वागवदतीति किलाताकुली हैवोचतुः श्रद्धादेवो वै मनुरावं न्वेव वेदावेति तौ हागत्योचतुर्मनो याजयाव त्वेति केनेत्यनयैव जाययेति तथेति तस्याऽआलब्धायै सा वागपचक्राम ॥ १६ ॥

---

तौ होचतुः—श्रद्धादेवो वै मनुः,—आवं नु वेदावेति । तौ हागत्योचतुः—मनो ! याजयाव त्वेति । केनेति—अनेनर्षभेणेति । तथेति । तस्यालब्धस्य सा वागपचक्राम ॥ १५ ॥

सा मनोरेव जायां मनावीं प्रविवेश । तस्यै ह स्म यत्र वदन्त्यै शृण्वन्ति, ततो ह स्मैवासुररक्षसानि मृद्यमानानि यन्ति । ते हासुराः समूदिरे—इतो वै नः पापीयः सचते, भूयो हि मानुषी वाग् वदतीति । किलाताकुली हैवोचतुः—श्रद्धादेवो वै मनुः आवं न्वेव वेदावेति । तौ हागत्योचतुः—मनो ! याजयाव त्वेति । केनेति । अनयैव जाययेति । तथेति । तस्या आलब्धायै सा वागपचक्राम ॥ १६ ॥

---

पराजयम् 'सचते' प्रापयति, कथं खल्विमं हिंस्यामेति । एवं संवादे कृते 'किलातश्चाऽऽकुलिश्च' द्वावसुरपुरोहितौ बभूवतुः ॥ १४ ॥

तयोर्व्यापारमाह—**तौ होचतु**रिति । श्रद्धैव देवो यस्य सः 'श्रद्धादेवः' श्रद्धालुरित्यर्थः । **आवं नु वेदाव** इति । आवामस्य मनोरभिप्रायं जानावहे इत्यर्थः । "प्रथमायाश्च द्विवचने भाषायाम्" ( पा० सू० ७. २. ८८. ) इति भाषायामेवात्वविधानादावमिति ह्रस्वोच्चारणम् । "विद ज्ञाने" ( अ० प० ५४ ) इत्यस्माल्लोटयुत्तमद्विवचने वेदावेति रूपम् । **मनो याजयावे**त्यादि । हे मनो ! त्वामनेन—ऋषभेण याजयावेति । श्रद्धालुं मनुं विप्रलभ्य तमृषभमवधिष्टामिति तात्पर्यार्थः ॥ १५ ॥

**सा मनोरेव जायां मनावीं प्रविवेश**—इति । मनोर्भार्या मनावी । "मनोरौ वा" ( पा० सू० ४. १. ३९. ) इत्यौत्वम् । पुंयोगलक्षणे ङीप् । (पा. सू. ४. २. ४८.) । **तस्यै ह स्म यत्र वदन्त्यै शृण्वन्ति**—इति । 'तस्यै' षष्ठ्यर्थे चतुर्थी ( पा. सू. २. ३. ६२. अ. वा. १ ) 'यत्र' यस्मिन् देशे वदन्त्यास्तस्याः शब्दं शृण्वन्ति 'ततः' तस्मात् स्थानादसुरादयो बाधिताः पलायन्त इत्यर्थः । **पापीयः सचत** इति । तिर्यग्जातेर्ऋषभस्य ध्वनेः श्रवणात् प्रागस्माकं निकर्षमात्रं प्राप्तम्, इदानीं तु मनुष्यशरीरान्निर्गतवाचः श्रवणादस्माकं 'पापीयः' अतिशयितं पापम्, पराजयं प्राप्नोति । इममेवातिशयमुपपादयति—**भूयो हि मानुषी वाग् वदती**ति । तिर्यग्वाचः सकाशात् 'भूयः' बहुतरं हि मानुषी वाग्वदति वर्णपदवाक्यात्मना कस्यचिदर्थस्य प्रतिपादकत्वात् । एतदाकर्ण्य तावेव पुरोहितावस्यापि प्रतिक्रियां चक्रतुरित्याह—**किलाताकुली हैवोचतु**रिति ॥ १६ ॥

---

१–'इत्यस्मादस्मयुत्तमद्विवचने' इति पा. । २–'तस्माद्वदनात्' इति पा. ।

सा यज्ञमेव यज्ञपात्राणि प्रविवेश । ततो हैनां न शेकतुर्निर्हन्तु ꣳ सैषा-सुरघ्नी सपत्नघ्नी वागुद्वदति स यस्य हैवंविदुषऽएतामत्र वाचं प्रत्युद्वादयन्ति पापीया ꣳ सो हैवास्य सपत्ना भवन्ति ॥ १७ ॥

स समाहन्ति । कुक्कुटोऽसि मधुजिह्व ऽइति मधुजिह्वो वै स देवेभ्य ऽआसीद्विषजिह्वोऽसुरेभ्यः स यो देवेभ्यऽआसीः स नऽएधीत्येवैतदाहेष-मूर्जमा वद त्वया वय ꣳ सङ्घात ꣳ सङ्घातं जेष्मेति नात्र तिरोहितमि-वास्ति ॥ १८ ॥

(स्त्य) अथ शूर्पमादत्ते । वर्षवृद्धमसीति वर्षवृद्ध ꣳ ह्येतद्यदि नडानां यदि वेणूनां यदीषीकाणां वर्षमु ह्येवैता वर्द्धयति ॥ १९ ॥

---

सा यज्ञमेव यज्ञपात्राणि प्रविवेश। ततो हैनां न शेकतुर्निर्हन्तुम्। सैषासुरघ्नी सपत्नघ्नी वागुद्वदति। स यस्य हैवं विदुष एतामत्र वाचं प्रत्युद्वादयन्ति, पापीयांसो हैवास्य सपत्ना भवन्ति ॥ १७ ॥

स समाहन्ति-"कुक्कुटोऽसि मधुजिह्वः"-( १ अ० १६ मं० ) इति। मधुजिह्वो वै स देवेभ्य आसीद्, विषजिह्वोऽसुरेभ्यः। स यो देवेभ्य आसीः स न एधीत्येवैतदाह-"**इषमूर्जमा वद त्वया वय ꣳ सङ्घात ꣳ सङ्घातं जेष्म**"-( १ अ० १६ मं० ) इति। नात्र तिरोहितमिवास्ति ॥ १८॥

अथ शूर्पमादत्ते-" **वर्षवृद्धमसि**"-( १ अ० १६ मं० ) इति। वर्षवृद्धं ह्येतत्। यदि नडानां यदि वेणूनां यदीषीकाणाम्। वर्षमु ह्येवैता वर्द्धयति ॥ १९ ॥

---

**सा यज्ञमेवे**ति। असुरघ्नी या वाक्, क्रमेण मनोर्ऋषभे जायायां चासीत्, 'सा' तयोर्हननान्निरा-श्रया सती यज्ञमेवाश्रयितुम् 'यज्ञपात्राणि प्रविवेश।' 'ततः' तेभ्यो यज्ञपात्रेभ्यः सकाशात् 'एनाम्' वाचम् 'नि(र्)हन्तुम्' निर्गमयितुं न शेकतुरसुरपुरोहितौ। 'सैषा' यज्ञपात्रगताऽसुरघ्नी वाक् शम्य[1]या समाहननादुद्ग-च्छति। एवं यज्ञपात्रध्वनेरसुरराक्षसादिनिवृत्तिहेतुतां प्रतिपादितामुपसंहरति-**स यस्ये**ति ॥ १७ ॥

विहितं समाहननमनूद्य मन्त्रं विध[2]त्ते-**स समाहन्ति कुक्कु[3]टोऽसीति**। 'मधुजिह्व' इति विशेषणस्याभि-प्रायमाह-**स यो देवेभ्य** इति। 'स' खलु-ऋषभो देवानां 'मधुजिह्वः' मधुरवागासीत्, जयहेतुत्वात्। असुरेभ्यस्तु 'विषजिह्वः' विषवागासीत्, पराजयहेतुत्वात्। एवं च मधुजिह्व इति विशेषणस्यायमभिप्रायः, देवानां यादृश आसीः अ[4]तोऽस्माकं तादृशो भवेति। इषमूर्जमावदेत्यादिमन्त्रशेषस्य स्पष्टार्थतामाह-**नात्रे**ति। 'अत्र' अस्मिन् मन्त्रे किमपि तिरोहितं[5] नैवास्ति, अतो न व्याख्यायत इत्यर्थः ॥ १८ ॥

अथ समन्त्रकं शूर्पादानं विध[6]त्ते-**अथे**ति। शूर्पस्य वर्षवृद्धत्वमुपपादयति-**यदि नडानां यदि वेणूनां**

---

१-"गदया सदृशी बाहुपरिमिता शम्या" इति सा ( तै० सं० १. २. १२. ) "द्वात्रिंशदंगुला शम्या"-इति श्रौ० सू० ५.७६। २-"आह्वयत्याहन्त्यन्यो दृषदुपले कुक्कुटोऽसीति त्रिः शम्यया द्विर्दृषदं सकृदुपलाम्" श्रौ० सू० २. ९९। ३-"असुराः क क-इति तान् हन्तुमिच्छन् यो ऽटति-सर्वत्र सञ्चरति स कुक्कुटः। यद्वा कुकं-कुत्सितशब्दं कुटति-तनोतीति कुक्कुटः। यद्वा कुक्कुटाख्यपक्षिवद् ध्वनिविशेषमसुरभीत्यर्थं तनोतीति कुक्कुट इत्युपचर्यते" इति महीधरभाष्यम्। ४-'सोऽस्माकम्' इति पा०। ५-यतोऽत्राविस्पष्टार्थं पदं नास्ति, अतो व्याख्याने प्रयोजनाभाव इत्यर्थः। ६-'वर्षवृद्धमसीति शूर्पमादत्ते" श्रौ० सू० २. १००।

( त्यु ) अुथ हविर्निर्व्वपति । प्रति त्वाव्वर्षवृद्धं वेत्त्विति व्वर्षवृद्धा उ ह्येवैते यदि व्व्रीहयो यदि युवा व्वर्षमु ह्येवैतान्वर्द्धयति तुत्सञ्ज्ञामेवैतच्छूर्पाय च व्वदति नेदुन्योऽन्यु हिनुसातऽ इति ॥ २० ॥

( त्यु ) अुथ निष्पुनाति । परापूत रक्षः परापूताऽ अुरातयऽ इत्युथ तुषान्प्रहन्त्युपहत रुक्षऽ इति तन्नाष्ट्राऽ एवैतद्रक्षाᳬस्यतोऽपहन्ति ॥२१॥

( न्त्य ) अथापविनक्ति । व्वायुर्व्वो व्विविनक्त्वित्ययं वै व्वायुर्योऽयं पुवतऽ एष वाऽ इद मुर्व्वं व्विविनक्ति युदिदं किञ्च विविच्युते तुदेनानेषऽ एवैतद्विविनक्ति स यदैतऽ एतुत्प्राप्नुवन्ति यत्रैनानध्यपविनक्ति ॥२२॥

---

अथ हविर्निर्वपति–" प्रतित्वा वर्षवृद्धं वेत्तु "–( १ अ० १६ मं० ) इति । वर्षवृद्धा उ ह्येवैते यदि व्रीहयो यदि यवाः । वर्षमु ह्येवैतान् वर्द्धयति तत्संज्ञामेवैतच्छूर्पाय च वदति–नेदन्योन्यं हिनसात इति ॥ २० ॥

अथ निष्पुनाति–"परापूत रक्षः परापूता अरातयः "–( १ अ. १६ मं० ) इति । अथ तुषान् प्रहन्ति–"अपहत रक्षः"–( १ अ० १६ मं० ) इति । तन्नाष्ट्रा एवैतद्रक्षांस्यतोऽपहन्ति ॥२१॥

अथापविनक्ति–" वायुर्वो विविनक्तु "–( १ अ० १६ मं० ) इति । अयं वै वायुः–योऽयं पवते । एष वा इदं सर्वं विविनक्ति–यादिदं किञ्च विविच्यते । तदेनानेष एवैतद्विविनक्ति । स यदैत एतत्प्राप्नुवन्ति यत्रैनानध्यपविनक्ति ॥ २२ ॥

---

यदीषीकाणामिति । जलप्रान्ते वर्तमानास्तृणविशेषा नडाः । नलादीनि द्रव्याणि शूर्पस्योपादानभूतानि । 'वर्षम्' उदकवृष्टिरेव हि 'एताः' नडाद्या ओषधीर्वर्द्धयति, अतो वर्षवृद्धत्वाच्छूर्पस्य 'वर्षवृद्धमसि'–इति व्यपदेशः ॥१९॥

तस्मिन् शूर्पेऽवहतानां व्रीहीणां प्रक्षेपं विधत्ते–**अथ हविर्निर्वपतीति** । 'निर्वपति' उलूखलान्निष्कृष्य अवहतान् व्रीहीन् प्रक्षिपतीत्यर्थः । हे हविः ! वर्षवृद्धं त्वां शूर्पं प्रति 'वेत्तु' आत्मन उपर्यवस्थानं जानात्विति मन्त्रार्थः । हविषो वर्षवृद्धत्वमुपपादयति–वर्षवृद्धा उ हीति । व्रीहियवयोरन्यतरो हि हविष उपादानम्; " व्रीहिभिर्यजेत " "यवैर्यजेत"–इति विकल्पेन यागसाधनत्वश्रवणात् । व्रीहियवाद्योषधयश्च वृष्ट्या वर्द्धन्त इति प्रसिद्धमित्यर्थः । "प्रतित्वा"–इत्यस्याभिप्रायमाह–**तत्सञ्ज्ञामेवैतच्छूर्पायेति** । शूर्पहविषोरन्योन्यं हिंसा मा भवेदिति । 'शूर्पाय च' इति चशब्दाद्धविषे च । 'संज्ञां' संज्ञानम् । समानज्ञानत्वमेव मन्त्रो वदतीत्यर्थः ॥ २० ॥

तुषाणामपनयनं समन्त्रकं विधत्ते–**अथ निष्पुनातीति** । तुषाणां राक्षसभागत्वात् तैस्तन्निरसनं विधत्ते–**अथ तुषान्–प्रहन्त्यपहतमिति** । 'प्रहन्ति' प्रक्षिपन्ति । एतन्मन्त्रद्वयस्य प्रयोजनमाह–**तन्नाष्ट्रा एवैतादिति** ॥ २१ ॥

वितुषीकृतानां तण्डुलानां व्रीहीणां च पृथक्करणं विधत्ते–**अथापविनक्तीति** । मन्त्रगतवायुशब्दस्यार्थ-

---

१–" प्रति त्वेति हविरुद्वपाति " श्रौ० सू० २. १०१ । २–मनुसंहिता अ० २ श्लो० १४, "श्रुतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ । उभावपि हि तौ धर्मौ सम्यगुक्तौ मनीषिभिः ॥ " तुल्यबलविरोधे विकल्पः " इति च गौतमः । " एकार्थास्तु विकल्पेरन् " इत्यादिजैमिनीयसूत्राणि चेक्षितव्यानि । जै० सू० १२. ३. १०. १५ । ३–" परापूतमिति निष्पुनाति " "अपहतमिति तुषान्निरस्यति " श्रौ० सू० २, १०२, १०३ । ४–" वायुर्व इति विविनक्ति "–( श्रौ० सू० २, १०४. ) । ५–एतच्च विविक्तीकरणं तुषनिरसनात्पूर्वं प्रतिपत्तव्यं सामर्थ्यादशेषपनिरसनह्येवं सति भवति । उक्तंच ' विरोधेऽर्थस्तत्परत्वात् ' इति । सूत्रक्रमश्च यथाश्रुतीत्यदोषः । इति का० श्रौ० सू० २ । १०९ भाष्ये कर्कः । तथा " पाठक्रमादर्थक्रमो बलीयान् " इत्येव मीमांसान्यायोऽप्यनुसंधेयः । इति ।

( त्तय ) अथानुमन्त्रयते--देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना सुप्रतिगृहीताऽअसन्नित्यथ त्रिः फलीकरोति त्रिवृद्धि यज्ञः॥२३

( स्त ) तद्धैके देवेभ्यः शुन्धध्वं देवेभ्यः शुन्धध्वमिति फलीकुर्वन्ति । तदु तथा न कुर्यादादिष्टं वाऽ एतद्देवतायै हविर्भवत्यथैतद्वैश्वदेवं करोति यदाह देवेभ्यः शुन्धध्वमिति तत्समदं करोति तस्मादु तूष्णीमेव फली-कुर्यात् ॥ २४ ॥ ४ ॥

इति प्रथमकाण्डे प्रथमप्रपाठके प्रथमाध्याये वा चतुर्थं ब्राह्मणम् ॥१॥४॥ प्रथमोऽध्यायश्च समाप्तः ॥१॥

---

अथानुमन्त्रयते-" देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना "-( १ अ० १६ मं० ) । सुप्रतिगृहीता असन्निति । अथ त्रिः फलीकरोति-त्रिवृद्धि यज्ञः ॥ २३ ॥

तद्धैके-" देवेभ्यः शुन्धध्वं देवेभ्यः शुन्धध्व " मिति फलीकुर्वन्ति । तदु तथा न कुर्यात् । आदिष्टं वा एतद्देवतायै हविर्भवति । अथैतद्वैश्वदेवं करोति यदाह-देवेभ्यः शुन्धध्वमिति । तत्समदं करोति । तस्मादु तूष्णीमेव फलीकुर्यात् ॥ २४ ॥

---

माह-**अयं वै वायुर्योऽयं पवत** इति । तस्य विवेचनसामर्थ्यमुपपादयति-**एष वा इदꣳ सर्वं विविनक्ति**-इति । ' तत् ' तस्मात् सर्वस्यास्य विवेचकत्वात् ' एष एव ' वायुः ' एनान् ' व्रीहींस्तण्डुलांश्च ' विविनक्ति' पृथक् करोति, अतस्तत्प्रार्थनं युक्तमित्यर्थः । **स यदैत** इति । ' यदा ' यस्मिन् काले ' एते ' व्रीहितण्डुलाः ' एतद् ' विवेचनं प्राप्नुवन्ति, तस्मिन् समये ' यत्र ' यस्यां पात्र्याम् ' अधि ' उपर्येतानपविनक्ति ॥ २२ ॥

तत्पात्रीगतस्य हविषः समन्त्रकमनुमन्त्रणं विधत्ते-**अथानुमन्त्रयते**-इति । यथा चैते तण्डुलाः ' अच्छिद्रेण ' छिद्ररहितेन पाणिना ' सुप्रतिगृहीताः ' शोभनं प्रतिगृहीता भवेयुः, तथा प्रतिगृह्णात्विति मन्त्रार्थः । फलीकरणं विधत्ते-**अथे**ति । तस्य त्रित्वं प्रशंसति-**त्रिवृद्धि यज्ञः** इति । सवनत्रयादिरूपेण त्रिरावृत्तो हि यज्ञः, अतस्तदनुसारेण फलीकरणमपि त्रिः कर्त्तव्यमित्यर्थः ॥ २३ ॥

तस्मिन् फलीकरणे शाखान्तरीयं मन्त्रविधिमनुवदति-**तद्धैके देवेभ्य** इति । तं निषेधति-**तदु तथा न कुर्या**दिति । एतदुपपादयति-**आदिष्टं वा एतद्देवतायै**-इति । " अग्नये जुष्टं गृह्णामि " इत्येवमग्न्यादिदेवतायै-आदिष्टमेवैतद्धविर्भवति । अत्र तु " देवेभ्यः शुन्धध्वम् "-इत्यनेन मन्त्रेण ' एतद् ' हविः ' वैश्वदेवम् ' विश्वदेवसम्बन्धि करोति । अतो देवानामेतन्मन्त्रप्रयोगे ' समदं ' परस्परं कलहं करोति । अतो वैश्वदेवत्वापादकं मन्त्रं परित्यज्य तूष्णीमेव फलीकर्त्तव्यमिति निगमयति तस्मादु तूष्णीमेव फलीकुर्यादिति ॥ २४ ॥ ४ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये प्रथमकाण्डे प्रथमप्रपाठके प्रथमाध्याये चतुर्थं ब्राह्मणम् । प्रथमाध्यायश्च समाप्तः ॥ १ ॥

---

१-" देवो व इति पात्र्यामोप्याभिमन्त्रयते "-श्रौ० सू० २. १०. ५. ॥ २-" अंगुल्यग्रेणानुमन्त्रण " मिति निगम कात्यायनः । ३-'त्रिः फलीकरोति देवेभ्यः शुन्धध्वं देवेभ्यः शुन्धध्वमित्येके "-( श्रौ० सू० १. १०६ ) । ४-शाखान्तरीयोऽयं मन्त्रः । ५-" शैत्याच्छादकदोषापनयनं फलीकरणम् " इति तै. सं. १. १०५. भाष्ये सायणः । इह तु " उलूखले हविष्करणम्, कण्डनं, उद्वापः, निष्पवनं, विवेचनं, कणनिष्कासनं " तदिति बोध्यम् ।

## अथ प्रथमकाण्डे प्रथमप्रपाठके पञ्चमं ब्राह्मणं द्वितीयाध्याये च प्रथमं ब्राह्मणम् ।

स वै कपालान्येवान्यतर ऽउपदधाति । दृषदुपले ऽअन्यतरस्तद्वा ऽएतदुभयꣳ सह क्रियते तद्यदेतदुभयꣳ सह क्रियते ॥ १ ॥

शिरो ह वा ऽएतद्यज्ञस्य यत्पुरोडाशः । स यान्येवेमानि शीर्ष्णः कपालान्येतान्येवास्य कपालानि मस्तिष्क ऽएव पिष्टानि तद्वा ऽएतदेकमङ्गमेकꣳ सह करवाव समानं करवावेति तस्माद्वा एतदुभयꣳ सह क्रियते ॥ २ ॥

स यः कपालान्युपदधाति । स ऽउपवेषमादत्ते धृष्टिरसीति स यदेनेनाग्निं धृष्णिवोपचरति तेन धृष्टिरथ यदेनेन यज्ञ ऽउपालभत ऽउपेव वा ऽएनेनैतद्वेवेष्टि तस्मादुपवेषो नाम ॥ ३ ॥

स वै कपालान्येवान्यतर उपदधाति, दृषदुपले अन्यतरः । तद्वा एतदुभयं सह क्रियते । तद्यदेतदुभयं सह क्रियते ॥ १ ॥

शिरो ह वा एतद्यज्ञस्य–यत्पुरोडाशः । स यान्येवेमानि शीर्ष्णः कपालानि–एतान्येवास्य कपालानि, मस्तिष्क एव पिष्टानि । तद्वा एतदेकमङ्गम् । एकं सह करवाव, समानं करवावेति । तस्माद्वा एतदुभयं सह क्रियते ॥ २ ॥

स यः कपालान्युपदधाति, स उपवेषमादत्ते–" धृष्टिरसि "–( १ अ० १७ मं० ) इति । स

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

एवं प्रथमाध्याये व्रतोपायनादि तण्डुलकरणान्तं प्रयोगजातमुक्तम्, अथ द्वितीये कपालोपधानादिरभिधीयते । तत्र कपालोपधानपेषणयोर्युगपदनुष्ठानं विधत्ते–( का. श्रौ. सू. २ । १०८ ) **स वै कपालानी**ति । 'अन्यतरः' ऋत्विजां मध्ये एक आग्नीध्रः 'सः' कपालानामुपधाता । 'अन्यतरः' अध्वर्युः, 'सः' पेषणार्थं दृषदुपले उपदध्यात् । उक्तं कर्तृभेदमुपपादयति–**तद्वा एतदुभय[1] सह क्रियते**–इति । एककर्तृकत्वे हि पर्यायेणानुष्ठानं स्यात्, एतच्चोभयं सहानुष्ठेयम्; अतो विभिन्नावेव कर्तारौ युगपत् कुर्यातामित्यर्थः । एतत्सहानुष्ठानमुपपादयितुमनुवदति– **तद्यदि**ति ॥ १ ॥

उपपादयति–**शिरो ह[2] वा एतद् यज्ञस्य यत् पुरोडाश** इति । पुरोडाशस्य प्रतिज्ञातं यज्ञशिरस्त्वं संपादयति–**स यान्येवेमानी**ति । **मस्तिष्क एवे**ति । शिरःकपालान्तर्गतं मांसम् 'मस्तिष्कः'। **तद्वा एतदि**ति । 'तत्' एतत् कपालं मस्तिष्करूपं मिलितं सच्छिरःसंज्ञकमेकमङ्गं प्रसिद्धं लोके । तथात्रापि शिरःकपालमस्तिष्कसंस्तुयोः कपालपिष्टयोः सह प्रयोगात्पुरोडाशात्मकस्य यज्ञशिरस एकीकरणं सेत्स्यतीत्यभिप्रायः ॥ २ ॥

तत्र कपालान्युपदधतः कृत्यमाह–**स उप[3]वेषमादत्ते धृ[4]ष्टिरसी**ति । अङ्गारविभजनार्थं काष्ठमुपवेषः[5] ।

---

१–'वचनविरोधाभ्यामन्यः' एष न्यायोऽप्यत्रानुसंधेयः । २–इयं श्रुतिर्मस्तिष्कश्रुतिरुच्यते । "उत्तानत्वं कपालानां मस्तिष्कश्रुतिदर्शनात् । अतः शीर्ष्णो हि मस्तिष्को न बहिरिति निश्चयः" इति यज्ञपार्श्वे कात्यायनकृतान्मस्तिष्कश्रुतिनाम्ना व्यवहारात् । ३–'उपवेश'–इति तालव्यपाठोऽपि बहुत्र । एवमुत्तरत्राप्यवसेयम् । ४–"धृष्टिरसीत्युपवेषमादाय" (श्रौ० सू० २. १०९) । ५–'पलाशशाखाया मूलदेशे छिन्नः काष्ठभाग उपवेष'–इति महीधरः । अयं च यत्र सान्नाय्यं तत्रैव । पौरोडाशिके तु हस्ताकृतिसदृशः काष्ठविशेषः । तथाऽत्र कर्कः " उपवेषोऽङ्गारापोहनसमर्थकाष्ठम् । का. श्रौ. सू. २ । १०९ ।

तेन प्राचोऽङ्गारानुदूहति । ( त्यु ) अपाग्ने अग्निमामादं जहि निष्क्रव्याद ँ᳚ सेधेत्ययं वा ऽआमाद्येनेदं मनुष्याः पक्त्वाश्नन्त्यथ येन पुरुषं दहन्ति स क्रव्यादेतावेवैतदुभावतो ऽपहन्ति ॥ ४ ॥

( न्त्य ) अथाङ्गारमास्कौति । ( त्या ) आ देवयजं वहेति यो देवयाद् तस्मिन्हवीᳬषि श्रपयाम तस्मिन्यज्ञं तनवामहा ऽइति तस्माद्वा ऽआस्कौति ॥ ५ ॥

तं मध्यमेन कपालेनाभ्युपदधाति । देवा ह वै यज्ञं तन्वानास्ते ऽसुररक्षसेभ्यऽ आसङ्गाद्बिभयाञ्चक्रुर्नेन्नोऽधस्तान्नाष्ट्रा रक्षाᳬस्युपोत्तिष्ठानित्य-

---

यदेनेनाग्निं धृष्णिववोपचरति, तेन धृष्टिः । अथ यदेनेन यज्ञ उपालभते, उपेव वा एनेनैतद्वेवेष्टि । तस्मादुपवेषो नाम ॥ ३ ॥

तेन प्राचोऽङ्गारानुदूहति--"अपाग्ने अग्निमामादं जहि निष्क्रव्याद ँ᳚ सेध" ( १ अ० १७ मं० ) इति । अयं वा आमाद्--येनेदं मनुष्याः पक्त्वा अश्नन्ति । अथ येन पुरुषं दहन्ति, स क्रव्यात् । एतावेवैतदुभावतोऽपहन्ति ॥ ४ ॥

अथाङ्गारमास्कौति--"आ देवयजं वह"--( १ अ० १७ मं० ) इति । यो देवयाट्, तस्मिन् हवींषि श्रपयाम; तस्मिन् यज्ञं तनवामहा--इति । तस्माद्वा आस्कौति ॥ ५ ॥

तं मध्यमेन कपलेनाभ्युपदधाति । देवा ह वै यज्ञं तन्वानास्ते असुररक्षसेभ्य आसङ्गाद् बिभ-

---

धृष्टिशब्दं निर्वक्ति--स **यदेनेने**ति । 'धृष्णिवव'--इति क्रियाविशेषणम् । "ञिधृषा प्रागल्भ्ये" (स्वा० प. २३) इत्यस्माद् धृष्णोत्यनेनेति धृष्टिरिति करणे क्तिन्नित्यर्थः । अत एवैतदुपवेषस्य संज्ञान्तरम् । तथा चान्यत्र श्रूयते--"धृष्टिरुपवेष--" इति । अथेत्याद्युपवेषस्य निर्वचनम् । अथ यज्ञे 'एतेन' काष्टेन 'यत्' अङ्गारादिकम् 'उपालभते' प्राप्नोति । 'तत्' एतत् 'एतेन' उपवेषेण 'वेवेष्टीव' । "विष्लृ व्याप्तौ" (जु. उ. १३) इत्यस्मात् करणसाधनो घञन्त उपवेषशब्दः ॥ ३ ॥

अग्निगताशुद्धांशस्य निरसनं विधत्ते--**तेने**ति । 'प्राचः'--इति विधेयविशेषणम् । प्राग्दिग्गतानित्यर्थः । मन्त्रगतयोरामात्क्रव्यात्शब्दयोर्विवक्षितमर्थमाह--**अयं वा** इति । आममपक्वमत्तीत्ति 'आमात्', मनुष्याणामोदनपाकादिहेतुरग्निः । क्रव्यं पललमत्तीति 'क्रव्यात्' ( इति ) शवदहनोऽग्निः ॥ ४ ॥

एवमयज्ञियमग्निं मन्त्रेण निर्हत्य शुद्धादग्नेः पुरोडाशश्रपणार्थमङ्गाराहरणं विधत्ते--**अथे**ति । 'आस्कौति' विभजतीत्यर्थः । "स्कुञ् आप्रवणे" ( क्र्या. उ. ६ ) इति धातुः । इत्थं कुर्वतामभिप्रायमाह--**य** इति । देवान् यजतीति 'देवयाट्' 'यः' अग्निः तस्मिन् हविःश्रपणादिकं करवामहै--इत्यनेनाभिप्रायेणेत्यर्थः ॥ ५ ॥

तस्मिन्नङ्गारे मध्यमकपालस्योपधानं विधत्ते--**तमि**ति । अङ्गारस्योपरि विहितं कपालोपधानं प्रशंसति--

---

१-धृष्टेरुपवेषवाचकत्वम् (श्रौ० सू० २६ । २ । १५ । ३ । ९ । ७ । २८) द्रष्टव्यम् । २-"अपाग्न इत्यङ्गारान् प्राचः करोति" श्रौ० सू० २. १०९ । ३-'शवदाहकोऽग्निः' इति पा० । ४-'निर्हृत्य' इति पा. । ५-"आदेवयजमित्यङ्गारानाहृत्य" श्रौ० सू० २. ११० । ६-"कपालेनावच्छादयति ध्रुवमसीति" (श्रौ० सू० २-११०-१११-११२) ।

ग्निर्हि रक्षसामपहन्ता तस्मादेवमुपदधाति तद्यदेषऽ एव भवति नान्यऽएष हि यजुष्कृतो मेध्यस्तस्मान्मध्यमेन कपालेनाभ्युपदधाति ॥ ६ ॥

सऽ उपदधाति । ध्रुवमसि पृथिवीं दृꣳहेति पृथिव्याऽ एव रूपेणैतदेव दृꣳहत्येतेनैव द्विषन्तं भ्रातृव्यमवबाधते ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधायेति बह्वी वै यजुःष्वाशीस्तद्ब्रह्म च क्षत्रं चाशास्तऽ उभे वीर्ये सजातवनीति भूमा वै सजातास्तद्भूमानमाशास्त ऽउपदधामि भ्रातृव्यस्य वधायेति यदि नाभिचरेद्यद्युऽ अभिचरेदमुष्य वधायेति ब्रूयादभिनिहितमेव सव्यस्य पाणेरङ्गुल्या भवति ॥ ७ ॥

---

याश्चक्रुः, नेन्नोऽधस्तान्नाष्ट्रा रक्षांस्युपोत्तिष्ठानिति । अग्निर्हि रक्षसामपहन्ता । तस्मादेवमुपदधाति । तद्यदेष एव भवति, नान्यः । एष हि यजुष्कृतो मेध्यः । तस्मान्मध्यमेन कपालेनाभ्युपदधाति॥६॥

स उपदधाति–"**ध्रुवमसि पृथिवीं दृꣳह**"–( १ अ० १७ मं० ) इति । पृथिव्या एव रूपेणैतदेव दृंहति । एतेनैव द्विषन्तं भ्रातृव्यमवबाधते–"**ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाय**"–( १ अ० १७ मं० ) इति । बह्वी वै यजुःष्वाशीः, तद् ब्रह्म च क्षत्रं चाशास्ते । उभे वीर्ये । सजातवनीति । भूमा वै सजाताः, तद् भूमानमाशास्ते । उपदधामि भ्रातृव्यस्य वधायेति–यदि नाभिचरेत् । यद्यु अभिचरेत्–अमुष्य वधायेति ब्रूयात् । अभिनिहितमेव सव्यस्य पाणेरङ्गुल्या भवति ॥ ७ ॥

---

**देवा ह वा** इति । **नेन्न** इति । 'नः' अस्माकं हविषो भागेनैव राक्षसादय उपोत्तिष्ठेयुरित्यनेनाभिप्रायेणाङ्गारस्योपरि कपालोपधानं कृतवन्त इत्यर्थः । एवं सत्युक्तभयनिवृत्तिमाह--**अग्निर्ही**ति । "आ देवयजम्" इति मन्त्रेण स्थापितस्यैवाङ्गारस्योपरि कपालोपधानं प्रशंसति--**तद्यदि**ति । यजुषा मन्त्रेण संस्कृतत्वादेष एव हि कपालोपधाने मुख्यो नान्य इत्यर्थः ॥ ६ ॥

विहितमुपधानमनूद्य मन्त्रं विधत्ते–**स उपदधाती**ति । **पृथिवीं दृꣳहे**ति । पृथिवीसंबन्धश्रवणात् तत्संबन्धिरूपेणैतदेव कपालं दृढं करोति । दृढेन चैतेन कपालेन विद्वेषणं कुर्वन्तं शत्रुमवबाधते । एतन्मन्त्रशेषमनूद्य व्याचष्टे–**ब्रह्मवनी**ति । **बह्वी वा** इत्यादि । यजुष्षु यजुर्मन्त्रेषु बहुविधा खलु 'आशीः' फलप्रार्थना, अतो बहुविधं ब्रह्मक्षत्रादिसम्भजनमनेन प्रतिपाद्यत इत्यर्थः । मन्त्रगतयोर्ब्रह्मक्षत्रशब्दयोर्लक्षणया तद्वीर्यपरत्वं विवक्षितमिति व्याचष्टे–**उभे वीर्ये** इति । **भूमा वा** इति । समानं जायन्त इति 'सजाताः' ज्ञातयः । तेषु च बहुभावस्य दर्शनात् धर्मिवाचिना सजातशब्देन तद्धर्मो विवक्षित इत्यर्थः । अभिचरतो विशेषं वक्तुमुक्तं नित्यपक्षमनुवदति–**उपदधामि भ्रातृव्यस्ये**ति । तमेव विशेषं दर्शयति--**यद्यु अभिचरेदि**ति । अभिचरणपक्षे 'भ्रातृव्यस्य वधाय--' इति स्थाने 'अमुष्य[1]' वधाय--इतिश त्रोर्नाम षष्ठ्यन्तं निर्दिश्य ब्रूयादित्यर्थः । उपहितस्य कपालस्योपर्यङ्गुल्या अभिनिधानं विधत्ते--**अभिनिहितमेवे**ति ॥ ७ ॥

---

१–" अमुष्येति द्विषच्छब्देऽभिचरन् " "अन्यत्रापि" श्रौ० सू० २. १११, ११२. ।

(त्य) अथाङ्गारमास्कौति । नेदिह पुरा नाष्ट्रा रक्षाꣳस्याविशानिति ब्राह्मणो हि रक्षसामपहन्ता तस्मादभिनिहितमेव सव्यस्य पाणेरङ्गुल्या भवति ॥८॥

( त्य ) अथाङ्गारमध्यूहति (त्य) अग्ने ब्रह्म गृभ्णीष्वेति नेदिह पुरा नाष्ट्रा रक्षाꣳस्याविशानित्यग्निर्हि रक्षसामपहन्ता तस्मादेवमध्यूहति ॥ ९ ॥

( त्यु ) अथ यत्पश्चात्तदुपदधाति । धरुणमस्यन्तरिक्षं दृꣳहेत्यन्तरिक्षस्यैव रूपेणैतदेव दृꣳहत्येतेनैव द्विषन्तं भ्रातृव्यमवबाधते ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधायेति ॥ १० ॥

( त्यु ) अथ यत्पुरस्तात्तदुपदधाति । धर्त्रमसि दिवं दृꣳहेति दिवऽएव रूपेणैतदेव दृꣳहत्येतेनैव द्विषन्तं भ्रातृव्यमवबाधते ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधायेति ॥ ११ ॥

---

अथाङ्गारमास्कौति । नेदिह पुरा नाष्ट्रा रक्षांस्याविशानिति । ब्राह्मणो हि रक्षसामपहन्ता । तस्मादभिनिहितमेव सव्यस्य पाणेरङ्गुल्या भवति ॥ ८ ॥

अथाङ्गारमध्यूहति--" अग्ने ब्रह्म गृभ्णीष्व "-( १ अ० १८ मं० ) इति । नेदिह पुरा नाष्ट्रा रक्षांस्याविशानिति । अग्निर्हि रक्षसामपहन्ता । तस्मादेवमध्यूहति ॥ ९ ॥

अथ यत्पश्चात्तदुपदधाति-" धरुणमस्यन्तरिक्षं दृꣳह "-( १ अ० १८ मं० ) इति । अन्तरिक्षस्यैव रूपेणैतदेव दृंहति । एतेनैव द्विषन्तं भ्रातृव्यमवबाधते-"ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाय "-( १ अ० १८ मं० ) इति ॥ १० ॥

अथ यत्पुरस्तात्तदुपदधाति-" धर्त्रमसि दिवं दृꣳह"-( १ अ० १८ मं० ) इति । दिव एव

---

दक्षिणहस्तेनान्यस्याङ्गारस्याहरणं विधत्ते--अथेति । नेदिहेत्यादि । यदि सव्यपाण्यङ्गुल्या अभिनिधानं[1] न कुर्यात्, तदा ' इह ' अस्मिन् कपाले उपर्यङ्गारनिधानात् पुरस्तादेव [ राक्षसाः[2] प्रविशेयुः; नैव तथा स्यादित्यङ्गुल्या ] अभिनिहितमेव भवेदित्यर्थः । तथा सत्युक्तदोषनिवृत्तिमाह--ब्राह्मणो हीति । अग्निर्यथा दाहेन रक्षांसि हिनस्ति, एवं ब्राह्मणोऽपि मन्त्रसामर्थ्येन तेषां हिंसकः । अतोऽङ्गाराध्यूहनपर्यन्तमङ्गुल्याभिनिहितमेव भवेदित्यर्थः ॥ ८ ॥

समन्त्रकं कपालस्योपर्यङ्गाराध्यूहनं विधत्ते[3]-अथेति । नेदिह पुरेति । ' पुरा ' पुरोडाशाधिश्रयणात् प्रागित्यर्थः । अन्यत् पूर्ववत् ॥ ९ ॥

पाश्चात्त्यकपालस्योपधानं विधत्ते[4]-अथेति । मध्यमकपालस्योपधानानन्तर्यमथशब्दार्थः । अन्यत् सर्वं पूर्ववद् व्याख्येयम् ॥ १० ॥

मध्यमकपालात् पूर्वदेशे स्थाप्यस्य कपालस्योपधानं विधत्ते[5]--अथ यदिति । दिव एव रूपेणेति । दिवः संबन्धिना रूपेण ' एतत् ' तृतीयं कपालं दृढीकरोतीत्यर्थः ॥ ११ ॥

---

१-"सव्याङ्गुल्या शून्येऽङ्गारं निदधात्यग्ने ब्रह्मेति" श्रौ० सू० २, ११३ । २-कोष्ठान्तर्गतस्यांशस्य स्थाने 'राक्षसाः प्रविशेयुः, अतः कपालस्योपर्यङ्गाराध्यूहनपर्यन्तमङ्गुल्या ' इति पाठान्तरं क्वचित् । ३-श्रौ० सू० २. ११३ । ४-" धरुणमिति पश्चात् " श्रौ० सू० २. ११४ । ५-" पुरस्ताद्धर्त्रमिति " श्रौ० सू० २. ११५ ।

( त्यु ) अथ यद्दक्षिणतस्तदुपदधाति । विश्वाभ्यस्त्वाशाभ्यऽउपदधामीति स यदिमाँल्लोकानति चतुर्थमस्ति वा न वा तेनैवैतद्द्विषन्तं भ्रातृव्यमवबाधते ऽनद्धा वै तद्यदिमाँल्लोकानति चतुर्थमस्ति वा न वानद्धो तद्यद्विश्वाऽआशास्तस्मादाह विश्वाभ्यस्त्वाशाभ्यऽ उपदधामीति तूष्णीं वै वेतराणि कपालान्युपदधाति चितस्स्थोर्द्ध्वचितऽ इति वा ॥ १२ ॥

( वाथु ) अथाङ्गारैरभ्यूहति । भृगूणामङ्गिरसां तपसा तप्यध्वमित्येतद्वै तेजिष्ठं तेजो यद्भृग्वङ्गिरसा ᳪसुतप्तान्यसन्निति तस्मादेवमभ्यूहति ॥ १३ ॥

---

रूपेणैतदेव दृंहति । एतेनैव द्विषन्तं भ्रातृव्यमवबाधते–" ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाय "–( १ अ० १८ मं० ) इति ॥ ११ ॥

अथ यद्दक्षिणतस्तदुपदधाति–" विश्वाभ्यस्त्वाशाभ्य उपदधामि "–( १ अ० १८ मं० ) इति । स यदिमाँल्लोकानति चतुर्थमस्ति वा न वा । तेनैवैतद् द्विषन्तं भ्रातृव्यमवबाधते । अनद्धा वै तद्–यदिमाँल्लोकानति चतुर्थमस्ति वा न वा । अनद्धो तद्–यद् विश्वा आशाः । तस्मादाह–' विश्वाभ्यस्त्वाशाभ्य उपदधामि'–इति । तूष्णीं वैवेतराणि कपालान्युपदधाति । " चितस्स्थोर्द्ध्वचितः "–( १ अ० १८ मं० ) इति वा ॥ १२ ॥

अथाङ्गारैरभ्यूहति–" भृगूणामङ्गिरसां तपसा तप्यध्वम् "–( १ अ० १८ मं० ) इति । एतद्वै तेजिष्ठं तेजो यद् भृग्वङ्गिरसाम् । सुतप्तान्यसन्निति–तस्मादेवमभ्यूहति ॥ १३ ॥

---

दक्षिणभागस्थितस्य कपालस्योपधानं विधत्ते–**अथ यदिति** । मन्त्रस्य तात्पर्यमाह–**स यदि**त्यादिना । पूर्वं हि त्रिभिरुपहितैः कपालैः पृथिव्यादिलोकत्रयसकाशाच्छत्रोर्बाधः प्रतिपादितः; इदानीं तु ' इमान् ' त्रीँल्लोकान् ' अति ' अतिक्रम्य यत् ' चतुर्थम् ' स्थानम्, तदस्ति वा न वेति संदिग्धमेव; लोकत्रयवत् प्रसिद्ध्यभावात् । अतो मन्त्रे लोकवाचिशब्दविशेषं परित्यज्य " विश्वाभ्यस्त्वाशाभ्य "–इति सवशब्दपर्यायस्य विश्वशब्दस्य प्रयोगात् संदिह्यमानात् सर्वस्मादेव स्थानात् ' द्विषन्तम् ' शत्रुं ' सः ' यजमानः ' तेन ' चतुर्थकपालोपधानेन बाधत इत्यर्थः । " विश्वाभ्यः " इति मन्त्रस्य लोकत्रयातिरिक्तपरत्वमुपपादयति–**अनद्धा वा** इत्यादि । लोकत्रयातिवर्तिनश्चतुर्थस्य सद्भावोऽसद्भावश्च ' अनद्धा वै ' अस्माकमप्रत्यक्ष एव; यद् ' विश्वा आशाः ' सर्वा दिशः, तदप्यनद्धा ' अनद्धैव ' अप्रत्यक्षमेव, लोकत्रयवत् प्रसिद्ध्यभावात् । अतोऽप्रत्यक्षदिग्वाचिना ' विश्वाभ्य आशाभ्य ' इति पदद्वयेन लोकत्रयव्यतिरिक्तं सकलमेवाप्रत्यक्षं विवक्षितमित्यर्थः । एवं कपालचतुष्टयस्य मन्त्रेणोपधानं प्रतिपाद्यावशिष्टकपालोपधाने पक्षद्वयमाह–**तूष्णीं वैवेति**॥ १२॥

उपहितेषु कपालेष्वङ्गाराध्यूहन[३] विधत्ते–**अथेति** । मन्त्रे भृगूणामङ्गिरसामिति तपसो यद् विशेषणं तद् व्याचष्टे–**एतद्वा** इति । यद् ' भृग्वङ्गिरसाम् ' महर्षीणां तपोविशेषजनितं तेजः, ' एतत् ' खल्वग्न्यादितेजो-

---

१–" विश्वाभ्य इति दक्षिणतः " श्रौ० सू० २. ११६ । २–" समं विभज्य द्वे दक्षिणतः एवमुत्तरतश्चितस्स्थेति " तूष्णीं । वा " श्रौ० सू० २-११७, ११८ । तदग्रे च " एवमेकादशाग्नीषोमीयस्य " " अधिकं दक्षिणतः " श्रौ० सू० २. ११९, १२० । स्मार्त्तं चैतत्कर्मेति तद्भाष्यम् । ३–" भृगूणामित्यङ्गारैरभ्यूहति "–श्रौ० सू० २. १२१ ।

( त्यु ) अथ यो दृषदुपले उपदधाति । स कृष्णाजिनमादत्ते शर्म्मासीति तदवधूनोत्यवधूतꣳ रक्षोऽवधूता अरातय इति सो ऽसावेव बन्धुस्तत्प्रतीचीनग्रीवमुपस्तृणात्यदित्यास्त्वगसि प्रति त्वादितिर्वेत्त्विति सोऽसावेव बन्धुः ॥ १४ ॥

( रु ) अथ दृषदमुपदधाति । धिषणासि पर्वती प्रति त्वादित्यास्त्वग्वेत्त्विति धिषणा हि पर्वती हि प्रति त्वादित्यास्त्वग्वेत्त्विति तत्सञ्ज्ञामेवैतत्कृष्णाजिनाय च वदति नेदन्योऽन्यꣳ हिनसात इतीयमेवैषा पृथिवी रूपेण ॥ १५ ॥

---

अथ यो दृषदुपले उपदधाति--स कृष्णाजिनमादत्ते--" शर्म्मासि "--( १ अ० १९ मं० ) इति । तदवधूनोति--" अवधूतꣳ रक्षोऽवधूता अरातयः "--( १ अ० १९ मं० ) इति । सोऽसावेव बन्धुः । तत् प्रतीचीनग्रीवमुपस्तृणाति--" अदित्यास्त्वगसि प्रति त्वादितिर्वेत्तु "--( १ अ० १९ मं० ) इति । सोऽसावेव बन्धुः ॥ १४ ॥

अथ दृषदमुपदधाति--" धिषणासि पर्वती प्रति त्वादित्यास्त्वग् वेत्तु "--( १ अ० १९ मं० ) इति । धिषणा हि, पर्वती हि, प्रति त्वादित्यास्त्वग् वेत्त्विति । तत्संज्ञामेवैतत् कृष्णाजिनाय च वदति--नेदन्योन्यं हिनसात इति । इयमेवैषा पृथिवी रूपेण ॥ १५ ॥

---

न्तरात् ' तेजिष्ठम् ' तेजस्वितमम्, अतिशयेन दीप्तम् । तेजस्विशब्दादिष्ठनि " विन्मतोर्लुक् " ( पा० सू० ५. ३. ६५ ) इति लुक् । एवं वदतो मन्त्रस्याभिप्रायमाह--**सुतप्तानी**ति । एतान्युपहितानि कपालानि भृग्वङ्गिरसां तपसा सुष्ठु--अतिशयेन तप्तानि भवेयुरित्यनेनाभिप्रायेणेत्यर्थः । ' असन् "--इत्यस्तेः ( पा. सू. ३ । ४ । ७ ) पञ्चमलकारे रूपम् ॥ १३ ॥

एवं सहानुष्ठेययोः कपालोपधानमभिधाय पेषणं विधातुमारभते--**अथे**ति । अवहननवत् पेषणेऽस्यापि कृष्णाजिनस्योपरिकर्तव्यतामभिप्रेत्य तदादानं विधत्ते--**स कृष्णाजिनमि**ति । **सोऽसावेवे**ति । अवहननप्रकरणे कृष्णाजिनावधूननविधिशेषो यः प्रागाम्नातः--" तन्नाग्र एवैतद्रक्षांस्यतोऽपहन्तीति--" स एवात्राप्यनुषज्य योजनीय इत्यतिदेशः । अस्य कृष्णाजिनस्य स्तरणं विधत्ते--**तादि**ति । " इयं वै पृथिव्यदितिः--" इत्यादिना यत् प्रागाम्नातमेतन्मन्त्रव्याख्यानम्, तदत्रातिदिशति--**सोऽसावेवे**ति ॥ १४ ॥

तस्य कृष्णाजिनस्योपरि दृषदः समन्त्रकमुपधानं विधत्ते--**अथे**ति । **धिषणा ही**त्यादि । पेषणीयतण्डुलानां धारणात् ' धिषणा ' पर्वतावयवत्वात् ' पर्वती '--इत्येतदुभयं प्रसिद्धमिति ' हि '--शब्दयोरर्थः । गतमन्यत् । **इयमेवे**ति । पार्थिवेन धारणाख्येन रूपेण योगात् ' एषा ' दृषदियमेव पृथिवीस्तुतिः ॥ १५ ॥

---

१-इहैव ब्राह्मणे पूर्वं--१ । ४ । ४ । द्रष्टव्यम् । २-" कृष्णाजिनमादत्ते पूर्ववत्प्रतिकृष्णाजिनम् "-श्रौ० सू० २. १२३ । ३-१ । ४ । ५ ॥ ४-" तस्मिन् दृषदं धिषणासीति "-श्रौ० सू० २. १२४. ।

( णा ) अथ शम्यामुदीचीनाग्रामुपदधाति । दिवस्कम्भनीरसीत्यन्तरिक्षमेव रूपेणान्तरिक्षेण हीमे द्यावापृथिवी विष्टब्धे तस्मादाह दिवस्कम्भनीरसीति ॥ १६ ॥

( त्य ) अथोपलामुपदधाति । धिषणासि पार्वतेयी प्रति त्वा पर्वती वेत्त्विति कनीयसी ह्येषा दुहितेव भवति तस्मादाह पार्वतेयीति प्रति त्वा पर्वती वेत्त्विति प्रति हि स्वः सञ्जानीते तत्सञ्ज्ञामेवैतदृषदुपलाभ्यां वदति नेदन्योऽन्यꣳ हिनसातऽ इति द्यौरेवैषा रूपेण हनूऽ एव दृषदुपले जिह्वैव शम्या तस्माच्छम्यया समाहन्ति जिह्वया हि वदति ॥ १७ ॥

---

अथ शम्यामुदीचीनाग्रामुपदधाति–" **दिवस्कम्भनीरसि** "–( १ अ० १९ मं० ) इति । अन्तरिक्षमेव रूपेण । अन्तरिक्षेण हीमे द्यावापृथिवी विष्टब्धे । तस्मादाह--दिवस्कम्भनीरसीति॥ १६॥

अथोपलामुपदधाति–"**धिषणासि पार्वतेयी प्रति त्वा पर्वती वेत्तु** "–( १ अ० १९ मं० ) इति । कनीयसी ह्येषा दुहितेव भवति । तस्मादाह पार्वतेयीति । प्रति त्वा पर्वती वेत्त्विति । प्रति हि स्वः संजानीते । तत् संज्ञामेवैतद्दृषदुपलाभ्यां वदति नेदन्योन्यं हिनसात इति । द्यौरेवैषा रूपेण । हनू एव दृषदुपले । जिह्वैव शम्या । तस्माच्छम्यया समाहन्ति । जिह्वया हि वदति ॥ १७ ॥

---

अथ दृषदः पश्चाद्भागे शम्याया उपधानं विधत्ते–**अथ शम्यामि**ति । ' उदीचीनम् ' उदगवस्थितमग्रे यस्याः सा तथोक्ता । कात्यायनोऽप्याह स्म–" पश्चाच्छम्यामुपोहत्युदीचीं दिव इति " ( श्रौ० सू० २. १२९.) इति । शम्याया द्युलोकस्तम्भनहेतुत्वं वक्तुमन्तरिक्षरूपतामाह–**अन्तरिक्षमेवे**ति । द्यावापृथिव्यात्मना संस्तुतयोर्दृषदुपलयोर्मध्ये[1]ऽवस्थानलक्षणेन रूपेण ' अन्तरिक्षमेव ' अन्तरिक्षलोकात्मिकैव ' शम्या ' इमे च द्यावापृथिव्यावन्तरिक्षेण हि यस्माद् ' विष्टब्धे ' विविधमधस्तादुपरिष्टाच्च धारिते, अतोऽन्तरिक्षात्मिका शम्यापि दिवस्कम्भनीरसीति स्तूयते ॥ १६ ॥

दृषद उपर्युपलायाः स्थापनं समन्त्रकं विधत्ते–**अथे**ति । ' पार्वतेयी ' शब्दं व्याचष्टे–**कनीयसी**त्यादिना । यस्मादेषोपलाऽतिशयेन दृषदः सकाशादल्पपरिमाणा, अतः ' एषा ' दृषदः ' दुहितेव भवति ' दुहिता हि लोके मातुरल्पीयसी भवति । तस्मादेषा पर्वत्याः पुत्री ' पार्वतेयी '–इति"स्त्रीभ्यो ढक्"(पा० सू० ४. १. १२०.) इति ढक् । ' प्रति त्वा पर्वती वेत्तु '–इति मन्त्रशेषेण परस्परहिंसापरिहारार्थं दृषदुपलयोर्मैत्रीकरणमर्थ इति व्याचष्टे–**प्रति ही**ति । उपर्यवस्थानलक्षणेन रूपेण ' एषा ' उपला ' द्यौरेव ' द्युलोकात्मिकैवेत्यर्थः । तदेको

---

१–यद्यप्यत्र सायणाचार्यैः श्रुत्यनुरोधेन शम्याया दृषदुपलयोर्मध्येऽवस्थानं प्रत्यपादि । तथापि " पश्चाच्छम्यामुपोहत्युदीचीं दिव इति " सूत्रकारप्रस्थानात् दृषदोऽधस्तात्पश्चाद्भागे शम्याया उपधानं कर्तव्यम् । प्राक्प्रवणतासम्पत्तये । तथा चात्र कर्कः- " उपरिस्थाद्वाक्यशेषात् । हनू एव दृषदुपले जिह्वैव शम्येति जिह्वासंस्तुतिरन्तरालवृत्तिसामान्येन । नवा विरोधात् । विरुध्यते ह्युपरि शम्ययोपहितया पेषणम् । किंचान्यदधस्तादुपहिता दृषदः प्राक्प्रवणतामुपजनयतीति निश्चलीकरोत्यतो दृष्टार्थत्वादधस्तादुपधानम् । लिङ्गाच्च " सये जघनेन शम्याम्पिष्यमाणानामवशीयन्ते पिष्टानि वा तण्डुला वेति । अधस्तादुपहिताया एतद्भवति नोपरि । जिह्वासंस्तुतिरुपधानक्रमापेक्षया । " इति " पेषणार्थत्वादुपलाया दृषद्येवोपधानम्प्राप्नोति । अभिहितन्यायसंसूचनार्थं दृषद्ग्रहणम् " इति का० श्रौ० सू० भा० २, १२५–१२६ । इति । २–" दृषद्युपलां धिषणासीति " श्रौ० सू० २. १२६. ।

( त्यु ) अथ हविरधिवपति । धान्यमसि धिनुहि देवानिति धान्य ँ हि देवान्धिनवदित्यु हि हविर्गृह्यते ॥ १८ ॥

(तेऽथ) अथ पिनष्टि । प्राणाय त्वोदानाय त्वा व्यानाय त्वा दीर्घामनुप्रसितिमायुषे धामिति प्रोहति देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वेति ॥ १९ ॥ (शतम् १००)

तद्यदेवं पिनष्टि । जीवं वै देवानाᳬं हविरमृतममृतानामथैतदुलूखलमुसलाभ्यां दृषदुपलाभ्याᳬं हविर्यज्ञं घ्नन्ति ॥ २० ॥

---

अथ हविरधिवपति—" धान्यमसि धिनुहि देवान् "— ( १ अ० २० मं० ) इति । धान्यं हि देवान् धिनवदित्यु हि हविर्गृह्यते ॥ १८ ॥

अथ पिनष्टि—" प्राणाय त्वोदानाय त्वा व्यानाय त्वा दीर्घामनुप्रसितिमायुषे धाम् "— ( १ अ० २० मं० ) । इति । प्रोहति—" देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वा "— ( १ अ० २० मं० ) इति ॥ १९ ॥

तद्यदेवं पिनष्टि । जीवं वै देवानां हविरमृतममृतानाम् । अथैतदुलूखलमुसलाभ्यां दृषदुपलाभ्यां हविर्यज्ञं घ्नन्ति ॥ २० ॥

---

दृषदुपले समाहन्तीति प्राग् यत्तयोः समाहननं विहितम्, तत्र शम्यायाः साधनत्वं प्रसङ्गादुपपादयति—**हनू एवेति**। दृषदुपलयोरुभयत्रावस्थानाद्धनूत्वम् । तन्मध्येऽवस्थानाच्छम्याया जिह्वात्वम् । यस्माच्च जिह्वया लोको वदति तस्माजिह्वास्थानीयया शम्ययैव समाहननं कुर्यादित्यर्थः ॥ १७ ॥

अथ पेषणार्थं दृषद उपरि समन्त्रकं तण्डुलप्रक्षेपं विधत्ते—**अथ हविरिति** । मन्त्रगतधान्यशब्दस्याभिप्रायमाह—**देवान् धिनवदिति** । " धिवि प्रीणनार्थः " ( भ्वा. प. ५९४ ) इति धातुः । यष्टव्यानग्न्यादिदेवान् ' धिनवत् ' प्रीणयेदित्यनेनैवाभिप्रायेण हि हविर्गृह्यते, अतो धिनोति प्रीणयतीति ' धान्यम् ' । यत एवमतो देवान् धिनुहीति मन्त्रार्थः ॥ १८ ॥

समन्त्रकं पेषणं विधत्ते—**अथेति** । ' पिनष्टि ' संचूर्णयति । " पिष्लृ संचूर्णने " ( रु. प. १५ ) इति धातुः । प्रकर्षेण—अनिति चेष्टत इति नासिकाभ्यां बहिर्निर्गच्छन्—श्वासरूपो वायुः ' प्राणः ' । ' उत् ' ऊर्ध्वादधोदेशं प्रत्यनिति चेष्टत इति ' उदानः ' नासिकाभ्यां देहे पुनः प्रविशन् वायुः । अन्नपानादिरसं विविधं सर्वासु नाडीष्वनिति प्रेरयतीति ' व्यानः ' ; ऊर्ध्वाधोवृत्तिविलक्षणो मध्यवर्त्तिर्वायुः । एतन्मन्त्रार्थ उत्तरमन्त्रसापेक्ष इति तदुभयं समुच्चित्य व्याख्यातुमुत्तरमन्त्रं विनियुङ्क्ते—**प्रोहति देवो व इति** । अनेन मन्त्रेण कृष्णाजिने प्रक्षिपतीत्यर्थः । यत्तु प्रकारान्तरेण कात्यायनेन सूत्रप्रणयनम् तद् ब्राह्मणान्तरमूलम् । स ह्येवं सूत्रयामास—" पिनष्टि प्राणाय त्वेति प्रतिमन्त्रम् ", " दीर्घामिति कृष्णाजिने प्रोहति ", " चक्षुषे त्वेतीक्षते " ( श्रौ. सू. २. १२७–१२८–१२९ )–इति ॥ १९ ॥

प्राणायेति मन्त्रस्याभिप्रायमाविष्कर्तुमुक्तं पेषणमनुवदति—**तद्यदिति** । ' अमृतानां मरणरहितानां देवानां

---

१–अत्र हि कण्डिकानां शतसंख्या पूर्णा भवतीति तस्यैवायं संकेतः; एवमुत्तरत्रापि ज्ञेयम् । २–इहैव ब्राह्मणे पूर्वं १।४।१३। ३–" धान्यमसीति तण्डुलानोप्य " इति श्रौ० सू० २ । १२७ । ४–' ऊर्ध्वाधोवृत्ति '–इति पा० । ५–' कात्यायनसूत्रप्रमाणं तत् शाखान्तरमूलम् ' इति पा० । ६–एतद्ब्राह्मणनये तु आयुषेधामित्यन्तः पेषणमन्त्रः । देवोव इत्यादिरेवं प्रोहणमन्त्र इति विशेषः । वस्तुतस्त्वत्र श्रुतौ " प्राणायत्वोदानाय त्वा व्यानायत्वा " इत्येतावन्तमेकं मन्त्रम्मत्वा पेषणे विनियुक्तः–

स यदाह । प्राणाय त्वोदानाय त्वेति तत्प्राणोदानौ दधाति व्यानाय त्वेति तद्व्यानं दधाति दीर्घामनुप्रसितिमायुषे धामिति तदायुर्दधाति देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना सुप्रतिगृहीतान्यसन्निति चक्षुषे त्वेति तच्चक्षुर्दधात्येतानि वै जीवतो भवन्त्येवमु हैतज्जीवमेव देवानाᳬ हविर्भवत्यमृतममृतानां तस्मादेवं पिनष्टि पिᳬ षन्ति पिष्टान्यभीन्धते कपालानि ॥ २१ ॥

(न्य) अथैकऽ आज्यं निर्वपति । यद्वा ऽआदिष्टं देवतायै हविर्गृह्यते यावद्देवत्यं तद्भवति तदितरेण यजुषा गृह्णाति न वा ऽ एतत्कस्यैचन देवतायै

---

स यदाह—प्राणाय त्वोदानाय त्वेति, तत्प्राणोदानौ दधाति । व्यानाय त्वेति, तद् व्यानं दधाति । दीर्घामनुप्रसितिमायुषेधामिति, तदायुर्दधाति । देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना, सुप्रतिगृहीतान्यसन्निति । चक्षुषे त्वेति, तच्चक्षुर्दधाति । एतानि वै जीवतो भवन्ति । एवमु हैतज्जीवमेव देवानां हविर्भवत्यमृतममृतानाम् । तस्मादेवं पिनष्टि । पिंषन्ति पिष्टानि, अभीन्धते कपालानि ॥ २१ ॥

अथैक आज्यं निर्वपति । यद्वा आदिष्टं देवतायै हविर्गृह्यते—यावद्देवत्यं तद् भवति । तदितरेण यजुषा गृह्णाति । न वा एतत्कस्यैचन देवतायै हविर्गृह्णन्नादिशति—यदाज्यम् । तस्मादनिरुक्तेन

---

हविः ' जीवम् ' प्राणधारणं युक्तमेव तत् ' अमृतम् ' मरणसाधनं न भवति । अथैवं सत्येतद्यज्ञसाधन हविरवहननपेषणाभ्यामृत्विजो मारयन्ति । तथा सति निर्जीवत्वात् तस्यामृतत्वसाधनत्वं न युक्तमिति भावः ॥२०॥

मन्त्रप्रयोगेणास्य परिहारं दर्शयति—**स यदाहे**ति । पेषणसमये प्राणाय त्वेत्यादिमन्त्रं प्रयुञ्जान प्राणादीनेव[1] पुनरस्मिन् हविषि स्थापयतीत्यर्थः । गतमन्यत् । **एतानि वै जीवत** इत्यादि । ' एतानि ' प्राणोदानधारणादीनि ' जीवतः ' पुरुषस्य लिङ्गानि । ' एवम् ' अनेन मन्त्रप्रयोगेण प्राणोदानादिस्थापने सति हविरपि सजीवमेवेति युक्तं तस्यामृतत्वसाधनमित्यभिप्रायः । **पिंषन्ती**ति । एवं समन्त्रकमध्वर्युणा पेषणे कृते सति यजमानपरिचारिका[2] अवशिष्टं सर्वं चूर्णीकुर्युः । तथोपहितानि च कपालानि ' अभीन्धते ' अङ्गारैः प्रदीप्तानि कुर्युरित्यर्थः ॥ २१ ॥

पेषणसमय एवाज्यस्य निर्वापं विधत्ते—**अथैक** इति । यदा चाध्वर्युः पिनष्टि, ' अथ ' तस्मिन्नेव समये ' एकः ' अन्य आग्नीध्रादिराज्यं[3] निर्वपति । अत एव सूत्रकृता पेषणाज्यनिर्वापयोः समसमयवर्तित्वं सूत्रितम्,—

---

—"दीर्घामनुप्रसितिमायुषेधाम्" "देवोवः सविता० पाणिना चक्षुषेत्वा" इत्येतन्मन्त्रद्वयं च प्रोहणे विनियुक्तम् । कात्यायनाचार्यैस्तु,—"ॐ प्राणायत्वा पिनष्मि ॐ उदानायत्वा पिनष्मि ॐ व्यानायत्वा पिनष्मि ॐ दीर्घामनु० पाणिना ॐ चक्षुषेत्वा" "ईक्षे" इत्यध्याहारः । इत्येव मंत्रपंचकं मत्वा विनियुक्तः । तदेतत्सर्वम्ब्राह्मणान्तरमूलम् । तच्च वाजसनेयपञ्चदशशाखीयशतपथब्राह्मणेष्वन्यतमं विज्ञेयम् । इति ।

१—प्राणादीनेवेत्यस्य स्थाने ' मन्त्रप्रयोगेण तस्य निर्जीवत्वं परिहरन् प्राणादीनेव '—इति पा० । २—" दासी पिनष्टि. पत्नी वा, अपि वा पत्न्यवहन्ति, शूद्रा पिनष्टि "—इति ( आ० श्रौ० सू० १. २१. ८. ९. ) । ३—' आग्नीध्रादिरित्यर्थः ' इति पा० । तथा " यदत्रान्यशब्देन आग्नीध्रो विवक्षितः" तत्र कर्काशयेन सह विरुध्यते । तथाच तद्भाष्यम्—"अत्रान्यशब्देन कश्चिद्यजमानोऽभिधाशुमिष्यते । अध्वर्य्वग्नीधौ हि पेषणोपधानयोर्व्याप्रृतौ । इति । तथाच सूत्रकारप्रस्थानं "निरुप्याज्यं वेदोऽसीति यजमानो वेदं करोति"—

हविर्गृहन्नादिशति यदाज्यं तस्मादनिरुक्तेन यजुषा गृह्णाति महीनां पयोऽसीति मह्य इति ह वा ऽएतासामेकं नाम यद्गवां तासां वा ऽएतत्पयो भवति तस्मादाह महीनां पयोऽसीत्येवमु हास्यैतत्खलु यजुषैव गृहीतं भवति तस्माद्वेवाह महीनां पयोऽसीति ॥ २२ ॥ ९ ॥

## इति प्रथमप्रपाठके पञ्चमं ब्राह्मणम् ॥ २–१ ॥

---

यजुषा गृह्णाति–" महीनां पयोऽसि "–( १ अ० २० मं० ) इति । मह्य इति ह वा एतासामेकं नाम–यद् गवाम् । तासां वा एतत् पयो भवति । तस्मादाह–महीनां पयोऽसीति । एवमु हास्यैतत् खलु यजुषैव गृहीतं भवति । तस्माद्वेवाह–महीनां पयोऽसीति ॥ २२ ॥

---

" पिष्यमाणेषु निर्वपत्यन्यो महीनामित्याज्यम् " ( श्रौ. सू. २. १३०. )–इति । तच्चाज्यं प्रसिद्धदेवतावाच्यग्न्यादिशब्दरहितेन मन्त्रेण ग्रहीतव्यमिति विधित्सुराह–**यद्वा** इति । 'यत्' खलु हविः " अग्नये जुष्टं गृह्णामी " त्येवं देवतायै निर्दिष्टं भवति, 'तद्' ग्रहणसाधनं यजुश्च यावद्देवत्यं भवति, तावद्देवत्यमेव 'तत्' हविर्भवति । आज्यं च सर्वदेवतासाधारणमिति देवतादेशनरहितेनैव यजुषा गृह्णीयादित्यर्थः । तथा चाज्यस्य सर्वदेवतासाधारण्यं सेत्स्यतीत्याह–**न वा** इति । एवमनिरुक्तयजुषा ग्रहणमुपपाद्य तद् विधत्ते–**तस्मा**दिति । देवतानाम निःशेषेणोक्तं यस्मिन् तत् निरुक्तम्, तद्विलक्षणमनिरुक्तम् । तादृशं च " महीनामित्यादि यजुः ", तत्र प्रसिद्धदेवतावाचिपदस्यानुपलम्भात् ॥

अथैतन्मन्त्रं व्याचष्टे–**मह्य** इति । " मह पूजायाम् " ( भ्वा. प. ७३१ )–मह्यन्ते पूज्यते इति 'मह्यः' एतच्च 'एतासां' गवाम् 'एकं' साधारणं नाम । आज्यस्य पयःकार्यत्वात् 'पयोऽसीति' विकारे प्रकृतिशब्द इत्यर्थः । ग्रहीतव्याज्यप्रकाशकत्वात् 'असि'–मन्त्रः प्रयोक्तव्य इत्याह–**एवमु** हेति । 'एवम्' अनेनैव मन्त्रेणाज्ये निरुक्ते सति तस्य तत्प्रकाशनसमर्थत्वात् । यजुषैव 'तत्' आज्यं गृहीतं भवतीत्यर्थः ॥ २२ ॥ ९ ( २. १ ) ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथभाष्ये
द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥

---

–इति । यत्कारणं यत्किंचिदिह कर्तव्यं तत्सर्वमृत्विग्भिः, परिक्रीतत्वादृत्विजाम् । अतोऽन्यशब्देन ब्रह्माऽभिधीयते । अन्य इत्यध्वर्युसन्निकर्षादृत्विगेव ग्रहीतुं न्याय्यो न यजमानः । सूत्रकारप्रस्थानाच्च । वचनविरोधाभ्यामन्य इति । यत्पुनरुक्तं–"निरुप्याज्यं वेदोऽसीति यजमानो वेदं करोतीति " तत्रापि न समानकर्तृकतार्थः क्त्वाप्रत्ययादेशः । नह्यत्राज्यनिर्वापविधानमन्यत्र विहितत्वात् । तेनानिर्ज्ञातकालस्य वेदबन्धस्य कालं लक्षयितुं क्त्वाप्रत्ययविकारो ल्यप्प्रयुक्तः । यथाऽन्यत्र निरुप्याज्यं प्रातर्दोहमन्यास्मिन्निति । तस्माद्ब्रह्मैवाज्यं निर्वपेत् । निर्वापश्च पात्रान्तरे प्रक्षेपणम् । इति । का० श्रौ० सू० २ । १३० ।

# अथ प्रथमकाण्डे प्रथमप्रपाठके षष्ठं ब्राह्मणं द्वितीयाध्याये च द्वितीयं ब्राह्मणम् ।

पवित्रवति संवपति । पात्र्यां पवित्रेऽअवधाय देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याᳬंसंवपामीति सोऽसावेवैतस्य यजुषो बन्धुः ॥ १ ॥

( २ ) अथान्तर्वेद्युपविशति । ( ३ ) अथैकऽउपसर्जनीभिरैतिताऽआनयति ताः पवित्राभ्यां प्रतिगृह्णाति समापऽओषधीभिरिति सᳬं ह्येतदाप ओषधिभिरेताभिः पिष्टाभिः सङ्गच्छन्ते समोषधयो रसेनेति सᳬं ह्येतदोषधयो रसेनैताः पिष्टाऽअद्भिः सङ्गच्छन्त ऽआपो ह्येतासाᳬं रसः सᳬं रेवतीर्जगतीभिः पृच्यन्तामिति रेवत्यऽआपो जगत्यऽओषधयस्ता उ ह्येतदुभय्यः सम्पृच्यन्ते सम्मधुमतीर्म्मधुमतीभिः पृच्यन्तामिति सᳬंरसवत्यो रसवतीभिः पृच्यन्तामित्येवैतदाह ॥ २ ॥

---

पवित्रवति संवपति, पात्र्यां पवित्रेऽअवधाय—"**देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याᳬं संवपामि**"—( १ अ० २१ मं० ) इति। सोऽसावेवैतस्य यजुषो बन्धुः॥ १॥

अथान्तर्वेद्युपविशति । अथैक उपसर्जनीभिरैति । ता आनयति ताः पवित्राभ्यां प्रतिगृह्णाति—"**समाप ओषधीभिः**"—( १ अ० २१ मं० ) इति । सं ह्येतदाप ओषधिभिरेताभिः पिष्टाभिः सङ्गच्छन्ते । "**समोषधयो रसेन**"—( १ अ० २१ मं० ) इति । सं ह्येतदोषधयो रसेनैताः पिष्टा अद्भिः सङ्गच्छन्ते । आपो ह्येतासां रसः । "**सᳬं रेवतीर्जगतीभिः पृच्यन्ताम्**"—( १ अ० २१ मं० ) इति । रेवत्य आपः, जगत्य ओषधयः; ता उ ह्येतदुभय्यः सम्पृच्यन्ते ।

---

अथ पिष्टानां पिण्डकरणार्थं पात्र्यां संवापं विधत्ते[2]—**पवित्रवती**ति । सामान्योपक्रमान्नपुंसकनिर्देशः । पवित्रयुक्ते पात्रे—इत्यर्थः । तदेव विवृणोति—**पात्र्यां पवित्रेऽअवधाये**ति । **सोऽसावेवैतस्ये**ति । सविता वै देवानां प्रसवितेत्यादिना ग्रहगप्रकरणे[3] प्रागाम्नात एव वाक्यशेषोऽस्यापि यजुषः शेषत्वेन योजनीय इत्यर्थः ॥ १ ॥

**अथान्तर्वेदी**ति । यद्याहवनीये हविःश्रपणं गार्हपत्ये वा, उभयथापि वेदिमध्ये—उपविशेदित्यर्थः । कात्यायनस्तु ब्राह्मणान्तराभिप्रायेण विकल्पमाह—" श्रपणस्य पश्चादुपविशत्यन्तर्वेदि वा " ( श्रौ. सू. २. १३२. ) इति । **अथैक** इति । ' एकः ' अन्य आग्नीध्रादिः । उपसृजत्याभिरिति व्युत्पत्त्या पिष्टसंसर्जनार्था आपः ' उपसर्जन्यः ' ताभिः सहागच्छेदित्यर्थः । अथ तासां तूष्णीमासेचनं विधत्ते—**ता आनयती**ति । **ताः पवित्रा-**

---

१–' मावापम् '–इति पा. । २–" पात्र्यां सपवित्रायां पिष्टान्यावपति देवस्य त्वेति " श्रौ० सू० २. १३१. । ३–इहैव ब्राह्मणे पूर्वं १ । २ । १७ । इत्यत्र द्रष्टव्यम् । ४–सौकर्यादेवोपवेशनमिति तत्र याज्ञिकदेवः । ५–" उपसर्जनीरानयत्यन्यः " का. श्रौ. सू. २ । ५ । १२ ।

(ह्य) अथ संयौति । जनयत्यै त्वा संयौमीति यथा श्रियेऽन्नाद्यायेमाः प्रजा यजमानाय यच्छेदेवं वै तत्संयौत्यधिवक्ष्यन्नु वै संयौति यथा वा ऽअधिवृक्तोऽग्नेरधिजायेतैवं वैतत्संयौति ॥ ३ ॥

(त्य) अथ द्वेधा करोति । यदि द्वे हविषी भवतः पौर्णमास्यां वै द्वे हविषी

---

"सं मधुमतीर्म्मधुमतीभिः पृच्यन्ताम्"–( १ अ० २१ मं० ) इति । सं रसवत्यो रसवतीभिः पृच्यन्तामित्येवैतदाह ॥ २ ॥

अथ संयौति–" जनयत्यै त्वा संयौमि "–( १ अ० २२ मं० ) इति । यथा–श्रियेऽन्नाद्यायेमाः प्रजा यजमानाय यच्छेत्–एवं वै तत् संयौति । अधिवक्ष्यन्नु वै संयौति । यथा वा अधिवृक्तोऽग्नेरधिजायेत, एवं वै तत् संयौति ॥ ३ ॥

अथ द्वेधा करोति–यदि द्वे हविषी भवतः। पौर्णमास्यां वै द्वे हविषी भवतः । स यत्र पुनर्न संहरि-

---

ष्यामित्यादि । आनीयमानाः ' ताः ' " समाप " इति मन्त्रेण पिष्टानामुपरि पवित्राभ्यां प्रतिगृह्णीयादित्यर्थः । मन्त्रतात्पर्यमाह–**सं ह्येतदिति** । ' एतत् ' एतर्हि, एता आनीयमानाः ' आपः ' पिष्टरूपेणावस्थिताभिः ' ओषधिभिः ' सङ्गच्छन्ते । अतो मन्त्रगतौषधिशब्देन तद्विकाराः पिष्टा विवक्षिताः । समित्युपसर्गश्रवणाद् योग्यक्रियाध्याहार इत्यर्थः । एवमपामोषधिभिः सङ्गतिं प्रतिपाद्य, व्यतिहारेणोषधीनामद्भिः सङ्गतिः प्रतिपाद्यत इति व्याचष्टे–**समोषधय** इति । पूर्ववदत्राप्योषधिशब्दः पिष्टपरः, रसशब्देन चापो विवक्षिता इत्याह–**एताः पिष्ट अद्भिरिति** । **आपो हीति** । उपष्टम्भकाप्यावयवयुक्ताः खल्वोषधय आर्द्रा रसवत्यो भवन्ति, अतस्तासामुदकमेव रस इत्यर्थः । मन्त्रगतरेवतीशब्दस्यार्थमाह–**रेवत्य आप** इति । रयिर्धनमासामस्तीति रेवत्य आपः । धनमूलत्वं च तासां नदीतटाकादिष्ववस्थितानां प्रसिद्धम् । अतो मन्त्रे रेवतीशब्देनापो विवक्षिताः । " रयेर्मतौ बहुलम् " ( पा. सू. ६ । १ । ३४ वा. ४४७२ ) इति सम्प्रसारणे " उगितश्च " ( पा. सू. ४ १. ४६. ) इति ङीप् । गम्यन्ते, सर्वैः प्राणिभिः प्राप्यन्त इति व्युत्पत्त्या जगतीशब्दोऽप्योषधिवाचक इति व्याचष्टे–**जगत्य** इति । **सम्मधुमतीरित्यादि** । अत्र मधुशब्देन माधुर्यरसो विवक्षित इत्याह–**सꣳरसवत्य** इति ॥ २ ॥

आसिक्तजलेन पिष्टानां समन्त्रकं मिश्रीकरणं विधत्ते[3]–**अथेति** । ' संयौति ' सम्यङ् मिश्रीकरोतीति । " यु[4] मिश्रणे " ( अ. प. २३ ) इति धातुः । मन्त्रतात्पर्यकथनेनैतत् संयवनं प्रशंसति–**यथेति** । यथा खलु ' इमाः प्रजा यजमानाय ' षष्ठ्यर्थे चतुर्थी । ( पा. सू. २ । ३ । ६१ । वा. १५०९ ) यजमानस्य श्रियै सम्पदर्थमन्नाद्यर्थं च नियच्छेद्, एवमेतदनुकूलमेव तत्पिष्टसंयवनमित्यर्थः । मन्त्रगत–' जनयत्यै ' शब्दस्य जननायेति ह्यर्थः । तमुपजीव्य प्रशंसति–**अधिवक्ष्यन्निति** । अधिवर्जनं पुरोडाशस्याग्नावधिश्रयणं करिष्यन् खलु संयौति । यथा खल्वधिश्रितः पुरोडाशोऽग्नेः सकाशात् जायेत, एवं तदनुगुणमेव तत् संयवनं ' जनयत्यै ' इति जननलिङ्गवतो मन्त्रस्य प्रयोगादित्यर्थः ॥ ३ ॥

अथ द्वेधेत्यादिविभागविधिः । कुत्र तर्हि हविर्द्वयमिति तद्दर्शयति–**पौर्णमास्यामिति** । ' पौर्णमासी '–

---

१–" पवित्राभ्यां प्रतिगृह्णाति समाप इति " श्रौ० सू० २. १३४ । २–ह्रस्वान्तोऽप्योषधिशब्दो दीर्घप्रतिशब्दत्वेनेहाश्रितः । ३–" संयौति जनयत्यैत्वेति "–श्रौ० सू० २. १३५ । ४–' युमिश्रणामिश्रणयोरिति धा. पा. ' ।

भवतः स यत्र पुनर्न सᳪँहरिष्यन्त्स्यात्तदभिमृशतीदमग्नेरिदमग्नीषोमयो-रिति नाना वा ऽएतदग्रे हविर्गृह्णन्ति तत्सहावघ्नन्ति तत्सह पिᳪँषन्ति तत्पुनर्नाना करोति तस्मादेवमभिमृशत्यधिवृणक्त्येवैष पुरोडाशमधिश्रयत्य-सावाज्यम् ॥ ४ ॥

( न्त ) तद्वा ऽएतत् । ( दु ) उभयᳪँसह क्रियते तद्यदेतदुभयᳪँसह क्रियते ऽर्द्धो ह वा ऽएष ऽआत्मनो यज्ञस्य यदाज्यमर्द्धो यदिह हविर्भवति स यश्चासावर्द्धो य उ चायमर्द्धस्ता ऽउभावग्निं गमयावेति तस्माद्वा ऽएतदुभयᳪँसह क्रियत ऽएवमु हैष आत्मा यज्ञस्य सन्धीयते ॥ ५ ॥

---

ष्यन्त्स्यात् । तदभिमृशति–" इदमग्नेरिदमग्नीषोमयोः "–( १ अ० २२ मं० ) इति । नाना वा एतदग्रे हविर्गृह्णन्ति । तत् सहावघ्नन्ति । तत् सह पिंषन्ति । तत् पुनर्नाना करोति । तस्मादेवमभि-मृशति–अधिवृणक्त्येवैष पुरोडाशम्, अधिश्रयत्यसावाज्यम् ॥ ४ ॥

तद्वा एतदुभयं सह क्रियते । तद्यदेतदुभयं सह क्रियते । अर्द्धो ह वा एष आत्मनो यज्ञस्य यदा-

---

शब्देन कालवाचिना तत्कालानुष्ठेयं कर्म विवक्षितम् । तत्र ह्याग्नेयोऽष्टाकपालः, अग्नीषोमीय एकादशकपाल इति 'द्वे हविषी' विहिते इत्यर्थः । एवं द्वेधा विभज्य, विभक्तयोस्तयोर्मन्त्राभिमर्शनं विधत्ते–स यत्रेति । 'सः' खल्वध्वर्युः 'यत्र' यस्मिन् काले 'तत्' हविर्द्वयं 'पुनर्न संहरिष्यन्त्स्यात्' संहरणमेकीकरणम्, तत् कारिष्यन् न भवेत्, 'तत्' तदानीम् "इदमग्नेः"–इत्येकं भागमभिमृशति, "इदमग्नीषोमयोः"–इत्य-परम् । तावेतौ यथासङ्ख्यमाग्नेयाग्नीषोमीयपुरोडाशावित्यर्थः । कथं पुनरनयोर्द्वित्वम्, कुत्र वा तयोः संहरणम्, यद्व्यावृत्तये "न संहरिष्यन्"–इति विशेष्यत इति, तत् सर्वं दर्शयति–नाना वा इत्यादिना । अग्नेर्निर्वाप-समये "अग्नये जुष्टं गृह्णामि" "अग्नीषोमाभ्यां जुष्टं गृह्णामि"–इति पृथक् पृथग् देवतादेशनाद् ग्रहणस्य नानात्वम् । अवहननादिसंस्कारे सहैवानुष्ठिते सति तद्धविरस्मिन् समये पुनरनेन मन्त्रेण यथास्वं विभजतीत्यर्थः ।

पुरोडाशकपालस्याज्याधिश्रयणस्य च समानकालतां विवक्षुः कर्तृभेदमाह–अधिवृणक्तीति । 'एषः' अध्वर्युः पुरोडाशम् 'अधिवृणक्ति' अग्नेरुपर्यधिश्रयति । अथैक आज्यं निर्वपति–इति प्रागन्यशब्दपर्यायेणै-कशब्देन य आग्नीध्र आज्यनिर्वापे कर्तृतया प्रतिपादितः, सोऽत्र 'असौ'–इत्यदःशब्देन विप्रकृष्टवाचिना परामृश्यते । पुरोडाशाधिश्रयणसमये 'असौ' आग्नीध्रः 'आज्यं' अधिश्रयेदित्यर्थः ॥ ४ ॥

तदेतदुभयोः सहानुष्ठानमुपपादयति–अर्द्धो ह वा एष इत्यादिना । आज्यं यज्ञशरीरस्यार्द्धभागः,

---

१–"समं विभज्यासंहारिष्यन्नालभत इदमग्नेरिदमग्नीषोमयोरिति"—( श्रौ० सू० २. १२६ ) । २–"यथादेवतमन्यत्"–( श्रौ० सू० २. १२७ ) । ३–इहैव ब्राह्मणे पूर्वं २ । १ । २२ । ४–अत्रापि अन्यशब्देन पूर्ववद्ब्रह्मैव ग्राह्यो न त्वाग्नीध्रः । तथाचात्र कर्कः–"अन्यश्चात्र ब्रह्माभिधीयते । पुरोडाशयोरध्वर्व्वग्नीधौ व्यापृतौ । ऋत्विक्कर्तृत्वं च कर्मणः परिक्रयाम्नानादित्युक्तम् । याजमानं च पारिभाषितमेव । प्रधानं स्वामी फलयोगात् । इत्येवमादि । विरोधाच्च प्राप्त एव ब्रह्मणि यदन्यग्रहणं करोति तद-विरोधेऽप्युपसदादौ ब्रह्मैव यथा स्यादित्येवमर्थमिति संप्रदायः । अपरे त्वन्य इति न्यायसूत्रमाहुः । विरोधादेव अन्यप्राप्तेः । एवं ह्याह । तद्वा एतदुभयं सह क्रियत इति प्रकृत्यार्धो ह वा एष आत्मनो यज्ञस्य यदाज्यमर्द्धो यदि हविर्भवति । स यश्चासावर्द्धो यश्चायमर्द्धस्ता उभावग्निं गमयावेति । एवं चाविरोधेऽध्वर्युरेवाधिश्रयणं स्यात्" का० श्रौ. सू. २ । १२९ इत्यत्र भाष्ये ।

सोऽसावाज्यमधिश्रयति । (ती) इषे त्वेति वृष्ट्यै तदाह यदाहेषे त्वेति तत्पुनरुद्वासयत्यूर्जे त्वेति यो वृष्टादूर्ग्रसो जायते तस्मै तदाह ॥ ६ ॥

(ह्यु) अथ पुरोडाशमधिवृणक्ति घर्म्मोऽसीति यज्ञमेवैतत्करोति यथा घर्म्मं प्रवृञ्ज्यादेवं प्रवृणक्ति विश्वायुरिति तदायुर्दधाति ॥ ७ ॥

तं प्रथयति । (त्यु) उरुप्रथाऽउरु प्रथस्वेति प्रथयत्येवैनमेतदुरु ते यज्ञपतिः प्रथतामिति यजमानो वै यज्ञपतिस्तद्यजमानायैवैतदाशिषमाशास्ते ॥ ८ ॥

---

ज्यम् । अर्द्धो यदिह हविर्भवति । स यश्चासावर्द्धो य उ चायमर्द्धः, ता उभावग्निं गमयावेति । तस्माद्वा एतदुभयं सह क्रियते । एवमु हैष आत्मा यज्ञस्य सन्धीयते ॥ ५ ॥

सोऽसावाज्यमधिश्रयति--" इषे त्वा "--( १ अ० २२ मं० ) इति । वृष्ट्यै तदाह--यदाह ' इषे त्वेति ' । तत्--पुनरुद्वासयति । ' ऊर्जे त्वेति ' । यो वृष्टादूर्ग् रसो जायते तस्मै तदाह ॥ ६ ॥

अथ पुरोडाशमधिवृणक्ति--" घर्म्मोऽसि "--( १ अ० २२ मं० ) इति । यज्ञमेवैतत् करोति । यथा घर्म्मं प्रवृञ्ज्यात्--एवं प्रणवृक्ति । "विश्वायुः"--( १ अ० २२ मं० ) इति । तदायुर्दधाति ॥ ७ ॥

तं प्रथयति--" उरुप्रथा उरुप्रथस्व "--( १ अ० २२ मं० ) इति । प्रथयत्येवैनमेतत् । " उरु ते यज्ञपतिः प्रथताम् "--( १ अ० २२ मं० ) इति । यजमानो वै यज्ञपतिः । तद्यजमानायैवैतदाशिषमाशास्ते ॥ ८ ॥

---

उपस्तरणाभिघारयोः प्रयाजादीनां च तत्साध्यत्वात् । इतरोऽर्द्धः पुरोडाशादिहविः । सहाधिश्रयणेन तदर्द्धद्वयमेकीकृत्याग्निं प्रापयावेत्यध्वर्योराग्नीध्रस्य चाभिप्रायः । **एवमु हेति** । आज्यहविषोरुभयोः सहाधिश्रयणे सत्यर्द्धद्वयस्यैकीकरणाद् यज्ञशरीरं सन्धीयते इत्यर्थः ॥ ५ ॥

विहितमाज्याधिश्रयणमनूद्य मन्त्रं विधत्ते--**सोऽसाविति** । इष्यत इति ' इट् ' इति व्युत्पत्त्या--इट्--शब्देन वृष्टिर्विवक्षितेति व्याचष्टे--**वृष्ट्या** इति । **वृष्टादूर्ग्रस** इति । तस्मात् ' वृष्टात् ' उदकाज्जायमानो यो बलकरोऽन्नरसो जायते, स ' ऊर्क् '--शब्देन विवक्षितः ॥ ६ ॥

**अधिवृणक्ती**ति । अग्नावुपरि ' वृणक्ति ' वर्जयति, श्रपणार्थं स्थापयतीत्यर्थः । **यज्ञमेवैताद्**इति । घर्म्मोऽसीति घर्म्मतादात्म्यस्तवनात्, घर्मस्य च सोमयागाङ्गत्वात् तदात्मकमेवैतत्करोति । घर्मस्य यत् प्रवृञ्जनं सोमे, तत्सदृशमेवैतत् पुरोडाशस्य प्रवृञ्जनमित्यर्थः ॥ ७ ॥

**तं प्रथयती**ति । उपहितेषु कपालेषु विस्तारयतीत्यर्थः । प्रथयत्येवैनमेतदिति विहितस्य प्रशंसा । ' प्रथयति ' पृथु विस्तीर्णं प्रभूतं करोतीत्यर्थः ॥ ८ ॥

---

१--" आद्यन्तयोराज्यम् " ( श्रौ० सू० १. २३० ) । २--" इषे त्वेत्याज्यमधिश्रयत्यन्यः " ( श्रौ० सू० २. १३८ ) । ३--गार्हपत्ये । रजोदोषप्रसवप्रवासादिनाऽसन्निहितपत्नीकस्य मृतपत्नीकस्य चाहवनीयेऽधिश्रयणमाह कात्यायनः--" अपत्नीकस्याहवनीये तच्छ्रापिणः " ( श्रौ० सू० २. १३९ ) । ४--" घर्मोऽसीति पुरोडाशौ युगपत् "--( श्रौ० सू० २. १४० ) । ५--" उरुप्रथा इति प्रथयति । यावत्कपालमनतिपृथुम् " ( श्रौ० सू० २. १४१ ) ।

तं नु सत्रा पृथुं कुर्यात् । ( न्मा ) मानुषु ꣳ ह कुर्य्याद्युत्पृथुं कुर्य्याद्व्यृद्धं वै तुद्यज्ञस्य युन्मानुषं नेद्व्यृद्धं यज्ञे करवाणीति तुस्मान्न सत्रा पृथुं कुर्यात् ॥ ९ ॥

( द ) अश्वशफमात्रं कुर्य्यादित्यु हैक ऽआहुः । कस्तद्वेद यावानश्वशफो यावन्तमेवु स्वयं मुनसा नु सत्रा पृथुं मुन्येतैवं कुर्यात् ॥ १० ॥

( त्तु ) तुमद्भिरभिमृशति । सकृद्वा त्रिर्वा तद्यदेवास्यात्रावघ्नन्तो वा पि ꣳ षन्तो वा क्षण्वन्ति वा वि वा वृहन्ति शान्तिरापस्तुदद्भिः शान्त्या शमयति तुदद्भिः सुन्दधाति तुस्मादद्भिरभिमृशति ॥ ११ ॥

सोऽभिमृशति । ( त्य ) अग्निष्टे त्वचं मा हि ꣳ सीदित्यग्निना वा ऽएनमेतुदभितप्स्यन्भवत्येषु ते त्वचं मा हि ꣳ सीदित्येवैतुदाह ॥ १२ ॥

---

तं न सत्रा पृथुं कुर्यात् । मानुषं ह कुर्यात्—यत् पृथुं कुर्यात् । व्यृद्धं वै तद् यज्ञस्य—यन्मानुषम् । नेद् व्यृद्धं यज्ञे करवाणीति, तस्मान्न सत्रा पृथुं कुर्यात् ॥ ९ ॥

अश्वशफमात्रं कुर्यादित्यु हैक आहुः । कस्तद्वेद यावानश्वशफः । यावन्तमेव स्वयं मनसा न सत्रा पृथुं मन्येत, एवं कुर्यात् ॥ १० ॥

तमद्भिरभिमृशति--सकृद्वा त्रिर्वा । तद्यदेवास्यात्रावघ्नन्तो वा पिंषन्तो वा क्षण्वन्ति वा वि वा वृहन्ति, शान्तिरापः; तदद्भिः शान्त्या शमयति । तदद्भिः सन्दधाति । तस्मादद्भिरभिमृशति ॥ ११ ॥

सोऽभिमृशति--" अग्निष्टे त्वचं मा हिꣳसीत "-( १ अ० २२ मं० ) इति । अग्निना वा एनमेतदभितप्स्यन् भवति । एष ते त्वचं मा हिंसीदित्येवैतदाह ॥ १२ ॥

---

पुरोडाशस्य स्वाभिमतपरिमाणं विधित्सुः परिमाणान्तरं निषेधति--तन्नेति । सत्रेति निपातोऽनेकार्थत्वादत्रातिशयार्थः । ' सत्रा पृथुम् ' अतिपृथुं न कुर्यात् । विपक्षे बाधमाह--**मानुषं** हेति । अस्तु मानुषत्वं को दोष इत्यत आह--**व्यृद्धं वा** इति । ' व्यृद्धम् ' विगतर्द्धिकमित्यर्थः ॥ ९ ॥

पक्षान्तरमुपन्यस्यति--**अश्वशफे**ति । अयमपि पक्षो दुर्ज्ञातत्वान्न[1] साधुरित्याह--**कस्तादि**ति । स्वाभिमतं पुरोडाशपरिमाणमाह--**यावन्तामि**ति । यत्परिमाणविशिष्टमेव पुरोडाशं स्वयं मनसैवातिपृथुं न मन्येत, किन्तु दैवतसौविष्टकृतेडाद्यवदानपर्याप्तमेव मन्येत, तत्परिमाणविशिष्टं कुर्यादित्यर्थः[2] ॥ १० ॥

पुरोडाशस्याद्भिरभिमशनं विधत्ते[3]--**तमि**ति । ' क्षण्वन्ति ' हिंसन्ति । " क्षणु हिंसायाम् " ( त० प० ३)--इति धातुः । ' विवृहन्ति ' विश्लेषयन्ति । " वृहू उद्यमने " ( तु० प० ६७ ) इति धातुः । **शान्तिराप** इति । दाहतृष्णादिशमनहेतुत्वेनापां शान्तिरूपता ॥ ११ ॥

सोऽभिमृशतीत्यादिविहिताभिमर्शनानुवादेन मन्त्रविधिः । मन्त्रेणाहिंसाप्रार्थनं युक्तमिति व्याचष्टे--**अग्निना वा** इति । **अभितप्स्यन्नि**ति । अभितः सर्वतस्तपनं करिष्यन्नित्यर्थः ॥ १२ ॥

---

१-' दुर्ज्ञेयत्वात् ' इति प्रतिभाति । २-" षडङ्गुलवृत्ता कपालचितिर्यथा सम्पद्यते, तथा कपालपरिमाणमाश्रयणीयम् " श्रौ० सू० २. १४१ वृत्तौ याज्ञिकदेवः । ३-" अग्निष्ट इत्यद्भिरभिमृशति सकृत् त्रिर्वा "-( श्रौ० सू० २. १४२ ) ।

तं पुर्य्यग्निं करोति । ( त्यु ) अच्छिद्रमेवैनमेतदग्निना परिगृह्णाति नेदेनं नाष्ट्रा रक्षाᳬंसि प्रमृशानित्यग्निर्हि रक्षसामपहन्ता तस्मात्पर्य्यग्निं करोति ॥ १३ ॥

तᳬं श्रपयति । देवस्त्वा सविता श्रपयत्विति न वा ऽएतस्य मनुष्यः श्रपयिता देवो ह्येष तदेनं देवऽएव सविता श्रपयति व्वर्षिष्ठेऽधिनाक इति देवत्रो ऽ एतदाह यदाह व्वर्षिष्ठेऽधिनाक ऽइति तमभिमृशति शृतं व्वेदानीति तस्माद्वा ऽअभिमृशति ॥ १४ ॥

सोऽभिमृशति मा भेर्मा संव्विक्था इति मा त्वं भैषीर्मा संव्विक्था यत्त्वाहममानुषᳬं सन्तं मानुषोऽभिमृशामीत्येवैतदाह ॥ १५ ॥

---

तं पर्यग्निं करोति । अच्छिद्रमेवनैमेतदग्निना परिगृह्णाति—नेदेनं नाष्ट्रा रक्षांसि प्रमृशानिति । अग्निर्हि रक्षसामपहन्ता—तस्मात् पर्यग्निं करोति ॥ १३ ॥

तं श्रपयति—" देवस्त्वा सविता श्रपयतु "—( १ अ० २२ मं० ) इति । न वा एतस्य मनुष्यः श्रपयिता । देवो ह्येषः, तदेनं देव एव सविता श्रपयति । " वर्षिष्ठेऽधिनाके "—( १ अ० २२ मं० ) इति । देवत्रो एतदाह यदाह—वर्षिष्ठेऽधिनाक इति । तमभिमृशति—शृतं वेदानीति । तस्माद्वा अभिमृशति ॥ १४ ॥

सोऽभिमृशति—" मा भेर्मा संविक्थाः "—( १ अ० २३ मं० ) इति । मा त्वं भैषीर्मा संविक्थाः—यत्त्वाहममानुषं सन्तं मानुषोऽभिमृशामीत्येवैतदाह ॥ १५ ॥

---

पर्यग्निकरणं विधत्ते—**तमिति** । परितोऽग्निर्यस्य सः ' पर्यग्निः ' परितोऽग्निमन्तं पुरोडाशं करोतीत्यर्थः । तस्य प्रयोजनमाह—**अच्छिद्रमिति** । राक्षसादिसंस्पर्शाभावार्थं प्राकारवन्नीरन्ध्रमग्निना वेष्टनं कृतवान् भवतीत्यर्थः ॥ १३ ॥

समन्त्रकं श्रपणं विधत्ते—**तमिति** । **वर्षिष्ठेऽधिनाक** इति । मन्त्रपाठे ' देवँत्रो ' देवान् प्रत्येवैतदाह । ' वर्षिष्ठे ' वृद्धतमे ' नाके ' स्वर्गे ' देवः ' सविता श्रपयत्विति हि मन्त्रार्थः । तथा च तल्लोकवासिनो देवान् प्रत्येवैतद्वचनम् । " देवमनुष्यपुरुषपुरुमर्त्येभ्यः " ( पा. सू. ५. ४. ५६. )—इति द्वितीयार्थे ' त्रा '—प्रत्ययः । श्रपणानन्तरं तस्याभिमर्शनं विधत्ते—**तमिति** । अभिमृशतोऽभिप्रायमाह—**शृतमिति** । ' शृतम् ' पक्वं जानामीत्यर्थः । " श्रा पाके "—( अ. प. ४३ ) इत्यस्मान्निष्ठायाम् " शृतं पाके " ( पा. सू. ६. १. २७. ) इति निपातितम् । ' वेदानि '—इति " विद ज्ञाने " ( अ. प. ५४ ) इत्यस्माल्लोटयुत्तमैकवचनम् ॥ १४ ॥

विहितमभिमर्शनमनूद्य मन्त्रं विधत्ते—**सोऽभीति** । मन्त्रगतम् ' भेः ' इत्येतत्पदं व्याचष्टे—**मा त्वं भैषीरिति** । ' मा संविक्थाः '—इति मा च कम्पिष्टा इत्यर्थः । भयकम्पयोः कारणमाह—**यत्त्वेति** ॥ १५ ॥

---

१—पर्यग्निकरणमन्त्रस्तु "अन्तरितं रक्षोऽन्तरिता अरातयः"—इति ( तै० सं० १. १. ८. १. ) । तथा च कात्यायनः " पर्यग्निकरोत्यन्तरितं रक्षोऽन्तरिता अरातय इति सहाज्यम् "—( श्रौ० सू० २. १४३ ) । अयं च मंत्रः सूत्रकृता वाजसनेयपंचदशशाखास्वन्यतरशाखीय उपसंहृतः इति । २—" देवस्त्वेति श्रपणम् "—( श्रौ० सू० २. १४४ ) । ३—' देवत्रा—उ ' इति छेदः । एवार्थोऽत्र उशब्दः । ४—" मा भेरित्यालभते "—( श्रौ० सू० २. १४५ ) ।

यदा श्रृतोऽथाभिवासयति । नेदेनमुपरिष्टान्नाष्ट्रा रक्षाᳫंस्यवपश्या-
निति नेद्वेव नग्नऽइव मुषितऽइव शयाता ऽइत्यु चैव तस्माद्वा ऽअभि-
वासयति ॥ १६ ॥

सोऽभिवासयति । ( त्य ) अतमेरुर्यज्ञोऽतमेरुर्यजमानस्य प्रजा भूया-
दितिनेदेतदनु यज्ञो वा यजमानो वा ताम्याद्यदिदमभिवासयामीति तस्मा-
देवमभिवासयति ॥ १७ ॥

( त्य ) अथ पात्रीनिर्णेजनम् । ( म ) अङ्गुलिप्रणेजनमाप्त्येभ्यो निनयति
तद्यदाप्त्येभ्यो निनयति ॥ १८ ॥

इति प्रथमप्रपाठके षष्ठं संलग्नब्राह्मणम् ६ ( कण्डिका: १२१ )
( २.२. ) ॥ समाप्तश्च प्रथमः प्रपाठकः ॥ १ ॥

---

यदा श्रृतः, अथाभिवासयति–नेदेनमुपरिष्टान्नाष्ट्रा रक्षांस्यवपश्यानिति । नेद्वेव नग्न इव मुषित इव शयाता इत्यु चैव, तस्माद्वा अभिवासयति ॥ १६ ॥

सोऽभिवासयति–" अतमेरुर्यज्ञोऽतमेरुर्यजमानस्य प्रजा भूयात "–( १ अ० २३ मं० ) इति । नेदेतदनु यज्ञो वा यजमानो वा ताम्याद्–यदिदमभिवासयामीति । तस्मादेवमभिवासयति॥ १७॥

अथ पात्रीनिर्णेजनमङ्गुलिप्रणेजनमाप्त्येभ्यो निनयति । तद्यदाप्त्येभ्यो निनयति ॥ १८ ॥

---

**यदा श्रृत** इति । ' यदा ' यस्मिन् काले स पुरोडाशः श्रृतः पक्को भवति, ' अथ ' अनन्तरमेव तस्योपरि ' अभिवासयति ' सांङ्गारेण[1] भस्मनाच्छादयतीत्यर्थः । तस्य प्रयोजनमाह–**नेदि**ति । प्रयोजनान्तरं सदृष्टान्तमाह–**नेद्वेवे**ति । नग्नः स्वभावतो विवसनः । मुषितः चौरादिभिरपहृतवसनः । तावुभौ यथा निरावरणौ ' शयाते ' तद्वत् पुरोडाशोऽप्यभिवासनाभावे निरावरणः शयीत । नैव तथा शयीतेत्यनेनैवाभिप्रायेणाभिवासनं कर्त्तव्यमित्यर्थः ॥ १६ ॥

सोऽभिवासयतीत्यादिर्मन्त्रविधिः[2] । ' अतमेरुः ' अतमनशीलः । इज्यतेऽनेनेति ' यज्ञः ' पुरोडाशः, स ग्लानिरहितोऽभूत् । अतो यजमानस्य पुत्रादिरपि तथा भूयादिति मन्त्रार्थः । इममर्थं प्रतिपादयति–**नेदेत**दिति । यदिदमभिवासनम्, ' एतदनु ' एतस्यानन्तरमित्यर्थः । **तस्मा**दिति । अतमेरुरिति–मन्त्रप्रयोगेणाभिवासनकृततमनाभावादित्यर्थः ॥ १७ ॥

पात्र्यङ्गुलिप्रक्षालनोदकस्य निनयनं विधत्ते[3]–**अथे**ति । निर्णिज्यते शोध्यतेऽनेनेति ' निर्णेजनम् ' अङ्गुलिप्रक्षालनम्, पात्रीनिर्णेजनं चोदकम् । अद्भ्यो जातत्वात् ' आप्त्याः ' त्रितादयस्तेभ्यो[4] निनयेदित्यर्थः । विहितं निनयनं स्तोतुमनुवदति–**तद्या**दिति ॥ १८ ॥ ६ । ( २. २ )

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथभाष्ये प्रथमकाण्डे
द्वितीयाध्याये द्वितीयं ब्राह्मणम्, प्रपाठकश्च प्रथमः समाप्तः[5] ।

---

१–' साङ्गारेण भस्मना ' इति का. श्रौ. सू. २ । ५ । २५ । याज्ञिकदेवः । २–" अतमेरुरिति श्रृतावभिवासयति भस्मना वेदेनोपवेषेण वा "– ( श्रौ० सू० २. १४६. ) ३–" पात्र्यङ्गुलिप्रक्षालनमाप्त्येभ्यो निनयत्यभितप्य प्रत्यगसंस्यन्दमानं त्रितायत्वेति प्रतिमन्त्रम् "–( श्रौ० सू० २. १४७. ) । ४–त्रितादयस्त्वेते–त्रितः, द्वितः, एकतः इति । "अस्यां ध्रुवायां मध्यमायां प्रतिष्ठायां दिशि साध्याश्चाप्त्याश्च देवाः " इति ( ऐ० ब्रा० ८. ३. ३. ) । ५–इतोऽग्रे–" व्रताचरणमारभ्य पात्रीनिर्णेजनान्ततः । कर्मोक्तं प्राक् प्रपाठके ऽन्यत्तु द्वितीयेऽभिधीयते ॥ श्लोक एष क्वचित् पुस्तक एवोपलभ्यते ॥

# अथ द्वितीयप्रपाठके प्रथमं ब्राह्मणं द्वितीयाध्याये च तृतीयं ब्राह्मणम् ।

चतुर्द्धा विहितो ह वा ऽअग्रेऽग्निरास । स यमग्रेऽग्निᳪं होत्राय प्रावृणत स प्राधन्वद्यं द्वितीयं प्रावृणत स प्रैवाधन्वद्यं तृतीयं प्रावृणत स प्रैवाधन्वदथ योऽयमेतर्ह्यग्निः स भीषा निलिल्ये सोऽपः प्रविवेश तं देवा ऽअनुविद्य सहसैवाद्भ्य ऽआनिन्युः सोऽपोऽभितिष्ठेवावष्ठ्यूता स्थ या ऽअप्रपदनᳪं स्थ याभ्यो वो मामकामं नयन्तीति ततऽ आप्त्याः सम्बभूवुस्त्रितो द्वित एकतः ॥ १ ॥

---

चतुर्धा विहितो ह वा अग्रेऽग्निरास । स यमग्रेऽग्निं होत्राय प्रावृणत–स प्राधन्वत् । यं द्वितीयं प्रावृणत–स प्रैवाधन्वत् । यं तृतीयं प्रावृणत–स प्रैवाधन्वत् । अथ योऽयमेतर्ह्यग्निः–स भीषा निलिल्ये । सोऽपः प्रविवेश । तं देवा अनुविद्य सहसैवाद्भ्य आनिन्युः । सोऽपोऽभि तिष्ठेव–

---

निर्णेजननिनयनस्याप्त्यभागत्वमुपपादयितुं तावत्तेषामुत्पत्तिमाह–**चतुर्द्धा** इत्यादिना । पुरा खल्वग्निः शरीरचतुष्टयधारणेन चतुर्विधो बभूव । तत्र 'यम्' अग्निं 'सः' अध्वर्युः 'होत्राय' होतृकर्म्मणे 'प्रावृणत' प्रवृतवान् । व्यत्ययेन बहुवचनम् ; (पा. सू. ३ । १ । ८९ । इहास्ति चेयं कारिका–"सुप्तिङुपग्रहलिङ्ग-नराणां, कालहलच्स्वरकर्तृयङां च । व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन" इति । ) यद्वा सुपां सुपो भवन्तीति तच्छब्दाज्जसः स्थाने सुः, (पा. सू. ७।१।३९) ते देवा इत्यर्थः । 'सः' अग्निः 'प्राधन्वत्' प्रागच्छत्, अम्रियतेत्यर्थः । "धवि गमने" (भ्वा० प० ५९७)–इति धातुः । **अथ यो-ऽयमित्यादि** । एवं त्रिष्वप्यग्निषु प्रगतेषु 'अथ' अनन्तरभावी 'योऽयम्' इदानीन्तनश्चतुर्थोऽग्निः 'सः' अयम् 'भीषा' पूर्वाग्निवन्मरणभयेन 'निलिल्ये' निर्लीनोऽन्तर्हितो बभूव । स निर्लीय चापः प्रविवेश । 'तम्' अप्सु प्रविष्टं देवाः 'अनुविद्य' ज्ञात्वा, 'सहसैव' बलात् 'अद्भ्यः' सकाशात् 'आनिन्युः' आजह्रुः । 'सः' च बलादानीयमानोऽग्निरपः 'अभि'–लक्ष्य 'तिष्ठेव' ष्ठीवनं कृतवान् । "ष्ठिवु निरसने" (भ्वा० प० ५६१)–इत्यस्माल्लिट् । केनाभिप्रायेण ष्ठीवनमिति तं दर्शयति–हे आपः ! 'याः' यूयं भीतस्य मम 'अप्रपदनं स्थ' अनाश्रयभूताः स्थ, 'याभ्यः' च 'वः' पञ्चम्यर्थे चतुर्थी, (पा. सू. ३।१।८९) युष्मत्सकाशात् 'अकामम्' इच्छारहितं मां बलान्नयन्ति, ता यूयम् 'अवष्ठ्यूताः स्थ' ष्ठीवनेन दूषिता भव-

---

१–पूर्वप्रपाठकान्ते "आप्त्येभ्यो निनयति"–(१।१।६।१८) इत्युक्तत्वादाप्त्योत्पत्तिमाह–"**चतुर्द्धेति**"–इति पुस्तकान्तरे-ष्ववतरणम् । २–अस्मादारभ्य–'योऽयमित्यादि' इत्येतदन्तस्य ग्रन्थस्य स्थाने–'ह'–"वै"–इति निपातो वेदप्रसिद्ध्यर्थे । अग्नेरेकस्मात्सकाशात्–अग्निश्चतुर्द्धा 'विहितः' कृतः 'आस' बभूव–इत्ययमर्थो वेदप्रसिद्धः । 'सः' प्रजापतिः 'अग्रे' सृष्ट्या-रम्भे पूर्वकल्पे वा 'यम्' अग्निं 'होत्राय' होतृकर्मणे 'प्रावृणत' प्रकर्षेण वृतवान्, स 'प्राधन्वत्' मृतोऽभवत् । यं द्वितीयं प्रावृणत, स एव सोऽपि प्राधन्वत् । यं तृतीयं–'सोऽपि मृतोऽभवत्"–इति पुस्तकान्तरेषूपलभ्यते । ३–'अनाशयभूताः' इति पाठान्तरम् ।

( स्त ) तऽइन्द्रेण सह चेरुः । ( र्य ) यथेदं ब्राह्मणो राजानमनुचरति स यत्र त्रिशीर्षाणं त्वाष्ट्रं विश्वरूपं जघान तस्य हैतेऽपि वध्यस्य विदाञ्चक्रुः शश्वद्धैनं त्रितऽएव जघानात्यह तदिन्द्रोऽमुच्यत देवो हि सः ॥ २ ॥

( स तुऽ ) तुऽउ हैत ऽऊचुः । ( रु ) उपैवेम ऽएनो गच्छन्तु येऽस्य वध्यस्यावेदिषुरिति किमिति यज्ञऽएवैषु मृष्टामिति तदेष्वेतद्यज्ञो मृष्टे यदेभ्यः पात्रीनिर्णेजनमङ्गुलिप्रणेजनं निनयन्ति ॥ ३ ॥

---

अवष्ठ्यूता स्थ—या अप्रपदनं स्थ, याभ्यो वो मामकामं नयन्तीति । तत आप्त्याः सम्बभूवुः—त्रितो, द्वित, एकतः ॥ १ ॥

त इन्द्रेण सह चेरुः यथेदं ब्राह्मणो राजानमनुचरति । स यत्र त्रिशीर्षाणं त्वाष्ट्रं विश्वरूपं जघान—तस्य हैतेऽपि वध्यस्य विदाञ्चक्रुः । शश्वद्धैनं त्रित एव जघान । अत्यह तदिन्द्रोऽमुच्यत । देवो हि सः ॥ २ ॥

त उ हैत ऊचुः—उपैवेम एनो गच्छन्तु येऽस्य वध्यस्यावेदिषुरिति । किमिति । यज्ञ एवैषु मृष्टामिति । तदेष्वेतद्यज्ञो मृष्टे—यदेभ्यः पात्रीनिर्णेजनमङ्गुलिप्रणेजनं निनयन्ति ॥ ३ ॥

---

तेति । यथा लोके परैः प्रार्थितं कार्य्यं कर्तुमक्षमः ष्ठीवनेन निन्द्यते, तद्वदपां निन्दा विवक्षिता । **तत** इत्यादि । 'ततः' निष्ठीवनलक्षणवीर्यधारणात् ताभ्योऽद्भ्यः सकाशात् त्रितादिसंज्ञका आप्त्या उत्पन्नाः । अद्भ्यो जातत्वाच्च तेषाम् 'आप्त्य' इति संज्ञा ॥ १ ॥

अथ तेषां पात्रीनिर्णेजनोदकं भाग इत्येतत्प्रतिपादनायाह—**त इन्द्रेणे**ति । यथेदानीम् 'ब्राह्मणः' पुरोहितो देशाधिपतिं 'राजानम्' 'अनु'—सृत्य चरति, तद्वदेव 'ते' त्रितादयोऽपीन्द्रेण सार्द्धं तदनुसारेणावस्थिता इत्यर्थः । 'सः' चेन्द्रः 'यत्र' यस्मिन् समये सोमपानादिसाधनैस्त्रिभिः शिरोभिरुपेतं त्वष्टुः पुत्रं 'विश्वरूपं' जघान, तस्मिन् समये ते त्रितादयोऽपि 'तस्य वध्यस्य' कर्मणि षष्ठी, (पा० सू० २. ३. ६० ) तं 'वध्यम्' वधार्हम् 'विदाञ्चक्रुः' ज्ञातवन्तः । "उषविदजागृभ्योऽन्यतरस्याम्" ( पा० सू० ३. १. ३८ )—इति विदेर्ज्ञानार्थादाम् प्रत्ययः । अनन्तरं च 'एनम्' विश्वरूपं त्रित एवेन्द्रसहायार्थं जघान । इन्द्रश्च 'तत्' हननजनितात्पापात् 'अत्यमुच्यत' अतिमुक्तोऽभवत् । तत्र हेतुमाह—**देवो** हीति । यस्मात् स इन्द्रो देवः, अतोऽस्मिन् पापसंश्लेषो न युक्त इत्यर्थः ॥ २ ॥

एवं विश्वरूपहननानन्तरं जनैः कृतं संवादं दर्शयति—**त उ हे**ति । 'ते' लौकिका जना विश्वरूपहननानन्तरमेतदूचुः । एतच्छब्दपरामृश्यं दर्शयति—**उपैवे**ति । ये खल्वस्य वध्यस्य 'अवेदिषुः' अज्ञासिषुः, इमे 'एनः' पापमुपगच्छन्तु । एवमुपगन्तव्यं तदेनः किंरूपमिति प्रश्नपूर्वकमाह—**किमिती**ति । 'एषु' त्रितादिषु 'यत्' विश्वरूपवधजनितमेनः, यज्ञ एव 'तत्' एनः 'मृष्टाम्' मृजीत, अश्लेषयदित्यर्थः । अतः 'यत्' एषां त्रयाणां पात्रीनिर्णेजनादि निनयनम्, 'एतत्' एतेन 'एषु' त्रितादिषु 'तत्' विश्वरूपहननजनितमेनो यज्ञः 'विमृष्टे' संश्लेषयति । तस्मादवहननपेषणादिजनितस्यैनसो रूपं पात्र्यादिनिर्णेजनमाप्त्येभ्यो निनेतव्यमित्यर्थः ॥ ३ ॥

तु ऽउ हाप्त्युाऽ ऊचुः । ( ३ ) अुत्येवु व्वयुमिदुमस्मुत्परुां नयामेति कुमभीति युऽएवादक्षिणेन हुविषा युजाता ऽइति तुस्मान्नादक्षिणेन हुविषा यजेताप्त्येषु ह यज्ञो मृष्ट ऽआप्त्या ऽ उ ह तुस्मिन्मृजते योऽदक्षिणेन हुविषा युजते ॥ ४ ॥

तुतो देवाः । ( ऽ ) एतां दर्शपूर्णमासुयोर्द्दक्षिणामकल्पयन्युदन्वाहार्य्यं नेददक्षिण ᳪ हविरुसदिति तन्नुाना निनयति तुथैभ्युोऽसमदं करोति तुदभितपति तुथैषाᳪ शृतुं भवति स निनयति त्रिताय त्वा द्विताय त्वैकताय त्वेति पशुर्ह वा ऽएष आलभ्यते युत्पुरोडाशः ॥ ५ ॥

---

त उ हाप्त्या ऊचुः—अत्येव वयमिदमस्मत्परो नयामेति । कमभीति । य एवादक्षिणेन हविषा यजाता इति । तस्मान्नादक्षिणेन हविषा यजेत । आप्त्येषु ह यज्ञो मृष्टे । आप्त्या उ ह तस्मिन् मृजते—योऽदक्षिणेन हविषा यजते ॥ ४ ॥

ततो देवा एतां दर्शपूर्णमासयोर्दक्षिणामकल्पयन्—यदन्वाहार्यम् । नेददक्षिणं हविरसदिति । तन्नाना निनयति । तथैभ्योऽसमदं करोति । तदभितपति—तथैषां शृतं भवति । स निनयति—**"त्रिताय त्वा द्विताय त्वैकताय त्वा"**—( १ अ० २३ मं० ) इति । **पशुर्ह वा एष आलभ्यते—यत्पुरोडाशः** ॥ ५ ॥

---

अथ तस्यैनसस्तैरपि कृतां निष्कृतिं दर्शयन् दक्षिणावतैव यागेन यष्टव्यं नादक्षिणेनेति प्रसङ्गादाह— **त उ हेति** । वयमपि 'इदम्' एनः 'परः' परस्तादन्यत्राधारान्तरे 'अस्मत्' अस्मत्तो[1] नयामेति योजना । **कमभी**ति । 'कम्' पुरुषम्—अभिलक्ष्येत्यर्थः । य एव दक्षिणारहितेन हविषा यजेत, तस्मिन्निति शेषः । अदक्षिणयागनिषेधं विपक्षबाधोपन्यासेनोपपादयति—**आप्त्येष्विति** । **मृष्टे**—इति । " मृजू शुद्धौ " ( अ० उ० ५६ ) इत्यस्माल्लट् अदादित्वाच्छपो लुक् ( पा० सू० २. ४. ७२ ) ॥ ४ ॥

का तर्हि दर्शपूर्णमासयोर्दक्षिणेति तामाह—**तत** इति । दर्शपौर्णमासिकं हविर्दक्षिणारहितं नैव भवेदित्यन्वाहार्यरूपां दक्षिणामकल्पयन्नित्यर्थः । अन्वाहरति—यज्ञसम्बन्धिदोषजातं परिहरत्यनेनेति व्युत्पत्त्याऽन्वाहार्यो नाम—ऋत्विग्भ्यो देय ओदनः[2] । तथा च तैत्तिरीयकम्—" यद्वै यज्ञस्य क्रूरं यद्विलिष्टं, तदन्वाहार्येणान्वाहरति, तदन्वाहार्यस्यान्वाहार्यत्वम् "—( तै० सं० १. ७. ३. ९. ) इति । **तन्नाने**ति । 'तत्' आप्त्यानां निनयनं पृथक् पृथगसंसृष्टमेव कर्तव्यम् । 'तथा' सति 'एभ्य' आप्त्येभ्यः 'असमदम्' अकलहं करोति । संसर्गे हि मदीयं त्वदीयमिति कलहः स्यादित्यभिप्रायः । निनीतस्यो[3]दकस्याङ्गारेण प्रतपनं विधत्ते—**तदभितपती**ति । 'तथा' सत्येषां 'तत्' जलं 'शृतम्' पक्वं भवतीत्यर्थः । विहितं निनयनमनूद्य मन्त्रं विधत्ते[4]—**स** इति । एवं संस्कृतं पुरोडाशं पशुत्वेन स्तौति—**पशुर्हे**ति ॥ ५ ॥

---

१—"अन्यत्रास्मत्तो नयामीति" " अस्मत्तोऽन्यत्र नयामेति "—इति च पा० । २—" यज्ञस्य हीनमन्वाहरतीति अन्वाहार्यः । अध्वर्युरन्वाहार्यसंज्ञकं दक्षिणार्थं तण्डुलरूपमोदनं चतुर्णामृत्विजां तृप्तिर्यावता सम्भाव्यते तत्परिमाणं ततोऽधिकं वा" इत्यादि का. श्रौ. २ । ५ । २७ सू० भा० । एष चौदनो दक्षिणाग्नौ पच्यत इति तस्याग्नेरपरं नाम अन्वाहार्यपचन इति । ३—निनीतस्येति वदद्भिः सायणाचार्यैः पूर्वं निनयनं पश्चात्तदभितपनं च उक्तं । परं च तत्सूत्रभाष्यविरुद्धम् । तथा च सूत्रं " पात्र्यङ्गुलिप्रक्षालनमाप्त्येभ्यो निनयत्यभितप्य प्रत्यगसंस्यन्दमानं त्रितायत्वेति प्रतिमन्त्रम् " का० श्रौ० सू० २ । १४७ । अत्र कर्कः " अभितप्येति । पात्रीस्थमेवोल्कया तापयित्वा इत्यादि निनयामीति वाक्यशेष इत्येवमन्तम् । इति । ४—तृतीयटिप्पन्यामुद्धृतं सूत्रं २ । १४७ ।

पुरुष ᳪ᳭ ह वै देवाः । (ऽ) अग्रे पशुमालेभिरे तस्यालब्धस्य मेधोऽपचक्राम सोऽश्वं प्रविवेश तेऽश्वमालभन्त तस्यालब्धस्य मेधोऽपचक्राम स गां प्रविवेश ते गामालभन्त तस्यालब्धस्य मेधोऽपचक्राम सोऽविं प्रविवेश तेऽविमालभन्त तस्यालब्धस्य मेधोऽपचक्राम सोऽजं प्रविवेश तेऽजमालभन्त तस्यालब्धस्य मेधोऽपचक्राम ॥ ६ ॥

स इमां पृथिवीं प्रविवेश । तं खनन्त ऽ इवान्वीषुस्तमन्वविन्दंस्ताविमौ व्रीहियवौ तस्मादप्येतावेतर्हि खनन्त इवैवानुविन्दन्ति स यावद्वीर्यवद्ध वाऽअस्यैते सर्वे पशव आलब्धाः स्युस्तावद्वीर्यवद्धास्य हविर्हविरेव भवति य एवमेतद्वेदात्रो सा सम्पद्यदाहुः पाङ्क्तः पशुरिति ॥ ७ ॥

---

पुरुषं ह वै देवा अग्रे पशुमालेभिरे । तस्यालब्धस्य मेधोऽपचक्राम । सोऽश्वं प्रविवेश । तेऽश्वमालभन्त । तस्यालब्धस्य मेधोऽपचक्राम । स गां प्रविवेश । ते गामालभन्त । तस्यालब्धस्य मेधोऽपचक्राम । सोऽविं प्रविवेश । तेऽविमालभन्त । तस्यालब्धस्य मेधोऽपचक्राम । सोऽजं प्रविवेश । तेऽजमालभन्त । तस्यालब्धस्य मेधोऽपचक्राम ॥ ६ ॥

स इमां पृथिवीं प्रविवेश । तं खनन्त इवान्वीषुः । तमन्वविन्दन् । ताविमौ व्रीहियवौ । तस्मादप्येतावेतर्हि खनन्त इवैवानुविन्दन्ति । स यावद्वीर्यवद्ध वा अस्यैते सर्वे पशव आलब्धाः स्युः, तावद्वीर्यवद्धास्य हविः । हविरेव भवति—य एवमेतद् वेद । अत्रो सा सम्पद्—यदाहुः पाङ्क्तः पशुरिति ॥ ७ ॥

---

अस्य पशुरूपतामुपपादयितुमितिहासमुदाहरति—**पुरुष ᳪ᳭ हेति** । **मेधोऽपचक्रामेति** । यज्ञियः सारांशो 'मेधः' 'तस्य' संज्ञप्तस्य पुरुषस्य सकाशादपक्रान्तो बभूवेत्यर्थः ॥ ६ ॥

**स इमामित्यादि** । एवं पुरुषाश्वादिपशुष्वालब्धेषु ततस्ततो निष्क्रान्तः 'सः' मेधोऽन्ततः इमां पृथिवीं प्रविष्टवान् । 'तम्' मेधं पृथिवीं 'खनन्तः' विदारयन्त इव 'अन्वीषुः' देवा अन्वैच्छन् । "इषु इच्छायाम्—" ( तु० प० ७१ )—इत्यस्माल्लिट् । ईदृग्विधं मेधं पृथिव्यां देवा अलभन्त । **ताविमौ व्रीहियवाविति** । स एव मेधो व्रीहियवरूपेण परिणत इत्यर्थः । **तस्मादपीत्यादि** । 'तस्मात्' मेधपरिणामरूपत्वादेव, इदानीमपि 'एतौ' व्रीहियवौ मेधवत्कर्षणलक्षणेन खननेन लभन्ते कर्षकाः । अतः खननप्राप्यत्वदर्शनान्मेधपरिणामरूपत्वं व्रीहियवयोः स्वध्यवसानमित्यर्थः । एतज्ज्ञानस्य फलमाह—**स यावदिति** । स इति पूर्ववद् बह्वर्थे—एकवचनम् । 'अस्य' यजमानस्य ते 'एते' पुरुषादयः सर्वे पशव आलब्धाः सन्तो यत्परिमाणविशिष्टवीर्यवद् हविः 'स्युः' भवेयुः 'अस्य' व्रीहियवयोः सर्वपशुसारत्वं विदुषो यजमानस्य तन्निष्पादितं पुरोडाशादिकं 'हविः' तावद्वीर्यवद् 'हविरेव' भवति । एवं सर्वपशुसारत्वात् पुरोडाशः पशुरूप एव संस्क्रियत इत्यर्थः । इत्थं सर्वपशुसारतया पुरोडाशस्य पशुत्वं प्रतिपाद्य सम्पत्त्यापि तद्दर्शयति—**अत्रो सेति**। लोमत्वगादिपञ्चावयवयोगात् 'पाङ्क्तः पशुः'—इति यदाहुरभिज्ञाः 'सा' पाङ्क्तसंपत् 'अत्रो' अत्रापि पुरोडाशे विद्यत इत्यर्थः ॥ ७ ॥

---

१—व्यत्ययेनेति यावत् । यथा प्रवृतवानित्यत्र प्रावृणत तथेत्यर्थः । २—'लोमत्वगादिपञ्चावयवयोगाद्या पशौ पांक्तसंपदभिज्ञैरुच्यते, साऽत्रापि पुरोडाशे विद्यते'—इति पा० ।

यदा पिष्टान्यथ लोमानि भवन्ति । यदाप आनयत्यथ त्वग्भवति यदा संयौत्यथ मा ᳪ सं भवति सन्तत इव हि स तर्हि भवति सन्ततमिव हि मा- ᳪ सं यदा शृतोऽथास्थि भवति दारुण इव हि स तर्हि भवति दारुणमिव ह्यस्थ्यथ यदुद्वासयिष्यन्नभिघारयति तं मज्जानं दधात्येषो सा सम्पद्यदाहुः पाङ्क्तः पशुरिति ॥ ८ ॥

स यं पुरुषमालभन्त । स किम्पुरुषोऽभवद्यावश्वं च गां च तौ गौरश्च गवयश्चाभवतां यमविमालभन्त सऽउष्ट्रोऽभवद्यमजमालभन्त स शरभोऽ- भवत्तस्मादेतेषां पशूनां नाशितव्यमपक्रान्तमेधा ह्येते पशवः ॥ ९ ॥ १ ॥

इति द्वितीयप्रपाठके प्रथमं द्वितीयाध्याये तृतीयंच ब्राह्मणम् ।(२.३.)

---

यदा पिष्टानि, अथ लोमानि भवन्ति । यदाप आनयति, अथ त्वग् भवति । यदा संयौति, अथ मांसं भवति । सन्तत इव हि स तर्हि भवति, सन्ततमिव हि मांसम् । यदा शृतः, अथास्थि भवति । दारुण इव हि स तर्हि भवति, दारुणमिव ह्यस्थि । अथ यदुद्वासयिष्यन्नभिघारयति–तं मज्जानं दधाति । एषो सा सम्पद्–यदाहुः पाङ्क्तः पशुरिति ॥ ८ ॥

स यं पुरुषमालभन्त–स किम्पुरुषोऽभवत् । यावश्वं च गाञ्च तौ गौरश्च गवयश्चाभवताम् । यमवि- मालभन्त–स उष्ट्रोऽभवत् । यमजमालभन्त–स शरभोऽभवत् । तस्मादेतेषां पशूनां नाशितव्यम् । अपक्रान्तमेधा ह्येते पशवः ॥ ९ ॥ ( इति पुरोडाशप्रकरणम् । )

---

तामेव सम्पत्तिं दर्शयति–**यदे**त्यादिना । यदा खलु पुरोडाशस्य पिष्टावस्था, ‘ अथ ’ अनन्तरमेव पिष्टेषु लोमसम्पत्तिः; लोमवत् पिष्टानां सूक्ष्मत्वाद्, बहुत्वाच्च । यदा खलु संयवनार्थमप आनयति, अथ तस्मिन् समये पुरोडाशस्य त्वग् भवति; त्वचीव श्लक्ष्णीभावदर्शनात् । संयवनावस्थायां मांसधातूत्पत्तिः । संयवनावस्थस्य पुरोडा- शस्य, लौकिकमांसस्य च साम्यमाह–**संतत इ**वेति । शृतावस्थस्य पुरोडाशस्यास्थ्युत्पत्तिः, तामुत्पत्तिं लौकिका- स्थिसादृश्येन प्रतिपादयति–**दारुण इ**वेति । शृतावस्थो हि पुरोडाशः ‘ दारुणः ’ कठिन इव हि तस्मिन् समये भवति । लौकिकमप्यस्थि कठिनम् । अतः शृतावस्थायां पुरोडाशोऽस्थिमान् भवतीत्यर्थः । **उद्वासयिष्यन्नि**ति । उद्वासनकाले यत् पुरोडाशस्य ‘ अभिघारणम् ’ अस्थ्यन्तर्गतं मज्जाख्यं धातुमेव तेन स्थापयतीत्यर्थः । उक्तां पाङ्क्तत्वसम्पत्तिं निगमयति–**एषो** इति । ‘ एषा उ ’ एषैव ॥ ८ ॥

देवैरालब्धानामपक्रान्तमेधानां पुरुषादिपशूनां परिणामविशेषं दर्शयंस्तस्य प्रसङ्गादभक्ष्यतामाह–**स यमि**त्या- दिना । ‘स’–इति पूर्ववद् बहुवचनस्थाने एकवचनम्; ते देवा इत्यर्थः । **एतेषा**[१]**मि**ति । किम्पुरुषादीनां पशूनां मांसं ‘नाशितव्यं’ न भक्षितव्यम् । तत्र हेतुमाह–**अपक्रान्ते**ति । अपक्रान्तमेधत्वेनायज्ञियत्वादित्यर्थः ॥९॥ १ (२. ३.)

इति श्रीसायणाचार्यविर०माधवीये वेदार्थप्र०माध्यन्दिनशतपथभाष्ये प्रथमकाण्डे द्वितीयाध्याये तृतीयं ब्राह्मणम्[२] ॥

---

१–इह तु ‘ एतेषां ’ पुरुषादिपशूनामित्येवार्थः कथं न भवतीत्यपि विचार्यम्; तेषामेव ह्यालम्भनेन अपक्रान्तमेधत्वं श्रूयतेऽत्र षष्टकंडिकायाम् । तथाच पुरोडाशो नाम पिष्टकविशेषस्य मांसप्रतिनिधित्वं प्रकल्प्य हिंसाराहित्ये एव श्रुतितात्पर्यं पर्यवस्येत । इति पं० सत्यव्रतसामाश्रमिभिः स्वीयसंपादितपुस्तके । वस्तुतस्तु अस्याः श्रुतेस्तात्पर्यम्पुरोडाशप्रशंसायामेवास्तीति । २–एतत्पूर्वश्रुतस्यैव ब्राह्मणस्योपसंहाररूपमिदं ब्राह्मणम् । इहाग्न्यानामुत्पत्तिनिदानं वर्णितम् । तन्निनयनमन्त्राश्च विहिताः । अपि प्रसंगतः किम्पुरुष–गवय–गौर–उष्ट्र–शरभ–मांसानामभक्ष्यत्वं च दर्शितम् ।

## अथ चतुर्थं ब्राह्मणम् ।

इन्द्रो ह यत्र वृत्राय वज्रं प्रजहार । स प्रहृतश्चतुर्धाऽभवत्तस्य स्फ्यस्तृतीयं वा यावद्वा यूपस्तृतीयं वा यावद्वा रथस्तृतीयं वा यावद्वाथ यत्र प्राहरत्तच्छकलोऽशीर्यत स पतित्वा शरोऽभवत्तस्माच्छरो नाम यदशीर्यतैवमु स चतुर्द्धा वज्रोऽभवत् ॥ १ ॥

( तु ) ततो द्वाभ्यां ब्राह्मणा यज्ञे चरन्ति । द्वाभ्याँ राजन्यबन्धवः संव्याधे यूपेन च स्फ्येन च ब्राह्मणा रथेन च शरेण च राजन्यबन्धवः ॥ २ ॥

स यत्स्फ्यमादत्ते । यथैव तदिन्द्रो वृत्राय वज्रमुदयच्छदेवमेवैष एतं पाप्मने द्विषते भ्रातृव्याय वज्रमुद्यच्छति तस्माद्वै स्फ्यमादत्ते ॥ ३ ॥

---

### वेदिकाकरणम् ।

इन्द्रो ह यत्र वृत्राय वज्रं प्रजहार । स प्रहृतश्चतुर्द्धाऽभवत् । तस्य स्फ्यस्तृतीयं वा यावद्वा, यूपस्तृतीयं वा यावद्वा, रथस्तृतीयं वा यावद्वा । अथ यत्र प्राहरत्तच्छकलोऽशीर्यत । स पतित्वा शरोऽभवत् । तस्माच्छरो नाम—यदशीर्यत । एवमु स चतुर्द्धा वज्रोऽभवत् ॥ १ ॥

ततो द्वाभ्यां ब्राह्मणा यज्ञे चरन्ति । द्वाभ्यां राजन्यबन्धवः संव्याधे । यूपेन च स्फ्येन च ब्राह्मणाः, रथेन च शरेण च राजन्यबन्धवः ॥ २ ॥

स यत् स्फ्यमादत्ते—यथैव तदिन्द्रो वृत्राय वज्रमुदयच्छत्, एवमेवैष एतं पाप्मने द्विषते भ्रातृव्याय वज्रमुद्यच्छति । तस्माद्वै स्फ्यमादत्ते ॥ ३ ॥

---

अथ वेदिकरणार्थं स्फ्यादानविधिमनुसृत्य स्फ्यस्य वज्ररूपत्वं वक्तुमितिहासमाचष्टे—**इन्द्रो** हेति । **तस्ये**त्यादि । ‘ तस्य ’ चतुर्द्धा विभक्तस्य वज्रस्य स्फ्यस्तृतीयोंऽशः । न्यूनाधिकराहित्येन तृतीयांशत्वज्ञानं दुर्लभमित्यभिप्रेत्य पक्षान्तरमाह—**यावद्वे**ति । तृतीयात् भागान्न्यूनमधिकं वा यावदेव किञ्चित्तावानेव स्फ्य इत्यर्थः । एवं यूपस्तृतीयमित्यादौ योजना । चतुर्थभागस्य परिणामप्रकारमाह—**अथ यत्रे**ति । **तच्छकल** इति । ‘ तत् ’ तत्र देशे प्रहृतः स वज्रः शकलो भूत्वा ‘ अशीर्यत ’ शीर्णोऽभूत् । स च शीर्णो भूमौ पतित्वा शरात्मना परिणत इत्यर्थः । शरशब्दं निर्वक्ति—**तस्मादि**ति । चतुर्द्धाभवनमुपसंहरति—**एवमि**ति ॥ १ ॥

तेषां वज्रावयवानां स्फ्यादीनां ब्राह्मणराजन्ययोर्व्यवस्थया विनियोगमाह—**तत** इति । ‘ राजन्यबन्धवः ’ क्षत्रियजातीयाः ‘ संव्याधे ’ युद्धे चरन्तीत्यनुषङ्गः । द्वाभ्यामिति सङ्गृह्योक्तं विभजति—**यूपेन चे**ति ॥ २ ॥

अथ तस्य स्फ्यादानं विधत्ते—**स यदि**ति । तच्छब्दयच्छब्दाभ्यां प्रसिद्धिरभिधीयते । ‘ सः ’ प्रसिद्धोऽध्वर्युरित्यर्थः । **एवमेवैष** इत्यादि । वृत्रवधार्थमिन्द्रवद् विद्वेषणशीलं पापरूपं शत्रुं हन्तुं स्फ्यलक्षणं वज्रमुद्यच्छतीत्यर्थः ॥ ३ ॥

---

१–‘ सं व्याचष्टे ’ इति पा० ।

तमादत्ते । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददेऽध्वरकृतं देवेभ्य इति सविता वै देवानां प्रसविता तत्सवितृप्रसूतऽ एवैनमेतदादत्तेऽश्विनोर्बाहुभ्यामित्यश्विनावध्वर्यू तत्तयोरेव बाहुभ्यामादत्ते न स्वाभ्यां पूष्णो हस्ताभ्यामिति पूषा भागदुघस्तत्तस्यैव हस्ताभ्यामादत्ते न स्वाभ्यां वज्रो वा एष तस्य न मनुष्यो भर्त्ता तमेताभिर्देवताभिरादत्ते ॥ ४ ॥

( त्त आ ) आददेऽध्वरकृतं देवेभ्य इति । ( त्य ) अध्वरो वै यज्ञो यज्ञकृतं देवेभ्य इत्येवैतदाह तꣳसव्ये पाणौ कृत्वा दक्षिणेनाभिमृश्य जपति सꣳश्यत्येवैनमेतद्यज्जपति ॥ ५ ॥

स जपति । ( त्री ) इन्द्रस्य बाहुरसि दक्षिण ऽइत्येष वै वीर्य्यवत्तमो य

---

तमादत्ते–"देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददेऽध्वरकृतं देवेभ्यः"–( १ अ० २४ मं० ) इति । सविता वै देवानां प्रसविता, तत्सवितृप्रसूत एवैनमेतदादत्ते–अश्विनोर्बाहुभ्यामिति । अश्विनावध्वर्यू, तत्तयोरेव बाहुभ्यामादत्ते; न स्वाभ्याम् । पूष्णो हस्ताभ्यामिति । पूषा भागदुघः, तत्तस्यैव हस्ताभ्यामादत्ते; न स्वाभ्याम् । वज्रो वा एषः । तस्य न मनुष्यो भर्त्ता । तमेताभिर्देवताभिरादत्ते ॥ ४ ॥

आददेऽध्वरकृतं देवेभ्य इति । अध्वरो वै यज्ञः, यज्ञकृतं देवेभ्य इत्येवैतदाह । तं सव्ये पाणौ कृत्वा दक्षिणेनाभिमृश्य जपति । संश्यत्येवैनमेतद्–यज्जपति ॥ ५ ॥

स जपति–"इन्द्रस्य बाहुरसि दक्षिणः"–( १ अ० २४ मं० ) इति । एष वै वीर्यवत्तमो य

---

विहितमादानमनूद्य मन्त्रं विधत्ते[1]–**तमादत्त** इति । देवस्य त्वेति मन्त्रस्य प्रागाम्नातमपि[2] ब्राह्मणं विधेयविशेषे योजयितुं पुनराम्नायते–**सविता वा** इत्यादिना । **न स्वाभ्यामि**ति । देवसम्बन्धिभ्यामेव बाहुभ्यां स्फ्यादानम्, न तु स्वकीयाभ्याम् । युक्तश्चैतदित्याह–**वज्रो वा** इति । एष स्फ्यो वज्रः; तत्परिणामत्वात् । न हि मनुष्यस्तद्वज्रं भर्तुं शक्नोति, अतो देवस्य त्वेति मन्त्रं प्रयुञ्जानस्तं स्फ्यलक्षणं वज्रं सवित्राख्यादिदेवताभिरेव 'आदत्ते' आदानं कृतवान् भवति ॥ ४ ॥

**आदद** इति । **अध्वरो वा** इति । 'ध्वरः' हिंसाप्रत्यवायो न विद्यतेऽस्मिन्नित्यध्वरशब्दस्य यज्ञोऽर्थः । अध्वरं करोतीति 'अध्वरकृत्' । तथा च यज्ञकृतं देवेभ्य आदद इत्युक्तं भवतीत्यर्थः । **संश्यत्येवैनमिति** । वक्ष्यमाणं[3] मन्त्रं जपतीति यत्, 'एतत्' एतेनैनं 'संश्यत्येव' सम्यक् तनूकरोति, तीक्ष्णीकरोत्येव । "शो तनूकरणे–" ( दिवा० प० ३९ )–इति धातुः । "ओतः श्यनि–" ( पा० सू० ७. ३. ७१. ) इत्योकारलोपः ॥ ५ ॥

विहितं जपमनूद्य मन्त्रं विधत्ते[4]–**स** इति । इन्द्रस्य दक्षिणो बाहुरतिशयेन वीर्यवान्, वृत्राख्यासुरवधकारि-

---

१–"देवस्य त्वेति स्फ्यमादाय"–( श्रौ. सू. २.१५५.) २–इहैव ब्राह्मणे पूर्वं १।२।१७। ३–"इन्द्रस्य बाहु" रिति मन्त्रम् ।
४–"सतृणं सव्ये कृत्वा दक्षिणेनालभ्य जपतीन्द्रस्य बाहुरिति" ( श्रौ० सू० २. १५५ ।)

इन्द्रस्य बाहुर्दक्षिणस्तस्मादाहेन्द्रस्य बाहुरसि दक्षिण इति सहस्रभृष्टिः शततेजाऽ इति सहस्रभृष्टिर्वै स वज्रऽ आसीच्छततेजा यं तं वृत्राय प्राहरत्तमेवैतत्करोति ॥ ६ ॥

वायुरसि तिग्मतेजा इति । ( त्ये ) एतद्वै तेजिष्ठं तेजो यदयं योऽयं पवतऽ एष हीमाँल्लोकांस्तिर्यङ्ङनुपवते सꣳश्यत्येवैनमेतद्द्विषतो वध इति यदि नाभिचरेद्यद्युऽअभिचरेदमुष्य वध इति ब्रूयात्तेन सꣳशितेन नात्मानमुपस्पृशति न पृथिवीं नेदनेन वज्रेण सꣳशितेनात्मानं वा पृथिवीं वा हिनसानीति तस्मान्नात्मानमुपस्पृशति न पृथिवीम् ॥ ७ ॥

---

इन्द्रस्य बाहुर्दक्षिणः । तस्मादाह—इन्द्रस्य बाहुरसि दक्षिण इति । "सहस्रभृष्टिः शततेजाः"—( १ अ० २४ मं० ) इति । सहस्रभृष्टिर्वै स वज्र आसीच्छततेजाः । यं तं वृत्राय प्राहरत्. तमेवैतत् करोति ॥ ६ ॥

" वायुरसि तिग्मतेजाः "— ( १ अ० २४ मं० ) इति । एतद्वै तेजिष्ठं तेजः—यदयं योऽयं पवते । एष हीमाँल्लोकांस्तिर्यङ्ङनुपवते । संश्यत्येवैनमेतद्—"द्विषतो वधः"— ( १ अ० २४ मं० ) इति, यदि नाभिचरेद् यद्यु अभिचरेद् अमुष्य वध इति ब्रूयात् तेन संशितेन नात्मानमुपस्पृशति, न पृथिवीम्; नेदनेन वज्रेण संशितेनात्मानं वा पृथिवीं वा हिनसानीति । तस्मान्नात्मानमुपस्पृशति, न पृथिवीम् ॥ ७ ॥

---

त्वात् । अतः स एव त्वमसीति स्फ्यस्य स्तुतिरिति व्याचष्टे—**एष वा** इति । द्वितीयं भागमनूद्य व्याचष्टे—**सहस्रभृष्टिरि**ति । सहस्रं भृष्टयोऽश्रयः, यद्वा भर्जनानि हिंसाविशेषा वृत्रवधादिषु येन क्रियन्ते स वज्रः ' सहस्रभृष्टिः ' । यः ' शततेजाः ' अपरिमितदीप्तिः, तादृशो वज्रः । स एव त्वमसीति स्फ्यस्तुतिः । वज्रस्येमां प्रसिद्धिं द्योतयितुं ' वै '—शब्दः । **यं तमि**ति । ' तम् ' उक्तविधं ' यं ' वज्रं वृत्रवधार्थमिन्द्रः प्राहरत्, ' तमेव ' तदात्मकमेवानेन मन्त्रभागेन करोतीत्यर्थः ॥ ६ ॥

तृतीयभागमनूद्य व्याचष्टे—**वायुरसी**ति । यः ' तिग्मतेजाः ' वायुः, स एव त्वमसीति स्तुतिः । वायोस्तिग्मतेजस्त्वमुपपादयति—**एतद्वा** इति । यः ' अयं ' वायुः ' पवते ' अन्तरिक्षे चरति, एतत् खलु तेजसां मध्ये तेजस्वितमं तेजः । इममेवातिशयमुपपादयति—**एष ही**ति । अग्न्यादितेजोऽन्तरं हि कुत्रचिदेव परिच्छिन्नम्, ' एष हि ' वायुरिमान् सर्वान्—लोकान् अनुक्रमेण तिर्यग्वृत्तिः ' पवते ' युगपद्व्याप्नोतीत्यर्थः । अस्य प्रयोजनमाह—**सꣳश्यती**ति । ' एतत् ' एतेनोक्तविधवायुतादात्म्यप्रतिपादनेनेत्यर्थः । **अमुष्य वध** इति । अभिचारप्रयोगे " द्विषतो वधः "—इत्यस्य स्थाने ' अमुष्य ' देवदत्तस्य वध इति शत्रोर्नाम निर्दिशेदित्यर्थः । एतेन मन्त्रजपात्तीक्ष्णीकृतेन स्फ्येनात्मनोऽन्यस्य च संस्पर्शं निषेधति—**तेने**ति । ' हिनसानि ' हिंसितं करवाणीत्यर्थः । " हिसि हिंसायाम् "— ( रु० प० १९ )—इत्यस्माल्लोटि रूपम् ॥ ७ ॥

---

१—" भृष्टिर्भर्जनं पाको मारणमिति यावत् । सहस्रसंख्याकानां शत्रूणां भृष्टिर्यस्य स सहस्रभृष्टिः " इति महीधरः ।
२—" नोपस्पृशेत्पृथिव्यात्मानौ तेन स्तन्वयजुर्हरिष्यन् " ( श्रौ० सू० २. १५६ ) ।

देवाश्च वाऽअसुराश्च । ( श्वो ) उभये प्राजापत्याः पस्पृधिरे ते ह स्म यद्देवाऽअसुराञ्जयन्ति ततो ह स्मैवैनान्पुनरुपोत्तिष्ठन्ति ॥ ८ ॥

ते ह देवाऽऊचुः । ( र्जु ) जयामो वाऽअसुरांस्ततस्त्वेव नः पुनरुपोत्तिष्ठन्ति कथं न्वेनाननपजय्यं जयेमेति ॥ ९ ॥

स हाग्निरुवाच । ( चो ) उदञ्चो वै नः पलाय्य मुच्यन्तऽ इत्युदञ्चो ह स्मैवैषां पलाय्य मुच्यन्ते ॥ १० ॥

स हाग्निरुवाच । ( चा ) अहमुत्तरतः पर्यैष्याम्यथ यूयमित उपसꣳरोत्स्यथ तान्त्सꣳरुध्यैभिश्च लोकैरभिनिधास्यामो यदुचेमाँल्लोकानति चतुर्थं ततः पुनर्न सꣳहास्यन्तऽइति ॥ ११ ॥

---

देवाश्च वा, असुराश्च; उभये प्राजापत्याः पस्पृधिरे । ते ह स्म यद्देवा असुरान् जयन्ति—ततो ह स्मैवैनान् पुनरुपोत्तिष्ठन्ति ॥ ८ ॥

ते ह देवा ऊचुः—जयामो वा असुरांस्ततस्त्वेव नः पुनरुपोत्तिष्ठन्ति, कथं न्वेनाननपजय्यं जयेमेति ॥ ९ ॥

स हाग्निरुवाच—उदञ्चो वै नः पलाय्य मुच्यन्त इति । उदञ्चो ह स्मैवैषां पलाय्य मुच्यन्ते ॥ १० ॥

स हाग्निरुवाच—अहमुत्तरतः पर्यैष्यामि, अथ यूयमित उपसंरोत्स्यथ । तान् संरुध्यैभिश्च लोकैरभिनिधास्यामः—यदुचेमाँल्लोकानति चतुर्थम् । ततः पुनर्न संहास्यन्त इति ॥ ११ ॥

---

अथ स्तम्बयजुर्हरणं विविंत्सुस्तस्यासुरनिर्हरणलक्षणं प्रयोजनं वक्तुमाख्यायिकामाह—देवाश्चेति । प्रजापतेर्हि द्वे स्त्रियौ—दितिरदितिश्च । तत्रादितेः पुत्रा देवाः, दितेः पुत्रा असुराः; अतः 'उभये' अपि 'प्राजापत्याः' प्रजापतेः पुत्राः । ते ' पस्पृधिरे ' स्पर्द्धां कृतवन्तः । यदा खलु ' ते ' देवा असुरान् जयन्ति, ' ततः ' अनन्तरक्षणमेव ' एनान् ' देवानभिलक्ष्य पुनरसुरा उत्तिष्ठन्ति । " उदोऽनूर्ध्वकर्मणि " ( पा० सू० १. ३. २४. )—इति पर्युदासादिह चोर्ध्वकर्मत्वादात्मनेपदाभावः ॥ ८ ॥

अथ देवैः कृतं जयोपायचिन्तनमुपन्यस्यति—ते हेति । 'अनपजय्यं' जेतुमशक्यम्[1] ' एनान् ' असुरान् केन खलु प्रकारेण पुनरुत्थानरहितं जयेमेत्येवं विचारितवन्त इत्यर्थः । " क्षय्यजय्यौ शक्यार्थे " ( पा० सू० ६. १. ८१ )—इति जयतेर्यति निपात्यते ॥ ९ ॥

अथाग्निनोपदिष्टं जयप्रकारं दर्शयति—स हेति । ' नः ' अस्माकं सकाशादुदङ्मुखाः सन्तः ' पलाय्य ' पलायनं कृत्वा " अय गतौ " ( भ्वा० आ० ४७९ )—इत्यस्मात् क्त्वो ल्यप्, ( पा. सू. ७. १. ३७ ) " उपसर्गस्यायतौ " —( पा० सू० ८. २. १९ )—इति लत्वम् । अग्निनोक्तं वाक्यं सत्यमिति श्रुतिः स्वयमेवानुवदति—उदञ्चो हेति[2] ॥ १० ॥

एवमुत्तरतोऽवस्थितानसुरान् जेतुमग्निरेवोपायं देवान् प्रत्युपदिशति—स हेति । इत इत्यादि । ' इतः ' अस्माद् वेदिलक्षणात्[3] स्थानात् ' उपसंरोत्स्यथ ' उपसंरुद्धान् प्रतिबन्धगतानसुरान् करिष्यथ । ' अथ ' अन-

---

१—' जेतुमशक्यान् ' । २—परराष्ट्राश्रितत्वादित्यर्थः । ३—आर्यावर्तलक्षणादित्यर्थः स्यादैतिहासिकानां दृष्ट्येति ज्ञेयम् ।

सोऽग्निरुत्तरतः पर्य्यैत् । ( ड ) अथेम इत ऽउपसमरुन्धंस्तान्त्स ᳪ रुध्यै-भिश्च लोकैरभिन्यदधुर्य्यदु चेमाँल्लोकानति चतुर्थं ततः पुनर्न्न समजिहत तदेतन्निदानेन यत्स्तम्बयजुः ॥ १२ ॥

स योऽसावग्नीदुत्तरतः पर्य्येति । ( त्य ) अग्निरेवैष निदानेन तानध्वर्यु-रेवैत ऽउपस ᳪ रुणद्धि तान्त्स ᳪ रुध्यैभिश्च लोकैरभिनिदधाति यदु चेमाँ-ल्लोकानति चतुर्थं ततः पुनर्न सञ्जिहते तस्मादप्येतर्ह्यसुरा न सञ्जिहते येन ह्येवैनान्देवा ऽअवाबाधन्त तेनैवैनानप्येतर्हि ब्राह्मणा यज्ञेऽवबाधन्ते ॥ १३ ॥

---

सोऽग्निरुत्तरतः पर्यैत् । अथेम इत उपसमरुन्धन् । तान् संरुध्यैभिश्च लोकैरभिन्यदधुः–यदु चेमाँल्लोकानति चतुर्थम् । ततः पुनर्न समजिहत । तदेतन्निदानेन यत् स्तम्बयजुः ॥ १२ ॥

सः–योऽसावग्नीद् उत्तरतः पर्येति । अग्निरेवैष निदानेन । तानध्वर्युरेवैत उपसंरुणद्धि । तान् संरुध्यैभिश्च लोकैरभिनिदधाति–यदु चेमाँल्लोकानति चतुर्थम् । ततः पुनर्न सञ्जिहते । तस्मादप्येतर्ह्यसुरा न सञ्जिहते । येन ह्येवैनान् देवा अवाबाधन्त, तेनैवैनानप्येतर्हि ब्राह्मणा यज्ञेऽवबाधन्ते ॥ १३ ॥

---

न्तरमेव वयं ' एभिः ' पुरोवर्तिभिः पृथिव्यादिभिस्त्रिभिर्लोकैः ' अभिनिधास्यामः ' अभितः सर्वतो निरुद्धगतान् निहितान् करिष्यामः । यद्वा, अभितो नितरां क्षिप्तान् त्याजितान् करिष्यामः । इमान् लोकान् ' अति ' अतिक्रम्य यच्चतुर्थं लोकजातमस्ति, अस्माकमप्रत्यक्षम्, तेनापि त्याजितान् करिष्यामः । ' ततः ' अनन्तरमसुराः पुनः ' न संहास्यन्ते ' सङ्गता न भविष्यन्ति । विशीर्णा बाधिता एव भवेयुरित्यर्थः । " ओहाङ् गतौ "–( जु० आ० ७ ) इति धातुः ॥ ११ ॥

इत्थमग्निनोक्तं वाक्यं श्रुत्वा तथैव तैर्देवैः कृतं श्रुतिरुपबध्नाति–**सोऽग्निरि**ति । अग्निः ' उत्तरतः ' उत्तरस्यां दिशि ' पर्य्यैत् ' पर्य्यगच्छत् । अग्निवाक्ये हि चिकीर्षितार्थोपदेशनाद् भविष्यदर्थवाचिनो लृटः प्रयोगः । श्रुतिवाक्ये तु निर्वृत्तार्थप्रतिपादनाद् भूतानद्यतनवाचिनो लङः प्रयोग इत्येतावान् भेदः । ( पा. सू. ३।३।१३; ३।२।१११ ) । **तदेता**दित्यादि । यदत्र स्तम्बयजुर्हरणं करिष्यते, एतत् ' निदानेन ' मूलकारणेन निरूप्यमाणं सद् देवैः कृतं ' तत् ' असुरनिरसनम् । अतो यज्ञविघातकासुरनिर्हरणार्थं स्तम्बयजुर्हरणमिति विधिरुन्नेयः ॥ १२ ॥

**स योऽसावि**ति । स्तम्बयजुर्हरणसमये ' योऽसौ ' आग्नीध्रो वेदेरुत्तरतः परीत्य वर्तते । ' एषः ' ' निदानेन ' मूलकारणेन निरूप्यमाणः सन् ' अग्निरेव ' । योऽग्निः पुरा असुरान्निरोद्धुमुदक् पर्य्यैत्, तदात्मक एवाग्नीध्र इत्यर्थः । ननु तत्रोपसंरोधका देवाः तत्स्थानीय ऋत्विजां मध्ये कः ? इति तं दर्शयति–**तानध्वर्युरि**ति । येनोपायेन पुरा देवा असुरानबाधिषत, तेनैवोपायेन यज्ञानुष्ठानसमये तद्विघातिनोऽसुरा बाधितव्या इति निगमयति–**तस्मादि**ति ॥ १३ ॥

---

१–ऐतिहासिकानां मतेनायमर्थान्तरमूह्यम् ।

य उऽ एव यजमानायारातीयति । यश्चैनं द्वेष्टि तमेवैतदेभिश्च लोकैरभिनिदधाति यदु चेमाँल्लोकानति चतुर्थꣳ स वा ऽएभिश्च लोकैरभिनिदधद्यदु चेमाँल्लोकानति चतुर्थमस्या ऽएव सर्वꣳ हरत्यस्याꣳ हीमे सर्वे लोकाः प्रतिष्ठिताः किꣳ हि हरेद्यदन्तरिक्षꣳ हरामि दिवꣳ हरामीति हरेत्तस्मादस्या ऽएव सर्वꣳ हरति ॥ १४ ॥

(त्र) अथ तृणमन्तर्द्धाय प्रहरति । नेदनेन वज्रेण सꣳशितेन पृथिवीꣳ हिनसानीति तस्मात्तृणमन्तर्द्धाय प्रहरति ॥ १५ ॥

---

य उ एव यजमानायारातीयति, यश्चैनं द्वेष्टि; तमेवैतदेभिश्च लोकैरभिनिदधाति–यदु चेमाँल्लोकानति चतुर्थम् । स वा एभिश्च लोकैरभिनिदधद्–यदु चेमाँल्लोकानति चतुर्थम्, अस्या एव सर्वं हरति । अस्यां हीमे सर्वे लोकाः प्रतिष्ठिताः । किं हि हरेद्–यद्यन्तरिक्षं हरामि, दिवं हरामीति हरेत्; तस्मादस्या एव सर्वं हरति ॥ १४ ॥

अथ तृणमन्तर्द्धाय प्रहरति–नेदनेन वज्रेण संशितेन पृथिवीं हिनसानीति । तस्मात्तृणमन्तर्द्धाय प्रहरति ॥ १५ ॥

---

न केवलं स्तम्बयजुषोऽसुरनिर्हरणं प्रयोजनम्, शत्रुनिर्हरणमपि तत्प्रयोजनमिति प्रतिपादयति–**य उ एवेति** । ' अरातीयति ' अरातिरिवाचरति " उपमानादाचारे " ( पा० सू० ३. १. १० )–इति क्यच् । यश्च ' एनं ' यजमानं साक्षादेव ' द्वेष्टि ' बाधते । ' तम् ' उभयविधं शत्रुम् । अन्यत् पूर्ववत् । पृथिव्या एव सकाशात् स्तम्बयजुर्हरणं कर्तव्यम्, नान्तरिक्षादेरित्यभिप्रेत्याह–**स वा** इति । पृथिव्यादिभिस्त्रिभिर्लोकैस्तदतिरिक्तेन चान्येन चतुर्थेन लोकेनासुरान्निरस्यन् ' असौ ' अध्वर्युः ' अस्याः ' पृथिव्या एव सकाशात् ' सर्वं ' स्तम्बयजुर्हरति, नान्तरिक्षादेः । 'हि' यस्मात् ' अस्याम् ' एव भूम्यां ' इमे ' अन्तरिक्षादयः, सर्वे लोकाः प्रतिष्ठिताः, तस्मात् स्तम्बयजुर्हरणस्य प्रथमपर्यायवद् द्वितीयादिपर्यायाणामपि पृथिव्या एव सकाशाद्धरणं युक्तमित्यर्थः । एतदेव व्यतिरेकमुखेनोपपादयति–**किं हीति** । ' यत् ' यदि " अन्तरिक्षं हरामि " " दिवं हरामि "–इत्येवं स्तम्बयजुर्हरेत्, तदा ' किं ' नाम ' हरेत् '? अन्तरिक्षद्युलोकयोर्हर्तव्यस्य स्तम्बस्याभावान्न तत्र तद्धरणं सम्भवतीत्यर्थः । **तस्मादिति** । प्रागुक्तनिगमनं स्तम्बयजुर्हरणार्थम् ॥ १४ ॥

तृणान्तर्द्धानविशिष्टं स्फ्येन प्रहरणं विधत्ते–**अथेति** । तृणान्तर्द्धानस्य प्रयोजनमाह–**न हिनसानीति** । तृणानन्तर्द्धाने हि तीक्ष्णेन स्फ्य–रूपापन्नेन वज्रेण पृथिवी हिंसिता स्यात्, तद्धिंसानिवृत्तये प्रहरणसमये तृणमन्तर्द्धाय तस्योपरि प्रहर्त्तव्यमित्यर्थः ॥ १५ ॥

---

१–स्तम्बयजुर्हरणं हि प्रहरणादि पुरीषनिवपनान्तम् । इति का० श्रौ० २ । १५६ सूत्रे कर्कः । २–" वेद्यां तृणं निदधात्युदक्स्फ्यं पृथिव्यै वर्मासीति " श्रौ० सू० २. १५७. ) । ३–" प्रहरणं च वेद्यां तृणे अन्तर्हित इति सूत्रितत्वात् । इतरथा हि तृणे प्रहरतीत्येवमवक्ष्यत् । अथ पुनरन्तर्धानवचनात्तादर्थ्यमेव तृणस्य न प्रहरणाधिकरणता । तृण एव प्रहरणमिति सम्प्रदायः " इति का० श्रौ० २ । १५८ सूत्रे कर्कः ।

स प्रहरति । पृथिवि देवयजन्योषध्यास्ते मूलं माहि ७ꣳ सिषमित्युत्तर-मूलामिव वाऽएनामेतत्करोत्याददानस्तामेतदाहौषधीनां ते मूलानि माहि-७ꣳ सिषमिति व्रजं गच्छ गोष्ठानमित्यभिनिधास्यन्नेवैतदनपक्रमि कुरुते तद्ध्यनपक्रमि यद्व्रजेऽन्तस्तस्मादाह व्रजं गच्छ गोष्ठानमिति वर्षतु ते द्यौरिति यत्र वाऽअस्यै खनन्तः क्रूरीकुर्वन्त्यपघ्नन्ति शान्तिरापस्तदद्भिः शान्त्या शमयति तदद्भिः सन्दधाति तस्मादाह वर्षतु ते द्यौरिति बधान देवसवितः परमस्यां पृथिव्यामिति देवमेवैतत्सवितारमाहान्धेतमसि बधा-नेति यदाह परमस्यां पृथिव्यामिति शतेन पाशैरित्यमुचे तदाह योऽस्मा-न्द्वेष्टि यञ्च वयं द्विष्मस्तमतो मा मौगिति यदि नाभिचरेद्यद्युऽअभिचरे-दमुमतो मा मौगिति ब्रूयात् ॥ १६ ॥

---

स प्रहरति–"पृथिवि देवयजन्योषध्यास्ते मूलं मा हि ७ꣳसिषम्"–( १ अ. २९ मं. ) इति । उत्तरमूलामिव वा एनामेतत्करोत्याददानः । तामेतदाह–ओषधीनां ते मूलानि मा हिंसिष-मिति । "व्रजं गच्छ गोष्ठानम्"–( १ अ. २९ मं. ) इति । अभिनिधास्यन्नेवैतदनपक्रमि कुरुते । तद्ध्यनपक्रमि यद् व्रजेऽन्तः । तस्मादाह--व्रजं गच्छ गोष्ठानमिति । "वर्षतु ते द्यौः"–( १ अ. २९ मं. ) इति । यत्र वा अस्यै खनन्तः क्रूरीकुर्वन्ति–अपघ्नन्ति । शान्तिरापः, तदद्भिः शान्त्या शमयति, तदद्भिः सन्दधाति । तस्मादाह–वर्षतु ते द्यौरिति । "बधान देव सवितः परमस्यां पृथिव्याम्"–( १ अ. २९ मं. ) इति । देवमेवैतत्सवितारमाह । अन्धे तमसि बधानेति--यदाह–परमस्यां पृथिव्यामिति । "शतेन पाशैः"–( १ अ. २९ मं. ) इति । अमुचे--तदाह--"योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मस्तमतो मा मौक्"--( १ अ. २९ मं. ) इति, यदि नाभिचरेद् । यद्यु अभिचरेद् अमुमतो मा मौगिति ब्रूयात् ॥ १६ ॥

---

विहितं प्रहरणमनूद्य मन्त्रं विधत्ते–**स प्रहरती**ति । ओषध्य... इति मन्त्रभागं व्याचष्टे–**उत्तरमूलामि**ति । स्फ्यमाददानोऽध्वर्युः 'एनां' पृथिवीम् 'उत्तरमूलाम्' उपरिभागावस्थितमूलयुक्तामिव खल्वेतत् करोति । अत उत्तरमूलत्वेन प्रहरणात्तद्धिंसाशंकायां तदभावोऽनेन प्रार्थ्यत इत्यर्थः । मन्त्रगतौषधिशब्दस्य जात्यभिप्रायेणैक-वचनान्तता ( पा. सू. १ । २ । ५८ ) इत्यभिप्रेत्य व्याचष्टे–**ओषधीनामि**ति । प्रहरणनिष्पन्नस्य सतृणस्य पांसोरादानमन्त्रमनूद्य व्याचष्टे–**व्रजं गच्छे**ति । 'अभिनिधास्यन्' अभितो निक्षेप्स्यन् खल्वध्वर्युः 'एतत्' असुरजातम् 'अनपक्रमि' अपक्रमणरहितमितस्ततो गमनरहितं कुरुते । तत् खल्वनपक्रमि यत् 'व्रजे' गोष्ठे-ऽन्तर्निरुध्यते, अतोऽस्य मन्त्रप्रयोगस्यापक्रमणाभावः प्रयोजनमित्यर्थः ।

वेदिप्रेक्षणमन्त्रमनूद्य तात्पर्यमाह–**वर्षत्वि**ति । 'अस्यै' षष्ठ्यर्थे चतुर्थी ( पा. सू. २ । ३ । ६२ । वा. १५०९ ) । 'अस्याः' पृथिव्याः सम्बन्धिनि 'यत्र' स्थाने वेद्यर्थं खनन्तः 'क्रूरं' निष्ठुरं कुर्वन्ति; तेन च

---

१–"पृथिवि देवयजनीति तृणेऽन्तर्हिते प्रहरति" ( श्रौ० सू० २. १५८. )

(इ) अथ द्वितीयं प्रहरति । (त्य) अपाररुं पृथिव्यै देवयजनाद्वध्यासमित्यररुर्ह वै नामासुररक्षसमास तं देवा ऽअस्या ऽअपाघ्नत तथो ऽएवैनमेतदेषोऽस्याऽअपहते व्रजं गच्छ गोष्ठानं वर्षतु ते द्यौर्बधान देव सवितः परमस्यां पृथिव्याᳩशतेन पाशैर्योऽस्मान्द्वेष्टि यञ्च वयं द्विष्मस्तमतो मा मौगिति॥ १७

तमग्नीदभिनिदधाति । ( त्य ) अररो दिवं मा पप्त इति यत्र वै देवाऽअररुमसुररक्षसमपाघ्नत स दिवमपिपतिषत्तमग्निरभिन्यदधादररो दिवं मा पप्त इति स न दिवमपतत्तथोऽएवैनमेतदध्वर्युरेवास्माल्लोकादन्तरेति दिवोऽध्यग्नीत्तस्मादेवं करोति ॥ १८ ॥

---

अथ द्वितीयं प्रहरति–" अपाररुं पृथिव्यै देवयजनाद् वध्यासम् "–( १ अ. २६ मं. ) इति । अररुर्ह वै नामासुररक्षसमास । तं देवा अस्या अपाघ्नत । तथो एवैनमेतदेषोऽस्या अपहते । " व्रजं गच्छ गोष्ठानं वर्षतु ते द्यौर्बधान देव सवितः परमस्यां पृथिव्यां शतेन पाशैर्योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मस्तमतो मा मौक् "–( १ अ. २६ मं. ) इति ॥ १७ ॥

तमग्नीदभिनिदधाति–अररो ! दिवं मा पप्त इति । यत्र वै देवा अररुमसुररक्षसमपाघ्नत, स दिवमपिपतिषत् । तमग्निरभिन्यदधात्–अररो ! दिवं मा पप्त इति । स न दिवमपतत् । तथो एवैनमेतदध्वर्युरेवास्माल्लोकादन्तरेति । दिवोऽध्यग्नीत्–तस्मादेवं करोति ॥ १८ ॥

---

तां पृथिवीम् ' अपघ्नन्ति ' हिंसन्ति; अतः खननजनितां हिंसामनेन मन्त्रप्रयोगेण शान्तिरूपाभिरेवाद्भिः पुनः प्रशमय्य सन्दधातीत्यर्थः । व्रजं गच्छेत्यादिमन्त्राणां कात्यायनः स्पष्टं विनियोगमसूत्रयत्–" व्रजं गच्छेति पुरीषमादत्ते " " वर्षतु त इति वेदिं प्रेक्षते " " बधानेत्युत्करोति " ( श्रौ० सू० २. १५९–१६०–१६१ )–इति । उत्करे निधानमन्त्रस्याभिप्रायमाविष्करोति–देवमेवैतदित्यादिना । " परमस्यां पृथिव्याम् "–इत्यस्य व्याख्यानम्–अन्धे तमसीति । सर्वप्रकाशरहितेऽतिशयिते तमसि, यस्मिन् बद्धो न पुनरावर्तते, तादृशे स्थान इत्यर्थः । ' अमुचे '–इति, अमोचनायेत्यर्थः । न हि शतसङ्ख्याकैः पाशैर्बद्धः स्वात्मानं मोचयितुमीष्ट इत्यभिप्रायः ॥

अभिचरतः प्रयोगे विशेषमाह–यद्यु इति । अनभिचरतः प्रयोगे मन्त्रगतस्तमिति यः शब्दः, तस्य स्थाने ' अभिचरतः ' यजमानस्य, शत्रुनाम द्वितीयया निर्दिश्य मन्त्रः प्रयोक्तव्य इत्यर्थः ॥ १६ ॥

एवं स्तम्बयजुर्हरणस्य प्रथमपर्यायमभिधाय द्वितीयपर्यायार्थं प्रहरणादिकं समन्त्रकं विधत्ते–अथेति । मन्त्रप्रतिपादितमररुवधप्रार्थनमुपपादयति–अररुर्हेति । ' अररुः ' नामासुररक्षसम्, सुराणां विरोधि रक्षो बभूव । ' रक्षः '–शब्दात् " अनसन्तात् "–( पा. सू. ५. ४. १०३. )–इत्यकारः समासान्तः । देववदेवेदानीन्तनोऽध्वर्युरप्यपाररुमित्यनेन मन्त्रेण पृथिव्याः सकाशादपहन्ति । व्रजं गच्छेत्यादिकस्य सर्वस्य द्वितीयपर्याये प्रयोज्यस्यापि प्रागुक्त एवार्थः इत्यभिप्रेत्यानुवदति–व्रजं गच्छेति ॥ १७ ॥

उत्करे न्युप्तस्य स्तम्बयजुषोऽभिधानं समन्त्रकं विधत्ते–तमिति । ' अभिनिदधाति ' उपरि हस्तनिधानेनाधस्तात् क्षिपतीत्यर्थः । ' मा पप्तः ' ( पा. सू. १ वा० प. ८४५ ) इति पतनाभावप्रार्थनं समर्थयितुं पुरावृत्त–

---

१–" अपाररुमिति द्वितीयं प्रहरणादि " ( श्रौ० सू० २. १६३ ) । २–" अभिन्यस्यत्यग्नीदुत्करमररो दिवमिति " श्रौ० सू० २. १६४ उत्करश्च–" प्रहृतप्रदेशादुद्धृतस्तृणधूल्यादिराशिरुत्करः " इति ।

( त्यु ) अथ तृतीयं प्रहरति । द्रप्सस्ते द्यां मा स्कन्नित्ययं वाऽअस्यै द्रप्सो यमस्या इम ७ँ रसं प्रजा उपजीवन्त्येष ते दिवं मा पप्तदित्येवैतदाह व्रजं गच्छ गोष्ठानं वर्षतु ते द्यौर्बधान देव सवितः परमस्यां पृथिव्या ७ँ शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौगिति ॥ १९ ॥

स वै त्रिर्यजुषा हरति । त्रयो वाऽइमे लोकाऽएभिरेवैनमेतल्लोकैरभिनिदधात्यद्धा वै तद्यदिमे लोकाऽअद्धो तद्यद्यजुस्तस्मात्त्रिर्यजुषा हरति॥२०॥

---

अथ तृतीयं प्रहरति–द्रप्सस्ते द्यां मा स्कन्निति । अयं वा अस्यै द्रप्सः–यमस्या इमं रसं प्रजा उपजीवन्ति । एष ते दिवं मा पप्तदित्येवैतदाह–" **व्रजं गच्छ गोष्ठानं वर्षतु ते द्यौर्बधान देव सवितः परमस्यां पृथिव्या ७ शतेन पाशैर्योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक्** "–( १ अ. २६ मं. ) इति ॥ १९ ॥

स वै त्रिर्यजुषा हरति । त्रयो वा इमे लोकाः । एभिरेवैनमेतल्लोकैरभिनिदधाति । अद्धा वै तद्–यदिमे लोकाः, अद्धो तद्–यद्यजुः; तस्मात् त्रिर्यजुषा हरति ॥ २० ॥

---

मुदाहरति–**यत्र वा** इति । **स दिवामि**ति । ' सः ' देवैरपहतोऽररुः ' अपिपतिषत् ' दिवं पतितुं गन्तुमैच्छत् । ' तं ' तथाविधं पिपतिषुमररुम्, उत्तरतः परिगतः ' अग्निः ' अभिन्यदधात् उपरि हस्तनिधानेनाधस्तात् प्रेरितवान् । किं ब्रुवन् ? हे अररो ! ' दिवं ' द्युलोकं ' मा पप्तः ' मा प्राप्नुहीति । " पत्लृ गतौ "–( भ्वा० प० ८७० ) इत्यस्माल्लुङि लृदित्वादङ्, ( पा. सू. ३ । १ । ५५ ) " पतः पुम् " ( पा० सू० ७. ४. १९ ) इति पुमागमः । ' एवमग्निनाभिनिधाने कृते सति, सोऽररुर्दिवं न प्राप्नोत् । तद्वदेवेदानीमप्यध्वर्युः स्तम्बयजुर्हरन् ' अस्माद् ' भूलोकात् ' एनम् ' अररुम् ' अन्तरेति ' अन्तरितं व्यवहितं करोति । आग्नीध्रश्चैतन्मन्त्रकरणकेनोत्कराभिनिधानेन ' दिवः ' अन्तरिक्षात्तमसुरमन्तरितं करोतीत्यर्थः ॥ १८॥

अथ तृतीयपर्यायं विधत्ते–**अथे**ति । मन्त्रं व्याचष्टे– **अयं वा** इति । ' अस्याः ' पृथिव्याः सम्बन्धिनं ' यमिमं ' मधुरादिरसं सर्वाः प्रजा उपजीवन्ति, अयं खल्वस्याः पृथिव्याः ' द्रप्सः ' । तथा च हे पृथिवि ! ' ते ' त्वदीयः ' एषः ' रसः ' दिवं ' द्युलोकं ' मा पप्तत् ' मा पतत्विति ' इमम् ' अर्थम् ' एषः ' मन्त्रो ब्रूत इत्यर्थः । अस्मिन् तृतीयेऽपि पर्याये व्रजं गच्छेत्यादिकं सर्वं पूर्ववत् प्रयोक्तव्यमित्यभिप्रेत्य तत्पठति–**व्रजामि**ति ॥ १९ ॥

उक्तं समन्त्रकं त्रिर्हरणमनूद्य प्रशंसति–**स वा** इति । ' इमे ' पृथिव्यादयः प्रसिद्धास्त्रयो लोकाः । तथा च त्रिष्कृत्वो हरणेन ' एभिः ' त्रिभिरेव लोकैः ' एनम् ' अररुम् ' अभिनिदधाति ' अभितो निक्षिपति, बाधते इति यावत् । यजुर्मन्त्रेण हरणस्य लोकत्रयस्य च साम्यमाह–**अद्धा वा** इति । ' इमे ' पृथिव्यादयः ' लोकाः ' इति यत्, तत् ' अद्धा वै ' प्रत्यक्षमेव खलु यदेतद्धरणसाधनं यजुः, तदपि ' अद्धो ' अद्धैव प्रत्यक्षमेव; अनुष्ठेयार्थस्य साक्षात् प्रतिपादकत्वात् । अतो यजुषो लोकानां च प्रत्यक्षत्वसाम्यात्, त्रिवारं यजुषा हरणेन लोकत्रयादेवास्याररोर्बाधो युक्त इति निगमयति–**तस्मा**दिति ॥ २० ॥

---

१–" द्रप्सस्त इति तृतीयम् " ( श्रौ० सू० २. १६५ ) । २–" प्रतिबाधते "–इति पा० ।

तूष्णीं चतुर्थम्। स यदिमाँल्लोकानति चतुर्थमस्ति वा न वा तेनैवैतद्द्विषन्तं भ्रातृव्यमवबाधतेऽनद्धा वै तद्यदिमाँल्लोकानति चतुर्थमस्ति वा न वानद्धो तद्यत्तूष्णीं तस्मात्तूष्णीं चतुर्थम् ॥ २१ ॥ २ ॥

इति द्वितीयप्रपाठके द्वितीयं ब्राह्मणम्। ( २. ४. )

---

देवाश्च वाऽअसुराश्च। ( श्वो ) उभये प्राजापत्याः पस्पृधिरे ततो देवाऽ अनुव्यमिवासुरथ हासुरा मेनिरेऽस्माकमेवेदं खलु भुवनमिति ॥ १ ॥

---

तूष्णीं चतुर्थम्। स यदिमाँल्लोकानति चतुर्थमस्ति वा न वा, तेनैवैतद् द्विषन्तं भ्रातृव्यमवबाधते। अनद्धा वै तद्—यदिमाँल्लोकानति चतुर्थमस्ति वा न वा, अनद्धो तद्—यत् तूष्णीम्, तस्मात्तूष्णीं चतुर्थम् ॥ २१ ॥

देवाश्च वा असुराश्च—उभये प्राजापत्याः पस्पृधिरे। ततो देवा अनुव्यमिवासुः। अथ हासुरा मेनिरे अस्माकमेवेदं खलु भुवनमिति ॥ १ ॥

---

अमन्त्रकं चतुर्थं पर्यायं विधत्ते—तूष्णीमिति। तस्य प्रयोजनमाह स यदिति। 'इमान्' प्रागुक्तान् त्रीन्—लोकानतिक्रम्य, यत् 'चतुर्थं' लोकजातम्, तत् 'अस्ति वा न वा' इति सन्दिग्धम्; अत्यन्तविप्रकृष्टत्वेनानुभवपथामवतारात्। एतच्चतुर्थहरणात्तेनैव सन्दिह्यमानेन लोकजातेन विद्वेषणं कुर्वन्तं शत्रुमवबाधते। एतदुपपादयितुं तूष्णीं—हरणस्य लोकत्रयव्यतिरिक्तस्य चतुर्थस्थानस्य च साम्यमाह—अनद्धा वा इति। 'अनद्धा' असत्पक्षमित्यर्थः। तूष्णीं हरणमप्यनुष्ठेयार्थप्रतिपादकमन्त्रप्रयोगाभावादस्पष्टत्वेन 'अनद्धा' अप्रत्यक्षमेवेति ॥ २१ ॥ ४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथभाष्ये प्रथमकाण्डे द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥ २ ॥ ४ ॥

---

इत्थं स्तम्बयजुर्हरणं विधाय वेदिपरिग्रहं वक्तुमितिहासमुपन्यस्यति—देवाश्चेति। 'पस्पृधिरे' स्पर्द्धां कृतवन्तः। "अपस्पृधेथामानृचुरानृहुः" ( पा० सू० ६. १. ३६. ) इति सम्प्रसारणनिपातनस्योपलक्षणत्वमभिप्रेत्य लिट्यपि सम्प्रसारणं कृतम्। स्पर्द्धमानानां तेषां मध्ये 'देवाः' 'ततः' तेभ्योऽसुरेभ्यः 'अनुव्यम्' अनुगमनं न्यग्भूतिं प्राप्ता इव बभूवुः। 'अथ ह' अनन्तरमेव तेऽसुरा मन्यन्ते स्म। किमिति ? 'इदम्' सर्वं जगदस्माकमेवेति ॥ १ ॥

---

१–"तूष्णीं चतुर्थं सतृणम्" ( श्रौ० सू० २. १६६ )। २–"यजुर्मन्त्रको दर्भः 'स्तम्बयजुः'। तच्च स्तम्बरूपं स्फ्येन भित्त्वोत्करदेशे हरेत्"–इति तै० ब्रा० ३. २. ९. सा० भा०। ( तै० सं० १. १. ९. )। "यजुषा मन्त्रेण हरणीयः पांसुसहितः स्तम्बः 'स्तम्बयजुः' तस्य हरणम्"–इति तै० सं० २. ६. ४. सा० भा०। तत्रैव "वेदिस्थानात्सतृणस्य पांसोर्मन्त्रेणान्यत्र हरणम्"–इत्यपि। ३–'न्यक्कृतिम्'–इति पा०।

ते होचुः । ( हं ) हन्तेमां पृथिवीं विभजामहै तां विभज्योपजीवामेति तामौक्ष्णैश्चर्म्मभिः पश्चात्प्राञ्चो विभजमानाऽअभीयुः ॥ २ ॥

( स्त ) तद्वै देवाः शुश्रुवुः । ( वि ) विभजन्ते ह वाऽइमामसुराः पृथिवीं प्रेत तदेष्यामो यत्रेमामसुरा विभजन्ते के ततः स्याम यदस्यै न भजेमहीति ते यज्ञमेव विष्णुं पुरस्कृत्येयुः ॥ ३ ॥

( स्ते ) ते होचुः । ( उ ) अनु नोऽस्यां पृथिव्यामाभजतास्त्वेव नोऽप्यस्यां भागऽइति ते हासुराऽअसूयन्तऽइवोचुर्यावदेवैष विष्णुरभिशेते तावद्वो दद्मऽइति ॥ ४ ॥

---

ते होचुः—हन्तेमां पृथिवीं विभजामहै, तां विभज्योपजीवामेति । तामौक्ष्णैश्चर्म्मभिः पश्चात् प्राञ्चो विभजमाना अभीयुः ॥ २ ॥

तद्वै देवाः शुश्रुवुः विभजन्ते ह वा इमामसुराः पृथिवीम्, प्रेत तदेष्यामो यत्रेमामसुरा विभजन्ते, के ततः स्याम—यदस्यै न भजेमहीति । ते यज्ञमेव विष्णुं पुरस्कृत्येयुः ॥ ३ ॥

ते होचुः—अनु नोऽस्यां पृथिव्यामाभजत, अस्त्वेव नोऽप्यस्यां भाग इति । ते हासुरा असूयन्त इवोचुः—यावदेवैष विष्णुरभिशेते, तावद्वो दद्म इति ॥ ४ ॥

---

एवमुक्त्वा किमुक्तवन्त इति तद्दर्शयति—ते हेति । 'हन्त' इति हर्षे । यत एवं देवा न्यग्भूताः[1], अतो निष्प्रत्यूहं वयम् 'इमाम्' पृथिवीं विभजामहै । विभज्य च तां यथाभागमुपजीवामेति । एवमुक्त्वा किं कृतवन्त इति तदाह—तामिति । 'औक्ष्णैः' उक्ष्णोऽनडुहः सम्बन्धिभिश्चर्म्मभिः । उक्षन्—शब्दात् "तस्येदम्" (पा० सू० ४. ३. १२०) इत्यणि "षपूर्वहन्धृतराज्ञाम्" (पा० सू० ६. ४. १३५) इत्यल्लोपः । तैश्चर्मभिः 'पश्चात्' प्रतीचीं दिशमारभ्य 'प्राञ्चः' प्राङ्मुखा विभजमानाः 'अभीयुः' अभिजग्मुरित्यर्थः ॥ २ ॥

असुरेष्वेवं कृतवत्सु देवाः किं कृतवन्त इति तदाह—तद्वा इति । प्रेतेत्यादि । अस्माकं तूष्णीमवस्थानमनुचितम्, अस्माभिरपि तद्विषये प्रयतितव्यमिति, परस्परमभिमुखीकृत्येत्यर्थः प्रतिपाद्यते—हे देवाः ! यूयं 'प्रेत' गच्छत, प्रोत्सहध्वमिति यावत् । यस्मिन् स्थानेऽसुराः पृथिवीं विभजन्ते, तत् स्थानं गमिष्यामः । गत्वा च 'यत्' यदि 'अस्यै' षष्ठ्यर्थे चतुर्थी (पा. सू. २ । ३ । ६२ । वा० १५०९) 'अस्याः' पृथिव्याः सम्बन्धि स्थानं न प्राप्नुयामः, ('ततः' तर्हि वयमभागिनो भवेम; यदि तु प्राप्नुयामः तदा) भागिनः 'स्याम' भवेमेत्यर्थः । एवमालोच्य देवैः कृतं दर्शयति—त इति । यज्ञात्मकमेव 'विष्णुम्' पुरतो धारयित्वा 'ईयुः' गतवन्त इत्यर्थः ॥ ३ ॥

गत्वा चासुरान् प्रति किमुक्तवन्त इति, तदाह—ते हेति । 'अस्याम्' पृथिव्याम् 'नः' अस्मान् 'अन्वाभजत' संयोजयत । 'नः' अस्माकमप्यस्यां भागो भवत्विति । असुरैः कृतं प्रतिवचनं दर्शयति—ते हेति । 'असूयन्त इव' असूयां कुर्वन्त इव, असहमाना इति यावत् । यावन्तं देशं विष्णुर्व्याप्य वर्तते, तत्परिमाणं स्थानं युष्मभ्यं प्रयच्छाम इति ॥ ४ ॥

---

१—'न्यक्कृता' इति पा० ।

वामनो ह विष्णुरास । तद्देवा न जिहीडिरे महद्वै नोऽदुर्ये नो यज्ञसम्मितमदुरिति ॥ ५ ॥

ते प्राञ्चं विष्णुं निपाद्य । छन्दोभिरभितः पर्यगृह्णन्गायत्रेण त्वा छन्दसा परिगृह्णामीति दक्षिणतस्त्रैष्टुभेन त्वा छन्दसा परिगृह्णामीति पश्चाज्जागतेन त्वा छन्दसा परिगृह्णामीत्युत्तरतः ॥ ६ ॥

( स्तं ) तं छन्दोभिरभितः परिगृह्य । ( ह्या ) अग्निं पुरस्तात्समाधाय तेनार्चन्तः श्राम्यन्तश्चेरुस्तेनेमाꣳसर्वां पृथिवीꣳसमविन्दन्त तद्यदेनेनेमाꣳसर्वाꣳसमविन्दन्त तस्माद्वेदिर्नाम तस्मादाहुर्यावती वेदिस्तावती पृथिवीत्येतया हीमाꣳसर्वाꣳसमविन्दन्तैवꣳह वा इमाꣳसर्वाꣳसपत्नानाꣳसंवृङ्क्ते निर्भजत्यस्यै सपत्नान्य एवमेतद्वेद ॥ ७ ॥

---

वामनो ह विष्णुरास । तद्देवा न जिहीडिरे—महद्वै नोऽदुर्ये नो यज्ञसम्मितमदुरिति ॥ ५ ॥

ते प्राञ्चं विष्णुं निपाद्य छन्दोभिरभितः पर्यगृह्णन्—"गायत्रेण त्वा छन्दसा परिगृह्णामि"—( १ अ. २७ मं. ) इति, दक्षिणतः । "त्रैष्टुभेन त्वा छन्दसा परिगृह्णामि"—( १ अ. २७ मं. ) इति पश्चात् । "जागतेन त्वा छन्दसा परिगृह्णामि" ( १ अ. २७ मं. ) इति, उत्तरतः ॥ ६ ॥

तं छन्दोभिरभितः परिगृह्य, अग्निं पुरस्तात् समाधाय, तेनार्चन्तः श्राम्यन्तश्चेरुः । तेनेमां सर्वां पृथिवीं समविन्दन्त । तद् यदेनेनेमां सर्वां समविन्दन्त, तस्माद्वेदिर्नाम । तस्मादाहुः-यावती वेदिः, तावती पृथिवीति—एतया हीमां सर्वां समविन्दन्त । एवं ह वा इमां सर्वां सपत्नानां संवृङ्क्ते । निर्भजत्यस्यै सपत्नान्—य एवमेतद्वेद ॥ ७ ॥

---

असुरैरभिहिते देवास्तदङ्गीचक्रुरित्याह—वामनो हेति । विष्णुर्हि तदानीम् ' वामनः ' खर्वो बभूव । अत एवासुरास्तेनाक्रान्तं स्थानं प्रयच्छाम इत्यब्रुवन् । अथापि ' तत् ' असुरैरुक्तं देवाः; 'न जिहीडिरे' न ह्यनादृतं चक्रुः, किन्त्वाद्रियन्ते स्मेत्यर्थः । " हेडृ अनादरे " ( भ्वा० आ० २८९ ) इति धातुः । आदरणप्रकारमाह—महदिति । विष्णुर्हि यज्ञः, अतो ' यज्ञसम्मितम् ' स्थानमस्मभ्यं दत्तवन्त इति यत्, तत् ' नः ' अस्माकम् ' महत् ' अधिकम् ॥ ५ ॥

एवं विचार्य्य देवैः कृतं दर्शयति—त इति । यज्ञात्मकम् ' विष्णुम् ' ' प्राञ्चम् ' प्राक्शिरसं निपात्य (द्य) दक्षिणतः, पश्चात्, उत्तरतश्च गायत्र्यादिच्छन्दोभिः सर्वतः पर्यगृह्णन् ॥ ६ ॥

तमिति । ' तम् ' विष्णुं गायत्र्यादिभिश्छन्दोभिः सर्वतः परिगृह्य, पूर्वस्यां दिशि-आहवनीयाख्यम् 'अग्निम्' प्रज्वाल्य, ' तेन ' विष्ण्वात्मकेन यज्ञेन ' अर्चन्तः ' पूजयन्तः, ' श्राम्यन्तः ' कर्मानुष्ठानजनितं श्रमं प्राप्नुवन्तः ' चेरुः ' पूर्ववद् ववृतिरे । चरित्वा च ' तेन ' यज्ञात्मकस्य विष्णोराधारभूतेन स्थानेन देवाः सर्वामेवमां पृथिवीं सम्यगलभन्त । अतो विद्यते लभ्यते अनेनेति यज्ञस्थानस्य ' वेदि '—नामधेयं निर्वक्ति—तद्यदिति । उक्तं वेद्याः सर्वपृथिवीलाभरूपत्वम् , इदानीं वेदिपृथिव्योस्तादात्म्यविषयामभियुक्तप्रसिद्धिमुदाहरति—तस्मादिति । यत्परिमाणविशिष्टा खलु वेदिः, तत्परिमाणैव पृथिवी कुत इत्यत आह—एतयेति । ' हि ' यस्मात् ' एतया '

**सोऽयं विष्णुर्ग्लानः । (श्छ) छन्दोभिरभितः परिगृहीतोऽग्निः पुरस्तान्नापक्रमणमास स ततऽएवौषधीनां मूलान्युपमुम्लोच ॥ ८ ॥**

**ते ह देवाऽऊचुः । क नु विष्णुरभूत्क नु यज्ञोऽभूदिति ते होचुश्छन्दोभिरभितः परिगृहीतोऽग्निः पुरस्तान्नापक्रमणमस्त्यत्रैवान्विच्छतेति तं खनन्तऽइवान्वीषुस्तं त्र्यङ्गुलेऽन्वविन्दंस्तस्मात्त्र्यङ्गुला वेदिः स्यात्तदु हापि पाञ्चिस्त्र्यङ्गुलामेव सौम्यस्याध्वरस्य वेदिं चक्रे ॥ ९ ॥**

---

सोऽयं विष्णुर्ग्लानः, छन्दोभिरभितः परिगृहीतः, अग्निः पुरस्तात् नापक्रमणमास । स तत एवौषधीनां मूलान्युपमुम्लोच ॥ ८ ॥

ते ह देवा ऊचुः—क नु विष्णुरभूत्, क नु यज्ञोऽभूदिति । ते होचुः—छन्दोभिरभितः परिगृहीतः, अग्निः पुरस्तात्, नापक्रमणमस्ति; अत्रैवान्विच्छतेति । तं खनन्त इवान्वीषुः । तं त्र्यंगुलेऽन्वविन्दन् । तस्मात् त्र्यंगुला वेदिः स्यात् । तदु हापि पाञ्चिः त्र्यंगुलामेव सौम्यस्याध्वरस्य वेदिं चक्रे ॥ ९ ॥

---

वेद्या इमाम् सर्वां पृथिवीमलभन्त, अतस्तल्लाभहेतुत्वात् ततोऽनन्येत्यर्थः । इत्थं पुरावृत्तमुदाहृत्य प्रकृते योजयति—**एवं हेति** । यथैव हि वेदिपरिग्रहाद्देवा असुरसकाशात् कृत्स्नां पृथिवीमपहृतवन्तः, एवमेवायं यजमानोऽपि शत्रुसम्बन्धिनीं सर्वां भूमिमपहरति । तांश्च शत्रून् ‘ अस्याः ’ पृथिव्याः ‘ निर्भजति ’ निर्भक्तान् भागरहितान् करोतीत्यर्थः । तस्माद् गायत्रेणेत्यादिभिर्मन्त्रैः स्फ्येन वेदिं दक्षिणतः पश्चादुत्तरतश्च रेखया परिगृह्णीयादित्यर्थः ॥ ७ ॥

अथ वेदेः खननं विधित्सुः प्रकृतमितिहासशेषमनुक्रामति—**सोऽयमिति** । ‘ सः ’ यज्ञात्मको ‘ विष्णुः ’ दक्षिणतः पश्चादुत्तरतश्च छन्दोभिः परिगृहीतत्वात् पूर्वस्यां दिशि चाग्नेरवस्थानादितस्ततश्चलितुमशक्यत्वेन ‘ ग्लानः ’ श्रान्तः सन् ‘ अपक्रमणम् ’ अपगमनम् ‘ नास ’ न जगाम । “ अस गतिदीप्त्यादानेषु ”—( भ्वा० उ० ९११ )—इत्यस्माल्लिटि रूपम् । यद्वा—अस्तेरेव लिटि च्छान्दसो भूभावाऽभावः । ग्लानस्य तस्य विष्णोरपगमनं न बभूवेत्यर्थः । स च सर्वतः परिगृहीतो विष्णुः ‘ तत एव ’ तस्मिन्नेव स्थाने—ओषधीनां मूलान्युपेत्य भूम्यन्तर्गतः सन् ‘ मुम्लोच ’ अस्तङ्गतः, अदृश्यो बभूव ॥ ८ ॥

अनन्तरं च ते देवास्तत्र विष्णुमपश्यन्तो वितर्कितवन्तः, किमित्याह—**ते ह देवा इति** । विष्णुः ‘ क ’ कुत्राभूत् ? तदात्मको यज्ञश्च क वाऽभूदिति । एवं वितर्क्य तैर्निर्णीतमर्थं दर्शयति—**ते होचुरिति** । **अत्रैवेति** । चतसृष्वपि दिक्षु परिवृतत्वेन गमनासम्भवात् ‘ अत्रैव ’ स्थाने तस्य विष्णोरन्वेषणं कुरुतेत्यर्थः । इत्थं परस्परं निश्चित्य भूमिं खनन्त इव ‘ तम् ’ विष्णुमन्विष्टवन्तः । अन्विष्य तं भूम्यन्तस्त्र्यङ्गुले ‘ अन्वविन्दन् ’ अलभन्त । यत एवम्, अत इदानीमपि यज्ञलाभाय वेदेस्त्र्यङ्गुलमात्रखननं कर्तव्यमिति विधत्ते—**तस्मादिति** । त्र्यङ्गुलपरिमाणेन खाता वेदिर्भवेदित्यर्थः । वेदेस्त्र्यङ्गुलखननमृषिसंवादेन द्रढयति—**तदु हेति** । ‘ पाञ्चिः ’ नाम कश्चित्, स खलु सोमयागस्यापि वेदिं त्र्यङ्गुलखातामेव कृतवान् । अतोऽत्रापि त्र्यङ्गुलखाता वेदिर्युक्तेति भावः ॥ ९ ॥

---

१—“ पूर्वं परिग्रहं परिगृह्णाति दक्षिणतः पश्चादुत्तरतश्च स्फ्येन गायत्रेणेति प्रतिमन्त्रम् ” ( श्रौ० सू० २. १६७ ) । २—एष एव पूर्वपरिग्रह उच्यते । ३—“ असभुवि ” अदा० प० ५५ । “ आर्द्धधातुके ” पा० सू० २ । ४ । २५ । इत्यविहितस्य “ अस्तेर्भूः ” इति २ । ४ । ५२ । भूभावः प्राप्त इति भावः ।

तद्व तथा न कुर्यात् । ( द्वो ) ओषधीनां वै स मूलान्युपाम्लोचत्तस्मा-दोषधीनामेव मूलान्युच्छेत्तवै ब्रूयाद्यन्न्वेवात्र विष्णुमन्वविन्दंस्तस्मा-द्वेदिर्नाम ॥ १० ॥

तमनुविद्योत्तरेण परिग्रहेण पर्यगृह्णन् । ( न्त्सु ) सुक्ष्मा चासि शिवा चासीति दक्षिणतऽइमामेवैतत्पृथिवीꣳ संविद्य सुक्ष्माꣳशिवामकुर्वत स्योना चासि सुषदा चासीति पश्चादिमामेवैतत्पृथिवीꣳ संविद्य स्योनाꣳ सुषदा-मकुर्वतोर्ज्जस्वती चासि पयस्वती चेत्युत्तरतऽइमामेवैतत्पृथिवीꣳ संविद्य रसवतीमुपजीवनीयामकुर्वत ॥ ११ ॥

स वै त्रिः पूर्वं परिग्रहं परिगृह्णाति । त्रिरुत्तरं तत्षट्कृत्वः षड्वाऽऋतवः

---

तद्व तथा न कुर्यात् । ओषधीनां वै स मूलान्युपाम्लोचत्–तस्मात्–ओषधीनामेव मूलान्युच्छे-त्तवै ब्रूयात् । यन्न्वेवात्र विष्णुमन्वविन्दन्–तस्माद्वेदिर्नाम ॥ १० ॥

तमनुविद्योत्तरेण परिग्रहेण पर्यगृह्णन्–" सुक्ष्मा चासि शिवा चासि "–( १ अ. २७ मं. ) इति । दक्षिणत इमामेवैतत् पृथिवीं संविद्य सुक्ष्मां शिवामकुर्वत । " स्योना चासि सुषदा चासि "–( १ अ. २७ मं. ) इति । पश्चादिमामेवैतत् पृथिवीं संविद्य स्योनां सुषदामकुर्वत । " ऊर्जस्वती चासि पयस्वती च "–( १ अ. २७ मं. ) इति । उत्तरत इमामेवैतत् पृथिवीं संविद्य रसवतीमुपजीवनीयामकुर्वत ॥ ११ ॥

स वै त्रिः पूर्वं परिग्रहं परिगृह्णाति, त्रिरुत्तरम् । तत् षट्कृत्वः, षड् वा ऋतवः संवत्सरस्य । संवत्सरो यज्ञः प्रजापतिः; स यावानेव यज्ञो यावत्यस्य मात्रा तावन्तमेवैतत् परिगृह्णाति ॥ १२ ॥

---

तमिमं पक्षं निषिध्य पक्षान्तरमाह–**तद्व तथे**ति । ' सः ' विष्णुरोषधीनां खलु मूलान्युपेत्यान्तर्हितोऽभवत् । तस्माद् यावति देशे भूम्यामन्तरोषधीनां मूलानि प्रसरन्ति, तावत्पर्यन्तं खात्वा तन्मूलान्येवोच्छेत्तुं ब्रूयात् । "तुमर्थे सेसेन: "–( पा० सू० ३. ४. ९ )–इति तवैप्रत्ययः । पूर्वं कृत्स्नपृथिवीलाभहेतुतया वेदिनाम निरुक्तम्, यज्ञात्मकस्य विष्णोर्लाभाधिकरणतयापि तन्निर्वक्ति–**यन्न्वेवे**ति ॥ १० ॥

अथ वेदेरुत्तर[1]परिग्रहः कर्तव्य इतीतिहासमुखेन विधिमुन्नयति–**तमि**त्यादिना । ' तम् ' विष्णुम् ' अनु-विद्य ' लब्ध्वोत्तरपरिग्रहेण पर्यगृह्णन् । गायत्रेण त्वेत्यादिभिः प्राक् कृतः पूर्वपरिग्रहस्तदपेक्षयास्योत्तरत्वम् । तस्य स्वरूपमाह–**सुक्ष्मा**[2] **चासी**त्यादिना । ' दक्षिणतः ' वेदेर्दक्षिणस्यां दिशि " सुक्ष्मा चासि "–इति यजुषा स्फ्येन लेखया परिगृह्णीयात् । मन्त्रतात्पर्यमाह–**इमामि**ति । एवमुत्तरत्रापि योज्यम् । तृतीयमन्त्रे ' ऊर्क् '–शब्देन बलकरो रसो विवक्षित इति व्याचष्टे–**रसवतीमि**ति । पयस्वतीत्यस्य व्याख्यानम्–**उपजीव-नीयामि**ति । पयस्विनी हि गौर्लोके–उपजीव्यते ॥ ११ ॥

पूर्वोत्तरपरिग्रहयोः संख्यां समुच्चित्य प्रशंसति–**स वा** इत्यादिना । षडृतुसमुदायात्मको यः संवत्सरः, तदा-

---

१–" उत्तरं परिग्रहं परिगृह्णाति सुक्ष्मास्योनोर्जस्वतीति प्रतिमन्त्रं पूर्ववत् " ( श्रौ० सू० २. १७२ ) अस्मात् प्राक् लेखादिका वेदिसंस्काराः प्रोक्ताः कात्यायनेन । २–शोभना क्ष्मा–सुक्ष्मेति महीधरः ।

**संवत्सरस्य संवत्सरो यज्ञः प्रजापतिः स यावानेव यज्ञो यावत्यस्य मात्रा तावन्तमेवैतत्परिगृह्णाति ॥ १२ ॥**

**षड्भिर्व्याहृतिभिः । पूर्वं परिग्रहं परिगृह्णाति षड्भिरुत्तरं तद्द्वादशकृत्वो द्वादश वै मासाः संवत्सरस्य संवत्सरो यज्ञः प्रजापतिः स यावानेव यज्ञो यावत्यस्य मात्रा तावन्तमेवैतत्परिगृह्णाति ॥ १३ ॥**

**व्याममात्री पश्चात्स्यादित्याहुः । ( ५ ) एतावान्वै पुरुषः पुरुषसम्मिता हि त्र्यरत्निः प्राची त्रिवृद्धि यज्ञो नात्र मात्रास्ति यावतीमेव स्वयं मनसा मन्येत तावतीं कुर्यात् ॥ १४ ॥**

---

षड्भिर्व्याहृतिभिः पूर्वं परिग्रहं परिगृह्णाति, षड्भिरुत्तरम् । तद् द्वादशकृत्वः । द्वादश वै मासाः संवत्सरस्य, संवत्सरो यज्ञः प्रजापतिः । स यावानेव यज्ञो यावत्यस्य मात्रा तावन्तमेवैतत् परिगृह्णाति ॥ १३ ॥

व्याममात्री पश्चात् स्यादित्याहुः । एतावान् वै पुरुषः, पुरुषसम्मिता हि । त्र्यरत्निः प्राची । त्रिवृद्धि यज्ञः । नात्र मात्रास्ति, यावतीमेव स्वयं मनसा मन्येत तावतीं कुर्यात् ॥ १४ ॥

---

त्मकः प्रजापतिः, संवत्सरकालभरणेन जातत्वादभेदोपचारः । आम्नास्यते ह्यग्रे बृहदारण्यके–" तमेतावन्तं कालमबिभर्यावान्त्संवत्सरस्तमेतावतः कालस्य परस्तादसृजत "–( १. २. ४ ) इति । यज्ञश्चाऽऽश्रावयेत्यादि-सप्तदशाक्षरसाध्यत्वात् " एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्तः "–( तै० सं० १. ६. ११ ) इति श्रुतेः[1] प्रजापत्यात्मकः । एवम् ' सः ' यज्ञः ' यावान् ' यत्परिमाणविशिष्टः, ' अस्य ' च यज्ञस्य ' मात्रा ' परिमाणं च यावत्, तत्परिमाणविशिष्टमेवैतं यज्ञं षट्सङ्ख्यासंपादनेन ' परिगृह्णाति ' स्वीकरोतीत्यर्थः ॥ १२ ॥

पूर्वोत्तरपरिग्रहयोर्मन्त्रावयवसंख्यामनूद्य समुच्चित्य प्रशंसति–**षड्भिरि**ति । व्याह्रियन्त इति–व्याहृतयो मन्त्रावयवाः, ते च पूर्वपरिग्रहे षट् । गायत्रेण त्वेत्यादिकास्त्वान्तास्त्रयः[2], गृह्णाम्यन्तास्त्रयः[3] उत्तरपरिग्रहे च सुक्ष्मा चासीत्येवमस्यन्ताः[4] षड् व्याहृतयः स्पष्टाः । अन्यत् पूर्ववत् ॥ १३ ॥

गार्हपत्याहवनीययोर्मध्ये सा वेदिरायामतो यजमानमात्री; सा च पश्चाद् विस्तृत्या चतुररत्निः, पुरस्तात् त्र्यरत्निः कार्येति विधत्ते–**व्याममात्री**ति । ' व्यामः ' प्रसारितकरद्वयान्तराललक्षणः । ' पश्चात् ' प्रत्यग्-भागे–इत्यर्थः । **त्र्यरत्निः प्राची**ति । त्रिभिररत्निभिर्विस्तृता प्राग्भागे वेदिः कार्येत्यर्थः । **त्रिवृद्धी**ति । सवनत्रयादिरूपेण यज्ञस्य त्रिवृत्त्वम् । पक्षान्तरमाह–**नात्रे**ति । ' अत्र ' वेद्यां परिमाणं नैवास्ति । ' यावतीम् ' यत्परिमाणविशिष्टामेव वेदिं स्वयं मनसा हविरासादनादिकार्यपर्याप्तां मन्येत, तत्परिमाणविशिष्टां वेदिं कुर्यात् । कात्यायनोऽपीमं पक्षद्वयमसूत्रयत्–"त्र्यरत्नीं प्राचीमपरिमितां वा[5] "–इति ॥ १४ ॥

---

१–तत्रैव " आश्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामह इति पंचाक्षरं द्व्यक्षरो वषट्कारः " इति च तै० सं० १ । ६ । ११ । २–' गायत्रेण त्वा ' ' त्रैष्टुभेन त्वा ' ' जागतेन त्वा ' इति त्वान्ताः । ३–'छन्दसा परि-गृह्णामि ' इति त्रिवारम् । ४–' असि ' शब्दान्ताः । ५–" अपरेणाहवनीयं वेदिं खनति त्र्यङ्गुलखातां व्याममात्रीं पश्चात् त्र्यरत्नीं प्राचीमपरिमितां वा प्राक्प्रवणामुदग्वा मध्यसंगृहीतामभिमभितोंऽसौ " श्रौ० सू० २. १५० ।

(द) अभितोऽग्निमꣳसाऽ उन्नयति । योषा वै वेदिर्वृषाग्निः परिगृह्य वै योषा वृषाणꣳ शेते मिथुनमेवैतत्प्रजननं क्रियते तस्मादभितोऽग्निमꣳसाऽ उन्नयति ॥ १५ ॥

सा वै पश्चाद्वरीयसी स्यात् । (न्म) मध्ये सꣳह्वारिता पुनः पुरस्तादुर्व्येवमिव हि योषां प्रशꣳसन्ति पृथुश्रोणिर्विमृष्टान्तराꣳसा मध्ये संग्राह्येति जुष्टामेवैनामेतद्देवेभ्यः करोति ॥ १६ ॥

सा वै प्राक्प्रवणा स्यात् । (त्म) प्राची हि देवानां दिगथो ऽउदक्प्रवणोदीची हि मनुष्याणां दिग्दक्षिणतः पुरीषं प्रत्युदूहत्येषा वै दिक्पितृणाꣳसा यद्दक्षिणाप्रवणा स्यात्क्षिप्रे ह यजमानोऽमुं लोकमियात्तथो ह यजमानो ज्योग्जीवति तस्माद्दक्षिणतः पुरीषं प्रत्युदूहति पुरीषवतीं कुर्वीत पशवो वै पुरीषं पशुमतीमेवैनामेतत्कुरुते ॥ १७ ॥

---

अभितोऽग्निमंसावुन्नयति । योषा वै वेदिः, वृषाग्निः । परिगृह्य वै योषा वृषाणं शेते । मिथुनमेवैतत्प्रजननं क्रियते । तस्मादभितोऽग्निमंसा उन्नयति ॥ १५ ॥

सा वै पश्चाद्वरीयसी स्यात्, मध्ये संह्वारिता, पुनः पुरस्तादुर्वी । एवमिव हि योषां प्रशंसन्ति—पृथुश्रोणिः, विमृष्टान्तरांसा, मध्ये संग्राह्येति । जुष्टामेवैनामेतद्देवेभ्यः करोति ॥ १६ ॥

सा वै प्राक्प्रवणा स्यात्—प्राची हि देवानां दिक् । अथो उदक्प्रवणा—उदीची हि मनुष्याणां दिक् । दक्षिणतः पुरीषं प्रत्युदूहति—एषा वै दिक् पितृणाम् । सा यद्दक्षिणाप्रवणा स्यात्—क्षिप्रे ह यजमानोऽमुं लोकमियात् । तथो ह यजमानो ज्योग् जीवति । तस्माद्दक्षिणतः पुरीषं प्रत्युदूहति । पुरीषवतीं कुर्वीत—पशवो वै पुरीषं, पशुमतीमेवैनामेतत् कुरुते ॥ १७ ॥

---

वेद्यंसयोराहवनीयस्य स्पर्शं विधत्ते—**अभित** इति । ' अग्निमभितः ' आहवनीयस्य दक्षिणोत्तरपार्श्वयोर्वेद्यंसौ ' उन्नयति ' ऊर्ध्वं प्रापयति । तदेतत् प्रशंसति—**योषा वा** इति । लोके हि योषित् पुमांसमंसाभ्यां परिष्वज्य शेते; अतो वेदेरप्यंसाभ्यामग्नेः परिष्वङ्गो युक्त इति भावः ॥ १५ ॥

" योषा वै "—इति सिद्धवदुक्तं स्त्रीत्वं लौकिकस्त्रीसामान्येनोपपाद्य प्रशंसति—**सा वा** इति । ' वरीयसी ' उरुतरा, विस्तीर्णतरा । उक्तं हि " व्याममात्री पश्चात् स्यादिति "[२] । मध्ये प्रत्यग्भागानन्तरभाविनि मध्यदेशे ' संह्वारिता ' सङ्कुचिता । ' पुरः ' पूर्वभागे ' उर्वी ' विस्तीर्णा । त्र्यरत्निः प्राचीति विधानात् । एवं वेदिस्वरूपमभिधाय तत्साम्यं स्त्रियां योजयति **एवमिति** । **विमृष्टान्तरांसेति** । श्रोणितो विमृष्टं न्यूनमन्तरमवकाशो ययोस्तौ ' विमृष्टान्तरौ ' तथाविधावंसौ यस्याः सा तथोक्ता । **संग्राह्येति** । मध्यदेशे हस्तेन संग्रहीतुं शक्या, कृशोदरीति यावत् । एवम् ' एनाम् ' प्रशस्तयोषिदाकारां वेदिं कुर्वन् देवेभ्यः प्रियां करोति ॥ १६ ॥

अथ सा वेदिः प्राक्प्रवणोदक्प्रवणा वा कार्येति विधत्ते—**सा वा** इति । ' प्राक् ' प्राच्यां दिशि ' प्रवणम् ' निम्नं यस्याः सा तथोक्ता । प्राच्या दिशो देवसम्बन्धित्वम्; दिग्विभजनसमये देवैरात्मीयतया स्वीका-

---

१–' तदेव ' इति पा० । २–अस्मिन्नेव ब्राह्मणे १४ कंडिकायाम् । आप० श्रौ० सू० २ । २ । ९ । १० । इत्यत्र द्रष्टव्यम् ।

**तां प्रतिमार्ष्टि । देवा ह वै संग्रामꣳसन्निधास्यन्तस्ते होचुर्हन्त यदस्यै पृथिव्या ऽअनामृतं देवयजनं तच्चन्द्रमसि निदधामहै स यदि न ऽइतोऽसुरा जयेयुस्तत ऽ एवार्चन्तः श्राम्यन्तः पुनरभिभवेमेति स यदस्यै पृथिव्याऽ अनामृतं देवयजनमासीत्तच्चन्द्रमसि न्यदधत तदेतच्चन्द्रमसि कृष्णं तस्मा- दाहुश्चन्द्रमस्यस्यै पृथिव्यै देवयजनमित्यपि ह वा ऽअस्यैतस्मिन्देव- यजनऽइष्टं भवति तस्माद्वै प्रतिमार्ष्टि ॥ १८ ॥**

---

**तां प्रतिमार्ष्टि । देवा ह वै संग्रामं सन्निधास्यन्तस्ते होचुः—हन्त यदस्यै पृथिव्या अनामृतं देव- यजनं तच्चन्द्रमसि निदधामहै । स यदि न इतोऽसुरा जयेयुः, तत एवार्चन्तः श्राम्यन्तः पुनरभि- भवेमेति । स यदस्यै पृथिव्या अनामृतं देवयजनमासीत्तच्चन्द्रमसि न्यदधत । तदेतच्चन्द्रमसि कृष्णम् । तस्मादाहुः—चन्द्रमस्यस्यै पृथिव्यै देवयजनमिति । अपि ह वा अस्यैतस्मिन् देवयजन इष्टं भवति । तस्माद्वै प्रतिमार्ष्टि ॥ १८ ॥**

---

रात् । श्रूयते हि तैत्तिरीयके—"देवमनुष्या दिशो व्यभजन्त प्राचीं देवाः[1] "—( ६. १. १. १. ) इति, इमां प्रसिद्धिं द्योतयितुमत्र 'हि'—शब्दः । 'अथो'—इति पक्षान्तरं द्योत्यते । अत एव कात्यायनोऽपि पक्षद्वयमसूत्रयत्—"प्राक्प्रवणामुदग् वा "—( श्रौ० सू० २. १९० ) इति । आपस्तम्बस्तु प्रागुदगुक्तोपजी- वनेन विकल्पमसूत्रयत्—"प्राक्प्रवणां प्रागुदक्प्रवणां वा"— ( आ० श्रौ० सू० २. २. ९. ) इति । उदीच्या मनुष्यसम्बन्धः; शान्तरूपत्वात् । अत एवान्यत्राम्नायते—" एषा वै देवमनुष्याणाꣳ शान्ता दिग् "— ( तै० ब्रा० २. १. ३. ५. ) इति । वेदेर्दक्षिणभागस्य पांसुभिरौन्नत्यकरणं विधत्ते—**दक्षिणत** इति । 'पुरीषम्' खातं पांसुं 'प्रत्युदूहति' प्रतिक्षिपति । विहितमर्थमुपपादयितुं विपक्षे बाधमुपन्यस्यति—**एषा वा** इति । 'एषा' दक्षिणा दिक् पितॄणां स्वभूता । तथा च 'सा' वेदिर्यदि 'दक्षिणप्रवणा स्यात्' दक्षिणतो निम्ना भवेत्, तदा तत्रासिक्तोदकवद् यजमानोऽपि दक्षिणतोऽवस्थितं पितृलोकम् 'क्षिप्रे' क्षिप्रम् 'इयात्' प्राप्नुयात् । प्राचीमप्रवणायां तु वेद्यां नैष दोष इत्याह—**तथो** हेति । तथा सति 'सः' यजमानः 'ज्योक्' चिरं जीवेत् । खाता वेदिर्नाद्भिः श्लक्ष्णीकरणीया, किन्तु पांसुलैव कार्येति विधत्ते—**पुरीषवतीमि**ति । तत् प्रशंसति—**पशवो वा** इति । पशुप्राप्तिहेतुत्वात् पुरीषस्य पशुत्वम् । 'पुरीषैः' पांसुभिः युक्तां वेदिं कुर्वन् पशुभिर्युक्तामेवैनां कुरुत इत्यर्थः ॥ १७ ॥

" पुरा क्रूरस्य " इति मन्त्रेण यद्वेदेर्मार्जनम्, तद् विधत्ते[2]—**तामि**ति । एतत्प्रशंसार्थमितिहासमाह—**देवा** हेति । पुरा खलु देवा असुरैः सह योत्स्यमाना एवमवोचन् । किमिति—अस्याः पृथिव्याः सम्बन्धि । 'अना- मृतम्' आ समन्तान्मृतम्, सर्वदा नश्वरम् 'आमृतम्' तद्विपरीतम् 'अनामृतम्' सर्वदा बाधविधुरम् । ईदृग्विधं यद् 'देवयजनम्' देवयागाधिकरणभूतं स्थानम्, तत् 'चन्द्रमसि' चन्द्रमण्डलमध्ये निक्षिपाम । 'सः'—इति व्यत्ययेनैकवचनम्[3] । तेऽसुरा यदि 'नः' अस्मान् 'इतः' अस्मात् स्थानात्—जयेयुः तदा वय-

---

१—" दक्षिणा पितरः प्रतीचीं मनुष्या उदीचीं रुद्राः " इति तच्छेषः । २—" पुरा क्रूरस्येत्यनुमार्ष्टि "—( श्रौ० सू० २. १७३. ) इति द्रष्टव्यम् । ३—पा० सू० ३ । १ । ८५ ।

स प्रतिमार्ष्टि । पुरा क्रूरस्य विसृपो विरप्शिन्निति संग्रामो वै क्रूरꣳ संग्रामे हि क्रूरं क्रियते हतः पुरुषो हतोऽश्वः शेते पुरा ह्येतत्संग्रामान्न्यदधत तस्मादाह पुरा क्रूरस्य विसृपो विरप्शिन्नित्युदादाय पृथिवीं जीवदानुमित्युदादाय हि यदस्यै पृथिव्यै जीवमासीत्तच्चन्द्रमसि न्यदधत तस्मादाहोदादाय पृथिवीं जीवदानुमिति यामैरयꣳश्चन्द्रमसि स्वधाभिरिति यां चन्द्रमसि ब्रह्मणादधुरित्येवैतदाह तामु धीरासो ऽअनुदिश्य यजन्त ऽइत्येतेनो ह तामनुदिश्य यजन्तेऽपि ह वा ऽअस्यैतस्मिन्देवयजन ऽइष्टं भवति य ऽएवमेतद्वेद ॥ १९ ॥

---

स प्रतिमार्ष्टि–" पुरा क्रूरस्य विसृपो विरप्शिन् "–( १ अ० २८ मं० ) इति। संग्रामो वै क्रूरम् । संग्रामे हि क्रूरं क्रियते–हतः पुरुषः, हतोऽश्वः शेते । पुरा ह्येतत्संग्रामान्न्यदधत । तस्मादाह–पुरा क्रूरस्य विसृपो विरप्शिन्निति । " उदादाय पृथिवीं जीवदानुम् "–( १ अ० २८ मं० ) इति । उदादाय हि यदस्यै पृथिव्यै जीवमासीत्, तच्चन्द्रमसि न्यदधत । तस्मादाह–उदादाय पृथिवीं जीवदानुमिति । " यामैरयꣳश्चन्द्रमसि स्वधाभिः "–( १ अ० २८ मं० ) इति । यां चन्द्रमसि ब्रह्मणादधुरित्येवैतदाह–" तामु धीरासोऽअनुदिश्य यजन्ते "–( १ अ० २८ मं० ) इति । एतेनो ह तामनुदिश्य यजन्ते । अपि ह वा अस्यैतस्मिन् देवयजन इष्टं भवति–य एवमेतद्वेद ॥ १९ ॥

---

मेतत् स्थानं परित्यज्य ' तत एव ' चन्द्रमसि निहिते तस्मिन् स्थान एव, पुनर्यज्ञं कुर्वाणास्तेन यज्ञेनासुरान् पुनरभिभवेमेति । ईदृग्विधोपायजनितहर्षद्योतको ' हन्त '–शब्दः । एवं विचार्य तथैव देवैः कृतमिति दर्शयति–**स यदिति** । व्यत्ययेन पुँल्लिङ्गता । तद्यदस्याः पृथिव्याः सम्बन्धीत्यर्थः । ' न्यदधत ' निहितवन्तो निक्षिप्तवन्तः । ' तत् निहितं देवयजनम्, ' एतद् ' इदानीं चन्द्रमसि कृष्णवर्णं सत् कलङ्कात्मतया दृश्यते । उक्तेऽर्थे लोकप्रसिद्धिमुदाहरति–**तस्मादिति** । यस्मादेवं पृथिव्या अनामृतं देवयजनं चन्द्रमसि निक्षिप्तम्, तस्मादेव कारणादस्याः पृथिव्याः सम्बन्ध्युदीरितलक्षणं देवयजनं चन्द्रमसि विद्यत इत्यभिज्ञाः कथयन्तीत्यर्थः । यदीदृग्विधं देवयजनम्, एतस्मिन्नेव " पुरा क्रूरस्य "–इति मन्त्रेण प्रतिमार्जनं कुर्वतः ' अस्य ' यजमानस्यापि यज्ञेनेष्टं भवतीत्यर्थः ॥ १८ ॥

विहितं प्रतिमार्जनमनूद्य मन्त्रं विधत्ते–**स इति** । मन्त्रगतक्रूरपदस्यार्थमाह–**संग्रामो वै क्रूरमिति** । कथं संग्रामस्य क्रूरशब्दाभिधेयतेत्याशङ्क्योपपादयति–**संग्रामे हीति** । क्रूरकरणमपि कथं संग्रामे विद्यत इत्यत आह–**हतः पुरुष इति** । पुरुषाश्वादेश्चतुरङ्गबलस्य तत्र हननलक्षणात् क्रूरकरणात् तदधिकरणभूतः संग्रामोऽप्यत्र क्रूरशब्देन प्रतिपाद्यत इत्यर्थः । पदार्थमुक्त्वा वाक्यार्थमुपपादयति–**पुरा हीति**। ' क्रूरस्य ' संग्रामस्य ' विसृपः ' विसर्पणादागमनात्पुरेति मन्त्रवाक्यार्थ इत्यभिप्रायः । मन्त्रस्य द्वितीयं भागमनूद्य ' जीवदानु '–

---

१–पा० सू० ३ । १ । ८५ । तथा च कारिका–" सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च । व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन " इति ।

(दा) अथाह प्रोक्षणीरासादयेति । वज्रो वै स्फ्यो ब्राह्मणश्चेमं पुरा यज्ञमभ्यजूगुपतां वज्रो वा ऽआपस्तद्वज्रमेवैतदभिगुप्त्या ऽआसादयति स वा ऽउपर्युपर्येव प्रोक्षणीषु धार्यमाणास्वथ स्फ्यमुद्यच्छत्यथ यन्निहित ऽएव स्फ्ये प्रोक्षणीरासादयेद्वज्रौ ह समृच्छेयातां तथो ह वज्रौ न समृच्छेते तस्मादुपर्युपर्येव प्रोक्षणीषु धार्यमाणास्वथ स्फ्यमुद्यच्छति ॥ २० ॥

---

अथाह–" प्रोक्षणीरासादय "–( १ अ० २८ मं० ) इति । वज्रो वै स्फ्यः, ब्राह्मणश्च; इमं पुरा यज्ञमभ्यजूगुपताम् । वज्रो वा आपः । तद् वज्रमेवैतदभिगुप्त्यै–आसादयति । स वा उपर्युपर्येव प्रोक्षणीषु धार्यमाणास्वथ स्फ्यमुद्यच्छति । अथ यन्निहित एव स्फ्ये प्रोक्षणीरासादयेद्–वज्रौ ह समृच्छेयाताम् । तथो ह वज्रौ न समृच्छेते । तस्मादुपर्युपर्येव प्रोक्षणीषु धार्यमाणास्वथ स्फ्यमुद्यच्छति २०

---

पदस्य विवक्षितमर्थं दर्शयन् व्याचष्टे–**उदादायेति** । अस्याः पृथिव्याः ' जीवम् '–जीवनरूपं जीवात्मभूतं वा यदनामृतं देवयजनमासीत्, तदित्यर्थः । तथा च ' जीवदानुम् ' जीवनप्रदां जीवभूतां पृथिवीमिति मन्त्रपदाभिप्रायो वर्णितो भवति । वैयाकरणास्तु " जीवे रदानुक् " इति जीरदानुपदं व्युत्पादयन्ति । तथैव तैत्तिरीयकैराम्नातम् । मन्त्रस्य भागान्तरमनूद्य व्याचष्टे–**यामिति** । 'ब्रह्मणा' मन्त्रेण । एतच्च स्वधाभिरित्यस्य व्याख्यानम् । मन्त्रस्यान्तिमं भागमनूद्य व्याचष्टे–**तामिति** । ' एतेन ' इदानीन्तनेन देवयजनेन, ' ताम् ' चन्द्रमस्यवस्थिताम्, अनामृतां पृथिवीम् 'अनुदिश्य' तदेवमिति तादात्म्येनानुसन्धायेत्यर्थः । एतद्वेदनं प्रशंसति–**अपि हेति** ॥ १९॥

वेदिकरणानन्तरं कर्त्तव्यं विधत्ते–**अथेति** । प्रोक्षणीरासादयेत्यादिकं संप्रैषं ब्रूयादित्यर्थः । प्रोक्षत्याभिरिति ' प्रोक्षण्यः ' आपः; तासामासादनं यज्ञरक्षार्थमिति व्याचष्टे–**वज्रो वा** इति । स्फ्यस्तावद् वज्रः; तदंशपरिणामरूपत्वात् । तथैव प्रागाम्नातम्–" तस्य स्फ्यस्तृतीयं वा यावद् वा "–इति । ( का० १ प्र० २ ब्रा० २ कं० १ । ) ब्राह्मणोऽपि वज्रात्मकः; तद्वन्मन्त्रसामर्थ्येन रक्षसां हन्तृत्वात् । तौ खलु पुरेमं यज्ञम् ' अभ्यजूगुपताम् ' अभितोऽरक्षिष्टाम् । " गुपू रक्षणे " ( भ्वा० प० ३९९ ) इत्यस्माल्लुङि, " गुपेश्छन्दसि "–( पा० सू० ३. १. ५० ) इति चङि रूपम् । तत्र हि " आयादय आर्धधातुके वा " ( पा० सू० ३. १. ३१ )–इत्याय--प्रत्ययो विकल्प्यते । **वज्रो वा** इत्यादि । " तस्माद् येनैता यन्ति निम्नं कुर्वन्ति " इत्यपां वज्रत्वं प्रागेव ( का० १ प्र० १ ब्रा० १ कं० १७ । ) श्रुत्या प्रतिपादितम् । वज्ररूपाणां तासामासादनं यज्ञस्याभितो रक्षायै सम्पद्यत इत्यर्थः । प्रोक्षणीनामासादनसमये–आग्नीध्रकर्तृकं स्फ्यस्योद्यमनं विधत्ते–**स वा** इति । " उपर्यध्यधसः सामीप्ये "–( पा० सू० ८. १. ७ )–इत्युपरिशब्दस्य द्विर्वचनम् । ' उपर्युपरि ' समीपे–उपरि देशे । आसाद्यमानासु ' प्रोक्षणीषु ' ' धार्यमाणासु ' सतीषु ' अथ ' अनन्तर-

---

१–तदेवं जीवं ददातीति विग्रहोऽत्रास्य ब्राह्मणकारस्येष्टः । " आस्रेमाणंजीरदानुरिति वर्णलोपात् "–इति पा० सू० ६ । १ । ६६ । वा० । २–' जीवदानु ' इति क्वचित्पाठः । ३–अभिन्नो घर्मो जीरदानु ' इत्यादि तै० सं० १. ५. १०. ४ द्रष्टव्या । तत्र च भाष्येऽप्येवमाह सायणः–" जीरं जीवनं पुरोडाशद्वारेण यज्ञस्य ददातीति जीरदानुः " । इह तु जीवदानुशब्द एवमर्थकः । ४–' अध्याधिवेदिं प्रोक्षणीर्धारयति ' ' अन्योऽथ स्फ्यमुद्यम्याह–प्रोक्षणीरासादयेध्मं बर्हिरुपसादय स्रुचः संमृड्ढि पत्नीं सन्नह्याज्येनोदेहीति यदीच्छेत् ' ( श्रौ० सू० २. १७४, १७५ ) अग्रे च तत्रतत्कर्तृनिर्णयस्त्रिभिः सूत्रैः । ५–स्फ्यलक्षणं १९ तमे पृष्ठे प्रथमटिप्पण्यां द्रष्टव्यम् ।

**( त्यु ) अथैतां वाचं वदति । प्रोक्षणीरासादयेध्मं बर्हिरुपसादय स्रुचः सम्मृड्ढि पत्नीं सन्नह्याज्येनोदेहीति सम्प्रैष एवैष स यदि कामयेत ब्रूयादेतद्यद्यु कामयेतापि नाद्रियेत स्वयमु ह्येवैतद्वेदेदमतः कर्म कर्त्तव्यमिति ॥ २१ ॥**

---

अथैतां वाचं वदति–प्रोक्षणीरासादय, ( १ अ. २८ मं. ) इध्मं बर्हिरुपसादय, स्रुचः सम्मृड्ढि, पत्नीं सन्नह्याज्येनोदेहि; इति । संप्रैष एवैषः । स यदि कामयेत–ब्रूयादेतत् । यद्यु कामयेत–अपि नाद्रियेत । स्वयमु ह्येवैतद् वेद–इदमतः कर्म कर्त्तव्यमिति ॥ २१ ॥

---

आसादनसमकालमेववाग्नीध्रः स्फ्यम् ‘ उद्यच्छति ’ धारयति । विपक्षे बाधमाह–**अथ यदि**ति । उद्यमनमकृत्वा पूर्वं वेदिमध्ये निहितस्य स्फ्यस्योपरि सादने स्फ्याबूलक्षणौ ‘ वज्रौ ’ सङ्गतौ भवेताम् । तथा च वज्रद्वयसंगमाद् यजमानस्य बाधः स्यादित्याशयः । “ समो गम्यृच्छिभ्याम् ”–( पा० सू० १. ३. २९ )–इत्यात्मनेपदम् । अस्य दोषस्याभावं स्वपक्षे दर्शयति–**तथो हे**ति । ‘ तथो ’ तथा च स्फ्यस्य वेदेः सकाशादुद्यमने सतीत्यर्थः । ‘ तस्मादिति ’ प्रतिपादितार्थनिगमनम् ॥ २० ॥

प्रतीकग्रहणेन विहितं सम्प्रैषमन्त्रं साकल्येनानुवदति–**अथैतामि**ति । हे आग्नीध्र ! प्रोक्षणार्था अप आसादय । अग्निसमिन्धनार्थम् ‘ इध्मम् ’ वेदिस्तरणार्थम् ‘ बर्हिः ’ च, आहवनीयसमीपे–आसादय । जुह्वाद्याः ‘ स्रुचः ’ सम्मार्जनसंस्कारेण संस्कुरु । यजमानस्य या पत्नी, तां योक्त्रेण ‘ सन्नह्य ’ यत् प्रागग्नावधिश्रितमाज्यम्, तेन ‘ उदेहि ’ आगच्छेति संप्रैषमन्त्रार्थः । एवमेष मन्त्रः परप्रत्यायनार्थप्रयुक्तत्वात् सम्प्रैष एव; न तु मन्त्रान्तरवददृष्टैकप्रयोजन इत्याह–**सम्प्रैष** इति । **स यदी**त्यादि । प्रोक्षण्यासादनादिकमाग्नीध्रेण कारयितुं यदि कामयेत, तदा ‘ एतत् ’ सम्प्रैषवाक्यं ब्रूयात्; यदि च तथा न कामयेत,–स्वयमेव कुर्यामित्येवमेव काम्रयेत, तदा ‘ तत् ’ सम्प्रैषवचनं नाद्रियेतापि, तद्विषयमादरमपि न कुर्यात् । तत्रोपपत्तिमाह–**स्वयमि**ति । ‘ अतः ’ अस्मात् कर्मणोऽनन्तरमिदं कर्म कर्त्तव्यमिति ‘ हि ’ यस्मात् स्वयमेवैतद्वेद, तस्मात्परं प्रत्यज्ञातज्ञापनार्थः सम्प्रैषो निरर्थक इत्यर्थः ॥ २१ ॥

---

१–‘ विवक्षितं ’–इति पा० । २–यच्चात्र सायणाचार्यैः “ हे आग्नीध्र ! प्रोक्षणार्था अप आसादय ” “ प्रोक्षण्यासादनादिकमाग्नीध्रेण कारयितुं यदि कामयेत ” इत्येवं व्याख्याकरणेन प्रैषकरणमध्वर्योः प्रैषार्थकरणं चाग्नीधः प्रत्यपादि । तत्कातीयसूत्रभाष्यविसंवाद्येव । तथा च सूत्रं “ यथाप्रेषितमन्यः पराधिकारात् ”–“ स्वयं वाऽविरोधात् ”–“ सम्प्रैषावचनाच्च ” २ । ६ । २७, २८, २९ । अत्रायं भाष्यसारांशः–“ यथाप्रेषितमन्यः करोति । अन्यशब्दोऽग्नीद्विषयः पराधिकारात् । सामर्थ्यादेव च परप्राप्तौ परशब्दो जघन्यविषयः । परं हि जघन्यं निकृष्टमधिकृत्य प्रैषः प्रवर्तते । अपिच निकृष्टेनोत्कृष्टस्य प्रेषणं विरुध्यते । तस्मादध्वर्युः प्रैषेऽग्नीच्च प्रैषार्थे । एवं प्राप्ते उच्यते । स्वयं वाऽध्वर्युः प्रैषार्थङ्करोति सामर्थ्यादग्नीत्प्रेषयति । प्रैषार्थस्य प्राधान्यात् अन्तरंगं प्रैषार्थो बहिरंगम्प्रैषः । प्रैषार्थेन व्यवहितत्वात् । ततश्च यदन्तरङ्गं प्रधानं च तदध्वर्युः करोति । बहिरंगं गुणभूतं चाग्नीध्रादिः इति न्याय्यम् । ननु च विरुध्यत एतदुक्तम् । नहि निकृष्ट उत्कृष्टं प्रेषयितुमलमित्यत आह–अविरोधात् स्यादयं विरोधो यद्ययं प्रैषः स्यात् । अध्येषणा त्वेषा अग्नीदध्वर्युमधीच्छति । प्रेषणाध्येषणयोः को विशेष इति चेन्निकृष्टविषयम्प्रेषणमुत्कृष्टविषयमध्येषणमिति । न च संप्रैषवचनमस्ति । यथाऽन्यत्राग्नीदग्नीन्विहरेति । किं तर्ह्यध्येषणमिति । ततश्च न विरोधः । तस्मादध्वर्युः प्रैषार्थेऽग्नीच्च प्रैष इति । तथा च लिंगं “ प्रैषवचनं हि प्रकृत्याम्नायते ” “ स यदि कामयेत ब्रूयादेतद्यद्यु कामयेतापि नाद्रियेत–स्वयमु ह्येवैतद्वेदेदमतः कर्मेति ” । अध्वर्युम्प्रैषार्थस्य कर्तारं दर्शयति । सूत्रकारानुप्रवृत्तेश्चायमेवार्थोऽवसीयत इति कर्कोपाध्यायपादाः । विस्तरस्तु तद्भाष्य एव विलोकनीयः । इति ॥

( त्य ) अथोदञ्चꣳस्फ्यं प्रहरति । ( त्य ) अमुष्मै त्वा वज्रं प्रहरामीति यद्यभिचरेद्वज्रो वै स्फ्यस्तृणुते हैवैनेन ॥ २२ ॥

( न्ना ) अथ पाणी ऽअवनेनिक्ते । यद्वचस्यै क्रूरमभूत्तद्वचस्या ऽएतदहार्षीत्तस्मात्पाणी ऽअवनेनिक्ते ॥ २३ ॥

स ये हाग्र ऽईजिरे । ते ह स्मावमर्शं यजन्ते ते पापीयाꣳसं आसुरथ ये नेजिरे ते श्रेयाꣳस ऽआसुस्ततोऽश्रद्धा मनुष्यान्विवेद ये यजन्ते पापीयाꣳसस्ते भवन्ति यऽउ न यजन्ते श्रेयाꣳसस्ते भवन्तीति तत ऽइतो देवान्हविर्न जगामेतः प्रदानाद्धि देवा उपजीवन्ति ॥ २४ ॥

---

अथोदञ्चं स्फ्यं प्रहरति–अमुष्मै त्वा वज्रं प्रहरामीति–यद्यभिचरेद् । वज्रो वै स्फ्यः, तृणुते हैवैनेन ॥ २२ ॥

अथ पाणी अवनेनिक्ते । यद्वचस्यै क्रूरमभूत्–तद्वचस्या एतदहार्षीत् । तस्मात् पाणी अवनेनिक्ते ॥ २३ ॥

स ये हाग्र ईजिरे, ते ह स्मावमर्शं यजन्ते, ते पापीयांस आसुः । अथ ये नेजिरे ते श्रेयांस आसुः । ततोऽश्रद्धा मनुष्यान् विवेद–ये यजन्ते पापीयांसस्ते भवन्ति; य उ न यजन्ते श्रेयांसस्ते भवन्तीति । तत इतो देवान् हविर्न जगाम–इतः प्रदानाद्धि देवा उपजीवन्ति ॥ २४ ॥

---

" द्विषतो वधः "–इति मन्त्रेण स्फ्यस्य बहिर्वेद्युदङ् निरसनं विधत्ते–**अथेति** । अभिचरतो विशेषमाह–**अमुष्मा** इति । अस्मिन् मन्त्रे ' अमुष्मै ' इति शत्रोर्नाम चतुर्थ्या निर्दिशेदित्यर्थः ॥ २२ ॥

हस्तप्रक्षालनं विधत्ते–**अथेति** । ' अवनेनिक्ते ' शोधयति, प्रक्षालयेदित्यर्थः । " णिजिर् शौचपोषणयोः " ( जु० उ० ११ )–इति धातुः । " णिजां त्रयाणाम्"–( पा० सू० ७. ४. ७९ )–इत्यभ्यासस्य गुणः । अवनेजनस्य प्रयोजनमाह–**यद्धीति** । यत् ' खलु अस्याः ' वेदेः खननादिकं ' क्रूरम् ' कर्माऽभूत्, तदनेन स्फ्यस्योदङ्निरसनेन ' अस्याः ' वेदेः ' अहार्षीत् ' निरास्यत् । ' तस्मात् ' पाण्योः क्रूरकर्मसंश्लेषादवनेजनेन शुद्धिः कार्येत्यर्थः ॥ २३ ॥

श्रृतानां हविषां यागात् प्राग् निर्मिताया वेदेश्च बर्हिस्तरणात् पूर्वं स्पर्शनिषेधं विधित्सुस्तत्सिद्ध्यर्थमितिहासमाचष्टे–**स ये हेति** । पूर्ववद् बहुवचनस्थाने स इत्येकवचनम्, ते–' ये ' प्रसिद्धा यजमानाः ' अग्रे ' पुरा ह ' ईजिरे ' इष्टवन्तः, ' ते ' खलु यागसमये श्रृतानि हवींषि क्लृप्तां वेदिं च ' अवमर्शम् ' अवमृश्य संस्पृश्य यजन्ते; ' ते ' च तेनावमर्शजनितेन दोषेण ' पापीयांसः ' पापिष्ठा निकृष्टा बभूवुः । यागमकुर्वाणास्त्ववमर्शजनितदोषविरहात्–श्रेष्ठा एव बभूवुः । ' ततः ' अनन्तरमेवावमर्शनस्य दोषहेतुत्वमजानानान् ' मनुष्यान् ' ' अश्रद्धा ' यागविषयाऽरुचिः ' विवेद ' प्राप्नोति । तामेवाश्रद्धां दर्शयति–**य इति** । यागस्यानर्थहेतुतामज्ञासिषुरित्यर्थः । **तत** इत्यादि । ' ततः ' अश्रद्धाप्राप्त्यनन्तरं केनचिदपि यागस्याननुष्ठानात् ' इतः ' अस्माद् भूलोकाद् देवान् प्रति चरुपुरोडाशादिकम् ' हविः ' न जगाम । ननु मागमद्धविः; अमृतोपजीविनां देवाना-

---

१–"द्विषतो वध इति स्फ्यमुदञ्चं प्रहरति "–( श्रौ० सू०२.१८३ ) "द्विषतो वधोऽसि" ( १ अ० २८ मं० ) इति मन्त्रभागो ब्राह्मणे तु न व्याख्यातः । २–" अवनिज्य पाणी "–( श्रौ० सू० २. १८४ )। ३–८२ तमे पृष्ठे प्रथमा टिप्पणी द्रष्टव्या ।

ते ह देवाऽऊचुः । ( बृ ) बृहस्पतिमाङ्गिरसमुश्रद्धा वै मनुष्यानविदन्तेभ्यो विधेहि यज्ञमिति स हेत्योवाच बृहस्पतिराङ्गिरसः कथा नु यजध्व ऽइति ते होचुः किंकाम्या यजेमहि ये यजन्ते पापीयाᳫँसस्ते भवन्ति यऽउ न यजन्ते श्रेयाᳫँसस्ते भवन्तीति ॥ २५ ॥

स होवाच । बृहस्पतिराङ्गिरसो यद्वै शुश्रुम देवानां परिषूतं तदेष यज्ञो भवति यच्कृतानि हवीᳫँषि क्लृप्ता वेदिस्तेनावमर्शमचारिष्ट तस्मात्पापीया ᳫँ सोऽभूत तेनानवमर्शं यजध्वं तथा श्रेया ᳫँ सो भविष्यथेत्याक्रियत ऽइत्या बर्हिषस्तरणादिति बर्हिषा ह वै खल्वेषा शाम्यति स यदि पुरा बर्हिषस्तरणात्किञ्चिदापद्येत बर्हिरेव तत्स्तृणन्नुपास्येदथ यदा बर्हिस्तृणन्त्यपि पदाभितिष्ठन्ति स यो हैवं विद्वाननवमर्शं यजते श्रेयान्हैव भवति तस्मादनवमर्शमेव यजेत ॥ २६ ॥ ३ ॥

इति प्रथमकाण्डे द्वितीयप्रपाठके तृतीयं ब्राह्मणम् ( २. ९. )
समाप्तश्च द्वितीयोऽध्यायः ।

---

ते ह देवा ऊचुर्बृहस्पतिमाङ्गिरसम्—अश्रद्धा वै मनुष्यानविदत्, तेभ्यो विधेहि यज्ञमिति । स हेत्योवाच बृहस्पतिराङ्गिरसः—कथा न यजध्व इति । ते होचुः—किंकाम्या यजेमहि, ये यजन्ते पापीयांसस्ते भवन्ति, य उ न यजन्ते—श्रेयांसस्ते भवन्तीति ॥ २५ ॥

स होवाच बृहस्पतिराङ्गिरसः—यद्वै शुश्रुम देवानां परिषूतं तदेष यज्ञो भवति । यच्कृतानि हवींषि, क्लृप्ता वेदिस्तेनावमर्शमचारिष्ट तस्मात्पापीयांसोऽभूत । तेनानवमर्शं यजध्वम्, तथा श्रेयांसो भविष्यथेति । आक्रियत इति । आ बर्हिषस्तरणादिति । बर्हिषा ह वै खल्वेषा शाम्यति । स यदि पुरा बर्हिषस्तरणात् किञ्चिदापद्येत, बर्हिरेव तत् स्तृणन्नपास्येत् । अथ यदा बर्हिस्तृणन्ति—अपि पदाभितिष्ठन्ति । स यो हैवं विद्वाननवमर्शं यजते, श्रेयान् हैव भवति । तस्मादनवमर्शमेव यजेत ॥ २६ ॥

---

मनेन किं प्रयोजनमित्यत आह—इतः प्रदानाद्धीति । 'इतः' अस्माद् लोकात् प्रदीयमानं यद्धविः, तस्मादित्यर्थः । "कृत्यल्युटो बहुलम्"—( पा० सू ३. ३. ११३ )—इति प्रपूर्वाद् ददातेः कर्मणि ल्युट् ॥ २४ ॥

तत्रेतिहासमाह—ते हेति ! हविरागमनाभावेन निराहाराः 'ते' देवा अङ्गिरसः पुत्रं बृहस्पतिमुक्तवन्तः । किमिति, 'अश्रद्धा' यागविषया मनुष्यान् 'प्राप्नोति । तत्तान्निरस्य तेभ्यो 'यज्ञम्' 'विधेहि' यजध्वमिति विधिं कुर्या इत्यर्थः । स च बृहस्पतिरागत्योक्तवान्—हे मनुष्याः ! 'कथा' कथं—कस्माद्धेतोर्न यजध्वे—इति । "था हेतौ च च्छन्दसि"—( पा० सू० ५. ३. २६ )—इति था—प्रत्ययः । एवं पृष्टैस्तैरुक्तं यागाननुष्ठानकारणमुपन्यस्यति—किङ्काम्या—इति । किं कामनया ? कस्य फलस्येच्छयेत्यर्थः ॥ २५ ॥

एवं यागानुष्ठानत्यागकारणमुक्तवत्सु तेषु बृहस्पतिरयथानुष्ठानजनितमेव तत् पापीयस्त्वम्, न तु सम्यग्-

---

१–तदिति पदं क्वचिन्नास्ति ।

यागानुष्ठानजमिति बोधयंस्तेषां विपर्यस्ततां निरस्यति—**स होवाचेति** । **यद्वै शुश्रुमेति** । 'यत्' खलु वस्तु देवानामर्थम् 'परिभृतम्' परिगृहीतं शुश्रुम, 'तत्' एतदात्मक एष यज्ञः; तत्साध्यत्वात् । सामान्योक्तं विशिनष्टि—**यच्छृतानीति** । 'श्रृतानि' पक्वानि पुरोडाशादीनि 'हवींषि' पूर्वपरिग्रहादिभिः 'क्लृप्ता' निर्मिता वेदिरिति यदस्ति, एतत्साध्यो हि देवार्थो यज्ञः, 'तेन' एवंविधेन यज्ञेन हे मनुष्याः! यूयम् 'अवमर्शम्' अवमृश्य यागात् प्राक् पक्वानि हवींषि, बर्हिस्तरणात् पूर्वं वेदिं च संस्पृश्य, 'अचारिष्ट' आचरणं कृतवन्तः; यागसाधनस्य च मनुष्यसंस्पर्शो न युक्तः; अतस्तस्मादेवावमर्शनात् हे मनुष्याः! यूयं पापीयांसोऽभूत, न तु यागात् । अतोऽवमर्शं परित्यज्य तेन यज्ञेन यजध्वम् । तथा च श्रैष्ठ्यं वो भविष्यतीति बृहस्पतिना बोधितेऽवमर्शनपरित्यागस्यावधिं पृच्छति—**आ कियत** इति । कियत्कालपर्यन्तमेवावमर्शनपरित्याग इत्यर्थः । तस्योत्तरमाह—**बर्हिष** इति । बर्हिःस्तरणपर्यन्तम्, संस्कृतां वेदिं नँ स्पृशेदित्यर्थः । एतच्च हविषामप्युपलक्षणम्; अतः पक्वानि हवींष्यपि यागात् पूर्वं न स्प्रष्टव्यानीति द्रष्टव्यम् । अत एव सूत्रितं कात्यायनेन—"प्राक् स्तरणाद् वेदिं नावमृशेत्" "श्रृतानि च हवींष्याप्रचरणात्"—( श्रौ० सू० २. १७९–१८० ) इति । युक्तं चैतदित्याह—**बर्हिषेति** । बर्हिषः स्तरणात् पूर्वमशान्ता सती सा वेदिः स्तीर्यमाणेन 'बर्हिषा' खलु शान्ता भवति । अतोऽशान्तायाः स्पृष्टौ प्रागुक्तो दोषो युज्यत इत्यर्थः । **स यदीत्यादि** । बर्हिषः स्तरणात् पूर्वं यदि वेदिमध्ये 'किञ्चित्' तृणादिकमापद्येत, तदा तन्निरासार्थमपि न स्पृशेत् । किन्तु 'बर्हिः स्तृणन्' स्तरणसमये बर्हिषः स्तरणं कुर्वन्नेव 'तत्' तृणादिकं निरस्येत् । स्तरणप्रभृति वेदिस्पर्शो न दोषायेत्यभिप्रेत्याह—**अथेति** । 'यदा' यस्मिन् काले बर्हिर्मुष्टिं स्तृणन्त्यध्वर्यवः, तदानीम् 'पदा' पादेनाप्यभितिष्ठन्ति; अतस्तस्मिन् समये स्पर्शो न दुष्यतीति भावः । एवमितिहाससमुखेन प्रतिपादितमर्थमिदानीमप्यनुष्ठेयत्वेन विधत्ते—**स य** इति । 'एवं विद्वान्' उक्तमितिहासं जानन्नित्यर्थः ॥ २६ ॥ ३ ॥ ( २. ५. )

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ॥ पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये प्रथमकाण्डे द्वितीयाध्याये पञ्चमं ब्राह्मणं द्वितीयाध्यायश्च समाप्तः ॥ २ ॥

---

१–'विपर्ययप्रस्तताम्'–इति पा० । २–एवंविधस्यानेषु सविसर्गनिर्विसर्गपाठौ सर्वत्र ज्ञेयौ । इति । ३–'नावमृशेद्' इति पा० । ४–'बर्हिषः स्तरणसमये' इति पा० । ५–"आपन्नं तृणं निरस्येत्" इति । ( श्रौ० सू० २. १८२. ) ।

# अथ तृतीयाध्याये प्रथमं ब्राह्मणम् ।

स वै स्रुचः सम्मार्ष्टि । तद्यत्स्रुचः सम्मार्ष्टि यथा वै देवानां चरणं तद्वा ऽअनु मनुष्याणां तस्माद्यदा मनुष्याणां परिवेषणमुपक्लृप्तं भवति ॥ १ ॥

( त्यु ) अथ पात्राणि निर्णेनिजति । तैर्निर्णिज्य परिवेविषत्येवं वा ऽएष देवानां यज्ञो भवति यच्छृतानि हवीᳬषि क्लृप्ता वेदिस्तेषामेतान्येव पात्राणि यत्स्रुचः ॥ २ ॥

स यत्सम्मार्ष्टि । निर्णेनेक्त्येवैना ऽएतन्निर्णिक्ताभिः प्रचराणीति तद्वै द्वयेनैव देवेभ्यो निर्णेनिजत्येकेन मनुष्येभ्योऽद्भिश्च ब्रह्मणा च देवेभ्य ऽआपो हि कुशा ब्रह्म यजुरेकेनैव मनुष्येभ्योऽद्भिरेवैवम्वेतन्नाना भवति ॥ ३ ॥

---

अथ द्रव्यसंस्काराः ।

स वै स्रुचः सम्मार्ष्टि । तद्यत् स्रुचः सम्मार्ष्टि—यथा वै देवानां चरणं तद्वा अनु मनुष्याणाम् । तस्माद् यदा मनुष्याणां परिवेषणमुपक्लृप्तं भवति ॥ १ ॥

अथ पात्राणि निर्णेनिजाति । तैर्निर्णिज्य परिवेविषति । एवं वा एष देवानां यज्ञो भवति—यच्छृतानि हवींषि, क्लृप्ता वेदिः, तेषामेतान्येव पात्राणि—यत्स्रुचः ॥ २ ॥

स यत्सम्मार्ष्टि—निर्णेनेक्त्येवैना एतत्—निर्णिक्ताभिः प्रचराणीति । तद्वै द्वयेनैव देवेभ्यो निर्णे-

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ॥ निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

प्रोक्षणीरासादयेति प्रैषमन्त्रानुसारेण प्रथमं प्रोक्षणीनामासादनमुक्तम् । इध्माबर्हिषोरुपसादनमपि विशेषवक्तव्याभावात् सिद्धमित्यभिप्रेत्य क्रमप्राप्तं स्रुक्सम्मार्जनं विधत्ते—स वा इति । यथा वा इत्यादि । 'यत्' खलु देवानां वर्त्तनम्, तदनुसार्येव मनुष्यवर्त्तनम्; तत्कार्यत्वात् । मनुष्याणां च भोज्यान्नसूपशाकादौ पक्के सति भोजनस्थाने शोधिते, तत्परिवेषणसाधनानि दर्व्यादीनि पात्राणि—अद्भिः प्रक्षालनेन शोध्यन्ते । अतो मानुषव्यवहारनिदानत्वाद् देवव्यवहारस्य देवानामन्ने हविषि पक्के वेद्यां च संस्कृतायां तत्परिवेषणसाधनानां स्रुचां सम्मार्जनं युक्तमिति "यत् स्रुच"—इत्येवमन्तस्य वाक्यसन्दर्भस्याभिप्रेतोऽर्थः ॥ १ ॥

अथेति । निर्णेनिजतीति । "अदभ्यस्तात्" ( पा० सू० ७ । १ । ४ )—इति झस्यादादेशः । "परिवेविषति"—इत्यत्राप्येवम् ॥ २ ॥

ननु मानुषपात्रवद् देवपात्राणां स्रुचामप्यद्भिः प्रक्षालनेन भवितव्यम्, किमनेन सम्मार्जनेनेत्याह—स यदिति । 'निर्णिक्ताभिः' प्रक्षालिताभिः स्रुग्भिः प्रचराणीत्यनेनाभिप्रायेण सम्मार्जनेन प्रक्षालनमेव करोती-

---

१–"दधिपयआदिगणपाठनिपातनाद्दीर्घः" पा. सू. २ । ४ । १४ । २–"बाहुमात्र्यः स्रुचः पाणिमात्रपुष्करास्त्वग्बिला हंसमुखप्रसेका मूलदण्डाः" का. श्रौ. सू. १ । ३ । ३७ । स्रुचास्तिस्रः–जुहूपभृद्ध्रुवाः । तत्र "पालाशीजुहूः" इति । "आश्वत्थी उपभृत्" का. श्रौ. सू. १ । ३ । ३४ । ३५ । "ध्रुवा तु वैकंकती भवति" का. श्रौ. सू. १ । ३ । ३१ । इति । ३–'देवपात्राणां स्रुचां न मानुषपात्रवदद्भिः प्रक्षालनं केवलं करोति किन्तु सम्मार्जनेनैव सहितं प्रक्षालनमित्याह' इति क्वचित्पाठः ।

( त्यु ) अथ स्रुवमादत्ते । तं प्रतपति प्रत्युष्टᳪंरक्षः प्रत्युष्टा ऽअरातयो निष्टप्तᳪंरक्षो निष्टप्ता ऽअरातय ऽ इति वा ॥ ४ ॥

देवा ह वै यज्ञं तन्वानाः । ( स्ते ) तेऽसुररक्षसेभ्य ऽआसङ्गाद्बिभयाञ्चक्रुस्तद्यज्ञमुखादेवैतन्नाष्ट्रा रक्षाᳪंस्यतोपहन्ति ॥ ५ ॥ [ अर्धप्रपाठकः ]

स वा ऽइत्यग्रेरन्तरतः सम्मार्ष्टि । ( ष्टुं ) अनिशितोऽसि सपत्नक्षिदिति यथानुपरतो यजमानस्य सपत्नान्क्षिणुयादेवमेतदाह वाजिनन्त्वा वाजेध्यायै सम्मार्ज्मीति यज्ञियन्त्वा यज्ञाय सम्मार्ज्मीत्येवैतदाहैतेनैव सर्वाः स्रुचः सम्मार्ष्टि वाजिनीन्त्वेति स्रुचं तूष्णीं प्राशित्रहरणम् ॥ ६ ॥

---

निजति, एकेन मनुष्येभ्यः । अद्भिश्च ब्रह्मणा च देवेभ्यः । आपो हि कुशाः, ब्रह्म यजुः । एकेनैव मनुष्येभ्यः–अद्भिरेव । एवम्वेतन्नाना भवति ॥ ३ ॥

अथ स्रुवमादत्ते। तं प्रतपति-" प्रत्युष्टᳪं रक्षः प्रत्युष्टा अरातयो निष्टप्तᳪं रक्षो निष्टप्ता अरातयः "–( १ अ० २९ मं० ) इति वा ॥ ४ ॥

देवा ह वै यज्ञं तन्वानाः । तेऽसुररक्षसेभ्य आसङ्गाद् बिभयाञ्चक्रुः, तद्यज्ञमुखादेवैतन्नाष्ट्रा रक्षांस्यतोऽपहन्ति ॥ ५ ॥

स वा इत्यग्रैरन्तरतः सम्मार्ष्टि–"अनिशितोऽसि सपत्नक्षित "–(१ अ० २९ मं०) इति । यथाऽनुपरतो यजमानस्य सपत्नान् क्षिणुयाद्, एवमेतदाह–" वाजिनन्त्वा वाजेध्यायै

---

त्यर्थः । देवपात्रस्य शोधने मानुषपात्राद् विशेषमाह–तद्वा इति । द्वयेनैकेनेति सामान्योक्तं विवृणोति–अद्भिश्च ब्रह्मणा चेति । आपो हि कुशा इति । अपां यज्ञियांशपरिणामरूपा हि कुशाः; तथैव हि प्राग्गाम्नातम्–" ता उपर्युपर्यतिपुप्लुविरेऽत इमे दर्भास्ता हैता अनापूयिता आपः " –इति । अतः कुशैः सम्मार्जनाद् यज्ञियाभिरद्भिरेव प्रक्षालनं कृतवान् भवतीत्यर्थः । एवम्वेतादिति । द्वयेनैकेनेत्येवं साधनभेदकृतं दैवमानुषपात्रसंस्काराणां नानात्वं भवतीत्यर्थः ॥ ३ ॥

प्रथमं स्रुवस्य सम्मार्जनं विधातुं तस्यादानप्रतपने विधत्ते–अथेति ॥ ४ ॥

देवा इति । ' देवा ह वा–' इत्यादिकं समन्त्रकस्य प्रतपनस्य प्रयोजनप्रतिपादकम् । तच्च निर्वापप्रकरणे प्रागेव व्याख्यातम् ॥ ५ ॥

अथ तस्य प्रतप्तस्य स्रुवस्य समन्त्रकं सम्मार्जनं विधत्ते–स वा इतीति । स्रुवस्यान्तरतो बिलमध्ये वेदाग्रैरिति प्राक् सम्मार्ष्टि । सम्मार्जनप्रकाराभिनयार्थ ' इति '–शब्दः । स च प्रकारः कात्यायनेन सूत्रितः " वेदाग्रैरन्तरतः प्राक् सम्मार्ष्टि " ति ( श्रौ० सू० २ । १८८ ) । मन्त्रस्य प्रयोजनमाह–यथेति । यथा खल्वयं स्रुवः ' अनुपरतः ' उपरतिमप्राप्तः सन् यजमानस्य शत्रून् ' क्षिणुयात् ' हिंस्यात् । " रि क्षि–

---

१–इहैव ब्राह्मणे पूर्वं १ का. १ प्र. ३ ब्रा. ५ कंडिकाद्वयं । इति । २–" खादिरः स्रुवः " इति–" अरत्निमात्रः स्रुवोऽङ्गुष्ठपर्ववृत्तपुष्करः " इति च का. श्रौ. सू. १ । ३ । ३२ । ३८ । ३–" स्रुवं प्रतप्य पूर्ववत् "–श्रौ० सू० २ । १८८ । ४–इहैव काण्डे पूर्वं १ प्र. २ ब्रा० ३ कं. इत्यत्र ।

**स वा ऽइत्यग्रैरन्तरतः सम्मार्ष्टीति। मूलैर्बाह्यत ऽइतीव वा ऽअयं प्राण ऽइतीवोदानः प्राणोदानावेवैतद्दधाति तस्मादितीवेमानि लोमानीतीवेमानि॥७॥**

---

**सम्मार्ज्मि** "–( १ अ० २९ मं० ) इति। यज्ञियन्त्वा यज्ञाय सम्माज्र्मीत्येवैतदाह। एतेनैव सर्वाः स्रुचः सम्मार्ष्टि। वाजिनीन्त्वेति स्रुचम्। तूष्णीं प्राशित्रहरणम्॥ ६॥

स वा इत्यग्रैरन्तरतः सम्मार्ष्टि, इति मूलैर्बाह्यतः। इतीव वा अयं प्राणः, इतीवोदानः। प्राणोदानावेवैतद्दधाति। तस्मादितीवेमानि लोमानि, इतीवेमानि॥ ७॥

---

हिंसायाम्"–( स्वा० प० ३० ) इति धातुः। एवमेवैतन्मन्त्रवाक्यमाह–**सपत्नानिति**। सपत्नान् क्षिणोतीति 'सपत्नक्षित्'–इति मन्त्रपदस्याभिप्राय इति भावः। मन्त्रशेषमनूद्य व्याचष्टे–**वाजिनं त्वेति**। 'वाजः' हविर्लक्षणमन्नम्, तदेव यज्ञस्तदर्हत्वेन; तद्वन्तं त्वां 'वाजेध्यायै' वाजस्यान्नस्येन्धनं दीपनम्, भूयःकरणमनेन क्रियत इति 'वाजेध्या' यज्ञः तस्यै सम्माज्र्मीति मन्त्रशेषस्यार्थः। तदेतदाह–**यज्ञियन्त्वेति**। यज्ञमर्हतीति यज्ञियः। "यज्ञर्त्विग्भ्याम्"–( पा० सू० ५। १। ७१ )–इति घः। जुह्वादीनां स्रुचां सम्मार्जनं विधत्ते–**एतेनैवेति**। अनिशितोऽसीति योऽयं स्रुक्सम्मार्जनमन्त्रः, 'एतेनैव' अनिशितासीति स्त्रीलिङ्गत्वेन विपरिणमितेनेत्यर्थः। अत एव सूत्रकृतोक्तम्–"अनिशितेति स्रुचः"–( श्रौ० सू० २। १९० ) इति। स्रुचः स्त्रीत्वेन तत्प्रकाशनाय वाजिनं त्वेत्यस्यापि पुँल्लिङ्गशब्दस्य स्थाने वाजिनीं त्वेति स्त्रीलिङ्गतया प्रयोक्तव्यमित्याह–**वाजिनीं त्वेति**। सम्मार्जनक्रियापेक्षया 'स्रुचम्' इति द्वितीया। जुह्वादिवत् समन्त्रकसंमार्जनस्य प्रसक्तस्य निवृत्त्यर्थमाह–**तूष्णीमिति**। प्राशित्राख्यो यो भागः, स ह्रियत अनेनेति 'प्राशित्रहरणं' गोकर्णाकृति पात्रम्, तत् तूष्णीं सम्मार्ष्टीत्यर्थः। तदुक्तं कात्यायनेनापि–"तूष्णीं प्राशित्रहरणम्"–( श्रौ० सू० २। १९१ ) इति। आपस्तम्बस्तु समन्त्रकपक्षमप्यसूत्रयत्–"प्राशित्रहरणं तूष्णीं वा"–( आप० श्रौ० सू० २। ४। ८। ) इति॥ ६॥

स्रुचां सम्मार्जनप्रकारमभिनयेन दर्शयति–**स वा** इति। अनेन प्रकारेण 'प्रागपवर्गं' वेदाग्रैर्बिलमध्ये सम्मार्जनम्। 'इति' अनेन प्रकारेण 'प्रत्यपवर्गम्' आत्माभिमुखम् 'बाह्यतः' पृष्ठभागे वेदाग्रमूलैः सम्मार्जनं कार्यमित्यर्थः। तथैव सूत्रितम्–"वेदाग्रैरन्तरतः प्राक् सम्मार्ष्ट्यनिशित इति विपर्यस्य बर्हिर्मूलैः" इति ( श्रौ० सू० २। १८८ )। यदेतदन्तरतो बाह्यतश्च द्विविधं सम्मार्जनम्, तत् प्राणोदानात्मना प्रशंसति–**इतीवेति**। 'इति'–शब्दोऽत्राप्यभिनयार्थः। 'अयम्' प्राणवृत्त्यात्मको वायुः, 'इतीव' अनेनैव खलु प्रकारेण प्राक् सञ्चरति। उदानशब्दस्यापानवृत्त्यभिधायकत्वं प्रैाक् प्रतिपादितम्। अपानवृत्त्यात्मको वायुः 'इतीव' अनेन प्रकारेण प्रत्यक् सञ्चरति। अतः प्राक्–प्रत्यक्–सम्मार्जनाभ्यां स्रुक्षु प्राणापानावेव स्थापयतीत्यर्थः। **तस्मादित्यादि**। यस्मात् स्रुचामुपरिभागस्य सम्माजन प्राचीनम्, पृष्ठभागस्य च प्रतीचीनम्, 'तस्मात्' अरत्नेरुपरिभागस्य लोमानि 'इतीव' एवमेव प्राचीनानि भवन्ति। पृष्ठभागस्य च लोमानि 'इतीव' इत्थं प्रतीचीनानि भवन्तीत्यर्थः। अयमर्थस्तैत्तिरीयके विस्पष्टमाम्नायते–"तस्मादरत्नौ प्राञ्च्युपरिष्टाल्लोमानि प्रत्यञ्च्यधस्तात्"–( तै० ब्रा० ३। ३। १। ४ ) इति॥ ७॥

---

१–"प्राशित्रहरणं वारणं प्रादेशमात्रम् आदर्शाकृति ( वर्तुलं ) चमसाकृति ( चतुरस्रं ) वा भवति" का. श्रौ. सू. १। ३। ३६। ४०। ४१। २–तन्मन्त्रश्च तत्रैव–"रूपं वर्णम्पशूनां मा निर्मृक्षं वाजि सपत्नसाहं सम्मार्ज्मि" इति। ३–इहैव पूर्वं १ कां. १ प्र. ५ ब्रा. १९ कं. भाष्ये।

स वै सम्मृज्य सम्मृज्य प्रतप्य प्रतप्य प्रयच्छति। यथावमर्शं निर्णिज्यानवमर्शमुत्तमं परिक्षालयेदेवं तत्तस्मात्प्रतप्य प्रतप्य प्रयच्छति ॥ ८ ॥

स वै स्रुवमेवाग्रे सम्मार्ष्टि। (पूर्व) अथेतराः स्रुचो योषा वै स्रुग्वृषा स्रुवस्तस्माद्यद्यपि बह्व्य इव स्त्रियः सार्द्धं यन्ति य ऽएव तास्वपि कुमारक ऽइव पुमान्भवति स ऽएव तत्र प्रथम ऽएत्यनूच्य ऽइतरास्तस्मात्स्रुवमेवाग्रे सम्मार्ष्ट्यथेतराः स्रुचः ॥ ९ ॥

स वै तथैव सम्मृज्यात्। (ह्रु) यथाग्निं नाभिव्युक्षेद्यथा यस्मा ऽअशनमाहरिष्यन्त्स्यात्तं पात्रनिर्णेजनेनाभिव्युक्षेदेवं तत्तस्मादु तथैव सम्मृज्याद्यथाग्निं नाभिव्युक्षेत्प्राङिवैवोत्क्रम्य ॥ १० ॥

---

स वै सम्मृज्य-सम्मृज्य, प्रतप्य-प्रतप्य प्रयच्छति। यथावमर्शं निर्णिज्यानवमर्शमुत्तमं परिक्षालयेत्-एवं तत्। तस्मात् प्रतप्य-प्रतप्य प्रयच्छति ॥ ८ ॥

स वै स्रुवमेवाग्रे सम्मार्ष्टि, अथेतराः स्रुचः। योषा वै स्रुग्, वृषा स्रुवः--तस्मात्। यद्यपि बह्व्य इव स्त्रियः सार्द्धं यन्ति, य एव तास्वपि कुमारक इव पुमान् भवति-स एव तत्र प्रथम एति, अनूच्य इतराः। तस्मात् स्रुवमेवाग्रे सम्मार्ष्टि, अथेतराः स्रुचः ॥ ९ ॥

स वै तथैव सम्मृज्याद् यथाग्निं नाभिव्युक्षेत्। यथा यस्मा अशनमाहरिष्यन्त्स्यात्, तं पात्रनिर्णेजनेनाभिव्युक्षेत्-एवं तत्। तस्मादु तथैव सम्मृज्याद्-यथाग्निं नाभिव्युक्षेत्। प्राङिवैवोत्क्रम्य ॥ १० ॥

---

संमार्जनानन्तरं प्रतपनपुरस्सरं प्रदानं विधत्ते-स वा इति। 'सः' खल्वाग्नीध्रस्तत्तत्सम्मार्गानन्तरमेव सम्मृष्टं पात्रं पुनरग्नौ प्रतप्याध्वर्यवे दद्यादित्यर्थः। तदेतत्पुनः प्रतपनं लौकिकदृष्टान्तेनोपपादयति-यथेति। यथा खलु कांस्यादिकं लौकिकं पात्रमवमृश्यावमृश्य निर्णिज्य प्रक्षाल्य, 'उत्तमम्' चरमं क्रियाविशेषणमेतत्। अन्ततः 'अनवमर्शम्' अवमर्शनमकृत्वैव केवलमुदकेनैव 'परितः' अन्तरतो बाह्यतश्च सर्वतः क्षालयेत्, एवं तत्सम्मार्जनानन्तरं पुनः प्रतपनमित्यर्थः ॥ ८ ॥

स्रुवसम्मार्जनस्य प्राथम्यं स्रुक्सम्मार्जनस्य तदानन्तर्यञ्च प्रागुक्तं लौकिकदृष्टान्तेन प्रशंसितुमनुवदति-स वा इति। योषा वा इत्यादि। स्रुक् स्त्रीलिङ्गत्वाद् योषित्; स्रुवस्तु पुँल्लिङ्गत्वात् सेचनसमर्थः पुमान्। यस्मादेवम् 'वृष्णः' स्रुवस्य सम्मार्जने प्राथम्यम्, 'तस्मात्' एव कारणात् बह्व्योऽपि स्त्रियः सम्भूय गच्छन्त्यो बालमपि पुमांसं पुरस्कृत्य तस्य पश्चात् प्रयन्ति। तस्माद् दृष्टानुसारेण स्रुवस्य प्रथमं सम्मार्जनं युक्तम्, पश्चाच्च स्रुचामित्येतद् युक्तमित्यर्थः ॥ ९ ॥

सम्मार्जने धर्मविशेषमाह-स वा इति। 'यथा' येन प्रकारेण सम्मार्जनसमये 'अग्निमभि न व्युक्षेत्' अग्नेरुपरि सम्मार्जनसाधनं कुशोदकादिकं न पतेत्, तथैव सम्मृज्यात्। तदेतल्लौकिकदृष्टान्तेनोपपादयति-

---

१-"प्रतप्य प्रतप्य प्रयच्छति"-इति श्रौ० सू० २।१८९। २-'सम्मार्जनानन्तर'-इति पा.। ३-"पुनः पुनः" इति क्वचित् पा.। ४-'संमार्जनमुक्तम्' इति पा.।

तद्धैके । स्रुक्सम्मार्जनान्यग्नावभ्यादधति व्वेदस्याहाभूवन्त्स्रुचऽएभिः सममार्ज्जिषुरिदं वै किञ्चिद्यज्ञस्य नेदिदं बहिर्द्धा यज्ञाद्भवदिति तदु तथा न कुर्याद्यथा यस्मा ऽअशनमाहरेत्तं पात्रनिर्णेजनं पाययेदेवं तत्तस्मादु परास्येदेवैतानि ॥ ११ ॥

(न्यु) अथ पत्नीᳪ सन्नह्यति । जघनार्द्धो वा ऽएष यज्ञस्य यत्पत्नी प्राङ्मे यज्ञस्तायमानो यादिति युनक्त्येवैनामेतद्युक्ता मे यज्ञमन्वासाता ऽइति ॥ १२ ॥

---

तद्धैके–स्रुक्सम्मार्जनान्यग्नावभ्यादधति । वेदस्याहाभूवन्–स्रुचः । एभिः सममार्जिषुः । इदं वै किञ्चिद् यज्ञस्य । नेदिदं बहिर्द्धा यज्ञाद् भवदिति । तदु तथा न कुर्यात् । यथा यस्मा अशनमाहरेत्–तं पात्रनिर्णेजनं पाययेद्–एवं तत् । तस्मादु परास्येदेवैतानि ॥ ११ ॥

अथ पत्नीं सन्नह्यति । जघनार्द्धो वा एष यज्ञस्य–यत्पत्नी । प्राङ् मे यज्ञस्तायमानो यादिति । युनक्त्येवैनामेतत्–युक्ता मे यज्ञमन्वासाता इति ॥ १२ ॥

---

यथेति–यस्य खलु भोजनार्थमन्नमाहरति, तं भुक्त्यर्थपात्रप्रक्षालनोदकेन यथाभ्युक्षेत्, एवमेव तदग्नेरभ्युक्षणम् । अग्नेर्होमार्थं हि हविः; स्रुक्स्रुवादीनि च पात्राणि तत्साधनानि; अतस्तत्प्रक्षालनोदकेन तस्याभ्युक्षणं तादृगेव स्यात् । न हि लोके पात्रप्रक्षालनोदकेन भोक्ताऽभ्युक्ष्यते ; अतः पात्रसम्मार्जनोदकेनाग्नेरभ्युक्षणं न कार्यमित्यर्थः । कथं तर्हि सम्मार्जनं कार्यमित्याह–प्राङिति । प्राङ्मुख एवाग्नेः सकाशादुत्क्रम्य गत्वा–अग्नेरुपरि यथा न पतति तथा सम्मृजीतेत्यर्थः ॥ १० ॥

स्रुक्सम्मार्जनानां वेदाग्राणामाहवनीये प्रहरणं शाखान्तराभिमतमुपन्यस्यति–तद्धैक इति । स्रुचः सम्मृज्यन्ते एभिरिति 'स्रुक्सम्मार्जनानि' वेदाग्राण्यग्नावभ्यादधति । दधतामभिप्रायमाह–वेदस्येति । यज्ञसाधनो हि 'वेदः' वेदस्य सम्मार्जनादावुपयुक्तत्वात् । एतानि च वेदाग्राणि तस्यावयवा अभूवन् । 'अह'–इत्यवधारणे । न केवलं वेदावयवत्वादेव वेदाग्राणां यज्ञियत्वम्, अपि तु–एभिर्वेदाग्रैः स्रुचः 'सममार्जिषुः' सम्मृष्टवन्त ऋत्विजः, अत इदं वेदाग्रजातं यज्ञसम्बन्धि किञ्चिदङ्गम् । यदि 'चेत्' अग्नेरन्यत्र निरस्येत्, तदा तद्यज्ञाद् 'बहिर्धा' बाह्यतो भवेत्; अग्नौ प्रक्षिप्तं हि यज्ञेऽन्तर्भवति. नैवेत्थं भवेदित्यनेनाभिप्रायेणाग्नौ प्रक्षिपन्तीत्यर्थः । स्वमतं दर्शयितुमेकीयं मतं निषेधति–तदु तथेति । एतल्लौकिकदृष्टान्तेनोपपादयति–यथेति । यथा खलु भोजनायोपविष्टं भोक्तारं ततः प्रागेव पात्रप्रक्षालनोदकं पाययेत्, एवमेव तद्धोमात् प्राक् सम्मार्जनतृणानामग्नौ प्रहरणम्; अतो नैतद्युक्तमित्यर्थः । स्वमतमुपन्यस्यति–तस्मादिति । यस्मादेकीयमते–उक्तरीत्या दोषः, 'तस्मात्' एतानि सम्मार्जनानि तृणानि–उत्करे प्रक्षिपेदित्यर्थः । पक्षद्वयमपि कात्यायनः सूत्रयामास–" सम्मार्जनान्यपास्यति " । " आहवनीये प्रासनमेके "–इति ( श्रौ० सू० २ । १९२–१९३ ) ॥ ११ ॥

प्रैषक्रमप्राप्तं पत्नीसन्नहनं विधत्ते–अथेति । जघनार्द्धो वा इत्यादि । गार्हपत्यानुष्ठेयेषु पत्नीसंयाजादिषु पत्न्याः सम्बन्धात् सा यज्ञस्यापरार्धः । किं ततः ? इत्याह–प्रागिति । मदीयो यज्ञः प्रागपवर्गम् 'तायमानः'

---

१–'व्युदेत्' इति क्वचित् । २–" प्राङुत्क्रम्य "–इति ( श्रौ० सू० २. १८८ ) । ३–" पत्नीं संनह्यति प्रत्यग् दक्षिणत उपविष्टां गार्हपत्यस्य जघनोक्रेण त्रिवृतापरिहरत्यधिवासोऽदित्यैरास्नेति " । इति–( श्रौ० सू० २ । १९४ ) । ४–'गार्हपत्येऽनुष्ठेयेषु' इति क्वचित् पा. ।

योक्त्रेण सन्नह्यति । योक्त्रेण हि योग्यं युञ्जन्त्यस्ति वै पत्न्या ऽअमेध्यं यदवाचीनं नाभेरथैतदाज्यमवेक्षिष्यमाणा भवति तदेवास्या ऽएतद्योक्त्रेणान्तर्दधात्यथ मेध्येनैवोत्तरार्द्धेनाज्यमवेक्षते तस्मात्पत्नी ᳪ सन्नह्यति ॥१३॥

स वा ऽअभिवासः सन्नह्यति । (त्यो) ओषधयो वै वासो वरुण्या रज्जुस्तदोषधीरेवैतदन्तर्दधाति तथो हैनामेषा वरुण्या रज्जुर्न हिनस्ति तस्मादभिवासः सन्नह्यति ॥ १४ ॥

स सन्नह्यति । (त्य) अदित्यै रास्नासीतीयं वै पृथिव्यदितिः सेयं देवानां पत्न्येषा वा ऽएतस्य पत्नी भवति तदस्या ऽ एतद्रास्नामेव करोति न रज्जु ᳪ ह्विरो वै रास्ना तामेवास्या ऽ एतत्करोति ॥ १५ ॥

---

योक्त्रेण सन्नह्यति । योक्त्रेण हि योग्यं युञ्जन्ति । अस्ति वै पत्न्या अमेध्यं यदवाचीनं नाभेः । अथैतदाज्यमवेक्षिष्यमाणा भवति । तदेवास्या एतद्योक्त्रेणान्तर्दधाति, अथ मेध्येनैवोत्तरार्द्धेनाज्यमवेक्षते । तस्मात् पत्नीं सन्नह्यति ॥ १३ ॥

स वा अभिवासः सन्नह्यति । ओषधयो वै वासः, वरुण्या रज्जुः । तदोषधीरेवैतदन्तर्दधाति । तथो हैनामेषा वरुण्या रज्जुर्न हिनस्ति । तस्मादभिवासः सन्नह्यति ॥ १४ ॥

स सन्नहति—"अदित्यै रास्नासि" (१ अ० ३० म०) इति । इयं वै पृथिवी—अदितिः, सेयं

---

विस्तार्यमाणो 'यात्' गच्छेत् । अतः परार्द्धमारभ्य यज्ञो विस्तारयितव्य इत्यनेनाभिप्रायेण पत्नी सन्नह्येदित्यर्थः । यदेतत्सन्नहनं तदेतदश्वे—अश्वादीनामिव पत्न्या यज्ञेन सार्द्धं योजनं बन्धनमित्याह—युनक्तीति । युक्ता म इति । योक्तुरभिप्रायाविष्करणम् । युक्ता च सा मदीयं यज्ञमनुलक्ष्य यज्ञसमाप्तिपर्यन्तम् 'आसाते' आसीत, न ह्ययुक्तोऽश्वादी रथे नियमेनास्त इत्यर्थः ॥ १२ ॥

एवं विहितं सन्नहनं प्रशस्य तत्साधनं विधत्ते—योक्त्रेणेति । रथाद्यवयवस्य युगस्य धुरि बलीवर्दादियोजनार्थं दाम 'योक्त्रम्' तेन सन्नह्येदित्यर्थः । लौकिकोदाहरणेनैतद् द्रढयति—योक्त्रेणेति । 'योग्यम्' योजनीयमनडुदश्वादिकमित्यर्थः । तच्च सन्नहनं नाभिप्रदेशे कार्यमित्यभिप्रेत्याह—अस्ति वा इति । 'अयज्ञियस्य' पत्न्या नाभेरधोभागस्य, 'यज्ञियस्य' उपरिभागस्य च मध्ये सन्नहनेन साङ्कर्यनिवारणाद् यज्ञियेनैवोपरिभागेन विधास्यमानमाज्यावेक्षणं साधुकृतं भविष्यतीत्यर्थः ॥ १३ ॥

परिहितस्य वासस उपरि तत्सन्नहनं कार्यमिति विधत्ते—स वा इति । योक्त्र—पत्नीशरीरयोर्वाससा व्यवधानं प्रशंसति—ओषधय इति । ओषधिकार्यत्वाद् वाससस्तत्तादात्म्यव्यपदेशः । वरुण्येति । वरुणसम्बन्धिनी, वरुणपाशात्मिका रज्जुः । स च वरुणपाशो निग्रहहेतुरिति तस्य व्यवधानेन केनचिद् भवितव्यमिति वासोलक्षणौषधिभिरन्तर्धानं युक्तमित्यर्थः । तस्य प्रयोजनमाह—तथो हेति ॥ १४ ॥

विहितं सन्नहनमनूद्य मन्त्रं विधत्ते—स इति । मन्त्रं व्याचष्टे—इयं वा इति । 'अदितिः' अखण्डना या देवानां पत्नी या पृथिवी 'सा' चैषापि 'योषित्' यजमानस्य पत्नी भवति । 'तत्' तस्मात् पृथिव्या

---

१–अग्रेऽष्टादश कण्डिकायाम् । २–" मुञ्जयोक्त्रेण त्रिवृता परिहरत्यभिवासोऽदित्यै रास्नेति " (श्रौ० सू० २. १९४) । ३–'सैवैषापि' इति क्वचित् पा. ।

स वै नु ग्रन्थिं कुर्यात् । ( द्र ) व्वरुण्यो वै ग्रन्थिर्व्वरुणो ह पत्नीं गृह्णीयाद्यद्ग्रन्थिं कुर्यात्तस्मान्न ग्रन्थिं करोति ॥ १६ ॥

( त्यू ) ऊर्ध्वमेवोद्गूहति । व्विष्णोर्व्वेष्योऽसीति सा वै नु पश्चात्प्राची देवानां यज्ञमन्वासीतेयं वै पृथिव्यदितिः सेयं देवानां पत्नी सा पश्चात्प्राची देवानां यज्ञमन्वास्ते तद्वेमामभ्यारोहेत्सा पत्नी क्षिप्रेऽमुं लोकमियात्तथो ह पत्नी ज्योग्जीवति तदस्या ऽएवैतन्निह्नुते तथो हैनामियं नु हिनस्ति तस्मादु दक्षिणत ऽइवैवान्वासीत ॥ १७ ॥

---

देवानां पत्नी । एषा वा एतस्य पत्नी भवति । तदस्या एतद्रास्नामेव करोति न रज्जुम् । हिरो वै रास्ना, तामेवास्या एतत्करोति ॥ १५ ॥

स वै न ग्रन्थिं कुर्यात् । वरुण्यो वै ग्रन्थिः । वरुणो ह पत्नीं गृह्णीयात्-यद् ग्रन्थिं कुर्यात् । तस्मान्न ग्रन्थिं करोति ॥ १६ ॥

ऊर्द्ध्वमेवोद्गूहति-"विष्णोर्वेष्योऽसि" ( १ अ. ३० मं. ) इति । सा वै न पश्चात् प्राची देवानां यज्ञमन्वासीत । इयं वै पृथिवी-अदितिः, सेयं देवानां पत्नी । सा पश्चात् प्राची देवानां यज्ञमन्वास्ते, तद्वेमामभ्यारोहेत् । सा पत्नी क्षिप्रेऽमुं लोकमियात् । तथो ह पत्नी ज्योग् जीवति, तदस्या एवैतन्निह्नुते । तथो हैनामियं न हिनस्ति । तस्मादु दक्षिणत इवैवान्वासीत ॥ १७ ॥

---

इवास्याः 'रास्नाम्' रशनामलङ्कारार्थां मणिमुक्तादिखचितां मेखलामेव बध्नाति; नरज्जुमिति । मन्त्रप्रयोगाभिप्रायः उक्तार्थपरतां 'रास्ना'-शब्दस्य दर्शयति **हिर** इति । 'हिर'-शब्दो मेखलापर्यायः ॥ १५ ॥

योक्त्रस्य सन्नहनसमये ग्रन्थिकरणं निषेधति-**स वा** इति । विपक्षे बाधमाह-**वरुण्य** इति । वरुणपाशो हि ग्रन्थिमान्, अतो ग्रन्थिरपि वरुणसम्बन्धी; तत्करणे वरुणः पत्नीं गृह्णीयाद् बाधेतेत्यर्थः ॥ १६ ॥

ननु ग्रन्थिकरणाभावे योक्त्रं विस्रस्तं स्यादित्यत आह-**ऊर्द्ध्वमिति** । योक्त्रस्य मूलाग्रे संयोज्यैकीकृत्य 'ऊर्द्ध्वमुद्गूहेत्' उपरिष्टाल्लम्बयेदित्यर्थः । तथा चोक्तं सूत्रकृता-" दक्षिणं पाशमुत्तरे प्रतिमुच्योर्द्ध्वमुद्गूहति "-( श्रौ० सू० २ । १९५ ) इति । सन्नहनसमये गार्हपत्यस्य नैर्ऋत्यां दिशि पत्न्या अन्वासनं विधित्सुः साक्षात् पश्चात् प्राङ्मुखोपवेशनं निषेधति-**सा वा** इति । तदुपपादयति-**इयं वा** इति । 'इयम्' हि पृथिवी देवानां पत्नी; सा गार्हपत्यस्य पश्चात् प्राङ्मुखी सर्वदोपविशति; अतः तत्रान्वासीना[3] इमामेव देवपत्नीमभ्यारोहेत्[4] । तथा च यो बाधस्तं दर्शयति-**सेति** । 'क्षिप्रे' अल्पकाल इत्यर्थः । **तथो हेति** । पश्चादुपवेशनपरित्यागे सति-उक्तदोषाभावाच्चिरकालं पत्नी जीवेत् । नेन पश्चादासनपरित्यागेन 'अस्याः' देवपत्न्याः

---

१-"विष्णोर्वेष्य" इत्यत्र "विष्लृव्याप्तौ" ( जुहो. प.१३ ) इति धातोः " पा-नी-विषिभ्यः पः" ( ३१० )। इत्यौणादिकसूत्रेण पप्रत्यये वेष्प इति रूपं निष्पद्यते । अत्र वेष्य इति पाठकल्पनम् एतदौणादिकसूत्राज्ञानमूलम् । पवर्गीयघटितपाठस्य आसेतुहिमाचलं संप्रदायसिद्धत्वात् । अन्तस्थघटितलेखस्य लेखकप्रमादेन भाष्यादिपुस्तकेषु च संजातत्वात् । एतद्बृहदुत्पादनं च लखनऊमुद्रितभाष्ये स्पष्टमुपलभ्यते इति ततो निरसनीयः संशयः संदिहानैरिति कातीयश्रौतसूत्रस्य सरलाख्यवृत्त्यां पं. वेदाचार्यविद्याधरमिश्राः । २-" न ग्रन्थिं करोति " श्रौ० सू० २. १९६ । ३-" तत्रासीना " इति पा. । ४-" भ्यारोहेत " इति पा. ।

( ता ) अथाज्यमुवेक्षते । योषा वै पत्नी रेत ऽआज्यं मिथुनमेवैतत्प्रजननं क्रियते तस्मादाज्यमुवेक्षते ॥ १८ ॥

सावेक्षते । ( तेऽद ) अदब्धेन त्वा चक्षुषावपश्यामीत्यनार्त्तेन त्वा चक्षुषावपश्यामीत्येवैतदाहाग्नेर्जिह्वासीति यदा वा ऽएतदग्नौ जुह्वत्यथाग्नेर्जिह्वा ऽइवोत्तिष्ठन्ति तस्मादाहाग्नेर्जिह्वासीति सुहूर्देवेभ्य ऽइति साधु देवेभ्यऽइत्येवैतदाह धाम्ने धाम्ने मे भव यजुषे यजुष ऽइति सर्वस्मै मे यज्ञायैधीत्येवैतदाह ॥ १९ ॥

---

अथाज्यमवेक्षते । योषा वै पत्नी, रेत आज्यम् । मिथुनमेवैतत् प्रजननं क्रियते । तस्मादाज्यमवेक्षते ॥ १८ ॥

सावेक्षते–"अदब्धेन त्वा चक्षुषाव पश्यामि" ( १ अ. ३० मं. ) इति । अनार्त्तेन त्वां चक्षुषावपश्यामीत्येवैतदाह । "अग्नेर्जिह्वासि" (१अ०३०मं०) इति । यदा वा एतदग्नौ जुह्वति, अथाग्नेर्जिह्वा इवोत्तिष्ठन्ति । तस्मादाह-अग्नेर्जिह्वासि-इति । "सुहूर्देवेभ्यः" ( १ अ० ३० मं० ) इति । साधु देवेभ्य इत्येवैतदाह । "धाम्ने धाम्ने मे भव यजुषे यजुषे" ( १ अ० ३० मं० ) इति सर्वस्मै मे यज्ञायैधीत्येवैतदाह ॥ १९ ॥

---

यदुपवेशनस्थानं तत् 'निह्नुते' अपलपति, तत्स्थानवर्जनेन तां प्रीणयतीत्यर्थः । तथा चेयं पृथिव्यपि 'एनाम्' पत्नीम् 'न हिनस्ति' न बाधते । इदानीं स्थानविशेषे तस्या उपवेशनं विधत्ते–तस्मादिति । 'तस्मात्' देवपत्नीस्थानात् 'दक्षिणतः' दक्षिणभागे, गार्हपत्यस्य नैर्ऋत्यां दिशीत्यर्थः । अत एव सूत्रितं कात्यायनेन–" पत्नीं सन्नह्यति प्रत्यग् दक्षिणत उपविष्टां गार्हपत्यस्य मुञ्जयोक्त्रेण"–( श्रौ० सू० २ । १९४ ) इति ॥ १७ ॥

पत्न्या आज्यावेक्षणं विधत्ते–अथेति । रेतसः पुरुषेणभुक्ताज्यपरिणामत्वात् कारणकार्ययोरभेदोपचारात्तादात्म्यम् ॥ १८ ॥

विहितमवेक्षणमनूद्य मन्त्रं विधत्ते–सेति । मन्त्रगतमदब्धेनेति पदं व्याचष्टे–अनार्त्तेनेति । आर्त्तिर्हिंसा, तद्रहितेनेत्यर्थः । " अग्नेर्जिह्वासि " इति प्रतिपादितमाज्यस्य जिह्वारूपत्वमुपपादयति–यदा वा इति । जिह्वासदृशज्वालाहेतुत्वादाज्यं जिह्वेत्युच्यत इत्यर्थः । मन्त्रगतं सुहूरिति पदं व्याचष्टे–साध्विति । सुष्ठु हूयमानत्वात् 'सुहूः' । अनेन च होमानुगुण्येन साधुत्वं लक्ष्यत इत्यर्थः । " धाम्ने धाम्ने " इति मन्त्रशेषं व्याचष्टे–सर्वस्मा इति । 'धाम्ने–धाम्ने' तत्तद्देवताशरीराय, 'यजुषे यजुषे' तत्तद्ग्रहणमन्त्राय च पर्याप्तं भवेति मन्त्रार्थः । अतः सर्वस्मै यज्ञाय 'एधि' भवेति तदर्थप्रतिपादनं ब्राह्मणेन क्रियते ॥ १९ ॥

---

१–'अनेकपत्नीके सर्वासाम्' इति याज्ञिकदेवः । २–" आज्यावेक्षणात्प्रागाज्योद्वासनं कार्यं विहितं तत्र मन्त्रः वा. सं. १ । ३० । ३ । " ऊर्जेत्वेत्याज्यमुद्वास्य पत्नीमवेक्षयत्यदब्धेनेति " श्रौ० सू० २. १९७ ।

अथाज्यमादाय प्राङुदाद्रवति । तदाहवनीयेऽधिश्रयति यस्याहवनीये हवीꣳषि श्रपयन्ति सर्व्वो मे यज्ञ ऽआहवनीये शृतोऽसदित्यथ यदमुत्राग्रेऽधिश्रयति पत्नीꣳ ह्यवकाशयिष्यन्भवति न हि तदवकल्पते यत्सामि प्रत्यग्घरेत्पत्नीमवकाशयिष्यामीत्यथ यत्पत्नीं नावकाशयेदन्तरियाद्ध यज्ञात्पत्नीं तथो ह यज्ञात्पत्नीं नान्तरेति तस्मादु सार्द्धमेव विलाप्य प्रागुदाहरत्यवकाश्य पत्नीं यस्यो पत्नी न भवत्यग्र ऽएव तस्याहवनीयेऽधिश्रयति तत्तत ऽआदत्ते तदन्तर्व्वेद्यासादयति ॥ २० ॥

---

अथाज्यमादाय प्राङुदाद्रवति । तदाहवनीयेऽधिश्रयति, यस्याहवनीये हवींषि श्रपयन्ति-सर्वो मे यज्ञ आहवनीये शृतोऽसदिति । अथ यदमुत्राग्रेऽधिश्रयति, पत्नीं ह्यवकाशयिष्यन् भवति । न हि तदवकल्पते-यत्सामि प्रत्यग् हरेत्-पत्नीमवकाशयिष्यामीति । अथ यत्पत्नीं नावकाशयेत्—अन्तरियाद्ध यज्ञात्पत्नीम् । तथो ह यज्ञात्पत्नीं नान्तरेति । तस्मादु सार्द्धमेव विलाप्य प्रागुदाहरति-अवकाश्य पत्नीम् । यस्यो पत्नी न भवति, अग्र एव तस्याहवनीयेऽधिश्रयति । तत्तत आदत्ते, तदन्तर्वेद्यासादयति ॥ २० ॥

---

पुरस्ताद्धरणं विधत्ते—अथेति । पत्न्यवेक्षणानन्तर्यम् 'अथ'—शब्दार्थः । पुनस्तस्याहवनीयेऽधिश्रयणं विधत्ते—तदिति । हविः—श्रपणं हि—आहवनीयगार्हपत्ययोर्विकल्पितम् । तत्राहवनीये श्रपणपक्षे पत्न्यवेक्षणानन्तरमेवाज्यं पुरस्ताद्धृत्वा—आहवनीयेऽधिश्रयेदित्यर्थः । एवं कुर्वतोऽभिप्रायमाह-सर्व इति । यागसाधनत्वाद्धविरत्र 'यज्ञ'-शब्दार्थः । आज्यपुरोडाशादिलक्षणं सर्वमपि मदीयं 'हविः' आहवनीये संस्कृतं भवेदित्यनेनाभिप्रायेणेत्यर्थः । अस्मिन्नपि पक्षे प्रथमतो गार्हपत्याधिश्रयणे कारणमाह-अथ यदमुत्रेति । 'अमुत्र' गार्हपत्ये, 'अग्रे' पशुपुरोडाशाधिश्रयणकाले 'पत्नीमवकाशयिष्यन्' पत्न्यावेक्षणाद्धेतोस्तत्सन्निधानाय गार्हपत्येऽधिश्रयणं कर्त्तव्यमित्यर्थः । प्रथमत एवाज्यस्याहवनीयेऽधिश्रयणे दोषमाह—न हीति । पुरोडाशाधिश्रयणकाल एवाऽऽहवनीये यद्याज्यमधिश्रयेत्; तदा गार्हपत्यसमीपेऽन्वासीनायाः पत्न्यास्तदवेक्षणं न घटते; भिन्नदेशत्वात् । यदि च पत्नीम् 'अवकाशयिष्यामि' अवेक्षयिष्यामि 'इति' तदर्थं 'सामि' संस्कारमध्ये तत् 'प्रत्यक्' पश्चात् पत्न्याः समीपं हरेत्, तदा संस्कारविघातः स्यादिति तदपि न युज्यते । अथैतद्दोषपरिजिहीर्षया पत्नीं नावेक्षयेत्, तस्याः पत्न्या यज्ञादन्तरायो भवति । एतदुक्तं भवति । गार्हपत्ये हविःश्रपणपक्षे ह्याज्यमपि तत्रैवाधिश्रीयत इति तत्समीपोपविष्टायाः पत्न्यास्तदवेक्षणं घटत इति न काप्यनुपपत्तिः । आहवनीयश्रपणपक्षे प्रथमत एवाज्यस्यापि तत्रैवाधिश्रयणे हीदृग्विधो दोषः प्रसज्जेतेति । कथं तर्हि तस्मिन् पक्षे कार्यमिति चेत् उच्यते । प्रथमतो गार्हपत्येऽधिश्रित्य पत्न्यवेक्षणानन्तरमाहवनीयसमीपं नीत्वा तत्राधिश्रयेत् । तथा सत्युक्तदोषाभावमाह-तथो इति । तस्मादित्यादि । यस्मादेवमाहवनीये प्रथमतोऽधिश्रयणे दोषः, 'तस्मात्' पत्न्या सार्द्धं गार्हपत्ये प्रथममाज्यस्य विलापनमित्यर्थः । यस्य तु पत्न्या रजोदर्शनादिनिमित्तवशेनासन्निधानात् तदीयकर्माण्याज्यावेक्षणादीनि न क्रियन्ते, तस्योक्तदोषाभावात् प्रथमत एवाहवनीये आज्याधिश्रयणं कार्यमित्याह-यस्यो इति ॥ २० ॥

तदाहुः । ( र्ना ) नान्तर्वेद्यासादयेदतो वै देवानां पत्नीः संयाजयन्त्यवसभा ऽअह देवानां पत्नीः करोति परःपुꣳसो हास्य पत्नी भवतीति तदु होवाच याज्ञवल्क्यो यथादिष्टं पत्न्या ऽअस्तु कस्तदाद्रियेत यत्परःपुꣳसा वा पत्नी स्याद्यथा वा यज्ञो वेदिर्यज्ञ ऽआज्यं यज्ञाद्यज्ञं निर्मिमा ऽइति तस्मादन्तर्वेद्येवासादयेत् ॥ २१ ॥

( त्प्रो ) प्रोक्षणीषु पवित्रे भवतः । (स्ते) ते तत ऽआदत्ते ताभ्यामाज्यमुत्पुनात्येको वा ऽउत्पवनस्य बन्धुर्मेध्यमेवैतत्करोति ॥ २२ ॥

---

तदाहुः–नान्तर्वेद्यासादयेत्–अतो वै देवानां पत्नीः संयाजयन्ति, अवसभा अह देवानां पत्नीः करोति, परःपुंसा-उ-हास्य पत्नी भवतीति तदु होवाच याज्ञवल्क्यः–यथादिष्टं पत्न्या अस्तु । कस्तदाद्रियेत–यत्परःपुंसा वा पत्नी स्यात् । यथा वा यज्ञो वेदिः, यज्ञ आज्यम्–यज्ञाद्यज्ञं निर्मिमा इति । तस्मादन्तर्वेद्येवासादयेत् ॥ २१ ॥

प्रोक्षणीषु पवित्रे भवतः । ते तत आदत्ते 'ताभ्यामाज्यमुत्पुनाति । एको वा उत्पवनस्य बन्धुः–मेध्यमेवैतत्करोति ॥ २२ ॥

---

तस्याज्यस्यान्तर्वेद्यासादनं केषाञ्चिन्मतेन निषेधति–**तदाहुरिति** । निषेधाभिप्रायमाह–**अत** इति । 'अतः' अस्मादेव खल्वाज्याद् देवपत्नीनां यागः, अतस्तत्सम्बद्धस्याज्यस्यान्तर्वेद्यासादने सति तदैव देवपत्नीः 'अवसभाः' अवगतजनसमूहाः करोति; यष्टव्यदेवसंघस्य वेद्यामवस्थानात् । 'अह' इति निपातो विनिग्रहे । अस्तु तथात्वं देवपत्नीनां किं तत इत्यत आह–**पर** इति । देवपत्नीनां सभाप्रापणात् । 'अस्य' यजमानस्य पत्न्यपि 'परःपुंसा' भवति । 'परस्'–इत्ययं सकारान्तः, परस्तादित्यर्थे । स्वपुरुषादन्यत्र राजवीथ्यादौ पुरुषसमूहं प्राप्ता 'परःपुंसा'–इत्युच्यते । अचतुरादिसूत्रे ( पा० सू० ५ । ४ । ७७ )–स्त्रीपुंसेति निपातितत्वात् परःपुंसेत्युपपदान्तरेऽपि समासान्तोऽच्प्रत्ययो द्रष्टव्यः । 'इति'–शब्द एकीयमतसमाप्त्यर्थः । याज्ञवल्क्यमतेनान्तर्वेद्यासादनमेव निगमयति–**तदिति** । 'यथादिष्टम' यथादेशनं यथाशास्त्रम्, 'पत्न्याः' संबन्धि कार्यम्, 'अस्तु' भवतु; अतः पत्नीसंयाजार्थमन्तर्वेद्यनासादनमिति न युक्तम् । पत्न्यपि 'परःपुंसा वा' भवतु, प्रयता 'यथा तथा वा' भवतु, तयापि किं प्रयोजनम् अतः परःपुंसेत्येतदपि दूषणं को वा आद्रियेतेत्यर्थः । एवमुक्तदूषणं निरस्य वेद्यासादनपक्षमुपपादयति–**यज्ञो वेदिरिति** । वेदिराज्यं चोभयमपि यज्ञसाधनत्वात् 'यज्ञः' तथा च वेद्यासादने वेदिरूपाद् यज्ञादाज्यरूपं यज्ञं 'निर्मिमे' निर्मितवान् भवतीत्यनेनाभिप्रायेण तत्रैवासादयेदित्यर्थः । 'तस्मात्'–इति उक्तार्थनिगमनम् ॥ २१ ॥

तस्याज्यस्योत्पवनं विधत्ते–**प्रोक्षणीष्विति** । प्रोक्षण्युत्पवनं याभ्यां पवित्राभ्यां कृतम्, ते तत आदाय ताभ्यामेवाज्यस्योत्पवनं कार्यमित्यर्थः । उत्पवनविधिस्तावकं "**वृत्रो ह वा इदं सर्वम्**" इत्यादिकं प्रागाम्नातं ब्राह्मणम्, आज्यस्योत्पवनस्यापि समानमित्यत आह–**एको वा** इत्यादि । उत्पवनसंस्कारेण पर्यवसितमर्थमाह–**मेध्यमिति** ॥ २२ ॥

---

१–" सवितुस्त्वेरयाज्यमुत्पुनाति "–( श्रौ०सू०२.२००) । २–इहैव ब्राह्मणे पूर्वं १ कां. १ प्र. ३ ब्रा. ४ कं. इत्यत्र द्रष्टव्यम् ।

स ऽउत्पुनाति । सवितुस्त्वा प्रसव ऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिरिति सोऽसावेव बन्धुः ॥ २३ ॥ [ शतम् २०० ]

( र ) अथाज्यलिप्ताभ्यां पवित्राभ्याम् । ( म्प्रो ) प्रोक्षणीरुत्पुनाति सवितुर्वः प्रसव ऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिरिति सोऽसावेव बन्धुः ॥ २४ ॥

( स्त ) तद्यदाज्यलिप्ताभ्यां पवित्राभ्याम् । ( म्प्रो ) प्रोक्षणीरुत्पुनाति तदप्सु पयो दधाति तदिदमप्सु पयो हितमिदꣳ हि यदा वर्षत्यथौषधयो जायन्तऽओषधीर्जग्ध्वापः पीत्वा तत ऽएष रसः सम्भवति तस्माद्रसस्यो चैव सर्वत्वाय ॥ २५ ॥

---

स उत्पुनाति-"सवितुस्त्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः" ( १ अ० ३१ मं० ) इति । सोऽसावेव बन्धुः ॥ २३ ॥

अथाज्यलिप्ताभ्यां पवित्राभ्यां प्रोक्षणीरुत्पुनाति-" सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः " ( १ अ० ३१ मं० ) इति । सोऽसावेव बन्धुः ॥ २४ ॥

तद्यदाज्यलिप्ताभ्यां पवित्राभ्यां प्रोक्षणीरुत्पुनाति, तदप्सु पयो दधाति । तदिदमप्सु पयो हितम् । इदं हि यदा वर्षति, अथौषधयो जायन्ते; ओषधीर्जग्ध्वापः पीत्वा तत एष रसः सम्भवति । तस्माद्रसस्यो चैव सर्वत्वाय ॥ २५ ॥

---

विहितमुत्पवनमनूद्य मन्त्रं विधत्ते-स उत्पुनातीति । आज्यस्यैकत्वात् ' त्वा '-इत्येकवचनान्ततैव प्रोक्षण्युत्पवनमन्त्रतोऽस्य विशेषः; अतस्तन्मन्त्रव्याख्यानरूपं " सविता वै देवानां प्रसविता " इत्यादिकं ब्राह्मणमत्रातिदिशति-सोऽसाविति ॥ २३ ॥

आज्योत्पवनानन्तरं ताभ्यामेव लेपसहिताभ्यां पवित्राभ्यां पुनः प्रोक्षण्युत्पवनं विधत्ते-अथेति । प्रागाम्नातमेव मन्त्रं पठित्वा तद्ब्राह्मणमप्यतिदिशति-सवितुर्व इति ॥ २४ ॥

आज्यलेपसहिताभ्यां पवित्राभ्यां प्रोक्षण्युत्पवनमुपपादयति-तद्यदिति । ' तत् ' तत्र ' यत् ' इदमाज्यलिप्ताभ्यां पवित्राभ्यामपामुत्पवनम्, तेन पय एवाप्सु ' दधाति ' स्थापयति संयोजयति; आज्यस्य पयः-कार्यत्वात् । अप्सु हि परम्परया तत्कार्यत्वात् पयः प्रतिष्ठितम् । एतदेव पारंपर्येणोपपादयति-इदं हीति । 'जग्ध्वा' भक्षयित्वा । " अदो जग्धिर्ल्यप्ति किति " ( पा० सू० २ । ४ । ३६ )-इत्यदेर्जग्धादेशः । तस्मादिति । यस्मादेवं गव्यं पयः परम्परयोदकरसपरिणामरूपम्, ' तस्मात् ' कारणात् तत्कार्यस्याज्यस्यापां च यदुत्पवने संसर्जनम्, तद्रसस्यैव ' सर्वत्वाय ' सम्पूर्णत्वाय कार्त्स्न्याय भवतीत्यर्थः ॥ २५ ॥

---

१-इहैव ब्राह्मणे पूर्वं १ कां. १ प्र. ३ ब्रा. ६ कं. इत्यत्र द्रष्टव्यम् । २-"०प्रोक्षणीश्च पूर्ववत्" (श्रौ. सू. २. २००) । ३-पूर्वं १ कां. १ प्र. ३ ब्रा. ६ कं. ।

( याथा ) अथाज्यमवेक्षते । तद्धैके यजमानमवख्यापयन्ति तदु होवाच याज्ञवल्क्यः कथन्नु नु स्वयमध्वर्यवो भवन्ति कथᳪं स्वयं नान्वाहुर्य्यत्र भूयस्य ऽइवाशिषः क्रियन्ते कथं न्वेषामत्रैव श्रद्धा भवतीति यां वै कां च यज्ञ ऽऋत्विज ऽआशिषमाशासते यजमानस्यैव सा तस्मादध्वर्युरेवावेक्षेत ॥२६॥

सोऽवेक्षते । सत्यं वै चक्षुः सत्यᳪं हि वै चक्षुस्तस्माद्यदिदानीं द्वौ विवदमानावेयातामहमदर्शमहमश्रौषमिति य ऽएव ब्रूयादहमदर्शमिति तस्मा ऽएव श्रद्दध्याम तत्सत्येनैवैतत्समर्द्धयति ॥ २७ ॥

---

अथाज्यमवेक्षते । तद्धैके यजमानमवख्यापयन्ति । तदु होवाच याज्ञवल्क्यः—कथं नु न स्वयमध्वर्यवो भवन्ति, कथं स्वयं नान्वाहुः, यत्र भूयस्य इवाशिषः क्रियन्ते । कथं न्वेषामत्रैव श्रद्धा भवतीति । यां वै कां च यज्ञ ऋत्विज आशिषमाशासते—यजमानस्यैव सा । तस्मादध्वर्युरेवावेक्षेत ॥२६॥

सोऽवेक्षते । सत्यं वै चक्षुः । सत्यं हि वै चक्षुस्तस्मात्—यदिदानीं द्वौ विवदमानावेयाताम्—'अहमदर्शम्' अहमश्रौषम्' इति, य एव ब्रूयात् 'अहमदर्शम्' इति—तस्मा एव श्रद्दध्याम । तत्सत्येनैवैतत्समर्द्धयति ॥ २७ ॥

---

अध्वर्योराज्यावेक्षणं विधत्ते—अथेति । एकीयमतमुपन्यस्य निरस्यति—तद्धैक इति । 'अवख्यापयन्ति' ख्यातिरत्र पश्यतिकर्मा; ( निघ. ३ । ११ । १ । ९ । निरु. ३ भा. ४ । ११२ । ) अवेक्षयन्तीत्यर्थः । याज्ञवल्क्यस्य मतमुपन्यस्यति—तदिति । य एवं यजमानमवेक्षयन्ति, ते स्वकीये यज्ञे 'कथम्' कस्मादेव 'स्वयम्' यजमाना एव सन्तोऽध्वर्यवो न भवन्ति ? कथं वा स्वयमेव होतारो भूत्वा याज्यानुवाक्यादीनि नानुब्रूयुः ? तेषामाध्वर्यवादिकरणे हेतुमाह—यत्रेति । 'यत्र' खल्वाध्वर्यवादौ तत्करणमन्त्रैर्बहुतरा इव 'आशिषः' फलप्रार्थनाः क्रियन्ते, तादृक्फलप्रतिपादकमन्त्रविशिष्टमाध्वर्यवादिकं कस्मान्न कुर्युः ? तत्परित्यज्य 'एषाम्' एकेषां शाखिनामत्रैवावेक्षणं यजमानेनैव कर्त्तव्यमिति कस्मात् कारणाच्छ्रद्धा जातेत्यर्थः । एवं यजमानावेक्षणादि प्रहस्याध्वर्युणैव तदवेक्षणं कार्यमिति प्रतिपादयति—यां वा इति । दक्षिणाभिः परिक्रीतत्वादृत्विग्भिर्यत्फलमाशास्यते, तद् यजमानस्यैवेति न तेन पृथगाशासनं कार्यम् । अतोऽध्वर्युरेवाज्यमवेक्षेतेत्यर्थः ॥ २६ ॥

तदवेक्षणमनूद्य प्रशंसति—स इति । अवेक्षणस्य करणं हि चक्षुः; तच्च यथाभूतमेव वस्तु विषयीकरोतीति 'सत्यम्' । एतदेव लोकव्यवहारेण संवादयन् द्रढयति—तस्मादिति । यस्मादेवं चक्षुः सत्यम्, तस्मादेव कारणात्—विवदमानयोर्मध्ये यश्चक्षुषा दृष्टवानस्मीति वदति, तद्वचनमेव श्रद्धार्हम्, न त्वितरस्य श्रुतवानस्मीति वचनमित्यर्थः ॥ २७ ॥

---

१—"आज्यमवेक्षते तेजोऽसीति यजमानो वा" (श्रौ. सू. २. २०१.) ।

सो॒ऽवेक्षते । ते॒जो॑ऽसि शु॒क्रम॑स्य॒मृत॑मसी॒ति स॒ऽए॒ष स॒त्य॒ऽए॒व म॒न्त्रस्ते॒जो ह्ये॒तच्छु॒क्रꣳ ह्ये॒तद॒मृ॒तꣳ ह्ये॒तत्त॒त्सत्ये॑नै॒वैतत्स॒मर्द्धयति ॥ २८ ॥

इति द्वितीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ २-४ ॥

पु॒रु॒षो वै॒ य॒ज्ञः । पु॒रु॒षस्ते॒न य॒ज्ञो य॒दे॒नं पु॒रु॒षस्त॒नु॒त॒ ऽए॒ष वै॒ ता॒य॒मा॒नो या॒वा॒ने॒व पु॒रु॒षस्ता॒वा॒न्वि॒धी॒यते त॒स्मा॒त्पु॒रु॒षो य॒ज्ञः ॥ १ ॥

( स्तु ) त॒स्ये॒य॒मे॒व जु॒हूः । ( रि ) इ॒य॒मु॒प॒भृ॒दा॒त्मै॒व ध्रु॒वा त॒द्वा ऽआ॒त्म॒न ऽए॒वे॒मा॒नि स॒र्वा॒ण्य॒ङ्गा॒नि प्र॒भ॒व॒न्ति त॒स्मा॒द्ध्रु॒वा॒या॒ऽए॒व स॒र्वो॒ य॒ज्ञः प्र॒भ॒व॒ति २

---

सोऽवेक्षते-“तेजोऽसि शुक्रमस्यमृतमसि ”-( १ अ० ३१ मं० ) इति । स एष सत्य एव मन्त्रः ।-तेजो ह्येतत्, शुक्रं ह्येतद्, अमृतं ह्येतत्, तत्सत्येनैवैतत्समर्द्धयति ॥ २८ ॥

पुरुषो वै यज्ञः । पुरुषस्तेन यज्ञः-यदेनं पुरुषस्तनुते । एष वै तायमानो यावानेव पुरुषस्तावान् विधीयते, तस्मात्पुरुषो यज्ञः ॥ १ ॥

तस्येयमेव जुहूः, इयमुपभृत्; आत्मैव ध्रुवा । तद्वा आत्मन एवेमानि सर्वाण्यङ्गानि प्रभवन्ति । तस्माद् ध्रुवाया एव सर्वो यज्ञः प्रभवति ॥ २ ॥

---

विहितमवेक्षणमनूद्य मन्त्रं विधत्ते-**स** इति । योऽयं “ तेजोऽसी ” ति मन्त्रः, ‘ स एषः ’ ‘ सत्यः ’ यथार्थ एव । कुत इत्यत आह-**तेजो ही**ति । ‘ हि ’ यस्मात् ‘ एतत् ’ आज्यम् ‘ तेजः ’ तद्धेतुत्वात्, तथा ‘शुक्रम्’ निर्मलम्, ‘ अमृतं ’ यागादिद्वारा-अमरणसाधनम्; यद्वा-अमृतवत्पुष्टिकरम् । ‘ एवम् ’ आज्यस्यैवंरूपत्वात्, विद्यमानार्थप्रकाशकत्वान्मन्त्रः सत्य इत्यर्थः ॥ २८ ॥ ४ । ( ३. १ ) ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथभाष्ये
प्रथमकाण्डे तृतीयाध्याये प्रथमं ब्राह्मणम् ॥

अथ जुहूपभृद्ध्रुवास्वेतस्याज्यस्य स्रुवेण ग्रहणं विधित्सुस्तत्समुदायस्य पुरुषावयवकल्पनया स्तुत्यर्थं तत्साध्यस्य यज्ञस्य पुरुषतादात्म्यमाह-**पुरुषो वा** इति । तादात्म्यमुपपादयति-**पुरुषस्तेने**ति । पुरुषप्रयत्ननिर्वर्त्यत्वाद् यज्ञस्य पुरुषत्वमित्यर्थः । **एष वा** इत्यादि । यत एवं यज्ञः पुरुषः, अतः ‘ एषः ’ यज्ञो विस्तार्यमाणः, यदवयवपरिमाणविशिष्टः पुरुषः, तादृगवयवपरिमाणविशिष्ट एव विधीयते ॥ १ ॥

तादृगवयवक्लृप्तिमभिनयेन दर्शयति-**तस्ये**ति । या ‘ जुहूः ’ सा ‘ इयम् ’ अयम्, दक्षिणो बाहुरित्यर्थः । तथा या ‘ उपभृत् ’ सा ‘ इयम् ’ वामबाहुः । ध्रुवा ‘ आत्मा ’ मध्यदेह इत्यर्थः । अत एव तैत्तिरीयके विस्पष्टमाम्नायते-“जुहूर्दक्षिणो हस्तः, उपभृत् सव्यः, आत्मा ध्रुवेति ” ( तै. ब्रा. ३ । ३ । १ )। ध्रुवाया आत्मत्वमुपपादयति-**तद्वा** इति । ‘ आत्मनः ’ मध्यदेहादेव ‘ इमानि ’ परितो वर्तमानानि हस्तपादादीन्यङ्गानि सर्वाणि ‘ प्रभवन्ति ’ उत्पद्यन्ते । यस्मादेवं लोके ‘ तस्मात् ’ ध्रुवाया आत्मत्वात्, तस्या एव सकाशात् कृत्स्नोऽपि यज्ञः ‘ प्रभवति ’ उत्पद्यते । ध्रुवास्थस्याज्यस्य सर्वयागसाधारण्यमनेन प्रतिपादितं भवति ॥ २ ॥

---

१-“ खादिरः स्रुवो भवति, पर्णमयी जुहूर्भवति, आश्वत्थी उपभृत्, वैकङ्कती ध्रुवा भवति, एतद्वै स्रुचां रूपम् ”(तै०सं० ३.५.७.)

प्राणु ऽएवु स्रुवुः । सोऽयं प्राणः सर्व्वाण्युङ्गान्यनुसञ्चरति तस्मादु स्रुवः सर्व्वा ऽअनु स्रुचः सञ्चरति ॥ ३ ॥

तुस्यासावेव द्यौर्जुहूः । ( रु ) अथेदमन्तरिक्षमुपभृदियमेव ध्रुवा तद्वा ऽअस्या ऽएवेमे सर्व्वे लोकाः प्रभवन्ति तुस्मादु ध्रुवायाऽएव सर्व्वो यज्ञः प्रभवति ॥ ४ ॥

( त्य ) अयमेव स्रुवो योऽयं पवते । सोऽयमिमान्त्सर्व्वाँल्लोकाननुपवते तस्मादु स्रुवः सर्व्वा अनु स्रुचः सञ्चरति ॥ ५ ॥

सऽएष यज्ञस्तायमानः । ( नो ) देवेभ्यस्तायत ऽऋतुभ्यश्छन्दोभ्यो यद्धविस्तद्देवानां यत्सोमो राजा यत्पुरोडाशस्तत्तदादिश्य गृह्णात्यमुष्मै त्वा जुष्टं गृह्णामीत्येवमु हैतेषाम् ॥ ६ ॥

---

प्राण एव स्रुवः । सोऽयं प्राणः सर्वाण्यङ्गान्यनुसञ्चरति । तस्मादु स्रुवः सर्वा अनु स्रुचः सञ्चरति ॥ ३ ॥

तस्यासावेव द्यौर्जुहूः, अथेदमन्तरिक्षमुपभृत्, इयमेव ध्रुवा । तद्वा अस्या एवेमे सर्वे लोकाः प्रभवन्ति । तस्मादु ध्रुवाया एव सर्वो यज्ञः प्रभवति ॥ ४ ॥

अयमेव स्रुवो योऽयं पवते । सोऽयमिमान् सर्वान् लोकाननुपवते । तस्मादु स्रुवः सर्वा अनु स्रुचः सञ्चरति ॥ ५ ॥

स एष यज्ञस्तायमानो देवेभ्यस्तायते । ऋतुभ्यः, छन्दोभ्यः । यद्धविः, तद्देवानाम् । यत्सोमो

---

जुह्वादिषु सर्वासु स्रुक्षु स्रुवस्य संचरणमुपपादयितुं तस्य प्राणरूपतामाह—**प्राण एवेति** । देहमध्येऽवस्थितः प्राणवायुर्यस्मात् सर्वाण्यङ्गानि नाडीभिः क्रमेण व्याप्नोति, तस्मात्तदात्मकः स्रुवोऽपि जुह्वाद्याः सर्वाः 'स्रुचः' 'अनु'–लक्ष्य क्रमेण संचरति ॥ ३ ॥

एवं पुरुषावयवादिकल्पनया जुह्वादिसमुदायं प्रशस्य, लोकतादात्म्यप्रतिपादनेनापि तं प्रशंसति—**तस्येति** । 'तस्य' यज्ञस्य 'असौ' दूरदेशेऽवस्थिता द्यौरेव जुहूः; इदमेवान्तरिक्षमुपभृत्; 'इयमेव' भूमिर्ध्रुवा; जुह्वादयो लोकत्रयात्मिका इत्यर्थः । अस्त्वेवं किं तत इत्याह—**तद्वा** इति । 'तत्' तथा सति 'अस्याः' भूम्या एव सकाशाद् यस्मादिमे सर्वे लोकाः 'प्रभवन्ति' उत्पद्यन्ते, तस्मादेव कारणात् पृथिव्यात्मिकाया ध्रुवाया एव सर्वो यज्ञः प्रभवति । इतोऽपि ध्रुवास्थमाज्यं सर्वयागसाधारणमित्यर्थः ॥ ४ ॥

अस्मिन्नपि पक्षे स्रुवस्य सर्वासु स्रुक्षु संचरणमुपपादयति—**अयमेवेति** । 'योऽयं' लोकत्रये वायुः 'पवते' वाति, तदात्मक एव स्रुवः । स च बाह्यो वायुः, यथा सर्वान् लोकान् संचरति, तथैव तदात्मकस्य स्रुवस्यापि लोकत्रयात्मिकासु स्रुक्षु सञ्चरणं युक्तमित्यर्थः ॥ ५ ॥

अथ तासु स्रुक्षु—आज्यग्रहणं विधित्सुस्तस्य पुरोडाशादिहविरन्तरवत्प्रसक्तं देवतादेशनपूर्वकत्वं निवारयितुमाह—**स एष** इति । 'तायमानः' विस्तार्यमाणो यज्ञः, प्रथममग्न्यादिभ्यः प्रधानभूतेभ्यो 'देवेभ्यः' तादर्थ्ये चतुर्थी,

---

१–आध्यात्मिकभावेनेत्यर्थः; छां० उप. १ । २ द्रष्टव्यम् । २–इदं व्याख्यानमाधिदैविकम्; छां. उप. १ । ३ द्रष्टव्यम् ।

( मु ) अथ यान्याज्यानि गृह्यन्ते । ( न्त ऽ ) ऋतुभ्यश्चैव तानि च्छन्दोभ्यश्च गृह्यन्ते तत्तदनादिश्याज्यस्यैव रूपेण गृह्णाति स वै चतुर्जुह्वां गृह्णात्यष्टौ कृत्व उपभृति ॥ ७ ॥

स यच्चतुर्जुह्वां गृह्णाति । ( त्मृ ) ऋतुभ्यस्तद्गृह्णाति प्रयाजेभ्यो हि तद्गृह्णात्यृतवो हि प्रयाजास्तत्तदनादिश्याज्यस्यैव रूपेण गृह्णात्यजामितायै जामि ह कुर्याद्यद्वसन्ताय त्वा ग्रीष्माय त्वेति गृह्णीयात्तस्मादनादिश्याज्यस्यैव रूपेण गृह्णाति ॥ ८ ॥

---

राजा, यत्पुरोडाशः, तत्तदादिश्य गृह्णाति—अमुष्मै त्वा जुष्टं गृह्णामीति । एवमु हैतेषाम् ॥ ६ ॥

अथ यान्याज्यानि गृह्यन्ते—ऋतुभ्यश्चैव तानि, छन्दोभ्यश्च गृह्यन्ते । तत्तदनादिश्य—आज्यस्यैव रूपेण गृह्णाति । स वै चतुर्जुह्वां गृह्णाति, अष्टौ कृत्व उपभृति ॥ ७ ॥

स यच्चतुर्जुह्वां गृह्णाति—ऋतुभ्यस्तद् गृह्णाति, प्रयाजेभ्यो हि तद् गृह्णाति । ऋतवो हि प्रयाजाः तत्तदनादिश्य—आज्यस्यैव रूपेण गृह्णाति—अजामितायै । जामि ह कुर्याद्—यद्वसन्ताय त्वा ग्रीष्माय त्वेति गृह्णीयात् तस्मादनादिश्य—आज्यस्यैव रूपेण गृह्णाति ॥ ८ ॥

---

(पा. सू. १।४।४४। वार्तिक १) देवतार्थं 'तायते' विस्तार्यते। "तनु विस्तारे" (त. उ. १)—इत्यस्मात् कर्मणि यकि, (पा. सू. ३।१।६७) "तनोतेर्यकि"—( पा० सू० ६ । ४ । ४४ ) इत्यात्वम् । ततः 'ऋतुभ्यः' वसन्तादिभ्यः प्रयाजदेवताभ्यः, 'छन्दोभ्यः' गायत्र्यादिभ्योऽनुयाजदेवताभ्यश्च; तायत इति शेषः। तत्र पुरोडाशादिलक्षणं 'यद्धविः' तद्देवानां स्वभूतम्, अतस्तद्देवानामादेशपुरःसरं ग्रहीतव्यम् । कुत एतदित्यत आह—**एवमिति** । एवमेव हि 'तेषाम्' अग्न्यादिदेवतानां दर्शपूर्णमासादिषु सोमयागादिषु च नामादेशविशिष्टा मन्त्राः समाम्नाताः । "अग्नये त्वा जुष्टं गृह्णामि" (वा. सं. १।१०)—इति "अग्नीषोमाभ्यां त्वा जुष्टं गृह्णामि" (वा. सं. ७ । ८ )—इति पुरोडाशनिर्वापे; सोमरसग्रहणेष्वैन्द्रवायवादिषु "उपयामगृहीतोऽसि वायव इन्द्रवायुभ्यां त्वा" ( वा. सं. ७ । ८ । १ । २ )—इति ॥ ६ ॥

**अथेति** । अथ तस्मिन् यज्ञे यदाज्यग्रहणम्, तत्प्रयाजानुयाजदेवतार्थम्; 'च'—शब्दादेव स्विष्टकृद्यागार्थं[1] च । 'तत्' तथा सति 'तत्' आज्यं देवतानाम् 'अनादिश्य' अनुक्त्वा—आज्यसम्बन्धिनैव[2] रूपेण गृह्णाति। आज्यसम्बन्धि रूपं च देवताया अनादेशनम्, न वा एतत्कस्मैचन देवतायै हविर्गृह्णन्नादिशति—यदाज्यम् इत्यनादेशनस्य तद्धर्मतया प्रागाम्नातत्वात् ( श० प० १ । २ । १ । २२ )॥

अथ जुहूपभृतोराज्यग्रहणं विधत्ते—**स वा** इति । ( का. श्रौ. सू. २ । २०२—२०४ ) । जुह्वां चतुर्वारं स्रुवेणाज्यं गृह्णीयात्; उपभृत्यष्टवारम् ॥ ७ ॥

तत्र जुहूस्थमाज्यं किमर्थमित्याशङ्क्य तत्प्रयोजनमाह—**स यदि**ति । के पुनस्त ऋतवः, येभ्यो जुहूस्थमाज्यं भाग इत्यत आह—**प्रयाजेभ्य** इति । प्रयाजदेवता हि—ऋतवो वसन्ताद्याः । तेषां च नामादेशनरहित-

---

१-'अवशिष्टकृत्स्नयागार्थं च' इति पाठान्तरम् । २-'आज्यस्वरूपसम्बन्धिनैव रूपेण' इति क्वचित्पाठः ।

( त्यु ) अथ यदष्टौ कृत्व ऽउपभृति गृह्णाति । च्छन्दोभ्यस्तद्गृह्णात्यनुयाजेभ्यो हि तद्गृह्णाति च्छन्दाᳬसि ह्यनुयाजास्तत्तदनादिश्याज्यस्यैव रूपेण गृह्णात्यजामितायै जामि ह कुर्याद्यद्गायत्र्यै त्वा त्रिष्टुभेत्वेति गृह्णीयात्तस्मादनादिश्याज्यस्यैव रूपेण गृह्णाति ॥ ९ ॥

( त्यु ) अथ यच्चतुर्ध्रुवायां गृह्णाति । सर्व्वस्मै तद्यज्ञाय गृह्णाति तत्तदनादिश्याज्यस्यैव रूपेण गृह्णाति कस्मा ऽउ ह्यादिशेद्यतः सर्वाभ्य ऽएव देवताभ्योऽवद्यति तस्मादनादिश्याज्यस्यैव रूपेण गृह्णाति ॥ १० ॥

यजमान एव जुहूमनु । योऽस्मा ऽअरातीयति स ऽउपभृतमन्वत्तैव जुहूमन्वाद्य ऽ उपभृतमन्वत्तैव जुहूराद्य ऽउपभृत्स वै चतुर्जुह्वां गृह्णात्यष्टौ कृत्व ऽउपभृति ॥ ११ ॥

---

अथ यदष्टौ कृत्व उपभृति गृह्णाति—छन्दोभ्यस्तद् गृह्णाति, अनुयाजेभ्यो हि तद् गृह्णाति । छन्दांसि ह्यनुयाजाः । तत्तदनादिश्य—आज्यस्यैव रूपेण गृह्णाति—अजामितायै । जामि ह कुर्याद्—यद् गायत्र्यै त्वा त्रिष्टुभे त्वेति गृह्णीयात् । तस्मादनादिश्य—आज्यस्यैव रूपेण गृह्णाति ॥ ९ ॥

अथ यच्चतुर्ध्रुवायां गृह्णाति—सर्वस्मै तद् यज्ञाय गृह्णाति । तत्तदनादिश्य—आज्यस्यैव रूपेण गृह्णाति । कस्मा उ ह्यादिशेत्—यतः सर्वाभ्य एव देवताभ्योऽवद्यति । तस्मादनादिश्य—आज्यस्यैव रूपेण गृह्णाति ॥ १० ॥

यजमान एव जुहूमनु । योऽस्मा अरातीयति—स उपभृतमनु । अत्तैव जुहूमनु, आद्य उपभृतमनु । अत्तैव जुहूः, आद्य उपभृत् । स वै चतुर्जुह्वां गृह्णाति, अष्टौ कृत्व उपभृति ॥ ११ ॥

---

मेवाज्यं ग्रहीतव्यमित्युक्तम्; तदिदानीमनूद्य तस्य प्रयोजनमाह—**तदि**ति । 'तत्' तथा सति 'तत्' अनादिश्य ग्रहणम् 'अजामितायै' जामितादोषराहित्याय सम्पद्यते; हविर्ग्रहणाज्यग्रहणयोर्देवतादेशने सत्येकरूपेणाजामिता स्यात् । तमिमं दोषं विपक्षे दर्शयति—**जामि हे**ति ॥ ८ ॥

औपभृताज्यस्य विनियोगमाह—**अथे**ति । अत्र छन्दसां कः प्रसङ्ग इत्यत आह—**अनुयाजेभ्य** इति । गायत्र्यादिच्छन्दोरूपा ह्यनुयाजदेवताः; अतोऽनुयाजेभ्य एवोपभृति तदाज्यग्रहणम् । अत्रापि देवतानादेशनं पूर्ववजामितादोषराहित्यायेत्याह—**तदि**ति । पूर्ववद्विपक्षे बाधमुपन्यस्यानादेशनमुपपादयति—**जामि हे**ति ॥ ९ ॥

ध्रुवायां चतुर्ग्रहणविधिपुरःसरं तत्प्रयोजनमाह—**अथे**ति—( का. श्रौ. सू. २ । २०८ ) । ध्रौवाज्यग्रहणमप्याज्यधर्मेण देवतानादेशनलक्षणेन कर्त्तव्यमित्युक्त्वाऽत्र देवतादेशनस्य प्रसक्तिरेव नास्तीत्याह—**कस्मा उ ह्यादिशेदि**ति । 'यतः' यस्मात् कारणात् ध्रुवास्थमाज्यं यज्ञे यावत्यो देवताः सन्ति, तावतीभ्यः सर्वाभ्य एव देवताभ्यः 'अवद्यति' विभज्य गृह्णाति, 'अतः' सर्वदेवतासाधारण्यात्—देवताविशेषस्योद्देशनं न संभवतीत्यर्थः । अत एव तैत्तिरीयके समाम्नायते—"यजू जुह्वां गृह्णाति प्रयाजेभ्यस्तद्, यदुपभृति प्रयाजानूयाजेभ्यस्तत्, सर्वस्मै वा एतद् यज्ञाय गृह्यते यद् ध्रुवायामाज्यम्"—इति ( तै० ब्रा. ३ । ३ । ५ । ५ ) ॥ १० ॥

अथ जुहूपभृतोराज्यग्रहणस्य चतुष्ट्वादिसंख्याविशेषमुपपादयितुमाह—**यजमान एवे**ति । 'यजमान एव जुहूमनु' भागी, तस्य जुहूर्भाग इत्यर्थः । "लक्षणेत्थंभूताख्यानभागवीप्सासु"—( पा० सू० १।४।९० )—

स यच्चतुर्जुह्वां गृह्णाति । (त्य) अत्तारमेवैतत्परिमिततरं कनीयाꣳसंकरोत्यथ यदष्टौ कृत्व ऽ उपभृति गृह्णात्याद्यमेवैतदपरिमिततरं भूयाꣳसंकरोति तद्धि समृद्धं यत्रात्ता कनीयानाद्यो भूयान् ॥ १२ ॥

( न्त्स ) स वै चतुर्जुह्वां गृह्णन् । ( न्भू ) भूय ऽ आज्यं गृह्णात्यष्टौ कृत्व ऽउपभृति गृह्णन्कनीय ऽआज्यं गृह्णाति ॥ १३ ॥

स यच्चतुर्जुह्वां गृह्णन् । ( न्भू ) भूय ऽआज्यं गृह्णात्यत्तारमेवैतत्परिमिततरं कनीयाꣳसं कुर्वंस्तस्मिन्वीर्यं बलं दधात्यथ यदष्टौ कृत्व ऽउपभृति गृह्णन्कनीय ऽआज्यं गृह्णात्याद्यमेवैतदपरिमिततरं भूयाꣳसं कुर्वंस्तमवीर्य-

---

स यच्चतुर्जुह्वां गृह्णाति—अत्तारमेवैतत्परिमिततरं कनीयांसं करोति । अथ यदष्टौ कृत्व उपभृति गृह्णाति—आद्यमेवैतदपरिमिततरं भूयांसं करोति। तद्धि समृद्धम्—यत्रात्ता कनीयान्, आद्यो भूयान् १२

स वै चतुर्जुह्वां गृह्णन् भूय आज्यं गृह्णाति, अष्टौ कृत्व उपभृति गृह्णन्—कनीय आज्यं गृह्णाति १३

स यच्चतुर्जुह्वां गृह्णन् भूय आज्यं गृह्णाति—अत्तारमेवैतत् परिमिततरं कनीयांसं कुर्वंस्तस्मिन् वीर्यं बलं दधाति । अथ यदष्टौ कृत्वा उपभृति गृह्णन् कनीय आज्यं गृह्णाति—आद्यमेवैतदपरिमित-

---

इत्यनोः कर्मप्रवचनीयत्वम्; "कर्मप्रवचनीययुक्ते" ( पा० सू० २ । ३ । ८ )—इति द्वितीया । तथा यश्च 'अस्मै' यजमानाय 'अरातीयति' अरातिः शत्रुरिवाचरति, सः 'उपभृतमनु' उपभृत् तस्य भाग इत्यर्थः । अत एव तैत्तिरीयकम्--"यजमानदेवत्या वै जुहूः—भ्रातृव्यदेवत्योपभृत्"—इति ( तै. ब्रा. ३ । ९ । ४ ) । तथा भोक्तुर्भोग्यस्य च क्रमेण जुहूपभृतौ भागावित्याह—अत्तैवं जुहूमिति । तद्भागत्वेन तत्तादात्म्यमाह—अत्तैव जुहूरिति । प्राग्विहितं तयोराज्यग्रहणं स्तुत्यर्थमनुवदितुमनुसन्धत्ते—स वा इति ॥ ११ ॥

तत्र जुह्वां चतुर्ग्रहणमनूद्य संख्याल्पीयस्त्वं प्रशंसति—स यदिति । जुह्वा अत्तृरूपत्वादष्टसंख्यातश्चतुःसंख्याया अल्पीयस्त्वेनात्तारमेव परिमिततरम्, अतः 'कनीयांसं' अल्पीयांसम् करोति । उपभृति—आज्यग्रहणसंख्यामनूद्य तद्भूयस्त्वं प्रशंसति—अथ यदिति । आद्यरूपा ह्युपभृत्, तत्र भोक्तृरूपजुह्वः संख्याबाहुल्यात् 'आज्यं' भोग्यवस्तुजातमेव 'अपरिमिततरम्' अधिकतरम् । अत एव 'भूयांसं' बहुतरम्, अतिशयेन बहुलं करोति । तद्धि समृद्धमित्यादि । यत् खलु भोक्तॄणामल्पीयस्त्वम्, भोग्यवस्तुजातस्य च भूयस्त्वम्, तत् खलु समृद्धमित्यर्थः ॥ १२ ॥

जुहूपभृतोराज्यग्रहणे प्रतिनियतं धर्मविशेषं विधत्ते—स वा इति । 'भूयः' बहुतरमधिकमाज्यं जुह्वां यथा भवति तथा सम्यक् पूर्णेन स्रुवेण कर्त्तव्यम्; 'कनीयः' अल्पतरमुपभृति गृह्यमाणमाज्यं यथा भवति तथाऽर्द्धपूर्णस्रुवेण कार्यमित्यर्थः ॥ १३ ॥

जौह्वाज्यस्य विहितं भूयस्त्वमनूद्य प्रशंसति—स यदिति । ग्रहणसंख्याह्रासेन भोक्तारं भोग्यजातादल्पीयांसं कुर्वन् भूयोग्रहणेन 'तस्मिन्' भोक्तरि—अधिकं 'वीर्यं' सामर्थ्यं तद्धेतुभूतं 'बलं' च स्थापयति । औपभृताज्यस्य विहितमल्पीयस्त्वमनूद्य प्रशंसति—अथ यदिति । संख्याधिक्येन भोग्यपदार्थमपरिमितं कुर्वन्, अल्पी-

मबलीयाᳬसं करोति तस्मादुत राजापारां व्विशं प्रावसायाप्येकवेश्मनैव जिनाति त्वद्यथा त्वत्कामयते तथा सचत ऽएतेनो ह तद्वीर्येण यज्जुह्वां भूय ऽआज्यं गृह्णाति स यज्जुह्वां गृह्णाति जुह्वैव तज्जुहोति यदुपभृति गृह्णाति जुह्वैव तज्जुहोति ॥ १४ ॥

तदाहुः। कस्मा ऽउ तर्ह्युपभृति गृह्णीयाद्यदुपभृता न जुहोतीति स यद्धो- पभृता जुहुयात्पृथग्घैवेमाः प्रजाः स्युर्नैवात्ता स्यान्नाद्यः स्यादथ यत्तज्जु- ह्वैव समानीय जुहोति तस्मादिमा व्विशः क्षत्रियाय बलिᳬहरन्त्यथ यदुपभृति गृह्णाति तस्मादु क्षत्रियस्यैव व्वशे सति व्वैश्यं पशव ऽउपति- ष्ठन्तेऽथ यत्तज्जुह्वैव समानीय जुहोति तस्माद्यदोत क्षत्रियः कामयतेऽथाह व्वैश्यमपि यत्ते परो निहितं तदाहरेति तं जिनाति त्वद्यथा त्वत्कामयते तथा सचत ऽएतेनो ह तद्वीर्येण ॥ १५ ॥

---

तरं भूयांसं कुर्वंस्तमवीर्यमबलीयांसं करोति । तस्मादुत राजाऽपारां विशं प्रावसाय, अप्येकवेश्म- नैव जिनाति । त्वद्यथा त्वत्कामयते तथा सचते–एतेनो ह तद्वीर्येण–यज्जुह्वां भूय आज्यं गृह्णाति। स यज्जुह्वां गृह्णाति–जुह्वैव तज्जुहोति, यदुपभृति गृह्णाति–जुह्वैव तज्जुहोति ॥ १४ ॥

तदाहुः–कस्मा उ तर्ह्युपभृति गृह्णीयात् यदुपभृता न जुहोतीति। स यद्धोपभृता जुहुयात्–- पृथग्घैवेमाः प्रजाः स्युः–नैवात्ता स्यात्, नाद्यः स्यात् । अथ यत्तज्जुह्वैव समानीय जुहोति–तस्मा- दिमा विशः क्षत्त्रियाय बलिं हरन्ति । अथ यदुपभृति गृह्णाति–तस्मादु क्षत्त्रियस्यैव वशे सति वैश्यं पशव उपतिष्ठन्ते । अथ यत्तज्जुह्वैव समानीय जुहोति–तस्माद्यदोत क्षत्त्रियः कामयते–अथाह वैश्यम्–' अपि यत्ते परो निहितम्, तदाहरेति ' तं जिनाति । त्वद्यथा त्वत्कामयते तथा सचते–एतेनो ह तद्वीर्येण ॥ १५ ॥

---

यस आज्यस्य ग्रहणेन ' तम् ' आद्यम् ' अवीर्यं ' वीर्यरहितं बलरहितं च करोति । तस्मादिति । यस्मादेव- माद्यवर्गो बलरहितः ' अबलीयान् ' तस्मादेव कारणात्, सार्वभौमो ' राजा ' ' अपारां ' निरवधिकां ' विशं ' राज्यं ' प्रावसाय ' प्राप्यापि ' एकवेश्मनैव' एकगृहात्मनैव ' जिनाति ' जयति स्वाधीनं करोति। तत्र च'त्वत्- त्वत् ' एकमेकं वस्तु यथा कामयते तथा ' सचते ' समवैति, प्राप्नोति । ' त्वत्'–शब्द एकशब्द–समानार्थः । " उत त्वः पश्यन्न ददर्श वाचम् "–( ऋ. सं. मं. १० । ७१ । ४ ) इत्यादौ तथा दृष्टत्वात् । यद्वा त्वदिति निपातश्चार्थे; ( निरु. १ । ३ । ९ ) जिनाति च, यथा च 'कामयते'–इति योज्यम् । तदेतद्राज्ञः सामर्थ्यम्, एतेनैव वीर्येण जनितम्; ' यद् ' वीर्यं जुह्वां भूयोग्रहणेन भोक्तुर्निष्पन्नमित्यर्थः । जुहूपभृद्धृतयोराज्ययो- र्जुह्वैव होमः कर्त्तव्य इति विधत्ते–स यदिति ॥ १४ ॥

उपभृतो होमसाधनत्वाभावे तत्राज्यग्रहणं किमर्थमित्याक्षिपति–तदाहुरिति । उपभृति ग्रहणं समर्थयिष्यं- स्तावत्तस्या होमसाधनत्वे दोषमाह–स यद्धोपभृतेति । होमसाधनत्वे जुहूवदुपभृतोऽपि स्वातन्त्र्यादन्नस्थानीयाः इमाः ' सर्वाः प्रजाः राज्ञः सकाशात् ' पृथक् ' स्वतन्त्रा एव भवेयुः; तथा च राजा नैवात्ता स्यात्,

तानि वा॒ऽएता॒नि । छन्दो॑भ्य ऽआज्या॑नि गृह्य॒न्ते स य॒च्चतु॒र्जुह्वां गृह्णाति गाय॒त्र्यै तद्गृ॑ह्णा॒त्यथ य॒दष्टौ कृत्व॑ ऽउपभृ॒ति गृ॒ह्णाति त्रिष्टु॒ब्जगती॑भ्यां तद्गृ॑ह्णा॒त्यथ य॒च्चतु॒र्ध्रुवा॒यां गृह्णा॒त्यनु॒ष्टुभे तद्गृ॑ह्णाति वाग्वा ऽअनुष्टुब्वाचो वा ऽइदꣳसर्वं प्रभवति तस्माद् ध्रुवाया ऽएव सर्वो यज्ञः प्रभवतीयं वा ऽअनुष्टुबस्यै वा ऽइद ꣳ सर्वं प्रभवति तस्माद् ध्रुवाया ऽएव सर्वो यज्ञः प्रभवति ॥ १६ ॥

तानि वा एतानि छन्दोभ्य आज्यानि गृह्यन्ते । स यच्चतुर्जुह्वां गृह्णाति–गायत्र्यै तद् गृह्णाति । अथ यदष्टौ कृत्व उपभृति गृह्णाति–त्रिष्टुब्जगतीभ्यां तद् गृह्णाति । अथ यच्चतुर्ध्रुवायां गृह्णाति अनुष्टुभे तद् गृह्णाति । वाग् वा अनुष्टुप् । वाचो वा इदं सर्वं प्रभवति । तस्माद् ध्रुवाया एव सर्वो यज्ञः प्रभवति । इयं वा अनुष्टुप्, अस्यै वा इदं सर्वं प्रभवति । तस्माद् ध्रुवाया एव सर्वो यज्ञः प्रभवति ॥ १६ ॥

राज्यमपि नैव भोग्यं भवेदित्यर्थः । औपभृतमाज्यं जुह्वामानीय, तयैव होमे तु नोक्तदोष इत्याह–**अथ यदिति**। होमाभावे चोपभृति कस्माद् ग्रहणमित्यस्योत्तरमाह–**अथ यादिति** । यस्मादेव होमाय जुहूमपेक्षमाणायामुपभृत्याज्यं गृह्यते, तस्मादेव कारणात् 'क्षत्रियस्य वशे' रक्षार्थं क्षत्रियाधीनत्वे सत्येव, वैश्यं 'पशवः' गवाद्याः ' उपतिष्ठन्ते ' उपभृति ग्रहणाद्वैश्यस्य धनसमृद्धिर्भवतीत्यर्थः ।

**अथ यदि**त्यादि । यस्मादौपभृतमाज्यं समानीय जुह्वैव जुहोति, नोपभृता; तस्माद्यद्वैव स क्षत्रियः कामयते 'अथ ' अनन्तरमेतं वैश्यं ब्रूते । कथमिति ? हे वैश्य ! 'ते' तव ' परः' परस्तादन्यत्र गोप्यस्थाने निहितं 'यत्' धनमस्ति, तदाहरेति । एवमुक्त्वा ' तं ' वैश्यं ' जिनाति ' धनापहारेण हीनं करोति । अन्यत् पूर्ववत् । **एतेनो ह तद्वीर्येणे**ति । औपभृताज्यस्य जुहूसमानयनजनितवीर्येणेत्यर्थः ॥ १९ ॥

ध्रौवस्याज्यस्य प्रागुक्तं सर्वयज्ञसाधारण्यं द्रढयितुं जुह्वादिष्वाज्यग्रहणं प्रकारान्तरेण प्रशंसति–**तानि वा** इति । सामान्योक्तं विवृणोति–**स यदि**ति । प्राथम्यसाम्यात् पादचतुष्टयोपेतत्वेन चतुःसंख्यासाम्याच्च जुह्वां ग्रहणं गायत्र्यर्थमित्यर्थः । ननु त्रिपदा गायत्री, कथमस्याश्चतुःसंख्यायोगः ? सत्यम् । अष्टाक्षरैः पादैस्त्रिपदा, षडक्षरैः पादैश्चतुष्पदापि भवति । अत एवान्यत्राम्नायते–" सैषा चतुष्पदा षड्विधा गायत्री "–इति ( छां० ब्रा० ९ । १२ । ९ । ) त्रिष्टुब्जगत्योर्मिलितयोः पादानामष्टसंख्या भवति । तथा चोपभृत्यष्टकृत्वो ग्रहणं ताभ्यामर्थे संपद्यते, एवमेव पादसंख्यासाम्यात् ध्रुवायां चतुर्ग्रहणमनुष्टुबर्थं भवतीत्यर्थः । अनेन ध्रुवाया अनुष्टुबर्थत्वोपजीवनेन तत्स्थस्याज्यस्य सर्वयज्ञसाधारण्यमभिप्रेत्याह-- **वाग् वा** इति । " अनुष्टुप् च वै सप्तदशश्च समभवतांऽसानुष्टुप् चतुरुत्तराणि छन्दांऽस्यसृजत षडुत्तरान्स्तोमान्त्सप्तदशः "–इति सामब्राह्मणे ( ताण्ड्य० ब्रा० १० प्र० २ खण्डे ) सर्वेषां छन्दसामनुष्टुप्सकाशात् सृष्टेराम्नातत्वात् सा वागात्मिका । **वाचो वा** इत्यादि । ' वाचः ' शब्दस्य सकाशात् 'इदं ' सर्वमर्थजातं प्रभवति । अत एव जगतः शब्दविवर्तत्वमाहुः–

" [1]अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् । विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः " इति ॥

तथाऽन्यत्रापि शब्दानुवेधात्तत्कार्यत्वमर्थप्रपञ्चस्योक्तम्–

" [2]न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते । अनुविद्धमिव ज्ञानं सर्वं शब्देन गम्यते "–इति ॥

१–हरिकारिकेयम् । २–इदं वाक्यपदीये ।

स गृह्णाति । धाम नामासि प्रियं देवानामित्येतद्वै देवानां प्रियतमं धाम यदाज्यं तस्मादाह धाम नामासि प्रियं देवानामित्यनाधृष्टं देवयजनमसीति वज्रो ह्याज्यं तस्मादाहानाधृष्टं देवयजनमसीति ॥ १७ ॥

सऽएतेन यजुषा । सकृज्जुह्वां गृह्णाति त्रिस्तूष्णीमेतेनैव यजुषा सकृदुपभृति गृह्णाति सप्तकृत्वस्तूष्णीमेतेनैव यजुषा सकृद् ध्रुवायां गृह्णाति त्रिस्तूष्णीं तदाहुस्त्रिस्त्रिरेव यजुषा गृह्णीयात्त्रिवृद्धि यज्ञ इति तदु नु सकृत्सकृदेवात्रो ह्येव त्रिर्गृहीतं सम्पद्यते ॥ १८ ॥ ५ ॥

इति द्वितीयप्रपाठके पञ्चमं ब्राह्मणम् ( ३. २. ) ॥

---

स गृह्णाति—"धाम नामासि प्रियं देवानाम्"—( १अ० ३१ मं० ) इति । एतद्वै देवानां प्रियतमं धाम—यदाज्यम् । तस्मादाह—धाम नामासि प्रियं देवानामिति । "अनाधृष्टं देवयजनमसि" ( १ अ० ३१ मं० ) इति । वज्रो ह्याज्यम् । तस्मादाह—अनाधृष्टं देवयजनमसीति ॥ १७ ॥

स एतेन यजुषा सकृज्जुह्वां गृह्णाति, त्रिस्तूष्णीम् । एतेनैव यजुषा सकृदुपभृति गृह्णाति, सप्तकृत्वस्तूष्णीम् । एतेनैव यजुषा सकृद् ध्रुवायां गृह्णाति, त्रिस्तूष्णीम् । तदाहुः—त्रिस्त्रिरेव यजुषा गृह्णीयात्—त्रिवृद्धि यज्ञ इति । तदु नु सकृत्सकृदेव अत्रो ह्येव त्रिर्गृहीतं संपद्यते ॥ १८ ॥

---

यस्मादेवं वाचः सर्वजगदुत्पत्तिहेतुत्वम्, तस्मात् तत्सम्बन्धिन्या ध्रुवाया अपि सर्वयज्ञहेतुत्वं युक्तमित्यर्थः । इतोऽपि ध्रुवायाः सर्वयज्ञहेतुत्वमित्याह—**इयं वा अनुष्टुप्**—इति ॥ १६ ॥

विहितमाज्यग्रहणमनूद्य मन्त्रं विधत्ते—**स** इति । मन्त्रगतस्य धामशब्दस्य विवक्षितमर्थमाह—**एतद्वा** इति । धामशब्दस्तेजोवाची, ( निरु० ९ । ३ । ७ ) तद्धेतुत्वादाज्यमपि धामेत्युच्यत इत्यर्थः । मन्त्रशेषमनूद्य तत्रानाधृष्टपदस्य तात्पर्यगम्यमर्थमाह—**अनाधृष्टमि**ति । 'हि' यस्मात् 'आज्यं वज्रः' "घृतं खलु वै देवा वज्रं कृत्वा सोममघ्नन्"—इति श्रुतेः । वज्रश्च धर्षितुमशक्यत्वात् 'अनाधृष्टः' अतस्तदात्मकत्वादाज्यमप्यनाधृष्टमित्यर्थः ॥ १७ ॥

अनेन मन्त्रेण ग्रहणे विशेषमाह—**स एतेने**ति । पक्षान्तरमाह—**तदाहु**रिति । 'तत्' तत्र ग्रहणविषये ब्रह्मवादिनः 'आहुः' अनेन मन्त्रेण जुह्वादिषु 'त्रिस्त्रिः' गृह्णीयात् । तथा च समन्त्रकग्रहणस्य प्रत्येकं त्रिरावृत्तत्वाद् यज्ञस्य त्रिवृत्त्वं सिध्यतीति तेषामाशयः । सकृत्त्वपक्षं निगमयति—**तदु न्वि**ति । सर्वास्वपि स्रुक्षु सकृत्सकृदेव मन्त्रेण गृह्णीयात् । अत्र सकृद्ग्रहणपक्षेऽपि हि ग्रहणस्य त्रित्वसंख्या समाहारेण सम्पद्यत इत्यर्थः ॥ १८ ॥ ५ ( ३. २. )

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथभाष्ये
तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

---

१–संहितायामत्र प्रथमाध्यायः सम्पूर्णः । २–"स्रुवेणाज्यग्रहणञ्चतुर्जुह्वां धामनामेति सकृन्मन्त्रः । अष्टा उपभृत्यल्पीयोऽनुयाजाश्चेत् । ध्रुवायां च जुहूवत् ।" का. श्रौ. सू. २ । ७ । ९ । १० । १५ । ३–उपरिष्टादिहैव ४ । १ । ४ । ८ । ४–कर्मपरत्वेनात्र पक्षापक्षविचारतात्पर्यं का. श्रौ. सू. २ । ७ । १३–१७ । पर्यालोच्यम् ।

प्रोक्षणीरध्वर्युरादत्ते । स इध्ममेवाग्रे प्रोक्षति कृष्णोऽस्याखरेष्ठोऽग्नये त्वा जुष्टं प्रोक्षामीति तन्मेध्यमेवैतदग्नये करोति ॥ १ ॥

(त्य) अथ वेदिं प्रोक्षति । वेदिरसि बर्हिषे त्वा जुष्टां प्रोक्षामीति तन्मेध्यामेवैतद्बर्हिषे करोति ॥ २ ॥

(त्यु) अथास्मै बर्हिः प्रयच्छति । तत्पुरस्ताद्ग्रन्थ्यासादयति तत्प्रोक्षति बर्हिरसि स्रुग्भ्यस्त्वा जुष्टं प्रोक्षामीति तन्मेध्यमेवैतत्स्रुग्भ्यः करोति ॥ ३ ॥

(त्यु) अथ याः प्रोक्षण्यः परिशिष्यन्ते । ताभिरोषधीनां मूलान्युपनिनयत्यदित्यै व्युन्दनमसीतीयं वै पृथिव्यदितिस्तदस्या एवैतदोषधीनां मूलान्युपोनत्ति ता इमा आर्द्रमूला ओषधयस्तस्माद्यद्यपि शुष्काण्यग्राणि भवन्त्यार्द्राण्येव मूलानि भवन्ति ॥ ४ ॥

---

**इध्माबर्हिषोः प्रोक्षणस्तरणपूर्वकं परिधिपरिधानम् ।**

प्रोक्षणीरध्वर्युरादत्ते । स इध्ममेवाग्रे प्रोक्षति–"कृष्णोऽस्याखरेष्ठोऽग्नये त्वा जुष्टं प्रोक्षामि"–(२ अ. १ मं.) इति । तन्मेध्यमेवैतदग्नये करोति ॥ १ ॥

अथ वेदिं प्रोक्षति–"वेदिरसि बर्हिषे त्वा जुष्टां प्रोक्षामि"–(२ अ. १ मं.) इति । तन्मेध्यामेवैतद् बर्हिषे करोति ॥ २ ॥

अथास्मै बर्हिः प्रयच्छति । तत्पुरस्ताद् ग्रन्थ्यासादयति । तत् प्रोक्षति–" बर्हिरसि स्रुग्भ्यस्त्वा जुष्टं प्रोक्षामि "–(२ अ. १ मं.) इति तन्मेध्यमेवैतत् स्रुग्भ्यः करोति ॥ ३ ॥

अथ याः प्रोक्षण्यः परिशिष्यन्ते, ताभिरोषधीनां मूलान्युपनिनयति–" अदित्यै व्युन्दनमसि "–(२ अ. २. मं.) इति । इयं वै पृथिवी–अदितिः, तदस्या एवैतदोषधीनां मूलान्युपो-

---

अथेध्मादीनां प्रोक्षणं विधत्ते–प्रोक्षणीरध्वर्युरादत्त इत्यादिना । अग्नये करोतीति । अग्नौ हीध्म आधास्यते, अतोऽग्न्यर्थं प्रोक्षणेनेध्मं मेध्यं कृतवान् भवतीत्यर्थः ॥ १ ॥

अथ वेदिमिति । बर्हिषे करोतीति । ' बर्हिषे त्वा '–इति मन्त्रलिङ्गात् स्तारिष्यमाणबर्हिरर्थं वेदिं शुद्धां करोति । प्रोक्षणेन बर्हिस्तरणयोग्यतां वेदेरापादयतीत्यर्थः ॥ २ ॥

अथेति । पुरस्ताद्ग्रन्थीति ' पुरस्तात् ' पूर्वभागे सन्नहनरज्जोर्ग्रन्थिर्यथा भवति तथाऽऽसादयतीत्यर्थः । स्रुग्भ्यः करोतीति । बर्हिष उपरि स्रुचामासाद्यमानत्वात् तद्योग्यतामेतन्मन्त्रकरणकेन प्रोक्षणेन बर्हिषः संपादयतीत्यर्थः ॥ ३ ॥

अवशिष्टानां प्रोक्षणीनां विनियोगमाह–अथेति । ओषधीनामिति । स्तरणार्थमाहृतबर्हिर्लक्षणानामोषधीनामित्यर्थः । सूत्रितं हि कात्यायनेन–शेषं मूलेषूपसिञ्चत्यदित्यै व्युन्दनमिति (श्रौ. सू. २. २१०) । मन्त्रस्य

---

१–' इध्मं प्रोक्षति विस्रंस्य वेदिं च बर्हिः प्रतिगृह्य वेद्यां कृत्वा पुरस्ताद् ग्रन्थिं कृष्णोऽसीति प्रतिमन्त्रम् " (श्रौ. सू. २. २०९) तथा " इध्मः समिन्धनात् " इति निरु. ८ । २ । १ । २–" त्रेधा बर्हिः सन्नह्य पुनरेकधा " का. श्रौ. सू. ५ । १ २५ । " बर्हिः परिबर्हणात् " इति निरुक्त ८ । २ । ५ । ३–एतत्संज्ञकानामपामित्यर्थः ।

(न्त्यु)अथ विस्त्रᳫंस्य ग्रन्थिम् । (म्पु)पुरस्तात्प्रस्तरᳫं गृह्णाति विष्णोस्तुपोऽसीति यज्ञो वै विष्णुस्तस्येयमेव शिखा स्तुप ऽएतामेवास्मिन्नेतद्दधाति पुरस्ताद्गृह्णाति । पुरस्ताद्ध्ययᳫं स्तुपस्तस्मात्पुरस्ताद्गृह्णाति ॥ ५ ॥

( त्यु ) अथ सन्नहनं विस्त्रᳫं सयति । प्रक्लृप्तᳫं हैवास्य स्त्री विजायत ऽइति तस्मात्सन्नहनं विस्त्रᳫं सयति तद्दक्षिणायाᳫं श्रोणौ निदधाति नीविर्हैवास्यैषा दक्षिणत ऽइव हीयं नीविस्तस्माद्दक्षिणायाᳫं श्रोणौ निदधाति तत्पुनरभिच्छादयत्यभिच्छन्नेव हीयं नीविस्तस्मात्पुनरभिच्छादयति ॥ ६ ॥

---

न्ति । ता इमा आर्द्रमूला ओषधयः । तस्माद्यद्यपि शुष्काण्यग्राणि भवन्ति—आर्द्राण्येव मूलानि भवन्ति ॥ ४ ॥

अथ विस्रंस्य ग्रन्थिं पुरस्तात् प्रस्तरं गृह्णाति—"विष्णोस्तुपोऽसि"—( २ अ. २ मं. ) इति । यज्ञो वै विष्णुः, तस्येयमेव शिखा स्तुपः । एतामेवास्मिन्नेतद्दधाति । पुरस्ताद् गृह्णाति । पुरस्ताद्ध्ययं स्तुपः, तस्मात् पुरस्ताद् गृह्णाति ॥ ५ ॥

अथ सन्नहनं विस्रंसयति । प्रक्लृप्तं हैवास्य स्त्री विजायत इति । तस्मात् सन्नहनं विस्रंसयति । तद्दक्षिणायां श्रोणौ निदधाति । नीविर्हैवास्यैषा । दक्षिणत इव हीयं नीविः । तस्माद्दक्षिणायां श्रोणौ निदधाति । तत्पुनरभिच्छादयति । अभिच्छन्नेव हीयं नीविः । तस्मात्पुनरभिच्छादयति ॥ ६ ॥

---

प्रयोजनमाह—इय वा इति । पृथिव्याः संबन्धिन्यो या व्रीहियवाद्या ओषधयः, तासामेव मूलानि—आर्द्रीकरोति । "उन्दी क्लेदने" (रु. प. २) इति धातुः । अनेनोदकेन ता इमा ओषधयः आर्द्रमूला भवन्ति; यस्मादेवं तस्मादेव कारणादोषधीनामग्रभागेषु शुष्केष्वपि मूलभागा आर्द्रतयैव दृश्यन्त इत्यर्थः ॥ ४ ॥

प्रस्तरस्य ग्रहणं विधत्ते—अथेति । बर्हिःसन्नहनरज्जोर्ग्रन्थिं विमुच्य 'पुरस्तात्' पूर्वदिग्भागे करोति । "विष्णोः'—इति मन्त्रेण प्रस्तरं गृह्णीयात् । मन्त्रस्य प्रयोजनमाह—यज्ञो वा इति । आवहनीयसाध्यस्य यज्ञात्मकस्य 'विष्णोः' प्रस्तरमुष्टिरेव शिखारूपः 'स्तुपः' केशसंघातः । आहवनीयनिकटे तद्ग्रहणाच्छिखामेव तस्मिन् स्थापितवान् भवतीत्यर्थः । पुरस्ताद् ग्रहणमनूद्य प्रशंसति—पुरस्तादिति । 'अयं' पिण्डीभावेन बद्धो मानुषः 'स्तुपः' केशसङ्घातः शिरसः पूर्वभागे हि भवति; अतो यज्ञस्यापि पूर्वभागे स्तुपधारणाय पुरस्ताद् ग्रहणं युज्यत इत्यर्थः ॥ ५ ॥

सन्नहनरज्जोर्विस्रंसनं विधाय प्रशंसति—अथेति । सन्नहनस्य विस्रंसने सति 'अस्य' यजमानस्य स्त्री 'प्रक्लृप्तं' प्रकर्षेण क्लृप्तं दशमाससंपूर्णावयवमपत्यं 'विजायते' प्रसूते । 'इति'—शब्दो हेतौ । यस्मादेवं तस्मादित्यर्थः । तस्याः सन्नहनरज्जोर्देशविशेषे स्थापनं विधत्ते—तादिति । नीविर्हैवेति । 'अस्य' यजमानस्य

---

१—" कुशप्रस्वः प्रस्तर उपसन्नद्धं बर्हिः " का. श्रौ. सू. ५ । १ । २६ । पुष्पितदर्भमञ्जर्यो बर्हिषः समीपे बद्धः प्रस्तरो भवतीत्यर्थः । प्रस्तरो दर्भमुष्टिरूपः । इति महीधरः । २–' पवित्रे निधाय प्रणीतासु बर्हिर्विस्रंस्य पुरस्तात्प्रस्तरग्रहणं विष्णोरिति ' (श्रौ. सू. २. २११ ) । ३–'ब्रह्मणे प्रदाय सन्नहनं विस्रंस्य–' ( श्रौ. सू. २. २१२ ) । ४–' वेदिश्रोणौ निधाय–'(श्रौ. सू. २. २१२. ) ।

( त्यु ) अथ बर्हि स्तृणाति । ( त्य ) अयं वै स्तुपः प्रस्तरोऽथ यान्यवाञ्चि लोमानि तान्येवास्य यदितरं बर्हिस्तान्येवास्मिन्नेतद्दधाति तस्माद्बर्हि स्तृणाति ॥ ७ ॥

योषा वै वेदिः । ( स्ता ) तामेतद्देवाश्च पर्यासते ये चेमे ब्राह्मणाः शुश्रुवाꣳसोऽनूचानास्तेष्वेवैनामेतत्पर्यासीनेष्वनग्नां करोत्यनग्नताया ऽएव तस्माद्बर्हि स्तृणाति ॥ ८ ॥

यावती वै वेदिः । ( स्ता ) तावती पृथिव्योषधयो बर्हिस्तदस्यामेवैतत्पृथिव्यामोषधीर्दधाति ता ऽइमा ऽअस्यां पृथिव्यामोषधयः प्रतिष्ठितास्तस्माद्बर्हि स्तृणाति ॥ ९ ॥

तद्वै बहुलꣳ स्तृणीयादित्याहुः । ( र्यं ) यत्र वा ऽअस्यै बहुलतमा ऽओषधयस्तदस्या ऽउपजीवनीयतमं तस्माद्बहुलꣳ स्तृणीयादिति तद्वै

---

अथ बर्हिस्तृणाति । अयं वै स्तुपः प्रस्तरः । अथ यान्यवाञ्चि लोमानि, तान्येवास्य; यदितरं बर्हिः; तान्येवास्मिन्नेतद्दधाति । तस्माद् बर्हिस्तृणाति ॥ ७ ॥

योषा वै वेदिः । तामेतद्देवाश्च पर्यासते, ये चेमे ब्राह्मणाः शुश्रुवांसोऽनूचानाः । तेष्वेवैनामेतत् पर्यासीनेष्वनग्नां करोति—अनग्नताया एव । तस्माद्बर्हिस्तृणाति ॥ ८ ॥

यावती वै वेदिः, तावती पृथिवी; ओषधयो बर्हिः । तदस्यामेवैतत् पृथिव्यामोषधीर्दधाति । ता इमा अस्यां पृथिव्यामोषधयः प्रतिष्ठिताः । तस्माद्बर्हिस्तृणाति ॥ ९ ॥

तद्वै बहुलं स्तृणीयादित्याहुः । यत्र वा अस्यै बहुलतमा ओषधयः, तदस्या उपजीवनीयतमम् ।

---

' एषा ' रज्जुर्नीविरेव भवतीत्यर्थः । नीविरूपत्वं दृष्टान्तेनोपपादयति—**दक्षिणत इवेति** । लोके हि वाससः परिधाने दक्षिणपार्श्व एव हि नीविः परिकल्प्यते, तस्माद् दक्षिणश्रोणौ सन्नहनरज्जुनिधानं नीविपरिकल्पनमेव भवतीत्यर्थः । सन्नहनस्योपरि दर्भान्तरैश्छादनं विधत्ते—**तत्पुनरिति** । तदुपपादयति—**अभिच्छन्नेवेति** । उपरि वाससा ' छन्नेव ' आवृतेव हि लौकिकी नीविर्भवति, तस्मादभिच्छादनं कार्यमित्यर्थः ॥ ६ ॥

बर्हिषः स्तरणं विधत्ते—**अथेति** । ' स्तृणातीति ' वेदिं छादयतीत्यर्थः; तत् स्तरणं प्रशंसति—**अयं वा** इति । यः ' अयं ' प्रस्तरः स ऊर्ध्वबद्धकेशसंघातात्मकः स्तुपः; अथ तद्व्यतिरिक्तानि श्मश्रुप्रभृतीनि यान्यवाङ्मुखानि लोमानि,—स्तीर्यमाणेन बर्हिषा ' अस्य ' यज्ञस्य तान्येव सम्पाद्यन्त इत्यर्थः ॥ ७ ॥

**योषा वा** इत्यादि । हविर्ग्रहणायागत्य ये देवा वेदेरुपरित उपविशन्ति, ये च ' शुश्रुवांसः ' प्रयोगाभिज्ञानाः ' अनूचानाः ' अनुष्ठातृरूपा ऋत्विग्रूपा ब्राह्मणाः समीपे वर्त्तन्ते; स्त्रीरूपा इयं वेदिः स्वयमत्रानावृता सती तेभ्यो लज्जाविशिष्टा भवति; अतस्तस्या बर्हिषाच्छादनमनग्नतायै सम्पद्यत इत्यर्थः ॥ ८ ॥

प्रकारान्तरेण स्तरणं प्रशंसति—**यावती वा** इति ॥ ९ ॥

स्तरणस्य श्लक्ष्णतां विधत्ते—**तद्वा** इति । ' बहुलं ' निरन्तरं यथा भूमिर्न दृश्यते तथा स्तृणीयादित्यभिज्ञाः

---

१-'अन्यैरवच्छाद्य '-( श्रौ. सू. २. २१२ ) । २-' वेदिं स्तृणात्यूर्णम्रदसमिति त्रिवृत् '-( श्रौ. सू. २. २१३ ) ।

तदाहर्त्तर्येवाधि त्रिवृत्स्तृणाति त्रिवृद्धि यज्ञोऽथो ऽअपि प्रबर्हꣳ स्तृणीयात्स्तृणन्ति बर्हिरानुषगिति ह्यृषिणाभ्यनूक्तमधरमूलꣳस्तृणात्यधरमूला ऽइव हीमा ऽअस्यां पृथिव्यामोषधयः प्रतिष्ठितास्तस्मादधरमूलꣳ स्तृणाति ॥ १० ॥

स स्तृणाति । ( त्यू ) ऊर्णम्रदसं त्वा स्तृणामि स्वासस्थां देवेभ्य ऽइति साध्वीं देवेभ्य ऽइत्येवैतदाह यदाहोर्णम्रदसं त्वेति स्वासस्थां देवेभ्य ऽइति स्वासदां देवेभ्य ऽइत्येवैतदाह ॥ ११ ॥

---

तस्माद् बहुलं स्तृणीयादिति । तद्वै तदाहर्त्तर्येवाधि । त्रिवृत् स्तृणाति, त्रिवृद्धि यज्ञः । अथो अपि प्रबर्हं स्तृणीयात्–" स्तृणन्ति बर्हिरानुषगिति " ह्यृषिणाभ्यनूक्तम् । अधरमूलं स्तृणाति अधरमूला इव हीमा अस्यां पृथिव्यामोषधयः प्रतिष्ठिताः । तस्मादधरमूलं स्तृणाति ॥ १० ॥

स स्तृणाति–" ऊर्णम्रदसं त्वा स्तृणामि स्वासस्थां देवेभ्यः "–( २ अ० २ मं० ) इति ।

---

कथयन्तीत्यर्थः । एवं वदतामभिप्रायमाह–**यत्र वा** इति । ' अस्यै ' षष्ठ्यर्थे चतुर्थी ( पा० सू० २ । ३ । ६ वा० १ ) ' अस्याः ' पृथिव्याः सम्बन्धिनि ' यत्र ' यस्मिन् स्थाने ओषधीनां बाहुल्यमस्ति तदेव स्थानं सर्वैः प्राणिभिरतिशयेनोपजीवनीयं भवति, तस्मादुपजीवनीयत्वसिद्धये बहुलं स्तरणं कर्तव्यमित्यनेनाभिप्रायेणेत्यर्थः । अस्तु भूमेरुपजीवनीयतमत्वम्, तावता यजमानस्य को लाभः ? तत्राह–**तद्वा** इति । ' तस्य ' बर्हिषो यः ' आहर्त्ता ' यजमानः, तस्मिन्नेव ' तद् ' बहुलस्तरणकृतमुपजीवनीयतमत्वलक्षणं फलं भवति; अनुष्ठेयक्रियाफलस्य कर्त्तृगामित्वात् । अत एव जैमिनिः सूत्रयामास–" शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात् " इति ( ३ । ७ । १८; अ. मा. ३ । ७ । ८ । ) ' आहर्त्तर्येवाधि '–इत्यधिशब्दो विभक्त्यर्थानुवादी ॥

स्तरणस्य त्रिवृत्त्वं विधत्ते–**त्रिवृत् स्तृणाती**ति । त्रिभिर्मुष्टिभिर्बर्हिस्त्रिधा यथा भवति तथा वेदिं छादयेत् । तत्रैकं मुष्टिं वेदेः पूर्वभागे स्तीर्त्वा, द्वितीयं मुष्टिं तन्मध्यमभागे पूर्वमुष्टिना सम्बद्धं स्तृणीयात् । ततस्तृतीयं मुष्टिमपि वेदेरपरार्द्धे द्वितीयमुष्टिना सम्बद्धं स्तृणीयादिति । एवं स्तरणं प्रत्यक्परिसमाप्तिरित्येकः पक्षः । पक्षान्तरमाह–**अथो** इति । ' प्रबर्हं ' प्रबृह्य प्रबृह्य प्रथममुष्टिं वेद्यपरार्द्धे स्तीर्त्वा, तस्याग्रमुद्यम्याधस्तात् तत्सम्बद्धं द्वितीयं मुष्टिं स्तृणीयात्, एवमेव तृतीयमपि। एवं मुष्टित्रयस्य परस्परसम्बन्धं ऋङ्मन्त्रपादोदाहरणेन द्रढयति–**स्तृणन्ती**ति । ' आनुषक् ' अनुषक्तं परस्परसम्बद्धं बर्हिरध्वर्यवः स्तृणन्तीति ऋक्पादस्यार्थः । ' अतः ' अस्मान्मन्त्रलिङ्गात् पूर्वं मुष्टिं प्रबृह्य तस्याधस्तात् तत्संसक्तमेवापरं मुष्टिं स्तृणीयादिति भावः । अस्मिन् पक्षे स्तरणस्य प्रागपवर्गता ।

कात्यायनः पक्षद्वयमपि सूत्रयामास–"पश्चादपवर्गम्" ( श्रौ. सू. २. २१६ ) "प्रवृहन् वा" ( श्रौ. सू. २. २१७ ) इति । अस्मिन् पक्षद्वयेऽपि बर्हिर्मूलस्याधरत्वं विधाय प्रशंसति[3]–**अधरमूलमि**ति ॥ १० ॥

विहितं स्तरणमनूद्य मन्त्रं विधत्ते–**स स्तृणाती**ति । ऊर्णम्रदसमिति मन्त्रपदस्य पर्यवसितमर्थमाह–**साध्वीमि**ति । ऊर्णासूत्रनिर्मितकम्बलवन्मृदुभूतां त्वां हे वेदे ! स्तृणामीति हि तस्यार्थः । तथा च ' साध्वीं ' शोभनां

---

१–' समाप्यत इत्येकः ' इति प्रतिभाति । २–ऋ. सं. ८ । ४५ । १ निरु. ६ । ३ । ५ । वा. सं. ७ । ३२ । इत्यत्र द्रष्टव्योऽयमृक्पादः । ३–' अधरमूलम् ' (श्रौ. सू. २. २१५) ।

अथाग्निं कल्पयति । शिरो वै यज्ञस्याहवनीयः पूर्वार्द्धो वै शिरः पूर्वार्द्धमेवैतद्यज्ञस्य कल्पयत्युपर्युपरि प्रस्तरं धारयन्कल्पयत्ययं वै स्तुपः प्रस्तर ऽएतमेवास्मिन्नेतत्प्रतिदधाति तस्मादुपर्युपरि प्रस्तरं धारयन् कल्पयति ॥ १२ ॥

( त्यु ) अथ परिधीन्परिदधाति । तद्यत्परिधीन्परिदधाति यत्र वै देवा ऽअग्रेऽग्निं ᳪ होत्राय प्रावृणत तद्धोवाच न वा अहमिदमुत्सहे यद्वो होता स्यां यद्वो हव्यं वहेयं त्रीन्पूर्वान्प्रावृढ्वं ते प्राधन्विषुस्तान्नु मेऽवकल्पयताथवा

---

साध्वीं देवेभ्य इत्येवैतदाह-यदाहोर्णम्रदसं त्वेति । स्वासस्थां देवेभ्य इति–स्वासदां देवेभ्य इत्येवैतदाह ॥ ११ ॥

अथाग्निं कल्पयति । शिरो वै यज्ञस्याहवनीयः । पूर्वार्द्धो वै शिरः–पूर्वार्द्धमेवैतद्यज्ञस्य कल्पयति । उपर्युपरि प्रस्तरं धारयन् कल्पयति । अयं वै स्तुपः प्रस्तरः । एतमेवास्मिन्नेतत् प्रतिदधाति । तस्मादुपर्युपरि प्रस्तरं धारयन् कल्पयति ॥ १२ ॥

अथ परिधीन् परिदधाति । तद् यत्परिधीन् परिदधाति–यत्र वै देवा अग्रेऽग्निं होत्राय प्रावृणत, तद्धोवाच–न वा अहमिदमुत्सहे, यद्वो होता स्याम्, यद्वो हव्यं वहेयम्; त्रीन् पूर्वान् प्रावृढ्वम् ।

---

देवेभ्यः प्रीतिकरीमित्ययमर्थः सम्पद्यत इत्यर्थः । मन्त्रस्य द्वितीयभागमनूद्य व्याचष्टे–**स्वासस्था**मिति । सुखेनासितुमुपवेष्टुं योग्यां ' स्वासस्थाम् ' । एतस्य पदस्याभिप्रायकथनं ' स्वासदाम् '– इति । सुखेनासितुम् आसदनमुपवेशनं कर्त्तुं शक्या ' स्वासदा ' तामित्यर्थः ॥ ११ ॥

अग्नेः प्रबलीकरणं विधत्ते–**अथाग्निमि**ति । ' कल्पयति ' क्लृप्तं हविर्दहनसमर्थं करोतीत्यर्थः । तच्च कल्पनमाहवनीयस्यैवेति प्रतिपादयति–**शिरो वा** इति । देहस्य पूर्वभागो हि शिरः । अत आहवनीयोऽपि वेदेः पूर्वभागेऽवस्थानात् ' यज्ञस्य शिरः ' । तथा च यज्ञस्य पूर्वार्द्धमाहवनीयं कल्पयन् शिर एव कल्पयति । तस्मिन् समये प्रस्तरस्योपरि धारणं विधत्ते–**उपर्युपरी**ति । अग्नेरत्यन्तसन्निकृष्टोपरिभाग इत्यर्थः । " उपर्यध्यधसः सामीप्ये " ( पा० सू० ८ । १ । ७ ) इति द्विर्वचनम् । तद्धारणं प्रशंसति–**अयं वा** इति । योऽयं ' स्तुपः ' केशसङ्घातः शिरसि दृश्यते, अयमेव खलु प्रस्तरः । यज्ञशिरस आहवनीयस्योपरि प्रस्तरं धारयन्, ' एतमेव ' केशसङ्घातं तस्मिन् ' प्रतिदधाति ' सन्दधाति ॥ १२ ॥

परिधिपरिधानं विधत्ते–**अथे**ति । परितो धीयन्त इति ' परिधयः ' " उपसर्गे घोः किः " ( पा० सू० ३. ३. ९२ )–इति कर्मणि किप्रत्ययः । तदेतत् परिधानमुपपादयितुमनुवदति–**तद्यदि**ति । इतिहास-

---

१–' इध्मात्समिधमादायाहवनीयं कल्पयत्युपर्युपरि प्रस्तरं धारयन् ' ( श्रौ. सू. २. २१९ ) । २–दर्भसङ्घातरूपत्वात्केशसङ्घातरूपा शिखेवेति महीधरः । ३–' परिधीन् परिदधात्यार्द्रानेकवृक्षीयान् बाहुमात्रान् पालाशवैकङ्कतकार्ष्मर्यबैल्वान् पूर्वालाभे पूर्वालाभ उत्तरान् खादिरौदुम्बरान् वा मध्यमदक्षिणोत्तरान् गन्धर्व इति प्रतिमन्त्रम् ' ( श्रौ. सू. २-२२१ ) । ४–" परितः समंततः स्थाप्यन्ते " इति परिधयः । " परितः सर्वतः चतुर्दिक्षु निधानात्परिधयः " इति पक्षे तु परिधित्रित्वे दोषः स्यात् । अस्ति च परिधित्रित्वं परिधिचतुष्टुं चेति सम्प्रदायः । तथाहि " बाहुमात्राः परिधय ऋजवः सत्वचोऽव्रणाः । त्रयो भवन्त्यशीर्णाग्रा एकेषान्तु चतुर्दिशम् । क. प्र. २ । ५ । १९ ।

ऽअहमेतदुत्साक्ष्ये यद्वो होता स्यां यद्वो हव्यं वहेयमिति तथेति तानस्मा ऽएतानवाकल्पयंस्त ऽएते परिधयः ॥ १३ ॥

स होवाच । वज्रो वै तान्वषट्कारः प्रावृणग्वज्राद्वै वषट्काराद्बिभेमि यन्मा वज्रो वषट्कारो न प्रवृञ्ज्यादेतैरेव मा परिधत्त तथा मा वज्रो वषट्कारो न प्रवक्ष्यतीति तथेति तमेतैः पर्यदधुस्तन्न वज्रो वषट्कारः प्रावृणक्तद्वर्म्मैवैतदग्नये नह्यति यदेतैः परिदधाति ॥ १४ ॥

त ऽउ हैत ऽऊचुः । (१) इदमु चेदस्मान्यज्ञे युङ्क्थास्त्वेवास्माकमपि यज्ञे भाग ऽइति ॥ १५ ॥

---

ते प्राधन्विषुः; तान्नु मेऽवकल्पयत । अथ वा अहमेतदुत्साक्ष्ये—यद्वो होता स्याम्, यद्वो हव्यं वहेयमिति । तथेति । तानस्मा एतानवाकल्पयन्—त एते परिधयः ॥ १३ ॥

स होवाच—वज्रो वै तान् वषट्कारः प्रावृणक् । वज्राद्वै वषट्काराद्बिभेमि, यन्मा वज्रो वषट्कारो न प्रवृञ्ज्यात् । एतैरेव मा परिधत्त, तथा मा वज्रो वषट्कारो न प्रवक्ष्यतीति । तथेति । तमेतैः पर्यदधुः । तन्न वज्रो वषट्कारः प्रावृणक् । तद्वर्म्मैवैतदग्नये नह्यति—यदेतैः परिदधाति ॥१४॥

त उ हैत ऊचुः—इदमु चेदस्मान् यज्ञे युङ्क्थ, अस्त्वेवास्माकमपि यज्ञे भाग इति ॥ १५ ॥

---

मुखेनैतत्परिधानमुपपादयति—**यत्र वा** इति । यत्रेमम् ' अग्निं ' पुरा ' होत्राय ' होतृकर्मणे देवाः ' प्रावृणत ' प्रवृतवन्तः; ' तत् ' तदानीं सोऽग्निः ' उवाच ' उक्तवान् । कथमिति, तदुच्यते—" न खल्वहमिदानीमुत्साहं करोमि, ' वः ' युष्माकं होता स्यां हव्यं च वहेयम् "—इति । यदेतद्धोतृत्वहव्यवहनादिलक्षणं कार्यं युष्माभिः प्रार्थ्यते, तत्कर्त्तुं नोत्सह इत्यर्थः ।

अनुत्साहकारणमुपन्यस्यति—**त्रीन् पूर्वानिति** । " हे देवाः ! यूयं मदीयान् पूर्वपुरुषान् त्रीन् ' प्रावृढ्वम् ' प्रवृतवन्तः स्थ; ते च तत एव प्रवरणात् ' प्राधन्विषुः ' प्रागमन्; प्रामृषतेत्यर्थः । एतच्च प्रागाम्नातम्—" चतुर्द्धा विहितो ह वा अग्रेऽग्निरास "—( श० प० १ । २ । ३ । १ ) इत्यत्र । **तान्न्वित्यादि** । प्राग्गतान् ' तान् ' मदीयान् पूर्वम् ' अवकल्पयत ' अवक्लृप्तान् मूर्तिसामर्थ्ययुक्तान् कुरुत; ' अथ ' अनन्तरमेव होता स्यामित्यादि ' यदेतदुत्साक्ष्येऽहम् ' एतद्विषयमुत्साहं करिष्ये । ते च देवाः ' तथेति ' अङ्गीकृत्य ' एतानवाकल्पयन् ' समर्थान् मूर्त्यादियुक्तानकुर्वन् ।' ते ' चेमे ' परिधयः ' सञ्जाताः ॥ १३ ॥

एवमाख्यायिकया परिधीनामुत्पत्तिं प्रतिपाद्य, तैरग्नेः परिधानं कार्यमित्येतदपि प्रतिपादयति—**स हेति** । एतद्देवान् प्रत्यग्निरुवाच ' प्रावृणक् ' प्रकर्षेणावर्जयत् । वषट्काराद् भीतं मां ' यत् ' येन परिधानेन हेतुना वषट्कारात्मको वज्रो न हिंस्यात्, तदेतत्परिधानं मम कुरुत; तथा च वषट्कारात्मको वज्रो मां ' न प्रवक्ष्यति ' न हिंसिष्यति । एवमग्निनोक्ते देवा अपि ' तथेति ' अङ्गीकृत्य तं परिधिभिः पर्यदधुः । ' अतः ' देवैः परिधानकरणात् ' तम् ' अग्निं वज्रात्मको वषट्कारो नाबाधिष्ट । अतः परिधिपरिधानमग्नेः कवचबन्धनमेव भवति । तस्मादवश्यं तत्कर्त्तव्यमिति भावः ॥ १४ ॥

अथ प्रसङ्गाद् " भुवपतये स्वाहा "—इत्यादिर्मन्त्रैः स्कन्नस्य हविषोऽभिमर्शनं विधित्सुः, परिधिरूपेणावस्थि-

---

१—" यत्र खल्विमं हव्यवाहम् अग्निं पुरा " इति क्वचित्पुस्तके पाठः । २—ते च मन्त्रा वा. सं. २ । २ । ४ । ५ । ६ ।

तथेति देवा ऽअब्रुवन् । (न्यु) यद्वहिष्परिधि स्कन्त्स्यति तद्युष्मासु हुत-मथ यद्व उपर्युपरि होष्यन्ति तद्वोऽविष्यत्यथ यदग्नौ होष्यन्ति तद्वोऽविष्य-तीति स यदग्नौ जुह्वति तदेनानवत्यथ यदेनानुपर्युपरि जुह्वति तदेनानव-त्यथ यद्बहिष्परिधि स्कन्दति तदेतेषु हुतं तस्मादु ह नाऽऽग इव स्कन्नꣳ स्यादिमां वै ते पृथिवीं प्राविशन्यद्वा ऽइदं किञ्च स्कन्दत्यस्यामेव तत्सर्वं प्रतितिष्ठति ॥ १६ ॥

स स्कन्नमभिमृशति भुवपतये स्वाहा भुवनपतये स्वाहा भूतानां पतये

---

तथेति देवा अब्रुवन्–यद्बहिष्परिधि स्कन्त्स्यति तद्युष्मासु हुतम्, अथ यद्व उपर्युपरि होष्यन्ति तद्वोऽविष्यति । अथ यदग्नौ होष्यन्ति–तद्वोऽविष्यंतीति स यदग्नौ जुह्वति–तदेनानवति, अथ यदेनानुपर्युपरि जुह्वति तदेनानवति, अथ यद्बहिष्परिधि स्कन्दति–तदेतेषु हुतम् । तस्मादु ह नाऽऽग इव स्कन्नं स्यात् । इमां वैते पृथिवीं प्राविशन् । यद्वा इदं किञ्च स्कन्दति–अस्यामेव तत्सर्वं प्रतितिष्ठति ॥ १६ ॥

स स्कन्नमभिमृशति–" भुवपतये स्वाहा भुवनपतये स्वाहा भूतानां पतये स्वाहा "–

---

तानां भुवपत्यादिसंज्ञकानां तेषामग्नीनां स्कन्नद्रव्यभाक्त्वं प्रतिपादयति–त उ हेत्यादिना । ते परिधिरूपेणाव-स्थिताः पूर्वाग्नयः ' एतद् ' वक्ष्यमाणम् ' ऊचुः ' उक्तवन्तः । अस्माँश्चेद् ' इदम् ' इदानीं यज्ञे पुनः ' युङ्क्थाः ' युक्तान् कुरुथ, तर्ह्यस्माकमपि यज्ञे कश्चिद् भागोऽस्त्विति ॥ १९ ॥

तथेत्यादि । देवाश्च ' तथेति ' प्रत्यश्रृण्वन्, प्रतिश्रुत्य चैवमब्रुवन् । कथमिति–' बहिष्परिधि ' परिधीनां बाह्यदेशे ' यद् ' हविः ' स्कन्त्स्यति ' स्कन्नं भविष्यति, ' तद् युष्मासु हुतम्' अस्तु; तत् स्कन्नं हविरसाधा-रणो युष्मद्भागो भवत्वित्यर्थः । अथ च ' वः ' युष्माकम् ' उपर्युपरि ' अत्यन्तसमीपोपरिभागे ' यद् ' हविः होष्यन्ति, तद् ' वः ' युष्मान् ' अविष्यति ' तृप्तान् करिष्यतीति, अवतिरत्र–तृप्त्यर्थः । " अवं रक्षणगति-कान्तिप्रीतितृप्त्यवगमेषु"–( भ्वा० प० ६०० ) इति पठितत्वात् । यच्चाग्नौ होष्यन्ति, तदपि युष्माकं तृप्ति-करमस्त्विति । एवं देवैः तेषामग्नीनां भागो दत्तः। यस्मादेवं तस्मादिदानीमप्यग्नौ हवनादिकमेनांस्तर्पयतीत्याह–स यदिति । ' सः '–इति व्यत्ययेन बह्वर्थे एकवचनम्, ( पा. सू. ३ । १ । ८९ । ) तथा च बहिष्प-रिधि ' यत् ' हविः स्कन्दति, तत् ' एतेषु ' अग्निषु हुतमेव भवति ।

स्कन्नस्य च तद्भागत्वं प्रत्यक्षतो दर्शयति–तस्मादु हेति । यस्मादेवं परिधिरूपाग्नीनां स्कन्नं हवि-र्भागत्वेन परिकल्पितम्, तस्मादेव कारणात्–हविः स्कन्नं स्यादिति यत्तत् ' आगः ' अपराधो न भवति । कुत इत्यत आह–इमामिति । ' ते ' प्रगता अग्नयः, ' इमां ' भूमिं खलु प्रविष्टाः यच्चाज्यादिकं किमपि हविः स्कन्दति, तत्सर्वं पृथिव्यामेव प्रतितिष्ठति । एवं च तेन स्कन्नेन तत्रत्यानामग्नीनां सम्बन्धात् तृप्तिर्भविष्य-तीति न स्कन्नदोषः ॥ १६ ॥

एवंभूतं स्कन्नं हविः परिधिरूपेणावस्थितानां भूमौ प्रविष्टानामग्नीनां भाग इत्युपपाद्य तत्तदग्निनामधेययुक्तैः-

---

१–धातुपाठे तु ' अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु ' इत्युपलभ्यते ।

स्वाहेत्येतानि वै तेषामग्नीनां नामानि यद्भुवपतिर्भुवनपतिर्भूतानां पति-स्तद्यथा व्वषट्कृत ऽँ हुतमेवमस्यैतेष्वग्निषु भवति ॥ १७ ॥

तद्धैके । (क८) इध्मस्यैवैतान्परिधीन्परिदधति । तदु तथा न कुर्यादनव-क्लृप्ता ह तस्यैते भवन्ति यानिध्मस्य परिदधात्यभ्याधानाय ह्येवेध्मः क्रियते तस्यो हैवैतेऽवक्लृप्ता भवन्ति यस्यैतानन्यानाहरन्ति परिधय ऽइति तस्मादन्यानेवाहरेयुः ॥ १८ ॥

( स्ते ) ते वै पालाशाः स्युः । ( ब्रं ) ब्रह्म वै पलाशो ब्रह्माग्निरग्नयो हि तस्मात्पालाशाः स्युः ॥ १९ ॥

---

( २ अ० २ मं० ) इति । एतानि वै तेषामग्नीनां नामानि—यद् भुवपतिः, भुवनपतिः, भूतानां पतिः । तद् यथा वषट्कृतं हुतम्—एवमस्यैतेष्वग्निषु भवति ॥ १७ ॥

तद्धैके—इध्मस्यैवैतान् परिधीन् परिदधति । तदु तथा न कुर्यात् । अनवक्लृप्ता ह तस्यैते भवन्ति—यानिध्मस्य परिदधाति । अभ्याधानाय ह्येवेध्मः क्रियते । तस्यो हैवैतेऽवक्लृप्ता भवन्ति—यस्यैतानन्यानाहरन्ति—परिधय इति । तस्मादन्यानेवाहरेयुः ॥ १८ ॥

ते वै पालाशाः स्युः । ब्रह्म वै पलाशः, ब्रह्माग्निः । अग्नयो हि । तस्मात्पालाशाः स्युः ॥१९॥

---

मन्त्रैस्तस्याभिमर्शनं विधत्ते—**स स्कन्नमिति** । 'तत्' तत्रैवं नामोद्देशेनाभिमर्शने कृते सति, यथा 'वषट्कृतं' वषट्कारेण प्रत्तं हविस्तस्यै देवतायै हुतं भवति, एवमेव 'अस्य' यजमानस्य 'एतेषु' भुवपत्यादिनामकेषु परिधिरूपाग्निषु तत् स्कन्नं हविर्हुतमेव भवतीत्यर्थः ॥ १७ ॥

तेषां परिधीनामिध्मावयवत्वं केचिन्मन्यन्ते, तेषां मतमुपन्यस्य निरस्यति—**तद्धैक** इत्यादिना । 'इध्मस्य'—इत्यवयवावयविसम्बन्धार्था षष्ठी । ( पा. सू. २ । ३ । ५० भाष्यं द्रष्टव्यम् ) इध्मस्यावयवभूतानित्यर्थः । अग्निसमिन्धनाय हीध्मः क्रियते, अतस्तदवयवानां समिन्धनसामर्थ्यमेव, न तु परिधानसामर्थ्यमस्तीत्यनवक्लृप्तिः । तदेतदाह—**अनवक्लृप्ता** इति । **तस्यो हैवे**त्यादि । 'यस्य' यजमानस्य परिधय इत्येवंरूपेणेध्मान् पृथक्, तानेवाहरन्त्यध्वर्यवः, तस्यैव यजमानस्यैते 'अवक्लृप्ताः' परिधानलक्षणकार्यक्षमा भवन्तीत्यर्थः । यस्मादेवं तस्मात् इध्मानन्तर्भूतान् 'अन्यान्' एव परिधीनाहरेयुरिति विधत्ते—**तस्मादि**ति ॥ १८ ॥

परिध्युपादानभूतान् वृक्षानुत्तरोत्तरानुकल्पतयोपादेयान् विधत्ते—**ते वा** इति । 'ते' खलु परिधयः पलाशवृक्षजा भवेयुः । "ब्रह्म वै" इत्यादि तत्प्रशंसा । ब्रह्मविषयस्य रहस्यस्य श्रवणात् पलाशवृक्षस्तावद् ब्रह्मात्मकः, तथा च तैत्तिरीयकम्—"देवा वै ब्रह्मन्नवदन्त तत् पर्ण उपाश्रृणोदिति" ( तै० सं० ३ । ५ । ७ । ३ ) । अग्निवाय्वादित्यरूपेण हिरण्यगर्भस्य ब्रह्मण एवावस्थानादग्निरपि—ब्रह्मात्मकः । तादृगग्न्यात्मकत्वं च परिधीनां प्रतिपादितम् । अतोऽग्निरूपब्रह्मात्मकानां परिधीनां पलाशरूपब्रह्मविकारत्वं युक्तमित्यर्थः ॥ १९ ॥

( ग्रं ) यदि पलाशान्न विन्देत्। ( ङ ) अथो ऽअपि वैकङ्कताः स्युर्यदि वैकङ्कतान्न विन्देदथो ऽअपि कार्ष्मर्यमयाः स्युर्यदि कार्ष्मर्यमयान्न विन्देदथो ऽअपि बैल्वाः स्युरथो खादिरा ऽअथो ऽऔदुम्बराऽएते हि वृक्षा यज्ञियास्तस्मादेतेषां वृक्षाणां भवन्ति ॥ २० ॥ ६ ॥

इति द्वितीयप्रपाठके षष्ठं संलग्नब्राह्मणम् ( २-६ ) द्वितीयप्रपाठकश्च समाप्तः ॥ २ ॥ कण्डिकासङ्ख्या ॥ १२२ ॥

ते वा ऽआर्द्राः स्युः। ( रे ) एतद्ध्येषां जीवमेतेन सतेजस ऽएतेन वीर्यवन्तस्तस्मादार्द्राः स्युः ॥ १ ॥

स मध्यममेवाग्रे परिधिं परिदधाति। गन्धर्वस्त्वा विश्वावसुः परिदधातु विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ऽईडित ऽइति ॥२॥

---

यदि पालाशान् न विन्देत्—अथो अपि वैकङ्कताः स्युः। यदि वैकङ्कतान् न विन्देत्—अथो अपि कार्ष्मर्यमयाः स्युः। यदि कार्ष्मर्यमयान् न विन्देत्—अथो अपि बैल्वाः स्युः। अथो खादिराः, अथो औदुंबराः। एते हि वृक्षा यज्ञियाः। तस्मादेतेषां वृक्षाणां भवन्ति ॥ २० ॥

ते वा आर्द्राः स्युः। एतद्ध्येषां जीवम्, एतेन सतेजसः, एतेन वीर्यवन्तः। तस्मादार्द्राः स्युः॥ १॥

स मध्यममेवाग्रे परिधिं परिदधाति—"**गन्धर्वस्त्वा विश्वावसुः परिदधातु विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ईडितः**"—( २ अ० ३ मं० ) इति॥ २ ॥

---

स्पष्टमन्यत् ॥ २० ॥ ६ ॥ ( ३. ३. )

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये प्रथमकाण्डे तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥ ३ ॥

इति प्रथमकाण्डे द्वितीयप्रपाठकः समाप्तः।

अथ परिधीनामार्द्रतां विधाय प्रशंसति—ते वा इति। 'एतद्' आर्द्रत्वं खलु 'एषां' जीवतां जीवनलिङ्गम्। स्थावरजङ्गमादिशरीरे यत्र खल्वार्द्रत्वमस्ति, 'तेन' ते 'सतेजसः' अवयवकान्तिलक्षणेन तेजसा युक्ताः, 'वीर्यवन्तः' बलवन्तश्च भवन्ति। अतः सतेजस्त्वादिसिद्धये 'ते' परिधयोऽपि 'आर्द्राः' भवेयुरित्यर्थः। आर्द्रस्य च सजीवत्वं शुष्कस्य च निर्जीवत्वं छन्दोगैराम्नायते—"अस्य सोम्य ! महतो वृक्षस्य यो मूलेऽभ्याहन्या-जीवन् स्रवेद् ,....अस्य यदेकां शाखां जीवो जहात्यथ सा शुष्यति" इति सा० छां० ब्रा०(८।११।१।२।३)॥१॥

आहवनीयस्य पश्चिमभागे मध्यमपरिधिरेव प्रथमं परिधातव्य इति विधत्ते—स इति। मन्त्रः स्पष्टार्थ इत्यभिप्रेत्य ब्राह्मणेन न व्याख्यायते। अस्मिन् मन्त्रे, दक्षिणोत्तरपरिधिमन्त्रयोश्च, यद् "अग्निरिड ईडितः" इति तादात्म्यप्रतिपादनम्, तावन्मात्रं व्याख्यास्यते। अस्माभिस्तु संहितायामेव[1] मन्त्रा व्याख्याता इति न पुनस्तेऽत्र व्याख्यातव्याः॥ २ ॥

---

१—काण्वसंहितायामिति ज्ञेयम्।

( त्यु ) अथ दुक्षिणं पुरिदधाति । ( ती ) इन्द्रस्य बाहुरसि दुक्षिणो विश्वस्युारिष्ट्यै युजमानस्य परिधिरस्यग्निरिडु ऽईडित ऽइति ॥ ३ ॥

( त्य ) अथोत्तरं पुरिदधाति । मित्रावुरुणौ त्वोत्तरतः पुरिधत्तां ध्रुवेण धुर्म्मणा विुश्वस्युारिष्ट्यै युजमानस्य परिधिुरस्यग्निरिडु ऽईडित ऽइत्य-ग्नयो हि तुस्मादाहाग्निरिडु ऽईडित ऽइति ॥ ४ ॥

( त्यु ) अथ समिुधमभ्युादधाति । सु मध्यमुमेवुाग्रे परिधिमुपस्पृशति तुनैतानुग्रे सुमिन्धेुऽथाग्नुावभ्युादधाति तुनो ऽअग्निं प्रत्युक्ष ᳪ सुमिन्धे ॥ ५ ॥

सोऽभ्यादधाति । व्वीतिहोत्रं त्वा कवे द्युमन्तᳪसमिधीमहि । अग्ने बृहुन्तमध्वर ऽइत्येतुया गायत्र्या गायत्रीमेुवैतत्समिन्धे सा गायत्री समिद्धान्यानि च्छुन्दाᳪसि सुमिन्धे च्छुन्दाᳪसि सुमिद्धानि देवेुभ्यो यज्ञं व्वहन्ति ॥ ६ ॥

---

अथ दक्षिणं परिदधाति–"इन्द्रस्य बाहुरसि दक्षिणो विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ईडितः"–( २ अ० ३ मं० ) इति ॥ ३ ॥

अथोत्तरं परिदधाति–"मित्रावरुणौ त्वोत्तरतः परिधत्तां ध्रुवेण धर्मणा विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ईडितः"–( २ अ. ३ मं. ) इति । अग्नयो हि । तस्मादाह–अग्निरिड ईडित इति ॥ ४ ॥

अथ समिधमभ्यादधाति । स मध्यममेवाग्रे परिधिमुपस्पृशति, तेनैतानग्रे समिन्धे । अथाग्नावभ्यादधाति, तेनो अग्निं प्रत्यक्षं समिन्धे ॥ ५ ॥

सोऽभ्यादधाति–" वीतिहोत्रं त्वा कवे द्युमन्तं समिधीमहि । अग्ने बृहन्तमध्वरे "–( २ अ. ४ मं. ) इत्येतया गायत्र्या । गायत्रीमेवैतत् समिन्धे । सा गायत्री समिद्धान्यानि छन्दांसि समिन्धे । छन्दांसि समिद्धानि देवेभ्यो यज्ञं वहन्ति ॥ ६ ॥

---

दक्षिणोत्तरपरिध्योरपि समन्त्रकं परिधानं विधत्ते–**अथ दक्षिणमि**त्यादिना । **अग्नयो ही**त्यादि । यस्मात् प्रागुक्तरीत्या परिधयः ' अग्नयः ' ' तस्मात् ' कारणात् " अग्निरिड ईडितः "–इत्यग्निशब्देन परिधिरभिधीयत इत्यर्थः ॥ ३ ॥ ४ ॥

पूर्वाघारसमिधोऽभ्याधानं विधत्ते–**अथ समिधमि**ति । वायव्यां दिशमारभ्याग्नेयदिग्भागपर्यन्तमविच्छिन्नधारया होमः पूर्वाघारः, स च यत्र परिसमाप्यते, तत्रैकां ' समिधम् ' आदध्यादित्यर्थः । तत्र धर्म्मविशेषमाह–**स मध्यममेवे**ति । ' अग्रे ' अभ्याधानात्पूर्वं ' मध्यमं परिधिं ' तया समिधा संस्पृशेदित्यर्थः । तस्य प्रयोजनमाह–**तेनैताना**निति । ' तेन ' उपस्पर्शनेन परिधिरूपान् ' एतान् ' अग्नीन् प्रथमं ' समिन्धे ', ' अग्नौ ' अभ्याधानेन ' तेन ' आहवनीयरूपेण प्रत्यक्षस्याग्नेः समिन्धनमित्यर्थः ॥ ५ ॥

विहितमभ्याधानमनूद्य मन्त्रं विधत्ते–**स** इति । ' अस्य ' अभ्याधानसाधनमन्त्रस्य गायत्रीच्छन्दस्कत्वात्

---

१–" प्रथमं परिधिं समिधोपस्पृश्य वीतिहोत्रमित्यादधाति " का. श्रौ. सू. २ । २२२ ।

( न्त्यु ) अथ यां द्वितीयाᳬं समिधमभ्यादधाति । व्वसन्तमेव तया समिन्धे स व्वसन्तः समिद्धोऽन्यानृतून्त्समिन्ध ऽऋतवः समिद्धाः प्रजाश्च प्रजनयन्त्योषधीश्च पचन्ति सोऽभ्यादधाति समिदसीति समिद्धि व्वसन्तः ॥ ७

( न्तोऽथा ) अथाभ्याधाय जपति । सूर्य्यस्त्वा पुरस्तात्पातु कस्याश्चिदभिशस्त्याऽइति गुप्त्यै वा ऽअभितः परिधयो भवन्त्यथैतत्सूर्य्यमेव पुरस्ताद्गोप्तारं करोति नेत्पुरस्तान्नाष्ट्रा रक्षाᳬंस्यभ्यवचरानिति सूर्य्यो हि नाष्ट्राणाᳬं रक्षसामपहन्ता ॥ ८ ॥

---

अथ यां द्वितीयां समिधमभ्यादधाति वसन्तमेव तया समिन्धे । स वसन्तः समिद्धोऽन्यानृतून् समिन्धे । ऋतवः समिद्धाः प्रजाश्च प्रजनयन्ति, ओषधीश्च पचन्ति । सोऽभ्यादधाति–"समिदसि"–( २ अ. ९ मं. ) इति । समिद्धि वसन्तः ॥ ७ ॥

अथाभ्याधाय जपति–"सूर्यस्त्वा पुरस्तात्पातु कस्याश्चिदभिशस्त्यै" ( २ अ. ९ मं. )– इति । गुप्त्यै वा अभितः परिधयो भवन्ति । अथैतत्सूर्यमेव पुरस्ताद् गोप्तारं करोति–नेत् पुरस्तान्नाष्ट्रा रक्षांस्यभ्यवचरानिति । सूर्यो हि नाष्ट्राणां रक्षसामपहन्ता ॥ ८ ॥

---

छन्दसां मध्ये गायत्र्याख्यमपि छन्दः प्रथमं 'समिन्धे' सन्दीपयति । समिद्धा च 'सा गायत्री' उष्णिगादीनि 'अन्यानि' चतुरुत्तराणि 'छन्दांसि' सन्दीपयति; समिद्धायाश्चतुर्विंशत्यक्षराया गायत्र्यास्तत्र सर्वत्रानुगमात् । गायत्र्या 'समिद्धानि' तानि च 'छन्दांसि' 'देवेभ्यः' 'यज्ञं' 'वहन्ति' प्रापयन्ति ॥ ६ ॥

अथोत्तराघारसमिधोऽभ्याधानं विधत्ते–अथ यामिति । द्वितीयाघारो हि नैर्ऋतिं दिशमारभ्यैशानीं दिशं प्रत्यनवच्छिन्नधारया होमः; स यत्र परिसमाप्यते, तत्रैकां समिधमादध्यात् । पूर्वाघारसमिदपेक्षया 'द्वितीयाम्'– इति व्यपदेशः । 'तया' च समिधा 'वसन्तः' ऋतुः सन्दीप्यते । निगदसिद्धमन्यत् ।

अभ्याधानमनूद्य मन्त्रं विधत्ते–स इति । समिद्धीति । "समिधो यजति"–इति तद्विधानात् । ईदृशी प्रसिद्धिरत्र 'हि'–शब्देन प्रतिपाद्यते ॥ ७ ॥

एवमाघारसमिदभ्याधानानन्तरं मन्त्रविशेषस्य जपं विधत्ते–अथाभ्याधायेति । मन्त्रस्य प्रयोजनमाह– गुप्त्यै वा इति । राक्षसादिसञ्चरणनिरसनं गोपनम् । गुप्त्यर्थं हि परिधिपरिधानम् । पूर्वस्यां दिशि परिधिर्नास्ति, तथा च 'एतत्' एतेन "सूयस्त्वा"–इति मन्त्रोच्चारणेन तमुद्यन्तं 'सूर्यमेव' यज्ञस्य रक्षितारं करोति । शिष्टं स्पष्टम् । इममर्थं तैत्तिरीयके विस्पष्टमामनन्ति । "परिधीन्परिदधाति रक्षसामपहत्यै, संस्पर्शयति रक्षसामनन्ववचाराय, न पुरस्तात् परिदधात्यादित्यो ह्येवोद्यन् पुरस्ताद्रक्षा ᳬ स्यपहन्ति" इति ( तै. ब्रा. ३ । ३ । ७ ) ॥ ८ ॥

---

१–"चतुरश्चतुरः प्राजापत्यायाः" इति पि. छं. सू. ३ । ११ । २–"अनुपस्पृश्य द्वितीया ऽसमिदसीति" का. श्रौ. सू. २ । २३३ । ३–( तै. सं. २ । ६ । १ । ) ४–"सूर्यस्त्वेति जपत्याहवनीयमीक्षमाणस्तद्वचनत्वात्" का. श्रौ. सू. २ । २३४ ।

( न्ताथ ) अथ यामेवामूं तृतीयाᳪं समिधमभ्यादधाति । ( त्य ) अनुयाजेषु ब्राह्मणमेव तया समिन्धे स ब्राह्मणः समिद्धो देवेभ्यो यज्ञं वहति ॥ ९ ॥

( त्यु ) अथ स्तीर्णां वेदिमुपावर्त्तते । स द्वे तृणे ऽआदाय तिरश्ची निदधाति सवितुर्बाहू स्थऽइत्ययं वै स्तुपः प्रस्तरोऽथास्यैते भ्रुवावेव ऽतिरश्ची निदधाति तस्मादिमे तिरश्च्यौ भ्रुवौ क्षत्रं वै प्रस्तरो विशऽइतरं बर्हिः क्षत्रस्य चैव विशश्च विधृत्यै तस्मात्तिरश्ची निदधाति तस्माद्वेव विधृती नाम ॥ १० ॥

---

अथ यामेवामुं तृतीयां समिधमभ्यादधाति—अनुयाजेषु, ब्राह्मणमेव तया समिन्धे । स ब्राह्मणः समिद्धो देवेभ्यो यज्ञं वहति ॥ ९ ॥

अथ स्तीर्णां वेदिमुपावर्त्तते । स द्वे तृणे आदाय तिरश्ची निदधाति—" **सवितुर्बाहू स्थः** "—( २ अ. ९ मं. ) इति । अयं वै स्तुपः प्रस्तरः । अथास्यैते भ्रुवावेव तिरश्ची निदधाति । तस्मादिमे तिरश्च्यौ भ्रुवौ । क्षत्रं वै प्रस्तरः, विश इतरं बर्हिः । क्षत्रस्य चैव विशश्च विधृत्यै । तस्मात्तिरश्ची निदधाति । तस्माद्वेव विधृती नाम ॥ १० ॥

---

अनुयाजप्राक्कालेऽभ्याधानायैका समिदवशेषयितव्येत्यभिप्रेत्य तस्याः समिधोऽभिधास्यमानमभ्याधानमनूद्य प्रसङ्गात्तस्य प्रयोजनमाह—**अथ यामिति** । **अमूमिति** । ' अदः ' शब्दो विप्रकृष्टार्थवाची । विप्रकृष्टेऽनुयाजप्राक्कालेऽभ्याधानमित्यर्थः । **ब्राह्मणमेव तयेति** । " एषा तेऽग्ने समित् "—इत्यादिना ( वा. सं. २ । १४ । १ ) मन्त्रेण यजमानगामिनो वर्द्धनाप्यायनादिलक्षणफलस्य प्रतिपादनात् तेनाभ्याहितया समिधा यजमानरूपं ब्राह्मणमेव ' समिन्धे ' सन्दीपयति । गतमन्यत् ॥ ९ ॥

एवमाहवनीये कर्तव्याः परिधिपरिधानादयो विहिताः; अथ वेद्यां हविरासादनार्थं प्रस्तरस्तरणं विधित्सुस्तदर्थं विधृत्योः सादनं विधत्ते[2]—**अथेति** । बर्हिषा ' स्तीर्णां वेदिम्, उपलक्ष्याऽऽहवनीयसमीपादुपावर्त्ततेत्यर्थः । उपावृत्य च बर्हिषः[3] सकाशाद् ' द्वे तृणे आदाय ' बर्हिष उपरि ' तिरश्ची ' तिर्यगग्रे ' निदधाति ' " सवितुः "—इति मन्त्रेण । तदेतत् तृणनिधानं प्रशंसति—**अयं वा** इति । ' प्रस्तरः ' हि यज्ञस्य ' स्तुपः ' केशसङ्घातः । [illegible]षि श्मश्रुप्रभृतीनि लोमानि । तथा च प्रस्तरबर्हिषोर्मध्ये तिर्यङ्निहिते ' एते ' तृणे ' भ्रुवावेव ' भ्रूस्थानीये इत्यर्थः । लोकप्रसिद्ध्यैतद् द्रढयति—**तस्मादिति** । यस्मादेवं यज्ञे केशश्मश्रुरूपेण संस्तुतयोः प्रस्तरबर्हिषोर्मध्ये संस्थिते[4] तृणे तिर्य्यङ् निधीयेते, 'तस्मात्' कारणात् पुरुषशरीरस्य 'भ्रुवौ' 'तिरश्च्यौ' दृश्येते इत्यर्थः । तिर्यङ्निधानस्य प्रयोजनमाह—**क्षत्रं वा** इति । क्षत्रियवैश्यजातिस्थानीये प्रस्तरबर्हिषी; अतस्तयोर्विविधं धारणाय

---

१–(तै. सं. २ । ६ । ९ । १) । २–" आवृत्य वेदिं बर्हिषस्तृणे तिरश्ची निदधाति सवितुरिति " इति का. श्रौ. सू. २ । २२५ । ३–अत्र " उपावृत्य च बर्हिषः सकाशाद् द्वे तृणे आदाये " तीयं सायणाचार्योक्तिः कातीयसूत्रभाष्यविरोधिन्येव । तथा च सूत्रं " अन्ये वायुक्तत्वात् " २ । २२६ । अत्र कर्कः–" अन्ये वा तृणे उपादाय न वेदिसम्बन्धिनी । कुत एतत् । अयुक्तत्वादन्येषामितरेषां च बर्हिस्तृणानां वेदिस्तरणे विनियुक्तत्वात् । न च विनियुक्तं वचनमन्तरेणार्थान्तरे विनियोगमर्हतीत्येवमादिः–तस्मादप्रकृते तृणे आदाय वेद्यां निदधातीति सूत्रार्थः " इत्येवमन्तः इति । ४–' भ्रूसंस्थिते ' इति पा. ।

तत्प्रस्तरꣳ स्तृणाति । ( त्यू ) ऊर्णम्रदसं त्वा स्तृणामि स्वासस्थं देवेभ्य ऽइति साधुं देवेभ्य ऽइत्येवैतदाह—यदाहोर्णम्रदसं त्वेति स्वासस्थं देवेभ्य ऽइति स्वासदं देवेभ्य ऽइत्येवैतदाह ॥ ११ ॥

तमभिनिदधाति । ( त्यु ) आ त्वा वसवो रुद्रा ऽआदित्याः सदन्त्वित्येते वै त्रया देवा यद्वसवो रुद्रा ऽआदित्या ऽएते त्वासीदन्त्वित्येवैतदाहाभिनिहितऽएव सव्येन पाणिना भवति ॥ १२ ॥

( त्यु ) अथ दक्षिणेन जुहूं प्रतिगृह्णाति । नेदिह पुरा नाष्ट्रा रक्षाꣳस्याविशानिति ब्राह्मणो हि रक्षसामपहन्ता तस्मादभिनिहित ऽएव सव्येन पाणिना भवति ॥ १३ ॥

---

तत् प्रस्तरं स्तृणाति—"ऊर्णम्रदसं त्वा स्तृणामि स्वासस्थं देवेभ्यः"—( २ अ० ५ मं. ) इति । साधुं देवेभ्य इत्येवैतदाह—यदाहोर्णम्रदसं त्वेति । स्वासस्थं देवेभ्य इति—स्वासदं देवेभ्य इत्येवैतदाह ॥ ११ ॥

तमभिनिदधाति—" आ त्वा वसवो रुद्रा आदित्याः सदन्तु—" ( २ अ. ५ मं. ) इति । एते वै त्रया देवाः-यद्वसवो रुद्रा आदित्याः । एते त्वासीदन्त्वित्येवैतदाह । अभिनिहित एव सव्येन पाणिना भवति ॥ १२ ॥

अथ दक्षिणेन जुहूं प्रतिगृह्णाति--नेदिह पुरा नाष्ट्रा रक्षांस्याविशानिति । ब्राह्मणो हि रक्षसामपहन्ता । तस्मादभिनिहित एव सव्येन पाणिना भवति ॥ १३ ॥

---

तत्तिर्यक् तृणनिधानं सम्पद्यते; इतरथा हि प्रस्तरबर्हिषोः साङ्कर्यं [illegible] क्षत्रियवैश्ययोरपि साङ्कर्यं स्यात् । यस्मादेवमेते तृणे तिर्यङ्निहिते विधारणप्रयोजने, तस्मादनयोः 'विधृती' इति 'ना[illegible] सम्पद्यत इति निर्ब्रूते—तस्मादिति॥ १०॥

प्रस्तरस्य समन्त्रकं स्तरणं विधत्ते[1]—तदिति । ' तत् ' तत्र विधृत्योरुपरीत्यर्थः । प्रस्तरस्तरणमन्त्रस्तु बर्हिस्तरणमन्त्रवत् । तत्र स्तीर्यमाणाया वेदेरभिधेयत्वात् ' साध्वीं देवेभ्यः '—इत्येवं स्त्रीलिङ्गतया व्याख्यातः; अत्र तु प्रस्तर एवाभिधेय इति ' साधुं देवेभ्य ' इति पुँल्लिङ्गतया व्याख्यायत इत्येतावानेव विशेषः । अन्यत् पूर्ववद् योज्यम् ॥ ११ ॥

स्तीर्णस्य प्रस्तरस्योपरि स्पर्शनं विधत्ते[2]—तमभीति " आ त्वा "—इति मन्त्रेण प्रस्तरस्योपरि हस्तं निदध्यादित्यर्थः । मन्त्रव्याख्यानं सुगमम् । जुह्वादीनां सादनपर्यन्तं प्रस्तरस्यान्वारम्भं विधत्ते—अभिनिहित एवेति । सव्यहस्तेन प्रस्तरः ' अभिनिहितः ' संस्पृष्टः ' एव ' भवेत् ॥ १२ ॥

अथेति । ' अथ ' अनन्तरमेव ' दक्षिणेन ' हस्तेन ' जुहूं ' प्रतिगृह्णीयात् । जुहूसादनपर्यन्तं प्रस्तरविमोको न युक्त इत्यर्थः । तस्य प्रयोजनमाह—नेदिहेति । उक्ताभिप्रायमेतत् ॥ १३ ॥

---

१–" तयोः प्रस्तर ᳚ स्तृणात्यूर्णम्रदसमिति " का. श्रौ. सू. २ । २३० । २–१ कां. २ प्र. ६ ब्रा. १ कं. इत्यत्र द्रष्टव्यम् ।
२–" अभिनिदधात्यात्वावसव इति " इति का. श्रौ. सू. २ । २३१ ।

( त्यु ) अथ जुहूं प्रतिगृह्णाति । घृताच्यसि जुहूर्नाम्नेति घृताची हि जुहूर्हि नाम्ना सेदं प्रियेण धाम्ना प्रिय ऽँ सद ऽआसीदेति घृताच्यस्युप- भृन्नाम्नेत्युपभृतं घृताची ह्युपभृद्धि नाम्ना सेदं प्रियेण धाम्ना प्रिय ऽँ सद ऽआसीदेति घृताच्यसि ध्रुवा नाम्नेति ध्रुवां घृताची हि ध्रुवा हि नाम्ना सेदं प्रियेण धाम्ना प्रिय ऽँ सद ऽआसीदेति प्रियेण धाम्ना प्रिय ऽँ सद आसीदेति यदन्यद्धविः ॥ १४ ॥

स वा ऽउपरि जुहू ऽँ सादयति । ( त्य ) अथ ऽइतराः स्रुचः क्षत्रं वै जुहूर्विश ऽइतराः स्रुचः क्षत्रमेवैतद्विश ऽउत्तरं करोति तस्मादुपर्यासीनं क्षत्रियमधस्तादिमाः प्रजा ऽउपासते तस्मादुपरि जुह ऽँ सादयत्यध इतराः स्रुचः ॥ १५ ॥

---

अथ जहूं प्रतिगृह्णाति–" घृताच्यसि जुहूर्नाम्ना "–( २ अ. ६ मं. ) इति । घृताची हि जुहूर्हि, नाम्ना । " सेदं प्रियेण धाम्ना प्रिय ऽसद आसीद " ( २ अ. ६ मं. ) इति । " घृताच्यस्युपभृन्नाम्ना "–( २ अ. ६ मं. ) इत्युपभृतम् । घृताची हि, उपभृद्धि नाम्ना । " सेदं प्रियेण धाम्ना प्रियऽसद आसीद "–( २ अ. ६ मं. ) इति । " घृताच्यसि ध्रुवा नाम्ना "–( २ अ. ६ मं. ) इति ध्रुवाम् । घृताची हि, ध्रुवा हि नाम्ना । " सेदं प्रियेण धाम्ना प्रियऽसद आसीद्–" ( २ अ. ६ मं. ) इति–यदन्यद्धविः ॥ १४ ॥

स वा उपरि जुहू ऽसादयति, अध इतराः स्रुचः । क्षत्रं वै जुहूः, विश इतराः स्रुचः । क्षत्रमेवैतत्–विश उत्तरं करोति । तस्मादुपर्यासीनं क्षत्रियमधस्तादिमाः प्रजा उपासते । तस्मादुपरि जुहूं सादयति, अध इतराः स्रुचः ॥ १५ ॥

---

अथ जुह्वाः सादनं विधत्ते–अथ जुहूमिति । जुहूमादायानेन मन्त्रेण प्रस्तरे सादयेन्न तु ग्रहणमात्रम्; मन्त्रस्य सादनलिङ्गत्वात् । अत एवोक्तं कात्यायनेन–" सव्या शून्ये जुहूं प्रतिगृह्य निदधाति, घृताचीति " " एवमितरे उत्तराभ्यां प्रतिमन्त्रम् । बर्हिष्युपभृतं ध्रुवायां चावकृष्टेऽनुपूर्वम् " इति–( का० श्रौ० सू० २ । २३२–२३३ ) । घृताची हीति । घृतमञ्चति प्राप्नोतीति ' घृताची ' । घृताचीत्येतत् प्रसिद्धमिति हेरर्थः; ' नाम्ना ' नामधेयेन, एषा स्रुक् ' जुहूर्हि ' न केवलं होमसाधनत्वादित्यभिप्रायः । मन्त्रशेषो निगदसिद्ध इत्यभिप्रेत्यानुवदति–सेदमिति । अथोपभृतः सादनं विधत्ते–घृताच्यस्युपभृन्नाम्नेत्युपभृतमिति । वाक्य- शेषः पूर्ववद् योज्यः । ध्रुवायाः सादनं विधत्ते–घृताच्यसि ध्रुवा नाम्नेति ध्रुवामिति । अन्यत् पूर्ववत् । स्रुगताज्यव्यतिरिक्तस्य हविषः सादनं विधत्ते–प्रियेणेति । ' यद् ' आज्यात् ' अन्यद्धविः ' पुरोडाशादिकम् । " प्रियेण " इति मन्त्रेण तत् सादयेदिति शेषः ॥ १४ ॥

जुह्वादीनां सादने विशेषमाह–स वा इति । प्रस्तरस्योपरि जुहूमेव सादयेत् । तस्याधस्ताद् बर्हिषि ' इतराः ' उपभृदाद्याः ' स्रुचः ' सादयेदित्यर्थः । अत एवोक्तं सूत्रकृता–" बर्हिष्युपभृतं ध्रुवायां च "

**सोऽभिमृशति । ध्रुवा ऽअसदन्निति ध्रुवा ह्यसदन्नृतस्य योनाविति यज्ञो वा ऽऋतस्य योनिर्यज्ञे ह्यसदंस्ता विष्णो पाहि पाहि यज्ञं पाहि यज्ञपति-मिति तद्यजमानमाह पाहि मां यज्ञन्यमिति तदप्यात्मानं यज्ञान्नान्तरेति यज्ञो वै विष्णुस्तद्यज्ञायैवैतत्सर्वं परिददाति गुप्त्यै तस्मादाह ता विष्णो पाहीति ॥ १६ ॥ १ ॥ ( ३. ४ )**

## इति तृतीयप्रपाठके प्रथमं ब्राह्मणम् ॥ ३–१ ) ॥

---

सोऽभिमृशति—"ध्रुवा असदन्"–( २ अ. ६ मं. ) इति । ध्रुवा ह्यसदन् । "ऋतस्य योनौ"–( २ अ. ६ मं. ) इति । यज्ञो वा ऋतस्य योनिः, यज्ञे ह्यसदन् । "ता विष्णो पाहि, पाहि यज्ञं, पाहि यज्ञपतिम्"–(२अ. ६मं.) इति । तद्यजमानमाह । "पाहि माँ यज्ञन्यम्"–( २ अ. ६ मं. ) इति । तदप्यात्मानं यज्ञान्नान्तरेति । यज्ञो वै विष्णुः, तद्यज्ञायैवैतत्सर्वं परिददाति गुप्त्यै । तस्मादाह–ता विष्णो पाहीति ॥ १६ ॥

---

( श्रौ० सू० २. २३३ ) इति । तदेतदुपर्यधःसादनमुपपादयति–क्षत्रं वा इति । स्वातन्त्र्येण होमसाधनत्वाद्–जुहूः क्षत्रियजातिः । उपभृदादीनां तु जुहूवद्धोमे स्वातन्त्र्याभावात्, प्रत्युत तत्स्थस्याज्यस्य जुह्वामानेयत्वात् ता वैश्यजातिस्थानीयाः । निगदसिद्धः शेषः ॥ १५ ॥

समन्त्रकमासन्नानां हविषामभिमर्शनं विधत्ते–**सोऽभिमृशतीति** । मन्त्रप्रतीकस्यार्थः प्रसिद्ध इति 'हि'–शब्देन व्याचष्टे–**ध्रुवा हीति** । कर्म्मसमाप्तिपर्यन्तं नैश्चल्येन वेद्यां जुह्वाद्या उपसन्ना इत्यर्थः ।

"ऋतस्य योनौ"–इत्यस्य विवक्षितमर्थमाह–**यज्ञो वा इति** । 'ऋत' शब्दः सत्यशब्दपर्यायः । सत्य-फलकारणत्वात्, ऋतस्य योनिः 'यज्ञः' । तादृगर्थपरत्वं युज्यत इत्याह–**यज्ञे हीति** । 'यज्ञे' खल्वेता जुह्वाद्याः 'असदन्' आसादिताः स्थापिताः, अतः "ऋतस्य योनौ"–इत्यनेन यज्ञप्रतिपादनं युक्तमित्यर्थः । मन्त्रशेष-मनूद्य व्याचष्टे–**ता विष्णो** इति । फलभोक्तृतया स्वामित्वाद् यज्ञपतिशब्देन यजमानो विवक्षित इत्याह–**तद्यज-मानमिति** । यज्ञं नयति निष्पादयतीति 'यज्ञनीः' अध्वर्युः । अतो यज्ञन्यमिति पदस्याध्वर्युपरतां व्याचष्टे–**तदप्यात्मानमिति** । 'तत्' येन 'यज्ञन्यमिति' अनेनाध्वर्युः स्वात्मानं यज्ञसकाशात् 'नान्तरेति' अन्तरितं वियुक्तं न करोति । सिद्धप्रायमन्यत् ॥ १६ ॥ १ ॥ ( ३. ४. )

इति श्रीसायणार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथभाष्ये
तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥

---

१–"प्रियेण धाम्नेति हवीꣳषि वेद्यां कृत्वा ध्रुवा असदन्निति सर्वाण्यालभते" का. श्रौ. सू. २ । २३९ । २–'मन्त्रगतध्रुवाशब्द-स्यार्थः' इति पा० । ३–"पाहि मामित्यात्मानम्" का. श्रौ. सू. २ । २४० ।

इन्धे ह वा ऽएतदध्वर्युः । (रि) इध्मेनाग्निं तस्मादिध्मो नाम समिन्धे सामिधेनीभिर्होता तस्मात्सामिधेन्यो नाम ॥ १ ॥

स ऽआह । ( द्दा ) अग्नये समिध्यमानायानुब्रूहीत्यग्नये ह्येतत्समिध्यमानायान्वाह ॥ २ ॥

तदु हैक ऽआहुः । ( र ) अग्नये समिध्यमानाय होतरनुब्रूहीति तदु तथा न ब्रूयादहोता वा ऽएष पुरा भवति यदैवैनं प्रवृणीतेऽथ होता तस्मादु ब्रूयादग्नये समिध्यमानायानुब्रूहीत्येव ॥ ३ ॥

---

सामिधेन्यनुवचनम् ।

इन्धे ह वा एतदध्वर्युरिध्मेनाग्निम्--तस्मादिध्मो नाम। समिन्धे सामिधेनीभिर्होता--तस्मात् सामिधेन्यो नाम ॥ १ ॥

स आह--"अग्नये समिध्यमानायानुब्रूहि" इति। अग्नये ह्येतत् समिध्यमानायान्वाह ॥२॥

तदु हैक आहुः--अग्नये समिध्यमानाय होतरनुब्रूहीति । तदु तथा न ब्रूयात् । अहोता वा एष पुरा भवति । यदैवैनं प्रवृणीते--अथ होता । तस्मादु ब्रूयात्--अग्नये समिध्यमानायानुब्रूहीत्येव॥३॥

---

अथेध्माधानाग्निसमिन्धनहेतुभूताः सामिधेनीर्विधास्यन् तासां नाम निर्वक्ति--**इन्धे ह वा** इति । पञ्चदशसमिदात्मकेनानेन 'इध्मेन अध्वर्युः 'अग्निम्' 'इन्धे ह वै'[1] सन्दीपयति खलु । 'एतद्'--इति क्रियाविशेषणम् । 'तस्मात्' इन्धनसाधनत्वात्, तस्य 'इध्मः'[2]--इति 'नाम' संपन्नम् । 'होता' च 'सामिधेनीभिः' "प्रवो वाजा" इत्यादिभिर्ऋग्भिरग्निं[3] 'समिन्धे' अतः समिन्धनसाधनत्वात् तासामपि 'सामिधेन्यः'--इति 'नाम' निष्पन्नम् । एवं नामनिर्वचनव्याजेनेध्मेन सामिधेनीभिश्च अग्निसमिन्धनं कार्यमिति प्रतिपादितं भवति ॥ १ ॥

अथ सामिधेनीर्वाचयितुरध्वर्योः संप्रैषमन्त्रोच्चारणं विधत्ते[3]--**स आहेति** । इध्मेन संदीप्यमानाय 'अग्नये' तत्समिन्धनार्था या ऋचो वक्तव्याः, ताः सामिधेनीः 'अनुब्रूहि' इति सम्प्रैषार्थः। तमिममर्थं श्रुतिः स्वयं दर्शयति--**अग्नये ह्येतादिति** ॥ २ ॥

एकीयं मतमुपन्यस्य निरस्यति--**तदु हैक** इति । एकेषां मते "होतः ! अनुब्रूहि"--'इति' कर्तुरुपादाने विशेषः । "होतारिति चैके" (का० श्रौ० सू० ३ । २ ) । ननु युक्तमेवैतत्, किमिति "न ब्रूयादिति" निषिध्यते ? तत्राह--**अहोतेति**। प्रवरणात् पूर्वं सामिधेनीरनुब्रुवाणस्य होतृत्वं नास्ति; यदा खल्वेनं प्रवृणीते--"अग्निर्देवो दैव्यो होता" इति, 'अथ' अनन्तरमेवासौ 'होता' भवति; अतः सामिधेन्यनुवचनसमये होतृत्वाभावात् "होतरनुब्रूहि"--'इति' अपार्थकम् ॥ ३ ॥

---

१--" इध्मः समिन्धनात् " निरु. ८ । २ । १ । २--३ ब्रा. ७--९ । तै. ब्रा. ३ । ५ । २ । १ । १२ । तै. सं. २ । ५ । ७ । २ । ३--" होतृषदनं कृत्वा परेण वेदिं श्रोणिं वोत्तरेणेध्मात्समिधमादायाग्नये समिध्यमानायानुब्रूहीत्याह " का. श्रौ. सू. ३ । १ । ४--तै. सं. ६ । ३ । ५ । ९ । पुनस्तत्रैव ७ । १ । एवं ऐ. ब्रा. १ । ३ । ५ । ५--प्रैषार्थपरिचयस्तु ऐ. ब्रा. ३ । १ । ९ इत्यत्र द्रष्टव्यः । ६--सोऽयं मन्त्र इहैवोपरिष्टात् ४ प्र. २ ब्रा. ५ कं. इत्यत्र द्रष्टव्यः ।

(वा) आ॒ग्ने॒यीर॒न्वाह । स्वयै॒वैन॑मे॒तद्दे॒वत॑या॒ समि॑न्धे गाय॒त्रीर॒न्वाह गाय॒त्रं वा ऽअ॒ग्नेश्छन्दः॒ स्वेनै॒वैन॑मे॒तच्छन्द॑सा॒ समि॑न्धे वी॒र्यं॑ गाय॒त्री ब्रह्म॑ गाय॒त्री वी॒र्ये॒णै॒वैन॑मे॒तत्समि॑न्धे ॥ ४ ॥

एका॒द॒शान्वाह । (हे) एका॒द॒शाक्ष॑रा॒ वै त्रि॒ष्टुब्ब्रह्म॑ गाय॒त्री क्ष॒त्रं त्रि॒ष्टु॒बे॒ता॒भ्या॒मे॒वैन॑मे॒तदु॒भाभ्यां॑ वी॒र्या॒भ्या॒ᳫं समि॑न्धे त॒स्मादे॑काद॒शान्वाह ॥५॥

स वै त्रिः प्र॑थ॒माम॒न्वाह । त्रिरु॑त्त॒मां त्रि॒वृत्प्रा॑यणा॒ हि य॒ज्ञास्त्रि॒वृदु॑दयना॒स्तस्मा॒त्त्रिः प्र॑थ॒माम॒न्वाह त्रिरु॑त्त॒माम् ॥ ६ ॥

---

आग्नेयीरन्वाह । स्वयैवैनमेतद्देवतया समिन्धे । गायत्रीरन्वाह । गायत्रं वा अग्नेश्छन्दः । स्वेनैवैनमेतच्छन्दसा समिन्धे । वीर्यं गायत्री, ब्रह्म गायत्री; वीर्येणैवैनमेतत्समिन्धे ॥ ४ ॥

एकादशान्वाह । एकादशाक्षरा वै त्रिष्टुब् । ब्रह्म गायत्री, क्षत्रं त्रिष्टुब्—एताभ्यामेवैनमेतदुभाभ्यां वीर्याभ्यां समिन्धे—तस्मादेकादशान्वाह ॥ ५ ॥

स वै त्रिः प्रथमामन्वाह, त्रिरुत्तमाम् । त्रिवृत्प्रायणा हि यज्ञाः, त्रिवृदुदयनाः । तस्मात्—त्रिः प्रथमामन्वाह, त्रिरुत्तमाम् ॥ ६ ॥

---

देवताविशेषविशिष्टानां सामिधेनीनामनुवचनं विधत्ते—**आग्नेयीरि**ति । अग्निदेवत्या ऋचः सामिधेनीरनुब्रूयादित्यर्थः । तदेतदग्निदेवत्यत्वं प्रशंसति—**स्वयैवैना**मिति । विहितमनुवचनमनूद्य छन्दोविशेषं विधाय प्रशंसति—**गायत्रीरि**ति । अग्नेर्गायत्र्याश्च प्रजापतिमुखादुत्पन्नत्वादग्निसम्बन्धिच्छन्दो गायत्रम् । प्रजापतिमुखात् सहोत्पत्तिश्च तैत्तिरीयकैराम्नाता—" तमग्निर्देवतान्वसृज्यत गायत्रं छन्दः "—( तै. सं. ७ । १ । १ । ६ । ) इति । प्रकारान्तरेण प्रशंसति—**वीर्यं गायत्री**ति । त्रिष्टुब्जगतीभ्यां कर्तुमशक्यस्य सोमाहरणलक्षणस्य वीर्यस्य करणाद् ' गायत्री ' वीर्यात्मिका । तथा सा ' गायत्री ' ब्रह्मरूपा । ब्रह्मशब्देन ब्राह्मणजातिर्विवक्षिता । तस्याश्च गायत्रीछन्दसश्च प्रजापतिमुखादुत्पत्तिसाधारण्यात्तादात्म्यँम् ॥ ४ ॥

सामिधेनीनां सङ्ख्याविशेषं विधाय प्रशंसति—**एकादशे**ति । **उभाभ्यां वीर्याभ्या**मिति । छन्दोद्वारा ये विदिष्टे ब्रह्मक्षत्रे, तयोर्यद् ब्राह्मं क्षात्रं चोभे वीर्ये, ताभ्यामित्यर्थः ॥ ५ ॥

प्रथमोत्तमयोस्त्रिरुच्चारणं विधत्ते—**स वै त्रिरि**ति । विहितं त्रिरुच्चारणं स्तौति—**त्रिवृत्प्रायणा ही**त्यादि । " त्रिषत्या हि देवाः " ( तै० सं० ६ । ३ । १० । ३ । तै० ब्रा० ३ । २ । ३ । ८ ) इति श्रुतेः, तदीया यज्ञाः प्रारम्भपरिसमाप्त्योस्त्रिरावृत्तियुक्ताः । अत एव ज्योतिष्टोमस्याज्यप्रउगादिशस्त्रेषु प्रथमोत्तमयोस्त्रिरावृत्तिर्दृश्यते । प्रारम्भपरिसमाप्त्योस्त्रिरावर्त्तनस्य यज्ञलिङ्गत्वादत्रापि प्रथमोत्तमयोस्त्रिरावृत्तिः कार्येत्यभिप्रायः ॥ ६ ॥

---

१–"साऽस्य देवता" ( पा. सू. ४ । २ । २४ ) इत्यधिकारे " अग्नेर्ढक् " ( पा. सू. ४ । २ । ३३ ) इति ढकि रूपम् आग्नेयीत्युच्यते अग्निदेवत्या इति । २– ऐ. ब्रा. ३ । १ । १ । इत्यत्र द्रष्टव्यम् । ३–ऐ. ब्रा. ५ । ५ । ७ इत्यत्रापि द्रष्टव्यम् । ४–" त्रिः प्रथमां त्रिरुत्तमां ताः पञ्चदश भवन्ति– एवमृग्गणेषु च त्रिः प्रथमोत्तमे " इति का. श्रौ. अ. १ । १ । २ । ३ । ५–" त्रिवृता हि देवाः " इति क्वचित्पाठः ।

ताः पञ्चदश सामिधेन्यः सम्पद्यन्ते । पञ्चदशो वै वज्रो वीर्यं वज्रो वीर्यमेवैतत्सामिधेनीरभि संपादयति तस्मादेतास्वनूच्यमानासु यं द्विष्या-त्तमङ्गुष्ठाभ्यामवबाधेतेदमहममुमवबाध ऽइति तदेनमेतेन वज्रेणाव-बाधते ॥ ७ ॥

पञ्चदश वा ऽअर्द्धमासस्य रात्रयः । ( योऽर्ध ) अर्धमासशो वै संवत्सरो भवन्नेति तद्रात्रीराप्नोति ॥ ८ ॥

पञ्चदशानामु वै गायत्रीणाम् । ( त्री ) त्रीणि च शतानि षष्टिश्चाक्षराणि त्रीणि च वै शतानि षष्टिश्च संवत्सरस्याहानि तदहान्याप्नोति तद्देव संवत्सरमाप्नोति ॥ ९ ॥

---

ताः पञ्चदश सामिधेन्यः सम्पद्यन्ते । पञ्चदशो वै वज्रः, वीर्यं वज्रः, वीर्यमेवैतत्सामिधेनीरभि-सम्पादयति । तस्मादेतास्वनूच्यमानासु यं द्विष्यात् तमङ्गुष्ठाभ्यामवबाधेत–" इदमहममुमव-बाधे " इति । तदेनमेतेन वज्रेणाववबाधते ॥ ७ ॥

पञ्चदश वा अर्धमासस्य रात्रयः । अर्द्धमासशो वै संवत्सरो भवन्नेति, तद्रात्रीराप्नोति ॥ ८ ॥

पञ्चदशानामु वै गायत्रीणां त्रीणि च शतानि षष्टिश्चाक्षराणि । त्रीणि च वै शतानि षष्टिश्च संवत्सरस्याहानि । तदहान्याप्नोति, तद्धेव संवत्सरमाप्नोति ॥ ९ ॥

---

**ताः पञ्चदशेति । पञ्चदशो वै वज्र** इति । पञ्चदशस्तोमस्येन्द्रस्य च सह प्रजापतिबाहुसकाशादुत्पत्ते-रिन्द्रसम्बन्धाद्[1] वज्रोऽपि पञ्चदशस्तोमात्मकः । **सामिधेनीरभीति** । " अभिरभागे "–( पा० सू० १. ४. ९१ ) इति लक्षणे अभेः कर्मप्रवचनीयत्वात् " कर्मप्रवचनीययुक्ते " ( पा० सू० २. ३. ८ ) इति द्वितीया । शिष्टं सुगमम् ।

**अङ्गुष्ठाभ्यामवबाधेतेति** । द्वेष्यं मनसा स्मृत्वा " इदमहम्[2] " ( तै० सं० १. ६. ६. ३ ) इति मन्त्रेण पादाङ्गुष्ठाभ्यां भूमौ पीडयेदित्यर्थः । ' अमुम् ' इत्यदःशब्दस्य स्थाने द्वितीयया तन्नाम निर्देष्टव्यम् ॥ ७ ॥

पञ्चदशसंख्यां प्रकारान्तरेण प्रशंसति–**पञ्चदश वा** इति । **अर्द्धमासशो वा** इत्यादि । एकैकेनैवार्द्धमासेन हि ' संवत्सरः ' ' भवन् ' वर्द्धमानः ' एति ' आगच्छति । एवमर्द्धमासरात्रिद्वारा संवत्सरसम्बन्धिन्यो या रात्रयः, ताः सर्वा आप्नोतीत्यर्थः ॥ ८ ॥

सामिधेनीनामक्षरसङ्ख्योपजीवनेन संवत्सरसम्बन्धिनामह्नां प्राप्तिं दर्शयति–**पञ्चदशानामिति** । एवं सामिधे-नीभिः संवत्सरसंबन्धिनामहोरात्राणां प्राप्तत्वात्तत्समुदायात्मकः कृत्स्न एव संवत्सरः प्राप्तो भवतीत्याह–**तद्धेवेति** ॥ ९ ॥

---

१–ऐ. ब्रा. ५ । ५ । ७ । इत्यत्र द्रष्टव्यम् । २–" अंगुष्ठाभ्यां चाववाधते पादाभ्यां वेदमहममुमवबाध इति द्वेष्यम् " "अभबे-द्विषन्तं भ्रातृव्यमिति वा " " यावत्सामिधेनिवेदेदमहं तावतिथेन वज्रेणेति " का. श्रौ. सू. ३ । ७ । ८ । ९ । इति ।

सप्तदश सामिधेनीः। ( रि ) इष्ट्या ऽअनुब्रूयादुपाꣳशु तस्यै देवतायै यजति यस्या ऽइष्टिं निर्वपति द्वादश वै मासाः संवत्सरस्य पञ्चर्तव ऽएष ऽएव प्रजापतिः सप्तदशः सर्वं वै प्रजापतिस्तत्सर्वेणैव तं काममनपराधꣳ राध्नोति यस्मै कामायेष्टिं निर्वपत्युपाꣳशु देवतां यजत्यनिरुक्तं वा ऽउपाꣳशु सर्वं वा ऽअनिरुक्तं तत्सर्वेणैव तं काममनपराधꣳ राध्नोति यस्मै कामायेष्टिं निर्वपत्येष ऽइष्टेरुपचारः ॥ १० ॥

( २ऽ ) एकविꣳशतिꣳ सामिधेनीः। ( रु ) अपि दर्शपूर्णमासयोरनुब्रूयादित्याहुर्द्वादश वै मासाः संवत्सरस्य पञ्चर्तवस्त्रयो लोकास्तद्विꣳशतिरेष

---

सप्तदश सामिधेनीरिष्ट्या अनुब्रूयात्। उपांशु तस्यै देवतायै यजति यस्या इष्टिं निर्वपति। द्वादश वै मासाः संवत्सरस्य, पञ्चर्तवः। एष एव प्रजापतिः सप्तदशः। सर्वं वै प्रजापतिः। तत्सर्वेणैव तं काममनपराधं राध्नोति—यस्मै कामायेष्टिं निर्वपति। उपांशु देवतां यजति। अनिरुक्तं वा उपांशु। सर्वं वा अनिरुक्तम्। तत्सर्वेणैव तं काममनपराधं राध्नोति—यस्मै कामायेष्टिं निर्वपति। एष इष्टेरुपचारः ॥ १० ॥

एकविंशतिं सामिधेनीरपि दर्शपूर्णमासयोरनुब्रूयादित्याहुः। द्वादश वै मासाः संवत्सरस्य, पञ्चर्तवः,

---

साप्तदश्यं विधत्ते—**सप्तदश सामिधेनीरिष्ट्या अनुब्रूयादि**ति। उपरिष्टाद् "दर्शपूर्णमासयोः"—इति विशेषणाद्, वाक्यशेषे च "तं काममनपराधं राध्नोति"—इति कामप्राप्तिश्रवणात्तद्विकृतिभूता काम्येष्टिरत्रेष्टि-शब्देन विवक्षिता। अत एवापस्तम्बो दर्शपूर्णमासव्यतिरिक्तेष्टिपशुबन्धानां सामिधेनीसाप्तदश्यं सूत्रयामास-"पञ्चदश सामिधेन्यो दर्शपूर्णमासयोः; सप्तदशेष्टिपशुबन्धानाम्" ( इति आप. श्रौ. सू. २। १२। २। य. प. सू. ११३। ११४ ) अथ तासां काम्येष्टीनां प्रधानयागस्योपांशुत्वं विधत्ते—**उपांश्वि**ति। सामिधेनी-साप्तदश्यस्य कामप्राप्तिसाधनतामुपपादयति—**द्वादश वा** इत्यादिना। हेमन्तशिशिरयोरेकीकरणेन 'संवत्सरस्य पञ्चर्तव, एवं मासर्त्वात्मको यः संवत्सरः 'एष एव प्रजापतिः' कथमनयोरैक्यमित्यत आह—**सप्तदश** इति। यतो मासर्तुरूपेण सप्तदशावयवसमुदायात्मकः संवत्सरः, प्रजापतिश्च "आश्रावय"—इत्यादि—सप्तदशाक्षरसमु-दायात्मकः। अतस्तयोः सप्तदशावयवोपेतत्वसाम्यात्तादात्म्यम्। अस्त्वेवं किं तत इत्याह—**सर्वं वा** इति। 'अनपराधम्'—अविकलम्। एवं साप्तदश्यं प्रशस्य विहितं यागस्योपांशुत्वमप्यनूद्य प्रशंसति—**उपांश्वि**ति। उपांशूच्चारणस्य पार्श्वस्थानामर्थविशेषाप्रत्यायकत्वादनिरुक्तत्वम्, अनिरुक्तं च विशेषनिरुक्तिविरहात् सर्वात्मकम्। तेन च सर्वात्मकेनानिरुक्तेनोपांशुत्वेन कार्त्स्न्येन कामप्राप्तिर्भवतीत्यर्थः। प्रतिपादितस्यार्थस्य सर्वेष्टिसाधारण्यमभिप्रेत्याह—**एष** इति। यत् सामिधेनीसाप्तदश्यमुपांशुयजनं च 'एषः' सर्वस्याः 'इष्टेः' धर्म इत्यर्थः ॥ १० ॥

दर्शपूर्णमासयोरेव पक्षान्तरं विधाय प्रशंसति—**एकविंशतिमि**ति। **सैषा गतिरि**त्यादि। मासाद्यपेक्षया 'यः'

---

१—"अथातः काम्यप्रायश्चित्तेष्टीनां" "सप्तदशसामिधेन्यः" इति का. श्रौ. सू. २। ५। १—२। तथा "सप्तदश सामिधेन्यः समिध्यमानसमिद्धवत्यावन्तरेण पृथुपाजवत्यौ दधाति" इति तत्रैव। २—१ कां. ३ प्र. २ ब्रा. १० कं. इत्यत्र द्रष्टव्यम्। ३—"हेमन्तशिशिरयोः समासेन" ऐ. ब्रा. १। १। १। ४—"आ श्रावय ( ४ ), अस्तु श्रौषट् ( ४ ), यज ( २ ), ये यजामहे ( ५ ), वौषट् ( २ )" इत्येष सप्तदशाक्षरः ( १७ ) छन्दस्यः ॥

ऽएवैकवि ꣳ शो य एष तपति सैषा गतिरेषा प्रतिष्ठा तदेतां गतिमेतां प्रतिष्ठां गच्छति । तस्मादेकविꣳशतिमनुब्रूयात् ॥ ११ ॥

( ता ) ता हैता गतश्रेरेवानुब्रूयात् । ( य ) य इच्छेन्न श्रेयान्त्स्यान्न पापीयानिति यादृशाय हैवं स तेऽन्वाहुस्तादृङ् वा हैव भवति पापीयान्वा यस्यैवं विदुष ऽएता ऽअन्वाहुः सो ऽएषा मीमा ꣳ सैव नु त्वेवैता अनूच्यन्ते ॥ १२ ॥

त्रिरेव प्रथमां त्रिरुत्तमामनवानन्ननुब्रूयात् । ( त्र ) त्रयो वा ऽइमे लोका- स्तदिमानेवैतल्लोकान्त्सन्तनोतीमाँल्लोकान्त्स्पृणुते त्रय ऽइमे पुरुषे प्राणा एतमेवास्मिन्नेतत्संततमव्यवच्छिन्नं दधात्येतदनुवचनम् ॥ १३ ॥

---

त्रयो लोकाः–तद्विंशतिः । एष एवैकविंशो य एष तपति । सैषा गतिः, एषा प्रतिष्ठा । तदेतां गतिमेतां प्रतिष्ठां गच्छति । तस्मादेकविंशतिमनुब्रूयात् ॥ ११ ॥

ता हैता गतश्रेरेवानुब्रूयात् । य इच्छेन्न श्रेयान् स्यान्न पापीयानिति । यादृशाय हैव स तेऽन्वाहुः– तादृङ् वा हैव भवति, पापीयान्वा–यस्यैवं विदुष एता अन्वाहुः । सो एषा मीमांसैव, नत्वेवैता अनूच्यन्ते ॥ १२ ॥

त्रिरेव प्रथमां त्रिरुत्तमामनवानन्ननुब्रूयात् । त्रयो वा इमे लोकाः, तदिमानेवैतल्लोकान् सन्तनोति,

---

'एकविंशः' सूर्यः, 'एषः' एव 'सा' प्रसिद्धा 'गतिः' । यागदानादिभिर्धर्मैर्यद्गन्तव्यतया प्रतिपाद्यते तदात्मक इत्यर्थः । तथा 'एषा' एव 'प्रतिष्ठा'; सर्वस्यापि लोकस्याश्रयभूत इत्यर्थः । तथा च सामिधेनीना-मेकविंशतिसङ्ख्यया गतिप्रतिष्ठारूपं सूर्य्यमेव प्राप्नोतीत्यर्थः ॥ ११ ॥

इमं पक्षमधिकारिविशेषे नियच्छति–**ता हैता** इति । गता प्राप्ता यस्य श्रीः, तस्यैव यजमानस्यैकविंशतिसामि-धेनीरनुब्रूयात्; नान्यस्येत्यर्थः । गतश्रीव्यतिरिक्तस्यापीमं पक्षं कर्त्तव्यत्वेनाशङ्क्य निरस्यति–**य इच्छेदि**ति । 'यः' यजमानः श्रैष्ठ्यं नैकृष्ट्यं च न कामयेत, 'सः' यजमानः 'तादृङ् वा भवति'; 'यादृशाय' यथोपलब्धप्रकारेण नियतेन 'ते' होतारः सामिधेनीः 'अन्वाहुः' तत्प्रकारविशिष्ट एव भवतीत्यर्थः । तादृक्–शब्देन सामान्येन प्रतिपादितं विशिनष्टि–**पापीयान् वे**ति । 'यस्य' खलु 'एवम्' अनियतमनुवचनप्रकारं 'विदुषः' यजमानस्य 'एताः' एकविंशतिसामिधेनीः 'अन्वाहुः', 'सः' 'पापीयान् वा' श्रेयान् वा भवतीत्यर्थः । य इच्छेन्न श्रेया-नित्यादिना योऽर्थः प्रतिपादितः, सा 'एषा' 'मीमांसैव' विचार एव केवलम्, न तु तथाऽनुवचनं कार्यमित्यर्थः॥ १२॥

कथं तर्ह्यनुवक्तव्यमित्यत आह–**त्रिरेव प्रथमामि**ति । एवशब्दो भिन्नक्रमः । प्रथमोत्तमयोः 'त्रिः' अनुवचनं कुर्वन् 'अनवानन्नेव' अनुच्छ्वसन्नेव 'अनुब्रूयात्' । तत्तिसृणामृचां सन्तानं लोकत्रयसन्तत्यै भवतीति स्तौति–**त्रयो वा** इति । 'सन्तनोति' संदधाति । ततश्च 'इमान् लोकान्' परस्परसंयुक्तान् 'स्पृणुते' प्रीणयति, बलयति वा । "स्पृ प्रीतिबलयोः"–( स्वा० प० १३ ) इति । प्राणापानव्यानात्मकाः 'त्रयः' प्राणभेदाः'

---

१–'हैव सते' 'हैव सति'–'हैव सते'–इति कुत्रचित् टिप्पण्याम् । अत्र संहितापाठे ऋजुपाठे च 'स' 'ते'–इति विच्छिद्य पाठो भाष्यानुरोधेनाक्रियत । वस्तुतस्तु–"सते"–इत्येकपद्ये चतुर्थ्यन्ते एवार्थस्वारस्यं पश्यामः । २–"इति संततमनुब्रूयात्" इति का. श्रौ. सू. १ । ३ । २ । ३–कौमुद्यान्तु 'स्पृ प्रीतिपालनयोः' 'प्रीतिचलनयोरित्यन्ये–' इति दृश्यते ।

( ५ँ ) स यावदस्य व्वशः स्यात् । ( दे ) एवमेवानुविवक्षेत्तस्यैतस्य परिचक्षोत साम्यवान्या दनवानन्ननुविवक्षंस्तत्कर्म व्विवृह्येत सा परिचक्षा ॥ १४॥

स यद्येतन्नोदाशꣳसेत । ( ता ) अप्येकैकामेवानवानन्ननुब्रूयात्तदेकैकयैवेमाँल्लोकान्त्सन्तनोत्येकैकयेमाँल्लोकान्त्स्पृणुतेऽथ यत्प्राणं दधाति गायत्री वै प्राणः स यत्कृत्स्नां गायत्रीमन्वाह तत्कृत्स्नं प्राणं दधाति तस्मादेकैकामेवानवानन्ननुब्रूयात् ॥ १५ ॥

---

इमान् लोकान् स्पृणुते । त्रय इमे पुरुषे प्राणाः । एतमेवास्मिन्नेतत्संततमव्यवच्छिन्नं दधाति । एतदनुवचनम् ॥ १३ ॥

स यावदस्य वशः स्यात्—एवमेवानुविवक्षेत् । तैस्यतस्य परिचक्षा, उत साम्यवान्याद्, अनवानन्ननु विवक्षँस्तत्कर्म विवृह्येत । सा परिचक्षा ॥ १४ ॥

स यद्येतन्नोदाशंसेत अप्येकैकामेवानवानन्ननुब्रूयात् । तदेकैकयैवेमाँल्लोकान् सन्तनोति । एकैकयेमाँल्लोकान् स्पृणुते । अथ यत्प्राणं दधाति—गायत्री वै प्राणः, स यत् कृत्स्नां गायत्रीमन्वाह—तत् कृत्स्नं प्राणं दधाति । तस्मादेकैकामेवानवानन्ननुब्रूयात् ॥ १५ ॥

---

प्राणापानव्यानलक्षणवृत्तित्रयविशिष्टं प्राणमेव अनवानमनुब्रुवन् ' सन्ततं ' परस्परसंबद्धम्, ' अव्यवच्छिन्नं ' विच्छेदरहितं ' दधाति ' । एवमेवानुवचनं कर्त्तव्यमित्यभिप्रेत्य निगमयति—**एतादिति** ॥ १३ ॥

तिस्र ऋचः सन्ततमनुवक्तुं यो न शक्नोति, तेन कथमनुवक्तव्यमिति, तदाह—**स यावदिति** । ' अस्य ' होतुः ' यावत् ' अनुवक्तुं ' स[1] वशः स्यात् ', सा अनुवचनशक्तिः यावती, तावदित्यर्थः । ' एवमेव ' ' अनुविवक्षेत् ' अनुवक्तुमिच्छेत् । शक्त्यनुरूपमेवानुच्छ्वसनम्; शक्त्यभावे हि ऋङ्मध्येऽवसाने चोच्छ्वासे नास्ति दोष इत्यभिप्रायः । तदेतत्पक्षं निरस्यति—**तस्येति** । ' तस्यैतस्य ' पक्षस्य ' परिचक्षा ' निन्दा विद्यते । तामेव दर्शयति—**उत साम्यवान्यादिति** । अनवानन् अनुच्छ्वसन्, ' अनुविवक्षन् ' अनुवक्तुमिच्छन्, होता ' उत ' अपि ' सामि ' ऋङ्मध्ये ' अवान्यात् ' उच्छ्वासं कुर्यात्; तदा ' तत्कर्म ' ' विवृह्येत ' विश्लिष्येत, शिथिलं भवतीत्यर्थः । **सा परिचक्षेति** । यथाशक्त्यनुवचनपक्षे एषैव निन्देत्यर्थः ॥ १४ ॥

तिस्र ऋचः सन्ततमनुवक्तुमशक्तस्य कस्तर्ह्युपाय इति तं दर्शयति—**स यदीति** । ' एतद् ' अनन्तरोक्तं यथाशक्त्यनुवचनं निन्दायुक्तत्वात् ' सः ' होता ' न ' कामयेत, तदा ' एकैकाम् ' ऋचमनुच्छ्वसन्ननुब्रूयात् । अस्मिन्नपि पक्षे पूर्वोक्तलोकत्रय-प्राणत्रय-सन्तानमुपपादयति—**तदेकैकयेति** । त्रिपदा ह्येताः सामिधेन्यः; अत एकैकस्यामृचि पादत्रयस्य-सन्ततत्वात् ' एकैकयैव ' ऋचा त्रीन् ' लोकान् ' सन्तनोति । **गायत्री वै प्राण इति** । गायत्र्यास्त्रिपात्त्वात्, प्राणस्य प्राणापानव्यानलक्षणवृत्तित्रयात्मकत्वात्, त्रित्वसङ्ख्यायोगसाम्यात्तादात्म्यम् । तथा च कृत्स्नगायत्र्याः संततानुवचनात् कृत्स्नप्राणसंतानमपि सिद्ध्यतीत्यर्थः ॥ १५ ॥

---

१—' स्ववशः स्यात् ' ' स्ववशः शक्तिः स्यात् ' इत्यपि क्वचित्पाठः ।

ता वै सन्तताऽअव्यवच्छिन्नाऽअन्वाह संव्वत्सरस्यैवैतदहोरात्राणि संतनोति तानीमानि संव्वत्सरस्याहोरात्राणि सन्ततान्यव्यवच्छिन्नानि परिप्लवन्ते द्विषत ऽउ चैवैतद्भ्रातृव्याय नोपस्थानं करोत्युपस्थानꣳह कुर्याद्यदसन्तताऽअनुब्रूयात्तस्माद्वै सन्तताऽअव्यवच्छिन्नाऽअन्वाह ॥ १६ ॥ २ ॥

इति तृतीयप्रपाठके द्वितीयं ब्राह्मणम् ( ३. ९. )॥
तृतीयोऽध्यायश्च समाप्तः ॥ ( १–३ )

---

ता वै सन्तता अव्यवच्छिन्ना अन्वाह । संवत्सरस्यैवैतदहोरात्राणि संतनोति । तानीमानि संवत्सरस्याहोरात्राणि सन्ततान्यव्यवच्छिन्नानि परिप्लवन्ते द्विषत उ चैवैतद् भ्रातृव्याय नोपस्थानं करोति । उपस्थानं ह कुर्याद्–यदसन्तता अनुब्रूयात् । तस्माद्वै सन्तता अव्यवच्छिन्ना अन्वाह ॥ १६ ॥

---

एवमनुवचनस्यानवामलक्षणं धर्मविशेषं विधाय सान्तत्यादिकं विधत्ते–**ता वै सन्तता** इति । ' ताः ' एताः सामिधेन्यः ' सन्ततः ' परस्परसंबद्धाः, अत एव ' अव्यवच्छिन्नाः' विच्छेदरहिताः 'अन्वाह' । **संवत्सरस्ये**त्यादि। सामिधेनीनां संवत्सरसंबन्ध्यहोरात्ररूपता प्राक् प्रतिपादिता; अतस्तत्सान्तत्येन ' अहोरात्राणि ' अप्येवं ' सन्ततानि ' परस्परसंबद्धानि कृतवान् भवतीत्यर्थः । तदेतद् दृष्टानुसारेण द्रढयति–**तानीमानी**ति । यस्मादेवं सामिधेनीसान्तत्येन संवत्सरसंबन्धीनि ' अहोरात्राणि सन्ततानि ' तस्मादेवेदानीमपि ' तानि सन्ततानि अव्यवच्छिन्नानि ' पर्यावर्त्तन्त इत्यर्थः । सन्ततानुवचनस्य प्रयोजनान्तरमाह–**द्विषत** इति । ' द्विषते ' द्वेषणं कुर्वते शत्रवे ' उपस्थानं न करोति ' सन्ततानुवचनेन छिद्ररहितत्वात् । छिद्रान्वेषणशीलाय राक्षसादये प्रवेशोपायभूतं द्वारं न प्रयच्छतीत्यर्थः । विपक्षे बाधमाह–**उपस्थानं हे**ति । उपतिष्ठते प्राप्नोत्यनेनेति ' उपस्थानं ' प्राप्तिसाधनद्वारम् ॥ १६ ॥ २ ॥ ( ३. ९. ) ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये
प्रथमकाण्डे तृतीयाध्याये पञ्चमं ब्राह्मणम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ ३ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम् , सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो, व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलमवमतुलः स्वर्णजं वर्णमुख्यः, कार्पासीयं कृपावान् गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मालवणजमनृणः शार्करं चार्कतेजाः, रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मण
भाष्ये प्रथमकाण्डे तृतीयाध्यायः समाप्तः ॥ ३ ॥

# अथ चतुर्थाध्याये प्रथमं ब्राह्मणम् ।

हिङ्कृत्यान्वाह । नासामा यज्ञोऽस्तीति वा ऽआहुर्न वा ऽअहिङ्कृत्य साम गीयते स यद्धिङ्करोति तद्धिङ्कारस्य रूपं क्रियते प्रणवेनैव साम्नो रूपमुपगच्छत्यो ३ मो ३ मित्येतेनो हास्यैष सर्व्व एव ससामा यज्ञो भवति ॥ १ ॥

यद्वेव हिङ्करोति । प्राणो वै हिङ्कारः प्राणो हि वै हिङ्कारस्तस्मादपिगृह्य नासिके न हिङ्कर्तुं शक्नोति वाचा वा ऽऋचमन्वाह वाक्च वै प्राणश्च मिथुनं तदेतत्पुरस्तान्मिथुनं प्रजननं क्रियते सामिधेनीनां तस्माद्वै हिङ्कृत्यान्वाह ॥ २ ॥

स वा ऽउपाꣳशु हिङ्करोति । ( त्यु ) अथ यदुच्चैर्हिङ्कुर्य्यादन्यतरदेव कुर्याद्वाचमेव तस्मादुपाꣳशु हिङ्करोति ॥ ३ ॥

---

हिङ्कृत्यान्वाह । नासामा यज्ञोऽस्तीति वा आहुः । न वा अहिङ्कृत्य साम गीयते । स यद्धिङ्करोति, तद्धिङ्कारस्य रूपं क्रियते । प्रणवेनैव साम्नो रूपमुपगच्छति--ओ ३ म् ओ ३ म् इति । एतेनो हास्यैष सर्व एव ससामा यज्ञो भवति ॥ १ ॥

यद्वेव हिङ्करोति । प्राणो वै हिङ्कारः । प्राणो हि वै हिङ्कारः, तस्माद्--अपिगृह्य नासिके न हिङ्कर्तुं शक्नोति । वाचा वा ऋचमन्वाह । वाक् च वै प्राणश्च मिथुनम् । तदेतत्पुरस्तान्मिथुनं प्रजननं क्रियते सामिधेनीनाम् । तस्माद्वै हिङ्कृत्यान्वाह ॥ २ ॥

स वा उपांशु हिङ्करोति । अथ यदुच्चैर्हिङ्कुर्यात्, अन्यतरदेव कुर्यात्; वाचमेव । तस्मादुपांशु हिङ्करोति ॥ ३ ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अथ तस्मिन् सामिधेन्यनुवचने धर्मविशेषं विधत्ते--**हिङ्कृत्येति** । 'हिं'--इति शब्दमुच्चार्येत्यर्थः । **नासामे-**त्यादि । सामरहितस्यायज्ञत्वात्, हिङ्कारप्रणवयोः सामावयवत्वात्, सामिधेनीषु तत्करणेन सामिधेनीयुक्तः सर्वोऽपि सामवान् यज्ञः संपद्यत इत्यर्थः । 'ओ३म्--ओ३म्'--इति वीप्सया सर्वासु सामिधेनीषु स्थितस्य प्रणवस्यानुकरणम् ॥ १ ॥

यद्वेवेत्यादिः हिङ्कारस्तुतिः । तस्य प्रतिज्ञातं प्राणात्मकत्वमुपपादयति--**प्राणो वा** इति । हिङ्कृत्यानुवचनम्, मिथुनसंपत्त्या स्तौति--**वाचा वा** इत्यादिना । नासिकास्थप्राणात्मको हिङ्कारः, तन्निवर्त्यत्वात्, ऋक् च वागात्मिका, तयोच्चार्यमाणत्वात्, 'प्राणश्च वाक् च' 'एतत्' एकं 'मिथुनम्'; स्त्रीपुंसरूपत्वात् । अतः सामिधेनीनां 'पुरस्ताद्' यजमानस्य पुत्रपौत्रादिप्रजनननिमित्तं 'हिङ्कृत्य' अनुवचनेन 'मिथुनमेव क्रियते' इत्यर्थः ॥ २ ॥

**अन्यतरदेवेति** । उच्चैर्हिङ्कारस्योच्चारणे हि सोऽपि वाचैव निवर्त्त्येत--इति तदात्मक एव स्यान्न प्राणात्मकः । तथा च मिथुनसंपत्तिर्न स्यादित्यर्थः ॥ ३ ॥

---

१--"हू ३ म्"--इति सहिङ्कारः" इति सा. छां. ब्रा. ४ । ८ । १ । २ । २--"लोकेषु पञ्चविधं सामोपासीत" इत्यादि ४ प्र. २--७ खं. । अथ सप्तविधस्य "वाचि सप्तविधं सामोपासीत" इत्यादि च ४ प्र. ८--२१ खं. सा. छां. ब्रा. । ३--"प्राणो हिङ्कारः" सा. छां. ब्रा. ४ । ७ । १ । ४--सा. छां. ब्रा. ४ । १२ । १ । २ इत्यत्र द्रष्टव्यम् ।

स वा ऽएति च प्रेति चान्वाह । गायत्रीमेवैतदर्व्वाचीं च पराचीं च युनक्ति पराच्यह देवेभ्यो यज्ञं व्वहत्यर्व्वाची मनुष्यानवति तस्माद्वा ऽएति च प्रेति चान्वाह ॥ ४ ॥

यद्वेवेति च प्रेति चान्वाह । प्रेति वै प्राणऽएत्युदानः प्राणोदानावेवैतद्दधाति तस्माद्वा ऽएति च प्रेति चान्वाह ॥ ५ ॥

यद्वेवेति च प्रेति चान्वाह । प्रेति वै रेतः सिच्यत ऽएति प्रजायते प्रेति पशवो वितिष्ठन्त ऽएति समावर्तन्ते सर्व्वं वा ऽइदमेति च प्रेति च तस्माद्वा ऽएति च प्रेति चान्वाह ॥ ६ ॥

---

स वा एति च प्रेति चान्वाह । गायत्रीमेवैतदर्वाचीं च पराचीं च युनक्ति । पराच्यह देवेभ्यो यज्ञं वहति, अर्वाची मनुष्यानवति, तस्माद्वा एति च प्रेति चान्वाह ॥ ४ ॥

यद्वेवेति च प्रेति चान्वाह । प्रेति वै प्राणः, एत्युदानः; प्राणोदानावेवैतद्दधाति । तस्माद्वा एति च प्रेति चान्वाह ॥ ५ ॥

यद्वेवेति च प्रेति चान्वाह । प्रेति वै रेतः सिच्यते, एति प्रजायते । प्रेति पशवो वितिष्ठन्ते । एति समावर्त्तन्ते । सर्वं वा इदमेति च प्रेति च । तस्माद्वा एति च प्रेति चान्वाह ॥ ६ ॥

---

सामिधेनीनां लिङ्गविशेषं विधत्ते—**स वा एति चे**ति । आ इति 'एति'; प्र इति 'प्रेति' । अत्र 'इति'-शब्देन प्रकृतविपर्यासकृता एतौ शब्दावर्थपरत्वात् प्रच्याव्य अर्वाची–शब्दपरतया व्यवस्थाप्येते। तथा च आङुपसर्गयुक्ताः प्रोपसर्गयुक्ताश्चर्चोऽनुब्रूयादित्यर्थः ।

तदेतल्लिङ्गद्वयं प्रयोजनकथनेन प्रशंसति--**गायत्रीमेवे**ति । आङुपसर्गो ह्याभिमुख्ये वर्तते । अतस्तेन 'अर्वाचीम्' अभिमुखीं युनक्ति । परेतः प्रेत इति पर्यायदर्शनात् प्रशब्दस्य पराङ्मुखत्वेऽपि वृत्तिरस्ति, अतोऽत्र प्रशब्देन पराङ्मुखत्ववाचिना पराङ्मुखीमेव तां 'युनक्ति'--इत्यर्थः ।

एवमुभयथा योजनस्य प्रयोजनमाह--**पराच्यहे**ति । यतो देवयजनान्निष्क्रम्य 'पराची' पराङ्मुखी, अनिवर्त्तमानैव गायत्री द्युलोकं प्रति 'यज्ञं' वोढुं शक्नोति नार्वाची। सा तु सन्निधानात् 'मनुष्यान्' रक्षितुं शक्नोति । अतो लिङ्गद्वययुक्ता एवानुवक्तव्याः ॥ ४ ॥

तदेतल्लिङ्गद्वयं विधाय प्रशंसति—**यद्वेवे**त्यादिना । **प्रेति वै प्राण** इति । प्रशब्दस्य परागञ्चनार्थत्वात्, प्राणस्य च पराग्वृत्तित्वादुभयोस्तादात्म्यम् । **एत्युदान** इति । आकारस्याभिमुख्यार्थत्वादुदानस्यान्तःप्रवेशवृत्तिरूपत्वात्तादात्म्यम् ॥ ५ ॥

**यद्वेवेति चे**ति । **प्रेति वै रेतः सिच्यत** इति । सिच्यमानस्य रेतसः पराङ्मुखप्रवृत्तेः प्र–शब्दस्य तस्य च तादात्म्यम् । अपत्यरूपेण जायमानस्याभिमुख्यमावर्त्तनादाभिमुख्यवाचिन आकारस्य तादात्म्यम् । **प्रेति पशव** इत्यादि । पशूनां तृणादिभक्षणाय यद्वनं प्रति पराग् गमनम्, तत् प्रशब्दार्थः । [illegible] सायं समागमनम्, तदाकारस्यार्थः । किं बहुना 'सर्वम्' अपि 'इदम्' जगत् प्रगमनस्वभावमावर्त्तनस्वभावं च । तस्मादेतल्लिङ्गद्वयमनुवचने संपादनीयमित्यर्थः ॥ ६ ॥

---

१-निरु० १।१।५; १।२।३; ३।३।४; ५।५।६। २-" प्रपरेत्येतस्य प्रातिलोम्यम् " इति निरु० १।१।५।
३-' प्रवर्तमानैव ' इति क. पा. । ४-निघ० ४।२।३२।

सोऽन्वाह । प्र वो व्वाजाऽअभिद्यवऽ इति तन्नु प्रेति भवत्यग्नऽआयाहि व्वीतयऽइति तद्वेति भवति ॥ ७ ॥

तदु हैक ऽआहुः । ( रु ) उभयं वाऽएतत्प्रेति संपद्यत ऽइति तदु तदातिविज्ञान्यमिव प्र वो व्वाजाऽअभिद्यव ऽइति तन्नु प्रेत्यग्न ऽआयाहि व्वीतय ऽइति तद्वेति ॥ ८ ॥

सोऽन्वाह । प्र वो व्वाजा ऽअभिद्यव ऽइति तन्नु प्रेति भवति व्वाजा

---

सोऽन्वाह–" प्र वो वाजा अभिद्यव " इति । तन्नु प्रेति भवति । "अग्न आयाहि वीतय " इति । तद्वेति भवति ॥ ७ ॥

तदु हैक आहुः–उभयं वा एतत् प्रेति संपद्यत इति । तदु तदातिविज्ञान्यमिव । प्र वो वाजा अभिद्यव इति तन्नु प्रेति । अग्न आयाहि वीतय इति-तद्वेति ॥ ८ ॥

सोऽन्वाह–प्र वो वाजा अभिद्यव इति–तन्नु प्रेति भवति । वाजा इति । अन्नं वै वाजाः, अन्नमेवै-

---

तदेतदुदाहरणेन दर्शयति–सोऽन्वाहेति । प्र वो वाजा इति । एषा प्रशब्दलिङ्गयुक्ता सामिधेनी तै. ब्रा. ३ । ५ । २ । १ । तै. सं. २ । ५ । ७ । २ । अग्न आयाहीत्याङुपसर्गलिङ्गयुक्ता तै. ब्रा० ३ । ५ । २ । २ । तै. सं. २ । ५ । ८ । १–११ । ॥ ७ ॥

अनयोर्लिङ्गयोरैक्यमाशङ्क्य निरस्यति–तदु हेति । ' आयाहि '–इत्यनेन यदस्मान् प्रत्याभिमुख्यगमनं प्रतिपादितम्, ' तत् ' स्वर्गवासिदेवतापेक्षया परागमनमेवेति ' एति ' लिङ्गमपि ' प्रेति ' लिङ्गं सम्पद्यते ' इति ' एकीयमताभिप्रायः । ' तत् ' एतत् ' आतिविज्ञान्यं विज्ञानपथातिवर्ति । ' आयाहि ' इत्युक्ते यस्माद्गागमनमेव शीघ्रं बुद्धावारोहति न तु प्रगमनम् । तस्मात् प्रेति संपत्तिर्दुरधिगमेत्यर्थः । लिङ्गद्वयं तथैव व्यवस्थितमित्यभिप्रेत्यानुवदति–प्रव इति ॥ ८ ॥

विहितमनुवचनमनूद्य प्रथमतोऽनुवक्तव्यामृचं विधाय तत्पदानि व्याचष्टे–सोऽन्वाहेत्यादिना । अत्र

---

१–इत आरभ्यैताः सामिधेन्य उच्यमानास्तैत्तिरीयब्राह्मणे समाम्नाताः–यथा–" प्रवो वाजा अभियवो हविष्मन्तो घृताच्या । देवाञ्जिगाति सुम्नयुः ॥ १ ॥ अग्न आयाहि वीतये गृणानो हव्यदातये । नि होता सत्सि बर्हिषि ॥ २ ॥ तं त्वा समिद्भिराङ्गिरो घृतेन वर्द्धयामसि । बृहच्छोचा यविष्ठय ॥ ३ ॥ स नः पृथुः श्रवाय्यमच्छा देव विवाससि । बृहदग्ने सुवीर्य्यम् ॥ ४ ॥ ईडेन्यो नमस्यस्तिरस्तमाꣳसि दर्शतः । समग्निरिध्यते वृषा ॥ ५ ॥ वृषो अग्निः समिध्यते अश्वो न देववाहनः । तꣳहविष्मन्त ईडते ॥ ६ ॥ वृषणं त्वा वयं वृषन् वृषाणः समिधीमहिं । अग्ने दीद्यतं बृहत् ॥ ७ ॥ अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् ॥ ८ ॥ समिध्यमानो अध्वरे । अग्निः पावक ईड्यः । शोचिष्केशस्तमीमहे ॥ ९ ॥ समिद्धो अग्न आहुत देवान् यक्षि स्वध्वर । त्वꣳहि हव्यवाडसि ॥ १० ॥ आजुहोत दुवस्यताग्निं प्रयत्यध्वरे । वृणीध्वꣳहव्यवाहनम् ॥ ११ ॥"(.कां. ३.प्र. ५. अ० २ )

" अग्ने महाꣳअसि ब्राह्मण भारत, असावसौ, देवेद्धो मन्विद्ध ऋषिष्टुतो विप्रानुमदितः कविशस्तो ब्रह्मसꣳशितो घृताहवनः, प्रणीर्यज्ञाना ꣳरथीरध्वराणाम् । अतूर्तो होता तूर्णिर्हव्यवाट् । आस्पात्रं जुहूर्देवानां चमसो देवपानः । अराꣳइवाग्ने नेमिर्देवांस्त्वं परिभूरसि । आवह देवान् यजमानाय, अग्निमग्न आवह, सोममावह, अग्निमावह, प्रजापतिमावह, अग्नीषोमावावह, इन्द्राग्नी आवह, इन्द्रमावह, महेन्द्रमावह, देवाꣳआज्यपाꣳआवह, अग्निं होत्रायावह, स्वं महिमानमावह, आ चाग्ने देवान् वह, सुयजा च यज जातवेदः ॥ "( तै० ब्रा० कां० ३ । प्र० ५ । अ० ३ )

इत्थमेते " तं त्वा समिद्भिरिति तृतीयमन्त्रव्यतिरिक्ताः सामिधेन्यादिमन्त्राः प्रचलिते माध्यन्दिनीयसंहितापाठे नोपलभ्यन्ते । अपि च सप्तममन्त्रे वृषाण इति तैत्तिरीये पाठः । इह तु ब्राह्मणे वृषण इति ह्रस्वः पठ्यते । अन्ते च–" आ च वह जातवेदः सुयजा च यज"–इत्येव माध्यन्दिनीयः पाठ इति विशेषः ॥

ऽइत्यन्नं वै व्वाजा ऽअन्नमेवैतदभ्यनूक्तमभिद्यव ऽइत्यर्धमासा वा ऽअभिद्यवोऽर्धमासानेवैतदभ्यनूक्तं हविष्मन्त ऽइति पशवो वै हविष्मन्तः पशूनेवैतदभ्यनूक्तम् ॥ ९ ॥

घृताच्येति । व्विदेघो ह माथवोऽग्निं व्वैश्वानरं मुखे बभार तस्य गोतमो राहूगण ऋषिः पुरोहित ऽआस तस्मै ह स्मामन्त्र्यमाणो न प्रतिशृणोति नेन्मेऽग्निर्व्वैश्वानरो मुखान्निष्पद्याता ऽइति ॥ १० ॥

तमृग्भिर्ह्वयितुं दध्रे । व्वीतिहोत्रं त्वा कवे द्युमन्त समिधीमहि । अग्ने बृहन्तमध्वरे व्विदेघेति ॥ ११ ॥

---

तदभ्यनूक्तम् । अभिद्यव इति । अर्धमासा वा अभिद्यवः, अर्धमासानेवैतदभ्यनूक्तम् । "हविष्मन्त" इति । पशवो वै हविष्मन्तः, पशूनेवैतदभ्यनूक्तम् ॥ ९ ॥

"घृताच्या" इति । विदेघो ह माथवोऽग्निं वैश्वानरं मुखे बभार । तस्य गोतमो राहूगण ऋषिः पुरोहित आस । तस्मै ह स्मामन्त्र्यमाणो न प्रतिशृणोति—नेन्मेऽग्निर्वैश्वानरो मुखान्निष्पद्याता इति ॥१०

तमृग्भिर्ह्वयितुं दध्रे—" वीतिहोत्रं त्वा कवे द्युमन्तं समिधीमहि । अग्ने बृहन्तमध्वरे-विदेघ " इति ॥ ११ ॥

---

' वाजाः ' इति पदेनान्नं विवक्षितम्, वाजयति वलयतीति तच्छब्दव्युत्पत्तेः । अतः एतत्पदोच्चारणेन ' अन्नमेव ' ' अभ्यनूक्तम् ' अभिलक्ष्यानुवचनं कृतं भवति । " वस्तोः द्यौः भानुः वासरम् " इत्यहर्नामसु पाठात् " द्यु "-शब्दो दिनवचनः । ( निघ. १ अ. ९ खं. । १ । २ । ३ । ४ । ) द्यून् दिवसान् अभिगता इति व्युत्पत्त्या ' अभिद्यव ' इत्यनेनार्धमासा उच्यन्त इति व्याचष्टे-**अर्धमासा वा अभिद्यवः**-इति । **पशवो वै हविष्मन्तः**-इति । क्षीरदध्याज्यादिहविर्जनकत्वाद् भाविना हविषा तद्वन्त इत्यर्थः ॥ ९ ॥

**घृताच्येति** । घृतशब्दोच्चारणस्याग्निसमिन्धनेऽतिशयितमानुकूल्यमाख्यायिकया दर्शयति-**विदेघो ह माथव** इत्यादिना । ' माथवः ' मथुनाम्नः पुत्रो ' विदेघः ' नाम राजा । स च स्वमुखे विश्वनरहितम् ' अग्निं ' धारयामास । रहूगणस्य पुत्रो ' गोतमः ' नाम ऋषिः, तस्य राज्ञः ' पुरोहितः ' । स च राजा तेन ऋषिणा आहूयमानः ' तस्मै ' न प्रत्युत्तरं ददौ । केनाभिप्रायेणेति चेद्, उच्यते-यद्यहं वदिष्यामि, मदीयात् ' मुखात् ' सोऽग्निर्निष्पद्येत, नैव निष्पद्यतामित्यनेनाभिप्रायेणेत्यर्थः ॥ १० ॥

**तमृग्भिरित्यादि** । स च ऋषिः ऋङ्मन्त्रैस्तस्य मुखगतमग्निं स्तुवन् ' तं ' विदेघमाह्वातुं निश्चितवान्, निश्चित्य च " वीतिहोत्रम् " (वा.सं.२.४.) इति मन्त्रेणाजुहाव । एवं स्तुतोऽप्यग्निस्तन्मुखे तूष्णीमेव स्थितवान् ॥ ११ ॥

---

१—क्वचित् ' माधवः ' इति पाठो दृश्यते स न युक्त इति भाति । २—शतपथेऽन्यत्र तु सर्वत्रैव ' विदेहः ' इति शब्दः श्रुतः । ( १ । ४ । १ । १७; १४ । ६ । ११ । ६; ७ । २ । ३० । केवलमत्रैव श्रूयते विदेघ इति ।

स न प्रतिशुश्राव । ( वो ) उदग्ने शुचयस्तव शुक्रा भ्राजन्त ऽईरते । तव ज्योतीᳬंष्यर्चयो विदेघा ३ ऽइति ॥ १२ ॥

स ह नैव प्रतिशुश्राव । तन्त्वा घृतस्नवीमह ऽइत्येवाभिव्याहरदथास्य घृतकीर्तावेवाग्निर्वैश्वानरो मुखादुज्जज्वाल तन्न शशाक धारयितुᳬं सोऽस्य मुखान्निष्पेदे स ऽइमां पृथिवीं प्रापादः ॥ १३ ॥

( स्तु ) तर्हि विदेघो माथव आस । सरस्वत्याᳬं स तत ऽएव प्राङ्दहन्नभीयायेमां पृथिवीं तं गोतमश्च राहूगणो विदेघश्च माथवः पश्चाद्दहन्तमन्वीयतुः स ऽइमाः सर्वा नदीरतिददाह सदानीरेत्युत्तराद्गिरेर्निर्द्धावति ताᳬं हैव नातिददाह ताᳬं ह स्म तां पुरा ब्राह्मणा न तरन्त्यनतिदग्धाग्निना वैश्वानरेणेति ॥ १४ ॥

---

स न प्रतिशुश्राव—" उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते । तव ज्योतीᳬंष्यर्चयो—विदेघा ३ " इति ॥ १२ ॥

स ह नैव प्रतिशुश्राव । " तन्त्वा घृतस्नवीमहे " इत्येवाभिव्याहरत्—अथास्य घृतकीर्तावेवाग्निर्वैश्वानरो मुखादुज्जज्वाल । तं न शशाक धारयितुम् । सोऽस्य मुखान्निष्पेदे । स इमां पृथिवीं प्रापादः ॥ १३ ॥

तर्हि विदेघो माथव आस सरस्वत्याम् । स तत एव प्राङ् दहन्नभीयायेमां पृथिवीम् । तं गोतमश्च राहूगणो विदेघश्च माथवः पश्चाद्दहन्तमन्वीयतुः । स इमाः सर्वा नदीरतिददाह । सदानीरेत्युत्तराद् गिरेर्निर्द्धावति, तां हैव नातिददाह । तां ह स्म तां पुरा ब्राह्मणा न तरन्ति, अनतिदग्धाऽग्निना वैश्वानरेणेति ॥ १४ ॥

---

**स न** इति । " सः ' विदेघोऽपि ' न ' प्रत्युवाच । पुनरपि ' सः ' ऋषिः " उदग्ने शुचयः " ( तै. सं. १. ३. १४. २८; ४. ४६. १३; ९. ९. १२; २. ४. १४. ११ ) इति मन्त्रेणाग्निं स्तुवन् क्रोधेन विदेघमाकारयामास । ' विदेघा ३ '—इति प्लुतिरसूयार्था ॥ १२ ॥

**स ह नैवेति** । एवमपि प्रतिश्रवणाभावे " तन्त्वा घृतस्नवीमहे "—' इति ' इमामेवर्चम्, (ऋ. सं० ५।२६।२) अग्निमभिलक्ष्योक्तवान् । ' सः ' चाग्निर्मन्त्रगतघृतशब्दोच्चारणसमये एव माथवस्य मुखसकाशादूर्द्ध्वं ज्वलितोऽभूत् । ' तम् ' अग्निं ' धारयितुं ' सोऽपि ' न शशाक ' ज्वालाधिक्येन दाहकत्वात् । ' स ' च मुखान्निर्गतः सन् ' पृथिवीं ' प्राप्तवान् ॥ १३ ॥

तर्हीति । तस्मिन् समये माथवश्च तापशमनाय ' सरस्वत्यां ' नद्यां निमग्नोऽभूत् । ' सः ' अग्निस्तस्मात् स्थानादारभ्य ' प्राङ् दहन् ' ' इमां ' सर्वां ' पृथिवीम् ' अभितो व्याप्नोत् । माथवगोतमावुभावपि ' दहन्तं ' ' तम् ' अग्निं ' पश्चात् ' अनुजग्मतुः । ' सः ' च दहन्नग्निः पृथिव्यां यावत्यो नद्यः सन्ति, ताः ' सर्वा

---

१-भाष्ये तु धारयतीति व्याख्यातम् । २-पा. सू. ८ । २ । १०३ ।

तत ऽएतर्हि । प्राचीनं बहवो ब्राह्मणास्तद्धाक्षेत्रतरमिवास स्रावितरमिवा-स्वदितमग्निना वैश्वानरेणेति ॥ १९ ॥

तदु हैतर्हि । क्षेत्रतरमिव ब्राह्मणा ऽउ हि नूनमेनद्यज्ञैरसिष्वदन्त्सापि जघन्ये नैदाघे समिवैव कोपयति तावच्छीतानतिदग्धा ह्यग्निना वैश्वानरेण ॥ १६ ॥

स होवाच । विदेघो माथवः क्वाहं भवानीत्यत एव ते प्राचीनं भुवन-मिति होवाच सैषाप्येतर्हि कोसलविदेहानां मर्यादा ते हि माथवाः ॥ १७ ॥

---

तत एतर्हि प्राचीनं बहवो ब्राह्मणाः । तद्धाक्षेत्रतरमिवास, स्रावितरमिवास्वदितमग्निना वैश्वा-नरेणेति ॥ १९ ॥

तदु हैतर्हि क्षेत्रतरमिव । ब्राह्मणा उ हि नूनमेनद्यज्ञैरसिष्वदन् । सापि जघन्ये नैदाघे समिवैव कोपयति तावत्, शीताऽनतिदग्धा ह्यग्निना वैश्वानरेण ॥ १६ ॥

स होवाच विदेघो माथवः—क्वाहं भवानीति । अत एव ते प्राचीनं भुवनमिति होवाच । सैषा-प्येतर्हि कोसलविदेहानां मर्यादा । ते हि माथवाः ॥ १७ ॥

---

नदीः ' अतिशयेन ' ददाह ' शोषयामास । प्राचीनं दहतोऽस्य पुरस्तात् ' सदानीरा ' नाम नदी ' उत्तरात् ' उदक्प्रवाहा ' एति ' गच्छति । तया च व्यवहितः सोऽग्निः । एनमग्निम्, सापि निःशेषेण धारयति, इतस्ततो गमनं निवार्य धारितवतीत्यर्थः । स चाग्निः, ' तां ' नदीमितरनदीवत्, ' नातिददाह ' । अत एव सदा-सर्वदा नीरं जलमस्यामस्तीति व्युत्पत्त्या ' सदानीरा '—इत्युच्यते । तथा च निघण्टुः—" करतोया सदानीरा बाहुदा सैतवाहिनी " इति । ' तां ह ' नदीं ' पुरा ' तद्दहनोत्तरकाले ' ब्राह्मणाः ' ' न तरन्ति ' न स्पृशन्ति । अग्निदाहाभावेनाविशुद्धत्वादिति हेतुमाह—**अनतिदग्धे**ति ॥ १४ ॥

**तत एतर्ही**ति । 'ततः' तस्या नद्याः 'प्राचीनं' प्राग्देशम् । ' एतर्हि ' इदानीं ' बहवो ब्राह्मणाः ' निवसन्ति । अत्यन्तसंयोगे द्वितीया ( पा. सू. २।१।२९। ) प्राग्देशः सर्वोऽपि ब्राह्मणवास इत्यर्थः । ' तत् ' च स्थानम् । ' अक्षेत्रतरमिव ' अतिशयेन निवासायोग्यमिव ' आस ' बभूव । तथा ' स्रावितरं ' भग्नभाण्डे निक्षिप्तनीरवत्त-देशेऽनुष्ठितं यज्ञदानादिकमतिशयेन ' स्रावि ' स्रवणशीलं फलप्रदानासमर्थं बभूवेत्यर्थः । तत्र हेतुमाह—**अस्व-दितमि**ति । यतो ' वैश्वानरेणाग्निना ' ' अस्वदितम् ' अनास्वादितम्, अतस्तत्स्थानमपवित्रमित्यर्थः ॥ १९ ॥

अस्य दोषस्य परिहारमाह—**तदु हे**ति । ' एतर्हि ' एतस्मिन् समये ' तद् ' अपि स्थानं ' क्षेत्रतरं ' निवासयोग्य-मेव भवति । कुत इत्यत आह—**ब्राह्मणा उ ही**ति । ' नूनम् ' इति निश्चये; ' हि ' यस्मात् ' एनत् ' स्थानं ब्राह्मणा ' यज्ञैरसिष्वदन् ' यज्ञानुष्ठानैरग्निनाऽऽस्वादितमकुर्वत, तस्मादित्यर्थः । ' सा ' च नदी ' जघन्ये ' निकृष्टे सर्वरसवर्जिते ' नैदाघे ' ग्रीष्मसंबन्धिकालेऽपि सम्यक् ' कोपयति ' बहुजलतया प्रकुपिता भवति । ' तावत् ' पर्यन्ते हि काले ' वैश्वानरेणाग्निना ' ' दग्धा ' तदा च तं निवारयितुं तस्याः प्रकोपो जात इत्यर्थः ॥ १६ ॥

**स होवाचे**ति । एवं सर्वेषु देशेषु दग्धेषु ' सः ' च माथवोऽग्निमेव प्रतीक्ष्य ' उवाच '—' क्व ' कुत्र देशे

---

१–' कोशः ' इति पा. । दृश्यते च पद्यार्द्धमिदममरकोशे १ । १० । ३३ । इत्यत्रैव । २–" नूनमिति विचिकित्सार्थीयः " इति निरु० १ । २ । ४ ।

(ऽ) अथ होवाच । गोतमो राहूगणः कथन्नु न ऽआमन्त्र्यमाणो न प्रत्यश्रौषीरिति स होवाचाग्निर्मे व्वैश्वानरो मुखेऽभूत्स नेन्मे मुखान्निष्पद्याता इति तस्मात्ते न प्रत्यश्रौषमिति ॥ १८ ॥

तदु कथमभूदिति । यत्रैव त्वं घृतस्नवीमह ऽइत्यभिव्याहार्षीस्तदेव मे घृतकीर्तावग्निर्व्वैश्वानरो मुखादुदज्वालीत्तं नाशकं धारयितुꣳ स मे मुखान्निरपादीति ॥ १९ ॥

स यत्सामिधेनीषु घृतवत् । (त्सा) सामिधेनमेव तत्समेवैनं तेनेन्धे व्वीर्यमेवास्मिन्दधाति ॥ २० ॥

तदु घृताच्येति । देवाञ्जिगाति सुम्नयुरिति यजमानो वै सुम्नयुः स हि देवाञ्जिगीषति स हि देवाञ्जिघाꣳसति तस्मादाह देवाञ्जिगाति सुम्नयुरिति सैषाग्नेयी सत्यनिरुक्ता सर्वं वा ऽअनिरुक्तꣳ सर्वेणैवैतत्प्रतिपद्यते ॥२१॥

---

अथ होवाच गोतमो राहूगणः--कथन्नु न आमन्त्र्यमाणो न प्रत्यश्रौषीरिति । स होवाच--अग्निर्मे वैश्वानरो मुखेऽभूत्, स नेन्मे मुखान्निष्पद्याता इति, तस्मात्ते न प्रत्यश्रौषमिति ॥ १८ ॥

तदु कथमभूदिति । यत्रैव त्वं ' घृतस्नवीमहे ' इत्यभिव्याहार्षीः ' तदेव मे घृतकीर्तावग्निर्वैश्वानरो मुखादुदज्वालीत्; तन्नाशकं धारयितुम्, स मे मुखान्निरपादीति ॥ १९ ॥

स यत्सामिधेनीषु घृतवत्--सामिधेनमेव तत् । समेवैनं तेनेन्धे, वीर्यमेवास्मिन् दधाति ॥ २० ॥

तदु घृताच्येति । " देवाञ् जिगाति सुम्नयुः "--इति । यजमानो वै सुम्नयुः, स हि देवाञ् जिगीषति स हि देवाञ् जिघांसति । तस्मादाह--देवाञ् जिगाति सुम्नयुरिति । सैषाग्नेयी सत्यनिरुक्ता । सर्वं वा अनिरुक्तम्, सर्वेणैवैतत्प्रतिपद्यते ॥ २१ ॥

---

' अहं भवानि ' निवसेयम् ? ' इति ' पृष्टे सोऽप्यग्निरेनम् ' उवाच ' । किमिति । ' अतः ' अस्याः नद्याः ' प्राचीनं ' यद् ' भुवनं ' भूमिः, एतदेव ' ते ' तव निवासोऽस्त्विति । अत एव कारणात्, एतस्मिन्नपि काले ' सैषा ' सदानीरा नदी कोसलदेशस्य च विदेहस्य च मर्यादात्वेन दृश्यते । ' हि ' यस्मादेवं माथवायाग्निरदात्, तस्मात्ते विदेहदेशा अपि माथवा इत्युच्यन्ते ॥ १७ ॥

उक्तं वृत्तान्तं गोतमेन पृष्टः सन् विदेहोऽनुवदति--अथ होवाचेत्यादिना । परोक्षत्वात्पूर्वं श्रुतिवाक्ये लिट्--प्रयोगः । ( पा. सू. ३ । २ । ११५ । ) गोतममाथवयोः प्रश्नप्रतिवचनरूपवाक्ये तु भूताद्यनत्वाल्लुङ्-प्रयोगो ( पा. सू. ३ । २ । ११० । ) विशेषः ॥ १८ ॥ १९ ॥

एवं प्रासङ्गिकं परिसमाप्य प्रकृते योजयति--स यदिति । यस्माद् घृतशब्दोच्चारणेनाग्निः प्रज्वलितो बभूव, तस्मात् कारणात् ' सामिधेनीषु ' ' यद् ' घृतप्रातिपदिकयुक्तं पदम् ' तत् ' ' सामिधेनमेव ' अग्निसमिन्धनहेतुर्भवतीत्यर्थः ॥ २० ॥

तस्माद् घृताच्यैतत्पदं सामिधेनीषु युक्ततरमिति निगमयति--तद्धिति । तैत्तिरीयकेऽपि नृमेधपरुच्छेपसंवादोदाहरणे घृतवत्पदस्याग्निजननहेतुत्वं प्रतिपादितम्--" यत्समावद्विद्व कथा त्वमग्निमजीजनो नाहमिति; सामिधेनीना-

(तेऽग्न) अग्न ऽआयाहि व्वीतय ऽइति । तद्धेति भवति व्वीतय ऽइति समन्तिकमिव ह वा ऽइमेऽग्रे लोका ऽआसुरित्युन्मृश्या हैव द्यौरास ॥ २२ ॥

ते देवाऽअकामयन्त । कथन्नु न इमे लोका वितराᳬ स्युः कथन्न इदं व्वरीयऽइव स्यादिति तानेतैरेव त्रिभिरक्षरैर्व्यनयन्वीतय ऽइति त ऽइमे व्विदूरं लोकास्ततो देवेभ्यो व्वरीयोऽभवद्वरीयो ह वा ऽअस्मै भवति यस्यैवं व्विदुषऽएतामन्वाहुर्व्वीतय ऽइति ॥ २३ ॥

गृणानो हव्यदातय ऽइति । यजमानो वै हव्यदातिर्गृणानो यजमानाये-त्येवैतदाह नि होता सत्सि बर्हिषीत्यग्निर्वै होतायं लोको बर्हिरस्मिन्नेवैत-

---

" अग्न आयाहि वीतये "–इति । तद्धेति भवति । वीतय इति–समन्तिकमिव ह वा इमेऽग्रे लोका आसुः, इत्युन्मृश्या हैव द्यौरास ॥ २२ ॥

ते देवा अकामयन्त–कथन्नु न इमे लोका वितरां स्युः, कथन्नु इदं वरीय इव स्यादिति । तानेतैरेव त्रिभिरक्षरैर्व्यनयन्–वीतय इति । त इमे विदूरं लोकाः, ततो देवेभ्यो वरीयोऽभवत् वरीयो ह वा अस्मै भवति–यस्यैवं विदुष एतामन्वाहुर्वीतय इति ॥ २३ ॥

"गृणानो हव्यदातये" इति । यजमानो वै हव्यदातिः । गृणानो यजमानायेत्येवैतदाह । "नि होता सत्सि बर्हिषि " इति । अग्निर्वै होता, अयं लोको बर्हिः । अस्मिन्नेवैतल्लोकेऽग्निं दधाति ।

---

मेवाहं वर्णं वेदेत्यब्रवीद्; यद् घृतवत्पदमनूच्यते, स आसां वर्णः "–(तै. सं. २ । ६ । ८ । ६) इति । **यजमानो वा** इत्यादि । 'सुम्नं' सुखं स्वर्गादिलक्षणमात्मन इच्छतीति (पा. सू. ३ । १ । ८) सुम्नयुः यजमानः । जिगातीत्यस्याभिप्रायमाह–**जिगीषतीति** । जेतुमिच्छतीत्यर्थः ॥

ननु " गा स्तुतौ "–(जुहो. प. २३) इति धातुः । कथं तस्य जिगीषतीति व्याख्यानमित्यत आह–**स हीति** । 'हि' यस्माद् यजमानो देवान् स्तुत्या 'जिघांसति, हन्तुं प्राप्तुमिच्छति । हन्तिरत्र गत्यर्थः । 'तस्मात्' जिगीषतीति युज्यत इत्यर्थः । " अज्झनगमां सनि "–(पा. सू. ३।४।१६)–इति सनि दीर्घत्वम् । **सर्वं वा-अनिरुक्तमिति** । यन्नामविशेषैरनिरुक्तम्, तत्सर्वात्मकमित्यर्थः ॥ २१ ॥

**अग्न आयाहीति** । " वीतये "–इति पदं व्याख्यातुमितिहासमाह–**समन्तिकमिवेति** । सन्निकृष्टतरमि-वेत्यर्थः । सन्निकर्षमेवाभिनयेन दर्शयति–**इत्युन्मृश्येति** । यथोर्ध्वबाहुना शाखाग्रं स्पृश्यते 'इति' एवमेव द्यौरपि हस्तस्पृश्येव बभूवेत्यर्थः ॥ २२ ॥

**ते देवा** इति । **वितरां स्युरिति** । अतिशयेन विप्रकृष्टा भवेयुरित्यर्थः । **वरीय इवेति** । उरुतरं विस्तीर्ण-तरमेवैतत्, त्रिरूपं स्थानं केन प्रकारेण स्यादित्यर्थः । विश्लिष्टा इतिः–वीतिः । तथा च वीतये–इत्यस्य विविच्य-मानायेत्यर्थो भवति । एतदक्षरत्रयप्रयोगात् त्रयः 'इमे लोकाः' परस्परं 'विदूरं' विप्रकर्षं प्राप्ता इत्यर्थः । **एतामन्वाहुरिति** । 'वीतये'–इति पदेन युक्ताम् 'अग्न आयाहि " इत्यादिकामित्यर्थः ॥ २३ ॥

अस्या ऋचो द्वितीयं पादमनूद्य व्याचष्टे–**गृणान** इति । हविषो दानाद् 'हव्यदातिः' यजमानः । अस्या ऋचोऽनुवचनं भूलोकजयहेतुत्वेन प्रशंसति–**अग्निर्वै होतेत्यादिना** ॥ २४ ॥

ल्लोकेऽग्निं दधाति सोऽयमस्मिँल्लोकेऽग्निर्हितः सैषेममेव लोकमभ्यनूक्तेम-मेवैतया लोकं जयति यस्यैवं विदुषऽएतामन्वाहुः ॥ २४ ॥

(स्तं) तन्त्वा समिद्भिरङ्गिर ऽइति । समिद्भिर्ह्येतमङ्गिरस ऽऐन्धताङ्गिर ऽइत्यङ्गिरा ऽउ ह्यग्निर्घृतेन वर्द्धयामसीति तत्सामिधेनं पद ँ समेवैनं तेनेन्धे वीर्य्यमेवास्मिन्दधाति ॥ २५ ॥ [ शतं ३०० ]

बृहच्छोचा यविष्ठ्येति । बृहद्ध ह्येष शोचति समिद्धो यविष्ठ्येति यविष्ठो ह्यग्निस्तस्मादाह यविष्ठ्येति सैषैतमेव लोकमभ्यनूक्तान्तरिक्ष-लोकमेव तस्मादाग्नेयी सत्यनिरुक्तानिरुक्तो ह्येष लोकऽएतमेवैतया लोकं जयति यस्यैवं विदुषऽएतामन्वाहुः ॥ २६ ॥

---

सोऽयमस्मिंल्लोकेऽग्निर्हितः । सैषेममेव लोकमभ्यनूक्ता, इममेवैतया लोकं जयति यस्यैवं विदुष एतामन्वाहुः ॥ २४ ॥

" तन्त्वा समिद्भिरङ्गिरः " इति । समिद्भिर्ह्येतमङ्गिरस ऐन्धत । " अङ्गिर " इति । अङ्गिरा उ ह्यग्निः । " घृतेन वर्द्धयामसीति " । तत्सामिधेनं पदम् । समेवैनं तेनेन्धे, वीर्य-मेवास्मिन्दधाति ॥ २५ ॥

"बृहच्छोचा यविष्ठ्य " इति । बृहद्ध ह्येष शोचति सामिद्धः । यविष्ठ्येति—यविष्ठो ह्यग्निः, तस्मादाह यविष्ठ्येति । सैषा एतमेव लोकमभ्यनूक्ता—अन्तरिक्षलोकमेव । तस्मादाग्नेयी सत्यनि-रुक्ता । अनिरुक्तो ह्येष लोकः । एतमेवैतया लोकं जयति—यस्यैवं विदुष एतामन्वाहुः ॥ २६ ॥

---

तृतीयां सामिधेनीमनूद्य व्याचष्टे—तन्त्वेति । ' अङ्गिरसः ' महर्षयो यत् ' समिद्भिः ' ' अग्निम् ' ' ऐन्धन्त '[1] समिद्धमकुर्वन्, तस्मादग्निरपि ' अंगिर इति सम्बोध्यते । तदेतन्नाम अग्नेः प्रसिद्धमित्याह—अंगिरा उ हीति । " इतरे येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन्निति[2] " अङ्गिरसामङ्गारपरिणामरूपत्वात् ' अङ्गिरः '—शब्दाभिधेयता । अग्निरप्यङ्गाररूप इति युक्तं तस्याप्यङ्गिरस्त्वमित्यर्थः ॥ २५ ॥

बृहच्छोचेति । यविष्ठो ह्यग्निरिति । ' यविष्ठः ' युवतमो नित्येतरुणः ; अजरामरत्वात् । अस्या ऋचोऽनुव-चनमन्तरिक्षलोकजयहेतुत्वेन प्रशंसति—सैषेति । " एतमेव "—इति सामान्योक्तं विवृणोति—अन्तरिक्षेति । ऋचोऽन्तरिक्षलोकस्य साम्यमाह—तस्मादिति ॥ २६ ॥

---

१—अयं ' ऐन्धते ' ति पाठश्छांदसो मंतव्यः । व्याकरणदृष्ट्या तु भाष्ये धृतः ' ऐन्धन्त ' इत्याकारकः पाठो युक्त इति भाति । २—तै. ब्रा. ३ । ५ । २ । ३ सं. २ । ५ । ८ । १—११ । ३—तेषां वर्णनं ऐ. ब्रा. ६ । ५ । ८—९ खण्डयोर्द्रष्टव्यम् । वस्तु-तस्तु " एतमु एवाङ्गिरसं मन्यन्तेऽङ्गानां यद्रसः " इति सा. छां. ब्रा. ३ । २ । १० । ४—ऐ. ब्रा. ३ । ३ । ९ । निरु० ३ । ३ । ५ निघ० ५ । ५ । ११ । ५—' नित्यतरुणः—अजरणः । ' इति पा. ।

स नः पृथु श्रवाय्यमिति । (त्य) अदो वै पृथु यस्मिन्देवाऽएतच्छ्रवाय्यं यस्मिन्देवाऽअच्छा देव विवाससीत्यच्छ देव विवासस्येतन्नो गमयेत्येवैतदाह ॥ २७ ॥

बृहदग्ने सुवीर्यमिति । (त्य) अदो वै बृहद्यस्मिन्देवाऽएतत्सुवीर्यं यस्मिन्देवाः सैषैतमेव लोकमभ्यनूक्ता दिवमेवैतमेवैतया लोकं जयति यस्यैवं विदुषऽएतामन्वाहुः ॥ २८ ॥

सोऽन्वाह । (हे) ईडेन्यो नमस्य ऽइतीडेन्यो ह्येष नमस्यो ह्येष तिरस्तमाᳬसि दर्शत ऽइति तिरऽइव ह्येष तमाᳬसि समिद्धो ददृशे समग्निरिध्यते वृषेति सᳬहीध्यते वृषा वृषो ऽअग्निः समिध्यत ऽइति सᳬहीध्यते ॥ २९ ॥

---

" **स नः पृथु श्रवाय्यम्** " इति । अदो वै पृथु—यस्मिन् देवाः । एतत् श्रवाय्यम्—यस्मिन् देवाः । " **अच्छा देव विवाससि** " इति । अच्छ देव विवाससि—एतन्नो गमय—इत्येवैतदाह ॥ २७ ॥

" **बृहदग्ने सुवीर्यम्** " इति । अदो वै बृहद्—यस्मिन् देवाः, एतत् सुवीर्यम्—यस्मिन् देवाः । सैषा एतमेव लोकमभ्यनूक्ता—दिवमेव। एतमेवैतया लोकं जयति--यस्यैवं विदुष एतामन्वाहुः ॥२८॥

सोऽन्वाह-" **ईडेन्यो नमस्यः**– " इति । ईडेन्यो ह्येषः, नमस्यो ह्येषः । " **तिरस्तमांसि दर्शतः** "–इति । तिर इव ह्येष तमांसि समिद्धो ददृशे । " **समग्निरिध्यते वृषा** " इति । सं हीध्यते वृषा । " **वृषो अग्निः समिध्यते**–" इति । सं हीध्यते ॥ २९ ॥

---

चतुर्थीं सामिधेनीमनूद्य द्युलोकजयहेतुत्वेन व्याचष्टे—**स नः** इत्यादिना । ' अदः ' विप्रकृष्टं द्युस्थानं खलु ' पृथु ' विस्तीर्णम् । तद्विशिनष्टि—**यस्मिन्निति** । ' यस्मिन् ' लोके ' देवाः ' सर्वे वसन्ति, तत् स्थानमत्र पृथुशब्दवाच्यम् । देवनिवासत्वादेव ' एतत् ' ' श्रवाय्यं ' श्रवणीयं प्रशस्यम् । पादान्तरमनूद्य व्याचष्टे—**अच्छा देवेति** । देवोषितं द्युलोकरूपं स्थानम् ' अच्छ ' अभिलक्ष्य ' विवाससि ' प्रकाशयेत्यर्थः । प्रकाशनं च प्राप्त्यर्थमित्यभिप्रेत्य व्याचष्टे—**एतन्नो गमये**ति ॥ २७ ॥

**बृहदग्न** इति । **अदो वा** इति । सर्वत्र हि विशेष्यरहित इदंशब्दो भूलोकवचनः, अदःशब्दश्च द्युलोकवचनः ॥ २८ ॥

ऋगन्तरस्यानुवचनं विधत्ते—**सोऽन्वाहेति** । ' ईडेन्यः ' स्तोतव्यः, ' नमस्यः ' नमस्कर्त्तव्य इत्ययमर्थः प्रसिद्ध इति हेरर्थः । द्वितीयं पादमनूद्य व्याचष्टे—**तिरस्तमांसी**ति । ' एष ' खल्वग्निः समिद्धः सन् ' तमांसि ' तिरस्कृत्यैव दृश्यते । अनेन ' दर्शतः '—इति पदस्य कर्म्मणि व्युत्पत्तिर्दर्शिता । ' समग्निरिध्यते ' इत्यादि निगदसिद्धम् ॥ २९ ॥

---

१–तै. ब्रा. ३ । ५ । २ । ४ । सं. २ । ५ । ८ । १–११ । २–तै. ब्रा. ३ । ५ । २ । ४ । सं. २ । ५ । ८ । १–११ ।

( तेऽश्वो ) अश्वो न देववाहन इति । ( त्य ) अश्वो ह वा ऽएष भूत्वा देवेभ्यो यज्ञं वहति यद्वै नेत्यृच्योमिति तत्तस्मादाहाश्वो न देववाहनऽइति ३०

तँ हविष्मन्त ऽईडत ऽइति । हविष्मन्तो ह्येतं मनुष्याऽईडते तस्मादाह तँ हविष्मन्तऽईडत ऽइति ॥ ३१ ॥

वृषणं त्वा वयं वृषन्वृषणः समिधीमहीति । सँ ह्येनमिन्धतेऽग्ने दीद्यतं बृहदिति दीदयेव ह्येष बृहत्समिद्धः ॥ ३२ ॥ [ अर्धप्रपाठकः । ]

तं वा एतम् । वृषण्वन्तं त्रिचमन्वाहाग्नेय्यो वा ऽएताः सर्वाः सामिधेन्यो भवन्तीन्द्रो वै यज्ञस्य देवतेन्द्रो वृषैतेनो हास्यैताः सेन्द्राः सामिधेन्यो भवन्ति तस्माद्वृषण्वन्तं त्रिचमन्वाह ॥ ३३ ॥

---

"अश्वो न देववाहनः"–इति । अश्वो ह वा एष भूत्वा देवेभ्यो यज्ञं वहति । यद्वै नेति ऋचि–ओमिति तत् । तस्मादाह–अश्वो न देववाहन इति ॥ ३० ॥

"तं हविष्मन्त ईडते"–इति । हविष्मन्तो ह्येतं मनुष्या ईडते । तस्मादाह–तं हविष्मन्त ईडत इति ॥ ३१ ॥

"वृषणं त्वा वयं वृषन् वृष ( षा ) णः समिधीमहि"–इति । सं ह्येनमिन्धते । "अग्ने दीद्यतं बृहद्"–इति । दीदयेव ह्येष बृहत् समिद्धः ॥ ३२ ॥

तं वा एतं वृषण्वन्तं त्रिचमन्वाह–आग्नेय्यो वा एताः सर्वाः सामिधेन्यो भवन्ति । इन्द्रो वै यज्ञस्य देवता, इन्द्रो वृषा एतेन उ ह अस्यैताः सेन्द्राः सामिधेन्यो भवन्ति । तस्माद् वृषण्वन्तं त्रिचमन्वाह ॥ ३३ ॥

---

**अश्वो नेति** । "अश्वो न देववाहनः"–इत्यत्र 'न'–शब्दस्य निषेधार्थत्वमाशङ्क्य विवक्षितमर्थं दर्शयति–**यद्वा** इति । 'ऋचि' ऋङ्मन्त्रे 'यत्' 'न–' इति पदम्, तत् 'ओमिति' अङ्गीकारार्थतया प्रतिपत्तव्यम् । "एवम्परमोम्पदं"–इति हि निघण्टुः ( ? ) 'अश्वो ह वा एष भूत्वा' अश्वरूपमास्थायेति यावत् ॥ ३० ॥

**तं हविष्मन्त** इति । **हविष्मन्तो ह्येतमित्यादि** । चरुपुरोडाशादीनि 'हवींषि' संपाद्य, तद्युक्ता ऋत्विग्-यजमानास्तानि हवींषि देवान् प्रापयितुमग्निं स्तुवन्तीत्यर्थः । "ईड स्तुतौ" ( अदा. आ. ९ ) इति धातुः ॥ ३१ ॥

**वृषणन्त्वेत्यादि** । निगदसिद्धम् । "दीद्यतं बृहत्"–इत्यत्र दीद्यच्छब्दस्याभिप्रायमाह–**दीदयेवेति** । 'दीदयतिः' दीप्तिकर्मा, छान्दसो धातुः । ( निघ. १ । १६ । ४ । निरु. १० । २ । ६ ) । **पूर्वाभिः समिद्धः स च** 'एषः' अग्निरस्मिन् समये 'बृहत्' अधिकं 'दीदयेव' दिदीप–इतीव हि यतो 'दीद्यतं' **दीप्यमानं त्वामित्यग्निविशेषणं** युक्तमित्यर्थः ॥ ३२ ॥

"ईडेन्य"–इत्यस्य तृचस्य वृषण्वच्छब्दायातमुपजीव्य प्रशसति–**तं वा** इत्यादि । **अग्निविशेषणभूतेनापि**

---

१–"ओमेवंपरमं मते" इत्यमरकोषे ३ । ४ । १२ तथा "ओ३ मित्यृचः प्रतिगर एवं तथेति गाथा या ओमिति वै दैवं तथेति मानुषम्" ऐ. ब्रा. ७ । ३ । ६ । २–तै. ब्रा. ३ । ५ । ३ । ७ । सं. २।५।८।१–११ । ३–'दीदेतिः दीप्तिकर्मा' इति पा० ।

सोऽन्वाह । ( हा ) अग्निं दूतं वृणीमह ऽइति देवाश्च वा ऽअसुराश्चो-भये प्राजापत्याः पस्पृधिरे तान्त्स्पर्द्धमानान्गायत्र्यन्तरा तस्थौ या वै सा गायत्र्यासीदियं वै सा पृथिवीयꣳहैव तदन्तरा तस्थौ तऽउभय ऽएव विदाञ्चक्रुर्यतरान्वै न इयमुपावर्त्स्यति ते भविष्यन्ति परेतरे भविष्यन्तीति तामुभय ऽएवोपमन्त्रयाञ्चक्रिरेऽग्निरेव देवानां दूतऽआस सहरक्षाऽइत्य-सुररक्षसमसुराणाꣳसाग्निमेवानुप्रेयाय तस्मादन्वाहाग्निं दूतं वृणीमह ऽइति स हि देवानां दूतऽआसीद्धोतारं विश्ववेदसमिति ॥ ३४ ॥

---

सोऽन्वाह—"अग्निं दूतं वृणीमहे" इति। देवाश्च वा असुराश्च उभये प्राजापत्याः पस्पृधिरे। तान् स्पर्द्धमानान् गायत्र्यन्तरा तस्थौ । या वै सा गायत्र्यासीद्—इयं वै सा पृथिवी । इयं हैव तदन्तरा तस्थौ । त उभय एव विदाञ्चक्रुः—'यतरान् वै न इयमुपावर्त्स्यति, ते भविष्यन्ति, परेतरे भविष्यन्ति' इति । तामुभय एवोपमन्त्रयाञ्चक्रिरे । अग्निरेव देवानां दूत आस, सहरक्षा इत्यसुररक्षसमसुराणाम् । साग्निमेवानुप्रेयाय । तस्मादन्वाह—अग्निं दूतं वृणीमह इति । स हि देवानां दूत आसीद् । "होतारं विश्ववेदसम्" इति ॥ ३४ ॥

---

'वृषन्'—शब्देनेन्द्रोऽप्युपस्थाप्यते, 'वृषन्'—शब्दस्य तन्नामधेयत्वात् । अतो 'वृषन्'—शब्दयुक्तस्य तृचस्या-नुवचनादितरयज्ञवत् सामिधेनीनामपीन्द्रसम्बन्धः सिद्ध्यतीत्यर्थः ॥ ३३ ॥

सामिधेन्यन्तरस्यानुवचनं विधत्ते—**सोऽन्वाहे**ति । अग्नेर्देवदूतत्वमुपपादयितुमितिहासमाह—**देवाश्च वा** इति । 'तान्' मिथः स्पर्द्धमानान् देवासुरान् 'अन्तरा' तेषामुभयेषां मध्यत इत्यर्थः । "अन्तरान्तरेण—" ( पा० सू० २ । ३ । ४ )—इति द्वितीया । **इयं वा** इत्यादि । योत्स्यमानांस्तानुभयविधान् निवारयितुं गायत्री मध्ये प्रादुर्भूता 'सेयं पृथिव्येव' इयमेव खलु पृथिवी तेषामुभयेषां मध्यवर्त्तिनी । युक्तं चैतत्;—मेरोरग्रभागे हि अमरावती नाम नगरी, तस्यां हि देवाः, तथा मेरोरधस्ताद्भागे च यदिरामुखं नाम नगरम्, तस्मिन् ह्यसुरा निवसन्ति । तयोर्मध्ये पृथिवी वर्त्तत इति 'ह'—शब्दयोगादस्ति शास्त्र[1]प्रसिद्धिः । **यतरान् वा** इति । "किंयत्तदोर्निर्धारणे"—( पा० सू० ५ । ३ । ९२ ) इति यच्छब्दात् डतरच् । 'उपावर्त्स्यति' उपावृत्ता भविष्यति । 'उपमन्त्रयाञ्चक्रे' रहस्यं दूतमुखेनाहूतवन्त इत्यर्थः । "मत्रि गुप्तपरिभाषणे"—( चु॰. आ. १४६ ) इति धातुः; लिट्प्रत्ययान्तत्वादाम्प्रत्ययः ( पा. सू. ३ । १ । ३५–३६ ) । तस्मि-न्नुपमन्त्रणे देवानां को दूतः, को वा असुराणामित्युभयं विविनक्ति—**अग्निरेवे**ति । 'सहरक्षाः' नाम यत् 'असुर-रक्षसम्' सुरविरोधि रक्षः । समासान्तो 'अ'—प्रत्ययः[2] । 'रक्षः'—शब्दस्य नियतनपुंसकत्वात् समासान्त-स्यापि तथात्वम् । **स हि देवाना**मिति । 'हि' यस्मादुक्तरीत्या 'अग्निं दूतं वृणीमहे'—इति अनुवचनं युक्तमित्यर्थः । द्वितीयपादमनूद्य तत्र पाठान्तरमुपन्यस्य दूषयति—**होतार**मित्यादिना ॥ ३४ ॥

---

१–अवैदिकमिदं वर्णनमिति सुधीभिः खलूपेक्षणीयमेवेति पं. सत्यव्रतसामाश्रमिभिः स्वयं संस्कृते पुस्तके टिप्पण्यामुद्दङ्कित-मिति ज्ञेयम् । २–"अनसन्तान्नपुंसकाच्छन्दसि" इति पा. सू. ५ । ४ । १०३ ।

तद् हैकेऽन्वाहुः। ( होँ ) होता यो विश्ववेदस इति नेदरमित्यात्मानं ब्रवाणीति तद् तथा न ब्रूयान्मानुषँ ह ते यज्ञे कुर्वन्ति व्यृद्धं वै तद्यज्ञस्य यन्मानुषं नेद्व्यृद्धं यज्ञे करवाणीति तस्माद्यथैवर्च्चाऽनूक्तमेवमेवानुब्रूया-द्धोतारं विश्ववेदसमित्येवास्य यज्ञस्य सुक्रतुमित्येष हि यज्ञस्य सुक्रतुर्य-दग्निस्तस्मादाहास्य यज्ञस्य सुक्रतुमिति सेयं देवानुपाववर्त ततो देवाऽ-अभवन्पराऽसुरा भवति ह वा ऽआत्मना पराऽस्य सपत्ना भवन्ति यस्यैवं विदुषऽएतामन्वाहुः ॥ ३९ ॥

( स्तां ) तां वा ऽअष्टमीमनुब्रूयात्। ( द्वा ) गायत्री वा ऽएषा निदानेना-ष्टाक्षरा वै गायत्री तस्मादष्टमीमनुब्रूयात् ॥ ३६ ॥

---

तद् हैकेऽन्वाहुः—' होता यो विश्ववेदसः ' इति। नेद् अरमित्यात्मानं ब्रवाणीति। तद् तथा न ब्रूयाद्। मानुषं ह ते यज्ञे कुर्वन्ति, व्यृद्धं वै तद् यज्ञस्य—यन्मानुषम्; नेद् व्यृद्धं यज्ञे करवाणीति। तस्माद्यथैवर्चाऽनूक्तमेवमेवानुब्रूयाद्—' होतारं विश्ववेदसम् ' इत्येव। " अस्य यज्ञस्य सुक्रतुम् " इति। एष हि यज्ञस्य सुक्रतुः—यदग्निः। तस्मादाह—अस्य यज्ञस्य सुक्रतुमिति। सेयं देवानुपाववर्त ततो देवा अभवन्, पराऽसुराः। भवति ह वा आत्मना, परा अस्य सपत्ना भवन्ति—यस्यैवं विदुष एतामन्वाहुः ॥ ३९ ॥

तां वा अष्टमीमनुब्रूयात्। गायत्री वा एषा निदानेन—अष्टाक्षरा वै गायत्री। तस्माद् अष्टमी-मनुब्रूयात् ॥ ३६ ॥

---

तद्धेति। " होता यो विश्ववेदस इति " पाठान्तरमनुब्रुवतामभिप्रायमाह—यद्यपि होतारमिति ' होतृ '—शब्दो द्वितीयान्तः; तथापि ' होता अरम् ' इत्यपि श्रुतिसामान्यात् प्रतीयते। स च ' अरं '—शब्दः ' अलं '—शब्दपर्यायः। " बाल—मूल—लघ्वलमङ्गुलीनाम् "—( पा० सू० ८। २। १८ वा० २ " वा लो रमापद्यते " ) इति लत्वस्य विकल्पितत्वात्। ' अरं '—शब्दोऽत्र निवारणार्थः। ' आत्मानं ' निवारणविशिष्टं ' नेत् ' नैव ' ब्रवाणि '—इत्यमेनाभिप्रायेणेत्यर्थः। "होता यः"—इति पाठे तु नेदृशी विरुद्धा प्रतिपत्तिरस्ति ॥

तत्पक्षनिराकरणं—**तद् तथे**त्यादि। स्पष्टम्। " होतारम् "—इत्यार्षपाठं परित्यज्य " होता यः "—इति पाठविपरिणामस्य मनुष्यबुद्धिप्रभवतया मानुषत्वम्। यथैव वेदे पठितम्, तथैवानुवक्तव्यमित्युपसंहरति—**तस्मा**दिति। कीदृग्विधं तर्हि वेदे पठितमिति तदाह—**होतार**मिति। एवकारः पक्षान्तरव्युदासार्थः। प्रकृत-मितिहासशेषमुपसंहरति—**सेय**मिति। देवासुराणां मध्ये वर्तमाना या गायत्री, ' सेयं ' रहस्यमाहूता सती ' देवान् ' एव ' उपाववर्त ' उपाजगाम। ' ततः ' गायत्र्या उपावर्त्तनात् ' देवाः ' ' अभवन् ' अजयन्। ' असुरास्तु ' तत्संबन्धविरहात् ' पराभूताः '। उक्तेतिहासज्ञानपुरःसरमेतां गायत्रीं प्रयुञ्जानस्य फलमाह—**भव**-**ती**ति। ' आत्मना ' स्वयं ' भवति ' भूष्णुः, समर्थो भवति। ' अस्य ' च शत्रवः 'पराभवन्ति' इत्यर्थः॥ ३९॥

अष्टसङ्ख्योपजीवनेन प्रशंसति—**तां वा** इति। ' निदानेन ' मूलकारणेन विचार्यमाणा ऋगक्षरात्मिका

---

१—तदित्थं मन्त्रेषु स्वाभिप्रेतप्रार्थनादिप्रकाशनाय अपि वैदिकशब्दानां परिवर्तनादिकं सर्वत्रैव निषिद्धमिति सूचितम्।

( त्त ) तद्धैके । पुरस्ताद्धाय्ये दधत्यन्नं धाय्ये मुखत ऽइदमन्नाद्यं दध्म इति व्वदन्तस्तदु तथा न कुर्यादनवक्लृप्ता ह तस्यैषा भवति यः पुरस्ताद्धाय्ये दधाति दशमी वा हि तर्ह्येकादशी वा सम्पद्यते तस्यो हैवैषावक्लृप्ता भवति यस्यैतामष्टमीमन्वाहुस्तस्मादुपरिष्टादेव धाय्ये दध्यात् ॥ ३७ ॥

समिध्यमानो ऽअध्वर ऽइति । ( त्य ) अध्वरो वै यज्ञः समिध्यमानो यज्ञ ऽइत्येवैतदाहाग्निः पावक ईड्य इति पावको ह्येष ऽईड्यो ह्येष शोचिष्केशस्तमीमह ऽइति शोचन्तीव ह्येतस्य केशाः समिद्धस्य समिद्धो

---

तद्धैके पुरस्ताद् धाय्ये दधति–' अन्नं धाय्ये, मुखत इदमन्नाद्यं दध्म ' इति वदन्तः । तदु तथा न कुर्याद् । अनवक्लृप्ता ह तस्यैषा भवति–यः पुरस्ताद्धाय्ये दधाति । दशमी वा हि तर्हि एकादशी वा सम्पद्यते । तस्यो ह एवैषा अवक्लृप्ता भवति–यस्यैतामष्टमीमन्वाहुः । तस्मादुपरिष्टादेव धाय्ये दध्यात् ॥ ३७ ॥

"समिध्यमानो अध्वरे" इति । अध्वरो वै यज्ञः । समिध्यमानो यज्ञे–इत्येवैतदाह । "अग्निः

---

' एषा गायत्री ' सापि प्रतिपादम् ' अष्टाक्षरा '; या चाष्टसङ्ख्या, तत्पूर्त्तिहेतुत्वादप्येषा विशेषतो ' गायत्री '–इति । ताम् ' अष्टमीमनुब्रूयात् ' इत्यर्थः ॥ ३६ ॥

यत्र सप्तदश सामिधेन्यः, तत्र " पृथुपाजाः " " तं सबाधः "–इति द्वे धाय्याख्ये ऋचौ सामिधेनीषु प्रक्षेप्तव्ये । तयोः स्थानं पूर्वोत्तरपक्षाभ्यां दर्शयति–**तद्धैक** इति । ' पुरस्तात् ' अष्टम्याः पूर्वमित्यर्थः । तथा कुर्वतामभिप्रायमाह–**मुखत** इति । अन्नं च तदाद्यं च ' अन्नाद्यम् ' ' इदं ' धाय्यारूपं ' मुखतः ' मुखप्रदेश एव ' दध्मः ' धारयामः ' इति वदन्तः ' ॥

तदेतदेकीयं मतं दूषयति–**तदु तथे**ति । ' अनवक्लृप्ता ' असमर्था, ऊर्ध्वं द्वयोर्धाय्ययोः प्रक्षेपात्–" अग्निं दूतम् "–इत्यष्टमी, ' दशमी ' संपद्यते; तथा चाष्टमीत्वभङ्गेन " गायत्री वा एषा निदानेन "–इति प्रतिपादितगायत्रीति पदविरहादसमर्था स्यात् । तथा समिद्ध्यमानवती–समिद्धवत्योर्मध्ये हि धाय्ये प्रक्षेप्तव्ये; सा च सप्तदश्ये तूत्कर्षात् ' एकादशी ' ' सम्पद्यते ' । उभयत्र ' वा '–शब्दश्चार्थे । कथं तर्हि, अवक्लृप्तिरित्यत आह–**तस्यो** हेति । ' यस्य ' यजमानस्य सा सामिधेनीषु " अग्निं दूतम् "–इत्येषा अष्टमी । ' तस्यैषा ' ' अवक्लृप्ता ' ) अवक्लृप्तिः समर्था ' भवति ' इत्यर्थः । कुत्र तर्हि धाय्ययोः प्रक्षेप इति तदाह–**तस्मा**दिति । अष्टम्याः ' उपरिष्टात् ' समिध्यमानवती–समिद्धवत्योर्मध्ये एव ' धाय्ये ' प्रक्षिपेत् । उक्तं ह्यापस्तम्बेन–" समिद्ध्यमानवतीं समिद्धवतीं चान्तरेण पृथुपाजवत्यौ धाय्ये दधाति "–( श्रौ. सू. २ । १२ । ९ । ) इति । आश्वलायनोऽप्यसूत्रयत्–" तृतीयस्यां सामिधेन्यावावपते प्रागुपोत्तमायाः पृथुपाजा अमर्त्य इति द्वे धाय्ये इत्युक्त एते प्रतीयात् "–इति ( श्रौ. सू. २ । १ । २६ । ऋ. सं. ३ । २७ । ५ । ६ । ) ॥ ३७ ॥

एवमष्टमीं विधाय प्रशंसति–**समिद्ध्यमान** इति । निगदसिद्धमेतत् । **शोचन्तीव ह्येतस्ये**ति । दीप्य-

---

१–" पाय्य-सान्नाय्य-निकाय्य-धाय्या मानहविर्निवाससामिधेनीषु "–इति पा. सू. ३ । १ । १२९ । " धीयतेऽनया समिदिति धाय्या ऋक् " इति तत्र कौ. । ऐ. ब्रा. ३ । २ । ७ । १३; ३ । ७ । तै. सं. २ । २ । १० । २ । २–ऋ. सं. ३ । २७ । ५ । ६ । ३–' प्रतिपादितं गायत्रीत्वमसमर्थं स्यात् ' इति पा. । ४–' सा च समिध्यमानवती पाञ्चदश्ये नवमी साप्तदश्ये अष्टम्या सहोत्कर्षात् एकादशी संपद्यते ' एवमेव च प्रतिभाति । ५–तै. ब्रा. ३ । ५ । २ । ९; खं. २ । ५ । ८ । १–११ ।

ऽअग्न ऽआहुतेत्यतः प्राचीन ᳙ँ सर्वमिध्ममभ्यादध्याद्यदन्यत्समिधोऽ पवृक्तु ऽइवु ह्येतद्धोता यद्वा ऽअन्यत्समिध ऽइध्मस्यातिरिच्यतेऽतिरिक्तं तद्यद्वै यज्ञस्यातिरिक्तं द्विषन्त ᳙ँ हास्य तद्भ्रातृव्यमभ्यतिरिच्यते तस्मादतः प्राचीन ᳙ँ सर्वमिध्ममभ्यादध्याद्यदन्यत्समिधः ॥ ३८ ॥

( धो ) देवान्यक्षि स्वध्वरेति । ( त्य )अध्वरो वै यज्ञो देवान्यक्षि सुयज्ञियेत्येवैतदाह त्व ᳙ँ हि हव्यवाडसीत्येष हि हव्यवाड्यदग्निस्तस्मादाह त्व᳙ँ हि हव्यवाडसीत्याजुहोता दुवस्यताग्निं प्रयत्यध्वरे वृणीध्व ᳙ँ हव्यवाहनमिति सम्प्रेष्यत्येवैतया जुहुत च यजत च यस्मै कामाय समैन्धिद्वं तत्कुरुतेत्येवैतदाहाग्निं प्रयत्यध्वर ऽइत्यध्वरो वै यज्ञोऽग्निं प्रयति यज्ञ ऽइत्येवैतदाह वृणीध्व ᳙ँ हव्यवाहनमित्येष हि हव्यवाहनो यदग्निस्तस्मादाह वृणीध्व ᳙ँ हव्यवाहनमिति ॥ ३९ ॥

---

पावक ईड्यः"इति । पावको ह्येषः, ईड्यो ह्येषः । "शोचिष्केशस्तमीमहे"इति । शोचन्तीव हि एतस्य केशाः समिद्धस्य । " समिद्धो अग्न आहुत " इति । अतः प्राचीनं सर्वमिध्ममभ्यादध्याद्–यदन्यत्समिधः । अपवृक्ण इव ह्येतद् होता । यद्वा अन्यत्समिध इध्मस्यातिरिच्यते–अतिरिक्तं तद् । यद्वै यज्ञस्यातिरिक्तं–द्विषन्तं हास्य तद् भ्रातृव्यमभ्यतिरिच्यते । तस्माद् अतः प्राचीनं सर्वमिध्ममभ्यादध्याद्–यदन्यत्समिधः ॥ ३८ ॥

" देवान् यक्षि स्वध्वर " इति । अध्वरो वै यज्ञः । देवान् यक्षि सुयज्ञिय इत्येवैतदाह । " त्वं हि हव्यवाडसि " इति । एष हि हव्यवाड् यदग्निः । तस्मादाह–त्वं हि हव्यवाडसीति ।

---

मानस्याग्नेर्ये ऊर्ध्वमुखा ज्वालाविशेषाः, ते केशाः; ते च ' शोचन्ति ' दीप्यन्ते । इवशब्दोऽवधारणे; शोचिषः–दीप्यमानाः केशा यस्येति ' शोचिष्केशः ' इत्यर्थः । दशम्याः सामिधेन्याः प्रागेवेध्मशेषस्य सर्वस्याग्नावभ्याधानं विधत्ते–**समिद्धो अग्न** इत्यादिना । तस्या दशम्याः सामिधेन्याः ' प्राचीनं ' प्राक् । " विभाषाऽञ्चेरदिक् स्त्रियाम् "–(पा० सू० ५ । ४ । ८ ) इति स्वार्थिकः ख–प्रत्ययः ।**यदन्यत्समिध** इति । अनुयाजार्थायाः ' समिधः ' यदन्यत् तत्सर्वमित्यर्थः । अस्मिन्नेव समये इध्मशेषस्य सर्वस्याभ्याधानं कुतो हेतोरित्याशङ्क्य हेतुमाह–**अपवृक्ण इवेति** । ' एतत् ' एतर्हि अस्मिन् समये होता ' अपवृक्त इव ' अग्नेः समिन्धनं परिसमापयतीव । " समिद्धो अग्न आहुतेति "–समिन्धनस्य भूतत्वप्रतिपत्तेः । समिन्धनहेतुत्वाच्च सर्वस्येध्मस्य समिद्धावस्थायाः प्रागेवाभ्याधानं युक्तमित्यर्थः । प्रागनभ्याधाने दोषमाह–**यद्वा अन्यदिति** । अनुयाजसमिद्व्यतिरिक्तं ' यत् ' इध्मसंबन्धि काष्ठं समिद्धावस्थायां वर्त्तते ' तदतिरिक्तम् ' तच्च शत्रुवर्द्धनहेतुरित्यपि । " समिद्धो अग्न आहुत "–इत्यतः प्रागेवेध्मशेषः सर्वोऽपि प्रक्षेप्यः । अत एव कात्यायनेनोक्तम्–" समिद्ध इति प्रागतः सर्वमिध्ममेकवर्जमनुयाजार्थ्श्चेत् " ( श्रौ० सू. ३ । १ । ११ ) इति ॥ ३८ ॥

**देवान् यक्षीत्यादि** । निगदसिद्धम् । अन्तिमां सामिधेनीमनूद्य व्याचष्टे–**आ जुहोतेति** । " आ जुहोत

---

१–तै. ब्रा. ३ । ५ । २ । १० । सं. २ । ५ । ८ । १–११ ।

तं वा ऽएतम् । ( म ) अध्वरवन्तं त्रिचमन्वाह देवान्ह वै यज्ञेन यजमानान्त्सपत्ना ऽअसुरा दुधूर्षाञ्चक्रुस्ते दुधूर्षन्त ऽएव न शेकुर्धूर्वितुं ते पराबभूवुस्तस्माद्यज्ञो ऽध्वरो नाम दुधूर्षन्ह वा ऽएनꣳ सपत्नः पराभवति यस्यैवं विदुषो ऽध्वरवन्तं त्रिचमन्वाहुर्यावद्धेव सौम्येनाध्वरेणेष्ट्वा जयति तावज्जयति ॥ ४० ॥ ३ ॥

इति तृतीयप्रपाठके तृतीयं ब्राह्मणम् । ( ४. १. )

" आजुहोता दुवस्यत । अग्निं प्रयत्यध्वरे । वृणीध्वं हव्यवाहनम् " इति । सम्प्रेष्यत्येवैतया—आजुहुत च, यजत च, यस्मै कामाय समैन्धिद्वं तत्कुरुतेत्येवैतदाह । " अग्निं प्रयत्यध्वर" इति । अध्वरो वै यज्ञः । अग्निं प्रयति यज्ञ इत्येवैतदाह । "वृणीध्वं हव्यवाहनम्" इति। एष हि हव्यवाहनो—यदग्निः । तस्मादाह—वृणीध्वं हव्यवाहनमिति ॥ ३९ ॥

तं वा एतम् अध्वरवन्तं त्रिचमन्वाह । देवान् ह वै यज्ञेन यजमानान् सपत्ना असुरा दुधूर्षाञ्चक्रुः । ते दुधूर्षन्त एव न शेकुर्धूर्वितुम्, ते पराबभूवुः । तस्माद्यज्ञोऽध्वरो नाम । दुधूर्षन् ह वा एनं सपत्नः पराभवति—यस्यैवं विदुषोऽध्वरवन्तं त्रिचमन्वाहुः । यावद्धेव सौम्येनाध्वरेणेष्ट्वा जयति तावज्जयति ॥ ४० ॥

दुर्वस्यतेति " अध्वर्युप्रमुखा ऋत्विजः संबोध्य हवनादिकार्ये प्रेर्यन्ते; अतः प्रोक्षणीरासादयेत्यादिवदयं मन्त्रः संप्रैषरूप एव । आजुहोत दुवस्यतेति—पदयोरर्थमाह—**जुहुत च यजत चेति** । जुहुतेत्यत्र । 'त '—शब्दस्य " तप्तनप्तनथनाश्च " ( पा० सू० ७. १. ४५ ) इति तबादेशे गुणे च सति जुहोतेति रूपं भवति । ' दुवस्यतिः ' परिचरणार्थः ( निघ० ३ अ० ५ खं० ५ पदम् ) । ' दुवस्यत ' परिचरत, यजतेत्यर्थः ।

तात्पर्यार्थमाह—**यस्मै कामायेति** । फलसाधनतया काम्यमानाय ' यस्मै ' यागहोमादिकर्मणे, हे ऋत्विजः ! ' समैन्धिद्वम् ' अग्निसमिन्धनमकृद्वम् । सोऽग्निः समिद्धः संपन्नः; अतोऽस्मिन् समये 'तत्कुरुतेत्येव' एवंरूपमर्थं मन्त्रो ब्रूत इत्यथः । अग्निं प्रयतीत्यादि स्पष्टम् ॥ ३९ ॥

तृचस्याध्वरशब्दयुक्तत्व प्रशंसितुमनुवदति—**तं वा** इति । " समिद्ध्यमानो अध्वरे "—इत्यादिकमृक्—त्रयमध्वरशब्दोपेतमनुब्रूयात् । **दुधूर्षाञ्चक्रुरि**ति । धूर्वितुमिच्छां कृतवन्त इत्यर्थः । " धुर्वी हिंसायाम् "—( भ्वा० प० ५७३ ) इत्यस्मात् सनि, वलोपे, प्रत्ययान्तत्वादाम्—प्रत्ययः । 'दुधूर्षन्तः' ' ते ' असुरा देवान् ' धूर्वितुं ' हिंसितुं ' न शेकुः ' न शक्ताः प्रत्युत पराहता एव बभूवुः ' तस्मात् ' अहिंसाहेतुत्वाद् ' अध्वरः '—इति यज्ञस्य नाम संपन्नम् ।

एवं पुरावृत्तमुदाहृत्यैतद्विदुषः फलमाह—**दुधूर्षन् हेति** । **यावद्धेवेति** । अध्वरशब्दो हि सोमयागे रूढः; स चात्र दर्शपूर्णमासविषये मन्त्रेण प्रस्तूयत इति सोमयागेन यावदेव फलं प्राप्नोति, तावद्दर्शपूर्णमासयागेनापि प्राप्नोतीत्यर्थः ॥ ४० ॥ ३ ॥ ( ४. १. )

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये प्रथमकाण्डे चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥

१—' तृच ' इति सायणीयपाठः, कात्यायनवार्तिकसम्मतश्च ( पा. सू. ६ । १ । ३४ वा. १ ) वस्तुतः शतपथे कातीयश्रौते च सर्वत्रैव ' त्रिच ' इत्येव पाठः । २—तै. ब्रा. ३ । ५ । २ । ११ । सं. २ । ५ । ८ । १ । ११ । ३—पा. सू. ३ । १ । ७ सन् । ६ । १ । ६६ वलोपः । ३ । १ । ३५ आम् ।

एतुद्ध वै देवाऽअग्निं गुरिष्ठे युञ्जन् । ( न्यु ) यद्धोतृत्वुऽइदन्नो हव्यं व्वहेति तुमेतद्गरिष्ठे युक्त्वोपामदन्वीर्यवान्वै त्वुमस्यलं वै त्वुमेतुस्माऽअसीति व्वीर्यं समादधतो यथेदमुप्येतर्हि ज्ञातीनां यं गुरिष्ठे युञ्जन्ति तुमुपमदन्ति व्वीर्यवान्वै त्वुमस्यलं वै त्वुमेतुस्माऽअसीति व्वीर्यं समादधतः स यदुत ऊर्ध्वमन्वाहोपस्तौत्येवैनमेतद्वीर्यमेवास्मिन्दधाति ॥ १ ॥

( त्यु ) अग्ने मह्ाँ२॥ऽअसि ब्राह्मण भारतेति । ब्रह्म ह्यग्निस्तुस्मादाह ब्राह्मणेति भारतेत्येष हि देवेभ्यो हव्यं भरति तुस्माद्भरतोऽग्निरित्याहुरेषु उ वा ऽइमाः प्रजाः प्राणो भूत्वा बिभर्त्ति तुस्माद्धेवाह भारतेति ॥ २ ॥

---

## निगदानुवचनम् ।

एतद्ध वै देवा अग्निं गरिष्ठे युञ्जन्—यद्धोतृत्वे 'इदं नो हव्यं वह' इति । तमेतद् गरिष्ठे युक्त्वोपामदन् 'वीर्यवान् वै त्वमसि, अलं वै त्वमेतस्मा असि' इति—वीर्यं समादधतः । यथेदमप्येतर्हि ज्ञातीनां यं गरिष्ठे युञ्जन्ति, तमुपमदन्ति—वीर्यवान्वै त्वमसि, अलं वै त्वमेतस्मा असीति वीर्यं समादधतः । स यदत ऊर्ध्वमन्वाह—उपस्तौत्येवैनमेतत्, वीर्यमेवास्मिन् दधाति ॥ १ ॥

"अग्ने महा ँ२॥ असि ब्राह्मण भारत"—इति । ब्रह्म ह्यग्निः । तस्मादाह—ब्राह्मणेति । "भारतेति" । एष हि देवेभ्यो हव्यं भरति, तस्माद् भरतोऽग्निरित्याहुः । एष उ वा इमाः प्रजाः प्राणो भूत्वा बिभर्त्ति, तस्माद्धेवाह—भारतेति ॥ २ ॥

---

सामिधेन्यनुवचनानन्तरमग्ने महाँ असीति निगदस्यानुवचनं विधित्सुस्तत्प्रतिपाद्यायाः प्रशंसायाः कर्त्तव्यतां तदुपोद्घातत्वेन प्रतिपादयति—**एतद्ध वा** इति । 'गरिष्ठे' गुरुतमे । "प्रियस्थिर"—( पा० सू० ६. ४. १५७ ) इत्यादिना गुरुशब्दस्य गरादेशः । हविर्वहनार्थं गुरुतमे तस्मिन् होतृत्वे योजयित्वा तस्योत्साहं जनयितुम् 'उपामदन्' अस्तुवन् । "वीर्यवान् वै" इत्यादिः स्तुतिप्रकारः । अनया च स्तुत्या 'तम्' अग्निं 'वीर्ये' सम्यक् स्थापितवन्तः । इदं लौकिकेन दृष्टान्तेन प्रतिपादयति—**यथेदमिति** । निगदस्यानुवचनं विधत्ते—**स यदिति** । 'अतः' अस्मात् सामिधेन्यनुवचनादित्यर्थः ॥ १ ॥

अनुवक्तव्यं निगदं पठित्वा पदशो व्याचष्टे—**अग्ने महानित्यादिना** । "स त्रेधात्मानं व्यकुरुताग्निं तृतीयं वायुं तृतीयम्"—इत्यादिश्रुतेरग्निवाय्वादित्यात्मना ब्रह्मणस्त्रेधावस्थानात् "ब्रह्म ह्यग्निः"—इति तादात्म्यप्रतिपादनम् । 'तस्मात्' ब्रह्मणो जातत्वाद् 'ब्राह्मणेति' अग्निः स्तूयत इत्यर्थः । 'भारत' इति पदमनूद्य द्वेधा निर्ब्रूते—**एष हीत्यादिना** ॥ २ ॥

---

१-तै. ब्रा. ३ । ५ । ३ । १ । सं. २ । ५ । ९ । १ । २-निगदानां यजुष्ट्वाधिकरणं-मी. द. २ अ. १ पा. ३८-४५ सू. । न्या. मा. २ । १ । १३ अधिं. द्रष्टव्यम् । ३-इहैवोपरिष्टात् १० । ६ । ५ । ३ ।

( त्यु ) अथार्षेयं प्रवृणीते । (तऽ) ऽऋषिभ्यश्चैवैनमेतद्देवेभ्यश्च निवेदयत्ययं महावीर्यो यो यज्ञं प्रापदिति तस्मादार्षेयं प्रवृणीते ॥ ३ ॥

परस्तादर्व्वाक्प्रवृणीते । परस्ताद्ध्यर्व्वाच्यः प्रजाः प्रजायन्ते ज्यायसस्पु-तय ऽउ चैवैतं निह्नुत ऽइदᳪं हि पितैवाग्रेऽथ पुत्रोऽथ पौत्रस्तस्मात्परु-स्तादर्व्वाक्प्रवृणीते ॥ ४ ॥

स ऽआर्षेयमुक्त्वाह । देवेद्धो मन्विद्ध ऽइति देवा ह्येतमग्र ऽऐन्धत तस्मादाह देवेद्ध ऽइति मन्विद्ध ऽइति मनुर्ह्येतमग्र ऽऐन्ध तस्मादाह मन्विद्ध ऽइति ॥ ५ ॥

( त्स्व ) ऋषिष्टुत ऽइति । ( त्य ) ऋषयो ह्येतमग्रे ऽस्तुवंस्तस्मादाह-र्षिष्टुत ऽइति ॥ ६ ॥

विप्रानुमदित ऽइति । ( त्ये ) एते वै विप्रा यदृषय ऽएते ह्येतमन्वम-दंस्तस्मादाह विप्रानुमदित ऽइति ॥ ७ ॥

---

आर्षेयानुवचनम् ।

अथार्षेयं प्रवृणीते । ऋषिभ्यश्चैवैनमेतद्देवेभ्यश्च निवेदयति–' अयं महावीर्यो–यो यज्ञं प्रापदिति ' । तस्मादार्षेयं प्रवृणीते ॥ ३ ॥

परस्तादर्वाक् प्रवृणीते । परस्ताद्ध्यर्वाच्यः प्रजाः प्रजायन्ते, ज्यायसस्पतय उ चैवैतं निह्नुते, इदं हि–पितैवाग्रे, अथ पुत्रः, अथ पौत्रः; तस्मात्परस्तादर्वाक् प्रवृणीते ॥ ४ ॥

निवित्पाठः ।

स आर्षेयमुक्त्वाह–" देवेद्धो मन्विद्धः "–( तै. ब्रा. ३. ५. ३. १ ) इति । देवा ह्येतमग्र ऐन्धत । तस्मादाह–देवेद्ध इति । मन्विद्ध इति । मनुर्ह्येतमग्र ऐन्ध । तस्मादाह–मन्विद्ध इति ॥५॥

"ऋषिष्टुतः"–(३. ५. ३. २) इति । ऋषयो ह्येतमग्रेऽस्तुवन् । तस्मादाह–ऋषिष्टुत इति॥६॥

" विप्रानुमदितः "–( ३. ५. ३. ३ ) इति । एते वै विप्राः–यदृषयः । एते ह्येतमन्वमदन् । तस्मादाह–विप्रानुमदित इति ॥ ७ ॥

---

**आर्षेयमि**त्यादि । होतृकर्त्तृकप्रवरविधिः ॥ ३ ॥

तत्र धर्मविशेषमाह–**परस्तादर्वागि**ति । तस्मिन्नार्षेयप्रवरणे कूटस्थमृषिमारभ्य तत्पुत्रपौत्रादिक्रमेणार्वाचीनं वरणं कर्त्तव्यम् । यथा आङ्गिरसबार्हस्पत्यभारद्वाजेत्यादि । तथा च ' ज्यायसः ' भावपरो निर्देशः; ज्यैष्ठ्यस्य ' पतय एवैतं निह्नुते ' अनेन प्रवरणेन निवेदयति । स्पष्टमन्यत् ॥ ४ ॥

' देवेद्धः ' इत्यादिनिवित्पदानामनुवचनं विधत्ते–**स आर्षेयमुक्त्वे**ति । तानि पदानि क्रमेण व्याचष्टे–

---

१–' एवैतत् निह्नुते ' क. पा. । २–कृष्णयजुर्निवित्पदानि एकादश, ऋङ्निवित्पदानि तु द्वादश । सन्ति च ऋग्यजुषोः पाठभेदाः । ऋङ्निवित्पदानि ऋक्परिशिष्टीयनिविदध्याये पठितानि । ( १ । १ । १२ ) ऐ. ब्रा. २ । ५ । १ । २ प्रपठितानि । कृष्णयजुर्निवित्पदानि तु तै. ब्रा. ३ । ५ । ३ । १–११ प्रपठितानि । तै. सं. २ । ५ । ९ । २–१२ । अत्रापि प्रपठितानि । अस्मिन्ब्राह्मणे तु–

कविशस्त ऽइति । ( त्ये ) एते वै कवयो यदृषय ऽएते ह्येतमशꣳसंस्तस्मादाह कविशस्त ऽइति ॥ ८ ॥

ब्रह्मसꣳशित ऽइति । ब्रह्मसꣳशितो ह्येष घृताहवन ऽइति घृताहवनो ह्येषुः ॥ ९ ॥

प्रणीर्यज्ञानाꣳ रथीरध्वराणामिति । (त्ये) एतेन वै सर्वान्यज्ञान्प्रणयन्ति ये च पाकयज्ञा ये चेतरे तस्मादाह प्रणीर्यज्ञानामिति ॥ १० ॥

रथीरध्वराणामिति । रथो ह वा एष भूत्वा देवेभ्यो यज्ञं वहति तस्मादाह रथीरध्वराणामिति ॥ ११ ॥

( त्य ) अतूर्त्तो होता तूर्णिर्हव्यवाडिति । न ह्येतꣳ रक्षाꣳसि तरन्ति तस्मादाहातूर्त्तो होतेति तूर्णिर्हव्यवाडिति सर्वꣳ ह्येषु पाप्मानं तरति तस्मादाह तूर्णिर्हव्यवाडिति ॥ १२ ॥

( त्या ) आस्पात्रं जुहूर्देवानामिति । देवपात्रं वा ऽएष यदग्निस्तस्मादग्नौ सर्वेभ्यो देवेभ्यो जुह्वति देवपात्रꣳ ह्येष प्राप्नोति ह वै तस्य पात्रं यस्य पात्रं प्रेप्सति य एवमेतद्वेद ॥ १३ ॥

---

"कविशस्तः"–( ३. ५. ३. ४ ) इति । एते वै कवयो यदृषयः । एते ह्येतमशंसन् । तस्मादाह–कविशस्त इति ॥ ८ ॥

" ब्रह्मसꣳशित " ( ३. ५. ३. ५ ) इति । ब्रह्मसंशितो ह्येषः । "घृताहवनः"–(३. ५. ३. ६ ) इति । घृताहवनो ह्येषः ॥ ९ ॥

" प्रणीर्यज्ञानाꣳरथीरध्वराणाम् "–( ३. ५. ३. ७ ) इति । एतेन वै सर्वान् यज्ञान् प्रणयन्ति, ये च पाकयज्ञाः, ये चेतरे । तस्मादाह–प्रणीर्यज्ञानामिति ॥ १० ॥

रथीरध्वराणामिति । रथो ह वा एष भूत्वा देवेभ्यो यज्ञं वहति । तस्मादाह–रथीरध्वराणामिति ॥ ११ ॥

"अतूर्त्तो होता तूर्णिर्हव्यवाट्"–( ३. ५. ३. ८ ) इति । न ह्येतं रक्षांसि तरन्ति । तस्मादाह–अतूर्त्तो होतेति । तूर्णिर्हव्यवाडिति । सर्वं ह्येष पाप्मानं तरति । तस्मादाह–तूर्णिर्हव्यवाडिति १२

" आस्पात्रं जुहूर्देवानाम् "–( तै० ब्रा० ३. ५. ३. ९ ) इति । देवपात्रं वा एष यदग्निः ।

---

देवा ह्येतमित्यादिना । स्पष्टोऽर्थः । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ ॥

आस्पात्रमिति । आस्यरूपं पात्रम् 'आस्पात्रम्' । देवपात्रं वा इति । अग्नौ प्रक्षिप्तस्य हविषो

---

–निवित्पदानि पञ्चदश विहितानि । तथा च का. श्रौ सू. " पञ्चदश वा निविदः सम्पादयन् " इति । १ । २ । ३ । शुक्लयजुषां तु दर्शपूर्णमासमारभ्य पशुबन्धपर्यन्तं हौत्रे पक्षद्वयम्, आर्ग्वेदिकं याजुर्वेदिकं वा तत्र याजुर्वेदिकं शुक्लयजुःपंचदशशाखात उपसंहृत्य कात्यायनेनोपनिबद्धम् । तेन च सायणभाष्ये तत्र तत्र संसूचितानि संहिताब्राह्मणस्थतत्तद्धौत्रमंत्रस्थलानि तु कण्वमाध्यंदिनव्यतिरिक्तशाखानामनुपलंभत्वाद्दर्शितानि न तु वस्तुतः मूलभूतानि उक्तविरोधात् । । एवं सर्वत्रापि विज्ञेयम् ॥ इति ॥

चमसो देवपान ऽइति । चमसेन ह वा ऽएतेन भूतेन देवा भक्षयन्ति तस्मादाह चमसो देवपान ऽइति ॥ १४ ॥

( त्य ) अरा ३ँ ॥ ऽइवाग्ने नेमिर्देवांस्त्वं परिभूरसीति । यथाराग्नेमिः सर्व्वतः परिभूरेवं त्वं देवान्त्सर्व्वतः परिभूरसीत्येवैतदाह ॥ १५ ॥

( ह्य ) आवह देवान्यजमानायेति तदस्मै यज्ञाय देवानावोढवा ऽआहा-ग्निमग्न ऽआवहेति तदाग्नेयायाज्यभागायाग्निमावोढवा ऽआह सोममा-वहेति तत्सौम्यायाज्यभागाय सोममावोढवा ऽआहाग्निमावहेति तद्य-ऽएष ऽउभयत्राच्युत ऽआग्नेयः पुरोडाशो भवति तस्माऽअग्निमावो-ढवा ऽआह ॥ १६ ॥

---

तस्मादग्नौ सर्वेभ्यो देवेभ्यो जुह्वति । देवपात्रं ह्येषः । प्राप्नोति ह वै तस्य पात्रम्—यस्य पात्रं प्रेप्सति, य एवमेतद्वेद ॥ १३ ॥

"चमसो देवपानः"–( ३. ५. ३. १० ) इति । चमसेन ह वा एतेन भूतेन देवा भक्षयन्ति । तस्मादाह—चमसो देवपान इति ॥ १४ ॥

"अरा ३ँ॥ इवाग्ने नेमिर्देवांस्त्वं परिभूरसि "–( ३. ५. ३. ११ ) इति । यथाऽराग्नेमिः सर्वतः परिभूः, एवं त्वं देवान् सर्वतः परिभूरसि—इत्येवैतदाह ॥ १५ ॥

देवतावाहनम् ।

" आवह देवान्यजमानाय "–( तै. ब्रा. ३. ५. ३ ) इति । तदस्मै यज्ञाय देवानावोढवा आह ॥ १ ॥ " अग्निमग्न आवह "–( ३. ५. ३ ) इति । तदाग्नेयायाज्यभागायाग्निमावोढवा आह ॥ २ ॥ " सोममावह "–( ३. ५. ३ ) इति । तत्सौम्यायाज्यभागाय सोममावोढवा आह " अग्निमावह "–( ३. ५. ३ ) इति । तद्य एष उभयत्राच्युत आग्नेयः पुरोडाशो भवति ॥ ३ ॥ तस्मा अग्निमावोढवा आह ॥ ४ ॥ ॥ १६ ॥

---

देवैरद्यमानत्वादग्नेर्देवपात्रत्वम् । एतद्वेदितुः फलमाह—प्राप्नोति हेति । ' यस्य ' खलु भोज्यस्य वस्तुनः सम्बन्धि ' पात्रं ' ' प्रेप्सति' प्राप्तुमिच्छति, तद्वस्तुसंबन्धि ' पात्रं ' 'प्राप्नोति' एवं वेदितेत्यर्थः ॥ १३॥ १४॥

अरा ३ँ॥ इवेति । यथाराग्नेमिरिति । यथा चक्रस्य नाभौ नेम्यां च संयोजिताः कीलकाः ' अराः ' तान् ' यथा ' ' नेमिः ' परितो वर्त्तमानान् व्याप्नोति ' तद्वद् ' देवान् ' अग्निरपि संव्याप्नोतीत्यर्थः ॥ १५ ॥

निवित्पदानन्तरं वक्तव्यमावाहननिगदमप्यनूद्य पदशो व्याचष्टे—आवह देवानित्यादिना । देवानावोढवा इति । आङ्पूर्वाद्वहतेः स्वार्थे तवैन्—प्रत्ययः ( पा. सू. ३ । ४ । ९ । ) यष्टव्यान् देवान् आवोढुमानेतु-मित्यर्थः । " आवह देवान् "—इति सामान्योक्तस्याऽऽवाहनस्य विवरणम् " अग्निमग्न आवह "—इत्यादि निगदसिद्धम् ॥ १६ ॥

---

१–प्रमादपतितं पदमिदमत्र प्रतिभाति । २–आवाहननिगदमंत्रास्तु तैत्तिरीयब्राह्मणे ३ । ५ । ३ सं० २ । ५ । ९ । ७ । ८ । त्रयोदश आम्नाताः ।

( ह्य ) अथ यथादेवतम् । देवा ३॑ ॥ऽआज्यपा ३॑॥ऽआवहेति तत्प्रयाजानुयाजानावोढवा ऽआह प्रयाजानुयाजा वै देवा ऽआज्यपाऽअग्निᳫं होत्रायावहेति तदग्निᳫं होत्रायावोढवा ऽआह स्वं महिमानमावहेति तत्स्वं महिमानमावोढवा ऽआह वाग्वा ऽअस्य स्वो महिमा तद्वाचमावोढवाऽआहा च वह जातवेदः सुयजा च यजेति तद्याऽएवैतद्देवता ऽआवोढवाऽआह ता ऽएवैतदाहा चैना वहानुष्ठ्या च यजेति यदाह सुयजा च यजेति॥ १७॥ स वै तिष्ठन्नन्वाह । (ह्य) अन्वाह ह्येतदसौ ह्यनुवाक्या तदसावेवैतद्भूत्वान्वाह तस्मात्तिष्ठन्नन्वाह ॥ १८ ॥

---

अथ यथादेवतम् ॥ ५ ॥ “ देवा ३॑॥ आज्यपा ३॥ आवह ”–( ३. ५. ३ ) इति । तत्प्रयाजानुयाजानावोढवा आह । प्रयाजानुयाजा वै देवा आज्यपाः ॥६॥ “अग्निᳫं होत्रायावह ”–(३. ५. ३) इति। तदग्निं होत्रायावोढवा आह ॥७॥ “स्वं महिमानमावह (३. ५. ३)” इति । तत्स्वं महिमानमावोढवा आह । वाग् वा अस्य स्वो महिमा । तद्वाचमावोढवा आह ॥८॥ “ आ च वह जातवेदः सुयजा च यज ”–( ३. ५. ३ ) इति । तद्या एवैतद्देवता आवोढवा आह, ता एवैतदाह । आ चैना वहानुष्ठ्या च यजेति । यदाह–सुयजा च यजेति ॥ ९ ॥ १७ ॥

स वै तिष्ठन्नन्वाह । अन्वाह ह्येतद्, असौ ह्यनुवाक्या, तदसावेवैतद् भूत्वाऽन्वाह । तस्मात्तिष्ठन्नन्वाह ॥ १८ ॥

---

**अथ यथादेवत**मिति । दर्शपूर्णमासयोरुभयत्र योऽग्निः पुरोडाशदेवता; तदावाहनानन्तरं निर्वापसमये यस्यै यस्यै देवतायै येन क्रमेण निरुप्तम्, तेनैव क्रमेण तस्याः सर्वस्या देवतायाः “ अग्नीषोमावावह ”–इत्यादिवाक्यैरावाहनं कार्यमित्यर्थः । देवा२॥ ऽआज्यपानिति । प्रयाजानुयाजदेवतावाहनं विवक्षितमिति व्याचष्टे– **तत्प्रयाजानुयाजा**निति । कर्मवाचिना प्रयाजानुयाजशब्देन तत्संबन्धिनो देवा लक्ष्यन्ते । ते हि हविर्भागाङ्गीकाराय वोढव्याः । तेषामाज्यमेव हि भागः; “ यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तत्, यदुपभृति प्रयाजानुयाजेभ्यस्तत् ”–( शत. ब्रा. १ कां. ३ प्र. ५ ब्रा. ८–९ कं. इत्यत्र द्रष्टव्यम् ) इति जौहवौपभृतयोराज्ययोस्तद्धविष्ट्वश्रवणात् । “ अग्निं होत्राय ”–इत्यनेन स्विष्टकृतोऽग्नेरावाहनं विवक्षितम् । **स्वं महिमानमिति** । देवताया अग्नेः स्वभूतो वाग्रूपो ‘ महिमा ’; तस्यावाहनम् । “ आवह जातवेदः ” इति वाक्येन । प्राक्प्रतिपादितस्याज्यभागादिदेवतानां सर्वासामावाहनस्य निगमनम्–“ **सुयजा च यजेति** ”–इति । अस्य व्याख्यानम्– “**अनुष्ठया च यजेति**” इति । ‘ अनुष्ठया ’ अनुक्रमेण सम्यगित्यर्थः ॥ १७ ॥

यदेतत्सामिधेन्यादिकमनुवचनादि, तत्सर्वं तिष्ठतैव वक्तव्यमिति विधत्ते–**स वा** इति । कुत इयत

---

१–“ त्रयस्त्रिंशद्वै देवाः सोमपाः, त्रयस्त्रिंशद्वै असोमपाः । अष्टौ वसवः एकादश रुद्राः द्वादशादित्याः प्रजापतिश्च वषट्कारश्चैते देवाः सोमपाः; ‘ एकादश प्रयाजाः, एकादशानूयाजाः, एकादशोपयाजाः,–एतेऽसोमपाः पशुभाजनाः ’ इत्यैतरेयब्राह्मणे (२।२।८।) प्रयाजानां देवत्वमुक्तं द्रष्टव्यम् ।

( ह्य ) आसीनो याज्यां यजति । इय ँ हि याज्या तस्मान्न कश्चन तिष्ठन्याज्यां यजतीय ँ हि याज्या तदियमेवैतद्भूत्वा यजति तस्मादासीनो याज्यां यजति ॥ १९ ॥ ४ ॥

इति तृतीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ ( ४. २. ) ॥

यो ह वा ऽअग्निः सामिधेनीभिः समिद्धः । ( द्धोऽति ) अतितरा ँ ह वै स इतरस्मादग्नेस्तपत्यनवधृष्यो हि भवत्यनवमृश्यः ॥ १ ॥

स यथा हैवाग्निः । सामिधेनीभिः समिद्धस्तपत्येव ँ हैव ब्राह्मणः सामिधेनीर्विद्वाननुब्रुवंस्तपत्यनवधृष्यो हि भवत्यनवमृश्यः ॥ २ ॥

---

आसीनो याज्यां यजति । इयं हि याज्या, तस्मान्न कश्चन तिष्ठन् याज्यां यजति । इयं हि याज्या, तदियमेवैतद् भूत्वा यजति । तस्मादासीनो याज्यां यजति ॥ १९ ॥

**शान्तिकर्म ।**

यो ह वा अग्निः सामिधेनीभिः समिद्धः, अतितरां ह वै स इतरस्मादग्नेस्तपति, अनवधृष्यो हि भवति, अनवमृश्यः ॥ १ ॥

स यथा हैवाग्निः सामिधेनीभिः समिद्धस्तपति, एवं हैव ब्राह्मणः सामिधेनीर्विद्वाननुब्रुवंस्तपति । अनवधृष्यो हि भवति, अनवमृश्यः ॥ २ ॥

---

आह—**अन्वाह ह्येतदिति** । अनुवाक्या हि द्युलोकरूपा, तिष्ठतश्च द्युलोकसंबन्धो भवति । अतोऽनुवाक्या तावत्तिष्ठतैवानुवक्तुं योग्या । अनुवचनसाम्यात्सामिधेन्यादिकमपि तिष्ठतैव पठितुं युक्तमित्यर्थः ॥ १८ ॥

याज्यायां विशेषमाह—**आसीनो याज्यामिति** । ' हि ' यस्मात् ' इयं ' पृथिव्यात्मिकैव ' याज्या ' **तस्मात्** याज्यापाठस्तिष्ठता न कर्तव्यः ; ' आसीनश्च ' सन्निकर्षविशेषात् पृथिवीरूपापन्नो भवति; तदियमित्युक्तम्—**इयमेवैतद् भूत्वेति** ॥ १९ ॥ ४ ॥ ( ४. २. ) ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये प्रथमकाण्डे चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥

सामिधेनीभिर्ऋग्भिः समिद्धस्याग्नेः लौकिकाग्निसकाशादतिशयमाह—**यो ह वा इति** । यस्मादतिशयेन **'तपति'** अतः राक्षसादिभिः ' धर्षितुं ' हिंसितुं मर्शितुं स्प्रष्टुं न शक्य इत्यर्थः ॥ १ ॥

समिद्धाग्निदृष्टान्तेन एवं वेदितुर्होतुरपि तद्वदनुवचनं कुर्वतो यथोक्तविशेषापत्तिर्भवतीत्याह—**स यथेति** । ' अनवधृष्यः ' ' अनवमृश्यः ' इत्युभयत्र धृषेर्मृशेश्च—( धा. पा. प. १४२ । आमर्शनं स्पर्शः—इति सि. कौ. ) ऋदुपधाच्चाक्लृपिचृतेः"—( पा. सू. ३. १. ११० ) इति कर्मणि क्यप् ॥ २ ॥

---

१—" सर्वेषामग्रेऽग्रेऽनुवाक्यास्ततो याज्याः " इति आश्व. श्रौ. सू. ३ । ७ । ३ । " पुरस्ताल्लक्ष्मा पुरोऽनुवाक्या भवति । जातानेव भ्रातृव्यान्प्रणुदते । उपरिष्टाल्लक्ष्मा याज्या जनिष्यमाणानेव प्रतिनुदते " इति तै. सं. २ । ६ । २ । ३ । " मन्त्रप्रतिपाद्याया देवताया नामधेयं लक्ष्म तद्यस्यामृचि पूर्वार्द्धे विद्यते सा पुरोऽनुवाक्या, तन्नाम यस्यामुत्तरार्द्धे विद्यते सा याज्या । तद्यथा—' अग्निर्मूर्धा ' इति पूर्वार्द्धेऽग्निशब्दः । ' जिह्वामग्ने चकृषे ' इत्युत्तरार्द्धेऽग्निशब्दः ' इति च तत्र सा. भा. । ह्वयति वा अनुवाक्यया, प्रयच्छति याज्यया; सा या पुरस्ताल्लक्षणा सानुवाक्या स्यात्; अथ योपरिष्टाल्लक्षणा सा याज्या स्यात् " इति चैहैवोपरिष्टद ७ । २ । १७–१९ । " पुरोऽनुवाक्या देवतास्मरणार्था, याज्या च हविःप्रदानार्था "—इति हि का. श्रौ. सू. १ । ८ । ९ सू. वृ. ।

सोऽन्वाह । प्रव ऽइति प्राणो वै प्रवान्प्राणमेवैतया समिन्धेऽग्न ऽआयाहि व्वीतय ऽइत्यपानो वा ऽएतवानपानमेवैतया समिन्धे बृहच्छोचा यविष्ठचेत्युदानो वै बृहच्छोचा ऽउदानमेवैतया समिन्धे ॥ ३ ॥

स नः पृथु श्रवाय्यमिति श्रोत्रं वै पृथु श्रवाय्यᳪं श्रोत्रेण हीदमुरु पृथु शृणोति श्रोत्रमेवैतया समिन्धे ॥ ४ ॥

( न्धऽ ) ईडेन्यो नमस्य ऽइति । व्वाग्वा ईडेन्या व्वाग्घीदᳪं सर्व्वमीट्टे व्वाचेदᳪं सर्व्वमीडितं व्वाचमेवैतया समिन्धे ॥ ५ ॥

---

सोऽन्वाह—"प्रवः"इति । प्राणो वै प्रवान्, प्राणमेवैतया समिन्धे ।"अग्न आयाहि वीतये" इति । अपानो वा एतवान्, अपानमेवैतया समिन्धे । "बृहच्छोचा यविष्ठय"—इति । उदानो वै बृहच्छोचाः, उदानमेवैतया समिन्धे ॥ ३ ॥

"स नः पृथु श्रवाय्यम्"—इति । श्रोत्रं वै पृथु श्रवाय्यम्, श्रोत्रेण हीदमुरु पृथु शृणोति श्रोत्रमेवैतया समिन्धे ॥ ४ ॥

"ईडेन्यो नमस्यः"—इति । वाग् वा ईडेन्या, वाग्घीदं सर्वमीट्टे । वाचेदं सर्वमीडितम् । वाचमेवैतया समिन्धे ॥ ५ ॥

---

अथैताः सामिधेनीः प्रत्येकं तत्तल्लिंगोपन्यासेन प्राणापानश्रोत्रादिकरणग्रामविशिष्टात्मसंस्कारहेतुतया प्रशंसति—सोऽन्वाहेत्यादिना । प्राणो वै प्रवानिति । प्रगमनयुक्तत्वात् '. प्राणः ' प्रशब्दवान् । प्राणवृत्तिर्हि इडापिङ्गलाभ्यां प्राचीनं निर्गच्छति, अतः' एतया ' प्रशब्दोपेतया प्रथमया सामिधेन्या प्रगमनवन्तं ' प्राणमेव ' ' समिन्धे दीपयति । एवमुत्तरत्रापि योज्यम् । अपानो वा एतवानिति । बहिर्निर्गतस्य वायोरात्माभिमुखी वृत्तिरपानः । अतः आगमनविशिष्टत्वाद् ' अपानः ' आकारोपसर्गवानित्यर्थः । उदानो वै बृहच्छोचा—इति । ' बृहत् ' अधिकं ' शोचते ' दीप्यत इति ' बृहच्छोचाः ' अग्निः । उदानवायुरपि देहस्योत्क्षेपणात् अधिकतेजोयुक्तः । अतो ' बृहच्छोचा '—इति शब्देन ' उदानः ' उपस्थाप्यते ॥ ३ ॥

स न इति । श्रोत्रं वै पृथु श्रवाय्यमिति । ' पृथु ' विस्तीर्णं श्रवणासधनं पृथु श्रवाय्यम् । अनेन शब्देन श्रोत्रेन्द्रियं विवक्षितमित्याह—श्रोत्रेण हीति । ' उरु '—इति पृथुशब्दव्याख्यानम् ॥ ४ ॥

ईडेन्य इति । वाग्वा ईडेन्येति । " ईडेन्यो नमस्य " इत्यृचि[६] ' ईडेन्य '—शब्देन वाग् विवक्षिता । कथमेतदित्याशङ्क्योपपादयति—वागिति । ' वाग् ' एव खल्विदं ' सर्वं ' जगत् ' ईट्टे ' स्तौति । "ईड स्तुतौ"—( अदा० आ० ९ ) इति धातुः । यत्राप्यन्यः स्तोता, तत्रापि वाचैव करणभूतया सर्वमीडितं भवति । ईट्टे, ईड्यते अनयेति वा कर्तृकरणव्युत्पत्त्या ' ईडेन्य '—शब्दस्य वाग्वाचकत्वमवगन्तव्यमित्यर्थः ॥ ५ ॥

---

१—प्रवयतीत्यधिकं क्वचित् । २—' प्रवोवाजा ' इति प्रथमा सामिधेनी ' प्रवती ' ' प्रेतिलिङ्गा ' वा । तै. ब्रा. ३ । ५ । २ । १। ३—' अग्न आयाहि ' इति द्वितीया सामिधेनी ' आवती ' ' एतिलिङ्गा ' वा. तै. ब्रा. ३ । ५ । २ । २ । ४—' तं त्वा ' इति तृतीया सामिधेनी ' गीर्वती ' तै. ब्रा. ३ । ५ । २ । ३ । ५—' सनः पृथु ' इति चतुर्थी सामिधेनी ' पृथुवती ' तै. ब्रा. ३ । ५ । २ । ४ । ६—' ईडेन्यो नमस्यः ' इति पंचमी सामिधेनी ' नमस्वती ' तै. ब्रा. ३ । ५ । २ । ५ ।

( न्धेऽश्वो ) अश्वो न देववाहन ऽइति । मनो वै देववाहनं मनो हीदं मनस्विनं भूयिष्ठं व्वनीवाह्यते मन ऽएवैतया समिन्धे ॥ ६ ॥

अग्ने दीद्यतं बृहदिति । चक्षुर्वै दीदयेव चक्षुरेवैतया समिन्धे ॥ ७ ॥

( न्धेऽग्निं ) अग्निन्दूतं वृणीमह ऽइति । स एवायं मध्यमः प्राण ऽएतमेवैतया समिन्धे स हैषान्तस्था प्राणानामतो ह्यन्यऽ ऊर्द्धाः प्राणाऽअतोऽन्येऽवाञ्चोऽन्तस्था ह भवत्यन्तस्थामेनं मन्यन्ते य एवमेतामन्तस्थां प्राणानां व्वेद ॥ ८ ॥

शोचिष्केशस्तमीमह ऽइति । शिश्नं वै शोचिष्केशꣳ शिश्नꣳ हीदꣳ शिश्निनं भूयिष्ठꣳ शोचयति शिश्नमेवैतया समिन्धे ॥ ९ ॥

---

"अश्वो न देववाहनः"–इति । मनो वै देववाहनम् । मनो हीदं मनस्विनं भूयिष्ठं वनीवाह्यते मन एवैतया समिन्धे ॥ ६ ॥

" अग्ने दीद्यतं बृहत "–इति । चक्षुर्वै दीदयेव । चक्षुरेवैतया समिन्धे ॥ ७ ॥

"अग्निं दूतं वृणीमहे"–इति । य एवायं मध्यमः प्राणः एतमेवैतया समिन्धे । सा हैषान्तस्था प्राणानाम्, अतो ह्यन्य ऊर्द्धाः प्राणाः, अतोऽन्येऽवाञ्चः । अन्तस्था ह भवति । अन्तस्थामेनं मन्यन्ते, य एवमेतामन्तस्थां प्राणानां वेद ॥ ८ ॥

" शोचिष्केशस्तमीमहे "–इति । शिश्नं वै शोचिष्केशम्, शिश्नं हीदं शिश्निनं भूयिष्ठं शोचयति । शिश्नमेवैतया समिन्धे ॥ ९ ॥

---

**अश्वो न** इति । **मनो वै देववाहनमि**ति । " अश्वो न देववाहनः " इति[1] देववाहन-शब्दो मनस उपलक्षकः । ' हि ' यस्मात् ' मनः ' ' मनस्विनं ' पुरुषं ' भूयिष्ठम् ' अत्यधिकं ' वनीवाह्यते ' भृशं वहति देवान् शीघ्रं प्रापयति । अतो देववाहनं मन इत्यर्थः ॥ ६ ॥

**अग्ने दीद्यतमि**ति । **चक्षुर्वै दीदयेवे**ति । ' चक्षुः ' इन्द्रियं हि रूपादिप्रकाशकत्वाद् " अग्ने दीद्यतम्"–इति[2] दीद्यच्छब्देन दीप्तिवाचिनोपस्थाप्यते । अतोऽनया चक्षुःसमिन्धनम् ॥ ७ ॥

**अग्निं दूतमि**[3]ति । **य एवायं मध्यमः प्राण** इति । प्राणापानादिपञ्चवृत्त्याश्रयभूतो ' यः ' क्रियाशक्त्यात्मको देहमध्येऽवस्थितः ' प्राणः ' तस्य समिन्धनम् " अग्निं दूतम् "--इत्यनया । दूतो ह्यग्निः सर्वेषां देवानां मुखम् । तथा प्राणोऽपीति । तेन समिन्धनस्योपपत्तिः । **सा हैषान्तस्थे**त्यादि । ' सैषा ' ' अग्निं दूतं वृणीमहे ' इति सामिधेनी, मध्यमप्राणरूपेण प्राणापानादिसंस्तुतानामन्यासामृचाम् ' अन्तस्था ' अन्तरवस्थिता भवति । ' अन्ये' हि 'प्राणाः' चक्षुःश्रोत्रादयः 'अतः' अस्मात्प्राणादारभ्य 'ऊर्द्धाः' चरन्ति । पायूपस्थादयः 'अन्ये' प्राणाः 'अतः' अस्मान्मध्यमात्प्राणादेवारभ्य ' अवाञ्चः ' अवाङ्मुखा अन्तरवस्थिता भवन्ति । एवं वेदितुः फलमाह--**अन्तस्थामि**ति । ' अन्तस्थाम् ' अन्तरवस्थितां प्राणदेवतामित्यर्थः ॥ ८ ॥

के पुनरेतेषां मध्येऽवाञ्चोऽन्तस्थाः प्राणा इति, तान् दर्शयति--**शोचिष्केशस्तमीमह** इत्यादिना ।

---

१–' वृषो अग्निः ' इति षष्ठी सामिधेनी ' हविष्मती ' तै. ब्रा. ३ । ५ । २ । ६ । २–" वृषणं त्वा " इति सप्तमी सामिधेनी ' वृषण्वती ' तै. ब्रा. ३ । ५ । २ । ७ । ३–' अग्निं दूतं ' इत्यष्टमी सामिधेनी 'दूतवती' तै. ब्रा. ३ । ५ । २ । ८ । ४–" समिध्यमानो " इति नवमी समिध्यमानवती, तै. ब्रा. ३ । ५ । २ । ९ ।

समिद्धो ऽअग्न ऽआहुतेति । यऽएवायमुवाङ्प्राण एतुमेवैतया सुमिन्ध आजुहोता दुवस्यतेति सुर्व्वमात्मानᳬंसमिन्धे ऽआनखेभ्योऽथोलोमभ्यः १०
स युद्येनं प्रथमायाᳬंसामिधेन्यामनुव्याहरेत् । (त्तं) तं प्रति ब्रूयात्प्राणं व्वाऽ एतुदात्मुनोऽग्नावाधाः प्राणेनात्मनऽआर्त्तिमारिष्यसीति तुथा हैवु स्यात् ११
(य्र) युदि द्वितीयस्यामनुव्याहरेत् । ( त्तं ) तं प्रति ब्रूयादपानं व्वा ऽएतुदात्मुनोऽग्नावाधा अपानेनात्मनऽआर्तिमारिष्यसीति तुथा हैवु स्यात् १२
(य्र) युदि तृतीयस्यामनुव्याहरेत् ।(त्तुं) तुं प्रतिब्रूयादुदानं व्वाऽएतुदात्मुनोऽग्नावाधा उदानेनात्मन आर्त्तिमारिष्यसीति तुथा हैवु स्यात् ॥ १३ ॥

---

" समिद्धो अग्न आहुत "–इति । य एवायमवाङ् प्राणः, एतमेवैतया समिन्धे । "आजुहोता दुवस्यत "–इति । सर्वमात्मानं समिन्धे–आ नखेभ्योऽथो लोमभ्यः ॥ १० ॥

स यद्येनं प्रथमायां सामिधेन्यामनुव्याहरेत्, तं प्रति ब्रूयात्–" **प्राणं वा एतदात्मनोऽग्नावाधाः, प्राणेनात्मन आर्त्तिमारिष्यसि** " इति । तथा हैव स्यात् ॥ ११ ॥

यदि द्वितीयस्यामनुव्याहरेत्, तं प्रति ब्रूयात्–"**अपानं वा एतदात्मनोऽग्नावाधाः, अपानेनात्मन आर्त्तिमारिष्यसि** " इति । तथा हैव स्यात् ॥ १२ ॥

यदि तृतीयस्यामनुव्याहरेत्, तं प्रति ब्रूयात्–"**उदानं वा एतदात्मनोऽग्नावाधाः, उदानेनात्मन आर्तिमारिष्यसि** " इति । तथा हैव स्यात् ॥ १३ ॥

---

**शिश्नं वै शोचिष्केशमि**ति । तदुपपादनम्--**शिश्नं ही**ति । अभिलषितस्त्रीविरहे अतिशयेन शोकहेतुत्वात् शोचिष्केश--शब्देन ' शिश्नं ' पुंव्यञ्जनं लक्ष्यते । तथा चैतच्छब्दोपेतयर्चा आनन्दनव्यापारस्य उपस्थाख्यस्येन्द्रियस्य समिन्धनं कृतं भवतीत्यर्थः ॥ ९ ॥

**समिद्धो अग्न** इति । **य एवायमवाङ् प्राण** इति । प्राण–शब्द इन्द्रियवचनोऽवाङ्मुखः; अपानाख्यमिन्द्रियमित्यर्थः । **सर्वमात्मानमि**ति । उक्तेन्द्रियसंघातमापादमस्तकव्याप्तं जीवात्मानमेवोत्तमया सामिधेन्या[१] 'समिन्धे' । तस्या आत्मनश्चोक्तरीत्या सर्वोपरि वर्त्तनं साम्यम् ॥ १० ॥

एवमेकादश सामिधेनीः[४] प्रत्यृचं लिङ्गविशेषोपन्यासेन प्राणापानादीनां समिन्धनहेतुतया प्रशस्य तत्र तदनुवचनसमये शपतो द्वेष्यस्य प्राणापानादिवियोजनहेतुत्वेन प्रशंसति–**स यद्येनमि**ति । ' प्रथमायां सामिधेन्याम् ' अनूच्यमानायाम् ' एनं ' होतारं ' यदि ' द्वेष्यः ' अनुव्याहरेत् ' शपेत् । " अनुव्याहारः शापः "–इति हि धूर्त्तस्वामी भाष्यकारः[५] । ' तम् ' अनुव्याहरन्तं ' प्रति ' होता ' ब्रूयात् '–' एतत् ' एतर्हि ' आत्मनः ' स्वसंबन्धिनं ' प्राणं ' हे शत्रो ! ' अग्नौ ' ' आधाः ' निहितवानसि । ' ते ' तव ' प्राणेन ' निमित्तेन ' आत्मनः ' स्वात्मनः ' आर्त्तिं ' पीडां प्राप्स्यसीति[६] । एवं होत्रा प्रतिवचने कृते तस्य द्वेष्यस्य यथोक्त

---

१ –'न्द्ध' इति पा. एवमन्यत्रापि । २–' समिद्धो अग्न ' इति दशमी सामिधेनी ' समिद्धवती ' इति तै. ब्रा. ३ । ५ । २ । १० । ३–' आजुहोता ' इति एकादशी सामिधेनी ' उत्तमा ' तै. ब्रा. ३ । ५ । २ । ११ । ४–' आसामेव सामिधेनीनां व्याख्यानानि पुरस्तादाम्नातानि तृतीयब्राह्मणे । ५–' आपस्तम्बीययज्ञपरिभाषादिश्रौतसूत्रेषु एतत्कृतभाष्याणि त्वद्यापि पापठयन्त एव, शतपथस्याप्येतत्कृतं भाष्यं सायणादिभिरवलोकितं स्यात् । इहैवोपरिष्टात् पुनरपि ६ । १ । १८ । पुनः ४ । ५ । २ । १३ । कातीयश्रौतव्याख्यानेऽप्येवमेव २५ । १० । १५ । इति । ६–'आरिष्यसी' त्यस्य व्याख्यानमिदम् ।

(य) यदि चतुर्थ्यामनुव्याहरेत् । (त्तं) तं प्रति ब्रूयाच्छ्रोत्रं वा ऽएतदात्मनोऽग्नावाधाः श्रोत्रेणात्मन ऽआर्त्तिमारिष्यसि बधिरो भविष्यसीति तथा हैव स्यात् ॥ १४ ॥

(य) यदि पञ्चम्यामनुव्याहरेत् । (त्तं) तं प्रति ब्रूयाद्वाचं वा ऽएतदात्मनोऽग्नावाधा व्वाचात्मन ऽआर्तिमारिष्यसि मूको भविष्यसीति तथा हैव स्यात् ॥ १५ ॥

(य) यदि षष्ठ्यामनुव्याहरेत् । (त्तं) तं प्रति ब्रूयान्मनो वा ऽएतदात्मनोऽग्नावाधा मनसात्मन ऽआर्त्तिमारिष्यसि मनोमुषिगृहीतो मोमुघश्चरिष्यसीति तथा हैव स्यात् ॥ १६ ॥

(य) यदि सप्तम्यामनुव्याहरेत् । (त्तं) तं प्रति ब्रूयाच्चक्षुर्वा ऽएतदात्मनोऽग्नावाधाश्चक्षुषात्मन ऽआर्त्तिमारिष्यस्यन्धो भविष्यसीति तथा हैव स्यात् ॥ १७ ॥

(य) यद्यष्टम्यामनुव्याहरेत् । (त्तं) तं प्रति ब्रूयान्मध्यं वा ऽएतत्प्राणमात्मनोऽग्नावाधा मध्येन प्राणेनात्मन ऽआर्त्तिमारिष्यस्युद्ध्माय मरिष्यसीति तथा हैव स्यात् ॥ १८ ॥

---

यदि चतुर्थ्यामनुव्याहरेत्, तं प्रति ब्रूयात्—"श्रोत्रं वा एतदात्मनोऽग्नावाधाः, श्रोत्रेणात्मन आर्त्तिमारिष्यसि बधिरो भविष्यसि" इति । तथा हैव स्यात् ॥ १४ ॥

यदि पञ्चम्यामनुव्याहरेत्, तं प्रति ब्रूयात्—"वाचं वा एतदात्मनोऽग्नावाधाः, वाचात्मन आर्तिमारिष्यसि मूको भविष्यसि" इति । तथा हैव स्यात् ॥ १५ ॥

यदि षष्ठ्यामनुव्याहरेत्, तं प्रति ब्रूयात्—"मनो वा एतदात्मनोऽग्नावाधाः मनसात्मन आर्त्तिमारिष्यसि मनोमुषिगृहीतो मोमुघश्चरिष्यसि"—इति । तथा हैव स्यात् ॥ १६ ॥

यदि सप्तम्यामनुव्याहरेत्, तं प्रति ब्रूयात्—"चक्षुर्वा एतदात्मनोऽग्नावाधाश्चक्षुषात्मन आर्तिमारिष्यस्यन्धो भविष्यसि"—इति । तथा हैव स्यात् ॥ १७ ॥

यद्यष्टम्यामनुव्याहरेत्, तं प्रति ब्रूयात्—"मध्यं वा एतत्प्राणमात्मनोऽग्नावाधाः, मध्येन प्राणेनात्मन आर्तिमारिष्यस्युद्ध्माय मरिष्यसि"—इति । तथा हैव स्यात् ॥ १८ ॥

---

'तथैव' सत्यं भवेत् । ऋचां च प्राणापानादिप्रतिपादकत्वं प्रागेव प्रतिपादितम् । एवमुत्तरत्रापि योजना । अर्थो निगदसिद्धः ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥

**यदि षष्ठ्यामिति** । **मनोमुषिगृहीत** इति । मनसो मोषणं विपरिलोपः तेन गृहीतः, अत एवातिशयेन मूढश्चरिष्यसीत्यर्थः ॥ १६ ॥ १७ ॥

**यद्यष्टम्यामिति** । **उद्ध्मायेति** । 'उद्ध्मानम्' ऊर्द्ध्वं श्वसनम् । तत्प्राप्येत्यर्थः ॥ १८ ॥ १९ ॥

( य ) यदि नवम्यामनुव्याहरेत् । ( तं )ऽतं प्रतिब्रूयाच्छिश्नं वा ऽएतदात्मनोऽग्नावाधाः शिश्नेनात्मन ऽआर्त्तिमारिष्यसि क्लीबो भविष्यसीति तथा हैव स्यात् ॥ १९ ॥

( य ) यदि दशम्यामनुव्याहरेत् । ( तं ) तं प्रति ब्रूयादवाञ्चं वा ऽएतत्प्राणमात्मनोऽग्नावाधा ऽअवाचा प्राणेनात्मन आर्त्तिमारिष्यस्यपिनद्धो मरिष्यसीति तथा हैव स्यात् ॥ २० ॥

( य ) यद्येकादश्यामनुव्याहरेत् । ( तं ) तं प्रति ब्रूयात्सर्व्वं वा ऽएतदात्मानमग्नावाधाः सर्व्वेणात्मनार्त्तिमारिष्यसि क्षिप्रेऽमुं लोकमेष्यसीति तथा हैव स्यात् ॥ २१ ॥

( त्स ) स यथा हैवाग्नि ᳪ सामिधेनीभिः समिद्धमापद्यार्त्तिं न्येत्येव ᳪ हैव ब्राह्मण ᳪ सामिधेनीर्व्विद्वाᳪसमनुब्रुवन्तमनुव्याहृत्यार्त्तिं न्येति ॥ २२ ॥

इति तृतीयप्रपाठके पञ्चमं ब्राह्मणम् ॥ ५ ॥ ( ४. ३. )

---

यदि नवम्यामनुव्याहरेत्, तं प्रति ब्रूयात्–"शिश्नं वा एतदात्मनोऽग्नावाधाः, शिश्नेनात्मन आर्त्तिमारिष्यसि क्लीबो भविष्यसि" इति । तथा हैव स्यात् ॥ १९ ॥

यदि दशम्यामनुव्याहरेत्, तं प्रति ब्रूयात्–"अवाञ्चं वा एतत्प्राणमात्मनोऽग्नावाधाः, अवाचा प्राणेनात्मन आर्त्तिमारिष्यस्यपिनद्धो मरिष्यसि" इति । तथा हैव स्यात् ॥ २० ॥

यद्येकादश्यामनुव्याहरेत्, तं प्रति ब्रूयात्–"सर्वं वा एतदात्मानमग्नावाधाः; सर्वेणात्मनार्त्तिमारिष्यसि क्षिप्रेऽमुं लोकमेष्यसि" इति । तथा हैव स्यात् ॥ २१ ॥

स यथा हैवाग्निं सामिधेनीभिः समिद्धमापद्यार्त्तिं न्येति, एवं हैव ब्राह्मणं सामिधेनीर्विद्वांसमनुब्रुवन्तमनुव्याहृत्यार्त्तिं न्येति ॥ २२ ॥

---

यदि दशम्यामिति । अपिनद्धो मरिष्यसीतीति । 'अपिनद्धः' बन्धनयुक्त इत्यर्थः ॥ २० ॥

यद्येकादश्यामिति । क्षिप्रेऽमुं लोकमिति । 'क्षिप्रे' अल्प एव काले, कालविलम्बमन्तरेण 'अमुं' द्युलोकं गामिष्यसीत्यर्थः ॥ २१ ॥

एवं सामिधेनीरनुब्रुवतो होतुराग्निसमानत्वात्तद्दृष्टान्तत्वेन होतृशापकारिणः प्रतिपादितामार्तिं निगमयति–स यथेति । 'सामिधेनीभिः करणैः 'समिद्धमग्निं' प्राप्य 'यथा आर्त्तिं' 'न्येति' नितरां प्राप्नोति, तथैव 'सामिधेनीः' विदुषो होतुर्द्वेष्यश्च तदनुव्याहारनिमित्तामुक्तविधां पीडां प्राप्नोतीत्यर्थः ॥ २२ ॥५ (४.३.) ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये प्रथमकाण्डे चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥

तं व्वा ऽएतमग्निꣳ समैन्धिषत । समिद्धे देवेभ्यो जुहवामेति तस्मिन्नेते ऽएव प्रथमे ऽआहुती जुहोति मनसे चैव व्वाचे च मनश्च ह वै व्वाक्च युजौ देवेभ्यो यज्ञं व्वहतः ॥ १ ॥

स यदुपाꣳशु क्रियते । तन्मनो देवेभ्यो यज्ञं व्वहत्यथ यद्वाचा निरुक्तं क्रियते । तद्वाग्देवेभ्यो यज्ञं वहत्येतद्वा ऽ इदं द्वयं क्रियते तदेते ऽएवैतत्सन्तर्प्पयति तृप्ते प्रीते देवेभ्यो यज्ञं व्वहात ऽइति ॥ २ ॥

स्रुवेण तमाघारयति । यं मनस ऽआघारयति व्वृषा हि मनो व्वृषा हि स्रुवः ॥ ३ ॥

स्रुचा तमाघारयति । यं व्वाच ऽआघारयति योषा हि व्वाग्योषा हि स्रुक् ॥ ४ ॥

(क्तू) तूष्णीं तमाघारयति । यं मनस ऽआघारयति न स्वाहेति चनानिरुक्तꣳ हि मनोऽनिरुक्तꣳ ह्येतद्यत्तूष्णीम् ॥ ५ ॥

---

## आघारयोर्निदानम् ।

तं वा एतमग्निं समैन्धिषत—"समिद्धे देवेभ्यो जुहवाम"—इति । तस्मिन्नेते एव प्रथमे आहुती जुहोति—मनसे चैव वाचे च । मनश्च ह वै वाक् च युजौ देवेभ्यो यज्ञं वहतः ॥ १ ॥

स यदुपांशु क्रियते—तन्मनो देवेभ्यो यज्ञं वहति । अथ यद्वाचा निरुक्तं क्रियते—तद् वाग् देवेभ्यो यज्ञं वहति । एतद्वा इदं द्वयं क्रियते; तदेते एवैतत् सन्तर्पयति । तृप्ते प्रीते देवेभ्यो यज्ञं वहात इति ॥ २ ॥

स्रुवेण तमाघारयति—यं मनस आघारयति । वृषा हि मनः, वृषा हि स्रुवः ॥ ३ ॥

स्रुचा तमाघारयति—यं वाच आघारयति । योषा हि वाक्, योषा हि स्रुक् ॥ ४ ॥

तूष्णीं तमाघारयति—यं मनस आघारयति, न स्वाहेति चन । अनिरुक्तं हि मनः, अनिरुक्तं ह्येतद्—यत्तूष्णीम् ॥ ५ ॥

---

अथाघाररूपौ होमौ विधातुं सिद्धमर्थमनुवदति—**तं वा एतमि**ति । 'तमेतम्' प्रकृतमाहवनीयम् 'अग्निम्' 'समैन्धिषत' सम्यग् दीप्तमकुर्वन् । केनाभिप्रायेणेति तमाह—**समिद्ध** इति । 'तस्मिन्' संदीप्तेऽग्नौ 'एते एव' मुख्ये आघाररूपे 'आहुती' वाङ्मनसयोरर्थे 'जुहोति' । कुतः ? 'मनश्च वाक् च' इत्युभौ 'युजौ' मिथुनीभूतौ सन्तौ 'देवेभ्यः' यज्ञसंबन्धि हविः प्रापयत इति ॥ १ ॥

तयोः क्रमेण हविःप्रापणमुच्यते—**स यदि**ति । 'यत्' एतद् इदम् 'उपांशु' निरुक्तरूपमाहुतिद्वयं 'क्रियते' एतदेव 'तत्' आहुतियुग्मम् 'एते' मनोवाचौ सन्तर्पयति । शेषं सुगमम् ॥ २ ॥

स्रुवस्रुग्भ्यां क्रमेणाघारौ कर्त्तव्याविति विधत्ते—**स्रुवेणे**ति । मनसो हि कामोत्पत्तिद्वारा वृषत्वम्, इति तयोः साम्यम् । अतो मनःसंबन्धिन आघारस्य स्रुवसाध्यत्वम्; वाक्स्रुचोः स्त्रीत्वं समानम् । अतो वाक्संबन्धिन आघारस्य स्रुक्साध्यत्वं युक्तमित्यर्थः ॥ ३ ॥ ४ ॥

अथैतयोराघारयोः क्रमेणामन्त्रकत्व–समन्त्रकत्व–लक्षणौ गुणौ विधत्ते—**तूष्णीमि**त्यादिना । **स्वाहेति**

मन्त्रेण तमाघारयति । यं वाच ऽआघारयति निरुक्ता हि वाङ्निरुक्तो हि मन्त्रः ॥ ६ ॥

( ऽ )आसीनस्तमाघारयति । यं मनस ऽआघारयति तिष्ठंस्तं यं वाचे मनश्च ह वै वाक्च युजौ देवेभ्यो यज्ञं वहतो यतरो वै युजोर्ह्रसीयान्भवत्युपवहं वै तस्मै कुर्व्वन्ति वाग्वै मनसो ह्रसीयस्यपरिमिततरमिव हि मनः परिमिततरेव हि वाक्तद्वाच ऽएवैतदुपवहं करोति ते सयुजौ देवेभ्यो यज्ञं वहतस्तस्मात्तिष्ठन्वाचऽआघारयति ॥ ७ ॥

देवा ह वै यज्ञं तन्वानाः । ( स्ते ) तेऽसुररक्षसेभ्य ऽआसङ्गाद्बिभयांचक्रुस्त ऽएतद्दक्षिणतः प्रत्युदश्रयन्नुच्छ्रितमिव हि वीर्यं तस्माद्दक्षिणतस्तिष्ठन्नाघारयति स यदुभयत ऽआघारयति तस्मादिदं मनश्च वाक्च समानमेव सन्नानेव शिरो ह वै यज्ञस्यैतयोरन्यतर आघारयोर्मूलमन्यतरः ८॥

---

मन्त्रेण तमाघारयति–यं वाच आघारयति । निरुक्ता हि वाक्, निरुक्तो हि मन्त्रः ॥ ६ ॥

आसीनस्तमाघारयति–यं मनस आघारयति, तिष्ठंस्तम्–यं वाचे । मनश्च ह वै वाक् च, युजौ देवेभ्यो यज्ञं वहतः । यतरो वै युजोर्ह्रसीयान् भवति--उपवहं वै तस्मै कुर्वन्ति । वाग् वै मनसो ह्रसीयसी । अपरिमिततरमिव हि मनः, परिमिततरेव हि वाक् । तद्वाच एवैतदुपवहं करोति । ते सयुजौ देवेभ्यो यज्ञं वहतः । तस्मात् तिष्ठन् वाच आघारयति ॥ ७ ॥

देवा ह वै यज्ञं तन्वानाः । तेऽसुररक्षसेभ्य आसङ्गाद् बिभयाञ्चक्रुः । त एतद्दक्षिणतः प्रत्युदश्रयन् । उच्छ्रितमिव हि वीर्यम् । तस्माद्दक्षिणतस्तिष्ठन्नाघारयति । स यदुभयत आघारयति–तस्मा-

---

चनेति । 'चन'–शब्दोऽप्यर्थे; स्वाहेत्यपि शब्दं न ब्रूयादित्यर्थः । मनोदेवतस्याघारस्य तूष्णीकत्वं युक्तमिति प्रतिपादयति–**अनिरुक्तं** हीति । निगदसिद्धमन्यत् ॥ ५ ॥ ६ ॥

उपवेशनावस्थानलक्षणौ गुणौ क्रमेणाघारयोर्विधत्ते–**आसीनस्तमिति** । **तिष्ठँस्तं यं वाच** इति । 'आघारयति'–इत्युभयत्रानुषङ्गः । स्रुचौघारस्य तिष्ठता होतव्यत्वमुपपादयति–**मनश्च ह वै वाक्** चेत्यादिना । 'युजौ' रथावयवे युगेऽश्वादिवद् युक्तौ भूत्वेत्यर्थः । **यतरो वा** इत्यादि । लोके हि रथादिषु युक्तयोरश्वयोर्मध्ये 'यतरः' खलु 'ह्रसीयान्' अतिशयेन ह्रस्वोऽल्पकायो 'भवति' तस्य साम्येन वहनाय 'उपवहं' वहः स्कन्धप्रदेशस्तस्योपरि श्लिष्टमौन्नत्यकरं दारुमयं स्थूलपीठकादिकं लौकिकाः कुर्वन्ति । यस्मादेवं लोके, तस्मादल्पविषयत्वेनापरिमितविषयान्मनसो ह्रसीयस्या वाचः स्थितिक्रियाविशिष्टाद्वारेणौन्नत्यकरम् 'उपवहमिव' एतद् भवति । अतः 'ते' वाङ्मनसे उभे अपि 'सयुजौ', समानवहनप्रदेशे भवत इत्यर्थः ॥ ७ ॥

स्रुग्व्याघारस्याऽऽहवनीय--दक्षिणभाग--स्थितिलक्षण--धर्मविशेषं विदधाति--**देवा ह वा** इत्यादिना ।

---

१–'स्रुगव्याघारस्य' इति पा० ।

स्रुवेण तमाघारयति । यो मूलं यज्ञस्य स्रुचा तमाघारयति यः शिरो यज्ञस्य ॥ ९ ॥

तूष्णीं तमाघारयति । यो मूलं यज्ञस्य तूष्णीमिव हीदं मूलं नो ह्यत्र व्वाग्वदति ॥ १० ॥

मन्त्रेण तमाघारयति । यः शिरो यज्ञस्य व्वाग्घि मन्त्रः शीर्ष्णो हीयमधि व्वाग्वदति ॥ ११ ॥

( त्या ) आसीनस्तमाघारयति । यो मूलं यज्ञस्य निषण्णमिव हीदं मूलं तिष्ठंस्तमाघारयति यः शिरो यज्ञस्य तिष्ठतीव हीदᳬँ शिरः ॥ १२ ॥

---

दिदं मनश्च वाक् च समानमेव सन्नानेव । शिरो ह वै यज्ञस्यैतयोरन्यतर आघारयोः, मूलमन्यतरः ॥ ८ ॥

स्रुवेण तमाघारयति—यो मूलं यज्ञस्य । स्रुचा तमाघारयति—यः शिरो यज्ञस्य ॥ ९ ॥

तूष्णीं तमाघारयति—यो मूलं यज्ञस्य । तूष्णीमिव हीदं मूलम्, नो ह्यत्र वाग् वदति ॥ १० ॥

मन्त्रेण तमाघारयति—यः शिरो यज्ञस्य । वाग्घि मन्त्रः । शीर्ष्णो हीयमधि वाग् वदति ॥ ११ ॥

आसीनस्तमाघारयति—यो मूलं यज्ञस्य । निषण्णमिव हीदं मूलम् । तिष्ठंस्तमाघारयति—यः शिरो यज्ञस्य । तिष्ठतीव हीदं शिरः ॥ १२ ॥

---

**दक्षिणतः प्रतीति** । आहवनीयस्य दक्षिणभागेऽसुरान् प्रत्युच्छ्रितवन्तः[१] । कथमुच्छ्रायस्तेषामित्यत आह—**उच्छ्रितमिव हीति** । 'उच्छ्रितं' पर्वतादिकेम[२], तमिव वीर्यमपि दुरासदम् । तादृशवीर्ययोगात्तेषामुच्छ्रितत्वमित्यर्थः । अथाघारयोर्दक्षिणोत्तरपरिधिसन्धिमारभ्यैवोभयतः करणं विधत्ते—**स यदिति** । 'उभयतः' दक्षिणत उत्तरतश्चेत्यर्थः । **समानमेव सन्नानेवेति** । मनश्च वाक् चेत्येतदुभयं समानविषयं समानाश्रयमेव 'सद्' भवदपि 'नानेव' भिन्नमिव भवतीत्यर्थः ।

स्रुवेण तमाघारयतीत्यादिकं प्राग्विहितं प्रकारान्तरेण स्तौति—**शिरो ह वै यज्ञस्ये**त्यादिना । अर्थो निगदसिद्धः ॥ ८ ॥ ९ ॥

मूलत्वेन शिरस्त्वेन स्रुक्स्रुवयोस्तदुपजीवनेन तूष्णीकत्वं निरुक्तत्वं च प्राग्विहितमनूद्य प्रशंसति—**तूष्णीं तमि**त्यादिना । **तूष्णीमिव हीति** । लोके हि यद् वृक्षादीनां मूलं तत् 'तूष्णीमिव हि' अदृश्यमानत्वात् । एतदेवोपपादयति—**नो ह्यत्रेति** । 'न' 'उ' खलु 'अत्र' मूलविषये शब्दव्यापारोऽप्यस्ति, दूरे दृष्टिविषयत्वम् । अतो मूलभूताघारस्य लौकिकमूलवत् तूष्णीकत्वं युक्तमित्यर्थः ॥ १० ॥

**मन्त्रेणेति** । **वाग्घि मन्त्र** इत्यादि । वागिन्द्रियसाध्यत्वात् तदात्मको मन्त्रः । सा च वाक् 'शीर्ष्णः' उपरि ताल्वोष्ठपुटादिव्यापारेण शब्दमुच्चारयति, अतो वागात्मकस्य 'यज्ञस्य' शिरःश्रुतावाघारसम्बन्धो[३] युक्त इत्यर्थः ॥ ११ ॥

प्राग्विहितयोरासीनस्थितयोरपि मूलशिरस्त्वोपजीवनेन प्रशंसा क्रियते—**आसीनस्तमि**त्यादिना । **निषण्ण-**

---

१-'प्रत्युत्थितवन्तः' पा. । २-'पर्वतादिकमिव वीर्यमपि' पा. । ३-'शिरःस्तुतौ' पा. ।

स स्रुवेण पूर्वमाघारमाघार्याह । (ह्रा) अग्निमग्नीत्सम्मृड्ढीति यथा धुरमध्यूहेदेवं तद्यत्पूर्वमाघारमाघारयत्यध्युह्य हि धुरं युञ्जन्ति ॥ १३ ॥

(न्त्यु) अथ सम्मार्ष्टि । युनक्त्येवैनमेतद्युक्तो देवेभ्यो यज्ञं वहादिति तस्मात्सम्मार्ष्टि परिक्राम१ँ सम्मार्ष्टि परिक्राम१ँ हि योग्यं युञ्जन्ति त्रिस्त्रिः सम्मार्ष्टि त्रिवृद्धि यज्ञः ॥ १४ ॥

स सम्मार्ष्टि । (ष्टर्च) अग्ने वाजजिद्वाजं त्वा सरिष्यन्तं वाजजित१ँ सम्माज्र्मीति यज्ञं त्वा वक्ष्यन्तं यज्ञिय१ँ सम्माज्र्मीत्येवैतदाहाथोपरिष्टा-

---

अग्निसंमार्जनम् ।

स स्रुवेण पूर्वमाघारमाघार्याह–"अग्निमग्नीत्सम्मृड्ढि"–इति । यथा धुरमध्यूहेदेवं तत्-यत्पूर्वमाघारमाघारयति । अध्युह्य हि धुरं युञ्जन्ति ॥ १३ ॥

अथ सम्मार्ष्टि–युनक्त्येवैनमेतद्, युक्तो देवेभ्यो यज्ञं वहादिति । तस्मात् सम्मार्ष्टि । परिक्रामं सम्मार्ष्टि । परिक्रामं हि योग्यं युञ्जन्ति । त्रिस्त्रिः सम्मार्ष्टि । त्रिवृद्धि यज्ञः ॥ १४ ॥

स सम्मार्ष्टि–" अग्ने वाजजिद्वाजं त्वा सरिष्यन्तं वाजजित२ सम्मार्ज्मि"–( २ अ.

---

मिव हीदमिति । ' इदं ' वृक्षादिमूलं ' निषण्णमिव हि ' एकत्रोपविष्टमिव हि भवति खातत्वेन चाञ्चल्य-विरहात् । अतो मूलभूतस्याघारस्यासनसंबन्धो युक्त इत्यर्थः । **तिष्ठतीव हीदमिति** । ' हि ' यतः ' इदं ' मनुष्यादीनां ' शिरः ' ' तिष्ठतीव ' अस्तीति, स्थितिक्रियाविशिष्टमिवोर्ध्वमिव दृश्यते । अतः शिरःसंस्तुतस्याघारस्य तिष्ठता कर्त्रा निष्पादनं युक्तमित्यर्थः ॥ १२ ॥

एवमाघारयोः प्रतिनियतधर्मान् विधायाऽनुष्ठानक्रममाह–**स स्रुवेणेति** । पूर्वाघारानन्तरं, नोत्तराघारः, अपि तु " अग्निमग्नीत् "–इति, आग्नीध्रं प्रति सम्प्रैषं ब्रूयात् । तस्य चायमर्थः–हे " अग्नीत् ' आग्नीध्र ! आहवनीयाख्यम् ' अग्निं ' ' सम्मृड्ढि ' सम्मार्जनं कुर्विति ।

विधित्सितस्य सम्मार्जनस्याघारानन्तर्य्यमुपपादयति–**यथेति** । अनडुहः स्कन्धदेशे ' यथा ' ' धुरम् ' युगधुरम् ' अध्यूहेत् ' योजयेत्, एवमग्नौ धुरोऽध्यूहनमेव पूर्वाघारहोमेन क्रियते । अस्मिन्नर्थे लोकप्रसिद्धिमाह–**अध्युह्येति** । ' हि ' यतो रथादिवहनेऽनडुदश्वादिकं योज्यमानास्तदीयस्कन्धस्योपरि युगधुरम् ' अध्युह्य' पश्चात् पाशैः 'युञ्जन्ति' बध्नन्ति; अतो धुरोऽध्यूहनस्थानीयः पूर्वाघारहोम इत्यर्थः । (का० श्रौ० सू० ३।१२) ॥ १३ ॥

अग्निसम्मार्जनं विधाय प्रशंसति–**अथेति** । ' एनम् ' अग्निं हविर्वहनाय सम्मार्जनेन युनक्तीत्यर्थः । सम्मार्जने धर्मविशेषं विधत्ते–**परिक्राममिति** । परिक्रम्य परिक्रम्य–तत्तत्परिधिदेशं गत्वा तदनुसारेणाग्निं ' सम्मार्ष्टि ' । अत एवोक्तं कात्यायनेन–" इध्मसन्नहनैरनुपरिधि सम्मार्ष्टयग्ने वाजजिदिति त्रिस्त्रिः परिक्रामम् "–( श्रौ० सू० ३. १२ ) इति । तत्रापि लोकप्रसिद्धिमुदाहरति–**परिक्रामं हीति** । एकैकस्मिन् परिधौ सम्मार्जनस्य त्रिरावृत्तिं विधाय प्रशंसति–**त्रिस्त्रिरिति** । " नित्यवीप्सयोः " ( पा० सू० ८. १. ४. ) इति द्विर्वचनम् ॥ १४ ॥

विहितं सम्मार्जनमनूद्य मन्त्रं विधत्ते–**स सम्मार्ष्टीति** । मन्त्रस्याभिप्रायमाह–**यज्ञं त्वेति** । यज्ञसाधनत्वा-

---

१–" स्रुवेण पूर्वाघारमाघार्याहाऽग्निमग्नीत्सम्मृड्ढि " इति का. श्रौ. सू. ३ । १ । १२ । प्रजापतिर्देवता तेनात्र न स्वाहाकार इति कर्कः । २–सम्मार्जनेन विरजस्कमुज्वलं करोतीत्यर्थः ।

तूष्णीं त्रिस्तद्यथा युक्त्वा प्राजेत्प्रेहि वहेत्येवमेवैतत्कशयोपक्षिपति प्रेहि देवेभ्यो यज्ञं वहेति तस्मादुपरिष्टात्तूष्णीं त्रिस्तद्यदेतदन्तरेण कर्म क्रियते तस्मादिदं मनश्च वाक्च समानमेव सन्नानेव ॥ १९ ॥ ६ ॥

इति तृतीयप्रपाठके षष्ठं संलग्नब्राह्मणम् ( ४. ४. ) ॥

तृतीयप्रपाठकः समाप्तः ॥ कण्डिकासंख्या ॥ १२८ ॥

## अथ प्रथमकाण्डे चतुर्थप्रपाठके प्रथमं ब्राह्मणम् ।

स स्रुचोत्तरमाघारमाघारयिष्यन् । ( न्पू ) पूर्वेण स्रुचावञ्जलिं निदधाति नमो देवेभ्यः स्वधा पितृभ्य इति तद्देवेभ्यश्चैवैतत्पितृभ्यश्चार्त्विज्यं करिष्य-

---

७ मं. ) इति । यज्ञं त्वा वक्ष्यन्तं यज्ञियं सम्मार्ज्मि, इत्येवैतदाह । अथोपरिष्टात् तूष्णीं त्रिः । तद्यथा युक्त्वा प्राजेत्–प्रेहि वहेति, एवमेवैतत्कशयोपक्षिपति–प्रेहि देवेभ्यो यज्ञं वहेति । तस्मादुपरिष्टात्तूष्णीं त्रिः । तद्यदेतदन्तरेण कर्म क्रियते तस्मादिदं मनश्च वाक् च समानमेव सन्नानेव ॥ १९॥

उत्तराघारः ।

स स्रुचोत्तरमाघारमाघारयिष्यन् पूर्वेण स्रुचावञ्जलिं निदधाति–" नमो देवेभ्यः स्वधा पितृभ्यः "–( २ अ. ७ मं. ) इति । तद्देवेभ्यश्चैवैतत् पितृभ्यश्चार्त्विज्यं करिष्यन् निह्नुते ।

---

हविरत्र यज्ञशब्दाभिधेयम् । यज्ञसाधनं हविर्लक्षणमन्नं देवेभ्यो ' वक्ष्यन्तं ' वहनं करिष्यन्तमिति " वाजं सरिष्यन्तम् "–इति पदद्वयस्यार्थः । ' वाजजितम् '–इत्यस्य व्याख्या 'यज्ञियम्'–इति । वाजं यज्ञसाधनं हविर्लक्षणमन्नं जयतीति ' वाजजित् ' तथा च ' यज्ञं ' यज्ञसाधनं हविरहतीति ' यज्ञियम् ' इति शब्दार्थः सम्पद्यते ।

उपरिष्टात् सम्मार्जनं विधत्ते–अथेति । परिधित्रयानुसारेण परितोऽग्निं सम्मृज्य, तदनन्तरमग्नेः 'उपरिष्टात्' ' तूष्णीं ' ' त्रिः ' सम्मृज्यात् । तदेतत् स्तौति–तद्यथेति । ' तत् ' तथा सति ' यथा ' खलु लोके युगधुरेऽनड्वाहं संयोज्य ' प्रेहि ' प्रगच्छ, वोढव्यं भारं ' वह ' इत्येवं वदन् ' कशया ' ताडनेन ' प्राजेत् ' प्रेरयेत् एवं कशयोपक्षेपणमेव तदुपरि सम्मार्जनमित्यर्थः । स्पष्टमन्यत् । स्रौवस्रुग्व्याघारयोर्मध्येऽनुष्ठानं सम्मार्जनस्य प्रशंसति–तद्यदिति । मनोवाक्संस्तुतयोरनयोराघारयोर्मध्ये सम्मार्जनस्य करणात् तद्व्यधाने सति ' मनश्च वाक् च ' एतदुभयं ( समानमेव ) समानविषयं समानाश्रयमपि ' नानेव ' भिन्नमिव भवति ॥ १९॥ ६॥ (४।४)

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये

प्रथमकाण्डे चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥ ४ ॥

इति प्रथमकाण्डे तृतीयप्रपाठकः समाप्तम् ॥

---

अथ स्रुच्याघारस्य प्रयोगः प्रतिपाद्यते–स स्रुचेत्यादिना । पूर्वेण स्रुचाविति । जुहूपभृतोः पूर्वभाग

---

१–" तूष्णीमुपरि " इति का. श्रौ. सू. ३।१।१४। २–नास्तीदं क्वचित् । ३–' स्रुचाघारस्य ' ' स्रुवाघारस्य ' इति क्व० पा० ।

न्निह्नुते सुयमे मे भूयास्तमिति स्रुचावादत्ते सुभरे मे भूयास्तं भर्त्तुं वाᳬं शकेयमित्येवैतदाहास्कन्नमद्य देवेभ्य आज्यᳩं सम्भ्रियासमित्यविक्षुब्धमद्य देवेभ्यो यज्ञं तनवा ऽइत्येवैतदाह ॥ १ ॥

( हा)अङ्घ्रिणा विष्णो मा त्वावक्रमिषमिति । यज्ञो वै विष्णुस्तस्माऽएवैतन्निह्नुते मा त्वावक्रमिषमिति वसुमतीमग्ने ते छायामुपस्थेषमिति साध्वीमग्ने ते छायामुपस्थेषमित्येवैतदाह ॥ २ ॥

---

" **सुयमे मे भूयास्तम्** "–( २ अ० ७ मं० ) इति । स्रुचावादत्ते–सुभरे मे भूयास्तम् । भर्त्तुं वां शकेयमित्येवैतदाह–" **अस्कन्नमद्य देवेभ्य आज्यं सम्भ्रियासम्** "–( २ अ० ८ मं० ) इति । अविक्षुब्धमद्य देवेभ्यो यज्ञं तनवा इत्येवैतदाह ॥ १ ॥

"**अङ्घ्रिणा विष्णो मा त्वावक्रमिषम्**"–( २ अ० ८ मं० ) इति । यज्ञो वै विष्णुः, तस्मा एवैतान्निह्नुते–मा त्वावक्रमिषामिति । "**वसुमतीमग्ने ते छायामुपस्थेषम्** "–( २ अ० ८ मं० ) इति । साध्वीमग्ने ते छायामुपस्थेषमित्येवैतदाह ॥ २ ॥

---

इत्यर्थः । समन्त्रकस्य अञ्जलिनिधानस्य प्रयोजनमाह–**तद्देवेभ्यश्चे**[1]ति । ' आर्त्विज्य करिष्यन् ' तदतिक्रमजनितमपराधं तन्नमस्कारेण ' निह्नुते ' शमयतीत्यर्थः । समन्त्रकं जुहूपभृतोरादानं विधत्ते[2]–**सुयमे** इति ( का० श्रौ० सू० ३ । १६ ) । एतस्य मन्त्रभागस्य विवक्षितमर्थमाह–**सुभरे** इति । सुष्ठुमनुनियन्तुं भर्तुं शक्ये ' सुयमे ' हे जुहूपभृतौ ! युवामीदृश्यौ ' भूयास्तम् ' ' भर्त्तुं वां शकेयम् '–इति तात्पर्यार्थकथनम् । मन्त्रस्य द्वितीयभागमनूद्य व्याचष्टे–**अस्कन्नमद्ये**ति । यत् जुहूपभृतोः स्थितमाज्यं तत् ' अस्कन्नं ' यथा भवति तथा ' सम्भ्रियासम् ' सम्भर्त्तुं शक्तो भूयासमिति मन्त्रवाक्यस्यार्थः । तदिदमाह–**अविक्षुब्धमद्ये**ति । आज्यस्य स्कन्दने हि यज्ञस्य विक्षोभः स्यात्, स च मा भूदित्येवं प्रार्थ्यत इत्यर्थः ॥ १ ॥

लिङ्गादेवातिक्रमणे विनियोगः सिद्ध इत्यभिप्रेत्य केवलं मन्त्रमनूद्य व्याचष्टे–**अङ्घ्रिणे**ति । हवीरूपेण वेद्यामवस्थितो यज्ञोऽत्र ' विष्णु '–शब्देन विवक्षितः । दक्षिणातिक्रमवेलायां तस्यातिक्रमशङ्का मा भूदिति तदभावः प्रतिपाद्यते–हे ' विष्णो ' हवीरूप यज्ञ ! ' त्वा ' त्वां 'मा अवक्रमिषम् ' अवज्ञया त्वां नातिक्रमामि । अपि तु होमार्थं तत्रापराधो यथा न भवति तथैव सञ्चरदेशे[3] नातिक्रमामीत्यर्थः । एतल्लिङ्गकल्पितमेव विनियोगं कात्यायनः सूत्रयामास–" दक्षिणातिक्रामत्यङ्घ्रिणा विष्णविति, ( ३ । १ । १६ । ) "परिधीनपरेण सञ्चरो होष्यतः "–इति " सव्येनेतो दक्षिणेनामुतः " ( का० श्रौ० सू० ३ । १६–१८ ) । स्रुग्व्याघारहोमार्थं यद्दक्षिणतोऽवस्थानम्, तदपि मन्त्रलिङ्गसिद्धमित्यभिप्रेत्य तं मन्त्रमनूद्य व्याचष्टे–**वसुमतीमि**ति । ' वसुमतीं ' धनवतीं वासयोग्यां ' साध्वीं ' त्वदीयां 'छायां' हे अग्ने ! 'उपस्थेषम्' उपेत्य तिष्ठेयमित्यर्थः ॥२॥

---

१–" अपरमाहवनीयादञ्जलिङ्करोति नमो देवेभ्यः स्वधा पितृभ्य इति दक्षिणत उत्तानम्" इति का० श्रौ० सू० ३ । १ । १५ । २–" अप उपस्पृश्य सुयमे म इति जुहूपभृतावादायोत्तरां जुहूं कृत्वा " इति का० श्रौ० सू० ३ । १ । १६ । ३–सर्वार्थोऽयं सञ्चरो नोत्तराघारमात्रे ।

विष्णो स्थानमसीति । यज्ञो वै विष्णुस्तस्यैव ह्येतदन्तिकं तिष्ठति तस्मादाह विष्णो स्थानमसीतीत ऽइन्द्रो व्वीर्यमकृणोदित्यतो हीन्द्रस्तिष्ठन्दक्षिणतो नाष्ट्रा रक्षाᳬंस्यपाहंस्तस्मादाहेत इन्द्रो व्वीर्यमकृणोदित्यूर्ध्वो ऽध्वरऽआस्थादित्यध्वरो वै यज्ञऽऊर्ध्वो यज्ञ ऽआस्थादित्येवैतदाह ॥३॥

( ह्रा )अग्ने व्वेर्होत्रं व्वेर्दूत्यमिति । ( त्यु ) उभयं व्वा ऽएतदग्निर्देवानाᳬं होता च दूतश्च तदुभयं विद्धि यद्देवानामसीत्येवैतदाहावतां त्वां द्यावापृथिवी ऽअव त्वं द्यावापृथिवी ऽइति नात्र तिरोहितमिवास्ति स्विष्टकृद्देवेभ्यऽइन्द्रऽआज्येन हविषाभूत्स्वाहेतीन्द्रो वै यज्ञस्य देवता तस्मादाहेन्द्र आज्येनेति व्वाचे वा ऽएतमाघारमाघारयतीन्द्रोव्वागित्यु वा ऽआहुस्तस्माद्वेवाहेन्द्रऽआज्येनेति ॥ ४ ॥

---

" **विष्णो स्थानमसि** "–( २ अ० ८ मं० ) इति । यज्ञो वै विष्णुः, तस्यैव ह्येतदन्तिकं तिष्ठति; तस्मादाह–विष्णो स्थानमसीति । " **इत इन्द्रो वीर्यमकृणोत्** "–( २ अ० ८ मं० ) इति । अतो हीन्द्रस्तिष्ठन् दक्षिणतो नाष्ट्रा रक्षांस्यपाहन् , तस्मादाह–इत इन्द्रो वीर्यमकृणोदिति । " **ऊर्ध्वोऽध्वर आस्थात्** "–( २ अ० ८ मं० ) इति । अध्वरो वै यज्ञः, ऊर्ध्वो यज्ञ आस्थादित्येवैतदाह ॥ ३ ॥

" **अग्ने वेर्होत्रं वेर्दूत्यम्** "–( २ अ० ९ मं० )इति । उभयं वा एतदग्निर्देवानाम्–होता च दूतश्च । तदुभयं विद्धि–यद्देवानामसीत्येवैतदाह । "**अवतां त्वां द्यावापृथिवी अव त्वं द्यावापृथिवी**"–( २ अ० ९ मं० ) इति । नात्र तिरोहितमिवास्ति । "**स्विष्टकृद् देवेभ्य इन्द्र आज्येन हविषाभूत् स्वाहा** "–( २ अ० ९ मं० ) इति । इन्द्रो वै यज्ञस्य देवता, तस्मादाह–इन्द्र आज्येनेति । वाचे वा एतमाघारमाघारयति । इन्द्रो वागित्यु वा आहुः । तस्माद्वेवाह–इन्द्र आज्येनेति॥४॥

---

मन्त्रशेषमनूद्य व्याचष्टे–**विष्णोरिति** । **तस्यैव ह्येतादिति** । यज्ञात्मको हि विष्णुरित्याहवनीये निष्पद्यते । यत्र स्थित्वा अध्वर्युर्जुहोति । तत्र तस्यान्तिकमिति नेर्दीयस्त्वव्यपदेशः, एतल्लिङ्गसिद्धमवस्थाने मन्त्रस्य विनियोगं कात्यायनः सूत्रितवान्–" वसुमतीमित्यवस्थाय "–इति ( का० श्रौ० सू० ३ । १ । १९. ) । इत इन्द्र इत्यादेः स्वाहान्तस्य मन्त्रस्य होमे विनियोगो लिङ्गसिद्ध इत्यभिप्रेत्य तं मन्त्रं भागशोऽनूद्य व्याचष्टे–**इत इन्द्र इति** । ' हि ' यस्मादस्मिन् स्थाने तिष्ठन्निन्द्रो दक्षिणदिगवस्थितान् राक्षसादीन् ' अपाहन् ' अतः कारणात् ' इत इन्द्रो वीर्यमकृणोदिति ' मन्त्रभागे इन्द्रस्तुतिः । द्वितीयभागमनूद्य व्याचष्टे–**ऊर्ध्वोऽध्वर इति** । इन्द्रवीर्येण राक्षसादीनां बाधितत्वान्निर्विघ्नः ' यज्ञः ' ऊर्द्ध्वं प्रवृत्त इत्यर्थः ॥ ३ ॥

भागान्तरमनूद्य व्याचष्टे–**अग्ने वेरिति** । हे अग्ने! ' होत्रं ' होतृकर्म 'वेः' बुध्यस्व । तथा । 'दूत्यं' दूतकर्म ' वेः ' बुध्यस्व ' इति ' मन्त्रवाक्यार्थः । " विद् ज्ञाने "–( अ० प० ५४ ) इत्यस्माच्छान्दसो लङ्,

---

1–' नेर्दीयस्त्व ' इति क० पा० स एव युक्तो भाति ।

(त्य ) अथासꣳस्पर्शयन्त्स्रुचौ पर्य्येत्य । ध्रुवया समनक्ति शिरो वै यज्ञस्योत्तर आघार ऽआत्मा वै ध्रुवा तदात्मन्येवैतच्छिरः प्रतिदधाति शिरो वै यज्ञस्योत्तर ऽआघारः श्रीर्वै शिरः श्रीर्हि वै शिरस्तस्माद्योऽर्द्धस्य श्रेष्ठो भवत्यसावमुष्यार्द्धस्य शिर इत्याहुः ॥ ९ ॥

( र्ग ) यजमान एव ध्रुवामनु । योऽस्मा ऽअरातीयति स ऽउपभृतमनु

---

अथासंस्पर्शयन्त्स्रुचौ पर्येत्य ध्रुवया समनक्ति । शिरो वै यज्ञस्योत्तर आघारः । आत्मा वै ध्रुवा । तदात्मन्येवैतच्छिरः प्रतिदधाति । शिरो वै यज्ञस्योत्तर आघारः । श्रीर्वै शिरः । श्रीर्हि वै शिरस्तस्माद्-योऽर्द्धस्य श्रेष्ठो भवति, असावमुष्यार्द्धस्य शिर इत्याहुः ॥ ९ ॥

यजमान एव ध्रुवामनु । योऽस्मा अरातीयति स उपभृतमनु । स यद्धोपभृता समञ्ज्याद्-यो

---

( पा. सू. ३ । ४ । ६ ) सिपि " दश्च " ( पा० सू० ८. २. ७५ ) इति दकारस्य रुत्वे वेरिति रूपम् । इममर्थमाह—**उभयं वा** इत्यादिना । 'देवानाम्' अर्थे आत्मनो यद् दूतत्वं होतृत्वं चाङ्गीकृतवान् 'असि' 'तदुभयं' ' विद्धि ' जानीहीत्यर्थः । अवतान्त्वेत्यादि निगदसिद्धम् । अन्तिमं भागमनूद्य व्याचष्टे—**स्विष्टकृदिति** । ' देवेभ्यः ' देवानामर्थे सोऽग्निः ' स्विष्टकृत् ' शोभनयागस्य कर्त्ता । हे अग्ने ! त्वं यस्मादेवं भवसि, तस्मादनेन ' आज्येन हविषा ' आहुतेन ' इन्द्रः ' सङ्गतः ' अभूत् ' भवतु, ' स्वाहा ' स्वाहुतमिदमाज्यमस्त्विति मन्त्रवाक्यार्थः । इन्द्रो वै यज्ञस्येत्यादि स्पष्टम् । ननु ' मनसे चैव वाचे च ' इति द्वितीयाघारस्य वाग्देवतार्थत्वं प्रागाम्नातम् ( श० प० १ । ४ । ४ । १ ) । तदिन्द्रार्थत्वे विरुद्ध्यत इत्याशङ्क्य, तयोस्तादात्म्यमाह—**इन्द्रो वागित्यु वा आहुरिति** । वाच इन्द्रेण व्याकृतत्वात् तत्तादात्म्यम् । अत एव तैत्तिरीयके " इमां नो वाचं व्याकुरु " इत्युपक्रम्याम्नातम्—" तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत् " ( तै० सं० ६. ४. ७, ९. ) इति । एषा प्रसिद्धिरत्र ' वै '—शब्देन द्योत्यते । **तस्माद्वेवाहेति** । वाच इन्द्रस्य भेदाभावादपीत्यर्थः । अस्य मन्त्रस्य लिङ्गसिद्धं होमे विनियोगमसूत्रयत् कात्यायनः—" इत इन्द्र इति जुहोत्युत्तराघारम् " इति ( का० श्रौ० सू० ३ । २ । १९ । ) इति ॥ ४ ॥

होमानन्तरं प्रत्याक्रम्य ध्रुवासमञ्जनं विधत्ते—**अथेति** । **ध्रुवयेति** । ध्रुवामित्यर्थः । तदाह कात्यायनः—"आघार्यासꣳस्पर्शयन्त्स्रुचावेत्य जुह्वा ध्रुवाꣳ समनक्ति सञ्ज्योतिषेति" इति ( का० श्रौ० सू० ३ । २ । २० ) । तदेतत् समञ्जनं प्रशंसति—**शिरो वा** इति । उत्तराघारस्य यज्ञशिरस्त्वं प्राक्—( शत. १ कां. ३ प्र. ६ ब्रा. १२ कं. ) प्रतिपादितम् । ध्रुवास्थस्याज्यस्य सर्वयज्ञसाधारण्याद् यज्ञस्य मध्यदेह एव ध्रुवा; आघारशेषस्य तस्यां समञ्जनात् ' शिरः ' एव तस्मिन् ' प्रतिदधाति ' इत्यर्थः । यज्ञशिरस्त्वमुपजीव्य श्रीरूपत्वेनाघारं प्रशंसति—**शिरो वा** इति । शिरसः श्रीत्वोपपादनम्—**श्रीर्हि वै** इति । ' हि '—शब्दद्योतितां प्रसिद्धिं लोके श्रीमि[1]ति शिरस्त्वं व्यवहारेणाविष्करोति । **तस्मादिति** । ' अर्द्धस्य ' देशभागस्य ग्रामादेः ' यः श्रेष्ठो भवति ' ' अमुष्य ' ग्रामादेः ' असौ ' देवदत्तः ' शिरः ' ' इति ' लौकिकाः कथयन्ति, अतः शिरसः श्रीरूपत्वम् ॥ ९ ॥

किं तत इत्याह—**यजमान एवेत्यादिना** । ' ध्रुवामनु '—अनोः कर्मप्रवचनीयत्वम्, ( पा. सू. १ । ४ ।

---

१—शिरःपदेन श्रीमतो व्यवहारमाविष्करोतीति तात्पर्यम् ।

स युद्धोपभृता समञ्ज्याद्यो यजमानायारातीयति तस्मिञ्छ्रियं दध्यात्तद्यजमान ऽएवैतच्छ्रियं दधाति तस्माद्ध्रुवया समनक्ति ॥ ६ ॥

स समनक्ति । सञ्ज्योतिषा ज्योतिरिति ज्योतिर्वा ऽइतरस्यामाज्यं भवति ज्योतिरितरस्यां ते ह्येतदुभे ज्योतिषी सङ्गच्छेते तस्मादेव ९ँ समनक्ति ॥ ७ ॥

( त्त्य ) अथातो मनसश्चैव वाचश्च । ( श्वा ) अहंभद्र ऽउदितं मनश्च ह वै वाक्चाहं भद्र ऽऊदाते ॥ ८ ॥

तद्ध मन ऽउवाच । ( चा ) अहमेव त्वच्छ्रेयोऽस्मि न वै मया त्वं किञ्च नानभिगतं वदसि सा यन्मम त्वं कृतानुकरानुवर्त्मास्यहमेव त्वच्छ्रेयोऽस्मीति ॥ ९ ॥

---

यजमानायारातीयति । तस्मिञ्छ्रियं दध्यात्, तद्यजमान एवैतच्छ्रियं दधाति; तस्माद् ध्रुवया समनक्ति ॥ ६ ॥

स समनक्ति । "संज्योतिषा ज्योतिः"–( २ अ० ९ मं० ) इति । ज्योतिर्वा इतरस्यामाज्यं भवति, ज्योतिरितरस्याम् । ते ह्येतदुभे ज्योतिषी सङ्गच्छेते । तस्मादेवं समनक्ति ॥ ७ ॥

अथातो मनसश्चैव वाचश्चाहंभद्र उदितम् । मनश्च ह वै वाक् चाहंभद्र ऊदाते ॥ ८ ॥

तद्ध मन उवाच–अहमेव त्वच्छ्रेयोऽस्मि, न वै मया त्वं किञ्चनानभिगतं वदसि सा यन्मम त्वं कृतानुकरानुवर्त्मासि, अहमेव त्वच्छ्रेयोऽस्मीति ॥ ९ ॥

---

८४ । ) "कर्मप्रवचनीययुक्ते"–( पा० सू० २. ३. ८ ) इति द्वितीया । ध्रुवाभागो यजमान इत्यर्थः । 'अस्मै' यजमानाय 'यः' 'अरातीयति' अरातिः शत्रुरिवाचरति । 'सः' उपभृद्भागः । 'उपभृता'–इति द्वितीयार्थे तृतीया ( पा. सू. ३ । १ । ८९ ) । स्पष्टमन्यत् ॥ ६ ॥

विहितं समञ्जनमनूद्य मन्त्रं विधत्ते–**स समनक्तीति** । सञ्ज्योतिषा ज्योतिरिति मन्त्रगतज्योतिःशब्दद्वयस्यार्थमाह–**ज्योतिर्वा** इति । ध्रुवापेक्षया 'इतरा' जुहूः, तस्यां यद् 'आज्यम्' तत् तृतीयान्तज्योतिःशब्दार्थः । जुह्वपेक्षया 'इतरा' ध्रुवा तस्यां यद् 'आज्यम' तत् प्रथमान्तज्योतिःशब्दार्थः । एते चाज्यज्योतिषी क्रमेण सूर्याग्न्यात्मके; तदुभये समञ्जनेन 'सङ्गच्छेते' सङ्गते एव भवत इत्यर्थः ॥ ७ ॥

प्राजापत्यस्य पूर्वाघारस्योपांशुत्वं प्रतिपादयितुं मनोवाग्भ्यां कृतं संवादमुपन्यसितुं प्रतिजानीते–**अथात** इति । 'अथ'–शब्दोऽधिकारार्थः । 'अतः' परम् 'अहं–भद्रे' निमित्ते,–अहमेव भद्रः, अहमेव भद्र इति स्वस्वोत्कर्षविषये, 'मनसो वाचश्च' यदुक्तं वचनं तदधिक्रियत इत्यर्थः । तमेवेतिहासमुदाहरति–**मनश्चेति** । 'अहं–भद्रे' आत्मीयोत्कर्षविषये 'ऊदाते' विवादं चक्रतुः । वदेः किति लिटि यजादित्वात् ( पा० सू० ६ । १ । १५ ) सम्प्रसारणम् ॥ ८ ॥

तत्र मनसो वाक्यमुदाहरति–**तद्धेति** । श्रेयस्त्वकारणमाह–**न वा** इति । हे वाक् ! 'त्वं' 'मया' मनसा

---

१–जुह्वा ध्रौवाज्यमध्ये बिन्दुम्पातयतीत्यर्थः । २–"गच्छता" मित्यध्याहार इति कर्कमहीधरौ ।

( त्यु ) अुथ ह व्वाग्गुवाच । ( चा ) अहुमेव त्वच्छ्रेयस्यास्मि । यद्वै त्वं व्वेत्थाहं तद्विज्ञपयाम्यह ७ँ सुञ्ज्ञपयामीति ॥ १० ॥

ते प्रजापतिं प्रति प्रश्नमेयतुः । सु प्रजापतिर्मनस ऽएवानूवाच मनऽएव त्वच्छ्रेयो मुनसो वै त्वं कृतानुकरानुवर्त्मासि श्रेयसो वै पापीयान्कृतानुकरोऽनुवर्त्मा भवतीति ॥ ११ ॥

सा ह व्वाक्पुरोक्ता व्विसिष्मिये । तस्यै गर्भः पपात सा ह व्वाक्प्रजापतिमुवाचाहव्यवाडेवाहं तुभ्यं भूयासं यां मा परावोच ऽइति तस्माद्यत्किञ्च प्राजापत्यं यज्ञे क्रियत ऽउपा७ंश्वेव तत्क्रियतेऽहव्यवाड्धि व्वाक्प्रजापतय ऽआसीत् ॥ १२ ॥

---

अथ ह वागुवाच–अहमेव त्वच्छ्रेयस्यास्मि यद्वै त्वं वेत्थ–अहं तद्विज्ञपयामि, अहं संज्ञपयामीति ॥१०

ते प्रजापतिं प्रति प्रश्नमेयतुः । स प्रजापतिर्मनस एवानूवाच–मन एव त्वच्छ्रेयः, मनसो वै त्वं कृतानुकरानुवर्त्मासि; श्रेयसो वै पापीयान् कृतानुकरोऽनुवर्त्मा भवतीति ॥ ११ ॥

सा ह वाक् परोक्ता विसिष्मिये । तस्यै गर्भः पपात । सा ह वाक् प्रजापतिमुवाच–अहव्यवाडेवाहं तुभ्यं भूयासम्, यां मा परावोच इति । तस्माद् यत्किञ्च प्राजापत्यं यज्ञे क्रियते, उपांश्वेव तत् क्रियते । अहव्यवाड्धि वाक् प्रजापतय आसीत् ॥ १२ ॥

---

अविषयीकृतं ' किम् ' अपि ' न वदसि '; अतो विषयीकृतमेव वदसि । ' सा त्वं ' ' मम ' ' कृतानुकरा ' मया यत्कृतं तदेवानुकुर्वती ' अनुवर्त्मा ' अनुगन्त्री भवसीत्यर्थः ॥ ९ ॥

अथैतस्य प्रत्युत्तरमाह–**अथ वागुवाचे**ति । हे मनः ! ' अहमेव ' त्वत्तः सकाशात् ' श्रेयसी ' कुतः ? ' यद्वै त्वं ' यद्वस्तु त्वं ' वेत्थ ' जानासि । ' अहं तद् विज्ञपयामि ' तदन्तर्गतविषयं परेषां विविधं प्रतिपादयामि । तत् ' सञ्ज्ञपयामि ' सम्यग् ज्ञपयामि, प्रतिपादयामि । यतो विज्ञापन–सञ्ज्ञापन–साध्यं ममैव, अतस्त्वत्तः श्रेयसीत्यर्थः ॥ १० ॥

**ते प्रजापतिमि**ति । एवं विवदमाने ' ते ' मनश्च वाक् च ' प्रश्नं प्रति प्रजापतिम् ' ' एयतुः ' जग्मतुः । ' सः ' च ' मनस एव ' अनुकूलम् ' उवाच ' तद्वाक्यमुदाहरति–**मन एवे**ति । कृतानुकरत्वस्य निकर्षहेतुत्वं लोकप्रसिद्धया दर्शयति–**श्रेयसो वा** इति ॥ ११ ॥

**सा हे**ति । एवं प्रजापतिनोक्ते ' सा ' वाक् पराजितत्वेन ' उक्ता ' ' विसिष्मिये ' विगतस्मया भग्नवीर्या बभूव । तस्मात् पराभवात् तस्या वाचो यो ' गर्भः ' देवमनुष्यादीनामुत्पत्तिहेतुः, सोऽपि ' पपात ' । ' सा वाक् ' पराजयेन खिन्ना सती ' प्रजापतिम् ' ' उवाच ' उक्तवती । किमिति ? हे प्रजापते ! ' तुभ्यमहम् ' ' अहव्यवाड् ' हव्यवहनस्याहेतुभूतैव ' भूयासम् ' ' यां मा ' पराजितत्वेनोक्तवानसि । यस्मादेवं वाचोक्तम्, ' तस्मात् ' एव कारणात्, यज्ञसंबन्धि यत् किमपि प्रजापतिदेवताकं कर्म, ' तत् ' सर्वं वाग्व्यापारविरहेण ' उपांश्वेव क्रियते ' अहव्यवाड्धि–इति प्रागुक्तार्थस्मारणम् ॥ १२ ॥

---

१–" वाक्च मनश्चार्तीयेतामहं देवेभ्यो हव्यं वहामीति वागब्रवीत् " इत्यादि चात्रोपाख्यानमाम्नातम् । तै. सं. २ । ५ । ११ ।

**( त्तु ) तुद्धैतुद्देवाः । ( ० ) रेतश्चुर्मन्वा युस्मिन्वा बभ्रुस्तुद्ध स्म पृच्छन्त्यु-त्रैवत्या३ दिति ततोऽत्रिः सुम्बभूव तुस्मादुप्यात्रेय्या योषितैनुस्व्येतुस्यै हि योषायै व्वाचो देवुताया ऽएते सुम्भूताः ॥ १३ ॥ १ ॥**

**इति चतुर्थप्रपाठके प्रथमं ब्राह्मणम् । ( ४. ५. )**

**चतुर्थोऽध्यायश्च समाप्तः ॥ ( २-४ ) ॥**

---

**तद्धैतद्देवा रेतश्चर्मन् वा यस्मिन् वा बभ्रुः । तद्ध स्म पृच्छन्ति—अत्रैव त्या ३ दिति । ततोऽत्रिः सम्बभूव । तस्मादप्यात्रेय्या योषितैनस्वी । एतस्यै हि योषायै वाचो देवताया एते सम्भूताः॥१३॥**

---

स पतितो वाचो गर्भः कथमासीदिति तदिदानीमनुसन्धत्ते—**तद्धैतदि**ति । 'तत्' 'ह' खलु 'एतत्' वाचः सकाशात् पतितं 'रेतः' 'चर्मन्' चर्मणि 'अन्यस्मिन् वा' यस्मिन् कस्मिंश्चित्पात्रे देवाः 'बभ्रुः' धृतवन्तः भूत्वा च 'तत्' प्रतिदिवसं 'पृच्छन्ति'—**अत्रैव त्या**३ दिति । 'अत्र' अस्मिन् पात्रे किं'त्या३त्' एतत्प्रसिद्धं रेतः कथंभूतम् ? 'इति' विचारयन्त इत्यर्थः । "विचार्यमाणानाम्"—( पा० सू० ८. २. ९७) इति प्लुतिः । यस्माद्देवैर्विचारितम्, 'ततः' तस्मात् स गर्भः 'अत्रिः' सम्बभूव । अत्रैव त्यदित्यत्रिरिति शब्दव्युत्पत्तिरित्यर्थः । यतो गर्भाशयात् स्रुतो गर्भोऽत्रिः संपन्नः, तस्मात् स्रुतगर्भा रजस्वला स्त्री नाम्ना 'आत्रेयी'—इत्याख्यायते । तया 'योषिता' सह सम्भाषणादिकं कुर्वन् पुरुषः 'एनस्वी' भवति । तैत्तिरीयकेऽप्याम्नातम्—" तस्मान्मलवद्वाससा न संवदेत, न सहासीत "—(तै० सं० २. ५. १. ५.) इति ।

ननु यस्या गर्भोऽत्रिः संजातः, सैव वागात्रेयी; सर्वस्त्रीणां कथमात्रेयीत्वमित्यत आह—**एतस्या** इति । 'एतस्यै' स्त्रीरूपधारिण्या एतस्याः खलु वाग्देवताया 'एते' लौकिकाः सर्वे गर्भाः 'सम्भूताः' । गर्भाशयलक्षणे चर्मणि धृतं रेतो हि गर्भात्मना परिणमति, तच्च वाक्संबन्ध्येवेति सिद्धं सर्वासामात्रेयीत्वमित्यर्थः ॥ १३ ॥ ९ ॥ ( ४. १. )

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये
प्रथमकाण्डे चतुर्थाध्याये पञ्चमं ब्राह्मणम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ ४ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन्पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये प्रथमकाण्डे चतुर्थाध्यायः समाप्तः ॥ ४ ॥

---

१–अत्रैव त्या ३ दिति यस्माद्देवैर्विचारितम्–इति क० पा० युक्तं चैतदेव । २–" आत्रेयी च रजस्वला ऋतुस्नातोच्यते " तथा च वसिष्ठः–" रजस्वलामृतुस्नातामात्रेयीम् " इति :

# अथ प्रथमकाण्डे पञ्चमाध्याये प्रथमं ब्राह्मणम् ।

स वै प्रवरायाश्रावयति । तद्यत्प्रवरायाश्रावयति यज्ञो वाऽआश्रावणं यज्ञमभिव्याहृत्याथ होतारं प्रवृणा ऽइति तस्मात्प्रवरायाश्रावयति ॥ १ ॥

स इध्मसन्नहनान्येवाभिपद्याश्रावयति । स यद्धानारभ्य यज्ञमध्वर्युराश्रावयेद्वेपनो वा ह स्यादन्यां वार्तिमार्च्छेत् ॥ २ ॥

(त्त) तद्धैके । वेदेस्तीर्णायै बर्हिरभिपद्याश्रावयन्तीध्मस्य वा शकलमपच्छिद्याभिपद्याश्रावयन्तीदं वै किञ्चिद्यज्ञस्येदं यज्ञमभिपद्याश्रावयाम ऽइति वदन्तस्तदु तथा न कुर्यादेतद्वै किञ्चिद्यज्ञस्य यैरिध्मः सन्नद्धो भवत्यग्निँ सम्मृजन्ति तद्वेव खलु यज्ञमभिपद्याश्रावयति तस्मादिध्मसन्नहनान्येवाभिपद्याश्रावयेत् ॥ ३ ॥

---

### होतृप्रवरणम् ।

स वै प्रवरायाश्रावयति । तद् यत् प्रवरायाश्रावयति—यज्ञो वा आश्रावणम्, यज्ञमभिव्याहृत्याथ होतारं प्रवृणै-इति । तस्मात्प्रवरायाश्रावयति ॥ १ ॥

स इध्मसन्नहनान्येवाभिपद्य--आश्रावयति । स यद् ह अनारभ्य यज्ञमध्वर्युराश्रावयेद्--वेपनो वा ह स्याद् अन्यां वाऽऽर्तिमार्च्छेत् ॥ २ ॥

तद्धैके वेदेः स्तीर्णायै बर्हिरभिपद्याश्रावयन्ति, इध्मस्य वा शकलमपच्छिद्याभिपद्याश्रावयन्ति—'इदं वै किञ्चिद् यज्ञस्य; इदं यज्ञमभिपद्याश्रावयामः' इति वदन्तः । तदु तथा न कुर्यात् । एतद् वै किञ्चिद् यज्ञस्य–यैरिध्मः सन्नद्धो भवति; अग्निं संमृजन्ति; तद्वेव खलु यज्ञमभिपद्याश्रावयति; तस्मादिध्मसन्नहनान्येवाभिपद्याश्रावयेत् ॥ ३ ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
चतुर्थे सामिधेन्यादिराघारान्तः प्रदर्शितः । प्रयोगः, पञ्चमेऽथास्मिन् प्रवरादिर्निरूप्यते ॥

तत्र दैवहोत्रार्षेयमानुषहोतॄणां वरणं विवक्षुरादौ तदङ्गतया आश्रावणं विधत्ते—**स वै प्रवरायाश्रावयतीति** । 'सः' अध्वर्युः प्रवरार्थम् 'आश्रावयति' आश्रावयेत् । विहितमाश्रावणं प्रशंसति—**तद्यत् प्रवरायेत्यादिना** । आश्रावणस्य यज्ञनिर्वर्त्तकत्वाद्यज्ञत्वम् । **अथ होतारमिति** । दैवं होतारम् अग्निमित्यर्थः ॥ १ ॥

आश्रावणाङ्गतयेध्मबन्धनदर्भाणां ग्रहणं विधत्ते—**स इध्मसन्नहनान्येवेति** । एवकारो वक्ष्यमाणपक्षद्वयनिरासार्थः ।

विपक्षे बाधमाह—**स यद्धेति** । यज्ञावयवस्य कस्यचिदनन्वालम्भे सति निरालम्बनत्वेन 'वेपनः' कम्पनशीलो 'वा स्यात्' 'अन्यां वा' पतनादिलक्षणाम् 'आर्तिम्' प्राप्नुयात् ॥ २ ॥

तत्र केषांचित् पक्षमुपन्यस्यति—**तद्धैक इति** । स्तीर्णाया इति षष्ठ्यर्थे चतुर्थी ( पा०सू०२।३।६२वा.१ ) । तेषामभिप्रायमाविष्करोति—**इदं वा इति** । स्तरणसमिन्धनलक्षणस्य कार्यस्य करणात् 'इदं' बर्हिरादिकं 'यज्ञस्य'

( त्स ) सऽआश्राव्य । स एव देवाना ᳪ होता तमेवाग्रे प्रवृणीतेऽग्निमेव तदग्नये चैवैतद्देवेभ्यश्च निह्नुते यदहाग्रेऽग्निं प्रवृणीते तदग्नये निह्नुतेऽथ यो देवाना ᳪ होता तमग्रे प्रवृणीते तद देवेभ्यो निह्नुते ॥ ४ ॥

स ऽआह । ( ह्ना ) अग्निर्देवो दैव्यो होतेत्यग्निर्हि देवाना ᳪ होता तस्मादाहाग्निर्देवो दैव्यो होतेति तदग्नये चैवैतद्देवेभ्यश्च निह्नुते यदहाग्रेऽग्निमाह तदग्नये निह्नुतेऽथ यो देवाना ᳪ होता तमग्र ऽआह तद्देवेभ्यो निह्नुते ॥५॥

---

स आश्राव्य–य एव देवानां होता, तमेवाग्रे प्रवृणीते–अग्निमेव । तद् अग्नये चैवैतद् देवेभ्यश्च निह्नुते । यदहाग्रेऽग्निं प्रवृणीते–तद् अग्नये निह्नुते, अथ यो देवानां होता, तमग्रे प्रवृणीते; तद् देवेभ्यो निह्नुते ॥ ४ ॥

स आह–"**अग्निर्देवो दैव्यो होता**"–इति । अग्निर्हि देवानां होता, तस्मादाह–अग्निर्देवो दैव्यो होतेति । तद् अग्नये चैवैतद् देवेभ्यश्च निह्नुते । यदहाग्रेऽग्निमाह–तदग्नये निह्नुते । अथ यो देवानां होता–,तमग्रे आह–तद्द देवेभ्यो निह्नुते ॥ ५ ॥

---

'किञ्चिद्' अङ्गम् । स्पष्टमन्यत् । तन्निराकरोति–**तद्द तथे**ति । पक्षान्तरादस्य विशेषमाह–**एतद्वा** इति । इध्मसन्नहनाग्निसम्मार्जनलक्षण–कार्यद्वयकरणाद् 'एतत्' इध्मसन्नहनात्मकमेव 'यज्ञस्य' 'किञ्चित्' प्रशस्तमङ्गम्; अतस्तद्धारणपक्ष एव श्रेयानित्यर्थः । अत एव कात्यायनः आदाविध्मसन्नहनान्येवाभिधाय पश्चात् पक्षान्तरं निर्दिदेश–"इध्मसन्नहनान्यादायो श्रावयेत्याहास्तु श्रौषडित्यग्नीद् वेदिर्बर्हिरिध्मशकलमपच्छिद्यैके" ( का० श्रौ० सू० ३ । २१–२३ ) इति ॥ ३ ॥

अथ देवहोतुरग्नेर्वरणं विवक्ते–**स आश्राव्ये**ति । 'अग्रे' आर्षेयहोतृवरण–मानुषहोतृवरणाभ्यां पूर्वम् । देवहोतारं विशिनष्टि–**अग्निमेवे**ति ॥

वरणस्य प्रयोजनमाह–**तदग्नय** इति । 'निह्नुते' 'निः+ह्नुङ्–अपनयने ( धा० पा० अ० आ० ११९६ ) अपनेतव्यश्चात्र तदसत्कारप्रयुक्तोऽपराधः । तस्य क्रियमाणत्वादग्नेर्निह्नवः । कथं देवानां निह्नवः स्यादिति तं प्रकारं विभज्य दर्शयति–**यदहाग्रेऽग्नि**मित्यादिना । अग्नेर्देवहोतृत्वेन देवसम्बन्धात् तद्वरणेन तेषामपि निह्नव इत्यर्थः ॥ ४ ॥

अत्र मन्त्रपाठ एवाग्नेर्वरणमित्याह–**स आहे**ति । तथैव कात्यायनोऽप्याह–"अथ प्रवृणीतेऽग्निर्देवो दैव्यो होतेत्यादिना" ( का० श्रौ० सू० ३. २९ ) प्रवरविधिशेषार्थवादे यो देवानां निह्नवः सङ्ग्रहविवरणाभ्यामुक्तः, तं मन्त्रपदतात्पर्याभिधानद्वारेणापि प्रतिपादयति–**अग्निर्ही**त्यादिना, अग्नेर्देवहोतृत्वसमर्थनेन ॥ ५ ॥

---

१–अग्निर्देवो दैव्यो होतेत्यादयः प्रवरणमन्त्राः संहितायामत्र न दृश्यन्ते । २–आश्रावणं प्रत्याश्रावणं चाध्वर्य्वग्नीधोः संमुखयोः सतोरेवोक्तिप्रत्युक्तिदर्शनात् । एवं च प्रयाजादिप्रत्याश्रावणे दक्षिणामुखता न विरुद्धा अध्वर्युसंमुखतायै । तथा चाश्वलायनः–"प्रत्याश्रावयेदग्नीध्र उत्करदेशे तिष्ठन्स्फ्यमिध्मसन्नहनानीत्यादायददक्षिणामुख इति" आ० श्रौ० सू० १ अ० ३ कं० । ३–" होता–देवान् यक्षद्विद्वाँश्चिकित्वान्मनुष्वद्भरतवत् " इति पूर्णो मन्त्रः कातीयसूत्रपाठे ।

देवान्यक्षद्विद्वांश्चिकित्वानिति । ( त्ये ) एष वै देवाननु विद्वान्यदग्निः स ऽएनाननु विद्वाननुष्ठ्या यक्षदित्येवैतदाह ॥ ६ ॥

मनुष्वद्भरतवदिति । मनुर्ह वा ऽअग्रे यज्ञेनेजे तदनुकृत्येमाः प्रजा यजन्ते तस्मादाह मनुष्वदिति मनोर्यज्ञऽइत्युवा ऽआहुस्तस्माद्वेवाह मनुष्वदिति ॥७॥

भरतवदिति । (त्ये) एष हि देवेभ्यो हव्यं भरति तस्माद्भरतोऽग्निरित्याहुरेषऽउ वाऽइमाः प्रजाः प्राणो भूत्वा बिभर्त्ति तस्माद्वेवाह भरतवदिति ॥ ८ ॥

( त्यु ) अथार्षेयं प्रवृणीते । ( तऽ) ऋषिभ्यश्चैवैनमेतद्देवेभ्यश्च निवेदयत्ययं महावीर्यो यो यज्ञं प्रापदिति तस्मादार्षेयं प्रवृणीते ॥ ९ ॥

---

"देवान्यक्षद्विद्वांश्चिकित्वान्"–इति । एष वै देवाननु विद्वान्–यदग्निः । स एनाननु विद्वान् अनुष्ठ्या यक्षद्–इत्येवैतदाह ॥ ६ ॥

" मनुष्वद् भरतवद् "–इति । मनुर्ह वा अग्रे यज्ञेनेजे; तदनुकृत्येमाः प्रजा यजन्ते; तस्मादाह मनुष्वदिति । मनोर्यज्ञः–इत्यु वा आहुः, तस्माद्वेवाह–मनुष्वदिति ॥ ७ ॥

भरतवदिति–एष हि देवेभ्यो हव्यं भरति, तस्माद्भरतोऽग्निरित्याहुः । एष उ वा इमाः प्रजाः प्राणो भूत्वा बिभर्ति, तस्माद्वेवाह–भरतवदिति ॥ ८ ॥

अथार्षेयं प्रवृणीते । ऋषिभ्यश्चैवैनम्–एतद् देवेभ्यश्च निवेदयति–' अयं महावीर्यो यो यज्ञं प्रापद् ' इति, तस्मादार्षेयं प्रवृणीते ॥ ९ ॥

---

द्वितीयं मन्त्रभागमनूद्य व्याचष्टे--**देवान् यक्षादिति** । विद्वान्--इत्यनेन यष्टव्यदेवतापरिज्ञानम्, ' चिकित्वान् '--इति परिज्ञातस्यार्थस्याविस्मरणम् । अग्नेस्तथाविधज्ञानवत्त्वं "विद्वाँ आ वक्षि विदुषो निषत्सि" इत्यादिमन्त्रेषु ( ऋ० सं० ३. १४. २ ) प्रसिद्धम् । ' अनुष्ठ्या ' अनुक्रमेणेत्यर्थः ॥ ६ ॥

**मनुष्वदिति** तृतीयमन्त्रभागगतस्य ' मनुष्वत् ' पदस्य सामर्थ्यलब्धोऽर्थः–**तदनुकृत्येत्यादि** । अयमर्थः–यथा मनुः स्वकीये यज्ञे देवान् अनुक्रमेणेष्टवान्, एवम् ' इमाः प्रजाः ' अपि ' यजन्ते ' तद्वदग्निरपि होता भूत्वा यजत्वित्यर्थः । तस्यैवाभिप्रायान्तरमाह–**मनोर्यज्ञ** इत्यादिना । ' इति'–शब्दोऽप्यर्थे, ' वै '–शब्दः प्रसिद्धौ । अस्मिन् पक्षे ' मनुष्वत् '–इति " तत्र तस्येव " ( पा०सू० ५. १. ११६ ) इति षष्ठ्यर्थे वतिः । यस्मात् ' मनोर्यज्ञ इति ' आहुः ' सर्वे जनाः, अतो मनोर्यागकर्तृत्वम् मनोर्यज्ञ इवास्मिन् यज्ञेऽपि देवान् यजत्वित्यर्थः । " नभोऽङ्गिरोमनुषां वत्युपसङ्ख्यानम् "–( पा० सू० १ । ४ । १८ वा० ३ ) इति भसञ्ज्ञया पदसञ्ज्ञाया रुत्वाभावः[2] ॥ ७ ॥

**भरतवदितीति** । भरतशब्दस्याग्न्यभिधायकत्वे द्वेधा व्युत्पत्तिं दर्शयति–**एष हीत्यादिना** ॥ ८ ॥

यजमानस्यार्षेयवरणं विधत्ते–**अथार्षेयमिति** । ' अथ ' दैवहोतृवरणानन्तरम् , ' आर्षेयम् ' ऋषीणां

---

१–" अनुष्ठु " इत्येतदव्ययं सम्यक्शब्दसमानार्थं सुष्ठ्विवति यथा । सम्यगनुक्रमेण । ' अपदुःसुषु स्थः ' ( उ. १ । २५ ) इति विधीयमानः कुप्रत्ययो बहुलवचनात्तिष्ठतेरनुपूर्वादपि भवति इति ऋ० सं० १ । ९४ । ३ भाष्ये सायणः । ' अनुष्ठुया ' 'सुपां सुलुगिति' ( पा० सू० ७ । १ । ३९ ) तृतीयाया याजादेश इति च ऋ० सं० ४ । ४ । १५ भाष्ये स एवाह । २–बाधादिति पदं त्रुटितं प्रतिभाति ।

परस्तादर्वाक्प्रवृणीते । परस्ताद्ध्यर्वाच्यः प्रजाः प्रजायन्ते ज्यायसस्पतय ऽउ चैवैतान्निह्नुत ऽइदꣳ हि पितैवाग्रेऽथ पुत्रोऽथ पौत्रस्तस्मात्परस्तादर्वाक्प्रवृणीते ॥ १० ॥

स ऽआर्षेयमुक्त्वाह । ब्रह्मण्वदिति ब्रह्म ह्यग्निस्तस्मादाह ब्रह्मण्वदित्या च वक्षदिति तद्या ऽएवैतद्देवता ऽआवोढ्वा ऽआह ता ऽएवैतदाहा च वक्षदिति ॥ ११ ॥

ब्राह्मणा ऽअस्य यज्ञस्य प्रावितार ऽइति । ( त्ये ) एते वै ब्राह्मणा यज्ञस्य प्रावितारो येऽनूचाना ऽएते ह्येनं तन्वत ऽएत ऽएनं जनयन्ति तद्द तेभ्यो निह्नुते तस्मादाह ब्राह्मणा ऽअस्य यज्ञस्य प्रावितारऽइति ॥ १२ ॥

---

परस्तादर्वाक् प्रवृणीते । परस्ताद्धि अर्वाच्यः प्रजाः प्रजायन्ते, ज्यायसस्पतय उ चैवैतान्निह्नुते । इदं हि–पितैवाग्रे, अथ पुत्रः, अथ पौत्रः । तस्मात्परस्तादर्वाक् प्रवृणीते ॥ १० ॥

स आर्षेयमुक्त्वा आह–' ब्रह्मण्वद् ' इति । ब्रह्म ह्यग्निः, तस्मादाह–ब्रह्मण्वदिति । 'आ च वक्षद्' इति । तद्या एवैतद् देवता आवोढ्वा आह ता एवैतदाह–आ च वक्षदिति ॥ ११ ॥

"ब्राह्मणा अस्य यज्ञस्य प्रावितारः"–इति । एते वै ब्राह्मणा यज्ञस्य प्रावितारो येऽनूचानाः ।

---

सम्बन्धिनं तमध्वर्युः ' वृणीते ' वरणं कुर्यात् । " अमुवदमुवत् " इति ( का० श्रौ० सू० ३. २६ ) कीर्तयेत् । तत्प्रयोजनमाह–**ऋषिभ्यश्चे**ति । ' यः ' यष्टुमुपक्रान्तवान् ' अयं ' यजमानः शारीरश्रुताध्ययनसम्पत्त्या हि महासामर्थ्यवानित्येतदमुवदमुवदिति पुरातनप्रसिद्धऋषिदृष्टान्तेन गम्यते, अतस्तेभ्योऽस्य यजमानस्य सामर्थ्यमावेदितं भवति । अत्रान्वाधाने देवतापरिग्रहात् तत्सन्निधानं सिद्धमित्यभिप्रेत्य ' ऋषिभ्यश्चैवैनमेतद्देवेभ्यश्च '–इत्युक्तम् ॥ ९ ॥

विहितमार्षेयवरणमवरोहेण कर्तव्यमिति विधत्ते–**परस्तादर्वागि**त्यादिना । **ज्यायसस्पतय**–इति । ' ज्यायान् ' वृद्धः पूर्वमित्यर्थः, तस्य पतिः ततोऽपि ज्येष्ठः पूर्वपुरुषः । प्रत्येकविवक्षयैकवचनप्रयोगः, यः पूर्वः–पूर्वस्तस्मै–तस्मै तत्तन्नामग्रहणेन निह्नवं कृतवान् भवतीत्यर्थः ॥

परस्तादर्वाग्वरणमुपपादयति–**इदं ही**ति । पिता, पुत्रः, पौत्रः, इत्यनेनैव क्रमेणोत्पत्तिरिति यत्, ' इदं हि ' लोकसिद्धम् ,अतस्तदनुसारेण आर्षे वरणेऽपि पूर्वपूर्वपुरुषमारभ्य अर्वाक्त्वमेव युक्तमित्यर्थः । तथा च कात्यायनः प्रवराभिधानसमये अवरोहक्रमेणैव वरणमाह–" भृगुवच्च्यवनवदप्नवानवदौर्ववज्जमदग्निवदित्यादिना " ॥ १० ॥

**आर्षेयमि**ति । प्रवरशेषस्य प्रथमभागमनूद्य व्याचष्टे–**ब्रह्मण्वदि**ति । ' ब्रह्म ' परिवृढं कर्म, । तत्साधकत्वाद् 'अग्निः' अपि ' ब्रह्म ' स यथा आवहति, तद्वदित्यर्थः । **आ च वक्षदि**ति । ' या एव देवताः ' आवोढुम् आह्वातुम् " अग्निमग्न आ वह "–इत्यादिना ' आह ' होता, ' ता एव ' आवहत्विति ॥ ११ ॥

तन्मन्त्रवाक्यमाह–**ब्राह्मणा** इति । साङ्गवेदाध्यायिनः ' अनूचानाः ' ' ये ' सन्ति, त एवात्र

---

१–" अमुवदमुवदित्यत्र सर्वनामस्थाने यजमानसम्बन्धीनि पूर्वजभूतानि परस्तात्पितृस्थानीयादर्वाञ्चि पितृतत्पुत्रतत्पौत्ररूपाणि त्रीण्यार्षेयाणि ऋषेरपत्यानि वृणीते" इति या० दे० भाष्ये । २–प्रवराध्यायसूत्रे इति बोध्यम् । ३–"ब्रह्मण्वदाचवक्षद्ब्राह्मणा अस्य यज्ञस्य प्रावितारः " इति का० श्रौ० सू० ३ । ३१ । ४–निरुक्तकारोऽप्याह ' ब्रह्म परिवृढं सर्वतः ' इति ( १. ३. ३. ) ।

( त्य ) असौ मानुषऽइति । तदिमं मानुषꣳ होतारं प्रवृणीतेऽहोता हैष पुराथैतर्हि होता ॥ १३ ॥

स प्रवृतो होता जपति । देवता ऽउपधावति यथानुष्ठ्या देवेभ्यो व्वषट्कुर्याद्यथानुष्ठ्या देवेभ्यो हव्यं व्वहेद्यथा न ह्वलेदेवं देवता ऽउपधावति ॥१४॥

तत्र जपति । ( त्ये ) एतत्त्वा देव सवितर्वृणत ऽइति तत्सवितारं प्रसवायोपधावति स हि देवानां प्रसविताऽस्मि ꣳ होत्रायेति तदस्मये चैवैतद्देवेभ्यश्च

---

एते ह्येनं तन्वते, एत एनं जनयन्ति । तद्ध तेभ्यो निह्नुते । तस्मादाह–ब्राह्मणा अस्य यज्ञस्य प्रावितार इति ॥ १२ ॥

'असौ मानुषः' इति तदिमं मानुषं होतारं प्रवृणीते। अहोता हैष पुरा; अथैतर्हि होता ॥ १३ ॥

**स्वस्त्ययनजपः ।**

स प्रवृतो होता जपति, देवता उपधावति । यथानुष्ठ्या देवेभ्यो वषट्कुर्याद्, यथानुष्ठ्या देवेभ्यो हव्यं वहेद्, यथा न ह्वलेद्–एवं देवता उपधावति ॥ १४ ॥

तत्र जपति–" **एतत्त्वा देव सवितर्वृणते** "–इति । तत्सवितारं प्रसवायोपधावति । स हि

---

'ब्राह्मण'–शब्दाभिधेया ऋत्विजः; ते 'प्रावितारः' कर्तारः । अवतिरत्र क्रियावचनः । 'तन्वते'–इत्यस्य तात्पर्याभिधानं 'जनयन्ति' इति । यस्मादेतद्भागपाठात् तेभ्यो निह्नवः कृतो भवति, तस्मादयं मन्त्रभागः पठनीय इत्यर्थः ॥ १२ ॥

आर्षेयवरणानन्तरं मानुषहोतृवरणं कर्तव्यम्, तत्र मन्त्रपाठ एव तद्वरणमित्याह–**असाविति** । 'तत्' तेन 'असौ'–इति मन्त्रपाठेन । असावित्यत्र होतुर्नाम प्रथमान्तं निर्दिशेत् । तथा च कात्यायनः–" असौ मानुष इति होतृनामग्रहणम् "–( का० श्रौ० सू० ३. ३१. ३२ ) इति । 'अहोता'–इति च्छेदः । 'एतर्हि' एतस्मिन् मन्त्रलक्षणे वरणे सति ॥ १३ ॥

इत्थमध्वर्युकर्तृकं होतृवरणमभिधाय तस्य स्वं जपं विधत्ते–**स प्रवृतो होता जपतीति** । 'देवता उपधावतीति' जपप्रयोजनकथनम्; 'तस्मात्' मन्त्रे सति पित्रग्न्यादीनां श्रवणात् । उपधावनप्रकारं योजयित्वा दर्शयति–**यथानुष्ठ्येति** । यथा याज्यासमये होता वषट्कर्तव्यदेवता अनुदिश्य अनुदिश्य वषट्करोति, यथा वा अग्निस्तं तं देवमुद्दिश्य हव्यं वहति, तथा च स यज्ञो यथा 'न ह्वलेत्' न चलेत्, न भ्रंश्येत; एवं स होता देवेभ्य उपधावनं कृतवान् भवति ॥ १४ ॥

**तत्र जपतीति** । 'तत्र' तस्मिन् वरणाख्ये कर्मणि । मन्त्रभागस्यायमर्थः–हे 'सवितः !' सकलकर्मानुज्ञातः ! 'देव' 'एतत्' एतेन मम वरणेन मद्व्याजेन 'त्वा' त्वामेव 'वृणते' अध्वर्यवः । 'तत्' तेन

---

१–'प्रवृणीतेऽहोता' इति मूल इति ज्ञेयम् । २–" अत्राध्वर्युकर्तृकं होतृवरणं श्रुत्या प्रतिपादितमत एव कात्यायनेन 'होतरेहि' इत्याश्वलायनवत् 'एहि होतः' इति शांखायनवच होतुरामन्त्रणप्रैषोऽध्वर्युसूत्रे नोपनिबद्धो न वा हौत्रसूत्रेऽपि दर्शितः । अतएव च यजुर्वेदिकहौत्रपक्षे होतुरामन्त्रणप्रैषमनुष्ठापयन्त इदानींतनाः श्रौतकर्मकरा उपेक्ष्या एव, तेषामाचारस्यैतद्विषयकाज्ञानमूलकत्वादिति । ३–'अनुदिश्य वषट्करोति' इति पा०।

निह्नुते यदहाग्रेऽग्निमाह तदग्नये निह्नुतेऽथ यो देवाना ᳪ होता तमग्र ऽआह तदु देवेभ्यो निह्नुते ॥ १५ ॥

सह पित्रा व्वैश्वानरेणेति । संव्वत्सरो वै पिता व्वैश्वानरः प्रजापतिस्तत्संव्वत्सरायैवैतत्प्रजापतये निह्नुतेऽग्ने पूषन्बृहस्पते प्र च व्वद प्र च यजेत्यनुवक्ष्यन्वा ऽएतद्यक्ष्यन्भवति तदेताभ्य ऽएवैतद्देवताभ्यो निह्नुते यूयमनुब्रूत यूयं यजतेति ॥ १६ ॥ [ शतम् ४०० ]

व्वसूना ᳪ रातौ स्याम । रुद्राणामुर्व्वायाᳬ स्वादित्या ऽअदितये स्यामानेहस ऽइत्येते वै त्रया देवा यद्वसवो रुद्रा ऽआदित्या ऽएतेषामभिगुप्तौ स्यामेत्येवैतदाह ॥ १७ ॥

---

देवनां प्रसविता । " अग्निं होत्राय "–इति । तदग्नये चैवैतद् देवेभ्यश्च निह्नुते । यदहाग्रेऽग्निमाह–तद् अग्नये निह्नुते । अथ यो देवानां होता तमग्रे आह–तद्‌ देवेभ्यो निह्नुते ॥ १५ ॥

" सह पित्रा वैश्वानरेण "–इति । संवत्सरो वै पिता वैश्वानरः प्रजापतिः । तत्संवत्सरायैव एतत्प्रजापतये निह्नुते–" अग्ने पूषन् बृहस्पते प्र च वद, प्र च यज " इति । अनुवक्ष्यन् वा एतद् यक्ष्यन् भवति; तदेताभ्य एवैतद् देवताभ्यो निह्नुते–' यूयमनुब्रूत, यूयं यजत ' इति १६

" वसुनां रातौ स्याम, रुद्राणाम् उर्वायाम्, स्वादित्या अदितये स्यामानेहसः "–इति । एते वै त्रया देवाः–यद् वसवो रुद्रा आदित्याः । एतेषामभिगुप्तौ स्याम–इत्येवैतदाह ॥१७॥

---

मन्त्रपाठेन सवितुरनुज्ञा लब्धा भवति । ' हि '–शब्देन " सविता वै प्रसवानामीशे " ( ऐ० ब्रा० १. ३. ९ ) इत्यादिश्रुतिप्रसिद्धिर्द्योत्यते । अग्नि ᳪ होत्रायेतीति । होतुः कर्म ' होत्रं ' स्व–स्व–मन्त्रपाठादि; तत् होत्रं कर्तुम् ' अग्निं ' वृणते; न तु मामित्यर्थः । मन्त्रगतं यदग्नि–पदम्, यच्च तद्विशेषणं देवहोतृपदम्, तदुभयं पूर्ववद् विभज्य प्रशंसति–तदग्नय इत्यादिना ॥ १५ ॥

सह पित्रेत्यादि । विश्वे च ते नराश्च विश्वनराः, तेषां सम्बन्धी वैश्वानरः; स च पालनात् 'पिता' उच्यते; तेन सह, अग्निं वृणत इति पूर्वत्र सम्बन्धः । वैश्वानरात्मकं देवमग्निं च वृणत इत्यर्थः । वैश्वानरशब्दस्याग्नौ प्रसिद्धेश्चाभिमतमर्थमाह–संवत्सरो वा इति । " संवत्सरो वै प्रजापतिः " ( ऐ० ब्रा० ३. २. ७. ) इति श्रुतेः । संवत्सरस्य प्रजापतित्वम्, तस्यैव सकलमनुष्योत्पादकत्वेन सम्बन्धाद् वैश्वानरत्वम् । अग्ने पूषन्निति मन्त्रभागस्याभिप्रायमाह–अनुवक्ष्यन् वा इति । होता ह्यनुवाक्याः पठिष्यन्, याज्याभिः ' यक्ष्यन् ' च ' भवति ' ' तत् ' एतदनुवचनं यजनस्यैव ' एताभ्यः ' अग्न्यादिदेवताभ्यः । निह्नवाय भवति । ' प्र च वद ' ' प्र च यजेति ' प्रवचनयजनयोस्तेष्वारोपः । इमामेव निह्नुतिं विशदयति–यूयमिति ॥ १६ ॥

वसूनामिति । रातिर्दानम्, तस्यां भवेम; धनं लभेमहीत्यर्थः । ' रुद्राणाम् ' ' उर्वायाम् '–इति उरुत्वे, तेषां यन्महत्त्वम्–तस्मिन् स्यामेति सम्बन्धः । ' स्वादित्याः ' तेषामुपसदनेन सुप्रीताः आदित्याः वयम् ' अदि-

---

१–मन्त्रस्त्वयमिहैवाम्नातो बोध्यः । तथा शुक्लयजुःपंचदशशाखानामन्यतमशाखायां च पठितः स्यात् । परंचेदानीं तासामनुपलब्धिः । एवमग्रेऽपि ।

जुष्टमद्य देवेभ्यो व्वाचमुद्यासमिति । जुष्टमद्यदेवेभ्योऽनूच्यासमित्येवैतुदाह तद्धि सुमृद्धं यो जुष्टं देवेभ्योऽनुब्रुवत् ॥ १८ ॥

( ञ्जु ) जुष्टां ब्रह्मभ्य ऽइति । जुष्टमद्य ब्राह्मणेभ्योऽनूच्यासमित्यैवैतुदाह तद्धि सुमृद्धं यो जुष्टं ब्राह्मणेभ्योऽनुब्रुवत् ॥ १९ ॥

( ञ्जु ) जुष्टां नुराशुᳬसायेति । प्रजा वै नुरस्तत्सुर्व्वाभ्यः प्रजाभ्यऽआह तद्धि सुमृद्धं यश्च व्वेद यश्च नु साध्वुन्ववोचत्साध्वुन्ववोचदित्येव व्विसृज्यन्ते यदद्य होतृवुर्ये जिह्मं चुक्षुः पुरापतत् अग्निष्टत्पुनराभ्रियाज्जातवेदा व्विचर्षणिरिति युथा यानुग्रेऽग्नीन्होत्राय प्रावृणत ते प्राधन्वन्नेवं यन्मेऽत्र प्रवरेणामायि तुन्मे पुनराप्यायुयेत्यैवैतुदाह तुथो हास्यैतत्पुनराप्यायते ॥ २० ॥

---

" जुष्टामद्य देवेभ्यो वाचमुद्यासम् "–इति । जुष्टमद्य देवेभ्योऽनूच्यासमित्येवैतदाह । तद्धि समृद्धं–यो जुष्टं देवेभ्योऽनुब्रवत् ॥ १८ ॥

" जुष्टां ब्रह्मभ्यः "–इति । जुष्टमद्य ब्राह्मणेभ्योऽनूच्यासमित्येवैतदाह । तद्धि समृद्धं–यो जुष्टं ब्राह्मणेभ्योऽनुब्रवत् ॥ १९ ॥

"जुष्टां नराशᳬसाय"–इति । प्रजा वै नरः। तत्सर्वाभ्यः प्रजाभ्य आह । तद्धि समृद्धम् । यश्च वेद, यश्च न, साध्वन्ववोचत्–साध्वन्ववोचत्–इत्येव विसृज्यन्ते । " यदद्य होतृवर्ये जिह्मं चक्षुः परापतत, अग्निष्टत् पुनराभ्रियाज्जातवेदा विचर्षणिः "–इति । यथा यानग्रेऽग्नीन् होत्राय प्रावृणत–ते प्राधन्वन्; एवं यन्मेऽत्र प्रवरेणामायि, तन्मे पुनराप्यायय–इत्येवैतदाह । तथो हास्यैतत्पुनराप्यायते ॥ २० ॥

---

तये ' देवमात्रे, एतन्नामिकायै देवतायै वा ' अनेहसः ' अपापिनः–अनपराधिनो भवेम, अथ वा दितिः खण्डनं नाशः, तदभावाय चिरकालजीवनाय भवेमेत्यर्थः ।

अत्र सङ्घविवक्षया " त्रया देवाः "–इत्युक्तम् । पृथक् पृथक् प्रार्थनायाः पयवसितं फलमाह–**एतेषामिति** ॥ १७ ॥

मन्त्रभागे विशेष्यभूतस्य वाक्शब्दस्यार्थे ' उद्यासम् ' इत्यत्र वदिधातुनैव उपात्तमित्यभिप्रेत्य तद्विशेषणीभूतं जुष्टामिति पदं क्रियाविशेषणतया व्याचष्टे–**जुष्टामित्यादिना** । अत्र केवलोऽपि वदिरुच्चारणार्थे वर्तते । किमनेन वाचो जुष्टत्वप्रार्थनयेति तदुपपादयति–**तद्धीति** । ' यो जुष्टम् ' ' अनुब्रवत् ' अनुब्रूयात्, ' तत् ' तदीयं कर्म ' समृद्धम् ' इत्यर्थः। ब्रूञो ( धा० पा० अ० उ० ३४ ) लेटयडागमः। ( पा० सू० ३ । ४ । ९४ ) एवमुत्तरवाक्ययोरपि योजना ॥ १८ ॥

' ब्रह्मभ्य '–इति ब्रह्मशब्दस्य ब्राह्मणजातिरर्थ इति व्याचष्टे–**जुष्टां ब्रह्मभ्य** इति ॥ १९ ॥

**जुष्टां नराशंसायेति** । यथा सर्वेऽपि नराः 'आ' सर्वतः शंसन्ति, तथाविधशंसनाय 'जुष्टां' प्रियामित्यर्थः। अत्र साधारण्येन नराणां यो जोष आशंसितः; स युक्त एवेत्याह–**प्रजा वै नर** इत्यादिना । न केवलं तद्धि

---

१–निरु० ४ । ४ । १ । २; ११ । ३ । १ । २ । २–तद्धौत्रज्ञानामेव इति क० पा० ।

( ते॒ऽथा ) अ॒थाध्व॒र्युं चाग्नी॑ध्रं च स॒म्मृ॑शति । म॒नो वा॒ ऽअध्व॒र्युर्वाग्घो॒ता त॒न्म॒नश्चै॒वैतद्वाचं च स॒न्दधाति ॥ २१ ॥

त॒त्र जपति । ष॒ण्मोर्वी॒रꣳ॒हस॒स्पा॒न्त्वा॒ग्निश्च पृथि॒वी चा॒पश्च॒ वा॒जश्चा॒हश्च॒ रा॒त्रिश्चे॒त्येता मा दे॒वता॒ ऽआर्ते॒र्गो॑पायन्त्वि॒त्ये॒वैत॒दाह॒ त॒दाह॒ त॒स्यो॒ हि॒ नु॒ ह्व॒लास्ति॒ य॒मेता॒ दे॒वता॒ ऽआर्ते॒र्गो॑पायेयुः ॥ २२ ॥

---

अथाध्वर्युं चाग्नीध्रं च संमृशति । मनो वा अध्वर्युः, वाग् होता । तन्मनश्चैवैतद् वाचं च सन्दधाति ॥ २० ॥

तत्र जपति–"**षण् मोर्वीरंहसस्पान्तु–अग्निश्च पृथिवी च आपश्च वाजश्च अहश्च रात्रिश्च**"–इति । एता मा देवता आर्तेर्गोपायन्तु–इत्येवैतदाह । तस्यो हि न ह्वलास्ति–यमेता देवता आर्तेर्गोपायेयुः ॥ २२ ॥

---

होत्रज्ञानामेव संलापोऽपेक्षितः, अपि तु यो जुष्टां वाचं जानाति, यश्च न, स सर्वैरप्ययं साधु उक्तवानित्येवंरूपया वाचा 'विसृज्यन्ते' उच्चार्यन्ते, तदेव समृद्धमित्यर्थः ।

इमानि मन्त्रवाक्यानि व्याख्याय ऋगात्मकं मन्त्रं व्याख्यातुं साकल्येनानुवदति–**यद्धेति** । मन्त्रस्यायमर्थः–'होतृवर्ये' होतृवरणे निमित्तभूते सति 'यत्' 'चक्षुः' अङ्गम् 'जिह्मम्' अंशोपरोधेन कुटिलम् 'परापतत्' स न्निपतेत् 'तत्' विशेषेण द्रष्टा 'अग्निः' पुनराभरतु । चक्षुर्वत् प्रधानं होत्रस्याङ्गं यद्भ्रष्टमभूत्, तदग्निः समादधात्विति तात्पर्यार्थः । मन्त्रस्य तात्पर्यार्थः प्रदर्श्यते–**यथे**त्यादिना । पुरा 'यान् अग्रेऽग्नीन् होत्राय' वृतवन्तः, 'ते' 'प्राधन्वन्' प्रगता नष्टा अभवन्; 'एवम्' इदानीं 'मे' मदङ्गम् 'प्रवरेण' निमित्तेन 'अमायि' हिंसितमभूत्; तत् समाधत्स्वेत्युक्तमिति ॥ २० ॥

अथ वृतस्य होतुः सम्मर्शनं विधत्ते–**अथाध्वर्युमिति** । सम्मर्शनेनेष्टं विवक्षुरनयोः सम्मर्शने कारणमाह–**मनो वा** इति । अध्वर्योः कर्तव्यविषयस्य मनोव्यापारस्य बाहुल्यात् मनोरूपत्वाभिधानम् । याज्यापुरोनुवाक्यादिकेवलवागव्यापाराद् होतुर्वागात्मकता, तदुभयात्मकत्वाद् यज्ञस्य; तयोः सम्मर्शनेन मनोवाचोः सन्धानं कृतं भवति । संस्पर्शनप्रकारमाश्वलायन आह–"अंसेऽध्वर्युमन्वारभेत पार्श्वस्थेन पाणिना आग्नीध्रमङ्कदेशेन" इति ( आश्व० श्रौ० सू० १. ३. २९. २६ ) ॥ २१ ॥

**तत्र जपती**ति । अन्वारब्धेन जपितव्यं मन्त्रं सतात्पर्यमाह–**षण्मोर्वीरि**त्यादिना । अग्न्यादीनामुरुत्वं लोकसिद्धम् । 'एताः' मां दुरितात् पान्त्विति तस्यार्थः । अंहःशब्दस्य तात्पर्याभिधानम्–**आर्तेरि**ति । आर्तिर्नाशः । अग्न्यादीनां प्रत्यक्षदेवतात्वात् तद्रक्षितस्य नाशाभावः प्रसिद्ध इत्याह–**तस्यो ही**ति ॥ २२ ॥

---

१–'होतृवर्ये' इति ऋ० सं० १ । ३१ । ३ । "होत्राभ्रियंत इति होतृवर्योयज्ञः" इति तत्र सा० भा० । २–यद्यप्यत्र श्रुतौ पूर्वं होतृकर्तृकमध्वर्योरग्नीधश्च संमर्शनं पश्चादात्मालंभ उक्तस्तथापि हौत्रकल्पे कात्यायनेन "षण्मोर्वीरं हसस्पात्वग्निश्चेत्यनेन मंत्रेण आत्मानमालभते" "इन्द्रमन्वारभ इत्यनेन मन्त्रेण दक्षिणयोरंसयोरध्वर्युमग्नीधं च संमृशति" हौ० सू० खं. २ । १४ । १५ । इति । अतस्तदनुरोधेन प्रयोगो वोध्यः । अतएव च "प्रयोग–साधनं कल्पो न श्रुतिस्तस्य साधनम् । इत्यूचिवानुपाध्यायः" इति सोमयागे वैद्यनाथमिश्राः प्राहुः । एवमग्रेऽपि बोध्यम् । ३–"सव्येन वेति" तच्छेषः । अयं चाश्वलायनोक्तः संमर्शनप्रकार आर्ग्वेदिकहौत्रपक्षे । याजुर्वेदिकहौत्रपक्षे तु प्रथमटिप्पण्योक्तहौत्रसूत्रगतः कातीय एवेति । ४–यद्यप्यत्र सायणाचार्येण 'तत्र जपति' इति श्रुत्यनुरोधेनास्य मन्त्रस्य अन्वारंभे विनियोग उक्तः । तथापि कात्यायनेन प्रथमटिप्पण्योक्तहौत्रसूत्रेऽस्य मंत्रस्यात्मालंभे विनियोगो दर्शितः । अन्वारंभे तु 'इन्द्रमन्वारभ' इत्यस्य विनियोगः कृतः । स च मंत्रोऽपि तत्रैवोक्तः । इयं च श्रुतिर्माध्यंदिनमात्रा । सूत्रं तु पंचदशशाखोपनिबन्धनमतस्तदेवादरणीयम् ।

( रु ) अथ होतृषुदनमुपावर्त्तते । स होतृषुदनादेकं तणं निरस्यति निरस्तः परावसुरिति परावसुर्हं वै नामासुराणा ७ँ होता स तमेवैतद्धोतृषुदनान्निरस्यति ॥ २३ ॥

( त्यु ) अथ होतृषुदन ऽउपविशति । ( ती ) इदमहमर्व्वावसोः सदने सीदामीत्यर्व्वावसुर्वै नाम देवाना ७ँ होता तस्यैवैतत्सुदने सीदति ॥२४॥

तत्र जपति । विश्वकर्मस्तनूपा ऽअसि मा मोदोषिष्टं मा मा हि ७ँ सिष्टमेष वां लोक इत्युदङ्ङेजत्यन्तरा वा ऽएतदाहवनीयं च गार्हपत्यं चास्ते तद् ताभ्यां निह्नुते मा मोदोषिष्टं मा मा हि ७ँ सिष्टमिति तथा हैनमेतौ न हि७ँस्तः ॥ २५ ॥

---

अथ होतृषदनमुपावर्तते । स होतृषदनादेकं तृणं निरस्यति–"**निरस्तः परावसुः**"–इति । परावसुर्ह वै नामासुराणां होता, स तमेवैतद् होतृषदनाद् निरस्यति ॥ २३ ॥

अथ होतृषदने उपविशति '**इदमहमर्वावसोः सदने सीदामि**' इति । अर्वावसुर्वै नाम देवानां होता, तस्यैवैतत् सदने सीदति ॥ २४ ॥

तत्र जपति–"**विश्वकर्मस्तनूपा असि । मा मोदोषिष्टम् । मा मा हिंसिष्टम् एष वां लोकः**"–इति उदङ् एजति । अन्तरा वा एतद्–आहवनीयं च गार्हपत्यं चास्ते । तद् ताभ्यां निह्नुते–**मा मोदोषिष्टम्–मा मा हिंसिष्टम्**–इति । तथा हैनमेतौ न हिंस्तः ॥ २५ ॥

---

**अथेति** । सम्मर्शनदेशात् 'होतृषदनं' प्रत्यागच्छेत् । उत्तरवेदिश्रोणेर्होतृषदनम् । 'सः' होता तस्मात् सदनात् 'एकं तृणं' "निरस्त"–इति मन्त्रेण निरस्येत् । परावसोर्निरसने कारणमाह--**परावसुर्हेति** । 'परा' परांगतं 'वसु' यज्ञाख्यं धनं यस्मात्, सं तथोक्तः ॥ २३ ॥

"**अथ होतृषदन** इति । उपवेशनमन्त्रमाह–**इदमहमिति** । 'अर्वा' अर्वाक्–अभिमुखं 'वसु' यज्ञाख्यं धनं यस्य, स तथोक्तः । 'तस्य'; सीदत्यत्रेति 'सदनं' स्थानम् । तत्र संस्थितिभावनया स्वयमपि तत्सदृशो भवतीत्यभिप्रायः ॥ २४ ॥

तत्रोपविष्टस्य मन्त्रजपं विधत्ते–**तत्रेति** । हे विश्वकर्म्मन् ! कृत्स्नविषयव्यापारं करोतीति विश्वकर्मा, 'तनूपाः' तनोः पाता, महादेव ! त्वं शरीरस्य पाता भवसि । उपवेशनस्थानादीषदुत्तरतश्चलनं समन्त्रकं विधत्ते–**मा मेति** । तस्यायमर्थः–हे उभा अग्नी ! युवां 'मा' माम् 'उत्' उत्कृष्टमाधिक्येन 'मा उषिष्टं' दाहं मा कार्ष्टम् । "उष दाहे"–इति ( धा. पा. भ्वा. प. ६९६ ) धातुः । अस्यैव तात्पर्यमाह–'**मा हिंसिष्टम्**' इति । यतः 'एषः' 'लोकः' 'वां' सम्बन्धि स्थानम्, अतो हेतोर्मां मा हिंसिष्टमिति प्रार्थना युक्ता । होतृषदनाद् 'उदङ्' उदङ्मुखः 'एजति' । "एजृ–कम्पने" ( धा. पा. भ्वा. प. २३४ ) जपन् कम्पते । 'अन्तरा वा' इत्यादिना दाहप्रसङ्गप्रदर्शनम् ॥ २५ ॥

---

१–आरम्भादेवास्मिन् ब्राह्मणे श्रूयमाणा इमे मन्त्रा इहैवाम्नाता द्रष्टव्याः, न तु संहितायां श्रुताः प्रायेण । २–सांख्या. श्रौ. सू. १ । ६ । ६ । 'परावसुः' इति कौषी. ३ । १३७ । ३–'सम्मृष्टा उपविशतः' ( श्रौ० सू० ३. ३३ ) ।

( स्तोऽथा ) अथाग्निमीक्षमाणो जपति । विश्वेदेवाः शास्तन मा यथेह होता वृतो मनवै यन्निषद्य । प्र मे ब्रूत भागधेयं यथा वो येन पथा हव्यमा वो वहानीति यथा येभ्यः पक्वᳬं स्यात्तान्ब्रूयादनु मा शास्त यथा व ऽआहरिष्यामि यथा वः परिवेक्ष्यामीत्येवमेवैतद्देवेषु प्रशासनमिच्छतेऽनु मा शास्त यथा वोऽनुष्ठ्या वषट्कुर्यामनुष्ठ्या हव्यं वहेयमिति तस्मादेवं जपति ॥ २६ ॥ २ ॥

इति चतुर्थप्रपाठके द्वितीयं ब्राह्मणम् ( ९. १. ) ॥

अग्निर्होता वेत्त्वग्नेर्होत्रमिति । ( त्य ) अग्निरिदᳬं होता वेत्त्वित्येवैतदाहाग्नेर्होत्रमिति तस्यो हि होत्रं वेत्तु प्रावित्रमिति यज्ञो वै प्रावित्रं वेत्तु

---

अथाग्निमीक्षमाणो जपति–" **विश्वेदेवाः शास्तन मा यथेह होता वृतो मनवै यन्निषद्य । प्र मे ब्रूत भागधेयं यथा वो येन पथा हव्यमा वो वहानि** "–( ऋ० सं० १०. ५२. १ ) इति । यथा येभ्यः पक्वं स्यात्, तान् ब्रूयादु–' अनु मा शास्त–यथा वऽआहरिष्यामि, यथा वः परिवेक्ष्यामि ' इति । एवमेवैतद् देवेषु प्रशासनमिच्छते–' अनु मा शास्त,–यथा वोनुष्ठ्या वषट् कुर्याम्, अनुष्ठ्या हव्यं वहेयम् ' इति । तस्मादेवं जपति ॥ २६ ॥

**पञ्च प्रयाजयागाः ।**

**" तत्र स्रुगादापननिगदः । "**

" **अग्निर्होता वेत्त्वग्नेर्होत्रम्** "–इति । अग्निरिदं होता वेत्तु–इत्येवैतदाह । अग्नेर्होत्रमिति ।

---

अथ समन्त्रकं जपं विधत्ते–**अथाग्निमि**त्यादिना । मन्त्रस्यायमर्थः–हे ' विश्वेदेवाः ! ' ' इह ' यज्ञे होतृत्वेन ' वृतः ' अहं ' यथा ' येन प्रकारेण, ' यथा ' येन ' च ' पथा ' मार्गेण, ' वः ' ' हव्यम् ' ' आ ' समन्ताद् ' वहानि ' प्रापयानि; तदुभयं ' मे ' अज्ञाय मह्यम् ' प्रब्रूत ' । एतन्मन्त्रस्यार्थं लोकदृष्टान्तप्रदर्शनपुरःसरं विशदयति–**यथा येभ्य** इत्यादिना । ' यथा ' लोके कश्चित् पाचकः तत्स्वामिनं पृच्छति–' पक्वम् ' अन्नं यथाऽऽनेष्यामि, यथा वानीतं पात्रे समर्पयामीति । एवम्प्रकारप्रश्नस्य लोके दृष्टत्वाद् उक्तमनुशासनप्रार्थनमित्यर्थः । दार्ष्टान्तिके योजयति–**एवमेवैतद**िति । ' अनुष्ठ्या ' आनुपूर्व्येण ' वषट्कुर्याम् ' वषडिति शब्दं ब्रूयाम् । वषट्–शब्दो हविःप्रदानसाधनः । " स्वाहाकारेण वा वषट्कारेण वा देवेभ्योऽन्नं प्रदीयते "–इति श्रुतेः । सिद्धमन्यत् ॥ २६ ॥ २ [ ९. १. ]

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये प्रथमकाण्डे पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥

अथ स्रुगादापननिगदं नवधा विभज्य व्याचिख्यासुराद्यं भागमनूद्य तस्यार्थमाह–**अग्निर्होते**ति । वेदितव्यस्य

---

१–' दनुमा ' क० पा० । २–' हौत्र ' मिति भाष्यकाराभिमतः पाठः प्रतिभाति । ३–' अग्निर्होतेति स्रुगादापनं प्रयाजेषु सन्निधेः ' ( श्रौ० सू० ३. ३४ )

यज्ञमित्येवैतदाह साधु ते यजमान देवतेति साधु ते यजमान देवता यस्य तेऽग्निर्होतेत्येवैतदाह घृतवतीमध्वर्यो स्रुचमास्यस्वेति तदध्वर्युं प्रसौति स यदेकामिवाह ॥ १ ॥

यजमान एव जुहूमनु । योऽस्माऽअरातीयति सऽउपभृतमनु स यद्द्वेऽइव ब्रूयाद्यजमानाय द्विषन्तं भ्रातृव्यं प्रत्युद्यामिनं कुर्यादत्तैव जुहूमन्वाद्य उपभृतमनु स यद्द्वेऽइव ब्रूयादत्त्रऽआद्यं प्रत्युद्यामिनं कुर्यात्तस्मादेकामिवैवाह ॥ २ ॥

---

तस्यो हि होत्रम् । "वेत्तु प्रावित्रम्"–इति । यज्ञो वै प्रावित्रम् । वेत्तु यज्ञमित्येवैतदाह । 'साधु ते यजमान! देवता'–इति । साधु ते यजमान देवता यस्य ते अग्निर्होता इत्येवैतदाह । 'घृतवतीमध्वर्यो ! स्रुचमास्यस्व'–इति । तदध्वर्युं प्रसौति । स यदेकामिवाह ॥ १ ॥

यजमान एव जुहूमनु, योऽस्मा अरातीयति–स उपभृतमनु । स यद् द्वे इव ब्रूयाद् यजमानाय द्विषन्तं भ्रातृव्यं प्रत्युद्यामिनं कुर्यात् । अत्तैव जुहूमनु, आद्य उपभृतमनु । स यद् द्वे इव ब्रूयाद्–अत्र आद्यं प्रत्युद्यामिनं कुर्यात् । तस्मादेकामिवैवाह ॥ २ ॥

---

मन्त्रेऽनिर्देशात् 'इदम्'–इति तत्कर्मप्रदर्शनम् । दैव्यो 'होता' 'अग्निः' 'इदम्' अनुष्ठेयं कर्म 'वेत्तु' जानातु । एतन्मन्त्रवाक्यम् । 'वेत्त्विति' किम् ? आह–इदं 'हौत्रं' कर्म जानात्वित्याह । किं तद्वेदनेनेति ? तस्य हौत्रेण प्रतिनियतं सम्बन्धमाह–**अग्नेरिति** । 'तस्य उ हि' तस्यैव हि । स च सम्बन्धनियम एवकारार्थेन 'उ'–शब्देन द्योत्यते । द्वितीयभागे प्रावित्रशब्दार्थमाह–**यज्ञो वा** इति । प्रकर्षेणावतीति 'प्रावित्रः' यज्ञः । अवतेरित्रप्रत्ययः ( उणा. ४ । १७१ ) । यज्ञापरिज्ञाने हौत्रज्ञानमपि व्यर्थमिति तज्ज्ञानमाशास्यते ।

तृतीयभागे सामान्येन निर्दिष्टां यजमानदेवतां विशिष्य व्याचष्टे–**साधु त** इति । हे 'यजमान !' ते तव 'देवता' 'साधु' साध्वी । कथं साधुत्वम् ? कैषा सा ? तदाह–**यस्य त** इति । होतृत्वगुणकोऽग्निरेव तव देवतेत्याह स्म मन्त्रवाक्यम् ।

चतुर्थभागे वाक्यार्थस्य स्पष्टत्वात्तात्पर्यमाह–**घृतवतीमिति** । घृतपूर्णां 'स्रुचम्' 'आस्यस्व' हस्ते धारयेत्यर्थः । अनेनाध्वर्यवेऽनुज्ञां दत्तवान् भवति ( का. श्रौ. सू. ३ । ३९ ) । "उपसर्गादस्यत्यूह्योर्वा वचनम्" ( पा. सू. ७ । १ । ७ वा. २ )–इत्यात्मनेपदम् । मन्त्रे 'स्रुचम्'–इत्येकस्या एव निर्देशं द्वित्वनिर्देशपक्षनिन्दापुरःसरं द्रढयति–**स यदि**त्यादिना । 'सः' होता 'एकामिव' स्रुचमित्येकामेव ब्रूयात् ॥ १ ॥

**यजमान एवेति** । 'जुहूमनु' जुह्वा अनुकूलः, तदभिमानीत्यर्थः । 'यः' च यजमानस्य 'अरातीयति' शात्रवमिच्छति, 'सः' 'उपभृतमनु' उपभृतोऽनुकूलः । यत एवमतो होता यदि 'द्वे इव' जुहूपभृतावास्यस्वेत्येवं 'ब्रूयात्', तदा 'यजमानाय' द्वेष्टारं शत्रुं 'प्रत्युद्यामिनं' प्रतिकूलोद्योगवन्तं 'कुर्यात्' । तथा च तैत्तिरीयकम्–"यजमानदेवत्या वै जुहूः, भ्रातृव्यदेवत्योपभृत्"–( तै. सं. २. ६. ९. ३ )

---

१–मन्त्रोऽयं तैत्तिरीयके श्रुतः । 'यजमानदेवता' इति मन्त्रभागस्याग्रे योऽग्निं होतारमवृथा इत्येतावान् मन्त्रभागोऽन्यत्र दृश्यते । २–"घृतवतीमित्युक्ते स्रुचावादायातिक्रम्याश्राव्याह समिधो यजेति पञ्च प्रयाजान्समिद्धतमे" का. श्रौ. सू. ३ । ३५ ।

देवयुवं विश्ववारामिति । ( त्यु ) ऽउपस्तौत्येवैनामेतन्महयत्येव यदाह देवयुवं विश्ववारामितीडामहै देवा३ ॥ ऽईडेन्यान्नमस्याम नमस्यान्युजाम यज्ञियानितीडामहै तान्देवान्यु ऽईडेन्या नमस्याम तान्ये नमस्या युजाम यज्ञियानिति मनुष्या वा ऽईडेन्याः पितरो नमस्या देवा यज्ञियाः ॥ ३ ॥

( ऽ ) या वै प्रजा यज्ञेऽनन्वाभक्ताः । पराभूता वै ता ऽएवमेवैतद्या ऽइमाः प्रजाऽ अपराभूतास्ता यज्ञ ऽआभजति मनुष्याननु पशवो देवाननु वयाᳬंस्योषधयो वनस्पतयो यदिदं किञ्चैवमु तत्सर्वं यज्ञ ऽआभक्तम् ॥ ४ ॥

---

" देवयुवं विश्ववाराम् "–इति । उपस्तौत्येवैनामेतद्, महयत्येव–यदाह, देवयुवं विश्ववारामिति । " ईडामहै देवा ३ँ ॥ ईडेन्यान् , नमस्याम नमस्यान् , यजाम यज्ञियान् "–इति । ईडामहै तान् देवान्–य ईडेन्याः, नमस्याम तान्–ये नमस्याः, यजाम यज्ञियान्–इति । मनुष्या वा ईडेन्याः, पितरो नमस्याः, देवा यज्ञियाः ॥ ३ ॥

या वै प्रजा यज्ञे अनन्वाभक्ताः–पराभूता वै ताः । एवमेवैतद्–या इमाः प्रजा अपराभूताः–ता यज्ञ आभजति । मनुष्यान् अनु पशवः, देवान् अनु वयांस्यौषधयो वनस्पतयो यदिदं किञ्च एवमु तत्सर्वं यज्ञे आभक्तम् ॥ ४ ॥

---

इति । दोषान्तरोपन्यासेनापि द्विवचनं निषेधति–अत्त्वैवेति । ' आद्यः ' अदनीयो व्रीहियवादिपदार्थः; तम् ' अग्ने ' यजमानाय प्रतिकूलं कुर्यात् ॥ २ ॥

देवयुवमिति । देवानिच्छतीति ' देवयुः ' " क्याच्छन्दसि " ( पा. सू. ३. २. १७० )–इत्युप्रत्ययः । विश्वैरपि देवैर्वरणीया ' विश्ववारा ' । आभ्यां स्रुग्विशेष्यते । ' एनां ' स्रुचम् एतद् ' उपस्तौत्येव ' श्लाघयत्येव । अत्र न कश्चिदपूर्वोऽर्थोऽभिधीयत इति । सापि किमथ स्तूयत इत्यत आह–' एतत् ' ' महयत्येव ' पूजयत्येव । ' यदाह ' यदेतद्वाक्यं मन्त्र आहेत्यर्थः ।

निगदस्य सप्तमादिभागत्रयं पृथक्–पृथग् व्याख्यातुमनुवदति–ईडामहा इत्यादि । ' ये ' देवाः ' ईडेन्याः ' स्तुत्याः, स्तुतिभाजना इत्यर्थः ' ये ' च 'नमस्याः' नमस्कारमिच्छन्ति; ये च ' यज्ञियाः ' यष्टव्याः हविर्भाजः, तान् सर्वान् अविशेषेण स्तुति–नमस्कार–यागैः ' ईडामहे ' पूजयामहे–इति संग्रहार्थः । ' ईडेन्यान् '–इति " ईड–स्तुतौ " ( अदा. आ. ९ ) इत्यस्य ' केन्य ' प्रत्ययः । ईडेन्यादीन् प्रशंसति–मनुष्या वा इत्यादिना । कुशलादिस्तुतिमात्रेण प्रायेण परितुष्यन्त इति ' ईडेन्याः ' मनुष्याः; " नमस्कारो हि पितृणाम् " ( तै. ब्रा. ३. ३. १०. ८ ) इति श्रुतेः 'नमस्याः' पितरः, हविःप्रदानमन्तरेणापरितोषाद् 'देवाः' यज्ञियाः ॥ ३॥

यजाम यज्ञियानितीति कीर्तने यज्ञस्य शुद्धिस्तुतयाँ यागं तदनुप्रवेशेन प्रशंसति–या वा इत्यादिना । देवमनुष्यात्मकासु प्रजासु मध्ये ' याः ' प्रजाः यष्टव्यत्वेन यज्ञमन्वभजन्, तत्प्रकारमाह–मनुष्यानन्विति । ' मनुष्यान् ' अनुसृत्य ' पशवः ' गवाद्याः क्षीरौधस्साधनत्वेनानुप्रविष्टाः । ' देवान् ' अनुसृत्य ' वयांसि ' पक्षिणोऽनुप्रविष्टाः; " वसन्ताय कपिञ्जलानालभते " ( वा. सं. २४. २०. १ ) इति श्रुतेः । अथ वा

---

१–परितोषात्–पा० । २–' औणादिक एन्यप्रत्ययः '–इति ऋ. सं. १ । ७९ । ५ इत्यत्र सा. भाष्ये । ३– शुद्धिस्तुत्येति भवेत् ।

ता वा ऽएताः । ( ० ) नव व्याहृतयो भवन्ति नवेमे पुरुषे प्राणा ऽएता-नेवास्मिन्नेतद्दधाति तस्मान्नव व्याहृतयो भवन्ति ॥ ५ ॥

यज्ञो ह देवेभ्योऽपचक्राम । तं देवा ऽअन्वमन्त्रयन्ता नः शृणूप न आव-र्तस्वेति सोऽस्तु तथेत्येव देवानुपाववर्त तेनोपावृत्तेन देवा ऽअयजन्त तेनेष्ट्वैतदभवन्यदिदं देवाः ॥ ६ ॥

स यदाश्रावयति । यज्ञमेवैतदनुमन्त्रयत ऽआ नः शृणूप न आवर्तस्वे-त्यथ यत्प्रत्याश्रावयति यज्ञ ऽएवैतदुपावर्ततेऽस्तु तथेति तेनोपावृत्तेन

---

ता वा एता नव व्याहृतयो भवन्ति । नवेमे पुरुषे प्राणाः—एतानेवास्मिन् एतद् दधाति । तस्मान्नव व्याहृतयो भवन्ति ॥ ५ ॥

" आश्रावणप्रत्याश्रावणनिगदः । "

यज्ञो ह देवेभ्योऽपचक्राम । तं देवा अन्वमन्त्रयन्त—' आ नः शृणु, उप न आवर्तस्व ' इति । सः ' अस्तु तथा ' इत्येव देवानुपाववर्त । तेनोपावृत्तेन देवा अयजन्त । तेनेष्ट्वा एतद् अभ-वन्—यदिदं देवाः ॥ ६ ॥

स यदाश्रावयति—यज्ञमेवैतदनुमन्त्रयते—' आ नः शृणु; उप न आवर्तस्व ' इति । अथ यत्प्र-

---

एकहायनप्रभृति—पञ्चदशहायनान्ताः ' पशवो वयांसि ', तान्यनुप्रविष्टानीत्यर्थः । तान्यनुप्रवेशाच्चरुपुरोडाशाः, यूपादियज्ञसाधनद्वारेणौषधिवनस्पत्यादयः । किं बहुना ' यत् किं चेदं ' प्रतीयमानं वस्तु अस्ति, ' तत् ' ' सर्वम् उ ' सर्वमप्येवमेव द्वारि द्वारया यज्ञमनुप्रविष्टमेव । अतो यज्ञसंस्पर्शवतां न कदाचित् पराभवोऽस्ति, तदसंस्पृष्टं च न किञ्चिदस्तीति यज्ञस्तुतिः ॥ ४ ॥

निगदविभागगतां नवसंख्यां प्रशंसति—**ता वा** इति । ' व्याहृतयः ' उक्तवाक्यानि । तानि च ' नव ' । सप्त शीर्षण्याः[2] ( ऐ. ब्रा. १ । ३ । ६; ३ । १ । ३ ) द्वाववाञ्चाविति[3] ( ऐ. ब्रा. १ । ३ । ६ ) प्राणा अपि नैव[4] ( तै. सं ३ । ५ । १० । ५ ) । तदेतेन नवविभागकरणेन अस्मिन् यजमाने ' पुरुषे ' ' एतान् ' प्राणान्[5] ' नव ' स्थापितवान् भवति ॥ ५ ॥

अथाश्रावणप्रत्याश्रावणे विधातुमाख्यायिकामाह—**यज्ञो** हेति । पुरा किल ' यज्ञः ' केनचिद्व्याजेन 'देवेभ्यः' अपक्रान्तवान् । 'तं देवाः ' ' अन्वमन्त्रयन्त ' अनुनयेनाह्वयन्त ।—हे यज्ञ ! ' नः ' अस्माकं वचनं ' शृणु ' ' नः ' अस्मान् ' उपावर्त्तस्व ' प्रतिनिवर्त्तस्व । उपावर्त्तेति[6] गुणश्छान्दसः । यद्वा उपावर्तनमुपावर्त्तः । आवर्त-नाभावे यागासम्भवात्तस्य साधनत्वव्यपदेशः । देवाः यजमानाः ' अजयन्त ' भाविगत्या तेषां देवत्वव्यवहारः । ' देवाः ' इति ' यदिदं ' देवत्वमस्ति, ' एतत् ' तस्यानुष्ठानेन ' अभवन् ' प्राप्तवन्त इत्यर्थः ॥ ६ ॥

इदानीमाश्रावणं विधत्ते—**स यद्**िति । यस्मादेवं, तस्मात् ' सः ' अध्वर्युराश्रावयेत्[7] । ' एतत् ' एतेन यज्ञ-

---

१—" अग्निर्होता नव " इति तै. ब्रा. ३ । ५ । ४ । २—" सप्त वै शीर्षन्प्राणाः " इति ऐ. ब्रा. १ । ३ । ६; ३ । १ । ३ । ३—" अवाञ्चः " नाभेरधस्ताद्वर्तमाना अपानवाग्वादयः " इति ऐ. ब्रा. १ । ३ । ६ इति सा० भा० । ४—" नव वै पुरुषे प्राणाः " इति तै. सं. ३ । ५ । १० । ५ । "शिरोऽवस्थितेषु सप्तसु छिद्रेषु अधोऽवस्थितयोश्च द्वयोश्छिद्रयोः सञ्चरन्तः प्राणा नवसङ्ख्याकाः " इति तत्रैव सा. भा. । ५—प्राणानेव स्थापितवान् भवति—पा० । ६—मूले तु न दृश्यत उपावर्त्त—इति पदम्—उपावृत्तेनेत्यस्य स्थाने उपावर्त्तेनेति भाष्यसंमतः पाठः स्यादिति तु प्रतिभाति । ७—' ओ ३ श्रावय ' इत्यस्याश्रावणसंज्ञा ।

रेतसा भूतेनर्त्विजः सम्प्रदायं चरन्ति यजमानेन परोक्षं यथा पूर्णपात्रेण सम्प्रदायं चरेयुरेवमनेनर्त्विजः सम्प्रदायं चरन्ति तद्वाचैवैतत्सम्प्रदायं चरन्ति वाग्घि यज्ञो वागु हि रेतस्तदेतेनैवैतत्सम्प्रदायं चरन्ति ॥ ७ ॥

सोऽनुब्रूहीत्येवोक्त्वाध्वर्युः । ( र्ना ) नापव्याहरेन्नो एव होतापव्याहरेदा-श्रावयत्यध्वर्युस्तदग्नीधं यज्ञ उपावर्तते ॥ ८ ॥

सोऽग्नीन्नापव्याहरेत् । ( दा ) आ प्रत्याश्रावणात्प्रत्याश्रावयत्यग्नीत्तत्पुनरध्वर्युं यज्ञ उपावर्तते ॥ ९ ॥ [ काण्डस्यार्धम् ]

---

त्याश्रावयति–यज्ञ एवैतदुपावर्तते ' अस्तु तथा ' इति । तेनोपावृत्तेन रेतसा भूतेन ऋत्विजः संप्रदायं चरन्तिः यजमानेन परोक्षम् । यथा पूर्णपात्रेण सम्प्रदायं चरेयुः–एवमनेन ऋत्विजः सम्प्रदायं चरन्ति । तद्वाचैवैतत् संप्रदायं चरन्ति, वाग् हि यज्ञः, वाग् उ हि रेतः; तदेतेनैवैतत् संप्रदायं चरन्ति ॥ ७ ॥

सः ' अनुब्रूहि ' इत्येवोक्त्वा अध्वर्युर्नापव्याहरेत्, नो एव होतापव्याहरेत् । आश्रावयति अध्वर्युः तदग्नीधं यज्ञ उपावर्तते ॥ ८ ॥

सोऽग्नीन्नापव्याहरेत्-आ प्रत्याश्रावणात् । प्रत्याश्रावयत्यग्नीत्-तत् पुनरध्वर्युं यज्ञ उपावर्तते ॥९॥

---

मेवानुमन्त्रितवान् भवतीति तत्प्रकारप्रदर्शनम् । **आ न** इति । यत एतदेवं तस्मात् । " आनः शृणु" इत्यस्य आश्रावणार्थत्वात्[1] । अथ प्रत्याश्रावणं[2] विधत्ते–**अथ यदि**ति । तेनाग्नीध्रकर्तृकेन प्रत्याश्रावणेन ' तथास्त्विति ' प्रतिनिवृत्तिः कृता भवति प्रत्याश्रवणशक्त्या उक्तार्थप्रतीतेः । आश्रावणादिवषट्कारान्तमध्वर्य्वादः स्व-स्व-समये मौनं विधित्सुराह–**तेने**ति । 'तेन' प्रत्यावृत्तेन 'रेतसा भूतेन' बीजभूतेन स्वर्गाख्यफलोदयाद् बीजत्वं यज्ञस्य । ' ऋत्विजः ' अध्वर्य्वादयः स्वस्मिन्नाश्रितं यज्ञं ' सम्प्रदायं ' सम्यक् प्रदाय–प्रदाय, एकोऽन्यस्मै सोऽप्यन्यस्मा इत्येवं प्रकारेण ' चरन्ति ' अनुतिष्ठन्ति । ' यजमानेन ' ' परोक्षं ' तमनपेक्ष्य तस्य तत्र व्यापाराभावात् । परस्परसमर्पणे दृष्टान्तमाह–**यथे**ति । यथा जलैरापूर्णं घटादिपात्रं गृहान्तर्गतप्रभूतभाण्डपूरणसमये परस्परहस्तेन सञ्चरन्ति, तद्वत् । एतदेव विशिनष्टि–**तद्वाचैवे**ति । ' तत् ' तदा ' वाचैव ' वाग्रूपेणैव, आश्रावणादिवाच-मन्तरेण यज्ञासिद्धेस्तस्या यज्ञत्वव्यपदेशः । अस्त्वेवं किं तत आह–**वाग्घी**ति । वाचा मन्त्रात्मिकया यज्ञस्योत्पत्तेस्तस्या रेतस्त्वम्, तदित्याद्युपसंहारः ॥ ७ ॥

अथ सङ्ग्रहेणोक्तं यज्ञसम्प्रदानं विशिंषन्नध्वर्य्वादेः स्व-स्व-कालेषु मौनं विधत्ते–**सोऽनुब्रूही**त्यादिना । ' सोऽध्वर्युः ' होतारं प्रति ' अनुब्रूहीत्युक्त्वैवं[3] ' तत्समनन्तरमेव ' नापव्याहरेत् ' प्रस्तुतानुपयोगि वचनं न ब्रूयात् । ' होता ' अपि अनुवचनद्वारेण[4] वाग्रूपयज्ञस्य स्वस्मिन् समावेशात् ' नो एव अपव्याहरेत् ' पुनः ' अग्नीधं ' प्रति ' अध्वर्युः ' यदा ' आश्रावयति ' तदानीं स वाग्यज्ञः तं प्राप्नोति ॥ ८ ॥

अतः ' सः ' अपि ' न व्याहरेत् ' स्वप्रत्याश्रावणावधि । सः ' अग्नीत् ' यदा ' अध्वर्युं ' प्रति प्रत्याश्रावयेत्, तदैव ' यज्ञः ' पुनः आगच्छेत् ॥ ९ ॥

---

१–इहाम्नात एष एव आश्रावणार्थोऽनुवाक्यामंत्रः । २–' अस्तु श्रौं ३ षट् ' इत्यस्य प्रत्याश्रावणसंज्ञा । ३–' अनुब्रूहि ' इत्यनुवाक्यापाठार्थो होत्रे प्रैषः । ४–अनुवाक्यापाठेनेत्यर्थः ।

सो॒ऽध्व॒र्युर्नाप॑व्या॒हरे॑त् । ( द्वा ) आ य॒जेति॒ व्वक्तो॑र्य॒जेत्ये॒वाध्व॒र्युर्होत्रे॑ य॒ज्ञꣳ सम्प्र॑यच्छति ॥ १० ॥

स होता॒ नाप॑व्या॒हरे॑त् । ( द्वा ) आ व॑षट्का॒रात्तं व्वषट्का॒रेणा॒ग्नावे॑व यो॒नौ रेतो॑भूत॒ꣳसिञ्च॒त्यग्निर्वै यो॒निर्य॒ज्ञस्य॒ स त॒तः प्र॒जाय॑त ऽइ॒ति नु ह॒विर्य॒ज्ञेऽथ॒ सौम्ये॑ऽध्व॒रे ॥ ११ ॥

स वै ग्र॒हं गृ॑ही॒त्वाध्व॒र्युः । ( र्ना ) नाप॑व्या॒हरे॒दोपा॑क॒रणा॒दुपा॑वर्तध्व॒मित्ये॒वाध्व॒र्युरु॒द्गातृ॒भ्यो य॒ज्ञꣳसम्प्र॑यच्छति ॥ १२ ॥

त॒ ऽउ॒द्गाता॑रो॒ नाप॑व्या॒हरे॑युः । ( रो ) ओत्त॒माया॒ ऽए॒षोत्त॒मेत्ये॒वोद्गाता॑रो॒ होत्रे॑ य॒ज्ञꣳसम्प्र॑यच्छन्ति ॥ १३ ॥

---

सोऽध्वर्युर्नापव्याहरेत्—आ ' यज ' इति वक्तोः । यजेत्येवाध्वर्युर्होत्रे यज्ञं सम्प्रयच्छति ॥१०॥

स होता नापव्याहरेत्—आ वषट्कारात् । तं वषट्कारेणाग्नावेव योनौ रेतोभूतं सिञ्चति । अग्निर्वै योनिर्यज्ञस्य—स ततः प्रजायते इति नु हविर्यज्ञे । अथ सौम्येऽध्वरे ॥ ११ ॥

स वै ग्रहं गृहीत्वाध्वर्युर्नापव्याहरेद्—आ उपाकरणाद् । ' उपावर्तध्वम् ' इत्येवाध्वर्युरुद्गातृभ्यो यज्ञं सम्प्रयच्छति ॥ १२ ॥

त उद्गातारो नापव्याहरेयुः—आ उत्तमायाः । ' एषोत्तमा ' इत्येवोद्गातारो होत्रे यज्ञं सम्प्रयच्छन्ति ॥ १३ ॥

---

अतः ' सः ' अपि ' अध्वर्युः ' ' आ यजेति ' यजेतिवचनावधि[1] ' न ' अपव्याहरेत् '[2] । अथ पुनः ' अध्वर्युः ' यदा ' यजेति ' स्व-वाग्यज्ञं ' होत्रे ' सम्प्रयच्छति ॥ १० ॥

तदा प्राप्तयज्ञः ' सः ' ' होता ' वषट्कारपर्यन्तं ' नापव्याहरेत् ' । **स वषट्कारेणेति** । ' सोऽध्वर्युः ' होतृकृतेन ' वषट्कारेण ' हविःप्रदानसाधनेन ' अग्नौ ' योनिभूते ' रेतोभूतं ' हविः ' सिञ्चति ' प्रयच्छति । यस्माद्य उत्पद्यते तत्तस्य योनिरिति प्रसिद्धिः ' वै '—शब्देन उच्यते । उक्तं वाङ्नियमं विषयविशेषे व्यवस्थापयति—न्विति । अत्र सूत्रम्—" अनुब्रूहीत्युक्त्वा नापव्याहरेद्धोता चाऽऽश्रावणात् " ( का. श्रौ. सू. ३. ९६. ) "आश्राविते ऽग्नीदाप्रत्याश्रावणात्" ( का. श्रौ. सू. ३. ९७ ) "प्रत्याश्रावितेऽध्वर्युराहोतृप्रैषात्" ( का. श्रौ. सू. ३. ९८ ) "होतावषट्कारादिति" ( का. श्रौ. सू. ३. ९९ ) । अथ सोमविषयं वाङ्नियमं प्रतिजानीते—**अथ सौम्येऽध्वरे** इति ॥ ११ ॥

**स वा** इत्यादि । ' अध्वर्युः ' ग्रहग्रहणादनन्तरम् ' आ उपाकरणात्[3] ' । यदा चोद्गातारः स्तोत्रं प्रारभेरन्, तावत् ' नापव्याहरेत् ' । यदा ' अध्वर्युः ' उपावर्तध्वमिति ब्रूयात्, तदानीं तस्य यज्ञस्तान् ' उद्गातृन् ' प्राप्नोति ॥ १२ ॥

' ते उद्गातारः ' अपि ' आ उत्तमायाः ' ' नापव्याहरेयुः '[4] । तत्प्रभृत्युत्तमस्तोत्रीयापर्यन्तं न वदेयुः । यदा च ' एषा ' अन्तिमा स्तोत्रीयेति ' उद्गातारः ' प्रज्ञापयन्ति ॥ १३ ॥

---

१–'यज' इति याज्यावषट्कारपाठार्थो होत्रे प्रैषः । २–अपव्याहारो नाम लौकिकवदनमिति भावः । ३–" प्राग्वाचं प्रवदतोः प्रातरनुवाकोपकरणं देवेभ्यः प्रातर्यावभ्योऽनुब्रूहीति सामिधमादधत् " का० श्रौ० सू० ९ । १ । १० । इति । ४–तिसृषु ऋक्षु एकं स्तोत्रियं साम गीयते सामगैः । तत्रान्त्या ऋगुत्तमा स्तोत्रिया भवति ।

स होता नापव्याहरेत् । ( ह्रा ) आ वषट्कारात्तं वषट्कारेणाग्नावेव योनौ रेतोभूतꣳ सिञ्चत्यग्निर्वै योनिर्यज्ञस्य स ततः प्रजायते ॥ १४ ॥

स यद्ध सोऽपव्याहरेत् । ( ह्यं ) यं यज्ञ उपावर्तते यथा पूर्णपात्रं परासिञ्चेदेवꣳह स यजमानं परासिञ्चेत्स यत्र हैवमृत्विजः संविदाना यज्ञेन चरन्ति सर्वमेव तत्र कल्पते न मुह्यति तस्मादेवमेव यज्ञो भर्तव्यः ॥ १५ ॥

( स्ता ) ता वा ऽएताः । पञ्च व्याहृतयो भवन्त्यो श्रावयास्तु श्रौषड्यज ये यजामहे वौषडिति पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चर्तवः संवत्सरस्यैषैका यज्ञस्य मात्रैषा सम्पत् ॥ १६ ॥

---

स होता नापव्याहरेत्—आ वषट्कारात् । तं वषट्कारेणाग्नावेव योनौ रेतोभूतं सिञ्चति । अग्निर्वै योनिर्यज्ञस्य—स ततः प्रजायते ॥ १४ ॥

स यद् ह सोऽपव्याहरेत्—यं यज्ञ उपावर्तते; यथा पूर्णपात्रं परासिञ्चेद्—एवं ह स यजमानं परासिञ्चेत् । स यत्र हैवमृत्विजः संविदाना यज्ञेन चरन्ति—सर्वमेव तत्र कल्पते, न मुह्यति । तस्मादेवमेव यज्ञो भर्तव्यः ॥ १५ ॥

ता वा एताः पञ्च व्याहृतयो भवन्ति—' ओ श्रावय, ' ' अस्तु श्रौषड्, ' ' यज, ' ' ये यजा-

---

' होता ' अपि तदा प्रभृति ' नापव्याहरेत् ' ' आवषट्कारात् ' । **तं वषट्कारेणे**त्यादि पूर्ववत् । अत्र सूत्रम्—" सोमे च ग्रहं गृहीत्वोपाकरणात् " ( का. श्रौ. सू. ३. ६० ) इति । " उत्तमस्तोत्रीयां प्रस्तुत्य होतुरेवेति ब्रुवन्त उद्गातारः" ( का. श्रौ. सू. ३ । ६१, ६२ ) शंसिष्यते होत्रे यज्ञं प्रयच्छन्ति, तदा प्रभृति वषट्कारपर्यन्तं होता नापव्याहरेत् ॥ १४ ॥

उक्तवाङ्नियमाभावे बाधमाह—**स यद्धे**ति । सोमयागे तस्य ग्रहणादि—प्रदानावधिकाले ' यं यज्ञ उपावर्तते, ' ' सः ' ' यद् ' यदि ' अपव्याहरेत्, ' ' सः ' ' यजमानं परासिञ्चेत् ' । अत्र दृष्टान्तः—' यथा ' ' पूर्णपात्रम् ' अभिमतप्रदेशे घटादिषु प्रक्षेपमकृत्वा अन्यत्र ' परासिञ्चेत् ' तादृगेव तत् । अपव्याहारेण यज्ञभ्रंशे सति स्वर्गाख्यफलभ्रंशाद् यजमान एव परासिक्तो भवति । उक्तवैपरीत्ये को गुण इत्याह—**स यत्रे**ति । अध्वर्य्वादयः क्रमेण ' यत्र ' यज्ञे ' संविदानाः ' ऐकमत्यं प्राप्ताः स्व—स्व—कर्तव्यमेकाग्र्येण जानन्तोऽनुतिष्ठन्ति, ' तत्र ' तस्मिन् यज्ञे ' सर्वमेव ' अङ्गजातं ' कल्पते ' फलजननसमर्थं भवति । एवं सत्येकोऽप्यृत्विक् ' न मुह्यति ' स्वानुष्ठेयं न विस्मरति; अपव्याहारात्मकविक्षेपासम्भवात् । निगमयति—**तस्मादि**ति । ' एवमेव ' अध्वर्य्वादिभिः यज्ञसम्प्रदानक्रमेण ' यज्ञः ' ' भर्तव्यः ' पोषयितव्यः ॥ १५ ॥

आश्रावणादिपञ्चकमनूद्य प्रशंसति—**ता वा** इति । व्याह्रियन्त इति ' व्याहृतयः ' वाक्यानि । तानि आश्रा-

---

१–उद्गातृप्रस्तोतृप्रतिहर्तार इत्यर्थः । २–" उपाकृत उद्गातार आहोतृप्रैषात् " इति का० श्रौ० सू० ३ । ३ । १८ । ३–" होतावषट्कारात् " इति का० श्रौ० सू० ३ । ३ । १९ ।

( त्रा ) तासा ँ᳭ सप्तदशाक्षराणि । सप्तदशो वै प्रजापतिः प्रजापतिर्यज्ञ ऽएषैका यज्ञस्य मात्रैषा सम्पत् ॥ १७ ॥

( दो ) ओ श्रावयेति वै देवाः । पुरोवात ँ᳭ ससृजिरेऽस्तु श्रौषडित्यभ्राणि समप्लावयन्यजेति विद्युतं ये यजामह ऽइति स्तनयित्नुं वषट्कारेणैव प्रावर्षन् ॥ १८ ॥

( न्त्स ) स यदि वृष्टिकामः स्यात् । ( द्य ) यदीष्ट्या वा यजेत दर्शपूर्णमासयोर्वैव ब्रूयाद्वृष्टिकामो वा अस्मीति तत्रो ऽअध्वर्युं ब्रूयात्पुरोवा-

---

महे,' ' वौषट् ' इति । पाङ्क्तो यज्ञः, पाङ्क्तः पशुः, पञ्चर्तवः संवत्सरस्य । एषैका यज्ञस्य मात्रा, एषा सम्पत् ॥ १६ ॥

तासां सप्तदशाक्षराणि । सप्तदशो वै प्रजापतिः । प्रजापतिर्यज्ञः । एषैका यज्ञस्य मात्रा, एषा सम्पत् ॥ १७ ॥

' ओ श्रावय ' इति वै देवाः पुरोवातं ससृजिरे । ' अस्तु श्रौषड् ' इति अभ्राणि समप्लावयन् । ' यज ' इति विद्युतम् । ' ये यजामहे ' इति स्तनयित्नुम् । वषट्कारेणैव प्रावर्षन् ॥ १८ ॥

स यदि वृष्टिकामः स्यात्, यदीष्ट्या वा यजेत,—दर्शपूर्णमासयोर्वैव ब्रूयाद्—" वृष्टिकामो वा

---

वयेत्यादिकानि । पञ्चसङ्ख्यास्ति, यज्ञोऽपि ' पाङ्क्तः '; धानाः करम्भ—इत्यादिहविर्गतपञ्चसङ्ख्यायोगात् । अतः सङ्ख्यासाम्यद्वारा व्याहृतिपञ्चको यज्ञोऽस्तु, ततः किमित्यत आह—**पाङ्क्तः पशुरित्यादिना** । चत्वारः पादाः, शिर एकमिति वा, लोमत्वङ्मांसास्थिमज्जभेदेन वा—पशोः पाङ्क्तत्वम् । हेमन्तशिशिरयोरेकत्वेन ' पञ्चर्तवः संवत्सरस्य ' अयं यज्ञो व्याहृतिपञ्चकद्वारा पशुसंवत्सररूपाभ्यां शब्दाभ्यां परिमितो भवतीत्यर्थः । ' एषा ' पशुसंवत्सरात्मिका ' यज्ञस्य ' ' एका ' ' मात्रा ' इयत्ता । प्रकारान्तरमपेक्ष्योक्तम्—**एषा सम्पदिति** । सङ्ख्याद्वारा सम्पादितसमृद्धिर्यज्ञस्य विभुत्वमित्यर्थः ॥ १६ ॥

आश्रावणादिकं स्ववाक्यगतसङ्ख्याद्वारेण प्रशस्य, तद्गताक्षरसङ्ख्ययापि प्रशंसति—**तासामिति** । " ओ श्रावयेति चतुरक्षरम्, अस्तु श्रौषडिति चतुरक्षरम्, यजेति द्व्यक्षरम्, ये यजामह इति पञ्चाक्षरम्, द्व्यक्षरो वषट्कारः " इति सप्तदशाक्षरता; प्रजापतिरपि मासर्तुगतसङ्ख्यया सप्तदशः । यज्ञस्रष्टृत्वात्सोऽपि यज्ञः । ' एषा ' अक्षरसङ्ख्या प्राप्ता प्रजापत्यात्मकत्वलक्षणा ' यज्ञस्य ' सम्पत् ॥ १७ ॥

विहितेष्वाश्रावणादिषु वृष्ट्याख्यफलाय तत्र विशेषं विवक्षुस्तदुपोद्घातमाह—**ओ श्रावयेतीति** । ' अस्तु श्रौषट् '—' इति ' अनेन ' अभ्राणि ' उदक्—सञ्चरणसमर्थान् मेघान् ' समप्लावयन् ' सर्वत्र—व्याप्तानकुर्वन् । ' ससृजिरे'—इति सर्वत्र सम्बन्धः । एवमुत्तरत्रापि उद्देशिनामनुद्देशिनां च पूर्वपूर्वभाव उत्तरोत्तरानुदयात् कार्यकारणभावाभिधानम् । अत उक्तवैपरीत्ये न तथा शङ्कनीयम् । स्तनयित्नुशब्दः स्तनयतीति व्युत्पत्त्या मेघवाची, तथाऽपि तस्य पृथगभिधानादत्र स्तननमात्रमभिधत्ते ॥ १८ ॥

अथौपोद्घातिकमाह—**स यदीति** । ' सः ' यजमानो ' यदि वृष्टिकामः स्यात्'; स एव ' यदीष्ट्या ' सौर्या-

---

१–पञ्चसंख्यानीति युक्तं प्रतिभाति । २–" धानाः, करम्भः, परिवापः, पुरोडाशः, पयस्येत्येष वै यज्ञो हविष्पङ्क्तिः " इति ( ऐ० ब्रा० २. ३. ६ ) ३–" सप्तदशो वै प्रजापतिः द्वादश मासाः पंचर्तवो हेमन्तशिशिरयोः समासेन तावान्संवत्सरः संवत्सरः प्रजापतिः " इति ऐ. ब्रा. १ । १ । १ । ४–उ० ३ । २९ । पा० सू० ६ । ४ । ५५ ।

तुश्च विद्युतश्च मनसा ध्यायेत्यभ्राणि मनसा ध्यायेत्यग्नीधꣳस्तनयित्नुश्च व्वर्षञ्च मनसा ध्यायेति होतारꣳ सर्व्वाण्येतानि मनसा ध्यायेति ब्रह्माणं व्वर्षति हैव तत्र यत्रैवमृत्विजः संविदाना यज्ञेन चरन्ति ॥ १९ ॥

(न्त्यो) ओ श्रावयेति वै देवाः । (०) व्विराजमभ्याजुहवुरस्तु श्रौषडिति व्वत्समुपावासृजन्यजेत्युदनयन्ये यजामह ऽइत्युपासीदन्वषट्कारेणैव व्विराजमदुहतेयं वै व्विराडस्यै वा एष दोह ऽएवꣳ ह वा ऽअस्मा ऽइयं व्विराट्सर्व्वान्कामान्दुहे य ऽएवमेतं व्विराजो दोहं व्वेद ॥ २० ॥ ३ ॥

इति चतुर्थप्रपाठके तृतीयं ब्राह्मणम् ( ९. २. ) ॥

---

अस्मि" इति । तत्रो अध्वर्यु ब्रूयात्–'पुरोवातं च विद्युतं च मनसा ध्याय' इति । 'अभ्राणि मनसा ध्याय' इति अग्नीधम् । 'स्तनयित्नुं च वर्षं च मनसा ध्याय' इति होतारम् । 'सर्वाण्येतानि मनसा ध्याय' इति ब्रह्माणम् । वर्षति हैव तत्र–यत्रैवम् ऋत्विजः संविदाना यज्ञेन चरन्ति ॥ १९ ॥

'ओ श्रावय' इति वै देवाः विराजमभ्याजुहवुः । 'अस्तु श्रौषड्' इति वत्समुपावासृजन् । 'यज' इति उदनयन् । 'ये यजामहे' इति उपासीदन् । वषट्कारेणैव विराजमदुहत । इयं वै विराड्, अस्यै वा एष दोहः । एवं ह वा अस्मै इयं विराट् सर्वान् कामान् दुहे–य एवमेतं विराजो दोहं वेद ॥२०॥

---

दिकया फलान्तरसाधनभूतया 'यजेत', तत्र प्रकृतिभूतयोः 'दर्शपूर्णमासयोर्वा एव ब्रूयात्' ऋत्विजः 'वृष्टिकामः' अहम् 'अस्मीति' । कं प्रति किं ब्रूयादिति तद्विभज्याह–**तत्रो** इत्यादिना । 'तत्र' तेष्वेव कर्मसु 'अध्वर्युम्' 'ब्रूयात्', आश्रावणसमये पुरोवातविद्युतोर्ध्यानं 'मनसा कुर्यात्' इति । मनोव्यतिरेकेण ध्यानासम्भवाद्, एकाग्रमना इत्यर्थः । एवमुत्तरवाक्येष्वपि योज्यम् । आग्नीध्रहोत्रोः प्रत्येकस्य व्याहृतिद्वये सम्भवाद् एकैकस्य द्वयोर्द्वयोर्ध्यानम् । "सर्वैर्ब्रह्मा"–इति ( ऐ० ब्रा० ९ । ९ । ८ ) ब्रह्मणः सर्वकर्तव्यानुसन्धानस्मरणात् सर्वविषयध्यानाभिधानम् । एवमङ्गेषु ध्याने सति वृष्टिफलं नियतमेवेत्याह–**वर्षति हैवे**ति । 'संविदानाः' फलविषये परस्परमैकमत्यं प्राप्ताः ॥ १९ ॥

प्रकारान्तरेणाश्रावणादिपञ्चकं प्रशंसति–**ओ श्रावयेती**ति । चरुपुरोडाशादिना विशेषेण राजत इति 'विराट्' वेद्यात्मिका पृथिवी, सा धेनुत्वेन प्रकल्प्यते; "सा मे धुक्ष्व यजमानाय कामान्"–इत्यादिमन्त्रेषु दोहनसाधनत्वश्रवणात् । तां विराड्धेनुम् ओ श्रावयेत्यनेनाभिमुखमाह्वयन् । 'वत्समुपावासृजन्' स्तनपानाय वत्सस्य कण्ठगतं पाशं व्यश्लेषयन् । 'यजेति' अनेन तम् 'उदनयन्' अपरिवीतं वत्समूर्द्ध्वमूधसोऽभिमुखमनयन् । 'उपासीदन्' दोहाय गोः समीपे स्थिताः । 'वषट्कारेण' हविःप्रदानसाधनेन ताम् 'अदुहत' दोहनेनेमं यज्ञमुदपादयन्नित्यर्थः । विराट्शब्दमाह–**इयं वा** इति । 'इयं' पृथिव्येव खलु 'विराट्' उक्तमर्थं समर्थयते–**अस्यै वा** इति । 'एषः' उक्तो 'दोहः' 'अस्यै वै' अस्या वेद्यात्मिकायाः पृथिव्याः सम्बन्धी खलु, चरुपुरोडाशादियज्ञसाधनानां तस्या एवोत्पत्तेः । उक्तार्थवेदनं प्रशंसति–**एवं ह वा** इति । 'यः' एतदाश्रावणादिकम् 'एवं' दोहात्मकतया 'वेद' जानाति 'अस्मै' अस्याः उक्तार्थं वेदित्रे 'इयं विराट्' पृथिवी 'सर्वान्' धनादिकान् 'कामान्' 'दुहे' प्रयच्छतीति ॥ २० ॥ ३ ॥ ( ९ । २ )

इति श्रीसायणाचार्यवि० धर्वीये वेदार्थप्र० माध्यन्दिनशतपथब्रा० प्रथमकाण्डे पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥

---

१–कुर्या । युक्तं प्रतिभाति । २–शब्दार्थमाहेति युक्तं प्रतिभाति ।

ऋतवो ह वै प्रयाजाः । ( स्तु ) तस्मात्पञ्च भवन्ति पञ्च ह्यृतवः ॥ १ ॥
( वो ) देवाश्च वा ऽअसुराश्च । ( श्चो ) उभये प्राजापत्याः पस्पृधिरऽएतस्मिन्यज्ञे प्रजापतौ पितरि संव्वत्सरेऽस्माकमयं भविष्यत्यस्माकमयं भविष्यतीति ॥ २ ॥

ततो देवाः । ( ऽ ) अर्चन्तः श्राम्यन्तश्चेरुस्त ऽएतान्प्रयाजान्ददृशुस्तैरयजन्त तैर्ऋतून्त्संव्वत्सरं प्राजयन्नृतुभ्यः संव्वत्सरात्सपत्नानन्तरायंस्तस्मात्प्रजयाः प्रजया ह वै नामैतद्यत्प्रयाजा ऽइति तथो ऽएवैष ऽएतैऽर्ऋतून्त्संव्वत्सरं प्रजयत्यृतुभ्यः संव्वत्सरात्सपत्नानन्तरेति तस्मात्प्रयाजैर्यजते ३

" प्रयाजबन्धुः । "

ऋतवो ह वै प्रयाजाः । तस्मात्पञ्च भवन्ति, पञ्च हि ऋतवः ॥ १ ॥
देवाश्च वा असुराश्च उभये प्राजापत्याः पस्पृधिरे—एतस्मिन् यज्ञे प्रजापतौ पितरि संवत्सरे 'अस्माकमयं भविष्यति, अस्माकमयं भविष्यति' इति ॥ २ ॥

ततो देवा अर्चन्तः श्राम्यन्तश्चेरुः, त एतान् प्रयाजान् ददृशुः—तैरयजन्त । तैर्ऋतून् संवत्सरं प्राजयन्—ऋतुभ्यः संवत्सरात् सपत्नानन्तरायन्; तस्मात्प्रजयाः । प्रजया ह वै नामैतद्—यत्प्रयाजाः—इति । तथो एवैष एतैर्ऋतून् संवत्सरं प्रजयति, ऋतुभ्यः संवत्सरात्सपत्नानन्तरेति । तस्मात् प्रयाजैर्यजते ॥ ३ ॥

---

प्रयाजानुपरिष्टाद् विधास्यति; तत्रादौ तद्गतां सङ्ख्यां विधत्ते—**ऋतवो ह वा** इति । यस्माद् 'ऋतवः' हेमन्तशिशिरयोरक्येन 'पञ्च' अतस्तदात्मका अपि 'प्रयाजाः' 'पञ्च' कर्तव्याः ॥ १ ॥

निर्वचनद्वारेण प्रशंसितुमाख्यायिकामाह—**देवाश्चे**ति । स्पर्धाया विषयं दर्शयति—**एतस्मिन्नि**ति—। 'एतस्मिन्' दर्शपूर्णमासात्मके 'यज्ञे' 'प्रजापतौ'; आश्रावयास्तु श्रौषडित्यादिसप्तदशात्मकस्य प्रजापतेर्यज्ञरूपत्वाद्—यज्ञे प्रजापतौ—इति सामानाधिकरण्यम् । स च सर्वोत्पादकत्वात् 'पिता'; तस्य च 'संवत्सरः प्रजापतिः' "सोऽस्य सर्वस्य प्रजनयिता" च इति श्रुतेः ( ऐ. ब्रा. २।२।७; २।१।७ ) संवत्सरात्मकत्वम् । उक्तरूपे प्रजापतौ 'अयमस्माकमेव भविष्यति, अस्माकमेवेति' स्पर्द्धामकुर्वन् ॥ २ ॥

**तत** इति । ते 'देवाः' 'अर्चन्तः' तत्पूजयन्तः, 'श्राम्यन्तः' आत्मानं क्लेशयन्तः 'चेरुः' अन्वतिष्ठन्,—तत्साधनमन्वतिष्ठन् । 'तत एतान् प्रयाजान्' प्रजापतिजयलाभोपायत्वेन दृष्ट्वा, 'तैः' इष्ट्वा; तत्फलभूतान् 'ऋतून्', तद्द्वारा 'संवत्सरं' च प्राजयन् । जितेभ्यस्तेभ्यः सकाशात् स्वसपत्नान् असुरान् विरहितान् अकुर्वन् । 'तस्मात्' प्रजयसाधनत्वादेते 'प्रजयाः—प्रजयाः' इत्येतदस्ति, एतन्नामतः 'प्रयाजाः' खलु । यथा देवाः, 'तथा' एव 'एषः' इदानीन्तनोऽपि यजमानः 'एतैः' प्रयाजैः ऋतुसंवत्सरजयद्वारा स्वशत्रून् ऋतुसंवत्सरैर्व्यवहितान् करोति ॥ ३ ॥

---

१—समिधः, तनूनपात्, इडः, बर्हिः, स्वाहाकारः—इति पञ्च प्रयाजाः । द्वादशस्वाप्रीदेवतासु पञ्चैताः प्रयाजा उच्यन्ते ॥

ते वा ऽआज्यहविषो भवन्ति । वज्रो वा ऽआज्यमेतेन वै देवा वज्रेणाज्येनऽर्तूंन्त्संवत्सरं प्राजयन्नृतुभ्यः संवत्सरात्सपत्नानन्तरायंस्तथो ऽएवैष ऽएतेन वज्रेणाज्येनर्तूंन्त्संवत्सरं प्रजयत्यृतुभ्यः संवत्सरात्सपत्नानन्तरेति तस्मादाज्यहविषो भवन्ति ॥ ४ ॥

( न्त्ये ) एतद्वै संवत्सरस्य स्वं पयः । ( यो ) यदाज्यं तत्स्वेनैवैनमेतत्पयसा देवाः स्व्यकुर्वत तथो ऽएवैनमेष ऽएतत्स्वेनैव पयसा स्वीकुरुते तस्मादाज्यहविषो भवन्ति ॥ ५ ॥

स यत्रैव तिष्ठन्प्रयाजेभ्य ऽआश्रावयेत् । ( त्तु ) तत ऽएव नापक्रामेत्सङ्ग्रामो वा ऽएष सन्निधीयते यः प्रयाजैर्यजते यतरो वै संयत्तयोः पराजयतेऽप वै स क्रामत्यभितरामु वै जयन्क्रामति तस्मादभितरामभितरामेव क्रामेदभितरामभितरामाहुतीर्जुहुयात् ॥ ६ ॥

---

ते वा आज्यहविषो भवन्ति । वज्रो वा आज्यम्, एतेन वै देवा वज्रेणाज्येन ऋतून् संवत्सरं प्राजयन्–ऋतुभ्यः संवत्सरात् सपत्नान् अन्तरायन्, तथो एवैष एतेन वज्रेणाज्येन ऋतून् संवत्सरं प्रजयति–ऋतुभ्यः संवत्सरात् सपत्नान् अन्तरेति । तस्मादाज्यहविषो भवन्ति ॥ ४ ॥

एतद्वै संवत्सरस्य स्वं पयः–यदाज्यम् । तत् स्वेनैवैनमेतत्पयसा देवाः स्व्यकुर्वत । तथो एवैनमेष एतत् स्वेनैव पयसा स्वीकुरुते । तस्मादाज्यहविषो भवन्ति ॥ ५ ॥

स यत्रैव तिष्ठन् प्रयाजेभ्य आश्रावयेत्, तत एव नापक्रामेत् । सङ्ग्रामो वा एष सन्निधीयते–यः प्रयाजैर्यजते; यतरो वै संयत्तयोः पराजयते–अप वै स क्रामति, अभितरामु वै जयन् क्रामति । तस्मादभितरामभितरामेव क्रामेद्, अभितरामभितरामाहुतीर्जुहुयात् ॥ ६ ॥

---

ते वा इति । हूयत इति ' हविः ' द्रव्यम्, तत्तेषामाज्यात्मकं कर्तव्यत् । सपत्नघातकत्वात् तदाज्यस्य वज्रत्वम् । वैशब्देन सूचितां वज्रत्वप्रसिद्धिमुपपादयति– यतः ' एतेन ह्याज्येन प्रयाजयागद्वारा सपत्नानजयन्, अतोऽस्य वज्रत्वं सिद्धमित्यर्थः । " **तथो** "–इत्यादिर्दृष्टान्तः ॥ ४ ॥

प्रकारान्तरेणाज्यद्रव्यकत्वं प्रशंसति–**एतद्वा** इति । आज्यमिति यदस्ति, ' एतत् ' खलु संवत्सरस्य ' स्वं पयः ' । प्रतिनियतधनरूपं क्षीरम् ; पयःकार्यत्वादाज्यमपि पयः; गोमहिष्यादीनां संवत्सरपर्यन्तं प्रायेण दोहात्मत्वम् । 'तत्' तस्माद् ' देवाः ' पूर्वम् ' एनं ' प्रजापतिं ' स्वेनैव ' स्वद्रव्यभूतेनैव ' पयसा ' ' स्व्यकुर्वत ' स्वकीयधनवत्तामगमयन् । ' तथा ' एवेदानीमपि यजमानः प्रयाजानाज्येन यजन् प्रजापतिमेव स्वद्रव्यतां करोति । अतस्तेषामाज्यहविष्कत्वं प्रशस्तम् ॥ ५ ॥

प्रयाजहोमविषये स्थाननियममाह–**स यत्रैवेति** । ' प्रयाजेभ्यः ' प्रयाजार्थं ' यत्रैव ' प्रदेशे स्थितः ' आश्रावयेत् ' ' ततः ' पश्चात् ' नापक्रामेत् ' । अनपक्रमे कारणमाह–**सङ्ग्रामो** वेति । ' यः प्रयाजैर्यजते ' अयं युद्धाय

---

१–" आज्येन प्रयाजा इज्यन्त आज्येन पत्नीसंयाजाः । पंच प्रयाजा इज्यन्ते चत्वारः पत्नीसंयाजाः " इति तै० सं. २।६।१०।
२–दोहात्मकत्वम्–इति पा० ।

( त्तु ) तुदु तुथा नु कुर्यात् । ( ह्यु ) युत्रैव तिष्ठन्प्रयाजेभ्य ऽआश्रावुयेत्तत ऽएव नापक्रामेद्यत्रो ऽएव सुमिद्धतमं मुन्येत तदाहुतीर्जुहुयात्समिद्धहोमेनु ह्येव सुमृद्धा ऽआहुतयः ॥ ७ ॥

सुऽ आश्राव्याह । समिधो यजेति तुद्वसन्त १९ं सुमिन्धे सु व्वसन्तः सुमिद्धो ऽन्यानृतून्त्समिन्ध ऽऋतवः सुमिद्धाः प्रजाश्च प्रजनयन्त्योषधीश्च पचन्ति तुद्वैव खलु सुर्वानृतून्निराहाथ युज–यजेत्येवोत्तरानाहाजामितायै जामि ह कुर्याद्यत्तनूनपातं यजेडो यजेति ब्रूयात्तस्माद्युज–यजेत्येवोत्तरानाह ॥८॥

---

तद्धु तथा न कुर्यात् । यत्रैव तिष्ठन् प्रयाजेभ्य आश्रावयेत्–तत एव नापक्रामेद्; यत्रो एव समिद्धतमं मन्येत–तदाहुतीर्जुहुयात् । समिद्धहोमेन ह्येव समृद्धा आहुतयः ॥ ७ ॥

" उत्तरः प्रैषः । "

स आश्राव्य आह–'समिधो यज ' इति । तद् वसन्तं समिन्धे, स वसन्तः समिद्धो अन्यान् ऋतून् समिन्धे, ऋतवः समिद्धाः प्रजाश्च प्रजनयन्ति, ओषधीश्च पचन्ति । तद्वैव खलु सर्वानृतून् निराह । अथ ' यज यज ' इत्येव उत्तरानाह–अजामितायै । जामि ह कुर्याद्–यत् ' तनूनपातं यज, इडो यज ' इति ब्रूयात् । तस्माद्यज यजेत्येवोत्तरानाह ॥ ८ ॥

---

' सङ्ग्रामः सन्निधीयते ' अतो युद्धाय ' सङ्गतयोः ' मध्ये ' यः पराजयते', ' सोऽपक्रामति ' पश्चात् पलायते । तस्मादपक्रमणं न युक्तमित्यर्थः ।

अथ पुरोऽभिक्रमणपक्षमुपन्यस्य निराकरोति–अभितराम्विति । ' जयन् ' कश्चिज्जिगीषुः ' अभितरामु वै ' शत्रोरत्यन्तमभिमुखं खलु ' क्रामति ' यस्मादेवं ' तस्मात् ' प्रयाजमभिमुखमभिमुखमीषदीषत्पुरस्तादाक्रामेत् । आक्रमणानुसारेणाग्नावपि ईषदीषत्पुरस्तादाक्रम्य ' जुहुयात् ' ॥ ६ ॥

अमुं पक्षं निषेधति–तद्धिति । तर्हि कथमित्याशङ्क्य पूर्वोक्तमेव पक्षं निगमयति–यत्रैवेति । आश्रावणस्य प्रदानाङ्गतया तयोः प्रदेशैक्यलाभादित्यभिप्रायः । पक्षान्तरमाह–यत्रो एवेति । आहवनीयमध्ये यस्मिन्नेव प्रदेशेऽग्निं प्रज्वलितं मन्येत, तत्र पश्चापि ' आहुतीर्जुहुयात् ' । ' हि ' यस्मात् समिद्धाग्निदेशहोमात् ' आहुतयः ' अपि ' समिद्धाः ' प्रदीप्ताः, फलजननसमर्थाः स्युः, अतोऽयमेव पक्षः श्रेयान् ॥ ७ ॥

आश्रावणानन्तरं कर्तव्यमाह–स इति । हे होतः ! समिन्नामिका अग्निमूर्तीः प्रति तासां यागाय याज्यां पठेति प्रैषार्थः । तेन प्रैषेण साक्षाद् ' वसन्तम् ' एव ' समिन्धे ' दीप्तं करोति । न केवलं तस्यैव समिन्धनम्, अपि तु तद्द्वारा सर्वेषामप्यृतूनां समिन्धनं कृतं भवति । तथा च सति सर्वे ऋतवः स्व–स्व–कालोचिताः ' प्रजाः ' सर्वा अप्युत्पादयन्ति, तदुपजीवनाय ' ओषधीश्च पचन्ति ' । तद्वैवेति । यस्मादेव कारणात् वसन्तसमिन्धनेन स्वयमपि समिद्धाः सन्तः प्राण्युत्पादनमोषधिपाकं चैव कुर्वन्ति, तस्माद्वसन्तः समिद्धोऽन्यान् ऋतून् समिन्ध इति ' सर्वान् ऋतून् निराह ' । समिद्यागवदितरेषामपि नामनिर्देशपूर्वकत्वप्रसक्तौ तन्निवारयति–अथ यजयजेति । तदनिर्देशस्य प्रयोजनमाह–अजामिताया इति । अनतिरेकाय । " जाम्यातिरेकनाम "–इति यास्कः

---

१–' ध्रुवस्तिष्ठन् ' ( श्रौ० सू० ३. ३७ ) ' पूर्वं पूर्वं वाभिक्रामम् ' ( श्रौ० सू० ३. ३८ ) । २–पुनरुक्तनामेत्यर्थः । इति वृत्तिः । " जामि वा एतद्यज्ञे क्रियते यत्समानीभ्यामृग्भ्यां समानेऽहन्यजति " इति ऐ. ब्रा. ३ । ५ । ३ ।

स वै समिधो यजति । व्वसन्तो वै समिद्वसन्तुमेव तद्देवा ऽअवृञ्जत व्वसन्तात्सपत्नानन्तरायन्वसन्तुम्वेवैष ऽएतद्वृङ्क्ते व्वसन्तात्सपत्नानन्तरेति तस्मात्समिधो यजति ॥ ९ ॥

(त्य) अथ तनूनपातं यजति । ग्रीष्मो वै तनूनपाद्ग्रीष्मो ह्यासां प्रजानां तनूस्तपति ग्रीष्ममेव तद्देवा ऽअवृञ्जत ग्रीष्मात्सपत्नानन्तरायन्ग्रीष्ममुम्वेवैष ऽएतद्वृङ्क्ते ग्रीष्मात्सपत्नानन्तरेति तस्मात्तनूनपातं यजति ॥ १० ॥

( त्य ) अथेडो यजति । व्वर्षा वा ऽइड इति हि व्वर्षा ऽइडो यदिदं क्षुद्रꣳ

---

" प्रयाजब्राह्मणम् " ।

स वै ( १ ) " **समिधो** " यजति । वसन्तो वै समिद् । वसन्तमेव तद्देवा अवृञ्जत–वसन्तात् सपत्नानन्तरायन् । वसन्तमु एवैष एतद् वृङ्क्ते–वसन्तात् सपत्नानन्तरेति । तस्मात्समिधो यजति॥९॥

अथ ( २ ) " **तनूनपातं** " यजति । ग्रीष्मो वै तनूनपाद्–ग्रीष्मो हि आसां प्रजानां तनूस्तपति । ग्रीष्ममेव तद्देवा अवृञ्जत–ग्रीष्मात् सपत्नानन्तरायन् । ग्रीष्ममु एवैष एतद् वृङ्क्ते—ग्रीष्मात् सपत्नानन्तरेति । तस्मात्तनूनपातं यजति ॥ १० ॥

अथ ( ३ ) " **इडो** " यजति । वर्षा वा इडः । इति हि वर्षा इडः–यदिदं क्षुद्रं सरीसृपं

---

( निरु. ४. ३. ४. ) एकस्मिन् प्रथमे समिद्यागे नामनिर्देशे सतीतरेषामप्यूहयितुं शक्यत्वेन निर्देशप्रायत्वात् पुनर्नामनिर्देशे ' जामि ' भवेत् । जामित्वपक्षमुदाहृत्य प्रदर्शयति–**जामि** हेति । अतस्तनूनपात्प्रभृतीन् ' यज–यजेति ' एवं ब्रूयात्[2] ॥ ८ ॥

" ऋतवो ह वै " इत्यत्र सङ्ख्यशो विहिताः पञ्च[3] प्रयाजाः, तेष्वेकैकं विधाय प्रशंसति–**स वै समिध** इत्यादिना । अत्र समिदादीनां वसन्ताद्यात्मतया स्तुतौ सङ्ख्यासाम्यमेव साधारणम्, कारणविशेषस्तु तत्र प्रदर्श्यते–**वसन्तो वा** इत्यादि । वसन्तेऽपि निखिलवृक्षाणां कुसुमाद्युद्गमेन प्रदीप्तताऽस्तीति समिधो वसन्तत्वाभिधानम् । अतः ' तत् ' तेन समिद्यागेन 'वसन्तमेव अवृञ्जत' स्वैर्लब्धत्वादसुरेभ्यस्तंवर्जितमकुर्वन् । तस्माद् ' वसन्तात् ' 'सपत्नान्' असुरान् अन्तरायन् । यद्येषां नास्ति, तेन तेऽन्तर्हिता इति प्रसिद्धम् ।

पुरातनवृत्तान्तप्रदर्शनस्य प्रयोजनमाह–**वसन्तम्विति** । ' उ ' अपि च, इदानीमपीत्यर्थः । ' एतत् ' एतेन समिद्यागेन ' वसन्तमेव वृङ्क्ते ' वर्जयति, स्वसपत्नेभ्य[4] इत्यर्थः । सिद्धमन्यत् । एवमुत्तरवाक्यान्यपि योज्यानि॥९॥

**अथ तनूनपातमि**त्यादि । ग्रीष्मस्य तनूनपात्साम्यं दर्शयति–**ग्रीष्मो ही**ति । अस्य सकलप्रजाशरीरतापकत्वेन तनूनां पालकत्वात् तनूनपात्त्वम् ; अतोऽर्थतः साम्याद् ग्रीष्मस्तनूनपात्[5] । शिष्टं पूर्ववत् ॥ १० ॥

**अथेड** इत्यादि । इड इत्येतद्देवता यजेत । इडो वर्षात्वेनोपचारे स्त्रीत्वं बहुत्वञ्च बीजम् । उक्तं

---

१–" क्षुल्लक ९ " इति भाष्यसंमतः पाठः । २–' यजयजेति शेषम् ' ( श्रौ० सू० ३. ३६ ) । ३–' पञ्च प्रयाजान्यजतीयं पञ्चसंख्या प्रयाजानामुत्पत्तिशिष्टा । नवप्रयाजान्यजतीति, एकादश प्रयाजान्यजतीति, नवैकादशसंख्ययाबाधा योगाद्विकृती संख्या अभ्यासेनैव पूरणीया " इति या० वृ० ( का० श्रौ० सू० ३ । ३ । ८ ) ४–अत्रत्यसमिद्व्याख्यामाह यास्कः " यज्ञेध्म इति कात्थक्यः अग्निरिति शाकपूणिः " निरु० ८ । २ । २ । ५–' तनूनपाद्व्याख्यायामाह यास्कः " आज्यमिति कात्थक्यः अग्निरिति शाकपूणिः " इति निरु० ८ । २ । २ ।

सरीसृपं ग्रीष्महेमन्ताभ्यां नित्यक्तं भवति तद्वर्षा ऽईडितमिवान्नमिच्छमानं चरति तस्माद्वर्षा ऽइडो व्वर्षा ऽएव तद्देवा ऽअवृञ्जत व्वर्षाभ्यः सपत्नानन्तरायन्वर्षा ऽउ ऽएवैष ऽएतद्वृङ्क्ते व्वर्षाभ्यः सपत्नानन्तरेति तस्मादिडो यजति ॥ ११ ॥

( त्यु ) अथ बर्हिर्यजति । शरद्वै बर्हिरिति हि शरद्बर्हिर्या ऽइमा ऽओषधयो ग्रीष्महेमन्ताभ्यां नित्यक्ता भवन्ति ता व्वर्षा व्वर्द्धन्ते ताः शरदि बर्हिषो रूपं प्रस्तीर्णाः शेरे तस्माच्छरद्बर्हिः शरदमेव तद्देवा ऽअवृञ्जत शरदः सपत्नानन्तरायञ्छरदम्वेवैष ऽएतद्वृङ्क्ते शरदः सपत्नानन्तरेति तस्माद्बर्हिर्यजति ॥ १२ ॥

( त्यु ) अथ स्वाहा-स्वाहेति यजति । ( त्यु ) अन्तो वै यज्ञस्य स्वाहा-

---

ग्रीष्महेमन्ताभ्यां नित्यक्तं भवति—तद् वर्षा ईडितमिवान्नमिच्छमानं चरति—तस्माद्वर्षा इडः। वर्षा एव तद् देवा अवृञ्जत—वर्षाभ्यः सपत्नानन्तरान् । वर्षा उ एवैष एतद् वृङ्क्ते—वर्षाभ्यः सपत्नानन्तरेति। तस्मादिडो यजति ॥ ११ ॥

अथ ( ४ ) बर्हिः यजति । शरद्वै बर्हिः । इति हि शरद् बर्हिः—या इमा ओषधयो ग्रीष्महेमन्ताभ्यां नित्यक्ता भवन्ति, ता वर्षा वर्द्धन्ते, ताः शरदि बर्हिषो रूपं प्रस्तीर्णाः शेरे—तस्मात् शरद्बर्हिः । शरदमेव तद्देवा अवृञ्जत—शरदः सपत्नानन्तरायन् । शरदम्वेवैष एतद् वृङ्क्ते—शरदः सपत्नानन्तरेति । तस्माद्बर्हिर्यजति ॥ १२ ॥

अथ ( ५ ) "स्वाहा—स्वाहा"—इति यजति । अन्तो वै यज्ञस्य स्वाहाकारः, अन्त ऋतूनां

---

साम्यं समर्थयते—**इति हीति** । 'हि' एवं खलु 'इडो वर्षाः' । कथमिति तत्राह—'यदिदं क्षुल्लकम्' प्राणिजातमित्यर्थः । 'सरीसृपं' कृकलासगोधादिकम् । 'ग्रीष्महेमन्ताभ्यां' निमित्ताभ्यां 'नित्यक्तं' नितरां परित्यक्तशरीरं क्षीणं 'भवति'; हिमे सर्वपदार्थानां शीतेनार्तत्वात्, ग्रीष्मे रसानां शोषणादिति भावः । 'तत्' सर्वं 'वर्षाः' द्वितीयाबहुवचनं, ताः ताः—प्रति 'ईडितमिव' अहो विनष्टप्रायं सदिदानीं पुनश्चेष्टत इति सर्वैः प्रशंसितमिव 'अन्नं' स्वोचितं तृणजलादिरूपम् 'इच्छमानम्' इच्छां कुर्वत्, इतस्ततः 'चरति'; वर्षासु तृणजलादिसमृद्धिसम्भवात् । यस्मादेवं 'तस्माद्' वर्षाणामिड्रूपत्वमुक्तमित्यर्थः । इष्यत इतीडिति—इट्शब्दव्युत्पत्तेर्वर्षास्वपि सम्भवात् । शिष्टं पूर्ववत् ॥ ११ ॥

**अथ बर्हिरित्यादि । वषा** इति । उक्तप्रकारेण विनष्टाः, ता 'ओषधयः' वर्षासु प्रवृद्धाः सत्यः 'शरदि' प्राप्तायां 'बर्हिषः' आस्तीर्णस्य 'रूपम्' प्राप्नुवन्ति । तत् कुत इत्यत आह—'आस्तीर्णाः' अनुक्रमणसामान्येनाऽऽस्तृतदर्भवत् 'शेरे' शेरते । 'तस्माद्' उपपादिताद्धेतोः; शरद् बर्हिः ॥ १२ ॥

**अथ स्वाहेत्यादि** । अन्त्यप्रयाजे 'स्वाहाग्निम्' 'स्वाहा सोमम्' इति ( तै. ब्रा. ३ । ५ । ५ । ५ )

---

१—इड्व्याख्यायामाह यास्कः "इक ईडेः स्तुतिकर्मणइन्धतेर्वा" इति निरु० ८ । २ । ४ । २—बर्हिर्व्याख्यायामाह यास्कः "बर्हिः परिबर्हणात्" इति निरु० ८ । २ । ५ ।

कारोऽन्त ऋतूनाᳪं हेमन्तो व्वसन्ताद्धि पराद्धर्योऽन्तेनैव तदन्तं देवा ऽअवृञ्जतान्तेनान्तात्सपत्नानन्तरायन्नन्तेनो ऽएवैष ऽएतदन्तं वृङ्क्तेऽन्तेनान्तात्सपत्नानन्तरेति तस्मात्स्वाहा–स्वाहेति यजति ॥ १३ ॥

तद्वा ऽएतत् । ( द्र ) व्वसन्त ऽएव हेमन्तात्पुनरसुरेतस्माद्ध्येष पुनर्भवति पुनर्ह वा ऽअस्मिँल्लोके भवति य ऽएवमेतद्वेद ॥ १४ ॥

स वै व्यन्तु व्वेत्त्विति यजति । ( त्यु ) अजामितायै जामि ह कुर्याद्यद्यन्तु व्यन्त्विति वैव यजेद्वेतु व्वेत्त्विति वा व्यन्त्विति वै योषा व्वेत्त्विति व्वृषा मिथुनमेवैतत्प्रजननं क्रियते तस्माद्यन्तु व्वेत्त्विति यजति ॥ १५ ॥

---

हेमन्तः–वसन्ताद्धि पराद्धर्यः । अन्तेनैव तदन्तं देवा अवृञ्जत–अन्तेनान्तात् सपत्नानन्तरायन् । अन्तेनो एवैष एतदन्तं वृङ्क्ते–अन्तेनान्तात् सपत्नानन्तरेति। तस्मात् स्वाहा–स्वाहेति यजति॥१३॥

तद्वा एतद्–वसन्त एव हेमन्तात् पुनरसुः, एतस्माद्ध्येष पुनर्भवति । पुनर्ह वा अस्मिन् लोके भवति–य एवमेतद् वेद ॥ १४ ॥

स वै 'व्यन्तु, वेतु' इति यजति–अजामितायै । जामि ह कुर्याद्–यद् 'यन्तु–व्यन्तु'–इति वैव यजेद्; 'वेतु' वेतु इति वा । व्यन्तु–इति वै योषा, वेतु–इति वृषा; मिथुनमेवैतत् प्रजननं क्रियते । तस्माद् व्यन्तु वेतु–इति यजति ॥ १५ ॥

---

स्वाहाकृतिरस्ति; तां देवतां यजेति स्वाहाकारेण हविःप्रदानात्, तत्प्रदानस्य च यागत्वात्, तस्य तद्देवत्वम् । हेमन्तोऽपि वसन्ताद्यृतूनामन्तिमः । तदेवोपपादयति–'हि' यस्माद् 'वसन्तात्' 'पराद्धर्यः' परस्मिन्–अर्द्धे भागे भवः । 'अन्तेन' स्वाहाकारेण 'अन्तं' हेमन्तमसुरेभ्यः 'अवृञ्जत' । गतमन्यत् ॥ १३ ॥

हेमन्तस्यान्तिमत्वं प्रकारान्तरेण प्रशंसति–तद्वा इति । 'तद्' वक्ष्यमाणप्रकारं 'वै' खलु 'एतत्', तदिदमपि हेमन्तप्राशस्त्यमस्तीत्यर्थः । किं तदेतत् ? 'वसन्त एव' 'पुनः' ऋत्वारम्भे आवर्तमानः सन्, 'हेमन्तात्' स्वपूर्वभाविनः सकाशात् 'पुनरसुः' पुनः प्राप्तप्राणो 'भवति' । कथमित्यत आह–**एतस्मादिति** । उक्तार्थवेदनं प्रशंसति–**पुनर्ह वा** इति ॥ १४ ॥

प्रयाजमन्त्रेषु तद्देवतावहुत्वैकत्वप्रयुक्तं 'व्यन्तु'–'वेतु'–इति वहुत्वमेकत्वं वाऽस्ति, तदनूद्य प्रशंसति–**स वै व्यन्त्विति** । उक्तो जामिशब्दार्थोऽसकृत् । एकरूप्येण व्यन्त्विति वा वेत्त्विति वा पाठे सति शृण्वतां मनसि अनादरः स्यात्, अतस्तद् 'जामि' अधिकं भवति । प्रकारान्तरेण तदेव प्रशंसति–**व्यन्त्विति वा** इति । एकस्य पुंसो जायावहुत्वसम्भवेऽपि स्त्रियास्त्वेक एव पतिरिति नियमाद् व्यन्तु–वेतु इति योषावृषणौ[2], अत 'एतत्' एतेन तथाविधपाठेनास्य पुत्रस्योत्पादनं 'मिथुनमेव' सम्पादितवान् भवति ॥ १५ ॥

---

१–स्वाहाकृतिव्याख्यायामाह यास्कः " स्वाहाकृतयः। स्वाहेत्येतत्–सुआहेति वा, स्वावागहेतिवा, स्वंप्राहेति वा, स्वाहुतं हविर्जुहोतिवा " इति निरु० ८ । ३ । ५ । २–योषावृषौ–इति क०.पा० ।

( त्य ) अथ चतुर्थे प्रयाजे समानयति बर्हिषि । प्रजा वै बर्ही रेत ऽआज्यं तत्प्रजास्वेवैतद्रेतः सिच्यते तेन रेतसा सिक्तेनेमाः प्रजाः पुनरभ्यावर्तं प्रजायन्ते तस्माच्चतुर्थे प्रयाजे समानयति बर्हिषि ॥ १६ ॥

सङ्ग्रामो वा ऽएष सन्निधीयते । यः प्रयाजैर्यजते यतरं वै संयत्तयोर्मित्रमागच्छति स जयति तदेतदुपभृतोऽधि जुहूं मित्रमागच्छति तेन प्रजयति तस्माच्चतुर्थे प्रयाजे समानयति बर्हिषि ॥ १७ ॥

यजमान ऽएव जुहूमनु योऽस्मा ऽअरातीयति स ऽउपभृतमनु यजमानायैवैतद्द्विषन्तं भ्रातृव्यं बलिꣳहारयत्यत्तैव जुहूमन्वाद्य ऽउपभृतमन्वत्त्र ऽएवैतदाद्यं बलिꣳहारयति तस्माच्चतुर्थे प्रयाजे समानयति ॥ १८ ॥

---

अथ चतुर्थे प्रयाजे समानयति बर्हिषि । प्रजा वै बर्हिः, रेत आज्यम् । तत् प्रजास्वेवैतद् रेतः सिच्यते । तेन रेतसा सिक्तेनेमाः प्रजाः पुनरभ्यावर्तं प्रजायन्ते । तस्माच्चतुर्थे प्रयाजे समानयति बर्हिषि ॥ १६ ॥

सङ्ग्रामो वा एष संनिधीयते—यः प्रयाजैर्यजते । यतरं वै संयत्तयोर्मित्रमागच्छति-स जयति । तदेतद्—उपभृतोऽधि जुहूं मित्रमागच्छति—तेन प्रजयति । तस्माच्चतुर्थे प्रयाजे समानयति बर्हिषि॥ १७॥

यजमान एव जुहूमनु योऽस्मा अरातीयति-स उपभृतमनु । यजमानायैवैतद् द्विषन्तं भ्रातृव्यं

---

तैत्तिरीयके "यदुपभृति प्रयाजानुयाजेभ्यस्तदिति" (तै. ब्रा. ३. ३. ६.) यदुभयार्थमाज्यग्रहणमुक्तम्[1], तस्य विभागमाह—**अथ चतुर्थ** इति । 'चतुर्थे' बर्हिराख्ये 'प्रयाजे' होतव्ये सति, उपभृतः सकाशात् जुह्वां 'समानयति' आज्यम् ("उपभृतो जुह्वामानयति" इति का. श्रौ. सू. ३ । ३९) एतत् प्रशंसति—**प्रजा वा** इत्यादिना । प्रजानां पुत्रादिद्वारा उपरिबर्हणसम्भवाद् बर्हिष्ट्वम् । तस्यास्य वृष्टिद्वारा प्रजादिरूपेणोत्पत्तेराज्यं रेतः; अतो बर्हिष्यानयनात् 'प्रजासु' 'रेतः' सिक्तं भवति । 'सिक्तेन रेतसा' रेतोभूतेनाज्येन 'इमाः' परिदृश्यमानाः 'प्रजाः' 'अभ्यावर्तम्' अभ्यावृत्याभ्यावृत्य कर्मवशाद् देहसम्बन्धं प्राप्नुवन्ति । **तस्मा**दित्युपसंहारः ॥ १६ ॥

जुह्वामुपभृतः प्राप्तमाज्यं मित्रप्राप्त्यात्मना प्रशंसति—**सङ्ग्राम** इति । 'यः' च 'प्रयाजैः' संसृष्टोऽध्वर्युः तेन सङ्ग्राम एव सन्निधापितो भवति । अतः 'संयत्तयोः' युद्धाय प्रयतमानयोर्मध्ये 'यतरम्' एव योद्धारं 'मित्रं' सखायं साहाय्यं कर्तुम् 'आगच्छति' 'स जयति' इति लोके प्रसिद्धम्; एवम् 'उपभृतः' सकाशाद् 'जुहूं' जुहूगतमाज्यं 'मित्रं' सद् 'आगच्छति;' 'तेन' मित्रप्राप्तिकारणेन 'जयति' । 'तस्मात् समानयति' ॥ १७ ॥

**यजमान एव जुहू**मिति । "अत्तैव जुहूम्"—इत्याज्यानयनार्थवादद्वयम्[2] । "अध्वर्यो ! स्रुचमास्यस्व"—इत्येतस्य ब्राह्मणवद् व्याख्येयम् । उपभृतः सकाशादाज्यस्य आनेताऽध्वर्युः, शत्रोः सकाशात् 'बलिम्' उपायनद्रव्यमदनीयमन्नं च अग्रे यजमानाय प्रदापितवान् भवतीति सङ्ग्रहार्थः ॥ १८ ॥

---

१–इहापि पूर्वं २ प्र० ५ ब्रा० इत्यत्राम्नातं द्रष्टव्यम् । २–पुरस्तादिदैव १ कां० ४ प्र० ५ अ० २ ब्रा० २ कं० द्रष्टव्यम् ।

स वा ऽअनवमृशन्त्समानयति । स यद्धावमृशेद्यजमानं द्विषता भ्रातृव्येणाऽवमृशेदत्तारमाद्येनावमृशेत्तस्मादनवमृशन्त्समानयति ॥ १९ ॥

( त्य ) अथोत्तरां जुहूमध्यूहति । यजमानमेवैतद्द्विषति भ्रातृव्येऽध्यूहत्यत्तारमाद्येऽध्यूहति तस्मादुत्तरां जुहूमध्यूहति ॥ २० ॥

देवा ह वा ऽऊचुः । ( हं ) हन्त विजितमेवानु सर्व्वं यज्ञꣳ सꣳस्थापयाम यदि नोऽसुररक्षसान्यासजेयुः सꣳस्थित ऽएव नो यज्ञः स्यादिति ॥ २१

त ऽउत्तमे प्रयाजे । स्वाहाकारेणैव सर्व्वं यज्ञꣳ समस्थापयन्त्स्वाहाग्निमिति तदाग्नेयमाज्यभागꣳ समस्थापयन्त्स्वाहा सोममिति तत्सौ-

---

बलिं हारयति । अत्तैव जुहूमनु, आद्य उपभृतमनु । अत्र एवैतद्—आद्यं बलिं हारयति । तस्मात् चतुर्थे प्रयाजे समानयति ॥ १८ ॥

स वा अनवमृशन् समानयति । स यद्धावमृशेद्-यजमानं द्विषता भ्रातृव्येणावमृशेद्; अत्तारमाद्येनावमृशेत् । तस्मादनवमृशन् समानयति ॥ १९ ॥

अथोत्तरां जुहूमध्यूहति । यजमानमेवैतद् द्विषति भ्रातृव्येऽध्यूहति; अत्तारमाद्येऽध्यूहति । तस्मादुत्तरां जुहूमध्यूहति ॥ २० ॥

देवा ह वा ऊचुः—हन्त विजितमेवानु सर्वं यज्ञं संस्थापयाम, यदि नोऽसुररक्षसान्यासजेयुः—'संस्थित एव नो यज्ञः स्याद्' इति ॥ २१ ॥

त उत्तमे प्रयाजे स्वाहाकारेणैव सर्वं यज्ञं समस्थापयन् । 'स्वाहाग्निम्' इति तदाग्नेयमाज्यभागं

---

आज्यसमानयनसमये उपभृदवमर्शनं विपक्षे बाधदर्शनेन निषेधति[1]—**स वा** इत्यादिना । **अत्तारमाद्येनेति** । अत्तुरन्नस्यावमर्शो युक्तः, तद्वैपरीत्येन 'आद्येन' अन्नेनावमर्शने भोक्तुर्यजमानस्य प्रतिकूलं कृतवान् भवति ॥ १९ ॥

**अथोत्तरामिति** । 'उत्तराम्' उपभृदुपरितनीं कृत्वा 'जुहूम्' 'अध्यूहति' विधारयेत् । स्पष्टमन्यत् ॥ २० ॥

आज्यभागादिदेवतां तदनुक्रमेण निर्दिश्य स्वाहाकारेण तत्र स्तोतुमाख्यायिकामाह—**देवा ह वेति** । कृत्स्नयज्ञसमाप्त्युपायपरिज्ञानद्योतनार्थो निष्प्रत्यूहं प्रयाजलाभहर्षद्योतनार्थो वा हन्तशब्दः । 'हन्त ! विजितमेव' प्रयाजपञ्चकमपि असुरविघातमन्तरेण स्वाधीनं कृतमेव । 'अनु' तदनुसृत्य एतस्मिन्नेवान्त्यप्रयाजे 'सर्वं' प्रयाजव्यतिरिक्तं सकलमपि 'यज्ञं' 'संस्थापयाम' इति । तेषामभिप्रायं दर्शयति—**यदि न** इति । 'यदि' समापनात् प्रागेव असुरा राक्षसाश्च 'नः' अस्माकम् यज्ञमागच्छेयुः, तर्हि तस्य भङ्गः स्यात्; अतः प्रागेव समापित एवास्त्विति तेषामभिप्रायः ॥ २१ ॥

**त इति** । एवं विचार्य 'उत्तमे प्रयाजे' 'स्वाहाकारेणैव' स्वाहा—स्वाहेत्युक्त्यैव 'सर्वम्' अवशिष्टं 'यज्ञं'

---

१–'अनवमृशंश्चतुर्थम्' ( का. श्रौ. सू. ३. ३९ ) २–'उत्तरां जुहूमध्युह्य प्राचीमवहृत्य जुहोति ( श्रौ. सू. ३. ४२ ) 'एवं सर्वत्र' ( श्रौ. सू. ३. ४३ ) 'नाभिदेशे धारणम्' ( ३. ४४ ) इति च ।

म्यमाज्यभाग ७ँ समस्थापयन्त्स्वाहाग्निमिति तद्य ऽएष ऽउभयत्राच्युत ऽआग्नेयः पुरोडाशो भवति त ७ँ समस्थापयन् ॥ २२ ॥

( ञ ) अथ यथादेवत ७ं स्वाहा देवा ऽआज्यपा ऽइति तत्प्रयाजानुयाजान्त्समस्थापयन्प्रयाजानुयाजा वै देवा ऽआज्यपा जुषाणो ऽअग्निराज्यस्य व्वेत्विति तदग्नि ७ं स्विष्टकृत ७ँ समस्थापयन्नग्निर्हि स्विष्टकृत्स ऽएषोऽप्येतर्हि तथैव यज्ञः सन्तिष्ठते यथैवैनं देवाः समस्थापयंस्तस्मादुत्तमे प्रयाजे स्वाहा-स्वाहेति यजति यावन्ति हवी ७ंषि भवन्ति व्विजितमेवैतदनु सर्व्वं यज्ञ ७ँ स ७ंस्थापयति तस्माद्यदत ऽऊर्ध्वं व्विलोम यज्ञे क्रियेत न तदाद्रियेत स ७ंस्थितो मे यज्ञ ऽइति ह व्विद्यात्स हैष यज्ञो यातयामेवास यथा व्वषट्कृत ७ँ हुत ७ं स्वाहाकृतम् ॥ २३ ॥

---

समस्थापयन् । 'स्वाहा सोमम्' इति तत् सौम्यमाज्यभागं समस्थापयन् । स्वाहाग्निमिति—तद्य एष उभयत्राच्युत आग्नेयः पुरोडाशो भवति—तं समस्थापयन् ॥ २२ ॥

अथ यथादेवतम् । 'स्वाहा देवा आज्यपाः' इति—तत् प्रयाजानुयाजान् समस्थापयन्; प्रयाजानुयाजा वै देवा आज्यपाः । "जुषाणो अग्निराज्यस्य वेतु"—( तै. ब्रा. ३. ९. ६. २ ) इति तदग्निं स्विष्टकृतं समस्थापयन्, अग्निर्हि स्विष्टकृत् । स एषोऽप्येतर्हि तथैव यज्ञः संतिष्ठते—यथैवैनं देवाः समस्थापयन् । तस्मादुत्तमे प्रयाजे स्वाहास्वाहेति यजति । यावन्ति हवींषि भवन्ति,—विजितमेवैतद्—अनु सर्वं यज्ञं संस्थापयति । तस्माद् यदत ऊर्ध्वं विलोम यज्ञे क्रियेत—न तदाद्रियेत; 'संस्थितो मे यज्ञः' इति ह विद्यात् । स ह एष यज्ञो यातयामेवास—यथा वषट्कृतम्, हुतम्, स्वाहाकृतम् ॥ २३ ॥

---

'समस्थापयन्' । तत्प्रकारं विभज्य दर्शयति—**स्वाहाग्निमिती**त्यादिना । **उभयत्राच्युत आग्नेयः पुरोडाशः** इति । "यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति" इति श्रुत आग्नेयोऽष्टाकपालः पुरोडाशो दर्शे पौर्णमास्यां च नित्य इत्यर्थः ॥ २२ ॥

**अथ यथादेवतमि**ति । पौर्णमास्याममावास्यायां च विष्णुः[1], अग्नीषोमौ, प्रजापतिश्चेति विकल्पिता उपांशुयाजदेवताः ( का. श्रौ. सू. ३ । ६७ ) एकादशकपालदेवताः; अग्नीषोमौ अमावास्यायां चोभयत्र साधारणोऽष्टाकपालदेवोऽग्निः, इन्द्राग्नी—एकादशकपालदेवता, दधिपयोदेवते इन्द्रमहेन्द्राविति या दर्शपूर्णमास—प्रधानदेवताः सन्ति, ता अनतिक्रम्य ( तत्तद्देवता अनतिक्रम्य ) तत्तद्देवताकं यागं समस्थापयन्नित्यर्थः । अत्र देवतानामनियतत्वात् यथादेवतमिति सङ्ग्रहेणाभिधानम् । 'आज्यपाः' 'प्रयाजानुयाजा देवाः' ( ऐ. ब्रा. २ । २ । ८ ) समिदाद्याः स्वाहान्ताः ( ऐ. ब्रा. २ । १ । ४ ) तेभ्य इदं हविः स्वाहुतमस्त्विति तस्यार्थः । "जुषाणो अग्निः" ( तै. ब्रा. ३ । ९ । ६ । २ । ३ ) निरु. ८ । २ । ३ ।

---

१—"विष्णुर्वाऽऽमावास्याया २हौत्राम्नानात्" का. श्रौ. सू. ३ । ३ । २५ । व्यवस्थितविकल्पोऽयम् "सन्नयतोऽग्नीषोमौ असन्नयतो विष्णुरिति" इति शांखा. १ । ३ । १६–१८ । सान्नाय्ये दार्शिके दधिपयसी तदनुतिष्ठन्सन्नयन्निति ।

( न्तु ) ते देवा ऽअकामयन्त । कथं न्विमं यज्ञं पुनराप्याययेमायातयामानं कुर्याम तेनायातयाम्ना प्रचरेमेति ॥ २४ ॥

स यज्जुह्वामाज्यं परिशिष्टमासीत् । ( द्ये ) येन यज्ञꣳ समस्थापयंस्तेनैव यथापूर्वꣳ हवीꣳष्यभ्यघारयन्पुनरेवैनानि तदाप्याययन्नयातयामान्यकुर्वन्नयातयाम ह्याज्यं तस्मादुत्तमं प्रयाजमिष्ट्वा यथापूर्वꣳ हवीꣳष्यभिघारयति पुनरेवैनानि तदाप्याययत्ययातयामानि करोत्ययातयाम ह्याज्यं तस्माद्यस्य कस्य च हविषोऽवद्याति पुनरेव तदभिघारयति

---

ते देवा अकामयन्त—' कथं न्विमं यज्ञं पुनराप्याययेम, अयातयामानं कुर्याम, तेनायातयाम्ना प्रचरेम ' इति ॥ २४ ॥

स यद् जुह्वामाज्यं परिशिष्टमासीत्—येन यज्ञं समस्थापयन्;—तेनैव यथापूर्वं हवींष्यभ्यघारयन्, पुनरेवैनानि तदाप्याययन्, अयातयामान्यकुर्वन् । अयातयाम ह्याज्यम् । तस्मादुत्तमं प्रयाजमिष्ट्वा

---

निघ० ६ । २ । २ । १३ । इत्यत्र ' स्विष्टकृदग्निः ' विवक्षितः, स्विष्टकृत्त्वाभावे जोषस्यैवासम्भवात् । तेन ' स्विष्टकृतमग्निं ' तद्देवताकं यागं ' समस्थापयन् ' इत्यर्थः, सकलकर्मन्यूनातिरेकपरिहारायाग्नौ स्विष्टकृद्धोमस्यानुष्ठेयत्वात् । सैषा प्रसिद्धिः " अग्निर्हीति " ' हि '—शब्देनोच्यते ।

विभज्यान्वाख्यानस्य तात्पर्यमाह—**यथैवेति** । ' यथा ' कृत्स्नोऽपि ' यज्ञः ' समाप्तो भवति, तथा ' देवाः ' प्रतिपादितप्रकारेणान्त्यप्रयाज एव ' समस्थापयन् ' । यदर्थमाख्यायिकाऽत्र प्रपञ्चिता, तदिदानीं सार्थवादमाह—**तस्मादिति** । यावन्ति ' हवींषि ' आज्यभागादिस्विष्टकृदन्तानि, तानि सर्वाणि प्रयाजयागेनैव सम्पादितवान् भवति । समापनफलमाह—**तस्माद्यदत ऊर्ध्वमिति** । ' तस्मात् ' समापनाद्धेतोः ' अतः ' अन्त्यप्रयाजाद् ' ऊर्ध्वं ' ' विलोम ' न्यूनं विपरीतप्रकारं वा, यदि ' क्रियेत ' तद्विषयमादरं न कुर्यात्, तत्कथं समादध्यामिति चिन्तां न कुर्यादित्यर्थः । किन्तु ' यज्ञः संस्थितः ' एव ' इति ' जानीयात् । ' स एष ' उक्तविधो ' यज्ञः ', ' अयातयामेव ' अगतसार एव; ' यथा ' अपेक्षानतिक्रमेणैव यतो वषट्कारादिना उक्त आसीत्, अतो यातयामत्वशङ्का नास्तीत्यर्थः । अथवाऽपेक्षितस्य वषट्कारादेरसत्त्वात् ' स एष ' शिष्टः ' यज्ञः ' ' यातयाम एव ' निर्गतसार एव ॥ २३ ॥

अथ देवैः कृतमवशिष्टस्य यातयामत्वपरिहारं दर्शयति—**ते देवा** इति । केवलेनाङ्गेन फलानिष्पत्तेरवश्य प्रधानमनुष्ठेयम; तच्च गतसारमभूत्; अतः कथं तत्परिह्रियत इति तेषां कामना; गतसारं हि ' पुनराप्याययेम ' इति कस्तस्य प्रसङ्ग इति ? तमाह—**अयातयामानमिति** । यामपर्यन्तमवस्थितमशनादिकं यथा नीरसं भवति, एवमयमपीति; गतरसत्वसाम्यादस्यापि यातयामत्वम् ॥ २४ ॥

अत्र तैर्दृष्टमुपायं दर्शयति—**स यदिति** । ' सः '—इत्यनर्थको वाक्यालङ्कारार्थः । ' आज्यं ' जुह्वां ' परिशिष्टं ' प्रयाजहोमेभ्योऽवशिष्टमभूत्, उपयुक्तादन्यः शेषः; अतोऽस्याज्यस्य क्वचिदुपयोग इति तं दर्शयति—**येनेति** । यं प्रति यस्य रसो निर्गतः, तस्य तत एव हि आप्यायनमुचितमिति संस्थापितावशेषाज्योपादानाभिधानम् । **यथापूर्वमिति** । आग्नेयोऽग्नीषोमीयादिति हविषा पूर्वपूर्वमनतिक्रम्येत्यर्थः ।

स्विष्टकृत ऽएव तत्पुनराप्यायायत्ययातयाम करोत्यथ यदा स्विष्टकृते-ऽवद्यति न ततः पुनरभिघारयति नो हि ततः काञ्चन हविषोऽग्नावाहुतिᳫँ होष्यन्भवति ॥ २९ ॥ ४ ॥

इति चतुर्थप्रपाठके चतुर्थं ब्राह्मणम् ॥ (९. ३)

स वै समिधो यजति । प्राणा वै समिधः प्राणानेवैतत्समिन्धे प्राणैर्ह्ययं पुरुषः समिद्धस्तस्मादभिमृशेति ब्रूयाद्युपतापी स्यात्स युष्णः स्यादेव

---

यथापूर्वं हवींष्यभिघारयति, पुनरेवैनानि तदाप्याययति, अयातयामानि करोति । अयातयाम ह्याज्यम् । तस्माद् यस्य कस्य च हविषोऽवद्यति–पुनरेव तदभिघारयति, स्विष्टकृत एव तत् पुन-राप्याययति, अयातयाम करोति । अथ यदा स्विष्टकृतेऽवद्यति–न ततः पुनरभिघारयति । नो हि ततः कांचन हविषोऽग्नावाहुतिं होष्यन् भवति ॥ २९ ॥

'प्रयाजावृत् ।'

स वै ( १ ) "समिधो"–यजति । प्राणा वै समिधः, प्राणानेवैतत्समिन्धे । प्राणैर्ह्ययं पुरुषः

---

अभिघारमेवाप्यायनमित्याह–**पुनरेवेति** । आज्येनाप्यायनमेवायातयामत्वकरणम् । आज्यस्यायातयामत्व-प्रसिद्धिः 'हि'–शब्देनोच्यते । यदर्थं पुरावृत्ताभिधानम्, तदिदानीं विधत्ते–**तस्मादुत्तममिति** । "एत्य जुह्वा-ऽभिघारणं ध्रुवाया हविष उपभृतश्च" इति ( का. श्रौ. सू. ३।९२ ) । अन्यत्रावत्तशेषस्य यातयामत्वपरिहाराय पुनरभिघारणप्रदर्शनेनाज्यस्यायातयामत्वं समर्थ्यते–**तस्मादिति** । **यस्य कस्य चेति** । चरोः[1] पुरोडाशस्य वा आज्यव्यतिरिक्तस्य 'हविषः' अवत्तमिति शेषः, तमवत्तशेषमित्यर्थः । अवशिष्टस्य स्विष्टकृत्युपयोगात् 'तत्' तेनाभिघारणेन स्विष्टकृतमेवाप्यायितवान् भवति, आप्यायनेन तदवशिष्टम् 'अयातयामं करोति'; शेषाभिघारण-स्यावत्तहविषोऽभिघारणात् ।

साधारणत्वशङ्कां व्युदसितुं व्यतिरेकमाह–**अथ यदेति** । 'स्विष्टकृति' स्विष्टकृदर्थं 'यदा' एतत्साधारणं स्यात्, तदा 'ततः' स्विष्टकृतोऽवशिष्टस्याभिघारणात् न तानि आप्याययेदित्यर्थः ।

अनभिघारणे हेतुमाह–**नो हीति** । ततः हविषः सकाशात् 'काञ्चन' प्रधानस्याङ्गस्य वा सम्बन्धिनीम् 'आहुतिम्' अध्वर्युः 'होष्यन्' भवति । अतोऽभिघारणस्याप्यायनार्थत्वमिति सिद्धम् ॥ २९ ॥ ४ ॥ ( ९. ३. ) ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये प्रथमकाण्डे पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥

अथ प्रयाजान् प्रकारान्तरेणानूद्य प्रशंसति–**स वा** इत्यादिना । 'एतत्' एतेन समिद्यागेन यजमानस्य 'प्राणानेव' समिन्धितवान् भवति । प्राणानां समिद्धत्वमुपपादयति–**प्राणैर्हीति** । 'अयं पुरुषः' क्षेत्रज्ञः । प्राणोपाध्यभावे शरीरसम्बन्धायोगात् तेषां पुरुषसमिन्धनहेतुत्वम् । सैषा प्रसिद्धिः 'हि'–शब्देनोच्यते । समिधः प्राणत्वसमर्थनाय[2] प्रासङ्गिकं नैमित्तिकमभिमर्शनमाह–**तस्मादिति** । यजमानो ज्वरादिना उपतापवान्

---

१ पशोः–इति क्वचित् पाठः । २–प्राणित्वधर्मसमर्थनाय–इति क० पा० ।

तावच्छꣳसेत समिद्धो हि स तावद्भवति यद्यु शीतः स्यान्नाशꣳसेत तत्प्रा-
णानेवास्मिन्नेतद्दधाति तस्मात्समिधो यजति ॥ १ ॥

( त्यु ) अथ तनूनपातं यजति । रेतो वै तनूनपाद्रेत ऽएवैतत्सिञ्चति तस्मात्तनूनपातं यजति ॥ २ ॥

( त्य ) अथेडो यजति । प्रजा वा ऽइडो यदा वै रेतः सिक्तं प्रजायतेऽथ तदीडितमिवान्नमिच्छमानं चरति तत्प्रैवैतज्जनयति तस्मादिडो यजति ॥३॥

---

समिद्धः । तस्मादभिमृशेति ब्रूयाद्–यद्युपतापी स्यात् । स यद्युष्णः स्याद्–ऐव तावत् शंसेत, समिद्धो हि स तावद् भवति । यद्यु शीतः स्यात्–नाशंसेत । तत्प्राणानेवास्मिन्नेतद्दधाति, तस्मात समिधो यजति ॥ १ ॥

अथ ( २ ) " **तनूनपातं** "–यजति । रेतो वै तनूनपात् । रेत एवैतत् सिञ्चति । तस्मात्तनूनपातं यजति ॥ २ ॥

अथ ( ३ ) " **इडो** "–यजति । प्रजा वा इडः । यदा वै रेतः सिक्तं प्रजायते-अथ तदीडितमिवान्नमिच्छमानं चरति; तत् प्रैवैतज्जनयति–तस्मादिडो यजति ॥ ३ ॥

---

' यदि स्यात् ' तदाऽध्वर्युः समिद्यागसमये प्राणप्राबल्यायात्मना 'अभिमृशेति' यजमानं 'ब्रूयात्' । ' स यदि ' ' उष्णः ' औष्ण्यवानित्यर्थः । ' तावत्–आशंसेत ' अस्योपतापः शाम्यत्विति; समिद्यागेषु प्राणदेवतामनुध्यायन् कामयेत् । ' तावता ' तदाशंसनमात्रेणैव ' समिद्धः ' प्रबलप्राणो गतोपतापो ' भवति ' एव । तापाभावे तन्न कर्तव्यमित्याह–**यदी**ति । यस्मादेवं तस्मात् ' प्राणा एव समिधः '–इति सिद्धमित्यर्थः । **तत्प्राणानि**त्याद्युपसंहारः ॥ १ ॥

**अथ तनूनपाता**मिति । ' रेतसः सप्तमधातोः शरीरावष्टम्भकत्वेन तनूनां पालनात् तनूनपात्त्वम्; अतस्तद्यागेन स-प्राणे यजमाने ' रेत एव ' स्थापितवान् भवति ॥ २ ॥

**अथेड** इति । इड्यन्ते ईडोऽन्नानि; तदुपजीवनेन प्रजानामिड्रूपत्वम् । एतदेवोपपादयति ' यद् ' 'आसिक्तं रेतः ' 'प्रजायते'–उत्पद्यते, 'तद् ' एव 'ईडितं' सर्वैः प्रशस्यमानम् ' अन्नम् ' इच्छत् ' चरति', ' तत् ' तेन इड्यागेन ' एतत् ' रेतः ' जनयति' प्राणिरूपेणोत्पादितवान् भवति ॥ ३ ॥

---

१–अत्र यद्यपि शतपथे अविशेषेण श्रुतं " अथ तनूनपातं यजति " इति । परंतु शाखान्तरेऽन्नास्ति विशेषोऽपि । तथाहि । " वसिष्ठशुनकवाध्र्यश्वसंकृतिराजन्यवैश्यकण्वात्रिकश्यपप्रजापशुकामानां द्वितीयो नराशं॰ सस्तनूनपादन्येषाम् " इति का. श्रौ. सू. १ । ३ । २५ । इत्युपसंहृतम् । " नराशंसो अग्न आज्यस्य वेत्विति द्वितीयो वसिष्ठशुनकानामत्रिवाध्र्यश्वानां कण्वसंकृतीनां राजन्यानां प्रजाकामानां च " इति शांखा. १ । ७ । ३ । " तान्येतान्येकादशाप्रीसूक्तानि तेषां वासिष्ठमात्रेयं वाध्र्यश्वं गार्त्समदमितिनाराशंसवन्ति । मेधातिथं दैर्घतमसं प्रैषिकमित्युभयवन्ति अतोऽन्यानि तनूनपान्तिवीति " इति चाह यास्कः ( निरु० ८ । ३ । ७ ) आपस्तंबस्तु " नराशंसो द्वितीयः प्रयाजो वसिष्ठशुनकानां तनूनपादितरेषां गोत्राणां " इत्येवाह श्रौ. सू. १ । आश्वलायनेन त्विह बहून्युक्तानि तानि तत्रैव द्रष्टव्यानि । ( श्रौ. सू. ३ । २ । १ । ८ ) प्रयाजयागदेवताविचारोऽप्यस्ति । तत्र यास्केन हि–" किंदेवताः प्रयाजानुयाजाः " इत्युपक्रम्य बहुविचारानंतरं " आग्नेया इति तु स्थितिः " इति निर्णीतम् । ( निरु० ८ । ३ । ६ । ७ । ) एतदवलम्ब्य मीमांसादर्शनेऽपि बहूनि सूत्राणि रचितानि ( २ । ३ । २ ॥ ३ । १ । १५–२० ॥ ३ । ३ । ११ ॥ ४ । १ । ३३–४१ ॥ ५ । २ । १६ ॥ ९ । २ । ५६–६० ॥ १० । १ । १४–१५ । ) एतान्येवावलम्ब्याष्टावधिकरणान्यारचितानि माधवाचार्येण जैमिनीयन्यायमालायाम् ॥ इति ॥

( त्यु ) अथ बर्हिर्यजति । भूमा वै बर्हिर्भूमानमेवैतत्प्रजनयति तस्माद्बर्हिर्यजति ॥ ४ ॥

( त्यु ) अथ स्वाहास्वाहेति यजति । हेमन्तो वा ऽऋतूनाᳫं स्वाहाकारो हेमन्तो हीमाः प्रजाः स्वं वशमुपनयते तस्माद्धेमन्म्लायन्त्योषधयः प्र वनस्पतीनां पलाशानि मुच्यन्ते प्रतितरामिव वयाᳫंसि भवन्त्यधस्तरामिव वयाᳫंसि पतन्ति विपतितलोमेव पापः पुरुषो भवति हेमन्तो हीमाः प्रजाः स्वं वशमुपनयते स्वी ह वै तमर्द्धं कुरुते श्रियेऽन्नाद्याय यस्मिन्नर्द्धे भवति य ऽएवमेतद्वेद ॥ ५ ॥

देवाश्च वा ऽअसुराश्च । ( श्चो ) उभये प्राजापत्याः पस्पृधिरे ते दण्डैर्धनुर्भिर्न व्यजयन्त ते हाविजयमाना ऽऊचुर्हन्त वाच्येव ब्रह्मन्विजिगीषा-

---

अथ ( ४ ) बर्हिर्यजति । भूमा वै बर्हिः । भूमानमेवैतत् प्रजनयति; तस्माद् बर्हिर्यजति ॥ ४ ॥

अथ ( ५ ) "स्वाहास्वाहा"–इति यजति । हेमन्तो वा ऋतूनां स्वाहाकारः । हेमन्तो हीमाः प्रजाः स्वं वशमुपनयते । तस्माद्धेमन् म्लायन्त्योषधयः, प्र वनस्पतीनां पलाशानि मुच्यन्ते, प्रातितरामिव वयांसि भवन्ति, अधस्तरामिव वयांसि पतन्ति । विपतितलोमेव पापः पुरुषो भवति–हेमन्तो हीमाः प्रजाः स्वं वशमुपनयते । स्वी ह वै तमर्द्धं कुरुते श्रियेऽन्नाद्याय–यस्मिन्नर्द्धे भवति–य एवमेतद्वेद ॥ ५ ॥

'प्रयाजानुमन्त्रणम् ।'

देवाश्च वा असुराश्चोभये प्राजापत्याः पस्पृधिरे । ते दण्डैर्धनुर्भिर्न व्यजयन्त । ते हाविजयमाना

---

**अथ बर्हिरिति** । बृंहतेर्वृद्ध्यर्थाद् बर्हिःशब्दः; अतो 'बर्हिर्भूमा' खलु, अतः प्रजायमानमेतेन बर्हिर्यागेन बहुकृतमुत्पादयति ॥ ४ ॥

**अथ स्वाहे**त्यादि । यः स्वाहाकाराख्यः प्रयाजः, स 'ऋतूनां हेमन्तः' अन्तिमत्वसाम्यात् । 'हेमन्तः' खलु 'इमाः' सर्वा अपि 'प्रजाः' स्वकीयं 'वशं' प्रापयति; इतरर्तुषु तथाविधप्रजापीडाभावात् । अत एव च यास्को हेमन्तपर्यायं हिमशब्दमिच्छन् व्युदपादयत्–"हिमं पुनर्हन्तेर्वा हिनोतेर्वा" ( निरु. ४. ४. ६. ) । वशीकरणप्रकारं स्पष्टं प्रदर्शयति–**तस्मादि**त्यादिना । वशीकृतत्वाद्धेतोः 'हेमन्' हेम्नि, हेमन्ते हिमोपघातेन 'ओषधयः' वनस्पतयश्च म्लाना गलितपर्णाश्च भवन्ति । तथा 'वयांसि' पक्षिणः 'प्रतितरामिव' अत्यन्तं प्रतिकूला इव, हिमोपहतपक्षत्वादुपक्षीणा इवेत्यर्थः । 'अधस्तरामिव' पत्राणां प्रच्यवनादूर्ध्वङ्गन्तुमशक्ता इव अधः आपतन्ति । 'पुरुषः' सर्वोऽपि 'विपतितलोमेव' प्रलुप्तलोमेव कदर्थिताङ्गो 'भवति' ॥ ४ ॥

उपसंहरति–**हेमन्तो ही**ति । 'य एवमेतत्' कृत्स्नस्यापि हिमवशीकृतत्वं 'वेद' 'सः' वेदिता यस्मिन् 'अर्द्धे' अर्द्धभागे देशे 'भवति' सः 'तम्' 'अर्द्धं' देशं श्रियेऽन्नाद्याय च स्वीकुरुते खलु; स देशो धनकनकादिश्रिया, अन्नेन च समृद्धस्तदधीनो भवतीत्यर्थः ॥ ५ ॥

इत्थं प्रयाजान् प्रशस्य तदनुमन्त्रणमन्त्रान् विधातुमाख्यायिकामाह–**देवाश्च वा असुराश्चे**ति । 'प्राजा-

महै स यो नो व्वाचं व्याहृतां मिथुनेन नानुनिक्रामात्स सर्व्वं पराजयाता ऽअथ सर्व्वमितरे जयानिति तथेति देवा ऽअब्रुवंस्ते देवा ऽइन्द्रमब्रुवन्व्याहरेति ॥ ६ ॥

स ऽइन्द्रोऽब्रवीत् । ( ३ ) एको ममेत्यथास्माकमेकेतीतरेऽब्रुवंस्तदु तन्मिथुनमेवाविन्दन्मिथुनᳯ हृयेकश्चैका च ॥ ७ ॥

द्वौ ममेतीन्द्रोऽब्रवीत् । ( ३ ) अथास्माकं द्वे ऽइतीतरेऽब्रुवंस्तदु तन्मिथुनमेवाविन्दन्मिथुनᳯ हि द्वौ च द्वे च ॥ ८ ॥

त्रयो ममेतीन्द्रोऽब्रवीत् । ( ३ ) अथास्माकं तिस्र ऽइतीतरेऽब्रुवंस्तदु तन्मिथुनमेवाविन्दन्मिथुनᳯ हि त्रयश्च तिस्रश्च ॥ ९ ॥

---

ऊचुः–' हन्त वाच्येव ब्रह्मन् विजिगीषामहै, स यो नो वाचं व्याहृतां मिथुनेन नानुनिक्रामात्— स सर्वं पराजयातै, अथ सर्वमितरे जयान् ' इति । ' तथा ' इति देवा अब्रुवन् । ते देवा इन्द्रमब्रुवन् ' व्याहर ' इति ॥ ६ ॥

स इन्द्रोऽब्रवीत्–' एको मम ' इति । अथ–' अस्माकमेका ' इतीतरेऽब्रुवन् । तदु तन्मिथुनमेवाविन्दन् । मिथुनं हि–एकश्च एका च ॥ ७ ॥

' द्वौ मम ' इतीन्द्रोऽब्रवीत् । अथ ' अस्माकं द्वे ' इतीतरेऽब्रुवन् । तदु तान्मिथुनमेवाविन्दन् । मिथुनं हि–द्वौ च द्वे च ॥ ८ ॥

' त्रयो मम ' इतीन्द्रोऽब्रवीत् । अथ ' अस्माकं तिस्रः ' इतीतरेऽब्रुवन् । तदु तन्मिथुनमेवाविन्दन् । मिथुनं हि–त्रयश्च तिस्रश्च ॥ ९ ॥

---

पत्याः ' प्रजापतेः पुत्राः ' देवाः असुराश्च उभये ' स्पर्धित्वा, परस्परं दण्डधनुरादिभिर्हननसाधनैर्विजयं नालभन्त; सामर्थ्यस्य समानत्वात् । जयोपायपरिज्ञानहर्षद्योतनार्थो हन्तशब्दः, विजयप्राप्त्यै इत्थम् 'ऊचुः'–'वाच्येव ब्रह्मन् विजिगीषामहै ' । वाग्रूपे एव मन्त्रे विवदमानाः जेतुमिच्छामहै इति । 'नः' अस्माकम् ' वाचम् ' अस्मन्निरुक्तम् पुँल्लिङ्गवचनं ' मिथुनेन ' स्त्रीलिङ्गान्तप्रतिवचनाभिधानेन मिथुनं कृत्वा ' न अनुनिक्रामात् ' अनुक्रमेण न निष्क्रामेत्, नितरां न आक्रामति ' स सर्वं ' ' पराजयातै ' पराजयं प्राप्नुयात् । ' अथ ' ' सर्वं ' जेतव्यम् ' इतरे ' मिथुनेन वक्तारः, जेतृपक्षादन्ये सर्वेऽपि ' जयान् ' जयेयुः । एवं सङ्केते कृते सति ' तथेति ' अङ्गीकृत्य श्रेष्ठत्वाद् ' इन्द्रं व्याहर इत्यब्रुवन् ' ॥ ६ ॥

स इन्द्र इति । ' सः ' एवमुक्तः ' इन्द्रोऽब्रवीत् '–' एकः ' पुत्रो ' ममेति ' अस्त्विति शेषः । ' अथ ' ' इतरे ' असुराः ' अब्रुवन् '–' अस्माकमेका इति ' लिङ्गसामर्थ्यात् पुत्रीति गम्यते । अथ श्रुतिस्तेषां वचनप्रतिवचनस्य तात्पर्यमाह–' तदु ' तदा ' तत् ' तेन एवमभिहितत्वात् ' मिथुनमेव ' प्रतिज्ञाऽविरोधेन ' अविन्दन् ' लब्धवन्तः । तत्कथमिति, तदुच्यते–' एकश्चैका च ' मिलित्वा 'मिथुनं हि', लोके स्त्रीपुरुषयोर्मिथुनत्वव्यवहारात् ॥ ७ ॥

द्वौ ममेत्यादि–त्रयः पर्याया एवमेव योज्याः ॥ ८ ॥ ९ ॥ १० ॥

---

१–अस्माभिरुक्तम् इ. क. पा. । २–अनुक्रमेण नितरां न आक्रामतीत्येव क० पा० ।

चत्वारो ममेतीन्द्रोऽब्रवीत् ( ङु ) अथास्माकं चतस्र ऽइतीतरेऽब्रुवंस्तदु तन्मिथुनमेवाविन्दन्मिथुनꣳ हि चत्वारश्च चतस्रश्च ॥ १० ॥

पञ्च ममेतीन्द्रोऽब्रवीत् । ( चु ) तत इतरे मिथुनं नाविन्दन्नो ह्यत ऽऊर्द्ध्वं मिथुनमस्ति पञ्च-पञ्चेति ह्येवैतदुभयं भवति ततोऽसुराः सर्व्वं पराजयन्त सर्व्वस्माद्देवा ऽअसुरानजयन्त्सर्व्वस्मात्सपत्नानसुरान्निरभजन् ॥ ११ ॥

(जंस्त) तस्मात्प्रथमे प्रयाज ऽइष्टे ब्रूयात्। (दे) एको ममेत्येका तस्य यमहं द्वेष्मीति यद्यु न द्विष्याद्योऽस्मान्द्वेष्टि यञ्च व्वयं द्विष्म ऽइति ब्रूयात् ॥१२॥

( द्वौ ) द्वौ ममेति द्वितीये प्रयाजे । द्वे तस्य योऽस्मान्द्वेष्टि यञ्च व्वयं द्विष्म इति ॥ १३ ॥

त्रयो ममेति तृतीये प्रयाजे । तिस्रस्तस्य योऽस्मान्द्वेष्टि यञ्च व्वयं द्विष्म ऽइति ॥ १४ ॥

---

'चत्वारो मम' इतीन्द्रोऽब्रवीत् । अथ 'अस्माकं चतस्रः' इतीतरेऽब्रवन् । तदु तन्मिथुनमेवाविन्दन् । मिथुनं हि–चत्वारश्च चतस्रश्च ॥ १० ॥

'पञ्च मम' इतीन्द्रोऽब्रवीत् । तत इतरे मिथुनं नाविन्दन्, नो ह्यत ऊर्ध्वं मिथुनमस्ति–पञ्च–पञ्च इति ह्येवैतदुभयं भवति । ततोऽसुराः सर्वं पराजयन्त, सर्वस्माद् देवा असुरानजयन् । सर्वस्मात्सपत्नानसुरान् निरभजन् ॥ ११ ॥

तस्मात् प्रथमे प्रयाज इष्टे ब्रूयाद्–'एको मम इति । एका तस्य यमहं द्वेष्मि' इति । यद्यु न द्विष्याद्–'योऽस्मान् द्वेष्टि, यं च वयं द्विष्मः' इति ब्रूयात् ॥ १२ ॥

'द्वौ मम' इति द्वितीये प्रयाजे–'द्वे तस्य–योऽस्मान् द्वेष्टि, यं च वयं द्विष्मः' इति ॥ १३ ॥

'त्रयो मम' इति तृतीये प्रयाजे–'तिस्रस्तस्य–योऽस्मान् द्वेष्टि, यं च वयं द्विष्मः' इति ॥१४॥

---

**पञ्च ममेतीति** । अथ 'इन्द्रः' 'पञ्च ममेत्यब्रवीत्'; 'ततः' इतरे' असुराः 'मिथुनं' 'नाविन्दन्'; लिङ्गद्वयेऽपि रूपाविशेषात्। अलाभे कारणं श्रुतिरेवाह–**नो हीति**। हिशब्दसूचितमर्थमाह–**पञ्च-पञ्चेति** । स्त्रियाः पुंसश्चोभयोरप्यभिधानं पञ्च पञ्चेत्येव, न व्यावर्तको रूपभेदोऽस्ति; 'ततः' पञ्चप्रभृतीनां मिथुनत्वस्यालाभात् 'असुराः' 'सर्वं' विवादास्पदं जेयम् 'पराजयन्त' जेतुं नाशक्नुवन्नित्यर्थः। अतो 'देवाः' 'सर्वस्माद्' अपि जयविषयात् 'असुरान् अजयन्' । जयशब्दार्थमाह–**सर्वस्मात्सपत्नानसुरान्निरभजन्निति** ॥ ११ ॥

इदानीमर्थवादसिद्धं प्रयाजानुमन्त्रणमन्त्रान् प्रतिप्रयाजं विभज्य योजयति–**तस्मादित्यादिना** । यस्मादिन्द्रेणैको ममेत्युक्तम्, असुरेणैका ममेत्युक्तम्, 'तस्मात्' 'प्रथमे प्रयाजे' 'एको मम'–इत्यादि 'ब्रूयात्'। एवं द्वितीयादिष्वपि–'द्वौ मम', 'द्वे तस्य' इत्यादि द्रष्टव्यम्। 'यं' च 'अहं' 'द्वेष्मि' अहं यस्य द्वेषं करोमि, 'तस्य' एका पुत्री स्यादिति ब्रूयादिति प्रथमप्रयाजानुमन्त्रणमन्त्रशेषस्यार्थः । पुत्र्या रक्षणप्रदानादौ बहुतरदुःखसम्भवात् तच्छत्रोराशा स्यात् । यदि कस्मैचिदपि द्वेषं न कुर्यात्, तदा 'योऽस्मानित्यादि

---

१–"एको मम एका तस्य योऽस्मान्द्वेष्टि यञ्च व्वयं द्विष्म इत्येवं मिथुनैर्यथासंख्यम्" इति का. श्रौ. सू. ३ । ३ । ३ । एते च मंत्रा भाषिकस्वरेण पठनीयाः मंत्रत्वादिति केचित् ।

चत्वारो ममेति चतुर्थे प्रयाजे । चतस्रस्तस्य योऽस्मान्द्वेष्टि यञ्च वयं द्विष्म ऽइति ॥ १५ ॥

पञ्च ममेति पञ्चमे प्रयाजे । न तस्य किञ्चन योऽस्मान्द्वेष्टि यञ्च वयं द्विष्म ऽइति स पञ्च-पञ्चेत्येव भवन्पराभवति तथास्य सर्व्वꣳसंवृङ्क्ते सर्व्व-स्मात्सपत्नान्निर्भजति य ऽएवमेतद्वेद ॥ १६ ॥ ५ ॥

इति चतुर्थप्रपाठके पञ्चमं ब्राह्मणम् [ ५ । ४ ]

पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥

---

'चत्वारो मम' इति चतुर्थे प्रयाजे-'चतस्रस्तस्य-योऽस्मान् द्वेष्टि, यं च वयं द्विष्मः' इति ॥ १५॥

'पञ्च मम' इति पञ्चमे प्रयाजे-'न तस्य किंचन-योऽस्मान् द्वेष्टि, यं च वयं द्विष्मः' इति । स पञ्च पञ्चेत्येव भवन् पराभवति। तथास्य सर्वं संवृङ्क्ते-सर्वस्मात् सपत्नान् निर्भजति-य एवमेतद्वेद॥ १६

---

ब्रूयात् । वस्तुतो द्वेषाभावेऽपि रागादिभिर्द्वेषाचरणात् तन्निबन्धनं द्वेषमभिप्रेत्य 'यं च वयं द्विष्मः' इत्यभिधानम् ॥ १२-१५ ॥

**पञ्च ममेतीति** । 'पञ्चमे प्रयाजे पञ्च ममेति' ब्रूयात् । पूर्ववद् द्वेष्टरि विपरीतफलकामनायां प्राप्तायामाह-**न तस्य किञ्चनेति** । तस्य 'द्वेषकृतः शत्रोः 'किञ्चन' पञ्च पुत्राः पञ्च कन्या वा स्युरिति 'न' ब्रूयादित्यर्थः । असुरैः पञ्चसङ्ख्यायां मिथुनरूपस्य वचनस्यादर्शनादिति भावः । उक्तार्थज्ञानं प्रशंसति-**पञ्च-पञ्चेत्येवेति** । 'सर्वं' 'संवृङ्क्ते' वर्जयति, स्वयं तत्प्राप्नोतीत्यर्थः ॥ १६ ॥ ५ ॥ [ ५. ४. ]

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये
प्रथमकाण्डे पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥

[२]वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं;
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलतावेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो;
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः;
कार्पासीयं कृपावान् गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा;
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण
विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये प्रथमकाण्डे
पञ्चमाध्यायः समाप्तः ॥ ५ ॥

---

१-उक्तमिदं सर्वं कात्यायनेनापि-'प्रयाजानुमन्त्रणमेको ममैका तस्य योऽस्मान् द्वेष्टि यं च वयं द्विष्म इति' ( श्रौ. सू. ३ । ४५ ) 'एवं मिथुनैर्यथासंख्यम्' ( श्रौ. सू. ३ । ४६ ) 'न तस्य किंचनेति पञ्चमे' ( श्रौ. सू. ३ । ४७ ) अग्रे चात्रानुक्तः काम्यप्रयाजानुमन्त्रणविधिरपि-'त्विषिमानपचितिमान्यशस्वी ब्रह्मवर्चस्यप्रमाद इति च' ( श्रौ. सू. ३. ४८ ) इति । अत्र च भूयासमित्यध्याहार उक्तो वृत्तिकारेण । २-श्लोका इमेऽत्र न सन्ति क्वचित् पुस्तके ।

# अथ प्रथमकाण्डे षष्ठाध्याये प्रथमं ब्राह्मणम् ।

ऋतुवो ह वै देवेषु यज्ञे भागमीषिरे । आ नो यज्ञे भजत मा नो यज्ञाद-न्तर्गतास्त्वेव नोऽपि यज्ञे भाग ऽइति ॥ १ ॥

तद्धै देवा नु जज्ञुः । (स्तु) तु ऽऋतुवो देवेष्वुजानत्स्वसुरानुपावर्तन्ताप्रिया-न्देवानां द्विषतो भ्रातृव्यान् ॥ २ ॥

( व्यांस्तु ) तु हैतामेधतुमेधांचक्रिरे । यामेषामेतामनुशृण्वन्ति कृषन्तो ह स्मैव पूर्वे व्वुपन्तो युन्ति लुनन्तोऽपरे मृणुन्तः शश्वद्धैभ्योऽकृष्टपच्या ऽएवौषधयः पेचिरे ॥ ३ ॥

---

"प्रयाजानामिष्टौ प्राथम्यम्" ।

ऋतवो ह वै देवेषु यज्ञे भागमीषिरे, आ नो यज्ञे भजत, मा नो यज्ञादन्तर्गत, अस्त्वेव नोऽपि यज्ञे भाग इति ॥ १ ॥

तद्धै देवा न जज्ञुः । त ऋतवो देवेष्वजानत्स्वसुरानुपावर्तन्त--अप्रियान् देवानां द्विषतो भ्रातृव्यान् २

ते हैतामेधतुमेधाञ्चक्रिरे--यामेषामेतामनुशृण्वन्ति । कृषन्तो ह स्मैव पूर्वे वपन्तो यन्ति लुनन्तोऽपरे मृणन्तः, शश्वद्धैभ्योऽकृष्टपच्या एवौषधयः पेचिरे ॥ ३ ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अथ वसन्तादिप्रयाजदेवेषु कथमग्नेः सम्बन्ध इति तदुपपादनायाख्यायिकामाह—**ऋतवो ह वा** इति । 'ऋतवः' पुरा दर्शपूर्णमासादियज्ञे 'भागम्' 'ईषिरे' ऐच्छन् । ते देवान् प्रति अस्मानपि 'यज्ञे' भागिनः कुरुत । 'यज्ञाद्' अस्मान् 'अन्तरितान्' 'मा' कुरुत । अतोऽस्माकम् 'अपि' यज्ञे भागोऽस्त्वित्यब्रुवन् ॥ १ ॥

**तद्धै देवा** नेति । 'तत्' कार्यं 'देवाः' 'न' प्राजानन् । तेषु 'अजानत्सु' कथमेतैः सह वासेनेति तद्वैरिभूतान् द्वेषकारिणः 'असुरान्' उपागत्य—॥ २ ॥

**ते हैतामि**ति । तेषु 'याम्' ऋद्धिं देवाः श्रुत्वा व्यथन्ते, तादृशीम् 'एधतुम्' ऋद्धिमसुरेषु प्रवर्द्धयाञ्चक्रुः । तेषु प्रवर्द्धितेषु सत्सु असुराः केचन वपनात्पूर्वभागिनः सन्तः वृष्टिबाहुल्यात् 'कृषन्तो' 'यन्ति,' किल, केचन कृष्टे क्षेत्रे बीजानि 'वपन्तो' यन्ति, उप्तबीजाश्च केचन सस्यानि सम्यक् फलितानीति परस्परमुच्चारयन्तः परिणतानि सस्यानि 'लुनन्तो' यन्ति, केचन लूनानि व्रीहिफलानि 'मृणन्तः' प्रहरन्तः खले बलीवर्दाक्रमणादिना स्तम्बाद्धान्यं पृथक्कुर्वन्तः; तथा असुरदेशे खलु कर्षानपेक्षिता नीवारादयो मुहुर्मुहुः सर्वदा परिपक्वा आसन् ॥ ३ ॥

---

१-देवेषु अन्वायन्ते-इति पाठान्तरम् ।

तद्धै देवानामाग ऽआस । कनीय ऽइन्न्वतो द्विषन्द्विषते ऽरातीयति किम्वे-तावन्मात्रमुपजानीत यथेदमितोऽन्यथासदिति ॥ ४ ॥

ते होचुः । ( ऋ ) ऋतूनेवानुमन्त्रयामहा ऽइति केनेति प्रथमानेवैनान्यज्ञे यजामेति ॥ ५ ॥

स हाग्निरुवाच । ( चा ) अथ यन्मां पुरा प्रथमं यजथ क्वाहं भवानीति न त्वामायतनाच्च्यावयाम ऽइति ते यदृतूनभिह्वयमाना अथाग्निमायतनान्ना-च्यावयंस्तस्मादग्निरच्युतो न ह वा ऽआयतनाच्च्यवते यस्मिन्नायतते भवति य ऽएवमेतमग्निमच्युतं वेद ॥ ६ ॥

ते देवा ऽअग्निमब्रुवन् । ( न्प ) परेह्येनांस्त्वमेवानुमन्त्रयस्वेति स हेत्या-

---

तद्धै देवानामाग आस । ' कनीय इन्न्वतो द्विषन्, द्विषतेऽरातीयति; किमु एतावन्मात्रमुपजानीत--यथेदमितोऽन्यथाऽसदिति ' ॥ ४ ॥

ते होचुः--' ऋतूनेवानुमन्त्रयामहै'--इति । केनेति । ' प्रथमानेवैनान् यज्ञे यजाम ' इति ॥ ५ ॥

स हाग्निरुवाच--' अथ यन्मां पुरा प्रथमं यजथ. क्वाहं भवानि ' इति । ' न त्वामायतनात् च्यावयाम ' इति । ते यदृतूनभिह्वयमाना अथाग्निमायतनात्--नाच्यावयन्--तस्मादग्निरच्युतः । न ह वा आयतनाच्च्यवते--यस्मिन्नायतते, भवति--य एवमेतमग्निमच्युतं वेद ॥ ६ ॥

ते देवा अग्निमब्रुवन्--' परेहि, एनांस्त्वमेवानुमन्त्रयस्व ' इति । स हेत्याग्निरुवाच--' ऋतवः !

---

तद्धै देवानामिति । एवं वैरिष्वसुरेषु समृद्धेषु सत्सु ' देवानां ' मनसि ' आगः ' आसीत् । कथमिति तदुच्यते--' अतः ' अस्मात्, इन्नु--इति अतिक्रमाद्धेतोः ' द्विषन् ' द्वेषकार्येवासुरसंघो ' द्विषते ' देवसङ्घाय 'अरातीयति' शात्रवमाचरितुमिच्छति । एतत् ' कनीयः इन्नु ' निकृष्टं खलु । ' अतः ' प्रवृद्धैः सह कलहो न कार्य्यः । किन्तु 'इदम्' ऋत्वतिक्रमलक्षणं विच्छिन्नं कार्यम् ' इतः ' अस्मात् इदानीं प्रवृत्तप्रकारात् ' अन्यथा ' प्रकारान्तरेण समाहितात्मना 'असद्' भवेत् । ' एतावन्मात्रम् ' अवबुद्ध्यध्वमिति परस्परमब्रुवन् ॥ ४ ॥

ते होचुरिति । उक्त्वा च, ' ऋतूनेव अनुमन्त्रयामहै '--इति निश्चित्य तेषामुक्तो वः (?) ' केन ' इतर-देवेभ्यः ' प्रथमानेव ' ' यज्ञे ' यजनमङ्गीचक्रुः ॥ ५ ॥

अथ प्राथम्ये तेभ्योऽवक्लृप्ते सत्याह--स हाग्निरिति । 'अग्निः ' पूर्वं ' माम् ' एव 'प्रथमम्' इष्टवन्तः इदानीं ते प्रथमं यष्टव्याश्चेत् ' अहं ' कुत्र स्थाने यज्ञे 'भवानीति' अब्रवीत् । अथ तेनोक्तास्ते तमग्निं स्वस्था-नात् 'न च्यावयाम इति' प्रतिश्रुत्य, ऋत्वाह्वानसमये ' अग्निं ' स्वस्थानात् प्रच्युतं न चक्रुः । ' तस्मात् ' ' अग्निः ' स्वस्थानात् ' अच्युतः ' अभूत् । ' एवं ' ' यः ' कोऽपि अग्नेरच्युतत्वप्रकारं जानाति, सोऽपि स्वस्था-नान्न च्यवत इति उक्तार्थज्ञानफलम् ॥ ६ ॥

ते देवा इति । अथ ' ते देवा ' अग्नेः स्थानस्य पालनदाक्षिण्यादृत्वनुमन्त्रणे अग्निमेव प्रेरयामासुः ।

---

१-पा० सू० ३ । १ । १० ।

ग्निरुवाचुऽर्तवोऽविदं वै वो देवेषु यज्ञे भागमिति कथं नोऽविद ऽइति प्रथमानेव वो यज्ञे यक्ष्यन्तीति ॥ ७ ॥

तु ऽऋतवोऽग्निमब्रुवन् । (ब्रा) आ व्वयन्त्वामस्मासु भजामो यो नो देवेषु यज्ञे भागमविद ऽइति स ऽएषोऽग्निर्ऋतुष्वाभक्तः समिधोऽअग्ने तनूनपादग्न ऽइडो ऽअग्ने बर्हिरग्ने स्वाहाग्निमित्याभक्तो ह वै तस्यां पुण्यकृत्यायां भवति यामस्य समानो ब्रुवाणः करोत्यग्निमते ह वा ऽअस्माऽअग्निमन्त ऽऋतव ओषधीः पचन्तीदꣳ सर्व्वं य ऽएवमेतमग्निमृतुष्वाभक्तं व्वेद ८

तदाहुः । ( यं ) यदुत्तमान्प्रयाजानावाहयन्त्यथ कस्मादेनान्प्रथमान्यजन्तीत्युत्तमान्ह्येनान्यज्ञोऽवाकल्पयन्प्रथमान्वो यजामेत्यब्रुवंस्तस्मादुत्तमानावाहयन्ति प्रथमान्यजन्ति ॥ ९ ॥

---

अविदं वै वो देवेषु यज्ञे भागमिति' । 'अथ नोऽविदः' इति, 'प्रथमानेव वो यज्ञे यक्ष्यन्ति' इति॥७॥

त ऋतवोऽग्निमब्रुवन्–' आ वयं त्वामस्मासु भजामो यो नो देवेषु यज्ञे भागमविद ' इति । स एषोऽग्निर्ऋतुष्वाभक्तः–" समिधोऽअग्ने "–" तनूनपादग्ने "–" इडोऽअग्ने" " बर्हिरग्ने " स्वाहाग्निम् " ( तै. ब्रा. ३. ९. ९ ) इति । आभक्तो ह वै तस्यां पुण्यकृत्यायां भवति, यामस्य समानो ब्रुवाणः करोति, अग्निमते ह वा अस्मा अग्निमन्त ऋतव ओषधीः पचन्तीदं सर्वम्, य एवमेतमग्निमृतृष्वाभक्तं वेद ॥ ८ ॥

तदाहुः—' यद् उत्तमान् प्रयाजानावाहयन्ति–अथ कस्मादेनान् प्रथमान् यजान्ति ' इति ।

---

' सः ' तथेत्यङ्गीकृत्य ऋतूनागत्य ' उवाच ' आह । **ऋतव** इति । ' वः ' युष्माकं 'यज्ञे' 'देवेषु' मध्ये ' भागं ' बुद्धवानस्मि ' इति ' । केन प्रकारेणेति पृष्टः, ' प्रथमानेव ' सतो युष्मान् ' यक्ष्यन्ति '—' इति 'अब्रवीत् ॥ ७॥

**त ऋतव** इति । अथ सन्तुष्टाः ' ऋतवः ' हे अग्ने ! त्वं ' यज्ञे ' अस्माकं प्रथमम् ' अविदः ; ' अतः ' त्वाम् ' ' अस्मासु ' मध्ये ' आभजामः '–इति ' अब्रुवन् ' । यत एवमतः ' अग्निः ' ' ऋतुषु ' भागं लब्धवान् । ' समिधो अग्ने '–'तनूनपादग्ने '–' इडः ' इत्याद्याभजनप्रकारप्रदर्शनम् । उक्तार्थज्ञानं प्रशंसति–**आभक्तो ह वा** इति । ' अस्य ' ज्ञातुरहं ' समानः ' इति स्वात्मानं ' ब्रुवाणः ' कश्चित्पुरुषो ' यां पुण्यकृत्यां ' यत्पुण्यं कर्म दर्शपूर्णमासादिकं ' करोति ' तत्रासावपि भागवान् भवति; तथा ' एवम् ' उक्तप्रकारेण ' अग्निमृतुष्वाभक्तं ' ' यो वेद ' ' अस्मै ' अग्निमते उक्तार्थज्ञानसामर्थ्येन यागस्यावश्यं लाभादग्निमान् भवत्येव । अतोऽस्मै खलूक्तप्रकारेणाग्निना सहिता ' ऋतवः ' ' ओषधीः ' व्रीहियवादिकाः स्व-कालोचिताः पाकं कुर्वन्ति । कथं पक्तव्या ओषधयः ? कियन्तः ? इति, तत्राह–**इदं सर्वमिति** । यद्यल्लोके परिदृश्यमानं तदिदं सर्वमोषधिजातमित्यर्थः ॥ ८ ॥

प्रयाजदेवतानां प्राथम्यं ब्रह्मवादिनां चोद्यमुखेन प्रशंसति–**तदाहुरिति** । आवाहनक्रमेणैव सर्वत्र यागो दृष्टः; अत्र कथं वैलक्षण्यमिति तेषामाशयः । तैर्दृष्टं तत्कारणं दर्शयति–**उत्तमान् हीति** । ' हि ' यस्मात् प्रथमभाग-

---

१–समिध इत्यादीनि प्रयाजमन्त्रप्रतीकानि । ते च मन्त्राः का. श्रौ. सू. उक्ताः । तथा तै. ब्रा. ३ । ३ । ५ तै. सं० २ । ६।१। अत्रापि विहिताः सन्तीति ।

**चतुर्थेन वै प्रयाजेन देवाः । ( ० ) यज्ञमाप्नुवंस्तं पञ्चमेन समस्थापयन्नथ यदतऽऊर्ध्वमसꣳस्थितं यज्ञस्य स्वर्गमेव तेन लोकꣳसमाश्नुवत ॥ १० ॥**

**ते स्वर्गं लोकं यन्तः । ( न्तोऽ ) असुररक्षसेभ्यऽआसङ्गाद्विभयाञ्चक्रुस्तेऽग्निंपुरस्तादकुर्वत रक्षोहणꣳरक्षसामपहन्तारमग्निं मध्यतोऽकुर्वत रक्षोहणꣳरक्षसामपहन्तारमग्निं पश्चादकुर्वत रक्षोहणꣳरक्षसामपहन्तारम् ॥ ११**

**( ॐ ) स यद्येनान्पुरस्तात् । ( द ) असुररक्षसान्यासिसङ्क्षन्नग्निरेव तान्यपाहन्रक्षोहा रक्षसामपहन्ता यदि मध्यत ऽआसिसङ्क्षन्नग्निरेव तान्यपाहन्रक्षोहा रक्षसामपहन्ता यदि पश्चादासिसङ्क्षन्नग्निरेव तान्यपाहन्रक्षोहा रक्षसामपहन्तात ऽएवꣳसर्वतोऽग्निभिर्गुप्यमानाः स्वर्गं लोकꣳसमाश्नुवत ॥ १२ ॥**

---

'उत्तमान् ह्येनान् यज्ञेऽवाकल्पयन्—प्रथमान् वो यजाम'—इत्यब्रुवन्—तस्मादुत्तमानावाहयन्ति, प्रथमान् यजन्ति ॥ ९ ॥

चतुर्थेन वै प्रयाजेन देवा यज्ञमाप्नुवन्, तं पञ्चमेन समस्थापयन्, अथ यदत ऊर्ध्वमसंस्थितं यज्ञस्य स्वर्गमेव तेन लोकं समाश्नुवत ॥ १० ॥

ते स्वर्गं लोकं यन्तोऽसुररक्षसेभ्य आसङ्गात् बिभयाञ्चक्रुः । तेऽग्निं पुरस्तादकुर्वत—रक्षोहणं रक्षसामपहन्तारम्, अग्निं मध्यतोऽकुर्वत—रक्षोहणं रक्षसामपहन्तारम्, अग्निं पश्चादकुर्वत रक्षोहणं रक्षसामपहन्तारम् ॥ ११ ॥

स यद्येनान् पुरस्तादसुररक्षसान्यासिसङ्क्षन्—अग्निरेव तान्यपाहन्—रक्षोहा रक्षसामपहन्ता । यदि मध्यत आसिसङ्क्षन्—अग्निरेव तान्यपाहन्—रक्षोहा रक्षसामपहन्ता । यदि पश्चादासिसङ्क्षन्—अग्निरेव तान्यपाहन्—रक्षोहा रक्षसामपहन्ता । त एवं सर्वतोऽग्निभिर्गुप्यमानाः स्वर्गं लोकं समाश्नुवत ॥ १२ ॥

---

कल्पनासमये 'एनान्' 'उत्तमान्' चरमभाविन एव देवताः कल्पितवन्तः, पश्चादपगतानां तेषां पुनरागमनाय यतो 'वः' युष्मान् 'प्रथमान्' यजाम इत्यब्रुवन्' 'तस्मात्' उक्तविधं वैलक्षण्यं सञ्जातमिति । अत्रैषामावाहनान्तिमत्वं "देवा ॐ आज्यपाॐआ वह" इत्यभिधानाद् द्रष्टव्यम् । आज्यपाः खलु प्रयाजानुयाजदेवाः ॥ ९ ॥

आदिमध्यावसानेष्वनुष्ठेयानामाज्यभागप्रधानस्विष्टकृद्यागानामग्निदेवताकत्वमभिधातुमाह—**चतुर्थेने**ति । चतुर्थप्रयाजेनैव पुरा 'देवाः' दर्शपूर्णमासाख्यं 'यज्ञम्' आप्त्वा 'तं पञ्चमेन समस्थापयन्' तत्र यष्टव्यान् देवान् क्रमेणोद्दिश्य स्वाहाकृतत्वात् । 'यदत ऊर्ध्वं' 'यज्ञस्य' अवशिष्टमाज्यभागाद्यस्ति, तेन स्वर्गं लोकं 'समाश्नुवत' ॥ १० ॥

**ते स्वर्गमि**ति । असुरेभ्यो राक्षसेभ्यश्च तेषाम् 'आसङ्गाद्' निरोधाद्भीता आसन्; तत्परिहाराय 'रक्षोहन्तारम्' 'अग्निं' 'पुरस्तात्' पूर्वभागे रक्षसां वधाय स्थापितवन्तः । तथा मध्ये पश्चाच्च—अग्निमेव रक्षोहन्तारं चक्रुः ॥ ११ ॥

**स यद्येनानि**ति । अतः कारणात् 'सः' रक्षोहा 'अग्निः', स्वर्गं प्रति गच्छतः 'एनान्' देवान् असुरराक्षसाश्च 'पुरस्तात्' पूर्वदेशे 'आसिसङ्क्षन्' आसङ्गं प्रतिबन्धमैच्छन्, 'तानि' असुररक्षांसि चापहतवान् एवं मध्ये, पश्चाद्देशे च ॥ १२ ॥

तथो ऽएवैष ऽएतत् । ( च ) चतुर्थेनैव प्रयाजेन यज्ञमाप्नोति तं पञ्चमेन सᳬंस्थापयत्यथ यदत ऽऊर्ध्वमसᳬंस्थितं यज्ञस्य स्वर्गमेव तेन लोकᳬं समश्नुते ॥ १३ ॥

स यदाग्नेयमाज्यभागं यजति । ( त्य ) अग्निमेवैतत्पुरस्तात्कुरुते रक्षोहणᳬं रक्षसामपहन्तारमथ यदाग्नेयः पुरोडाशो भवत्यग्निमेवैतन्मध्यतः कुरुते रक्षोहणᳬं रक्षसामपहन्तारमथ यदग्निᳬं स्विष्टकृतं यजत्यग्निमेवैतत्पश्चात्कुरुते रक्षोहणᳬं रक्षसामपहन्तारम् ॥ १४ ॥

( ᳬं ) स यद्येनं पुरस्तात् । ( द ) असुररक्षसान्यासिसङ्क्षन्त्यग्निरेव तान्यपहन्ति रक्षोहा रक्षसामपहन्ता यदि मध्यत ऽआसिसङ्क्षन्त्यग्निरेव तान्यपहन्ति रक्षोहा रक्षसामपहन्ता यदि पश्चादासिसङ्क्षन्त्यग्निरेव तान्यपहन्ति रक्षोहा रक्षसामपहन्ता स ऽएवᳬं सर्वतोऽग्निभिर्गुप्यमानः स्वर्गᳬं लोकᳬं समश्नुते ॥ १५ ॥

---

तथो एवैष एतच्चतुर्थेनैव प्रयाजेन यज्ञमाप्नोति, तं पञ्चमेन संस्थापयति, अथ यदत ऊर्ध्वमसंस्थितं यज्ञस्य—स्वर्गमेव तेन लोकं समश्नुते ॥ १३ ॥

स यदाग्नेयमाज्यभागं यजति—अग्निमेवैतत् पुरस्तात्कुरुते—रक्षोहणं रक्षसामपहन्तारम् । अथ यदाग्नेयः पुरोडाशो भवति—अग्निमेवैतन्मध्यतः कुरुते—रक्षोहणं रक्षसामपहन्तारम् । अथ यदग्निं स्विष्टकृतं यजति—अग्निमेवैतत् पश्चात्कुरुते—रक्षोहणं रक्षसामपहन्तारम् ॥ १४ ॥

स यद्येनं पुरस्तादसुररक्षसान्यासिसङ्क्षन्ति—अग्निरेव तान्यपहन्ति—रक्षोहा रक्षसामपहन्ता । यदि मध्यत आसिसङ्क्षन्ति—अग्निरेव तान्यपहन्ति—रक्षोहा रक्षसामपहन्ता । यदि पश्चादासिसङ्क्षन्ति—अग्निरेव तान्यपहन्ति—रक्षोहा रक्षसामपहन्ता । स एवं सर्वतोऽग्निभिर्गुप्यमानः स्वर्गं लोकं समश्नुते १५

---

**तथो एवैष** इति । अत्र सर्वत्राग्निभिरादिमध्यान्तस्थितै रक्षिताः स्वर्गलोकं प्राप्ता यथा देवास्तथैवेदानींन्तनोऽपि यजमानः, चतुर्थेन प्रयाजेन यज्ञं स्वाधीनं कृत्वा पञ्चमेन समाप्य तदूर्ध्वभाविना असंस्थितेनावशिष्टेन यज्ञेन पुरस्तान्मध्ये पश्चाच्चाग्निनैव यज्ञविघातकान् घातयित्वा निर्बाधं स्वर्गमश्नुते ॥ १३ ॥

अग्नेः पुरस्तान्मध्ये पश्चाच्च स्थापनप्रकारं दर्शयति—**स यदाग्नेयमि**त्यादिना । सौम्यस्याप्याज्यभागस्य संभवाद् ' आग्नेयम् '—इति विशेषितम् । प्रथममाज्यभागमाग्नेयं कृतवान् यजमानः स्वर्गप्राप्तिसमये ' अग्निमेव ' रक्षोहननाय ' पुरस्तात् ' कृतवान् भवति । अनेन प्रथममाग्नेयाज्यभागं कुर्यादिति ह लभ्यते । एवमाग्नेयेनाष्टाकपालयागेनाग्निं मध्यतः कुरुते आग्नेयेन स्विष्टकृता च पश्चात् ॥ १४ ॥

त्रिष्वपि यागेष्वाग्नेयत्वकरणस्य प्रयोजनमाह—**स यद्येनं पुरस्ता**दित्यादिना । एतत्पूर्ववाक्यवद् व्याख्येयम्[1] ॥ १५ ॥

---

१—द्वादशकण्डिकावदित्यर्थः ।

स युद्येनं पुरुस्ताद् । ( द्य ) यज्ञस्यानुव्याहुरेत्तं प्रति ब्रूयान्मुख्यामार्ति-मारिष्यस्यन्धो वा बधिरो वा भविष्यसीत्येता वै मुख्या ऽआर्तयस्तुथा हैव स्यात् ॥ १६ ॥

यदि मध्यतो यज्ञस्यानुव्याहुरेत् । ( त्तं ) तं प्रति ब्रूयादप्रजा ऽअपशुर्भ-विष्यसीति प्रजा वै पशवो मध्यं तुथा हैव स्यात् ॥ १७ ॥

युद्यन्ततो यज्ञस्यानुव्याहुरेत् । ( त्तं ) तं प्रति ब्रूयादप्रतिष्ठितो दरिद्रः क्षिप्रेऽमुं लोकुमेष्यसीति तुथा हैव स्यात्तस्मादु ह नानुव्याहारीव स्यादुत ह्येवंवित्परो भवति ॥ १८ ॥

---

स यद्येनं पुरस्ताद् यज्ञस्यानुव्याहरेत्–तं प्राति ब्रूयाद्–'मुख्यामार्तिमारिष्यासि–अन्धो वा बधिरो वा भविष्यासि ' इति । एता वै मुख्या आर्तयः । तथा हैव स्यात् ॥ १६ ॥

यदि मध्यतो यज्ञस्यानुव्याहरेत्–तं प्राति ब्रूयाद्–' अप्रज्ज अपशुर्भविष्यसि ' इति । प्रजा वै पशवो मध्यम्, तथा हैव स्यात् ॥ १७ ॥

यद्यन्ततो यज्ञस्यानुव्याहरेत्–तं प्रति ब्रूयाद्–'अप्रातिष्ठितो दरिद्रः क्षिप्रेऽमुं लोकमेष्यासि' इति । तथा हैव स्यात् । तस्मादु ह नानुव्याहारीव स्यात् । उत ह्येवंवित्परो भवति ॥ १८ ॥

---

" स एवं सर्वतोऽग्निभिर्गुप्यमानः "–इति यदग्निरक्षणमुक्तम्, तत्प्रशंसनाय कञ्चिद् दृष्टं प्रयोजनमाह–**स यद्येनमिति** । ' सः ' अनुव्याहारी निन्दकः ' एनम् ' अग्निना रक्षितं यजमानं ' यज्ञस्य ' ' पुरस्तात् ' पूर्वभागे ' अनुव्याहरेत् ' वैकल्यविषयं वाक्यं ब्रूयात्, ' तं ' निन्दकं ' प्रति ' स यजमानोऽपि ' ब्रूयात् '– ' मुख्यामार्त्तिमारिष्यसि,–अन्धो वा बधिरो वा भविष्यसीति ' । एषैव मुख्याऽऽर्त्तिरित्याह–' एताः ' अन्धबधिरादयः, ज्वरशिरोव्यथादितात्कालिकीमार्त्तिमपेक्ष्यैतासां मुख्यत्वम् ॥ १६ ॥

**यादि मध्यत** इत्यादि । स्पष्टम् ॥ १७ ॥

**यद्यन्तत** इति ' क्षिप्रे ' अविलम्बितस्वकाले भूमौ प्रतिष्ठारहितो ' दरिद्रः ' सन् ' अमुं लोकम् ' स्वर्गम् ' एष्यसि ' ' इति ' । अत्र स्वर्गस्य नाशात्मकत्वात् ' अमुं लोकम् ' इत्येतदस्माल्लोकात्प्रच्युतिमात्रे पर्यवस्यति । किमेवमभिधानमात्रेण तथाविधाऽसुखप्राप्तिः सिद्धा स्यादित्याशङ्क्योक्तम्–**तथा हैव स्यादिति** । उक्तप्रकारः स्यादेवेत्यर्थः । यस्मादेवमवश्यं फलम्, ' तस्मात् ' ' अनुव्याहारीव न स्यात् ' यज्ञस्य निन्दको न भवेदिति विधिः । उक्तार्थज्ञं प्रशंसति–न केवलं यष्टैव; अपि तु ' एवंविद् ' अपि स्वदूषकात् स्वयं ' परः ' उत्कृष्टो ' भवति ' । अथवा–एवं वेदनायां तात्पर्य्यवान् भवेदिति व्याख्येयम् । तस्मादाज्यभागादीनामाग्नेयत्वकरणं प्रशस्तमिति तात्पर्यार्थः ॥ १८ ॥

---

१–वयं तु ब्रूमः । नेह मुख्यशब्दः प्रधानार्थः । किन्तु मुखे मुखप्रदेशे भवा पीडा मुख्या । यज्ञस्य मुखेऽनुव्याहरणादनुव्याहर्तुरपि मुखभागस्थेष्वक्षिकर्णादिष्वेव पीडा जायते–इति तात्पर्यम् ॥

संव्वत्सरꣳ ह वै प्रयाजैर्जयञ्जयति । स ह न्वेवैनं जयति योऽस्य द्वाराणि व्वेद किꣳहि स तैर्गृहैः कुर्याद्यानन्तरतो न व्यवव्विद्याद्यथायथास्य ते भवन्ति तस्य व्वसन्त एव द्वारꣳ हेमन्तो द्वारं तं वा एतꣳ संव्वत्सरꣳ स्वर्गं लोकं प्रपद्यते सर्व्वं वै संव्वत्सरः सर्व्वं वा ऽअक्षय्यमेतेनो हास्याक्षय्यꣳसुकृतं भवत्यक्षय्यो लोकः ॥ १९ ॥

( स्तु ) तदाहुः । किन्देवत्यान्याज्यानीति प्राजापत्यानीति ह ब्रूयादनिरुक्तो वै प्रजापतिरनिरुक्तान्याज्यानि तानि हैतानि यजमानदेवत्यान्येव यजमानो ह्येव स्वे यज्ञे प्रजापतिरेतेन ह्युक्ता ऽऋत्विजस्तन्वते तं जनयन्ति ॥ २० ॥

सऽआज्यस्योपस्तीर्य । द्विर्हविषोऽवदायाथोपरिष्टादाज्यस्याभिघारयति

---

संवत्सरं ह वै प्रयाजैर्जयन् जयति । स ह न्वेवैनं जयति–योऽस्य द्वाराणि वेद । किं हि स तैर्गृहैः कुर्याद्–यानन्तरतो न व्यवविद्याद्–यथा यथास्य ते भवन्ति । तस्य वसन्त एव द्वारम्, हेमन्तो द्वारम् । तं वा एतं संवत्सरं स्वर्गं लोकं प्रपद्यते । सर्वं वै संवत्सरः, सर्वं वा अक्षय्यम् । एतेनो हास्याक्षय्यं सुकृतं भवति, अक्षय्यो लोकः ॥ १९ ॥

तदाहुः–' किंदेवत्यान्याज्यानि ' इति । ' प्राजापत्यानि '–इति ह ब्रूयाद् । अनिरुक्तो वै प्रजापतिः, अनिरुक्तान्याज्यानि । तानि हैतानि यजमानदेवत्यान्येव, यजमानो ह्येव स्वे यज्ञे प्रजापतिः–एतेन ह्युक्ता ऋत्विजस्तन्वते–तं जनयन्ति ॥ २० ॥

स आज्यस्योपस्तीर्य, द्विर्हविषोऽवदाय, अथोपरिष्टादाज्यस्याभिघारयति । सैषाज्येन मिश्राहुति-

---

प्रयाज एव किञ्चिद्वेदितव्यमित्याह–**संवत्सरं** हेति । ' प्रयाजैः ' साधनैः साध्यं ' जयन् ' संवत्सरं खलु ' जयति ' जितप्रकारः पूर्वाध्याये " देवाश्च वा असुराश्च " इत्यत्र " ऋतून् संवत्सरं प्राजयन् " इत्यादिनोक्तः ( श. १ कां. ५ अ. २ ब्रा. ३ कं. इत्यत्र ) । ' यः ' ' अस्य ' संवत्सरस्य ' द्वाराणि ' जानाति–' सः ' खल्वेव ' एनं ' संवत्सरं ' जयति ' नानभिज्ञः । ' यान् ' प्रयाजान् ' अन्तरतः ' मध्यतो ' हि ' ' न ' व्यवजानाति–' ते ' च ' यथा ' येन प्रकारेण ' अस्य ' उपकारका ' भवन्ति '–' सः ' अनुष्ठाता ' तैः ' गृह्यमाणैरनुष्ठेयैः प्रयाजैः ' किं कुर्यात् ' किं साधयेत् । ' संवत्सरः ' यदेकैकं तत् क्षयिष्णु, यत् ' सर्वं ' तदपरिच्छेदात् तावदक्षयि । एतत्परिज्ञानेन च ' सुकृतं ' तत्फलभूतं पुण्यलोकश्च–उभावप्यक्षय्यौ भवतः ॥ १९ ॥

अथाज्यद्रव्यं प्राजापत्यत्वेन प्रशंसितुमाह–**तदाहुरि**ति । प्रजापतेः सकलदेवतासमष्ट्यात्मकत्वेनायमसाविति निर्वक्तुमशक्यत्वादनिरुक्तत्वम् । अतः ' आज्यानि प्राजापत्यानीति ब्रूयात् ' । आहुतिभेदेन बहुवचनम् । प्रजापतिशब्दस्यात्र विवक्षितमर्थमाह–**तानि** हेति । ' तानि एतानि ' प्रयाजादियागसाधनद्रव्याण्याज्यानि ' यजमानदेवत्यानि ' । एवकारेण प्रसिद्धः प्रजापतिरपोद्यते । एतदुपपादयति–**यजमानो** हीति । इतरेषामपरोऽस्त्येवेत्याशङ्क्याह–**एतेने**ति । ऋत्विजां दक्षिणादिदानेन पालनात् प्रजापतित्वम् । ' ऋत्विजः ' तु ' एतेन ' नियुक्ता एव यज्ञं ' तन्वते ' स्व–स्वभागं विस्तारयन्ति । तदेवाह–**तं जनयन्ती**ति । ' तं ' यज्ञम् ॥ २० ॥

इदमाज्यं यजमानदेवताकत्वेन प्रशस्तम्, अतस्तेनोपस्तरणाभिघारणादि कर्त्तव्यमित्याह–**स आज्यस्ये**ति ।

सैषाज्येन मिश्राहुतिर्हूयते यजमानेन हैवैषैतन्मिश्रा हूयते। यदि ह वाऽअपि दूरे सन्यजते यद्यन्तिके यथा हैवान्ते सत ऽइष्टꣳ स्यादेवꣳ हैवैवंविदुष ऽइष्टम्भवति यद्यु ह्यपि बह्विव पापं करोति नो हैव बहिर्द्धा यज्ञाद्भवति य ऽएवमेतद्वेद ॥ २१ ॥ ६ ॥

इति चतुर्थप्रपाठके षष्ठं ब्राह्मणम् ( ॥ ६ ॥१॥ )

इति चतुर्थः प्रपाठकः ॥ ४ ॥

---

हूयते । यजमानेन हैवैषैतन्मिश्राहूयते । यदि ह वा अपि दूरे सन् यजते, यद्यन्तिके-यथा हैवान्ते सत इष्टं स्यात्, एवं हैवैवंविदुष इष्टं भवति । यद्यु ह्यपि बह्विव पापं करोति—नो हैव बहिर्द्धा यज्ञाद्भवति-य एवमेतद् वेद ॥ २१ ॥

---

'सः' अध्वर्युः 'आज्यस्य उपस्तीर्य्य' पुरोडाशस्थापनदेशमाज्येनास्तृतं कृत्वा, 'हविषः' हविः-पुरोडाशादि 'द्विरवदाय' अवत्तस्य 'आज्यस्य' 'उपरि' आज्यम् 'अभिघारयति' 'सैषा' उपस्तृताभिघारिता 'आज्येन मिश्रा' सती अध्वर्युणा 'हूयते,' आज्यस्य यजमानदेवताकत्वस्य प्रतिपादितत्वात् 'यजमानेन एव मिश्रा हूयते'। यत एवमत आज्येनोपस्तरणाभिघारणं कृत्वा जुहुयादित्यर्थः ॥

उक्तार्थज्ञं प्रशंसति-**यदि** हेति । 'यथा हैव' यथैव खलु 'अन्तेसदः' सदसो देवयजनस्य सन्निधौ '**इष्टं**' साङ्गं 'स्यात्,' 'एवम्' आज्यस्य यजमानदेवत्यत्वप्रकारं जानतो यजमानस्य देशान्तरस्थस्यापि 'इष्टं भवति' व्यवधानदोषो नास्तीत्यर्थः । न केवलं विप्रकर्षदोषाभावः-किन्तु वैकल्यदोषोऽपि नास्तीत्याह-**यद्यु** हेति । 'य एतदेवं वेद' सः 'पापम्' अङ्गभ्रंशादिलक्षणं 'यदि' 'बहु अपि' कुर्य्यात्, स 'यज्ञात्' साङ्गात् 'नैव' 'बहिर्द्धा' बाह्यो 'भवति'। अथवा-उक्तार्थज्ञानेन बहुपापोऽपि यज्ञाधिकारी भवेदित्यर्थः ॥२१॥६॥(६.१)॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये प्रथमकाण्डे षष्ठाध्याये प्रथमं ब्राह्मणम् ॥

---

१-'पापः' पातपियानां पापत्यमानोऽवाङेव पततीति वा पापत्यतेर्वा स्यात् " इति निरु. ५ । १ । २ । पुनः 'न पापासो-मनामहे' ऋ. सं. ६ । ४ । ३७ । ६ इत्यस्य व्याख्यायां 'न पापा मन्यामहे । अस्त्यस्मासु ब्रह्मचर्यमध्ययनं तपोदानकर्मेत्यृषिरवो-चदिति च तत्रैव ६ । ५ । २ । इति ॥

# अथ पञ्चमप्रपाठके प्रथमं ब्राह्मणम् ।

## अपि वा–

## षष्ठाध्याये द्वितीयं ब्राह्मणम् ।

यज्ञेन वै देवाः । ( ऽ ) इमां जितिं जिग्युर्यैषामियं जितिस्ते होचुः कथं न ऽइदं मनुष्यैरनभ्यारोह्यꣳ स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्द्धयेयुर्व्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्नथ यदेनेनायोपयंस्तस्माद्यूपो नाम तद्वा ऋषीणामनुश्रुतमास ॥ १ ॥

यज्ञेन ह वै देवाः । ( ऽ ) इमां जितिं जिग्युर्यैषामियं जितिस्ते होचुः कथं न ऽइदं मनुष्यैरनभ्यारोह्यꣳ स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्द्धयेयुर्व्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्निति तमन्वेष्टुं दध्रिरे ॥ २ ॥

---

( आवाप-प्रदेशः । )

यज्ञेन वै देवा इमां जितिं जिग्युः–यैषामियं जितिः । ते होचुः–' कथं न इदं मनुष्यैरनभ्यारोह्यं स्याद् ' इति । ते यज्ञस्य रसं धीत्वा–यथा मधु मधुकृतो निर्धयेयुः–विदुह्य यज्ञं, यूपेन योपयित्वा तिरोऽभवन् । अथ यदेनेनायोपयन्–तस्माद् यूपो नाम । तद्वा ऋषीणामनुश्रुतमास ॥ १ ॥

' यज्ञेन ह वै देवा इमां जितिं जिग्युः–यैषामियं जितिः । ते होचुः–'कथं न इदं मनुष्यैरनभ्यारोह्यं स्याद्' –इति । ते यज्ञस्य रसं धीत्वा–यथा मधु मधुकृतो निर्द्धयेयुः–विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्, इति । तमन्वेष्टुं दध्रिरे ॥ २ ॥

---

आग्नेयं पुरोडाशं[1] विधातुमाख्यायिकामाह–**यज्ञेन वा** इत्यादिना । पुरा किल ' देवाः ' ' इमां जितिम् ' इदानीं परिदृश्यमानप्रकारं स्वर्गजयं ' यज्ञेन ' एव साधनेन ' जिग्युः ' जितवन्तः; ' ते ' देवाः स्वैर्जितं स्वर्गस्थानं तुच्छैर्मनुष्यैः ' कथम् ' आरोहणार्हं न भवेदिति परस्परमुक्त्वा, ' यज्ञस्य रसं ' ' धीत्वा ' पीत्वा ' यथा ' मरघाः ' मधु ' निःशेषेणास्वाद्य गतसारमेव परिशेषयन्ति–एवं ' यज्ञं ' । ' विदुह्य ' विदोहं कृत्वा तं ' यूपेन ' आच्छाद्य तिरोहिता ' अभवन् ' । अतो योपनसाधनत्वाद्यूपस्य ' यूप ' नाम संपन्नम्[2] । ' तत् ' देवैः कृतं यज्ञविदोहनम् ' ऋषीणामनुश्रुतमास ' ऋषयोऽन्वश्रृण्वन्नित्यर्थः ॥ १ ॥

अनुश्रुतप्रकारं पुनरनुवदति[3]–**यज्ञेन ह वै देवा** इति । ' तं ' यूपेन योपितं यज्ञम्, ऋषयः ' अन्वेष्टुम् ' अन्वेषणे मतिं कृत्वा ॥ २ ॥

---

१–' यथोक्तदेवतां प्रति हविष्ट्वेन प्रदेयद्रव्यरूपः पक्वः पिष्टपिण्डः पुरोडाश इत्युच्यते ' इत्यैतरेयब्राह्मणभाष्ये ( १. १. १. ) माधवेनैवोक्तम् । २–" यज्ञेन वै देवा ऊर्ध्वाः स्वर्गं लोकमायंस्तेऽबिभयुरिमन्नो दृष्ट्वा मनुष्याश्च ऋषयश्चानु प्रज्ञास्यन्तीति तं वै यूपेनैवायोपयंस्तं यद्यूपेनैवायोपयंस्तद्यूपस्य यूपत्वम् " इति ऐ. ब्रा. २ । १ । १ ॥ ३–" यज्ञेन वै देवा इमां जितिं०–०तस्माद्यूपो नाम । तद्वा ऋषीणामनुश्रुतमास " इत्यादि चात्रैवोपरिष्टात् ( ३ । २ । २ । ११–१२ ) इत्यत्र द्रष्टव्यम् इति ॥

तेऽर्चन्तः श्राम्यन्तश्चेरुः । श्रमेण ह स्म वै तद्देवा जयन्ति यदेषां जय्य-मासऽर्षयश्च तेभ्यो देवा वैव प्ररोचयाञ्चक्रुः स्वयं वैव दध्रिरे प्रेत तदेष्यामो यतो देवाः स्वर्गं लोकꣳ समाश्नुवतेति ते किं प्ररोचते किं प्ररोचत ऽइति चेरुरेतत्पुरोडाशमेव कूर्म्मं भूत्वा सर्प्पन्तं ते ह सर्व्व ऽएव मेनिरेऽयं वै यज्ञ ऽइति ॥ ३ ॥

ते होचुः । ( २ ) अश्विभ्यां तिष्ठ सरस्वत्यै तिष्ठेन्द्राय तिष्ठेति स सस-र्प्पैवाग्नये तिष्ठेति ततस्तस्थावग्नये वा ऽअस्थादिति तमग्नावेव परिगृह्य सर्व्वहुतमजुहवुराहुतिर्हि देवानां तत ऽएभ्यो यज्ञः प्रारोचत तमसृजन्त तमतन्वत सोऽयं परोऽवरं यज्ञोऽनूच्यते पितैव पुत्राय ब्रह्मचारिणे ॥ ४ ॥

---

तेऽर्चन्तः श्राम्यन्तश्चेरुः । श्रमेण ह स्म वै तद्देवा जयन्ति—यदेषां जय्यमास—ऋषयश्च । तेभ्यो देवा वैव प्ररोचयाञ्चक्रुः, स्वयं वैव दध्रिरे; प्रेत तदेष्यामः—यतो देवाः स्वर्गं लोकं समाश्नुवतेति । ते—' किं प्ररोचते किं प्ररोचते ' इति चेरुः । एतत् पुरोडाशमेव कूर्मं भूत्वा सर्पन्तम् । ते ह सर्वे एव मेनिरे—' अयं वै यज्ञः ' इति ॥ ३ ॥

ते होचुः ' अश्विभ्यां तिष्ठ, सरस्वत्यै तिष्ठ, इन्द्राय तिष्ठ ' इति, स ससर्पैव । ' अग्नये तिष्ठ ' इति—ततस्तस्थौ । अग्नये वा अस्थाद्—इति तमग्नावेव परिगृह्य सर्वहुतमजुहवुः । आहुतिर्हि देवानाम् । तत एभ्यो यज्ञः प्रारोचत, तमसृजन्त, तमतन्वत, सोऽयं परोऽवरं यज्ञोऽनूच्यते—पितैव पुत्राय ब्रह्मचारिणे ॥ ४ ॥

---

**तेऽर्चन्त** इति । तदन्वेषणेन ' अर्चन्तः ' अन्वेष्टव्यं पूजयन्तः, अन्वेषणप्रयासेनात्मानं खेदयन्त इतस्ततः संचेरुः । कथमित्याशङ्क्याह—**श्रमेणे**ति । देवा ऋषयश्च पूर्वं जेतुं शक्यमर्थं श्रमेणैव 'जयन्ति' अतः श्राम्यन्त-श्चेरुरित्येतद् युक्तमित्यर्थः । अथ तदन्वेषण एतेषां देवा अपि रुच्युत्पादनमकुर्वन् । तेऽपि स्वयमपि तदर्थं मतिं कृत्वा परस्परं यूपं प्रगच्छन्तः यस्मात् स्वर्गं लोकं देवाः प्राप्ताः, ' तत् ' साधनम् ' एष्यामः ' ' इति ' उक्त्वा इदमन्वेषणं कार्यं ' किं प्ररोचते किं प्ररोचते ' किं तव मतम्, किं तव मतम् ' इति ' ब्रुवाणाः ' चेरुः ' । परिभ्रम्य च ' पुरोडाशमेव ' कूर्मरूपं धृत्वा ' सर्पन्तम् ' ( पुरोडाशम् ) ' आ इत् ' आ—इत्युपसर्गश्रुतेर्योग्यक्रियाध्याहारः; तमाजग्मुरेवेत्यर्थः । ' ते सर्वे ' अपि ' अयं ' कूर्म एवास्माभिरन्वेष्टव्यो ' यज्ञ इति ' निश्चिताः ॥ ३ ॥

**ते होचुरि**ति । ' ते ' " हे यज्ञावयव-पुरोडाश ! ' त्वम् ' ' अश्विभ्याम् ' अर्थाय ' तिष्ठ ' स्थितिं कुरु—मा पलायिष्ट " इति ' ऊचुः ' । तथापि ( तथैव ) ' सरस्वत्यै ' तिष्ठ इति ' इन्द्राय तिष्ठ '—इति चाब्रु-वन् । तस्मिन् सर्पति सति ' अग्नये तिष्ठेति ' ऊचुः । ' ततः ' स स्थितवान् । अथ ते " अयं पुरोडाशोऽग्नये

---

१—' क्षय्यजय्यौ शक्यार्थे ' ( पा. सू. ६. १. ८१ ) इति जय्यशब्दस्य शक्यार्थ एव साधुत्वबोधनात् । २—'अतुङ्गमनपूपाकृतिं कूर्मस्येव प्रतिकृतिमङ्गुष्ठपर्वमात्रं करोति यावन्तं वा मन्यते ' इति पुरोडाशविषये आपस्तम्बः । आप. श्रौ. सू. १ । २५ । ४ । ५ ॥ ३—( ) चिह्नान्तर्गतः पाठः क्वचिन्नास्ति ।

स वा ऽएभ्यस्तत्पुरोऽदाशयत् । (य) य एभ्यो यज्ञं प्ररोचयत्तस्मात्पुरोदाशः पुरोदाशो ह वै नामैतद्यत्पुरोडाश ऽइति स ऽएष ऽउभयत्राच्युतऽ आग्नेयोऽष्टाकपालः पुरोडाशो भवति ॥ ५ ॥

स न पौर्णमासꣳ हविः । (ना) नामावास्यमग्नीषोमीय ऽएव पौर्णमासꣳ हविः सान्नाय्यमामावास्यं यज्ञ ऽएवैष ऽउभयत्रावक्लृप्तो नेद्यज्ञादयानीति न्वेव पुरस्तात्पौर्णमासस्य क्रियत ऽएवम्वामावास्यस्यैतन्नु तद्यस्मादत्र क्रियते ॥ ६ ॥

---

स वा एभ्यस्तत् पुरोऽदाशयत्—य एभ्यो यज्ञं प्रारोचयत्, तस्मात्पुरोदाशः, पुरोदाशो ह वै नामैतद्—यत् पुरोडाश इति । स एष उभयत्राच्युत आग्नेयोऽष्टाकपालः पुरोडाशो भवति ॥ ५ ॥

स न पौर्णमासं हविः, नामावास्यम् । अग्नीषोमीय एव पौर्णमासं हविः, सान्नाय्यमामावास्यम् । यज्ञ एवैष उभयत्रावक्लृप्तः, 'नेद् यज्ञादयानि' इति न्वेव पुरस्तात् पौर्णमासस्य क्रियते, एवम्वामावास्यस्य । एतन्नु तद्—यस्मादत्र क्रियते ॥ ६ ॥

---

स्थितः" इति 'त्वम्' अग्न्यर्थमेव 'परिगृह्य' यथा देवतान्तरसम्बन्धराहित्येन सः 'अग्नये' एव 'अस्थात्', तथा 'सर्वहुतमजुहवुः' । किमेकस्मै सर्वस्यापि प्रदानमिति तत्राह—**आहुतिर्हि देवानामिति** । प्रियेति शेषः । यतः प्रियस्य वस्तुनोऽसाकल्येन प्रदानमनुचितम्, अतः सर्वहोमो युक्त इत्यर्थः । 'ततः' अग्नेः प्रदानात् कारणात् 'एभ्यः' ऋषिभ्यो मनुष्येभ्यः 'प्रारोचत' रुचिमुदपादयत् । 'तम्' 'असृजन्त' उदपादयन्, 'तम्' एव 'अतन्वत' अङ्गकलापैर्विस्तारितवन्तः । 'सोऽयं' यज्ञः 'परोऽवरम् अनूच्यते' यथा परभावी सन् कस्यचिदुपादिष्टः सन्मुखादन्यस्योपदेशनात् अयमेव 'अवरः' पश्चाद्भावी भवति, तथाऽनुक्रमेणोच्यत इत्यर्थः । तदेवाह—**पितेव पुत्रायेति** । 'ब्रह्मचारिणे' उपनीतस्यैव वेदविद्याधिकारात् ब्रह्मचारिण इत्युक्तम् ॥ ४ ॥

अथ पुरोडाशं नामनिर्वचनद्वारेण स्तौति—**स वा** इति । यतः 'सः' कूर्मरूपेणाच्छन्नो मनुष्यैर्दृष्टः, 'तत्' ततः यागसमये 'पुरः' पूर्वस्मिन् काले यज्ञमुखे 'अदाशयत्' फलमदापयत् । तथा 'यः' पुरोडाशः 'एभ्यः' मनुष्येभ्योऽर्थं 'यज्ञं प्रारोचयत्', यस्मात् पुरोऽदाशयत्, 'तस्मात्' सः 'पुरोदाशः' वस्तुतः एतन्नाम । 'यत्' सर्वैरिदानीन्तनैः 'पुरोडाश इति' व्यवह्रियते[२] ।

इत्थमर्थवादेन प्रशस्येदानीं तं विधत्ते—**स एष** इति । 'सः' देवैराच्छादितः 'एषः' मनुष्यैर्लब्धः 'पुरोडाशः' 'आग्नेयः' अग्निदेवताकः[३] । 'सः' 'उभयत्र' दर्शे पौर्णमास्यां च 'अच्युतः' नित्यं कर्त्तव्यः, 'भवति' ॥ ५ ॥

उभयसाधारण्यमेव स्थापयति—**स नेति** । पौर्णमास्यां भवं 'पौर्णमासम्' एवं 'आमावास्यम्' उभयात्मकस्यान्यतरत्वाभावात् ते हि प्रतिनियतैकहविषी इति—ते आह—**अग्नीषोमीय एवे**त्यादिना । उभयत्रापि नियमेनानुतिष्ठतामभिप्रायमाह—**यज्ञ एवैष** इति । यज्ञसाधनत्वात्, 'एषः' पुरोडाशः 'यज्ञ एव' । स उभयकालेऽपि नियमेन देवैः 'अयानि'—'इति' उभयत्रावक्लृप्तमतिक्रम्य नैव गच्छानि, यदा अन्यदनु-

---

१-तत्रेति क्वचित् । २-पा. सू. ३ । २ । ३१ ॥ ८ । २ । ६७ ॥ वा. २० ३६ ॥ २०३८ ॥ य. बा. प्रा. २ । ४३ ॥
३-"साऽस्य देवता" "अग्नेर्ढक्" इति पा० सू० ४ । २ । २४ । ३३ ॥

यद्यु ऽएनमुपधावेत् । (द्वि) इष्ट्या मा याजयेत्येतयैव याजयेद्यत्कामा वा ऽएतमृषयोऽजुहवुः स ऽएभ्यः कामः समर्द्धयत यत्कामो ह वा ऽएतेन यज्ञेन यजते सोऽस्मै कामः समृद्धयते यस्यै वै कस्यै च देवतायै हविर्गृह्यतेऽग्नौ वै तस्यै जुहोत्यग्ना ऽउ चेद्धोष्यन्त्स्यात्किमन्यस्यै देवताया आदिशेत्तस्मादग्नय ऽएव ॥ ७ ॥

(वा) अग्निर्वै सर्व्वा देवताः । (ऽ) अग्नौ हि सर्व्वाभ्यो देवताभ्यो जुहोति तद्यथा सर्व्वा देवता ऽउपधावेदेवं तत्तस्मादग्नय ऽएव ॥ ८ ॥

---

यद्यु एनमुपधावेत्–' इष्ट्या मा याजय' इति–एतयैव याजयेत् । यत्कामा वा एतमृषयोऽजुहवुः–स एभ्यः कामः समर्द्धयत । यत्कामो ह वा एतेन यज्ञेन यजते–सोऽस्मै कामः समृद्धयते। यस्यै वै कस्यै च देवतायै हविर्गृह्यते–अग्नौ वै तस्यै जुहोति । अग्ना उ चेद्धोष्यन् स्यात्–किमन्यस्यै देवताया आदिशेत् । तस्मादग्नय एव ॥ ७ ॥

अग्निर्वै सर्वा देवताः–अग्नौ हि सर्वाभ्यो देवताभ्यो जुहोति । तद्यथा सर्वा देवता उपधावेद्–एवं तत् । तस्मादग्नय एव ॥ ८ ॥

---

तिष्ठानि, तदा ' नेत् ' परिभयं भवति । " नेत्येष इदित्येतेन सम्प्रयुज्यते परिभये" ( निरु. १–३–६ ) इति हि निर्वचनेन खल्वभिप्रायेण ' पौर्णमासस्य ' ' आमावास्यस्य ' च यागस्य ' पुरस्तात् ' पूर्वकाले ' क्रियते'[2] । ' यस्माद्' दर्शे पौर्णमास्यां च यस्मात्कारणादनुष्ठीयते, ' तत्' तत्कारणम् ' एतन्नु ' उभयं निमित्तं खलु ॥ ६ ॥

अस्यैवाग्नेयस्य[3] ऋद्धिफलाय पृथक्–प्रयोक्तव्यतामाह–यद्यु इति । ' एनम् ' अध्वर्युम् । ' एतयैव ' । आग्नेयेष्ट्यैव । यत्कामा वा इति । पुरा ' एतम् ' आग्नेयाष्टाकपालपुरोडाशम् ' ऋषयः ' यं काममपेक्ष्य ' अजुहवुः ' अन्वतिष्ठन्, 'एभ्यः' ' स कामः ' समृद्धोऽभूत् । अत इदानीमपि यः ' एतेन यजते ' ' अस्मै ' अपि ' स कामः' भवत्येव ।

यत्सम्बन्धादष्टाकपालेष्टिरेवंविधसामर्थ्याऽभूत्–तमग्निं बहुधा प्रशंसति–यस्यै वै कस्यै चेत्यादिना । यां काञ्चिद्देवतामुद्दिश्याज्यसोमादि ' हविः ' ' गृह्यते ' तत् ' अग्नौ ' एव ' जुहोति ' नान्यत्र; अतः सर्वं वा सर्वस्य ' अग्नाऽउ ' अग्नावेव ' होष्यन् ' यदि भवेत्, तर्हि किमर्थम् ' अन्यस्यै ' इन्द्रादिदेवतायै–अमुष्या इदमिति ' आदिशेत् '; ' तस्माद् ' अग्नौ होमस्यावश्यकत्वाद् ' अग्नय एव ' होमः प्रशस्त इति शेषः ॥ ७ ॥

इतोऽप्यग्नय एव प्रदानं युक्तमित्याह–अग्निर्वा इति । उक्तप्रकारेण अग्नावेव सर्वदेवतार्थहवनात्तदुपधावितत्वात् ' सर्वाः ' अग्निः ' एव । ' तत् ' तस्मात् सर्वदेवतोपधावनाद् यद्भवति, तदग्नेरुपधावनेनैव स्यात् । ' तस्मादग्नय एव' हविरादेशः प्रशस्तः ॥ ८ ॥

---

१ समाद्धयति इति पाठो युक्त इति भाति ॥ २–" यज्ञ एव " स उभयकालोऽपि तयोः पूर्वकाले क्रियते " इति क्वचित्पाठः ॥ ३–' अस्या आग्नेयेष्टेः ' इति क्वचित्पाठः ।

( वा ) अग्निर्व्वै देवानामद्धातमाम् । यं व्वा ऽअद्धातमां मन्येत तमुप-धावेत्तस्मादग्नय एव ॥ ९ ॥

( वा ) अग्निर्व्वै देवानां मृदुहृदयतमः । ( मो ) यं वै मृदुहृदयतमं मन्येत तमुपधावेत्तस्मादग्नय ऽएव ॥ १० ॥

( वा ) अग्निर्व्वै देवानां नेदिष्ठम् । यं वै नेदिष्ठमुपसर्त्तव्यानां मन्येत तमुप-धावेत्तस्मादग्नय ऽएव ॥ ११ ॥

स यदीष्टिं कुर्व्वीत । सप्तदश सामिधेनीरनुब्रूयादुपाꣳशु देवतां यजति तद्धीष्टिरूपं मूर्द्धन्वत्यौ याज्यानुवाक्ये स्यातां व्वार्त्रघ्नावाज्यभागौ विराजौ संयाज्ये ॥ १२ ॥ १ ॥

इति पञ्चमप्रपाठके प्रथमं ब्राह्मणम् ॥ ( ६ । २ )

---

अग्निर्वै देवनामद्धातमाम् । यं वा अद्धातमां मन्येत—तमुपधावेत् । तस्मादग्नय एव ॥ ९ ॥

अग्निर्वै देवानां मृदुहृदयतमः । यं वै मृदुहृदयतमं मन्येत—तमुपधावेत् । तस्मादग्नय एव ॥ १० ॥

अग्निर्वै देवानां नेदिष्ठम् । यं वै नेदिष्ठमुपसर्त्तव्यानां मन्येत—तमुपधावेत् । तस्मादग्नय एव ॥ ११ ॥

स यदीष्टिं कुर्वीत—सप्तदश सामिधेनीरनुब्रूयाद् । उपांशु देवतां यजति—तद्धीष्टिरूपम् । मूर्द्धन्वत्यौ याज्यानुवाक्ये स्याताम्, वार्त्रघ्नावाज्यभागौ, विराजौ संयाज्ये ॥ १२ ॥

---

अग्निर्वै देवानामिति । किं यथा लोके यम् ' अद्धातमाम्[1] ' अतिशयेन प्रत्यक्षफलदं मन्येत; ' तम् ' एव ' उपधावेत् ', एवमग्नेः प्रत्यक्षदेवत्वात् ' अग्नय एव ' ॥ ९ ॥

तथा—इतरदेवताभ्योऽग्नेरेव शीघ्रं प्रसादाय मृदुहृदयत्वात् प्रत्यक्षदेवत्वेन समीप एव सेव्यत्वाचाग्नय एव होमो युक्त इत्याह—अग्निर्वै देवानां मृदुहृदयतम इति । अग्निर्वै देवानां नेदिष्ठमिति च ॥ १० ॥ ११ ॥

अथ पृथक्प्रयोक्तव्याया आग्नेयेष्टेर्वैशेषिकमङ्गजातमाह—स यदीत्यादिना । ' यदि ' ' इष्टिं ' दर्शपूर्णमासात् पृथगेव ' कुर्वीत, ' ' सः ' ' सामिधेनीः[2] ' ' सप्तदश ' ' अनुब्रूयात् '; तथा प्रधानदेवता उपांशु यजेत । ' तद् ' उपांशुत्वं काम्येष्टिरूपं खलु; उपांशु काम्या इष्टयः क्रियन्ते[3] इति । एवं ' मूर्द्धन्वत्यौ[4] ' " अग्निर्मूर्द्धा,-भुवो यज्ञस्य ( य. सं. १३—१४, १९ ) " इत्येते मूर्द्धशब्दवत्यौ प्रधानस्य याज्ये स्विष्टकृद्याज्यापुरोनुवाक्ये, ' विराजौ ' विराट्छन्दस्के " प्रेद्धो अग्न, इमो अग्ने ( य. सं. १७, ७६ ) " इत्येते भवतः ॥ १२ ॥ १ ॥ [६.२]

इति श्रीसायणाचायविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये

प्रथमकाण्डे षष्ठाध्याये द्वितीयं ब्राह्मणम् ॥

---

१—अद्धा इत्यव्ययं सत्यनामसु निघण्टौ पठितम् । निघ. ३।१०।४। इहोत्तरत्रापि बहुत्र २।३।१।२५॥३।१।४।११॥ इति ॥

२—अत्र सामिधेन्याः सप्तदशत्वाख्यानं मतान्तराभिप्रायेणोक्तम्, वस्तुतस्तु पञ्चदशैव सामिधेनीरनुब्रूयादिति सिद्धान्तः । " सो एषा मीमांसैव न त्वेवैता अनूच्यन्ते " ( श. प १ । ३ । ५ । १२ ) इति वाक्यशेषेण सप्तदशसंख्याया एकविंशतिसंख्यायाश्च प्रागेव प्रत्याख्यातत्वात् । ३—पुरस्तात् ( ३।५।१० ) इत्यत्र द्रष्टव्यम् । ४—" वयस्या सुमूर्धामतुप् " इति पा. सू. ४।४।१२७।

५—संयाज्यशब्दार्थस्त्वैतरेयब्राह्मणभाष्ये ( १.१.५. ) "स्विष्टकृत्सम्बन्धिन्यौ याज्यानुवाक्ये इत्यर्थः" इत्येवं माधवेन निरूपितम् ।

त्वष्टुर्ह वै पुत्रः । (त्रि) त्रिशीर्षा षडक्ष ऽआस तस्य त्रीण्येव मुखान्यासुस्त-द्यदेवꣳ रूप ऽआस तस्माद्विश्वरूपो नाम ॥ १ ॥

तस्य सोमपानमेवैकं मुखमास । सुरापाणमेकमन्यस्मा ऽअशनायैकं तमिन्द्रो दिद्वेष तस्य तानि शीर्षाणि प्रचिच्छेद ॥ २ ॥

स यत्सोमपानमास । ततः कपिञ्जलः समभवत्तस्मात्स बभ्रुक ऽइव बभ्रुरिव हि सोमो राजा ॥ ३ ॥

( ऽथ ) अथ यत्सुरापाणमास । ततः कलविङ्कः समभवत्तस्मात्सोऽभिमाद्यत्क ऽइव व्वदत्यभिमाद्यन्निव हि सुरां पीत्वा व्वदति ॥ ४ ॥

---

त्वष्टुर्ह वै पुत्रस्त्रिशीर्षा षडक्ष आस । तस्य त्रीण्येव मुखान्यासुः । तद्यदेवंरूप आस—तस्माद् विश्वरूपो नाम ॥ १ ॥

तस्य सोमपानमेवैकं मुखमास, सुरापाणमेकम्, अन्यस्मा अशनायैकम् । तमिन्द्रो दिद्वेष—तस्य तानि शीर्षाणि प्रचिच्छेद ॥ २ ॥

स यत् सोमपानमास—ततः कपिञ्जलः समभवत् । तस्मात् स बभ्रुक इव । बभ्रूरिव हि सोमो राजा ॥ ३ ॥

अथ यत् सुरापाणमास—ततः कलविङ्कः समभवत् । तस्मात् सोऽभिमाद्यत्क इव वदति—अभिमाद्यन्निव हि सुरां पीत्वा वदति ॥ ४ ॥

---

अग्नीषोमीयमेकादशकपालं विधातुमाख्यायिकामाह—**त्वष्टुर्ह वै पुत्र** इति । पुरा किल 'त्वष्टुः' शिरस्त्रयेण युक्तः कश्चित् 'पुत्रः' बभूव । यतोऽयमुक्तरीत्या बहुरूपः, अतः सः 'विश्वरूपः' इत्यन्वर्थनामा अभूत् ॥ १ ॥

**तस्येति** । 'तस्य' शिरस्त्रयगतेषु मुखत्रयेषु मध्ये 'एकं मुखं' 'सोमपानं' सोमः पीयतेऽनेनेति करणे ल्युट्, ( पा. सू. ३ । ३ । ११७ ) सोमपानायाभूत् । अन्यन्मुखं 'सुरापाणं' सुरापानसाधनम् । 'वा भावकरणयोः' ( पा. सू. ८-४-१० ) इति णत्वम् । 'अन्यस्मै' पानव्यतिरिक्ताय 'अशनाय' भोजनाय 'एकं मुखमासीत्' 'तं' विश्वरूपं दृष्ट्वा 'इन्द्रः' 'दिद्वेष' द्वेषमकरोत् । द्वेषकारणं तैत्तिरीयके समाम्नातम् "स प्रत्यक्षं देवेभ्यो भागमवदत् । परोक्षमसुरेभ्यः" ( तै. सं. २. ५. १. १. ) इति । स क्रुद्ध इन्द्रः—'तानि' त्रीण्यपि शिरांसि प्रचिच्छेद ॥ २ ॥

**स यत्सोमपान** इति । तेषु त्रिषु मुखेषु मध्ये 'यत्' सोमपानाय मुखं 'ततः' 'कपिञ्जलः' पक्षी 'समभवत्' "कपिञ्जलः कपिरिव जीर्णः, कपिरिव जवते, ईषत्पिङ्गलो वा[४]" ( नि. ३, ४, १ ) इति यास्कः । उक्तार्थविश्वासाय पक्षिणः सोमस्य च साम्यमाह—**तस्मात् स बभ्रुक इवेति** ॥ ३ ॥

**अथ यत् सुरापाणमिति** । तथा कलविङ्कोऽपि शब्दयति, अतः—ततस्तदुत्पत्तिर्युक्ता ॥ ४ ॥

---

१-एतदारभ्याष्टमकण्डिकास्थ 'न दुद्राव' ... तं" ...जातं पुनः पञ्चमे काण्डेऽपि श्रुतं ५ । ५ । ४ । २ । ८ ॥
२-अस्य निर्वचनम् 'त्वष्टा तूर्णमश्नुत इति नैरुक्ताः, त्विषेर्वा स्याद् दीप्तिकर्मणः, त्वक्षतेर्वा स्यात् करोतिकर्मणः' इति यास्केनाभिहितम्-( निरु. ८-२-१० ) अभ्यहप्येतदितिहासविषये तत्रतत्रोक्तं निरुक्ते । ३-त्रिशिरोवर्णनं कृतं सायणाचार्येण ऋ. सं. १ मं. ३ अ. १ सूक्तारम्भे । विशेषतस्तु 'त्रिशीर्षाणं' ०-०त्रितोगाः' इत्यादौ द्रष्टव्यम् । ऋ. सं. १० । ८ । ८ । ९९ । ६ ॥
४-"अथ लुप्तोपमान्यर्थोपमानीत्याचक्षते" इत्यधिकारे द्रष्टव्यम् । तत्र "कमनीयं शब्दं पिञ्जयतीति वा" इति च तच्छेषः ॥

( त्यु ) अथ यदन्यस्मा ऽअशनायास । ततस्तित्तिरिः समभवत्तस्मात्स विश्वरूपतम ऽइव सन्त्येव घृतस्तोका ऽइव त्वन्मधुस्तोका ऽइव त्वत्पर्णेष्वाश्चुतिता ऽएवꣳ रूपमिव हि स तेनाशनमावयत् ॥ ५ ॥

( त्स ) स त्वष्टा चुक्रोध । कुविन्मे पुत्रमवधीदिति सोऽपेन्द्रमेव सोममाजह्रे स यथायꣳ सोमः प्रसुत ऽएवमपेन्द्र ऽएवास ॥ ६ ॥

( से ) इन्द्रो ह वा ऽईक्षाञ्चक्रे । ( क्र ) इदं वै मा सोमादन्तर्यन्तीति स यथा बलीयानबलीयस ऽएवमनुपहूत ऽएव यो द्रोणकलशे शुक्र ऽआस तं भक्षयाञ्चकार स हैनं जिहिꣳस सोऽस्य विष्वङ्ङेव प्राणेभ्यो दुद्राव मुखाद्धै-

---

अथ यदन्यस्मा अशनायास—ततस्तित्तिरिः समभवत् । तस्मात्स विश्वरूपतम इव । सन्त्येव घृतस्तोका इव त्वत्, मधुस्तोका इव त्वत् पर्णेष्वाश्चुतिताः । एवंरूपमिव हि स तेनाशनमावयत् ॥ ५ ॥

स त्वष्टा चुक्रोध—'कुविन्मे पुत्रमवधीद्'—इति । सोऽपेन्द्रमेव सोममाजह्रे । स यथायं सोमः प्रसुत, एवमपेन्द्र एवास ॥ ६ ॥

इन्द्रो ह वा ईक्षाञ्चक्रे—'इदं वै मा सोमादन्तर्यन्ति' इति । स यथा बलीयानबलीयसः—एवमनुपहूत एव—यो द्रोणकलशे शुक्र आस—तं भक्षयाञ्चकार । स हैनं जिहिंस । सोऽस्य विष्वङ्ङेव

---

अथ यदन्यस्मा । इति 'अथ' पानात् 'अन्यस्मा' 'अशनाय' यन्मुखम् ततस्तित्तिरिः'[1] । यतो बहुरूपादन्नभक्षकान्मुखात् सम्बभूव; अतः सोऽत्यन्तं बहुरूपवर्णान्[2] दृश्यते । कथं तस्य तथात्वमिति तद्दर्शयति—सन्त्येवेति । त्वच्छब्दस्त्वशब्दसमानार्थः सर्वनामसु विकल्पेन[3] पठितः, 'त्वत्' एकस्मिन्नङ्गे 'घृतस्तोका इव' घृतबिन्दवः परिदृश्यन्ते । तथा 'त्वत्' एकत्राङ्गे मधोर्बिन्दव इव । एतदपि कुत इत्यत आह—'पर्णेषु' चटकापक्षेषु 'आश्चुतिता' आक्षरं प्राप्ताः, बहुरूपाणि दृश्यन्ते । कार्यगतं वैरूप्यं तत्कारणेऽपि संभावयति—'एवंरूपमिव' घृतस्तोकादिरूपमिव खलु 'सः'—'तेन' मुखेन 'अशनं' 'जठरम्' 'आवयत्' अवेतिरत्र गत्यर्थः ( धा. पा. भ्वा. प. ६०० ) अगमयत् ॥ ५ ॥

स त्वष्टेति । एवं पुत्रशिरस्सु छिन्नेषु 'स त्वष्टा' असाविन्द्रो 'मे' 'पुत्रं' 'कुवित्' बहुप्रकारम् 'अवधीत्'—'इति' क्रुद्धो भूत्वा 'अपेन्द्रमेव' इन्द्रेण विरहितमेव 'सोममाजह्रे' । 'सः' च 'सोमः' 'यथा' अपेन्द्रः 'प्रसुतः' 'एवं' प्रदानेऽपि 'अपेन्द्र एव' अभूत् ॥ ६ ॥

इन्द्रो ह वा इति । स च 'इन्द्रः' 'इदम्'[6] 'एव सर्वेऽपि 'मा' 'सोमात्' व्यवहितं कुर्वत' इति' विचार्य—'यथा' प्रबलो दुर्बलस्य धनमननुज्ञात एवापहरति,—'एवम्' 'अनुपहूत एव' द्रोणकलशे[7] शोधितं

---

१–'तित्तिरिस्तरणात्' 'तिलमात्रचित्र इति वा' इति निरुक्तम् ( ३. ४. १, ) २–एवंविधेषु पदेषु प्रथमं मत्वर्थीयेन प्रत्ययेन भाव्यम् । ततः समासः । अतएव "न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकरः" इति नात्र विरुध्यते । ३–अन्यार्थे इति यावत । ४–केषाञ्चिन्मतेऽकारान्तावेव द्वावपि त्वशब्दौ, केषाञ्चित्तु तान्तोऽपीति विकल्पार्थः । ग. पा. १ । १ । १ ( १ । १ । २७ सू. ) इति । ५–अयतिरत्रेति क्वचित्पाठः । ६–'इमेऽपि च सर्वेऽपि मां सोमाद् व्यवहितं कुर्वन्तीति विचार्य' इति क. पा. । ७–द्रोणकलशो द्रुममयः कलशाकारो वैकङ्कतः सोमरसपात्रविशेषः । अस्योपर्येव धाराग्रहा गृह्यन्ते । का.श्रौ.सू. ८।७।५। द्रष्टव्यम् ।

वास्य नु दुद्रावाथ सुर्व्वेभ्योऽन्येभ्यः प्राणेभ्योऽद्रवत्तुददः सौत्रामणीतीष्टि-स्तस्यां तद्व्याख्यायते यथैनं देवा ऽअभिषज्यन् ॥ ७ ॥

( न्स )स त्वष्टा चुक्रोध । कुविन्मेऽनुपहूतः सोममबभक्षादिति स स्वयमेव यज्ञवेशसं चक्रे स यो द्रोणकलशे शुक्रः परिशिष्ट ऽआस तं प्रवर्त्तयाञ्चका-रेन्द्रशत्रुर्वर्द्धस्वेति सोऽग्निमेव प्राप्य सम्बभूवान्तरैव सम्बभूवेत्यु हैक ऽआहुः सोऽग्नीषोमावेवाभिसम्बभूव सर्व्वा विद्याः सर्व्वं यशः सर्व्वमन्नाद्यँ᳭ सर्व्वाᳫं श्रीम् ॥ ८ ॥

---

प्राणेभ्यो दुद्राव, मुखाद्धैवास्य न दुद्राव—अथ सर्वेभ्योऽन्येभ्यः प्राणेभ्योऽद्रवत् । तददः 'सौत्रामणी' इतीष्टिः, तस्यां तद् व्याख्यायते—यथैनं देवा अभिषज्यन् ॥ ७ ॥

स त्वष्टा चुक्रोध—'कुविन् मेऽनुपहूतः सोममबभक्षद्' इति । स स्वयमेव यज्ञवेशसं चक्रे । स—यो द्रोणकलशे शुक्रः परिशिष्ट आस—तं प्रवर्त्तयाञ्चकार—'इन्द्रशत्रुर्वर्धस्व' इति । सोऽग्निमेव प्राप्य संबभूव । अन्तरैव संबभूवेत्यु हैक आहुः । सोऽग्नीषोमावेवाभिसंबभूव—सर्वा विद्याः, सर्वं यशः, सर्वमन्नाद्यम्, सर्वां श्रीम् ॥ ८ ॥

---

सोममभक्षयत् । 'सः' च भक्षितः सोमः सात्म्यमप्राप्नुवन् तमेव 'जिहिᳬस' हिंसितवान्—पीडामकरोत् । ततः सर्वतो नासाद्यमुख्यप्राणेभ्यो मुखव्यतिरिक्तेभ्यश्च्युतोऽभूत् । अथ कर्कन्ध्वादिपदार्थरूपेण स्रुतेभ्यस्तेभ्यः सकाशात् 'सौत्रामणी' सुत्राम्णः संबन्धिनी इष्टिः' निष्पन्ना । सोमे स्रुते येन प्रकारेण तमिन्द्रं स्रुतसोमं 'देवाः' विचिकित्सितवन्तः 'तत्' सर्वं सौत्रामणीप्रकरणे विस्पष्टमाम्नायते ॥ ७ ॥

**स त्वष्टेति** । अथ 'सः त्वष्टा' मम 'सोमम्' अतिप्रसूतमनाकारितमेवापिबदिति क्रुद्धः सन् 'स्वयमेव' नष्टस्य यज्ञस्य 'यज्ञवेशसं' यज्ञहिंसापरिहारं कृतवान् । कथं ? 'यो द्रोणकलशे' शुक्रः' सोमः' परिशिष्टः' आसीत्, 'तम्'—आदाय प्रवर्तयामास—"इन्द्रशत्रुर्वर्द्धस्व—" इत्युच्चार्य हुतवान् । 'सः' च हुतः सोमः—अग्निप्राप्तिसमकाल एव पुरुषरूपेण 'सम्बभूव' केचित् प्रवर्तनसामर्थ्यादग्निमस्पृशन्नेव मध्ये 'संबभूव' इति 'आहुः' 'सः' च संभवन् 'अग्नीषोमावेव' अभिव्याप्नुवन् भक्षयन् संबभूव । न केवलं जगत्कारणभूतौ तावेव किन्तु लोके याः 'विद्याः' यद् 'यशः' यद् अदनीयमन्नम्, या च 'श्रीः' तानि सर्वाण्यभिलक्ष्य भक्षयन् 'सम्बभूव' ॥ ८ ॥

---

१—"ते देवा अब्रुवन् सुत्रातं बतैनमत्रासतामिति तस्मात्सौत्रामणीनाम" इति (५।५।४।१२) नाम निर्वचनम् । "सूत्रातं बतैनं पाप्मनोऽत्रास्महीति" इत्यादिचोपरिष्टादिहैव । (५।५।४।१२॥ १२।७।१।१४॥) ॥ २—इहैवोत्तर भागे द्रष्टव्यं । उत्तरभागेहि अष्टाध्यायिसौत्रामण्यश्वमेधाख्यं काण्डत्रयं चतुर्थम्बृहदारण्यं ब्रह्मप्रतिपादकमिति ॥ ३—' अभिप्रसूतमनाकारित एवापिबद्' इति क. पा. ।

(१५) स यद्वर्तमानः समभवत् । (च) तस्माद्वृत्रोऽथ यदपात्समभवत्तस्मादहिस्तं दनुश्च दनायूश्च मातेव च पितेव च परिजगृहतुस्तस्माद्दानव ऽइत्याहुः ॥ ९ ॥

(र) अथ यदब्रवीदिन्द्रशत्रुर्वर्द्धस्वेति । तस्मादुहैनमिन्द्र ऽएव जघानाथ यद्ध शश्वदवक्ष्यदिन्द्रस्य शत्रुर्वर्द्धस्वेति शश्वदु ह स ऽएवेन्द्रमहनिष्यत् ॥ १० ॥

(ड) अथ यदब्रवीद्वर्द्धस्वेति । तस्मादु ह स्मेषुमात्रमेव तिर्यङ् वर्द्धत ऽइषुमात्रं प्राङ्क्सोऽवैवावर १५ समुद्रं दधावव पूर्व १५ स यावत्स ऽआस सहैव तावदन्नाद ऽआस ॥ ११ ॥

---

स यद् वर्त्तमानः समभवत्—तस्माद् वृत्रः, अथ यदपात् समभवत्—तस्मादहिः । तं दनुश्च दनायुश्च मातेव च पितेव च परिजगृहतुः—तस्माद् ' दानव ' इत्याहुः ॥ ९ ॥

अथ यदब्रवीद् ' इन्द्रशत्रुर्वर्धस्व ' इति—तस्माद्ु हैनमिन्द्र एव जघान, अथ यद्ध शश्वदवक्ष्यद् इन्द्रस्य—शत्रुर्वर्धस्व ' इति—शश्वद्ध ह स एवेन्द्रमहनिष्यत् ॥ १० ॥

अथ यदब्रवीद् ' वर्धस्व ' इति—तस्माद्ु ह स्मेषुमात्रमेव तिर्यङ् वर्धते, इषुमात्रं प्राङ् । सोऽवैवावरं समुद्रं दधौ, अव पूर्वम् । स यावत् स आस, सहैव तावदन्नाद आस ॥ ११ ॥

---

**स यद् वर्त्तमान** इति । तथा ' सः ' सम्भवन् ' वर्त्तमानः सर्वं व्याप्नुवन्नेव यतः 'समभवत् ' ' तस्मात् ' तस्य नाम—सर्वं व्याप्य वर्तत इति व्युत्पत्त्या ' वृत्रः[1] ' ' इति ' संपन्नम् । तथा यस्माद् ' अपात् ' अपादः सन् सम्भूतः—' तस्मात् ' अतः सर्पणसाम्याद् ' अहिः[2] ' इत्यपि तन्नामासीत् । ' तं ' ' दनुश्च दनायूश्च ' मातृ—पितृ—स्थानीयौ भूत्वा रक्षणाय ' परिजगृहतुः ' यस्मात्ताभ्यां परिजगृहतुः ' तस्माद्दानव इत्याहुः ' सर्वे जनाः ॥ ९ ॥

**अथ यदब्रवीदि**ति । तथा स त्वष्टा ग्रहप्रचारसमये ( इन्द्रशत्रुरिति पूर्वपदोदात्ततया— ) इन्द्रः शत्रु[3]र्यस्येति बहुव्रीहिसमासं कृत्वा ( " बहुव्रीहौ प्रकृत्या पूर्वपदम् " इति पा. सू. ६।२।१। ) मन्त्रं प्रयुक्तवान्, अतः तम्, ' इन्द्रो जघान ' । यद्यसौ—अन्तोदात्ततया—तत्पुरुषसमासेन[4] वा ' इन्द्रस्य शत्रुः '—इति व्यस्तनिर्देशेन[5] वा ब्रूयात्, तदा निश्चितमेव ' स इन्द्रं ' हन्यात् ॥ १० ॥

**अथ यदि**ति । तथा वर्द्धस्वेति प्रयोगसामर्थ्यात् । ' सः ' वृत्रः ' इषुमात्रम्—इषुमात्रम् ' धनुषः सका-

---

१–' वृत्रो वृणातेर्वा, वर्त्ततेर्वा, वर्द्धतेर्वा, यदवृणोत्तद्वृत्रस्य वृत्रत्वमिति विज्ञायते यदवर्तत तद्वृत्रस्य वृत्रत्वमिति विज्ञायते, यदवर्द्धत तद्वृत्रस्य वृत्रत्वमिति विज्ञायते " इति निरुक्ते ( २ । ५ । ३ । ) इति ॥ २–" अहिरयनात् " एत्यन्तरिक्षे । अयमपीतरोऽहिरेतस्मादेव । निर्ह्रसितोपसर्ग आहन्तीति " इति निरु. २ । ५ । ३ ॥ ३–" इन्द्रशत्रुः । इन्द्रोऽस्य शमयिता वा शातयिता वा तस्मादिन्द्रशत्रुः " इति निरु. २ । ५ । २ ॥ ४–" अन्तोऽवत्याः " " समासस्य " इति पा. सू. ६ । १ । २२०–२२३ ॥ ५–" इन्द्रस्य शातयिता इन्द्रशत्रुरिति विवक्षायां तत्पुरुषसमासस्यान्तोदात्तत्वेन भवितव्यम् । आद्युदात्तस्त्वयं शब्दः प्रयुक्तः । स च बहुव्रीहितां द्योतयति । बहुव्रीहौ प्रकृत्या पूर्वपदमिति पूर्वपदाद्युदात्तत्वविधानात् । सति बहुव्रीहौ इन्द्रः शातयिता यस्येत्यर्थो भवति । सोऽयं मन्त्रगतः स्वरापराधः । इति तै. सं. २ । ४ । १२ । सा. भा. । अतएवाह पस्पशायां " दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुःस्वरतोऽपराधात् " इति. पा. म. भा. १ । १। १ आ. ।

तुस्मै ह स्म पूर्वाह्णे देवाः ॥ ( ऽ ) अशनमभिहुरन्ति मध्युन्दिने मनुष्या ऽअपराह्णे पितुरः ॥ १२ ॥

स वा ऽइन्द्रस्तुथैव नुत्तश्चुरन्न् । ( न्न ) अग्नीषोमा ऽउपमन्त्रयाञ्चक्रेऽग्नी-षोमौ युवं वै मुम स्थो युवयोरहुमस्मि नु युवयोरेष किञ्चन कुं म ऽइमं दुस्युं व्वर्द्धयथ ऽउप मा व्वर्तेथामिति ॥ १३ ॥

तौ होचतुः । किमावुयोस्तुतः स्यादिति तुाभ्यामेतुमग्नीषोमीयमेका-दशकपालं पुरोडाशं निरवपत्तुस्मादग्नीषोमीय ऽएकादशकपालः पुरोडाशो भवति ॥ १४ ॥

---

तस्मै ह स्म पूर्वाह्णे देवा अशनमभिहरन्ति, मध्यन्दिने मनुष्याः, अपराह्णे पितरः ॥ १२ ॥

स वा इन्द्रस्तथैव नुत्तश्चरन्नग्नीषोमावुपमन्त्रयाञ्चक्रे—"अग्नीषोमौ ! युवं वै मम स्थो, युवयोरहमस्मि न युवयोरेष किञ्चन, कं म इमं दस्युं वर्धयथ । उप मावर्तेथाम्" इति ॥ १३ ॥

तौ होचतुः—"किमावयोस्ततः स्याद्" इति । ताभ्यामेतमग्नीषोमीयमेकादशकपालं पुरोडाशं निरवपत् । तस्मादग्नीषोमीय एकादशकपालः पुरोडाशो भवति ॥ १४ ॥

---

शाद् बलात्प्रमुक्तेषुर्यावद् दूरं गच्छति तावन्मात्रं प्रतिक्षणं 'तिर्यङ्' उभयपार्श्वतः 'वर्धते' । 'प्राङ्' हि 'इषु-मात्रम्' अवर्द्धत । एतत् पश्चाद्वृद्धेरप्युपलक्षणम् । 'अवरं' 'पूर्वं' च 'समुद्रं' तथा प्राक्पश्चात्समुद्रावपि "अवदधौ" शरीरवृद्ध्या—अवाक् चकारेत्यर्थः । यावद्यावत् प्रवृद्ध आस, तावत्तावत् प्रवृद्धोऽन्न-भक्षक एवाभूत् ॥ ११ ॥

**तस्मै ह स्मेति** । एवं बह्वाशिने 'तस्मै' 'देवाः' 'मनुष्याः' 'पितरश्च' पूर्वमध्यन्दिनापराह्णेषु क्रमेण सर्वतः 'अशनम्' प्रयच्छन्ति ॥ १२ ॥

**स वा इन्द्र इति** । इन्द्रस्तु वृत्रशरीरवृद्धिक्रमानुसारेणैवेषदीषत्प्रणुन्नो दूरे एव 'चरन्' ओदनमसह-मानो वृत्रमनुगतौ 'अग्नीषोमौ' इच्छन्नुपमन्त्रयामास । कथं ? हे 'अग्नीषोमौ !' युवां 'मम' स्वं भवथः, युवयोरहं स्वं भवामि । यथाऽहं युवयोस्तथा 'एषः' वृत्रो 'न किञ्चन' किमपि न भवति । अतः 'कम्' कीदृङ्महत्त्वोपेतं 'दस्युं' 'वर्द्धयथ' ? अतोऽमुं परित्यज्य मां प्रति 'उपावर्त्तेथाम्' । 'इति'— शब्दः उपमन्त्रणप्रकारसमाप्त्यर्थः ॥ १३ ॥

**तौ होचतुरिति** । अथ 'तौ' 'इन्द्रम्' 'ऊचतुः—' ततः' वृत्रवदननिर्गमनात् 'आवयोः' "किं" फलं लब्धं 'स्यात्' ?" 'इति' । स एवमुक्तः 'ताभ्याम्' 'एतम्' इदानीं विधीयमानम् 'एकादशकपालं पुरोडाशम्' अग्नीषोमदेवताकं कृत्वा निरुप्त (क्त) वान्,—तयोरिदमिति कल्पितवानित्यर्थः ।

इदानीं तं यागं विधत्ते—**तस्मादिति** । अग्नीषोमौ देवते यस्य सः 'अग्नीषोमीयः', एकादशसु कपालेषु संस्कृतः पुरोडाशः 'एकादशकपालः' स भवेत्, पौर्णमास्यां कर्त्तव्यः ॥ १४ ॥

---

१–तैत्तिरीयसंहितायामत्रैव प्रजापतेर्वज्रलाभादिकमप्याम्नातम् ( २. ५. २ ) । २–"साऽस्य देवता" ( ४ । २ । २४ ) इत्यधिकारे द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च" इति पा. सू. ४ । २ । ३२ । "देवताद्वन्द्वे च" पा. सू. ६ । ३ । २६ । इति "अग्नेः स्तुत्स्तोमसोमाः (८ । ३ । ८२) इति ॥ ३–"संस्कृतं भक्षाः" इति पा. सू. ४ । २ । १६ ॥

तावेनमुपावव्रततुः। ( स्ता ) तावनु सर्व्वे देवाः प्रेयुः सर्व्वा विद्याः सर्व्वं यशः सर्व्वमन्नाद्य५ँ सर्व्वा श्रीस्तेनेष्ट्वेन्द्र ऽएतदभवद्यदिदमिन्द्र एष उ पौर्णमासस्य बन्धुः स यो हैवं विद्वान्पौर्णमासेन यजत ऽएता५ँ हैव श्रियं गच्छत्येवं यशो भवत्येवमन्नादो भवति ॥ १९ ॥

तद्धैव खलु हतो वृत्रः। स यथा दृतिर्न्निष्पीत ऽएव५ँ संव्लीनः शिश्ये यथा निर्द्धूतसक्तुर्भस्त्रैव५ँ संव्लीनः शिश्ये तमिन्द्रोऽभ्यादुद्राव हनिष्यन्। १६

( न्त्सु ) स होवाच। मा नु मे प्रहार्षीस्त्वं वै तदेतदर्षसि यदहं व्येव मा

---

तावेनमुपावव्रततुः, तावनु सर्वे देवाः प्रेयुः सर्वा विद्याः, सर्वं यशः, सर्वमन्नाद्यम्, सर्वा श्रीः। तेनेष्ट्वेन्द्र एतदभवद्—यदिदमिन्द्रः। एष उ पौर्णमासस्य बन्धुः। स यो हैवं विद्वान् पौर्णमासेन यजते—एतां हैव श्रियं गच्छति, एवं यशो भवति, एवमन्नादो भवति ॥ १९ ॥

तद्धैव खलु हतो वृत्रः, स यथा दृतिर्निष्पीतः,—एवं संव्लीनः शिश्ये। यथा निर्धूतसक्तुर्भस्त्रा—एवं संव्लीनः शिश्ये। तमिन्द्रोऽभ्यादुद्राव हनिष्यन् ॥ १६ ॥

स होवाच—" मा नु मे प्रहार्षीः, त्वं वै तदेतर्ह्यसि—यदहम्; व्येव मा कुरु, मामुया भूवम् "

---

**तावेनमि**ति। अथ 'तौ' 'एनम्' इन्द्रं प्रत्युपावृत्तावभूताम्। 'तावनु' 'सर्वे' अपि वृत्रमुखान्तर्गताः 'देवाः' 'प्रेयुः' निरीयुः। तथा वृत्रेण भक्षिता विद्यायशोऽन्नश्रियः 'सर्वाः' अपीन्द्रं प्रति निर्गताः। 'यत्' 'इदम्' इदानीं परिदृश्यमानप्रकारमिन्द्रस्य सर्वाधिपत्यमस्ति, तत् 'तेन' अग्नीषोमीयैकादशकपालयागेन 'इष्ट्वा' 'अभवत्'। उक्तमर्थं निगमयति—**एष उ** इति। 'एष' एव "त्वष्टुर्ह वै—" इत्याद्युपक्रम्य "तेनेष्ट्वेन्द्र एतदभवत्"—इत्यन्तेनोक्त एव 'पौर्णमासस्य' पौर्णमास्यामसाधारण्येनानुष्ठेयस्य हविषो 'बन्धुः' बन्धकोऽर्थनियामकः। एतदेव ब्राह्मणमित्यर्थः। विहितमर्थमनूद्य प्रशंसति—**यो हैवं विद्वानि**ति। अत्र यद्यपि पौर्णमासीशब्देन कालवाचिना तत्कालक्रियमाणं सर्वं कर्म्माश्रयणीयम्। तथाप्याग्नेयाष्टाकपालस्य साधारण्याद्, वाक्यशेषे श्रीप्रभृतेरेव फलत्वेन श्रवणाच्चाग्नीषोमीय एकाद[illegible] [illegible]पाल एव परिगृह्यते। 'यः' यजमानः 'एवम्' उक्तमर्थं 'विद्वान्' जानन्, 'पौर्ण[illegible] [illegible] पौर्णमास्यां क्रियमाणेनाग्नीषोमीयेन 'यजते' अनुतिष्ठति 'सः' 'एताम्' इन्द्रेणा[illegible] [illegible]नुभूतां 'श्रियम्' तथाविधं यशोऽन्नं च प्राप्नोति ॥ १९ ॥

**तद्धैव खल्वि**ति। अथ तदानीमग्नीषोमादिनिर्गमनानन्तरमेव 'वृत्रो' 'हतः', निष्पीतो दृ[illegible] [illegible]रिव चर्मनिर्मितपात्रमिव, सः यथा 'संव्लीनः' सङ्कुचितकुक्षिरिति, एवं संव्लीनो भूमावशयिष्ट, यथा 'निर्धूतसक्तुका भस्त्रा' चर्ममयी संव्लीना, 'तद्वत्' 'संव्लीनः' शेते; कुक्षिगतानां सक्तुस्थानीयानां देवानाम्,—उदकस्थानीयानामसृगादीनां च स्रावात् दृष्टान्तद्वयाभिधानम्। अथ[3] शयानं वृत्रं हननेच्छयेन्द्रः शीघ्रमाजगाम ॥ १६ ॥

**स होवाचे**ति। तं दृष्ट्वा वृत्रोऽब्रवीत्—" इदानीमेतत् सर्वं त्वमेव भवसि, पूर्वं यदहं सर्वमभवम्; अतो

---

१—'संलीनः' इति क. पा. एवमग्रेऽपि। २—'संकुचितकुक्षितनुः पतति' इति पा.। ३—'अथ रिक्तं शयानं हननेच्छया' इति क. पा.।

कुरु मामुया भूवमिति स वै मेऽन्नमेधीति तथेति तं द्वेधान्वभिनत्तस्य यत्सौम्यं न्यक्तमास तं चन्द्रमसं चकाराथ यदस्यासुर्यमास तेनेमाः प्रजा ऽउदरेणाविध्यत्तस्मादाहुर्वृत्र ऽएव तर्ह्यन्नाद ऽआसीद्वृत्र ऽएतर्हीतीदꣳ हि यदसावापूर्यतेऽस्मादेवैतल्लोकादाप्यायतेऽथ यदिमाः प्रजा ऽअशनमिच्छन्तेऽस्मा ऽएवैतद्वृत्रायोदराय बलिꣳ हरन्ति स यो हैवमेतं वृत्रमन्नादं वेदान्नादो हैव भवति ॥ १७ ॥

ता ऽउ हैता देवता ऽऊचुः ( र्या ) या ऽइमा ऽअग्नीषोमावन्वाजग्मुरग्नी-

---

इति । स वै " मेऽन्नमेधि " इति । " तथा " इति । तं द्वेधाऽन्वभिनत्, तस्य यत् सौम्यं न्यक्तमास—तं चन्द्रमसं चकार । अथ यदस्यासुर्यमास—तेनेमाः प्रजा उदरेणाविध्यत् । तस्मादाहुः—' वृत्र एव तर्ह्यन्नाद आसीद्, वृत्र एतर्हि ' इति । इदं हि यदसावापूर्यते—अस्मादेवैतल्लोकादाप्यायते । अथ यदिमाः प्रजा अशनमिच्छन्ते—अस्मा एवैतद् वृत्रायोदराय बलिं हरन्ति । स यो हैवमेतं वृत्रमन्नादं वेद—अन्नादो हैव भवति ॥ १७ ॥

ता उ हैता देवता ऊचुः—या इमा अग्नीषोमावन्वाजग्मुः " अग्नीषोमौ ! युवं वै नो भूयिष्ठभाजौ स्थः, ययोर्वामिदम् । युवयोरस्मानन्वाभजतम् " इति ॥ १८ ॥

---

व्याकुर्वेव शरीरं विविधम्; आ सर्वतो भग्नपर्यन्तं कुरु, विदारयेत्यर्थः । ' अमुया ' इदानीमनुभूयमानप्रकारया स्थित्या ' मा भूवम् ' सर्वदा न भवामि, ' इति ' । ' सः ' एवमुक्तः इन्द्रः, " तर्हि ममान्नं भव " इत्युवाच । ' तथा ' अस्तु ' इति ' उक्तम् । ' तम् ' इन्द्रो ' द्वेधा ' ' अन्वभिनत् ' तदनुक्रमेण व्यदारयत् । तेन ' यत् ' सौम्यं श्रेष्ठं सुतमासीत्, ' तं चन्द्रमसं चकार ' प्रतिनिर्देशापेक्षया पुँल्लिङ्गता । ' यत् ' ' असुर्यम् ' असुरेभ्यो हितम्—उच्छिष्टमासीत्, ' तेन ' ' इमाः ' सर्वा अपि प्रजा उदरप्रदेशेन अयुंज्यत्—तद्रूपेणोपस्थापयामासेत्यर्थः । यस्मादेवं ' तस्माद् ' यः कश्चिद् यदि बह्वन्नं भक्षयेत्, ' तर्हि ' तदा सर्वेऽपि जनाः इदानीं वृत्र एतर्हि—अन्नाद आसीद्—' इत्याहुः ' । प्रसिद्धेः सार्वत्रिकत्वप्रदर्शनाय दृष्टान्तः । उक्तमर्थं समर्थयते—एतर्हीति । ' असौ ' चन्द्रः पूर्वपक्षे ' आपूर्यते '—इति यत् तत् ' इदं हि ' किमिदम् ? तदाह—' अस्मात् ' ' लोकादेव ' चन्द्रः ' आप्यायते ' अस्माल्लोकाच्चन्द्रस्याप्यायनप्रकारमुपरिष्टाद् वक्ष्यते—" तदेनमद्भ्य ओषधिभ्यः सम्भृत्याहुतिभ्योऽधिजनयति, स एष आहुतिभ्यो जातः पश्चाद्ददृशे "—इति । यदा ' इमाः ' बुभुक्षिताः ' प्रजाः ' ' अशनमिच्छन्ति ' तदा ' अस्मा एव वृत्राय ' षष्ठ्यर्थे चतुर्थी । वृत्ररूपाय ' उदरायैव ' ' बलिं हरन्ति ' । अतो वृत्रभागविशेषस्यान्नरूपेण स्थापनं युक्तमित्यर्थः । 'स यो हैवमिति' ज्ञानफलम् ॥ १७ ॥

प्रयाजानन्तरमाज्यभागौ वक्तव्यावन्तरितौ, अतस्तावग्नीषोमीयपुरोडाशप्रसङ्गेन विधातुमाह—ता उ हेति ।

---

१—"भग्नं कुरु" इति क्वचित् पा. । २—' यद्वस्तु सौम्यं ' इत्यादि पा. । ३—विधेयस्य चन्द्रमसोऽपेक्षयेत्यर्थः । ' उद्दिश्यमानप्रतिनिर्दिश्यमानयोरैक्यमापादयन्ति सर्वनामानि पर्यायेण तत्तल्लिङ्गमुपाददते ' इति न्यायादिति भावः । ४—असुरशब्दस्य गवादिषु पाठात् । " तस्मै हितं " ( पा. सू. ५ । १ । ५ ) इत्यर्थे " उगवादिभ्यो यत् " (पा. सू. ५ । १ । २) इति यत् । वस्तुतोऽत्र "असुरस्य स्वं" ( पा. सू. ४ । ४ । १२३ ) इति यदित्येव स्यात्सुवचम् ॥ ५—अयुध्यत्—इति पा. । ६—इहैवाग्ने ( ६–४–१५ ) इत्यत्र द्रष्टव्यम् । ७—पा. सू. २ । ३ । ६२ । वा. १ ( १५७९ ) ।

षोमौ युवं वै नो भूयिष्ठभाजौ स्थो युयोर्वामिदं युवयोरस्मानन्वाभजतमिति ॥ १८ ॥

तौ होचतुः । किमावयोस्ततः स्यादिति यस्यै कस्यै च देवतायै हविर्निर्वपांस्तद्वां पुरस्तादाज्यस्य यजानिति तस्माद्यस्यै कस्यै च देवतायै हविर्निर्वपन्ति तत्पुरस्तादाज्यभागावग्नीषोमाभ्यां यजन्ति तन्न सौम्येऽध्वरे न पशौ यस्यै कस्यै च देवतायै हविर्निर्वपानिति ह्यब्रुवन् ॥ १९ ॥

(म्सु) स हाग्निरुवाच । मय्येव वः सर्वेभ्यो जुह्वतु तद्वोऽहं मय्याभजामीति तस्मादग्नौ सर्वेभ्यो देवेभ्यो जुह्वति तस्मादाहुरग्निः सर्वा देवता ऽइति ॥ २० ॥

(त्यु) अथ ह सोम ऽउवाच । मामेव वः सर्वेभ्यो जुह्वतु तद्वोऽहं मय्या-

---

तौ होचतुः—"किमावयोस्ततः स्याद्" इति । "यस्यै कस्यै च देवतायै हविर्निर्वपान्—तद् वां पुरस्तादाज्यस्य यजान्" इति । तस्माद् यस्यै कस्यै च देवतायै हविर्निर्वपन्ति—तत्पुरस्तादाज्यभागावग्नीषोमाभ्यां यजन्ति । तन्न सौम्येऽध्वरे, न पशौ । 'यस्यै कस्यै च देवतायै हविर्निर्वपान्' इति ह्यब्रुवन् ॥ १९ ॥

स हाग्निरुवाच—"मय्येव वः सर्वेभ्यो जुह्वतु, तद्वोऽहं मय्याभजामि" इति । तस्मादग्नौ सर्वेभ्यो देवेभ्यो जुह्वति—तस्मादाहुः—'अग्निः सर्वा देवताः' इति ॥ २० ॥

अथ ह सोम उवाच—"मामेव वः सर्वेभ्यो जुह्वतु, तद्वोऽहं मय्याभजामि" इति । तस्मात् सोमं सर्वेभ्यो देवेभ्यो जुह्वति, तस्मादाहुः—'सोमः सर्वा देवताः' इति ॥ २१ ॥

---

वृत्रदेहाद् 'अग्नीषोमावनु' निर्गताः सर्वाः 'देवताः' 'तौ' अग्नीषोमौ प्रतीदमब्रुवन्—"यतो वृत्रदेहान्निर्गतयोर्युवयोरिदं पुरोडाशद्रव्यं प्रातिस्विकमभूत्, अतो युवामेव प्रभूतभागभाजौ भवथः, 'युवयोः' मध्ये 'अस्मान्' अपि 'अन्वाभजतम्'", इति ॥ १८ ॥

**तौ होचतुरिति** । अथ 'तावूचतुः'—"'ततः' युष्मदनुप्रवेशाद् 'आवयोः' 'किं, 'स्यात् ?'" 'इति' उक्ता देवतास्तयोः—"हे अग्नीषोमौ ! लोके यष्टारो 'यस्यै कस्यै च देवतायै' इन्द्रादिदेवतानां मध्ये यां कांचिद्देवतां प्रति 'हविः' 'निर्वपान्' निर्वपेयुः, तत्र च निरुप्तप्रधानदेवताभ्यः पूर्वम् 'आज्यस्य' आज्येन 'यजान्' यजेयुः" इदानीं विधत्ते—**तस्मादिति** । 'तस्माद्' देवैर्दत्तत्वाद् यत्र निर्वपति, तत्र 'आज्यभागावग्नीषोमाभ्याम्' अनुष्ठेयौ । आज्यभागौ प्रशंसति—**तत्र सौम्ये** इति । पशुसोमयोराज्यभागौ 'न' कुर्यात् । निर्वापाभावादेव पशुसोमयोरप्राप्तस्याज्यभागस्य पुनर्निषेधेनैष्टिकमाज्यभागविधानं स्तूयते । यथा दशमाध्यायस्याष्टमे पादे द्वितीयाधिकरणे—'न सौम्येऽध्वर इत्यत्र किं निषिध्यते, उत पर्युदस्यते, अथार्थवादः ?' इति त्रेधा विकल्प्यार्थवाद इति राद्धान्तितम् । सोमपश्वोस्तदप्राप्तौ कारणमाह—**यस्यै कस्यै** चेति । '**निर्वपानिति ह्यब्रुवन्**' इति निर्वापस्य विशेषितत्वात्, तयोस्तदभावादिति भावः ॥ १९ ॥

इदानीं ताभ्यां देवताभ्यः कृतमुपकारं दर्शयति—**सहाग्निरित्यादिना**, **अथ ह सोम** इत्यादिना च । अग्निः

---

१–"प्रातिस्विकमसाधारणधर्मे" इति त्रिकाण्डशेषकोषः ॥ २–'आज्यभागम्' क० पाठः । ३–"अपूर्वंचार्थवादःस्यात्" इत्यत्र मीमांसादर्शने १०–८–५ ।

भव इति तस्मात्सोमᳬं सर्व्वेभ्यो देवेभ्यो जुह्वति तस्मादाहुः सोमः सर्व्वा देवता ऽइति ॥ २१ ॥

(स्त्र) अथ यदिन्द्रे सर्व्वे देवास्तत्स्थानाः। (स्तु) तस्मादाहुरिन्द्रः सर्व्वा देवताऽइन्द्रश्रेष्ठा देवा ऽइत्येतद्ध वै देवास्त्रेधैकदेवत्या ऽअभवन्त्स यो हैवमेतद्वेदैकधा हैव स्वानाᳬं श्रेष्ठो भवति ॥ २२ ॥

द्वयं वा ऽइदं न तृतीयमस्ति । (स्त्या) आर्द्रञ्चैव शुष्कञ्च यच्छुष्कं तदाग्नेयं यदार्द्रं तत्सौम्यमथ यदिदं द्वयमेवाथ किमेतावत्क्रियत ऽइत्यग्नीषोमयोरेवाज्यभागावग्नीषोमयोरुपाᳬंशुयाजोऽग्नीषोमयोः पुरोडाशो यदुत एकतमेनैवेदᳬं सर्व्वमाप्नोत्यथ किमेतावत्क्रियता ऽइत्यग्नीषोमयोर्हैवैतावती विभूतिः प्रजातिः ॥ २३ ॥

---

अथ यदिन्द्रे सर्वे देवास्तत्स्थानास्तस्मादाहुः—'इन्द्रः सर्वा देवताः, इन्द्रश्रेष्ठा देवाः' इति । एतद्ध वै देवास्त्रेधैकदेवत्या अभवन् । स यो हैवमेतद्वेद, एकधा हैव स्वानां श्रेष्ठो भवति ॥ २२ ॥

द्वयं वा इदं न तृतीयमस्ति-आर्द्रं चैव, शुष्कं च । यच्छुष्कं-तदाग्नेयम्, यदार्द्रं तत्सौम्यम् । अथ यदिदं द्वयमेव—अथ किमेतावत् क्रियते ? इति । अग्नीषोमयोरेवाज्यभागौ, अग्नीषोमयोरुपांशुयाजः, अग्नीषोमयोः पुरोडाशः । यदुत एकतमेनैवेदं सर्वमाप्नोति—अथ किमेतावत् क्रियता ? इति । अग्नीषोमयोर्हैवैतावती विभूतिः-प्रजातिः ॥ २३ ॥

---

सर्वदेवार्थमाहुत्याधारतालक्षणम्—सोमस्तु सर्वदेवतानामाहुतिलक्षणम्, उपकारं कृतवन्तौ । यस्मादेवं 'तस्माद्' वेदवादिनः-अग्नेः सोमस्य च सर्वदेवतात्मकताम् 'आहुः' ॥ २० ॥ २१ ॥

अथ यदिन्द्र इति । 'यद्' यस्माच्च 'इन्द्रे' सर्वे देवाः । 'तत्स्थानाः' स्थितवन्तः, अतः 'इन्द्रः सर्वा देवताः' अत्र कारणमाह--इन्द्रज्येष्ठा देवा इतीति । ज्येष्ठत्वं तु "तावेनमुपावृततुस्तावनु सर्वे देवाः"—इत्यादिनोक्तत्वादवगन्तव्यम् । 'एतद्ध' एतेनैव खलु कारणेन सर्वेऽपि 'देवाः' 'त्रेधा' त्रिप्रकारेण अग्निसोमेन्द्रात्मकाः 'एकदेवत्याः' एकैकदेवतार्थाः । 'अभवन्' तादर्थ्ये यत् । उक्तार्थज्ञं प्रशंसति—स य इति । अग्न्यादीनामेकदेवत्वरूपश्रेष्ठत्वपरिज्ञानेन स्वयमपि स्वकीयानां मध्ये एक एव 'श्रेष्ठो भवति' ॥ २२ ॥

आज्यभागोपांशुयाजपुरोडाशानां यदग्नीषोमदेवताकत्वमस्ति, तत् प्रशंसितुमाह--द्वयं वा इत्यादि । लोके पदार्थाः सर्वेऽपि शुष्कार्द्रभावेन द्विविधाः, अतः, तृतीयविधस्याभावाद्--'यच्छुष्कं तदाग्नेयम्' भविष्यति, यच्चार्द्रं 'तत्सौम्यम्' अतो लोके विद्यमानं वस्तुद्वयमेव, अस्मादेव कारणात्--अग्नीषोमयोर्योगेन समाप्तं भविष्यति । 'किम्' 'एतावद्' खलु 'क्रियते' 'इति' ब्रह्मवादिनां चोद्यम् । एतावदिति संग्रहेणोक्तस्य विवरणम्-अग्नीषोमयोरिति । अग्नीषोमयोरेवाज्यभागावित्यादित्रयाणामपि प्रदानस्योपपत्तिमाह—अग्नीषोमयोर्हे-

---

१-'इन्द्रज्येष्ठा' इति 'भाष्यसंमतः पाठः । २-'श्रेष्ठत्वं तावेनमुपावृततुः' इत्यादि पाठः । ३-अस्मिन्नेव ब्राह्मणे पूर्वतः १५ कंडिका द्रष्टव्या ।

सूर्यऽएवाग्नेयः । ( श्च ) चन्द्रमाः सौम्योऽहरेवाग्नेयᳪं रात्रिः सौम्या स ऽएवापूर्य्यतेऽर्द्धमासः स ऽआग्नेयो योऽपक्षीयते स सौम्यः ॥ २४ ॥

( ऽ ) आज्यभागाभ्यामेव । सूर्याचन्द्रमसावाप्नोत्युपाᳪंशुयाजेनैवाहोरात्रे ऽआप्नोति पुरोडाशेनैवार्द्धमासावाप्नोतीत्यु हैक ऽआहुः ॥ २५ ॥

( स्तु ) तदु होवाचासुरिः । ( गु ) आज्यभागाभ्यामेवातो यतमे वा यतमे वा द्वे ऽआप्नोत्युपाᳪंशुयाजेनैवातो यतमे वा यतमे वा द्वे ऽआप्नोति पुरोडाशेनैवातो यतमे वा यतमे वा द्वे ऽआप्नोति सर्व्वं म ऽआप्तमसत्सर्वं जितᳪंसर्व्वेण वृत्रᳪंहनानि सर्व्वेण द्विषन्तं भ्रातृव्यᳪंहनानीति तस्माद्वा ऽएतावत्क्रियत ऽइति ॥ २६ ॥

---

सूर्य एवाग्नेयश्चन्द्रमाः सौम्यः ( १ ) । अहरेवाग्नेयम्, रात्रिः सौम्या ( २ ) । य एवापूर्यते अर्द्धमासः स आग्नेयोऽपक्षीयते स सौम्यः ( ३ ) ॥ २४ ॥

आज्यभागाभ्यामेव सूर्याचन्द्रमसावाप्नोति, उपांशुयाजेनैवाहोरात्रे आप्नोति, पुरोडाशेनैवार्द्धमासावाप्नोति, इत्यु हैक आहुः ॥ २५ ॥

तद्धु होवाचासुरिः—आज्यभागाभ्यामेवातो यतमे वा यतमे वा द्वे आप्नोति । उपांशुयाजेनैवातो यतमे वा यतमे वा द्वे आप्नोति । पुरोडाशेनैवातो यतमे वा यतमे वा द्वे आप्नोति । सर्वं मे आप्तमसत्, सर्वं जितम्, सर्वेण वृत्रं हनानि, सर्वेण द्विषन्तं भ्रातृव्यं हनानि, इति । तस्माद् वा एतावत् क्रियते इति ॥ २६ ॥

---

त्यादिना । 'एतावती' सूर्यचन्द्रादिभेदेन त्रेधा 'विभूतिः' विभवो[१] बहुभावः । विभूतिरित्यस्य व्याख्यानं प्रजातिरिति । 'प्रजातिः' प्रकर्षेणोत्पत्तिः ॥ २३ ॥

सूर्यादियुगलत्रयस्याग्नीषोमात्मकतां विभज्य योजयति—**सूर्य एवेति** । सूर्याह्नोश्चन्द्ररात्र्योश्चाग्निसोमात्मकताया-मुष्णत्वशीतत्वे हेतू । आपूर्यमाणपक्षस्याग्नेयत्वमग्नेर्भिन्नस्य सवितुः किरणानामनुक्रमेण चन्द्रमस्यनुप्रवेशात्; अपक्षीयमाणपक्षस्य सौम्यत्वं च क्रमेण सूर्यांशापनये सति स्वकीयकिरणोपवापादिति[२] द्रष्टव्यम् ॥ २४ ॥

अस्त्वेवं किं तत इत्यत आह—**आज्यभागाभ्यामेवेति** । अतस्त्रिविधविभूत्याप्तये त्रयाणामपि यागानामग्नीषोमीयत्वं युक्तमिति केचिदाहुः ॥ २५ ॥

**तद्धु होवाचेति** । 'आसुरिः' त्वेवम्[३] 'उवाच' उभयेषु त्रिषु यागेष्वाज्यभागाभ्यामेव सूर्याहोऽर्द्धमास-युगलत्रयात्मिकासु त्रिविधासु विभूतिषु 'यतमे वा यतमे वा' 'द्वे' वस्तुनी, 'यतमे वा' अहोरात्ररूपे वा, शुक्लकृष्णपक्षरूपे वा, द्वे 'आप्नोति' वीप्सया त्रिविधान्यपि युगलानि परिगृह्यन्ते । आज्यभागपुरोडाशाभ्या-मग्नीषोमाग्नीषोमदेवताकानामप्येवं त्रिष्वपि यागेष्वेकैकेनैव त्रिविधामप्यग्नीषोमयोर्विभूतिमाप्तवान् भवतीत्यासुरि-

---

१–विभावः इति क्वचित्पाठः । २–स्वकीयकारणोपवापाद्–इति क्वचित्पाठः । ३–'आसुरिराचार्यस्त्वेवं मन्यते' इति क. पा. ।

तदाहुः । किमिदं जामि क्रियतेऽग्नीषोमयोरेवाज्यस्याग्नीषोमयोः पुरोडाशस्य यदनन्तर्हितं तेन जामीत्यनेन ह त्वेवाजाम्याज्यस्येतरं पुरोडाशस्येतरं तदन्यदिवेतरमन्यदिवेतरं भवत्यृचमनूच्य जुषाणेन यजत्यृचमनूच्यर्चा यजति तदन्यदिवेतरमन्यदिवेतरं भवत्यनेन ह त्वेवाजाम्युपाᳪंश्वाज्यस्य यजत्युच्चैः पुरोडाशस्य स यदुपाᳪंशु तत्प्राजापत्यᳪं रूपं तस्मात्तस्यानुष्टुभमनुवाक्यामन्वाह वाग्ध्यनुष्टुब्वाग्घि प्रजापतिः ॥ २७ ॥

---

तदाहुः—किमिदं जामि क्रियते—अग्नीषोमयोरेवाज्यस्य, अग्नीषोमयोः पुरोडाशस्य, यदनन्तर्हितं तेन जामि—इति । अनेन ह त्वेवाजामि-आज्यस्येतरम्, पुरोडाशस्येतरम्-तदन्यदिवेतरमन्यदिवेतरं भवति । ऋचमनूच्य जुषाणेन यजति, ऋचमनूच्य ऋचा यजति—तदन्यदिवेतरमन्यदिवेतरं भवति । अनेन ह त्वेवाजामि—उपांश्वाज्यस्य यजति, उच्चैः पुरोडाशस्य । स यदुपांशु—तत् प्राजापत्यं रूपम् । तस्मात्तस्यानुष्टुभमनुवाक्यामन्वाह । वाग् ह्यनुष्टुब्, वाग् हि प्रजापतिः ॥ २७ ॥

---

राचार्यो मन्यते । आसुरिपक्षं निगमयति—तस्मादिति । 'तस्माद्वै' यस्मादेकैकेन सर्वविभूतिराप्ता भवति, तस्मात् कारणाद् 'एतावत्' यागत्रयमप्यग्नीषोमीयमेव 'क्रियते' ॥ २६ ॥

अथाज्यभागादियागत्रयद्रव्ययोराज्यपुरोडाशयोरेकदेवतात्वप्रयुक्तं जामितादोषमाक्षिप्य द्रव्यमन्त्रधर्माणां भेदेन तत्परिहरति—तदाहुरित्यादिना । आज्यपुरोडाशस्य, प्रदानमिति शेषः । अथवा 'आज्यस्य' 'पुरोडाशस्य' वा पक्षावपि 'अग्नीषोमयोः' एव दीयत इत्यर्थः । कथमेतावता जामितेति, तत्राह—यदिति । एकरूपं 'यद्' वस्तुद्वयं तद्विलक्षणेन वस्त्वन्तरेणाव्यवहितम्, 'तेन' अव्यवधानेन तद्वस्तु 'जामि' भवति । अत्र तु व्यवधानमाग्नेयेन 'अनेन' वक्ष्यमाणेन च खल्वजामि । केनेति—उच्यते—'आज्यस्य' द्रव्यस्य 'इतरम्' इतरत् कर्म—उपांशुयाजाख्यम्, तथा 'पुरोडाशस्येतरम्' आज्याख्यम्; अन्योन्यापेक्षयोरुभयोरितरत्वम् । अन्यदिवेति । द्रव्यभेदादेकदेवत्यमपि कर्मद्वयम् 'अन्यदिवान्यदिव' भवतीत्यर्थः, अतोऽन्ययोर्न जामिताऽस्ति । द्वितीयः परिहारः—आज्यभागः प्रधानद्वयं वेति कोटिद्वयं विषयीकृत्य प्रवृत्त इति द्रष्टव्यम् । ( मन्त्रभेदेन चाज्यभाग-प्रधानद्वययोरजामित्वम्, ) प्रधानद्वययोः 'जुषाणः'—इत्यस्यासम्भवात् । यद्यप्याज्यभागप्रधानयोर्देवतैक्यम्, तथाप्याज्यभागस्य 'ऋचम्' "अग्निर्वृत्राणि"—( वा. सं. ३३ । ९ । ) "त्वं सोमासि"—इत्यादिकामनुवाक्यां कृत्वा "जुषाणो अग्निराज्यस्य वेतु"—"जुषाणः सोमः"—( तै० ब्रा० ३ । ५ । ६ । १, २ ) इति 'जुषाणेन यजति;' प्रधानाभ्यां तु क्रमेण "अग्नीषोमा यो अद्य वाम्" (ऋ० १. ९–३, २.) "अग्नीषोमा सवेदसा"—( ऋ. सं. १. ९३. ९ । तै. ब्रा. ३. ५. ७. ४. ) इत्यनूच्य, "आन्यं दिवो मातरिश्वा जभार—" ( ऋ. १. ९३. ६ ) "युवमेतानि"—( ऋ. सं. १. ९३. ५ । तै. ब्रा. ३. ५. । ७. ४ ) इत्यृग्भ्यां यजति । अन्यदिवेत्यादि । पूर्ववन्न दोषः । तथाऽऽज्यपुरोडाशयोरुपांशुत्वोच्चैस्त्वभेदादप्यजामित्वम् । "तावब्रूतामग्नीषोमा-वाज्यस्यैव तावुपांशु पौर्णमास्यां यजन्निति"—श्रुत्यन्तरादुपांशुत्वविधानं युक्तम् । विहितमाज्यस्योपांशुत्वं प्रशंसति—

---

१–'त्रेधा तत्परिहरति' इति क. पा. । २–'द्वितीयः परिहारः'—इत्यादिकं नास्ति क्वचित् । ३–नास्त्येतत् क्वचित् । ४–'इत्यनयर्चा 'अग्नीषोमावान्यं दिवो मातरिश्वा जभार' 'अग्नीषोमौ युवमेतानि' इत्यृग्भ्यां यजति' इति क्वचित्पाठः ।

(रे) एतेन वै देवाः । (ऽ) उपांशुयाजेन यं यमसुराणामकामयन्त तमुपत्सर्य वज्रेण वषट्कारेणाघ्नंस्तथो ऽएवैष ऽएतेनोपांशुयाजेन पाप्मानं द्विषन्तं भ्रातृव्यमुपत्सर्य वज्रेण वषट्कारेण हन्ति तस्मादुपांशुयाजं यजति ॥ २८ ॥

स वा ऽऋचमनूच्य जुषाणेन यजति । तदन्विमा ऽअन्यतरतोदन्ताः प्रजाः प्रजायन्तेऽस्थि ह्यृगस्थि हि दन्तोऽन्यतरतो ह्येतदस्थि करोति॥२९॥

(त्य) अथर्चमनूच्यर्चा यजति । तदन्विमा ऽउभयतोदन्ताः प्रजाः प्रजायन्तेऽस्थि ह्यृगस्थि हि दन्त ऽउभयतो ह्येतदस्थि करोत्येता वा

---

एतेन वै देवा उपांशुयाजेन यं यमसुराणामकामयन्त—तमुपत्सर्य वज्रेण वषट्कारेणाघ्नन्, तथो एवैष एतेनोपांशुयाजेन पाप्मानं द्विषन्तं भ्रातृव्यमुपत्सर्य वज्रेण वषट्कारेण हन्ति। तस्मादुपांशुयाजं यजति ॥ २८ ॥

स वा ऋचमनूच्य जुषाणेन यजति, तदन्विमा अन्यतरतोदन्ताः प्रजाः प्रजायन्ते । अस्थि हि ऋग्, अस्थि हि दन्तः, अन्यतरतो ह्येतदस्थि करोति ॥ २९ ॥

अथ ऋचमनूच्यर्चा यजति, तदन्विमा उभयतोदन्ताः प्रजाः प्रजायन्ते । अस्थि हि ऋग्, अस्थि

---

**स यद्युपांश्विति** । उपांशुत्वस्यानिरुक्तत्वात्—प्रजापतेरपि सर्वात्मकत्वेन तथात्वात्प्रजापतिरूपत्वम् । 'तस्मात्'—उपांशोः प्रजापतिरूपत्वात् 'तस्य' प्रजापतेरुचितामनुष्टुप्छन्दस्काम् "अग्नीषोमा यो अद्य वाम्"—इत्येताम्, 'अनुवाक्याम्' अनुब्रूते । एतावता कथं साम्यप्रतीतिरित्यत आह—**वागघीति** । "अनुष्टुप् च वै सप्तदशश्च समभवतां सानुष्टुप् चतुरुत्तराणि छन्दांस्यसृजत"—इति सामब्राह्मणे ( १ प्र. २ ख. ) श्रवणादनुष्टुभो वाग्रूपत्वम् । ततोऽपि किमित्यत आह—**वागिध प्रजापतिरि**ति । "आश्रावयास्तु श्रौषडित्यादि"—"एष वै सप्तदशः प्रजापतिरिति" श्रुतेः—( तै. सं. १ । ९ । ११ )—प्रजापतिरूपत्वम् ॥ २७ ॥

सिद्धवद् व्यवहृतमुपांशुयाजमिदानीं सार्थवादं विदधाति—**एतेन वै देवा** इति । 'एतेन' उपांशुयाजेन, 'असुराणां' मध्ये 'यं—यम्' असुरं हन्तुमैच्छन्, 'तं—तम्' उपत्सार्य उप पार्श्वे च गत्वा, उच्चैरुच्चार्यमाणेन वषट्काराख्येन च 'वज्रेण' 'अघ्नन्' । वषट्कारस्य वृत्रशिरश्छेदनसाधनत्वाद्वज्रत्वम् । **तथो एवे**त्यादि स्पष्टम् । तस्माद्—उपांशुयाजं यजेदिति विधिः । उपांश्विज्यते देवता अत्र यागे इति 'उपांशुयाजः'॥२८॥

आज्यभागोपांशुयाजयोर्जामितापरिहाराय याज्यापुरोऽनुवाक्ययोर्वैलक्षण्यमुक्तम्, तदेव विधाय प्रशंसति—**स वा ऋचमनूच्य जुषाणेने**त्यादिना । उदाहृतौ जुषाणशब्दयुक्तौ मन्त्रौ, 'तत्' तादृगनुष्ठानम् 'अनु' तत्सामर्थ्यादित्यर्थः । 'अन्यतरतः' तयोरन्यत्र ऋक्करणादेतत् कर्म्म 'अन्यतरतः' 'अस्थि' अस्थिवद् दृढं करोति । तस्मादन्यतरत ऋक्करणं युक्तमित्यर्थः ॥ २९ ॥

**अथर्चमनूच्यर्चे**ति । एवम् 'ऋचमनूच्य ऋचा'—इत्येतद् व्याख्येयम् । 'उभयतोदन्ताः' पुरुषाश्वादयः

---

१—'उपत्सर्य्य' 'उपत्सार्य्य'—इति वा पाठो लभ्यते । सायणभाष्यसंमतया तु 'उपोत्सार्य्य'—इति पाठो युक्तः प्रतीयते । अथवा—उपोपसृष्टो वैदिकः प्रकृते 'त्सृ'—धातुः स्यात् । त्सरुः खड्गादिमुष्टिरित्यादौ तद्धातुप्रयोगस्य दृष्टत्वात् ॥

ऽइमा इत्थ्यः प्रजा ऽअन्यतरतोदन्ताश्चैवोभयतोदन्ताश्च स यो हैवं विद्वा-नग्नीषोमयोः प्रजातिं यजति बहुर्हैव प्रजया पशुभिर्भवति ॥ ३० ॥

स वै पौर्णमासेनोपवत्स्यन् । न सत्रा सुहित ऽइव स्यात्तेनेदमुदरमसुर्थं क्लिनात्याहुतिभिः प्रातर्दैवमेष ऽउ पौर्णमासस्योपचारः ॥ ३१ ॥

स वै सम्प्रत्येवोपवसेत् । ( त्स ) सम्प्रति वृत्रᳪं हनानि सम्प्रति द्विषन्तं भ्रातृव्यᳪं हनानीति ॥ ३२ ॥

स वा ऽउत्तरामेवोपवसेत् । ( त्स ) समिव वा ऽएष क्रमते यः सम्प्रत्युप-वसत्यनद्धा वै संक्रान्तयोर्यदीतरो वेतरमभिभवतीतरो वेतरमथ य ऽउत्तरा-मुपवसति यथा पराञ्चमावृत्तᳪं सम्पिᳪंष्यादप्रत्यालभमानᳪंसोऽन्यतो-घात्येव स्यादेवं तद्य ऽउत्तरामुपवसति ॥ ३३ ॥

---

हि दन्तः–उभयतो ह्येतदस्थि करोति । एता वा इमा इत्थ्यः प्रजाः–अन्यतरतोदन्ताश्चैवोभयतो-दन्ताश्च । स यो हैवं विद्वानग्नीषोमयोः प्रजातिं यजति–बहुर्हैव प्रजया पशुभिर्भवति ॥ ३० ॥

पूर्णमासोपचारः ।

स वै पौर्णमासेनोपवत्स्यन्न सत्रा सुहित इव स्यात्–तेनेदमुदरमसुर्थं क्लिनात्याहुतिभिः प्रातर्दैवम् । एष उ पौर्णमासस्योपचारः ॥ ३१ ॥

स वै संप्रत्येवोपवसेत्–संप्रति वृत्रं हनानि, संप्रति द्विषन्तं भ्रातृव्यं हनानीति ॥ ३२ ॥

स वा उत्तरामेवोपवसेत् । समिव वा एष क्रमते–यः सम्प्रत्युपवसति; अनद्धा वै संक्रान्तयोर्यदी-तरो वेतरमभिभवति, इतरो वेतरम् । अथ य उत्तरामुपवसति–यथा पराञ्चमावृत्तं संपिंष्यादप्रत्या-लभमानम्–सोऽन्यतोघात्येव स्यात्, एवं तद्,–य उत्तरामुपवसति ॥ ३३ ॥

---

प्रसिद्धाः । द्विविधप्रजाव्यतिरेकेण प्रजान्तराभावात् सर्वप्रजालाभाय याज्यानुवाक्यायुगलयोरुक्तं वैलक्षण्यम् । उक्तार्थज्ञानपूर्वकानुष्ठानं प्रशंसति–स य इति । अग्नीषोमयोः प्रजापतिसूर्यसोमादिरूपं त्रिविधवैभवम्, तदाप्ति-कारणमाज्यभागोपांशुयाजाग्नीषोमीयपुरोडाशाख्यं यागत्रयमनुतिष्ठतीत्यर्थः ॥ ३०–३२ ॥

पक्षान्तरमाह–स वा उत्तरामिति । न पूर्वां पौर्णमासीमुपवसेत् 'उत्तरामेव' । उत्तरोपवासपक्षे गुणमाह–अथ य उत्तरामिति । यथा कश्चित्परराष्ट्रं प्राप्य प्रतिमुखं पलायमानं हननोद्योगरहितं सम्यक् चूर्णितं करोति, तदुत्तरं पेषणमप्येवं भवति; प्रतिनिवृत्तस्योत्तरपक्षस्याक्रान्तप्रायत्वात् । 'य उत्तराम्' इति पुनरुपसंहारः ॥ ३३ ॥

---

१–" पूर्वां पौर्णमासीमुत्तरां वोपवसेत् " का. श्रौ. सू. २ । १ । १ । इति ॥ २–पक्षान्तरमाहेत्याद्येतत्पर्यन्तो ग्रन्थो नास्ति क्वचित् । ३–' तदुत्तरं पोषणम् ' इत्यादि पा. ।

स वै सम्प्रत्येवोपवसेद् । ( ग्र ) यथा वा ऽअन्यस्य हतꣳसम्पिꣳष्यादेवं तद्य ऽउत्तरामुपवसति सोऽन्यस्यैव कृतानुकरोऽन्यस्योपावसायी भवति तस्माद्‌ सम्प्रत्येवोपवसेत् ॥ ३४ ॥

( त्र ) प्रजापतेर्ह वै प्रजाः ससृजानस्य । पर्व्वाणि विसस्रꣳसुः स वै संवत्सर ऽएव प्रजापतिस्तस्यैतानि पर्व्वाण्यहोरात्रयोः सन्धी पौर्णमासी चामावास्या चर्त्तुमुखानि ॥ ३५ ॥

स विस्रस्तैः पर्व्वभिः। (नं) न शशाक सꣳहातुं तमेतैर्हविर्यज्ञैर्देवा ऽअभिषज्यन्नग्निहोत्रेणैवाहोरात्रयोः सन्धी तत्पर्व्वाभिषज्यंस्तत्समदधुः पौर्णमासेन चैवामावास्येन च पौर्णमासीं चामावास्यां च तत्पर्व्वाभिषज्यंस्तत्समदधुश्चातुर्म्मास्यैरेवर्त्तुमुखानि तत्पर्व्वाभिषज्यंस्तत्समदधुः ॥ ३६ ॥

---

स वै संप्रत्येवोपवसेत् । यथा वा अन्यस्य हतं संपिंष्याद्; एवं तद्—य उत्तरामुपवसति । सोऽन्यस्यैव कृतानुकरः, अन्यस्योपावसायी भवति; तस्माद्‌ संप्रत्येवोपवसेत् ॥ ३४ ॥

प्रजापतेर्ह वै प्रजाः ससृजानस्य पर्वाणि विसस्रंसुः । स वै संवत्सर एव प्रजापतिः, तस्यैतानि पर्वाणि—अहोरात्रयोः सन्धी, पौर्णमासी च अमावास्या च ऋतुमुखानि ॥ ३५ ॥

स विस्रस्तैः पर्वभिर्न शशाक संहातुम्, तमेतैर्हविर्यज्ञैर्देवा अभिषज्यन्—अग्निहोत्रेणैवाहोरात्रयोः सन्धी, तत्पर्वाभिषज्यन्—तत्समदधुः । पौर्णमासेन चैवामावास्येन च पौर्णमासीं च अमावास्यां च, तत्पर्वाभिषज्यन्—तत् समदधुः । चातुर्मास्यैरेवर्तुमुखानि तत्पर्वाभिषज्यन्—तत् समदधुः ॥३६॥

---

इत्थं पक्षान्तरं सोपपत्तिकमभिधाय प्रथमं पक्षं सिद्धान्तयितुं पुनरुपादत्ते—**स वै सम्प्रत्येवोपवसेदिति** । ननु द्वितीयपक्षानादरे किं कारणमिति तदाह—**यथा वा अन्यस्येति** । 'यथा' कश्चिन्मन्दोऽन्येन पूर्वमेव पातितम्, पुनः स्वयम् 'पिंष्यात्', 'एवं' 'तद्' उत्तरपेषणं भवति । स्वत एव प्रतिनिवृत्तस्य पक्षस्य स्वेनाक्रान्तत्वात् । उत्तरानादरे कारणान्तरमाह—**सोऽन्यस्यैवेति** । किञ्च उत्तरोपवासी 'अन्यस्य' अन्येन यत्कृतं कार्यं तस्य 'अनुकरः' अनुकारी—कृतस्यैव कार्यस्य पुनः करणशीलो भवति । तथा 'अन्यस्य उपावसायी' अन्येनाध्यवसितस्य पुनरध्यवसायी 'भवति' । सम्प्रत्युपवसन्तं दृष्ट्वा, तदनुकर्तुं स्वयमपि परेद्युरसावुपवसतीत्येवं प्रतिभानात् । 'तस्माद्‌' संप्रति—इति स्वपक्षनिगमनम् ॥ ३४ ॥

सम्प्रति—पक्षमेव सिद्धान्तयितुमाख्यायिकामाह—**प्रजापतेर्हेति** । पुरा 'प्रजाः' सृष्टवतः 'प्रजापतेः' सन्धयो विस्रस्ता आसन् किल । ननु कः प्रजापतिः ? कानि पर्वाणि ? इति, उच्यते—संवत्सरे सकलप्रजोत्पत्तेः 'स संवत्सर एव प्रजापतिः,' 'तस्य' कालात्मकस्य 'पर्वाणि' 'अहोरात्रयोः सन्धी' प्रातस्सायङ्कालौ तथा एतौ 'सन्धी' 'पौर्णमासी च अमावास्या च' कालौ । 'ऋतुमुखानि' वसन्तादीनि, तानि विस्रस्तानि ॥ ३५ ॥

**स विस्रस्तैरिति** । 'सः' विस्रस्तपर्वा 'संहातुं' सङ्गतो भवितुं शक्तो नाभूत् । 'तम्' अशक्तं एते—

स सꣳहितैः पर्व्वभिः । (रि) इदमन्नाद्यमभ्युत्तस्थौ यदिदं प्रजापतेरन्नाद्यꣳ स यो हैवंविद्वान्त्सम्प्रत्युपवसति सम्प्रति हैव प्रजापतेः पर्व्व भिषज्यत्यवति हैनं प्रजापतिः स ऽएवमेवान्नादो भवति य ऽएवं विद्वान्त्सम्प्रत्युपवसति तस्मादु सम्प्रत्येवोपवसेत् ॥ ३७ ॥

(त्रु) चक्षुषी ह वा ऽएते यज्ञस्य यदाज्यभागौ । तस्मात्पुरस्ताज्जुहोति पुरस्ताद्धीमे चक्षुषी तत्पुरस्तादेवैतच्चक्षुषी दधाति तस्मादिमे पुरस्ताच्चक्षुषी ॥ ३८ ॥

---

स संहितैः पर्वभिरिदमन्नाद्यमभ्युत्तस्थौ—यदिदं प्रजापतेरन्नाद्यम् । स यो हैवं-विद्वान् संप्रत्युपवसति-संप्रति हैव प्रजापतेः पर्व भिषज्यतिः अवति हैनं प्रजापतिः, स एवमेवान्नादो भवति—य एवं विद्वान् सम्प्रत्युपवसति । तस्मादु सम्प्रत्येवोपवसेत् ॥ ३७ ॥

चक्षुषी ह वा एते यज्ञस्य—यदाज्यभागौ तस्मात्पुरस्ताद् जुहोति । पुरस्ताद्धीमे चक्षुषी तत्पुरस्तादेवैतच्चक्षुषी दधाति—तस्मादिमे पुरस्ताच्चक्षुषी ॥ ३८ ॥

---

हविर्यज्ञैः' 'देवाः' 'अभिषज्यन्' भेषजमकुर्वन् । सोमव्यतिरिक्ताज्यपुरोडाशादिसाध्याः 'हविर्यज्ञाः' । विभज्य योजयति—सायं प्रातश्च—क्रियमाणेनाग्निहोत्रेण 'अहोरात्रयोः' 'सन्धी' एतदात्मकं प्रजापतेः 'तत् पर्व' अचिकित्सन्, 'समदधुः' समाहितमकुर्वन् । तथा 'पौर्णमासीं चामावास्यां च' पौर्णमास्यमावास्यारूपे पर्वणी । वैश्वदेवादि—चातुर्मास्यैरेव वसन्ताद्यृतुमुखानि 'समदधुः' ॥ ३६ ॥

**स सꣳहितैरि**ति । 'सः' एव कालात्मकः प्रजापतिः दृढपर्वा संवत्सरमध्ये यदन्नं व्रीह्यादिरूपं पक्वं भवति—तत् सर्वमभिलक्ष्य भोक्तुमुत्थितवान् । कालावयवानां विच्छेदाभावात् तत्तत्कालोचितमन्नं भोगयोग्यमासीदित्यर्थः ।

इदानीमुपवासयोग्यं पर्व विधत्ते—**सम्प्रती**ति । 'सम्प्रति' 'हैव' पर्वविस्रंसनसमकाल एव 'प्रजापतेः पर्व' सम्प्रति उपवसन् चिकित्सितवान् भवति । तथैव सम्प्रत्युपवासिनं रक्षतिः प्रजापतिवत् स्वयमपि सर्वान्नादो भवति 'य एवं विद्वान्'—इत्युपसंहारः । तस्मादिति स्वाभिमतपक्षनिगमनम् । कात्यायनस्तु ब्राह्मणे सोपपत्तिकाभिधानमभिप्रेत्य पक्षद्वयमपि विकल्पेनोवाच—"पूर्वां पौर्णमासीमुपवसेत्, उत्तरां वा"—(का. श्रौ. सू. २. १) इति ॥ ३७ ॥

आज्यभागस्थाननियममाह—**चक्षुषी ह वा** इति । 'यत्' यतः 'आज्यभागौ' चक्षुःस्थानीयौ—अतः 'पुरस्तात्' कर्तव्यौ; तयोः पुरस्तात्करणेन 'यज्ञस्य चक्षुषी' 'पुरस्तात्' कृतवान् भवति । यतो यज्ञे ते 'पुरस्तात् क्रियेते, अत इदानीमपि प्राणिनां चक्षुषी 'पुरस्ताद् वर्तेते ॥ ३८ ॥

---

१—'सोमव्यतिरिक्तपुरोडाशादि' इत्येव क्वचित् । २—'पश्चात्स दृढपर्वा संवत्सरमध्ये' इत्यादि क. पा. ।

उत्तरार्द्धपूर्वार्द्धे हैके ( क८ ) आग्नेयमाज्यभागं जुह्वति दक्षिणार्द्धपूर्वार्द्धे सौम्यमाज्यभागमेतत्पुरस्ताच्चक्षुषी दध्म ऽइतिवदन्तस्तदु तदाविज्ञान्यमिव हवीᳬंषि ह वा ऽआत्मा यज्ञस्य स यदेव पुरस्ताद्धविषां जुहोति तत्पुरस्ताच्चक्षुषी दधाति यत्रो ऽएव समिद्धतमं मन्येत तदाहुतीर्जुहुयात्समिद्धहोमेन ह्येव समृद्धा ऽआहुतयः ॥ ३९ ॥

स वा ऋचमनूच्य जुषाणेन यजति । तस्मादिमे ऽअस्थन्त्सत्यनस्थिके चक्षुषी ऽआश्लिष्टे ऽअथ यदृचमनूच्यऽर्चा यजेदस्थि हैव कुर्यान्न चक्षुः॥४०॥

( घ्रे )ते वा ऽएते । अग्नीषोमयोरेव रूपमन्वायत्ते यच्छुक्लं तदाग्नेयं

---

उत्तरार्द्धपूर्वार्द्धे हैके आग्नेयमाज्यभागं जुह्वति, दक्षिणार्द्धपूर्वार्द्धे सौम्यमाज्यभागम्–एतत्पुरस्ताच्चक्षुषी दध्मः–इति वदन्तः । तदु तदा अविज्ञान्यमिव । हवींषि ह वा आत्मा यज्ञस्य । स यदेव पुरस्ताद्धविषी जुहोति–तत्पुरस्ताच्चक्षुषी दधाति । यत्रो एव समिद्धतमं मन्येत तदाहुतीर्जुहुयात् । समिद्धहोमेन ह्येव समृद्धा आहुतयः ॥ ३९ ॥

स वा ऋचमनूच्य जुषाणेन यजति । तस्मादिमे अस्थन् सत्यनस्थिके चक्षुषी आश्लिष्टे । अथ यदृचमनूच्यर्चा यजेद्–अस्थि हैव कुर्याद् न चक्षुः ॥ ४० ॥

ते वा एते अग्नीषोमयोरेव रूपमन्वायत्ते । यत् शुक्लम्–तद् आग्नेयम्, यत् कृष्णं तत् सौम्यम् ।

---

अत्र केषाञ्चित् पक्षमाह–**उत्तरार्द्धपूर्वार्द्धे** इति । तेषामभिप्रायमाह–**एतदिति** । 'एतत्' एतेन–पूर्वभागेऽप्युत्तरदक्षिणभागयोर्होमेन 'पुरस्तात्' साक्षात् 'चक्षुषी' स्थान एव स्थापयाम इति । अस्य पक्षस्य दुरवगमत्वमाशङ्क्य पूर्वोक्तमेव पक्षं सिद्धान्तयति–**तदु तदे**त्यादिना । 'अविज्ञान्यमिव' विज्ञानेन हीनमिव, वैषम्याभावेन साक्षात् स्थानविज्ञानस्याशक्यत्वात् । तस्य कस्य पुरस्तादित्यत आह–**हवींषीति** । यागशरीररूपस्य द्रव्यत्यागात्मकत्वाद् यत्र प्रधानानि हवींषि हूयन्ते,–तेषां पुरोभागमात्रहवनात् स्वस्थाने चक्षुःस्थानं भवतीत्यर्थः । उक्तपुरोभागविशेषमाह–**यत्रो एवेति** । उत्तरपूर्वार्द्धादिस्थानमनपेक्ष्य प्रधानहविःपुरोभागे यत्रकुत्राग्नौ समिद्धे होतव्यम्; तथा सति 'आहुतयः' अपि 'समृद्धाः' स्युः । अत्र कात्यायनः–"आग्नेयमुत्तरपूर्वार्द्धे, दक्षिणपूर्वार्द्धे सौम्यम्, समिद्धतमे वा"–इति ( श्रौ. सू. ३।३।१७।२०।२१।२२ ) ॥ ३९ ॥

आज्यभागयाज्यानुवाक्ययोर्यादृग् जुषाणवैलक्षण्यं पूर्वमुक्तम्, तदपि तयोश्चक्षुष्ट्वप्रयुक्तमित्याह–**स वा ऋचमनूच्येति** । 'अस्थन्' अस्थनि,–मुखेऽस्थिमये सति ऋग्जुषयोः[1] काठिन्यमृदुत्वात् साम्यादस्थ्यनस्थ्यात्मता । यद्वै यज्ञस्य समाम्नातेन यजुषा क्रियते, तत् शिथिलितम्; यदृचा तद् दृढमिति । 'ऋचा' "अग्निर्वृत्राणि"–इत्यादिकया; 'यजुषा' "जुषाणो अग्निर्जुषाणः सोमः"–इति, ऋग्यजुषोश्च मृदुशिथिलत्वे समाम्नाते । उक्तप्रकारतामेर्थान्यभावे[2] दोषदर्शनेन समर्थयते–**यदृचमनूच्येति** । अप्यृचावेव कुर्वन् प्राणिनां यज्ञस्य वा 'अस्थि' अस्थिस्थानं मुखं केवलं 'कुर्यात्,' 'न चक्षुः' चक्षुस्तु वर्जयत्येव ॥ ४० ॥

आग्नेयसौम्ययोराज्यभागयोर्यज्ञचक्षुष्ट्वं लौकिकचक्षुस्साम्येन समर्थयते–**ते वा एते** इति । 'ते' चक्षुषी

---

१–'ऋग्जुषाणयोः' 'ऋग्यजुषोः' इति च क्वचित्पाठः । २–मन्यथान्यभावे–क. पा. ।

यत्कृष्णं तत्सौम्यं यदि वेतरथा यदेव कृष्णं तदाग्नेयं यच्छुक्लं तत्सौम्यं यदेव वीक्षते तदाग्नेयꣳ रूपꣳ शुष्के ऽइव हि वीक्षमाणस्याक्षिणी भवतः शुष्कमिव ह्याग्नेयं यदेव स्वपिति तत्सौम्यꣳ रूपमार्द्रे इव हि सुषुपुषो-ऽक्षिणी भवत ऽआर्द्र ऽइव हि सोम आजरसꣳ ह वाऽस्मिँल्लोके चक्षुष्मान्भवति सचक्षुरमुष्मिँल्लोके सम्भवति य ऽएवमेतौ चक्षुषी ऽआज्य-भागौ वेद ॥ ४१ ॥ २ ॥

इति पञ्चमप्रपाठके द्वितीयं ब्राह्मणम् [ ६ । २ ] ॥

इन्द्रो ह यत्र वृत्राय वज्रं प्रजहार । सोऽबलीयान्मन्यमानो नास्तृषी-तीव बिभ्यन्निलयाञ्चक्रे स पराः परावतो जगाम देवा ह वै विदाञ्चक्रुर्हतो वै वृत्रोऽथेन्द्रो न्यलेष्टेति ॥ १ ॥

---

यदि वेतरथा—यदेव कृष्णं तदाग्नेयम्, यत् शुक्लं तत् सौम्यम् । यदेव वीक्षते तदाग्नेयं रूपम्—शुष्के इव हि वीक्षमाणस्याक्षिणी भवतः, शुष्कमिव ह्याग्नेयम् । यदेव स्वपिति तत्सौम्यं रूपम्—आर्द्रे इव हि सुषुपुषोऽक्षिणी भवतः, आर्द्र इव हि सोमः । आ-जरसं ह वा अस्मिन् लोके चक्षुष्मान् भवति, सचक्षुरमुष्मिन् लोके संभवति—य एवमेतौ चक्षुषी आज्यभागौ वेद ॥ ४१ ॥

दर्शोपचारः ।

इन्द्रो ह यत्र वृत्राय वज्रं प्रजहार । सोऽबलीयान् मन्यमानो नास्तृषीतीव बिभ्यन्निलयाञ्चक्रे । स पराः परावतो जगाम । देवा ह वै विदांचक्रुः—हतो वै वृत्रः—अथेन्द्रो न्यलेष्टेति ॥ १ ॥

---

प्रत्येकम् ' अग्नीषोमयोः रूपम् ' ' अन्वायत्ते ' अनुप्राप्ते । कथम् ? चक्षुषि ' यच्छुक्लं तदाग्नेयम् ' सितभास्वरत्व-साम्यात्; चन्द्रमसि कार्ष्ण्यस्य वृद्ध्यनुसारेण स्फुटं प्रतिभासाद् ' यत्कृष्णं तत् सौम्यम् ' । अथ " आग्नेयः कृष्णग्रीवः "—( य० वा० सं० २९. २८. ) इत्यादिषु कार्ष्ण्यस्याग्नेयत्वश्रवणादक्षिमध्यस्य प्रकाशकाग्नि-धर्मत्वाच्च सोमे भूयसः शौक्ल्यस्य दर्शनाच्च—उक्तवैपरीत्यमाशङ्क्याह—यदि वेतरथेति । इदानीं दर्शनादर्शनांश-भेदेनाग्नीषोमात्मकतामाह—यदेव वीक्षत इति । ' यदेव ' चक्षुरुन्मीलनकाले सर्वं पश्यति । एतदुपपादयति—शुष्के इवेति । सर्वमपि वस्त्वग्निसम्बन्धे शुष्कं भवतीति प्रसिद्धम् । स्वपितिरप्यदर्शनमुपलक्षयति—यदेवेति । दर्शनं न करोतीत्यर्थः, ' सुषुपुषः ' सुप्तवतः—स्वपेः क्वसुः ( पा० सू० ३ । २ । १०७, ६ । १ । १९ ) सोमोऽप्यार्द्रप्रसवः आप्यमण्डलत्वात् । वेदितुः प्रशंसा—आ—जरसमिति । वयोहानिपर्यन्तं ' चक्षुष्मान् भवति ' इत्यर्थः । ' अमुष्मिन् ' स्वर्गलोकेऽपि ' सचक्षुः ' एव ' सम्भवति ' । आज्यभागयोश्चक्षुर्ष्ट्व-वेदिता ॥ ४१ ॥ २ ॥ [ ६. ३ ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये प्रथमकाण्डे षष्ठाध्याये तृतीयं ब्राह्मणम् ॥

अथामावास्यानि हवींषि विधातुमाख्यायिकामाह—इन्द्रो ह यत्रेति । ' यत्र ' यस्मिन् देशे ' इन्द्रः '

तमुन्वेष्टुं दध्रिरे। (रेऽग्नि) अग्निर्द्देवतानाᳬं हिरण्यस्तूप ऽऋषीणां बृहती च्छन्दसां तमग्निरनुविवेद तेनैता ᳬं रात्रि ᳬं सहाजगाम स वै देवानां व्वसुर्व्वीरो ह्येषाम् ॥ २ ॥

ते देवा ऽअब्रुवन्। (न्न) अमा वै नोऽद्य व्वसुर्व्वसति यो नः प्रावात्सीदिति ताभ्यामेतद्यथा ज्ञातिभ्यां वा सखिभ्यां वा सहागताभ्याᳬं समानुमोदनं पचेदजं वा तदह मानुष ᳬं हविर्द्देवानामेवमाभ्यामेतत्समान ᳬं हविर्न्निरवपन्नैन्द्राग्नं द्वादशकपालं पुरोडाशं तस्मादैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति ॥ ३ ॥

---

तमन्वेष्टुं दध्रिरे—अग्निर्देवतानां, हिरण्यस्तूप ऋषीणां, बृहती छन्दसाम्। तमग्निरनु विवेद। तेनैतां रात्रिं सहाजगाम। स वै देवानां वसुः, वीरो ह्येषाम् ॥ २ ॥

ते देवा अब्रुवन्—अमा वै नोऽद्य वसुर्वसति, यो नः प्रावात्सीदिति। ताभ्यामेतद्—यथा ज्ञातिभ्यां वा सखिभ्यां वा सहागताभ्यां समानमोदनं पचेदजं वा। तदह मानुषं हविः। देवानामेवमाभ्यामेतत् समानं हविर्निरवपन्—ऐन्द्राग्नं द्वादशकपालं पुरोडाशम्। तस्मादैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति ॥ ३ ॥

---

'वृत्राय' वृत्रवधार्थम् 'वज्रम्' 'प्रजहार' तदा स्वयं बलवान् सन्नपि 'अबलीयान्' अहमिति मत्वा 'नास्तृषि'। "स्तृञ् हिंसायाम्" ("स्तृणाति इत्यस्य वधकर्मसु पाठात्" निरु० २।११।१२) लुङ् (पा. सू. ३।२।११०॥ ३।४।६।) अहं न हिंसितवानस्मीति भीतः सन् पुनर्बाधशङ्कया निलीनोऽभूत्। एतदेवाह—'परः परावतो जगाम' अत्यन्तं विप्रकृष्टदेशं गतवान्। परावदिति दूरनाम (निघण्टु ३।२६।५। निरु. ७।७।४॥ ११।४।१४)। तस्य "उपसर्गाच्छन्दसि धात्वर्थे" (पा० सू० ५. १. ११८.) इति मतुप्। ततो 'देवाः' वृत्रे हते 'इन्द्रः' तज्जीवनशङ्कया कुत्र विलीनः 'इति' विदित्वा, अन्वेषणे मतिं कृत्वा देवऋषिच्छन्दसां मध्ये अग्निहिरण्यस्तूपबृहत्याख्यास्त्रयोऽप्यन्वैषिषुः। तत्र 'अग्निः' 'अनुविवेद' अनुसृत्य[1] लब्धवान्। लब्धेनेन्द्रेण सह 'एताम्' रात्रिम्। रात्रिशब्दो दिनस्योपलक्षणः। अत्यन्तसंयोगे द्वितीया[3]। कृष्णमप्यमावास्यादिवसं सहोषितवान्। किं कारणं तत्र तस्य वास इति, तदाह—स वा इति। 'सः' इन्द्रो 'देवानाम्' 'वसुः' धनरूपः, (या० निरु० ६।२।४) वासयिता वा (या० निरु० १२।४।७) एवं 'हि' यतः 'एषाम्' देवानां मध्ये 'वीरः,' अतस्तदागमनायाग्नेर्विलम्बो युक्तः। "इन्द्रो हि देवानां वसु"—इति तैत्तिरीयके समान-प्रकरणेऽभिधानात् "स वै"—इति तच्छब्देनेन्द्र एव परामृष्टव्यः ॥ १ ॥ २ ॥

ऐन्द्राग्नं द्वादशकपालं विधातुमाह—ते देवा इति। 'ते देवाः' 'नः' अस्माकं सम्बन्धी 'यः' इन्द्रः पवासमकरोत्, सः 'नः' 'वसुः' 'अद्य' 'अमा' अग्निना सह 'वसति'—'इति' उक्त्वा, 'ताभ्याम्' सखिभावेन सह वसद्भ्यामिन्द्राग्निभ्याम्, द्वादशकपालं हविरिति शेषः; प्रयच्छाम इत्यर्थः।

---

१–एतदग्रे–(॥ १ ॥ तमन्वेष्टुमिति।) इति क्वचित् पुस्तकेऽधिकमुपलभ्यते। २–निरुक्तम् १२. ४. ७ द्रष्टव्यम्।
३–"कालाध्वनोरत्यन्तसंयोगे" इति पा. सू. २।३।५॥

स इन्द्रोऽब्रवीत् । ( यु ) यत्र वै वृत्राय वज्रं प्राहरं तद्व्यस्मये स कृश ऽइवास्मि न वै मेदं धिनोति यन्मा धिनवत्तन्मे कुरुतेति तथेति देवा अब्रुवन् ॥ ४ ॥

( वँस्ते ) ते देवा ऽअब्रुवन् । ( न ) न वा ऽइममन्यत्सोमाद्धिनुयात्सोममेवास्मै सम्भरामेति तस्मै सोमᳫँसमभरन्नेष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः स यत्रैष ऽएताᳫँरात्रिं न पुरस्तान्न पश्चाद्ददृशे तदिमं लोकमागच्छति स ऽइहैवापश्चौषधीश्च प्रविशति स वै देवानां वस्वन्नᳫँह्येषां तद्यदेष ऽएताᳫँरात्रिमिहामा वसति तस्मादमावास्या नाम ॥ ५ ॥

---

स इन्द्रोऽब्रवीत् । यत्र वै वृत्राय वज्रं प्राहरं, तद् व्यस्मये । स कृश इवास्मि । न वै मेदं धिनोति । यन्मा धिनवत् तन्मे कुरुतेति । तथेति देवा अब्रुवन् ॥ ४ ॥

ते देवा अब्रुवन् । न वा इममन्यत् सोमाद्धिनुयात् । सोममेवास्मै संभरामेति । तस्मै सोमं समभरन् । एष वै सोमो राजा देवानामन्नं—यच्चन्द्रमाः । स यत्रैष एतां रात्रिं न पुरस्तान्न पश्चाद्ददृशे, तदिमं लोकमागच्छति । स इहैवापश्चौषधीश्च प्रविशति । स वै देवानां वसु, अन्नं ह्येषाम् । तद् यदेष एतां रात्रिमिहामा वसति—तस्मादमावास्या नाम ॥ ५ ॥

---

ननु देवताभेदेन हविर्भेदः किं न स्यात् ? इत्यत आह—**यथा ज्ञातिभ्या**मिति । परस्परमुच्छिष्टता नास्तीत्यवगमयितुं ज्ञातिसख्योरुपन्यासः । 'समानम्' एकमेव पचति; पक्त्वा समानं प्रयच्छतीत्यर्थः । 'मानुषम्' मनुष्येभ्यः कर्तव्यं सत्, उपकरणमिति शेषः । अस्त्वेवं देवानां किमायातमित्याह—**हविर्देवाना**मिति । 'देवानां' तु सहागतानां 'हविः समानमेव' उपकरणमित्यर्थः । एवं पूर्वाचारानुसारेणैव इदानीं विधत्ते—**तस्मादैन्द्राग्न** इति ॥ ३ ॥

अथ सान्नाय्यं विधातुमाह—**स इन्द्र** इत्यादिना । 'यत्र' यस्मिन्काले 'वज्रम्' 'प्राहरम्' प्राक्षिपम्, 'तत्' तदा 'व्यस्मये' विस्मितोऽभवम, विगतप्रबले स्मयदर्शनात् । यतः 'कृशोऽस्मि' तस्मात् 'इदं' कठिनं पुरोडाशम् 'मा' मां 'न धिनोति' न प्रीणयति अतो मम प्रीतिकरं हविः सम्पादयत 'इति' ॥४॥

**ते देवा** इति । उक्ता 'देवाः' 'इमम्' इन्द्रं प्रीणयितुं 'सोमादन्यत्' 'न' शक्नोतीति विचार्य, तस्मै 'सोममेव' सम्भृतवन्तः । कथं सम्भरेयुरिति तत्प्रकार उच्यते—**चन्द्रमा** इति । 'यत्' योऽस्ति 'एषः' एवाभिधूयमाणः 'सोमो राजा' 'सः' एवोभयतश्चन्द्रदर्शनरहितायां सम्पूर्णामावास्यायां भूलोकमागत्याप्स्वोषधीषु च प्रविशति । 'सः' प्रविष्ट एव चन्द्रमाः 'देवानां वसु' देवधनम् । कुतः ? यतः 'एषाम्' व्रीहियवसोमादिरूपेण 'अन्नम्' भवति, अतो वसुरित्यर्थः । चन्द्रमसोऽप्त्वोषधिसहवासप्रसङ्गात् 'अमावास्या'—शब्दं निर्वक्ति—**तद्यदेष** इति । 'इह' भूलोके 'एतां रात्रिम्' अपरिदृष्टचन्द्रायां रात्रौ साकल्येन 'अमा वसति' अमा सह वसति; अबोषधिचन्द्रमसामस्यां तिथौ सहवासात् सा तिथिः 'अमावास्या नाम' अभवत् ॥ ५ ॥

तं गोभिरनुविष्ठाप्य समभरन् । ( न्य ) यदोषधीराश्नंस्तदोषधिभ्यो यद-पोऽपिबंस्तदद्भ्यस्तमेव १५ँ सम्भृत्यातच्य तीव्रीकृत्य तमस्मै प्रायच्छन् ॥६॥

( न्त्सो ) सोऽब्रवीत् । ( द्धि ) धिनोत्येव मेदं नेव तु मयि श्रयते यथेदं मयि श्रयातै तथोपजानीतेति तं १५ँ शृतेनैवाश्रयन् ॥ ७ ॥

( यँस्त ) तद्वा ऽएतत् । ( त्स ) समानमेव सत्पय ऽएव सदिन्द्रस्यैव सत्तत्पुनर्नानेवाचक्षते । यदब्रवीद्धिनोति मेति तस्माद्दध्यथ यदेन १५ँ शृतेनैवाश्रयंस्तस्माच्छृतम् ॥ ८॥ [ अर्धप्रपाठकः ]

(१५ँ) स यथा ऽ५ँशुराप्यायेत ।(तै) एवमाप्यायतप पाप्मान१५ँ हरिमाणमह-

---

तं गोभिरनु विष्ठाप्य समभरन् । यदोषधीराश्नन्–तदोषधिभ्यः । यदपोऽपिबन्–तदद्भ्यः । तमेवं संभृत्यातच्य तीव्रीकृत्य तमस्मै प्रायच्छन् ॥ ६ ॥

सोऽब्रवीत् । धिनोत्येव मेदं, नेव तु मयि श्रयते । यथेदं मयि श्रयातै, तथोपजानीतेति । तं शृतेनैवाश्रयन् ॥ ७ ॥

तद्वा एतत् समानमेव सत्, पय एव सद्, इन्द्रस्यैव सत्, तत् पुनर्नानेवाचक्षते । यदब्रवीद्–धिनोति मेति । तस्माद्दधि । अथ यदेनं शृतेनैवाश्रयन्–तस्माच्छृतम् ॥ ८ ॥

स यथांशुराप्यायेत, एवमाप्यायत, अप पाप्मानं हरिमाणमहत । एष उ आमावास्यस्य बन्धुः । स यो हैवं विद्वान् संनयति, एवं हैव प्रजया पशुभिराप्यायते । अप पाप्मानं हते । तस्माद्वै संनयेत्॥९॥

---

तं गोभिरिति । ‘ तम् ’ अनुप्रविष्टं सोमं ‘ गोभिः ’ अनुक्रमेण विविधं स्थापयित्वा धारयित्वैव ‘ समभरन् ’ । तत्प्रकारमाह–यदोषधीरिति । ‘ ओषधीः ’ ‘ आश्नन् ’ अभक्षयन् गावः, ‘ तत् ’ तेन ‘ ओषधिभ्यः ’ सोमभरन् । तथा–अनुप्रविष्टसोमा अपः पिबन्ति गावः, तेन ‘ अद्भ्यः ’ । अबुपलक्षितानां तृणपयसां क्षीरतया परिणामादिति भावः । एवंप्रकारेण सम्भरणमेव सोमस्य तीव्रीकरणम् । अथवा ‘ तीव्रीकृत्य ’ अन्यदातञ्चनं कृत्वेत्यर्थः । अथ ‘ तम् ’ सम्भृतम् ‘ अस्मै ’ इन्द्राय ‘ प्रायच्छन् ’ ॥ ६ ॥

सोऽब्रवीदिति । ‘ सः ’ इन्द्रः स्वीकृत्येदम् ‘ अब्रवीत् ’ । ‘ इदम् ’ हविः ‘ मा ’ मां ‘ धिनोत्येव ’, ‘ तु ’ परन्तु ‘ मयि ’ ‘ नैव श्रयते ’ न तिष्ठति, न सात्म्यं भजत इत्यर्थः । अतो ‘ मयीदं ’ ‘ यथा ’ ‘ श्रयातै ’ श्रयेत, ‘ तथा ’ उपायं बुध्यध्वमिति । तेऽपि ‘ तं ’ इन्द्रं ‘ शृतेनैव ’ पक्वक्षीरेणैव ‘अश्रयन्’ । यद्यपि तैत्तिरीयके प्रथमं शृतं पश्चाद् दधीति क्रमः तथाप्यत्र सायम्प्रातर्दोहाभ्यां दधिपयसोः सम्भवादनेन क्रमेणाभिधानमिति द्रष्टव्यम् ॥ ७ ॥

तत् प्रशंसति–तद्वा एतदिति । ‘ तत् ’ प्रथमतश्चन्द्रात्मकम् ‘ एतत् ’ शृतरूपेण परिणतम्, वस्तुतः ‘ समानमेव ’ एकरूपमेव ॥ ८ ॥

सान्नाय्यस्य सोमात्मकतामभिधाय, आप्यायनसाम्यादपि तदात्मकतामाह—स यथांशुरिति । ‘ अंशुः ’

---

१–“ शृतेन प्रातःसवने श्रीणीयाद्दध्ना मध्यन्दिने नीतमिश्रेण तृतीयसवने ” इति तै० ब्रा० १ । ४ । ८ । ६ ॥ इति द्रष्टव्यम् ॥

२–पूर्वं सायं दोहेन दधि सम्पाद्यते, ततो यागदिने प्रातर्दोहेन शृतम् ॥ इति ॥

तैष ऽउ ऽआमावास्यस्य बन्धुः स यो हैवं विद्वान्त्सन्नयत्येव ँहैव प्रजया पशुभिराप्यायतेऽप पाप्मान ँहते तस्माद्वै सन्नयेत् ॥ ९ ॥

( त्त )तदाहुः । ( र्ना ) नासोमयाजी सन्नयेत्सोमाहुतिर्व्वा ऽएषा सानवरुद्धा सोमयाजिनस्तस्मान्नासोमयाजी सन्नयेदिति ॥ १० ॥

तदु समेव नयेत् । ( न्न ) नन्वत्रान्तरेण शुश्रुम सोमेन नु मा याजयताथ म ऽएतदाप्यायन ँसम्भरिष्यथेत्यब्रवीदिति न वै मेदं धिनोति यन्मा धिनवत्तन्मे कुरुतेति तस्मा ऽएतदाप्यायन ँसमभरंस्तस्मादप्यसोमयाजी समेव नयेत् ॥ ११ ॥

( र्त्रा ) वार्त्रघ्नं वै पौर्णमासम् । ( न्द्रि ) इन्द्रो ह्येतेन वृत्रमहन्नथैतदेव वृत्रहत्यं यदामावास्यं वृत्र ँह्यस्मा ऽएतज्जघ्नुष ऽआप्यायनमकुर्व्वन् ॥ १२ ॥

---

तदाहुः । नासोमयाजी संनयेत् । सोमाहुतिर्वा एषा । साऽनवरुद्धा सोमयाजिनः । तस्मान्नासोमयाजी संनयेदिति ॥ १० ॥

तदु समेव नयेत्, नन्वत्रान्तरेण शुश्रुम—सोमेन नु मा याजयत, अथ म एतदाप्यायनं संभरिष्यथेति । अब्रवीदिति—न वै मेदं धिनोति, यन्मा धिनवत् तन्मे कुरुतेति । तस्मा एतदाप्यायनं समभरन् । तस्मादप्यसोमयाजी समेव नयेत् ॥ ११ ॥

वार्त्रघ्नं वै पौर्णमासम् । इन्द्रो ह्येतेन वृत्रमहन् । अथैतदेव वृत्रहत्यं, यदामावास्यम् । वृत्रं ह्यस्मा एतज्जघ्नुष आप्यायनमकुर्वन् ॥ १२ ॥

---

सोमः, 'स यथा' आप्याययेत्, 'एवम्' सान्नाय्यमपि । तथा पीतवतां 'पाप्मानम्' 'अप' 'हन्ति' 'हरिमाणं', शरीरहरितत्वमपहन्तीति । प्राकरणिकमर्थमुपसंहरति—एष उ इति । 'एषः' इन्द्रो ह यत्र वृत्रायेत्यादिकः 'आमावास्यस्य' कर्मणः 'बन्धुः' ब्राह्मणम् । उक्तार्थज्ञानप्रशंसापूर्वकं सान्नाय्यं विधत्ते-स यो हैवं विद्वानिति ॥ ९ ॥

विहितस्य सान्नाय्यस्याधिकारितां निश्चेतुं केषांचिन्मतमाह—तदाहुरिति । 'तत्' तत्र सान्नाय्यविषये 'आहुः' ब्रुवते । तेषामभिप्रायमाह—सोमाहुतिरिति । सान्नाय्याहुतिः परम्परया 'सोमाहुतिः' खलु; 'सा एषा' पूर्वं सोमेनानिष्टत्वात् 'अनवरुद्धा' न सम्पन्ना; अतः 'असोमयाजी न सन्नयेदिति' ॥ १० ॥

स्वाभिमतं पक्षं प्रतिजानीते—तद्विति । असन्नयने कारणं स्मारयन् पुनराक्षिपति—नन्वत्रान्तरेणेति । 'ननु' 'अत्र' विषये 'अन्तरेण' मध्ये एव श्रुतवन्तः स्म । कथम् ? 'नु' निश्चयेन 'मा' मामिन्द्रं 'सोमेन' 'याजयत', 'अथ' पश्चात् 'मे' मम, 'एतत्' सान्नाय्यलक्षणम् 'आप्यायनम्' 'भरिष्यथ'—'इति' इन्द्रेणोक्तं वचनमिति । स्वाभिमतसन्नयनपक्षे पूर्वोदाहृतं वाक्यं प्रमाणत्वेन पुनः श्रावयन्निगमयति—न वै मेदमित्यादिना । पूर्ववद्व्याख्येयम् । अतः सन्नयेदिति स्वपक्षनिगमनम् ॥ ११ ॥

अमावास्योपवासस्य कालं विधित्सुः पुराकल्पमाह—वार्त्रघ्नं वा इति । पौर्णमास्यां क्रियमाणं यद्धविरस्ति,

---

१—'तस्या 'अनवरुद्धा' न संपन्ना, अतो न संनयेदिति' इति क० पा० । २—मूले तु 'संभरिष्यथ' इत्येवोपलभ्यते । ३—अस्मिन्नेव ब्राह्मणे सप्तमी कण्डिका द्रष्टव्या ।

( व्वंस्त ) तद्वा ऽएतदेव व्वार्त्रघ्नम् । यत्पौर्णमासमथैष ऽएव व्वृत्रो यच्च-
न्द्रमाः स यत्रैष ऽएताᳪं रात्रिं न पुरस्तान्न पश्चाद्ददृशे तदेनमेतेन
सर्व्वं हन्ति नास्य किञ्चन परिशिनष्टि सर्व्वᳪं ह वै पाप्मानᳪं हन्ति न
पाप्मनः किञ्चन परिशिनष्टि य एवमेतद्वेद ॥ १३ ॥

तद्धैके दृष्ट्वोपवसन्ति । श्वो नोदेतेत्यदो ह्यैव देवानामविक्षीणमन्नं भवत्य-
थैभ्यो व्वयमित ऽउप प्रदास्याम ऽइति तद्धि समृद्धं यदक्षीण ऽएव पूर्व्व-
स्मिन्नन्नेऽथापरमन्नमागच्छति स ह बह्वन्न ऽएव भवत्यसोमयाजी तु क्षीर-
याज्यदो ह्यैव सोमो राजा भवति ॥ १४ ॥

---

तद्वा एतदेव वार्त्रघ्नं, यत् पौर्णमासम् । अथैष एव वृत्रो, यच्चन्द्रमाः । स यत्रैष एतां रात्रिं न
पुरस्तान्न पश्चाद्ददृशे, तदेनमेतेन सर्वं हन्ति, नास्य किञ्चन परिशिनष्टि । सर्वं ह वै पाप्मानं हन्ति, न
पाप्मनः किञ्चन परिशिनष्टि–य एवमेतद्वेद ॥ १३ ॥

तद्धैके दृष्ट्वोपवसन्ति । श्वो नोदेतेति । अदो ह्यैव देवानामविक्षीणमन्नं भवति, अथैभ्यो वयमित
उपप्रदास्याम इति । तद्धि समृद्धं यदक्षीण एव पूर्वस्मिन्नन्नेऽथापरमन्नमागच्छति । स ह बह्वन्न एव
भवति । असोमयाजी तु क्षीरयाजी । अदो ह्यैव सोमो राजा भवति ॥ १४ ॥

---

तद् ' वार्त्रघ्नं ' वृत्रहननसम्बन्धि; वृत्रहननाय तदन्तर्गतनिगमनावसरम् एकादशकपालोपांशुयाजहविषोः प्रदा-
नात् । हननसाधनत्वमेव दर्शयति–इन्द्रो हीति । आमावास्यन्तु हविः ' वृत्रहत्यं ' वृत्रहननमेव; वृत्रं हतवत
इन्द्रस्याप्यायनार्थं कृतत्वात् ॥ १२ ॥

वक्ष्यमाणोपायेन वृत्रशब्दार्थमाह–तद्वा एतादिति । उक्तप्रकारेण ' पौर्णमासं ' हविः ' वार्त्रघ्नम् ' ।
चन्द्रमा इति । स यथास्थित एव ' वृत्रः ' " तस्य यत् सौम्यंन्यक्तमास, तं चन्द्रमसं चकार " इति
प्रागुक्तत्वात्[1] । स उक्तरूपो वृत्रः ' यत्र ' यस्मिन् दिवसे ' पुरस्तात् पश्चात् ' च ' न ' दृश्यते, ' तत् ' तेन
' एनं ' वृत्रम् एतेन हविषा ' सर्वं ' साकल्येन ' हन्ति ', ' न किञ्चन ', अवशेषयति । अतः सर्वपापक्षयाय
चन्द्रदर्शनरहितायां शुद्धामावस्यायामेवोपवसेदित्यर्थः । उक्तार्थज्ञानं प्रशंसति–सर्वं ह वा इति ॥ १३ ॥

उपवासतिथिविषये केषाञ्चित् पक्षमाह–तद्धैक इति । केचन चन्द्रदर्शनयुक्तायां चतुर्दशीयुक्तामावास्यायामेवो-
पवसन्ति । एषामभिप्रायमाह–' श्वः ' परस्मिन्नहनि ' नोदेतेति ' अव्यवहित एव भविष्यति काल उदयं न
प्राप्नोतीति; अतोऽदर्शनोपवासपक्षो न युक्त इत्यभिप्रायः । तत्पक्षे को लाभ इत्यत आह–अदो ह्यैवेति ।
' अदः ' अविप्रकृष्टं प्रत्यक्षं चन्द्राख्यं खलु ' देवानामविक्षीणमन्नं भवति '; अतो यथा न विक्षीणं भवेत्,
तथा कर्तव्यम् । ' अथ ' चन्द्रक्षयसमनन्तरमेव ' एभ्यः ' देवेभ्यः ' वयम् ' ' इतः ' लोकात् ' प्रदास्याम
इति ' अविक्षीणत्वमेव दर्शयति–तद्धीति । पूर्वार्जितान्नेऽवशिष्टे पुनरन्नसञ्चये सत्यन्नसातत्यात् ' तत् समृद्धम् '
तथाविधान्न एव प्रवृद्धान्नो भवति । तस्मात् चन्द्रदर्शनयुक्ततिथावेवोपवासो युक्त इति ।

---

१–अत्रैव पूर्वं ५ प्र. २ ब्रा. ६ अ. ३ ब्रा. १७ कं० द्रष्टव्यम् ॥

(त्यु) अथ युथैवु पुरा । कुेवलीरोषधीरश्नुन्ति कुेवलीरपः पिबन्ति ताः कुेवलमेव पुयो दुहुऽएवं तुदेष वै सोमो राजा देवानामन्नं युच्चन्द्रमाः स यत्रैषु ऽएताॐ रात्रिन्न पुरस्तान्न पश्चाद्दद्दशे तुदिमं लोकमागच्छति सु ऽइहापश्चौषधीश्च प्रविशति तुदेनमद्भ्य ऽओषधिभ्यः सम्भृत्याहुति-भ्योऽधि जनयति सु ऽएष ऽआहुतिभ्यो जातः पश्चाद्दद्दशे ॥ १९ ॥

तद्वा ऽएतद् । (द) अविक्षीणमेवु देवानामन्नाद्यं परिप्लुवतेऽविक्षीण ॐ ह वा ऽअस्यास्मिँल्लोकेऽन्नं भवत्यक्षय्यममुष्मिँल्लोके सुकृतं यु ऽएवमेतद्वेद ॥१६

अथ यथैव पुरा केवलीरोषधीरश्नन्ति, केवलीरपः पिबन्ति, ताः केवलमेव पयो दुहे; एवं तत्। एष वै सोमो राजा देवानामन्नं, यच्चन्द्रमाः । स यत्रैष एतां रात्रिं न पुरस्तान्न पश्चाद्ददृशे, तदिमं लोकमागच्छति। स इहापश्चौषधीश्च प्रविशति। तदेनमद्भ्य ओषधिभ्यः संभृत्याहुतिभ्योऽधि जनयति। स एष आहुतिभ्यो जातः पश्चाद्ददृशे ॥ १९ ॥

तद्वा एतदविक्षीणमेव देवानामन्नाद्यं परिप्लवते। अविक्षीणं ह वा अस्यास्मिँल्लोकेऽन्नं भवति अक्षय्यममुष्मिन् लोके सुकृतं, य एवमेतद्वेद ॥ १६ ॥

दृष्टोपवासपक्षे दोषाभिधानपुरःसरमदर्शनोपवासमेव समर्थयते—असोमयाजी त्वित्यादिना । 'तु'—शब्दः पक्षं व्यावर्त्तयति । 'असोमयाजी क्षीरयाजी भवति'; "समेव नयेत्"—इति निगमितत्वात्। 'अदो हैव' आहुतं क्षीरमेव लोकान्तरवर्त्ति सत्, 'सोमो राजा भवति;' "स एष आहुतिभ्यो जातः पश्चाद्ददृशे"—इति वक्ष्यमाणत्वात् ॥ १४ ॥

अस्तु, ततः किमित्यत आह—अथ यथैवेति । 'यथा' 'पुरा' चन्द्रस्यौषध्युदकेषु प्रवेशरहितकाले, अमावास्यातः पूर्वदिवस इत्यर्थः । तत्र यथा गावः 'केवलीः' चन्द्रानुप्रवेशरहिताः 'ओषधीः' 'अपः' चाहारं कृत्वा, 'केवलं' चन्द्ररहितम् 'एव' 'पयो दुहे' दुहते। (धा० पा० अदा. उ. ३०४) "लोपस्त आत्मनेपदेषु"—(पा० सू० ७. १. ४१.) इति तलोपः, "बहुलं छन्दसि" (पा० सू० ७. १. ८.) इति रुट्। 'एवम्' 'तत्' क्षीरयजनं भवति; चन्द्रानुप्रवेशरहितं केवलं भवतीत्यर्थः। अतो दृष्टोपवासे चन्द्रस्यौषधीष्वननुप्रवेशेन केवलत्वात् तदानीं क्षीरस्य चन्द्रात्मकान्नत्वाभावात् स पक्षो न युक्त इत्यर्थः । अस्तु, को दोष इत्याशङ्क्यावश्यं चन्द्रानुप्रवेशवता क्षीरेण भवितव्यमित्याह—एष वा इति। एतत् सान्नाय्यब्राह्मणवद् व्याख्येयम्। 'एनम्' अमावास्यायामप्स्वोषधीष्वनुप्रविष्टम्—ताभ्यः 'आहुतिभ्यः' सकाशात् क्षीररूपेण 'सम्भृत्य' 'अधिजनयति' पुनरुत्पादयति क्षीरयाजी। 'स एषः' अमुं लोकमागतः, पुनराहुतिद्वारा अन्तरिक्षे उत्पन्नः 'पश्चात्' प्रतीच्यां दिशि 'ददृशे' दृश्यते ॥ १९ ॥

तद्वा एतदिति। 'तद्' एतच्चन्द्राख्यमन्नं 'परिप्लवते' परिभ्रमति। उक्तार्थज्ञानं प्रशंसति—अविक्षीणं ह वा अस्यास्मिन्निति ॥ १६ ॥

१–एतदग्रिमकण्डिकायामेवेति शेषः। २–इहैव ब्राह्मणे पञ्चमी कण्डिका तद्व्याख्या च द्रष्टव्या। ३–'क्षीररूपेण' 'संभृत्य' 'आहुतिभ्यः' 'सकाशात्' इति क. पा.।

तद्वा ऽएता ᳪ रात्रिम् । देवेभ्योऽन्नाद्यं प्रच्यवते तदिमं लोकमागच्छति ते देवा ऽअकामयन्त कथन्नु नऽइदं पुनरागच्छेत्कथन्न ऽइदं परागेव न प्रणश्येदिति तद्य ऽएव सन्नयन्ति तेष्वाशᳪसन्त ऽएत ऽएव नः सम्भृत्य प्रदास्यन्तीत्याह वा ऽअस्मिन्त्स्वाश्च निष्ट्याश्च शᳪसन्ते य ऽएवमेतद्वेद यो वै परमतां गच्छति तस्मिन्नाशᳪसन्ते ॥ १७ ॥

तद्वा ऽएष ऽएवेन्द्रः । ( न्द्रो ) य ऽएष तपत्यथैष ऽएव वृत्रो यच्चन्द्रमाः सोऽस्यैष भ्रातृव्यजन्मेव तस्माद्यद्यपि पुरा विदूरमिवोदितोऽथैनमेताᳪ रात्रिमुपैव न्याप्लवते सोऽस्य व्यात्तमापद्यते ॥ १८ ॥

---

तद्वा एतां रात्रिं देवेभ्योऽन्नाद्यं प्रच्यवते । तदिमं लोकमागच्छति । ते देवा अकामयन्त । कथं नु न इदं पुनरागच्छेत् । कथं न इदं परागेव न प्रणश्येदिति । तद् य एव संनयन्ति तेष्वाशंसन्त एत एव नः संभृत्य प्रदास्यन्तीति । आ ह वा अस्मिन् स्वाश्च निष्ट्याश्च शंसन्ते य एवमेतद्वेद । यो वै परमतां गच्छति । तस्मिन्नाशंसन्ते ॥ १७ ॥

तद्वा एष एवेन्द्रो य एष तपति । अथैष एव वृत्रो यच्चन्द्रमाः । सोऽस्यैव भ्रातृव्यजन्मेव । तस्माद् यद्यपि पुरा विदूरमिवोदितः, अथैनमेतां रात्रिमुपैव न्याप्लवते । सोऽस्य व्यात्तमापद्यते ॥ १८ ॥

---

अन्नस्याविक्षीणत्वाच्च सान्नाय्यस्यावश्यं दातव्यतामाह—**तद्वा एतां रात्रिमिति** । चन्द्रोपक्षय एवान्नप्रच्यवः; च्युतस्य च भूलोकप्रवेश उक्तः; प्रच्युतश्च तदन्नं तथैव प्रणाशमप्राप्य यथा पुनरागच्छेदिति कामयित्वा सान्नाय्ययाजिष्वेतेऽस्माकं क्षीररूपेण पुनः सम्पाद्य दास्यन्तीत्याशंसां कुर्वन्ति । अतोऽवश्यं चन्द्रदर्शनरहिततिथौ सान्नाय्यं कर्तव्यमित्यर्थः ॥

उक्तार्थज्ञं प्रशंसति—**आह वा** इति । 'निष्ट्याः' नीचाः, "समानीयश्च निष्ट्यः" (तै० ब्रा० २. ४. १. २.) इत्यादिमन्त्रवर्णात् । उक्तार्थज्ञान्निकृष्टतराः । तं ज्ञानिनमयमशनाच्छादनादिकं प्रयच्छतीत्याशंसनीयत्वं युक्तमेवेत्याह—**यो व** इति ॥ १७ ॥

चन्द्रस्य क्षयोदयकारणाभिधानव्याजेन चन्द्रदर्शनरहिताममावास्यां प्रशंसति—**तद्वा एष एवेन्द्र** इत्यादिना । तपन्नादित्य एवेन्द्रः, परमैश्वर्ययोगात् । चन्द्रस्य वृत्रत्वं प्रतिपादितम् । 'स चन्द्रमाः' 'अस्य' सूर्यस्य शत्रुजन्मेव भवति । अनेन सूर्याचन्द्रमसोरिन्द्रवृत्रत्वे समर्थिते भवतः । भ्रातृव्यत्वं समर्थयते—**तस्मादिति** । यस्मादयं तस्य भ्रातृव्यः, 'तस्मात्' 'पुरा' अमावास्यातः पूर्वदिवसेषु अत्यन्तं दूरं यथा भवति तथा 'उदितः' अपि 'अथैनं' सूर्याख्यमिन्द्रं प्रति 'एतां रात्रिम्' अमुममावास्यादिवसं प्रति 'उपैव' समीप एव 'न्याप्लवते' आगच्छति । अथ 'सः' एव 'अस्य' इन्द्रस्य 'व्यात्तं' विवृतं मुखं प्राप्नोति ॥ १८ ॥

---

१—वृत्रपदार्थनिर्णये त्वेवमुक्तं यास्केन "तत्को वृत्रः मेघ इति नैरुक्ताः । त्वाष्ट्रोऽसुर इत्यैतिहासिकाः । अपाञ्च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते तत्रोपमार्थेन युद्धवर्णा भवन्त्यहिवत्तु खलु मन्त्रवर्णा ब्राह्मणवादाश्च विवृद्धया शरीरस्य स्रोतांसि निवारयाञ्चकार तस्मिन् हते प्रसंस्यन्दिर आपः" इत्यादि निरुक्ते ३ । १६ । ३ ॥ इति ॥

तं ग्रसित्वोदेति । स न पुरस्तान्न पश्चाद्ददृशे ग्रसते ह वै द्विषन्तं भ्रातृव्य-मयमेवास्ति नास्य सपत्नाः सन्तीत्याहुर्य ऽएवमेतद्वेद ॥ १९ ॥

तं निर्धीय निरस्यति । स ऽएष धीतः पश्चाद्ददृशे स पुनराप्यायते स ऽएतस्यैवान्नाद्याय पुनराप्यायते यदि ह वा ऽअस्य द्विषन्भ्रातृव्यो वणिज्यया वा केनचिद्वा सम्भवत्येतस्य हैवान्नाद्याय पुनः सम्भवति य ऽएवमेतद्वेद ॥ २० ॥

तद्धैके । महेन्द्रायेति कुर्वन्तीन्द्रो वा ऽएष पुरा वृत्रस्य वधादथ वृत्रꣳ हत्वा यथा महाराजो विजिग्यान ऽएवं महेन्द्रोऽभवत्तस्मान्महेन्द्रायेति तद्विन्द्रायेत्येव कुर्यादिन्द्रो वा ऽएष पुरा वृत्रस्य वधादिन्द्रो वृत्रं जघ्निवांस्तस्माद्धिन्द्रायेत्येव कुर्यात् ॥ २१ ॥ ३ ॥

इति पञ्चमप्रपाठके तृतीयं ब्राह्मणम् ( ६. ४. ) ॥

---

तं ग्रसित्वोदेति । स न पुरस्तान्न पश्चाद् ददृशे । ग्रसते ह वै द्विषन्तं भ्रातृव्यम्—अयमेवास्ति, नास्य सपत्नाः सन्तीत्याहुर्य एवमेतद्वेद ॥ १९ ॥

तं निर्धीय निरस्यति । स एष धीतः पश्चाद्ददृशे, स पुनराप्यायते । स एतस्यैवान्नाद्याय पुनराप्यायते । यदि ह वा अस्य द्विषन् भ्रातृव्यो वणिज्यया वा केनचिद् वा सम्भवति, एतस्य हैवान्नाद्याय पुनः संभवति य एवमेतद्वेद ॥ २० ॥

तद्धैके महेन्द्रायेति कुर्वन्ति । इन्द्रो वा एष पुरा वृत्रस्य वधात् । अथ वृत्रं हत्वा यथा महाराजो विजिग्यान एवं महेन्द्रोऽभवत् । तस्मान्महेन्द्रायेति तद्धिन्द्रायेत्येव कुर्य्यात् । इन्द्रो वा एष पुरा वृत्रस्य वधात् । इन्द्रो वृत्रं जघ्निवान् । तस्माद्धिन्द्रायेत्येव कुर्य्यात् ॥ २१ ॥

---

तं ग्रसित्वेति । ' तं ' मुखान्तर्गतं शत्रुं गिरन्नेव सूर्य उदेति । ' सः ' तस्मिन्दिवसे ' न पुरस्तात् ' दृश्यते । उक्तार्थज्ञं प्रशंसति—ग्रसते ह वा इति । चन्द्राख्यभ्रातृव्यस्यात्यन्तमदर्शनात् तद्रात्रौ ' सपत्ना न सन्ति ' एव ' इत्याहुः ' ॥ १९ ॥

एवं सपत्नं चन्द्रं निःशेषेण पीत्वा पुनर्निर्गमयति—तं निर्धीयेति । पूर्वस्यां दिशि भक्षितः, ' पश्चात् ' भागे निर्गतो रेखामात्रो दृश्यते; ' सः ' च ' पुनः ' कलाक्रमेण तस्यैव सूर्यस्यान्नत्वाय प्रवर्द्धते ।

ज्ञातुः फलमाह—यदि हेति । ' अस्य ' शत्रुरपि अनेन हृतधनोऽपि कृषिवाणिज्यादिकया कयाचिद्वृत्त्या समृद्धो भवन् ' एतस्य ' ज्ञातुरन्नार्थमेव वर्द्धते ॥ २० ॥

सान्नाय्यस्येन्द्रत्वमाख्यायिकया प्रतिपादितम्, तत्र केषाञ्चित्पक्षमुपन्यस्य पुनरिन्द्रत्वमेव सिद्धान्तयति—तद्धैक इति । ' तत् ' सान्नाय्यम् । महेन्द्रत्वे कारणमाह—एष पुरेति । पूर्वं केवलमिन्द्रः सन्नपि यथा कश्चिद्राजमात्रः सन् पश्चाच्छत्रून् जित्वा महाराजतां प्राप्नोति । यत एवं वृत्रं हत्वा महेन्द्रोऽभवत्, अत एवं युक्त-

# अथ प्रथमकाण्डे सप्तमाध्याये प्रथमं ब्राह्मणम् ।

स वै पर्णशाखया वत्सानपाकरोति । तद्यत्पर्णशाखया वत्सानपाक-
रोति यत्र वै गायत्री सोममच्छापतत्तदस्या ऽआहरन्त्या ऽअपादस्ताभ्या-
यत्य पर्णं प्रचिच्छेद गायत्र्यै वा सोमस्य वा राज्ञस्तत्पतित्वा पर्णोऽभव-
त्तस्मात्पर्णो नाम तद्यदेवात्र सोमस्य न्यक्तं तदिहाप्यसदिति तस्मात्पर्ण-
शाखया वत्सानपाकरोति ॥ १ ॥

---

### सान्नाय्यसंपादनम् ।

स वै पर्णशाखया वत्सानपाकरोति । तद्यत्पर्णशाखया वत्सानपाकरोति यत्र वै गायत्री सोम-
मच्छापतत्, तदस्या आहरन्त्या अपादस्ताभ्यायत्य पर्णं प्रचिच्छेद गायत्र्यै वा सोमस्य वा राज्ञः ।

---

मित्यर्थः । स्वपक्षे युक्तिमाह—**वृत्रस्य वधा**दिति । वृत्रवधात् प्राक् यतोऽयं केवलः 'इन्द्रः', तथाविध एव स 'वृत्रं
हतवान्; अतः पश्चादागतं महत्त्वमप्रयोजकमिति 'इन्द्रायेत्येव कुर्यात्' इति ॥ २१ ॥ ३ ॥ [ ६. ४. ]॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये
प्रथमकाण्डे षष्ठाध्याये चतुर्थं ब्राह्मणम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ ६ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः
कार्पासीयं कृपावान् गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्रज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते
माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये प्रथमकाण्डे षष्ठाध्यायः समाप्तः ॥ ६ ॥

---

प्रधानयागः सकलः साख्यानः सम्प्रकीर्तितः । प्राधान्येनाथ तद्धर्मा निरूप्यन्तेऽथ सप्तमे ॥ ७ ॥

तत्रादौ सन्निहितत्वात् सान्नाय्यधर्माः[१] प्रथममुच्यन्ते । तत्र वत्सापाकरणाय शाखाच्छेदं विधास्यन् तदुचितं
शाखायाः पर्णत्वं सार्थवादमाह—**स वै पर्णशाखये**ति । 'सः' वत्सानामपाकर्ता । शाखायाः पर्णत्वं प्रशंसितु-

---

१–"सम्यङ्नीयते होमार्थमग्निं प्रति इति सान्नाय्यं हविर्विशेषः" इति ( पा. सू. ३ । १ । १२९ ) सूत्रवृत्तौ दीक्षितः ॥ 'तच्च
दधिपयोलक्षणम्' इति चात्रैव ( ११ । २ । ६ । ६ ) भाष्ये सायणः ॥ 'सान्नाय्यं' दुग्धदधिरूपं हविरिति ( का. श्रौ. सू. ४ ।
२ । १७ ) सूत्रवृत्तौ याज्ञिकदेवश्च । सान्नाय्यविधानादिकं सर्वञ्चैतः पूर्वस्मिन्ब्राह्मणे ४ । ११ कण्डिकायां द्रष्टव्यम् ॥

तामाच्छिनत्ति । ( त्ती ) इषे त्वोर्ज्जे त्वेति व्वृष्ट्यै तदाह यदाहेषे त्वेत्यूर्ज्जे त्वेति यो व्वृष्टादूर्ग्रसो जायते तस्मै तदाह ॥ २ ॥

( ह्वा ) अथ मातृभिर्व्वत्सान्त्समवार्ज्जन्ति । स व्वत्सꣳ शाखयोपस्पृशति व्वायव स्थेत्ययं वै व्वायुर्योऽयं पवत ऽएष वा ऽइदꣳ सर्व्वं प्रप्यायति यदिदं किञ्च व्वर्षत्येष वाऽएतासां प्रप्याययिता तस्मादाह व्वायव स्थेत्युपायव स्थेत्यु हैक आहुरुप हि द्वितीयोऽयतीति तदु तथा न ब्रूयात् ॥ ३ ॥

---

तत् पतित्वा पर्णोऽभवत् । तस्मात् पर्णो नाम । तद् यदेवात्र सोमस्य न्यक्तं तदिहाप्यसदिति–तस्मात् पर्णशाखया वत्सानपाकरोति ॥ १ ॥

तामाच्छिनत्ति–' इषे त्वा ' ' ऊर्जे त्वा '–( वा. सं. १ । १ ) इति । वृष्ट्यै तदाह यदाह इषे त्वेति । ऊर्ज्जे त्वा इति । यो वृष्टादूर्ग्रसो जायते तस्मै तदाह ॥ २ ॥

अथ मातृभिर्वत्सान्त्समवार्ज्जन्ति । स वत्सं शाखयोपस्पृशति–"वायवः स्थ "–( वा. सं. १. १ )

---

मनुवदति–**तद्यत्पर्णशाखयेति** । ' यत्र ' यस्मिन् देशे ' गायत्री ' पक्षिरूपेण ' सोमम् ' अभिलक्ष्य आनयनाय अगच्छत्, ' तत् ' ' अस्या आहरन्त्याः ' ' अपाधस्ता ' अधस्तात् प्रदेशे ' अभ्यायत्य ' यत् ' पर्णं ' तत् ' प्रचिच्छेद ' । कस्येत्याह–**गायत्र्यै वा सोमस्य वा राज्ञ** इति । ' वा '–शब्दश्चार्थे, ' गायत्र्याः ' ' सोमस्य ' चेत्यर्थः; अननुष्ठानत्वेन विकल्पस्यानुचितत्वात् । पतितात् पर्णात् उत्पन्नः पलाशः, तस्य ' पर्णत्वम् ' । अस्त्वेवं तथाप्यस्यैव शाखाकरणे कोऽभिप्राय इत्यत आह–**तद्यदेवेति** । ' तस्मात् ' सोमांशस्यैव सम्पादितप्रायत्वात् ' पर्णशाखया ' एव मातृभ्यः सकाशात् ' वत्सान् ' ' अपाकुर्यात् ' पृथक्कुर्यात् । कात्यायनस्तु शमीशाखामपि विकल्पेनात्रावोचत्–" पर्णशाखां छिनत्ति शामीलीं वा " इति ( का. श्रौ. सू. ४. ३० ) " शम्याः ष्लञ् " इति ( पा. सू. ४. ३. १४२ ) विकारे ष्लञि ॥ १ ॥

इदानीं छेदने मन्त्रं विधत्ते–**तामिति** । **तदिति** । इष्यत इतीट् । यदिट्, तद्वाक्यमित्यर्थः । पृथग्योगस्य विवक्षितत्वात् वाक्ययोरपि पौर्वापर्यं विवक्षितमिति गम्यते । स्पष्टमन्यत् ।

सूत्रकारस्तु मन्त्रभेदपक्षमप्यङ्गीकृत्य शाखाच्छेदे एव विकल्पितम्, छेदनसन्नमनयोर्वेति योगभिन्नतां चाह–" पर्णशाखां छिनत्ति शामीलीं वेषे त्वेति, ऊर्जे त्वेति वा " ( का. श्रौ. सू. ४. ३० ) " छिनद्मीति वोभयोः साकाङ्क्षत्वात् " ( का. श्रौ. सू. ४. ३१ ) " सन्नमयामीति वोत्तरे " ( का. श्रौ. सू. अ. ४. सू. ३२ ) इति ॥ २ ॥

अथ वत्सानां मातृसंयोजनम् । तत्रैकस्य शाखया समन्त्रकमुपस्पर्शनञ्चाह–**अथ मातृभिरिति** । ' समवार्जन्ति ' संयोजयन्ति । हे वत्स ! गावश्च ! यूयं ' वायवः स्थ ' प्रवर्द्धकत्वेन वायुसम्बन्धाद् यूयमपि वायवो भवथेति मन्त्रार्थः । ( का. श्रौ. सू. ४. ३६ ) कथमेतेषां वायुत्वव्यवहार इति तत्समर्थनायाह–**अयं वा**

---

१–" आनयनायागच्छन्नाहरन्त्या " इति क. पा. । २–" अपादस्ता " इति वहुषु पुस्तकेषु पाठः । स एव साधुः । अपअदस्तम्–अनुपक्षीणमित्यर्थः । तै. आ. ४ । १ । २ तै. ब्रा. ३ । २ । ३ । १२ द्रष्टव्यम् । ३–" मातृभिर्वत्सान्सꣲसृज्यवत्सꣲ शाखयोपस्पृशति वायवस्थेति " इति ।

( ३ ) अथ मातृणामेकाᳫँशाखयोपस्पृशति । वत्सेन व्याकृत्य देवो वः सविता प्रार्प्पयत्विति सविता वै देवानां प्रसविता सवितृप्रसूता यज्ञᳫँ सम्भरानिति तस्मादाह देवो वः सविता प्रार्प्पयत्विति ॥ ४ ॥

श्रेष्ठतमाय कर्मण ऽइति । यज्ञो वै श्रेष्ठतमं कर्म्म यज्ञाय हि तस्मादाह श्रेष्ठतमाय कर्मण ऽइति ॥ ५ ॥

( त्या ) आप्यायध्वमघ्न्या ऽइन्द्राय भागमिति । तद्यथैवादो देवतायै हविर्गृह्णन्नादिशत्येवमेवैतद्देवताया ऽआदिशति यदाहाप्यायध्वमघ्न्या ऽइन्द्राय भागमिति ॥ ६ ॥

---

इति । अयं वै वायुर्योऽयं पवते । एष वा इदं सर्वं प्रप्याययति यदिदं किञ्च वर्षति । एष वा एतासां प्रप्याययिता । तस्मादाह–वायवः स्थ–इति । " **उपायवः स्थ** "–इत्यु हैक आहुः । उप हि द्वितीयोऽयतीति–तदु तथा न ब्रूयात् ॥ ३ ॥

अथ मातृणामेकां शाखयोपस्पृशति वत्सेन व्याकृत्य–" **देवो वः सविता प्रार्प्पयतु** "–( वा० सं० १ । १ ) इति । सविता वै देवानां प्रसविता । सवितृप्रसूता यज्ञं सम्भरान्–इति–तस्मादाह–" देवो वः सविता प्रार्प्पयतु "–इति ॥ ४ ॥

" **श्रेष्ठतमाय कर्मणे** "–( वा० सं० १ । १ ) इति । यज्ञो वै श्रेष्ठतमं कर्म्म । यज्ञाय हि । तस्मादाह–" श्रेष्ठतमाय कर्मणे "–इति ॥ ५ ॥

" **आप्यायध्वमघ्न्या इन्द्राय भागम्** "–( वा० सं० १ । १ ) इति । तद्यथैवादो देवतायै हविर्गृह्णन्नादिशति । एवमेवैतद्देवताया आदिशति–यदाह–" आप्यायध्वमघ्न्या इन्द्राय भागम् "–इति ॥ ६ ॥

---

इत्यादि । वायोर्गवां वर्द्धकत्वसमर्थनाय सर्वजगद्वर्धकतामाह–**एष वा इदं सर्वमिति** । एतन्मन्त्रशेषत्वेन शाखान्तरे पठितं ( तै. सं. १ । १ । १ ) ( तै. ब्रा. ३ । २ । १ ) मन्त्रमनूद्य निराचष्टे–**उपायवस्थेत्यु हैक इति** ( तै. सं. १. १. ३. ) " उपायवस्थेति चैके " ( का. श्रौ. सू. ४. ३७ ) । यदेनं भागं ब्रूयात्, यजमानस्य 'द्वितीयः' शत्रुरुपागच्छति, अतो 'न ब्रूयात्' ॥ ३ ॥

प्रस्तुतानां गवां मध्ये एकस्या वत्सात् पृथक् स्पर्शनम्, तन्मन्त्रं ( " देवो व इति मातृणामेकां व्याकृत्य " का. श्रौ. सू. ४. ३८ ) चाह–**अथ मातृणामिति** । 'वत्सेन' 'व्याकृत्य' पृथक्कृत्य । प्रेषणकर्मणि सवितुः प्रयोजकत्वे कारणमाह–**सविता वा इति** । 'यज्ञं' यज्ञसाधनं क्षीरम्, तत् 'सम्भरान्' सम्भरेयुः ॥ ४ ॥

किं तत् श्रेष्ठतमं कर्म ? इति, तदाह–**यज्ञो वा इति** । साक्षात्स्वर्गसाधनत्वादितरकर्मभ्यः 'श्रेष्ठतमत्वम्' ॥५॥

मन्त्रभागे यद्देवताविशेषनामनिर्देशपूर्वकमादेशनम्, तत्प्रशंसति–**आप्यायध्वमघ्न्या इति** । यथा अग्नये हविर्ग्रहणादौ अग्नये जुष्टमितीति ( श. अ. १. ब्रा. २ कं. १७ ) नामविशेषतो देवतादेशनं क्रियते, तद्वदिदमपि पाठेनैव कृतं भवतीत्यर्थः ( " ऐन्द्रम्भवति माहेन्द्रं वा " का. श्रौ. सू. ४. ३९ ) ॥ ६ ॥

प्रजावतीरनमीवा ऽअयक्ष्मा ऽइति । नात्र तिरोहितमिवास्ति मा वस्तेन ऽईशत माघशꣳस ऽइति मा वो नाष्ट्रा रक्षाꣳसीशतेत्येवैतदाह ध्रुवा ऽअस्मिन्गोपतौ स्यात बह्वीरित्यनपक्रमिण्योऽस्मिन्यजमाने बह्वयः स्यातेत्येवैतदाह ॥ ७ ॥

([१]) अथाहवनीयागारस्य वा पुरस्तात् । ([२]) गार्हपत्यागारस्य वा शाखामुपगूहति यजमानस्य पशून्पाहीति तद्ब्रह्मणैवैतद्यजमानस्य पशून्परिददाति गुप्त्यै ॥ ८ ॥

तस्यां पवित्रं करोति । वसोः पवित्रमसीति यज्ञो वै वसुस्तस्मादाह वसोः पवित्रमसीति ॥ ९ ॥

---

" **प्रजावतीरनमीवा अयक्ष्माः**"–( वा० सं० १ । १ ) इति । नात्र तिरोहितमिवास्ति । " **मा वस्तेन ईशत माघशंसः**"–(वा० सं० १ । १) इति । मा वो नाष्ट्रा रक्षांसीशत–इत्येवैतदाह । " **ध्रुवा अस्मिन् गोपतौ स्यात बह्वीः** "–( वा० सं० १ । १ ) इति । अनपक्रमिण्योऽस्मिन् यजमाने बह्वयः स्यात–इत्येवैतदाह ॥ ७ ॥

अथाहवनीयागारस्य वा पुरस्ताद् गार्हपत्यागारस्य वा शाखामुपगूहति । "**यजमानस्य पशून् पाहि** "–( वा० सं० १ । १ ) इति । तद् ब्रह्मणैवैतद्यजमानस्य पशून् परिददाति गुप्त्यै ॥ ८ ॥

तस्यां पवित्रं करोति–" **वसोः पवित्रमसि** "–( वा० सं० १ । २ ) इति । यज्ञो वै वसुः । तस्मादाह–" वसोः पवित्रमसि "–इति ॥ ९ ॥

---

**प्रजावती**रित्यादि । स्पष्टार्थतामाह–**नात्रे**ति । 'मा वः' इत्यस्य मन्त्रभागस्य तात्पर्यमाह–**नाष्ट्रे**ति । 'नाष्ट्रा' नाष्ट्राणि नाशकारीणि, 'रक्षांसि' रक्षन्ति याभ्य इति रक्षणापादानभूतानि स्तेनव्याघ्रादीनि 'नाष्ट्रा' । ध्रुवशब्दगोपतिशब्दयोरर्थमाह–**ध्रुवा अस्मिन्नि**ति ॥ ७ ॥

शाखागूह्यप्रदेशविशेषम्, तत्र समन्त्रकं गूहनञ्चाह–**अथाहवनीयागारस्ये**ति । अग्निपुरोदेशे स्थापयन्नध्वर्युः अमुं मन्त्रं ब्रूयात्–**यजमानस्ये**ति ( का. श्रौ. सू. ४. ४० ) । हे शाखे ! त्वं 'यजमानस्य पशून्' रक्ष । एतन्मन्त्रपाठतात्पर्यमाह–**तद्ब्रह्मणैवे**ति । एतन्मन्त्रपाठेन शाखायै पशूनां परिदानं तदधीनत्वेन रक्षणार्थम् ॥ ८ ॥

इदानीं दोहनार्थं शाखायां समन्त्रकं पवित्रबन्धनं विधत्ते–**तस्यां पवित्रमि**ति । ( दोहनार्थं ) 'तस्यां' शाखायां 'पवित्रं' कुशद्वयात्मकं त्रिवृतं वा 'करोति', बध्नीयात् । तथा च सूत्रम्–" वसोः पवित्रमिति पवित्रमस्यां बध्नाति कुशौ " ( का. श्रौ. सू. ४. ४४. ) " त्रिवृद्वा " इति ( का. श्रौ. सू. ४. ४५. ) । 'वसु' शब्दार्थमाह–**यज्ञो वा** इति । पुनात्यनेनेति ( पा. सू. ३. २. १८५ ) 'पवित्रम' तस्मिन्नित्यर्थः ॥ ९ ॥

---

१–" यजमानस्य पशूनित्यग्न्यगारस्यान्यतरस्य पुरस्ताच्छाखामुपगूहति " इति । २–" त्रिवृद्दर्भमयं पवित्रम् " इत्यापस्तम्बः । 'हस्तप्रादेशमात्रं तु त्रिवृत्कृत्वा पवित्रकम्' । पवित्रं वेण्याकारमिति केचित् । नवकुशवेणीमिति श्रीअनंतः । वस्तुतो द्वे साग्रे दर्भतृणे पवित्रं कर्तुं शाखायां बध्नाति । कुशत्रयस्य रज्ज्वाकारं कृत्वा वा बध्नातीति सम्प्रदायः ॥

( त्यु ) अथ यवाग्वैताᳫँ रात्रिमग्निहोत्रं जुहोति । ( त्यु ) आदिष्टं वा ऽएतद्देवतायै हविर्भवति यत्पयः स यत्पयसा जुहुयाद्यथान्यस्यै देवतायै हविर्गृहीतं तदन्यस्यै जुहुयादेवं तत्तस्माद्यवाग्वैताᳫँ रात्रिमग्निहोत्रं जुहोति जुह्वत्यग्निहोत्रमुपक्लृप्तोखा भवत्यथाहोपसृष्टां प्रब्रूतादिति यदा प्राहोपसृष्टेति ॥ १० ॥

( त्यु ) अथोखामादत्ते । द्यौरसि पृथिव्यसीत्युपस्तौत्येवैनामेतन्महयत्येव यदाह द्यौरसि पृथिव्यसीति मातरिश्वनो घर्मोऽसीति यज्ञमेवैतत्करोति यथा घर्म्मं प्रवृञ्ज्यादेवं प्रवृणक्ति विश्वधा ऽअसि परमेण धाम्ना

---

अथ यवाग्वैतां रात्रिमग्निहोत्रं जुहोति । आदिष्टं वा एतद्देवतायै हविर्भवति यत् पयः । स यत् पयसा जुहुयाद्–यथाऽन्यस्यै देवतायै हविर्गृहीतं तदन्यस्यै जुहुयाद्–एवं तत् । तस्माद्यवाग्वैतां रात्रिमग्निहोत्रं जुहोति । जुह्वत्यग्निहोत्रम्–उपक्लृप्तोखा भवति–अथाह–" उपसृष्टां प्रब्रूतात् " इति । यदा प्राह–उपसृष्टेति ॥ १० ॥

अथोखामादत्ते–"द्यौरसि पृथिव्यसि"–( वा० सं० १ । २ ) इति । उपस्तौत्येवैनामेतत्, महयत्येव, यदाह–" द्यौरसि पृथिव्यसि "–इति । " मातरिश्वनो घर्मोऽसि "–( वा० सं० १ । २ ) इति । यज्ञमेवैतत् करोति । यथा घर्मं प्रवृञ्ज्याद्–एवं प्रवृणक्ति । " विश्वधा असि परमेण

---

अमावास्यायां रात्रौ सन्नयतः क्षीरस्यान्नार्थत्वेन नियोगादग्निहोत्रस्य द्रव्यान्तरं विधत्ते–**अथ यवाग्वेति** । एतच्छब्दार्थमाह–**यत्पय** इति । विपक्षबाधपुरःसरं स्वपक्षमुपसंहरति–**स यत्पयसेति** । इन्द्रार्थस्य दुग्धस्य अग्न्यर्थत्वस्याप्युक्तत्वात् । यद् यवाग्वैव होतव्यम् । "यवाग्वाऽग्निहोत्रहोमः सन्नयतः"–( का. श्रौ. सू. ४ अ. ४६ सू. ) इति कात्यायनः । **जुह्वत्यग्निहोत्रमिति** । दोहकालोपलक्षणार्थम्, जुह्वति समकालम्; तद्धोमे परिसमाप्त एव 'उखा' सान्नाय्यस्थाली सा अध्वर्युणा श्रपणप्रदेशे 'उपक्लृप्ता' भवति । तस्याः समानयनानन्तरम् 'उपसृष्टां' वत्सेन सङ्गताम् 'प्रब्रूतात्'–'इति' दोग्धारं प्रत्यध्वर्युः प्राह 'यदा' उपसृष्टा, तदा 'उपसृष्टेति' दोग्धा 'प्राह' ब्रूयादित्यर्थः । दोग्धा च शूद्रव्यतिरिक्तो भवेत्; " वाग्यतो दोहयत्यशूद्रेण "–( का. श्रौ. सू. ४ । ५१ सू. ) इति सूत्रात् ॥ १० ॥

अध्वर्योः समन्त्रकं स्थाल्योदानं विधत्ते–**अथोखामिति** । उखायाः द्यु-पृथिव्यात्मकत्वस्य कदाचिदप्यसम्भवात् उपस्तुतिमात्रमिदमित्याह–**उपस्तौत्येवेति** । सापि किमर्थेत्यत आह–**महयत्येवेति** । स्तुत्या पूजनं लोके प्रसिद्धम् । अधिश्रयणे मन्त्रमाह–**मातरिश्वन** इति । 'मातरि' अन्तरिक्षे श्वयतीति 'मातरिश्वा'

---

१–यो यवाग्वैव नित्यमग्निहोत्रं जुहोति न तस्मा एतद्विधीयते, अपि तु यः पयसा नित्यमग्निहोत्रं जुहोति तस्य दर्शेष्ट्याः पूर्वेद्युरमायां पयसः स्थाने यवागूर्विधीयते । येन द्रव्येणाग्निहोत्रमुपक्रमते तेनैव हविर्द्रव्येण यावज्जीवनं जुहुयादिति नियमस्यानेन शास्त्रेणापवादः । २–तण्डुलैः शिथिलपक्का यवागूरित्युच्यते । ३–वत्सेन संगता इत्यर्थः । ४–शूद्रपर्युदासात्क्षत्रियवैश्ययोरप्यनुज्ञा इति कर्कः । त्रैवर्णिकेनेति माधवः । ५–" प्रोक्ते द्यौरसीति स्थाल्यादानं " इति का. श्रौ. सू. ४ । ४८ । ६–" मातरिश्वन इत्यधिश्रयति " का. श्रौ. सू. ४ । ४९ ।

दृꣳह्स्व मा ह्वारिति दृꣳह्त्येवैनामेतदशिथिलां करोति मा ते यज्ञपतिर्ह्वार्षीदिति यजमानो वै यज्ञपतिस्तद्यजमानायैवैतदह्वलामाशास्ते॥११॥

(स्तेऽथ) अथ पवित्रं निदधाति। तद्धै प्राङ्निदध्यात्प्राची हि देवानां दिगथो ऽउदगुदीची हि मनुष्याणां दिगयं वै पवित्रं योऽयं पवते सोऽयमिमाँल्लोकांस्तिर्यङ्ङनुपवते तस्मादुदङ्निदध्यात् ॥ १२ ॥

(त्त) तद्यथैवादः । सोमꣳराजानं पवित्रेण सम्पावयन्त्येवमेवैतत्सम्पावयत्युदीचीनदशं वै तत्पवित्रं भवति येन तत्सोमꣳराजानꣳसम्पावयन्ति तस्मादुदङ्निदध्यात् ॥ १३ ॥

---

धाम्ना दृंहस्व मा ह्वाः"– ( वा० सं० १ । २ ) इति । दृंहत्येवैनामेतद्–अशिथिलां करोति । "मा ते यज्ञपतिर्ह्वार्षीद्"–( वा० सं० १ । २ ) इति–यजमानो वै यज्ञपतिः । तद् यजमानायैवैतदह्वलामाशास्ते ॥ ११ ॥

अथ पवित्रं निदधाति । तद्धै प्राङ् निदध्यात् । प्राची हि देवानां दिक् । अथो उदक् । उदीची हि मनुष्याणां दिक् । अयं वै पवित्रम्, योऽयं पवते । सोऽयमिमाँल्लोकांस्तिर्यङ्ङनुपवते । तस्मादुदङ् निदध्यात् ॥ १२ ॥

तद्यथैवादः सोमं राजानं पवित्रेण सम्पावयन्ति–एवमेवैतत् सम्पावयति । उदीचीनदशं वै तत् पवित्रं भवति–येन तत् सोमं राजानं सम्पावयन्ति । तस्मादुदङ् निदध्यात् ॥ १३ ॥

---

वायुरादित्यो वा ( निरुक्त. ७ । ७ । ४ ) तस्य घर्मस्त्वमसि; तेन दीप्यमानत्वात् एतत्पाठेन 'यज्ञमेव' कृतवान् भवति । तत्कथमिति, तदुपपादयति–यथेति । यज्ञे 'यथा' 'घर्मं' प्रवर्ग्यं 'प्रवृञ्ज्यात्', 'एवं' स्थाल्यधिश्रयणेन 'प्रवृणक्ति' प्रवर्ग्यं कृतवान् भवति; अतो यज्ञसम्पादनम् । "विश्वधायाः"–इति मन्त्रभागस्य तात्पर्याभिधानं स्पष्टम् । "मा ते"–इति मन्त्रभागे 'यज्ञपति'–शब्दार्थमाह–यजमानो वा इति । 'ह्वला' नाशः, तदभावम् 'आशास्ते'–'मा ह्वार्षीत्'–इत्यनेन । "ह्वृ–कौटिल्ये" ( धा. पा. भ्वा. प. ९३१) इति धातुः ॥ ११ ॥

अथ पवित्रस्थापनं तदग्रनियमञ्चाह–अथ पवित्रमिति । वत्सापाकरणानन्तरं यत् शाखापवित्रं कृतम्, तत् प्रागग्रं स्थाल्यां 'निदध्यात्'। दैव्यस्य पवित्रस्य देवदिगाभिमुख्यं युक्तम्; प्राच्या इन्द्राधिष्ठितत्वात्, इन्द्रस्य च सर्वदेवतात्मकत्वात्, तद्देवत्यं पवित्रम् । दिगन्तरमाह–अथो ऽउदगुदीची हीति । उत्तरस्यां प्रायेण मनुष्यप्राचुर्यात् । किञ्च यस्माज्जगत्पवित्रभूतो वायुरपि 'तिर्यङ्ङनुपवते' तिर्यग् गच्छति; अतोऽस्यापि पवित्रत्वात् तत्सौम्याय 'उदङ् निदध्यात्' ॥ १२ ॥

सान्नाय्यस्य सोमात्मकत्वात् तत्पवनसाधनदशापवित्रवदस्याप्युदगग्रत्वं युक्तमिति सदृष्टान्तमाह–तद्यथैवाद इति ॥ १३ ॥

---

१–"वसोः पवित्रमिति पवित्रमस्यां करोत्युदग्वा" इति का. श्रौ. सू. ४ । ५० ॥

(त्त) तन्निदधाति व्वसोः पवित्रमसीति । यज्ञो वै व्वसुस्तस्मादाह व्वसोः पवित्रमसीति शतधारꣳ सहस्रधारमित्युपस्तौत्येवैनदेतन्महयत्येव यदाह शतधारꣳ सहस्रधारमिति ॥ १४ ॥

(त्यु) अथ वाचंयमो भवति । (त्यु) आ तिसृणां दोग्धोर्व्वाग्वै यज्ञो व्विक्षुब्धो यज्ञं तनवा ऽइति ॥ १५ ॥

तदानीयमानमभिमन्त्रयते । देवस्त्वा सविता पुनातु व्वसोः पवित्रेण शतधारेण सुप्वेति तद्यथैवादः सोमꣳ राजानं पवित्रेण सम्पावयन्त्येवमेवैतत्सम्पावयति ॥ १६ ॥

(त्यु) अथाह कामधुक्ष ऽइति । (त्य) अमूमिति सा व्विश्वायुरित्यथ द्वितीयां पृच्छति कामधुक्ष ऽइत्यमूमिति सा व्विश्वकर्मेत्यथ तृतीयां पृच्छति कामधुक्ष ऽइत्यमूमिति सा व्विश्वधाया इति तद्यत्पृच्छति व्वीर्या-

---

तन्निदधाति–" वसोः पवित्रमसि "–( वा० सं० १ । ३ ) इति। यज्ञो वै वसुः । तस्मादाह– " वसोः पवित्रमसि " इति । " शतधारं सहस्रधारम् "–( वा. सं० १ । ३ ) इति । उपस्तौत्येवैनदेतद्, महयत्येव, यदाह–" शतधारं सहस्रधारम् " इति ॥ १४ ॥

अथ वाचंयमो भवति–आ तिसृणां दोग्धोः । वाग्वै यज्ञः । अविक्षुब्धो यज्ञं तनवा–इति ॥१५॥

तदानीयमानमभिमन्त्रयते–" देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा "–( वा० सं० १ । ३ ) इति । तद् यथैवादः सोमं राजानं पवित्रेण सम्पावयन्ति–एवमेवैतत् सम्पावयति ॥ १६ ॥

अथाह–" कामधुक्षः "–( वा. सं. १ । ३ ) इति । अमूमिति । " सा विश्वायुः "–( वा० सं० १ । ४ ) इति। अथ द्वितीयां पृच्छति–कामधुक्ष–इति। अमूम्–इति। "सा विश्वकर्मा"–( वा० सं० १ । ४ ) इति । अथ तृतीयां पृच्छति–" कामधुक्ष "–इति । अमूमिति । " सा

---

पवित्रनिधानस्य मन्त्रमाह–**तन्निदधाति वसोरिति** ( का. श्रौ. सू. ४ अ. ९२ सू. ) ॥ १४ ॥

मौनकालनियमावधिमाह–**अथेति** । ' तिसृणां दोग्धोः ' तिसृणां गवां दोहावधि । ' वाचा ' मन्त्रेण साध्यत्वात् ' वाग्–यज्ञः ' । अथ वाक्शब्देन नियता वाग् विवक्षिता । वाचि यज्ञोपयोगिन्यां सत्यां मनसि विक्षेपो भवति, तत्परिहाराय वाङ्नियमविधानम् ॥ १५ ॥

पयस आसेचनसमये अध्वर्योर्जपं विधत्ते–**तदानीयमानमिति** । अभिमन्त्रणम् ' आभिमुख्येन जपः; "स्थाल्यन्वारब्धे देवस्त्वा"–इति–" आसिच्यमाने जपति " इति सूत्रात् ( का. श्रौ. सू. ४ अ. ९२ सू. ) ' सुप्वा ' सुष्ठु पवित्रेण पावयित्वा । स्पष्टमन्यत् ॥ १६ ॥

**अथाहेति** । अध्वर्युः प्रथमायां गवि दुग्धायां ' कां ' गाम् ' अधुक्षः ' दुग्धवानसीति (" कामधुक्ष इति प्रश्नः " इति का. श्रौ. सू. ४. अ. ९३ सू. ) ब्रूयात् । सोऽपि दोग्धा गङ्गां गौरीमिति दुग्धाया गोर्नाम

ण्येवास्वेतद्दधाति तिस्रो दोग्धि त्रयो वा ऽइमे लोका ऽएभ्य ऽएवैनदेतु-ल्लोकेभ्यः सम्भरत्यथ कामं व्वदति ॥ १७ ॥

( त्यु ) अथोत्तमां दोहयित्वा । येन दोहयति पात्रेण तस्मिन्नुदस्तोकु-मानीय पल्यङ्ग्य प्रत्यानयति यदुत्र पयसोऽहायि तदिहाप्यसदिति रसस्यो चैव सर्व्वत्वायेद ७ँ हि यदा व्वर्षत्यथौषधयो जायन्त ऽओषधीर्जग्ध्वापः पीत्वा तत ऽएष रसः सम्भवति तस्मादु रसस्यो चैव सर्व्वत्वाय तदुद्वा-स्यातनक्ति तीव्रीकरोत्येवैनदेतत्तस्मादुद्वास्यातनक्ति ॥ १८ ॥

---

विश्वधायाः"–( वा० सं० १।४ )इति । तद् यत्पृच्छति–वीर्याण्येवास्वेतद्दधाति । तिस्रो दोग्धी । त्रयो वा इमे लोकाः । एभ्य एवैनदेतल्लोकेभ्यः सम्भरति, अथ कामं वदति ॥ १७ ॥

अथोत्तमां दोहयित्वा येन दोहयति पात्रेण–तस्मिन्नुदस्तोकमानीय, पल्यङ्ग्य, प्रत्यानयति । यदत्र पयसोऽहायि तदिहाप्यसदिति । रसस्यो चैव सर्वत्वाय । इदं हि यदा वर्षति–अथौषधयो जायन्ते । ओषधीर्जग्ध्वा, अपः पीत्वा, तत एष रसः सम्भवति । तस्मादु रसस्यो चैव सर्वत्वाय । तदुद्वास्यातनक्ति । तीव्रीकरोत्येवैनदेतत् । तस्मादुद्वास्यातनक्ति ॥ १८ ॥

---

' अमूम् ' इति निर्दिशेत् । अथ सोऽध्वर्युस्तां ' सा विश्वायुः '–' इति ' ब्रूयात् । ( " प्रोक्ते सा विश्वायुरित्याह " इति । का. श्रौ. सू. ४. ५४ ) एवमुत्तरयोरपि व्याख्या । ' विश्वायुः ' बह्वन्ना, बहुक्षीरेत्यर्थः । ' विश्वकर्मा ' बहुतृप्तिसाधनदोहकर्मोपेता ( "एवमितरे उत्तराभ्यां प्रतिमन्त्रम्" इति का. श्रौ. सू. ४. ५५ ) ' विश्वधायाः ' धीयत इति ' धायाः ' अन्नम् बह्वन्ना ( का. श्रौ. सू. ४ अ. ५५ सू. ) एवं प्रश्नपूर्वकं तासां गुणकथनेन तासु वीर्यमवस्थापयति । दोग्धव्यगवां सङ्ख्यां विधत्ते–**तिस्रो दोग्धी**ति । तिसृभ्यः क्षीरसम्भर्त्ता त्रिभ्यो लोकेभ्य एव सम्भृतवान् भवति, अतः तिस्रो दुह्यात् । अत्र "यावत् स्वमधिकारात्" ( का. श्रौ. सू. ४ अ. ५७ सू. ) " तिस्रो वा नित्यत्वात् " इत्यादि ( का. श्रौ सू. ४ अ. ५८–६० सूत्रं ) द्रष्टव्यम् । अतः परं वाङ्नियमं विसृजेदित्याह–**अथ कामं वदती**ति ॥ १७ ॥

दोहनपात्रक्षालनोदकस्य पुनः क्षीरे समर्पणमाह–**अथोत्तमामि**ति ' उदस्तोकम् ' उदकबिन्दुधारामित्यर्थः । ' पल्यङ्ग्य ' परितो गमयित्वा, दोहपात्र उदकमासिच्य प्रक्षाल्येत्यर्थः । ' पयसः ' अवशिष्टं 'यत्' 'अहायि' ह्रतमभूत् । **तदिहापी**ति । 'अपि'–शब्दो भिन्नक्रमः,–तदपीह ' असत् ' भवेदिति । एतत् सङ्क्षालनोदकानयनप्रयोजनम् । तदपि किमर्थमित्यत आह–**रसस्यो चैवे**ति । ' उ च, एव ' इति निपातत्रयम् । ' रसस्य ' क्षीरस्यैव ' सर्वत्वाय ' कार्त्स्न्याय । अस्तु नाम क्षीरांशेन सर्वत्वम्, तत्संयुक्तेन क्षालितोदकेन कथं सर्वत्वमित्युदकस्यापि क्षीरोपादानतामाह–**इदं हि यदे**ति । परिक्षालनानयनमन्त्रः ( तै. सं. १ कां. १ प्र. ३. १ ) सूत्रे दर्शितः–" परिक्षालनमानयति सम्पृच्यध्वमृतावरी " रित्यादिना ( का. श्रौ. सू. ४ अ. ६१ ) । **तदुद्वास्ये**त्यादि । आतञ्चनेनैतत् क्षीरं तीव्रीकृतवान् भवति । तीव्रीकरणं सारत्वकरणम् । क्षीरादपि दध्नो बलकरत्वं लोके दृष्टम्,–" यन्मा धिनवत्तन्मे कुरुत"–इति ह्युक्तम् ( श. ब्रा. ६ अ. ४ ब्रा ११ कं. ) । आतञ्चनद्रव्यं सूत्रकार आह–" प्राग्घुतशेषेण " ( का. श्रौ. सू. ४ अ. ६२ सू. ) यवाग्वेत्यर्थः ॥ १८ ॥

स ऽआतनक्ति । ( क्ती ) इन्द्रस्य त्वा भागᳬसोमेनातनच्मीति तद्यथैवादो देवतायै हविर्गृहीत्वादिशत्येवमेवैतद्देवताया ऽआदिशति यदाहेन्द्रस्य त्वा भागमिति सोमेनातनच्मीति स्वदयत्येवैनदेतद्देवेभ्यः ॥ १९ ॥

( भ्योऽथो ) अथोदकवतोत्तानेन पात्रेणापिदधाति । नेदेनदुपरिष्टान्नाष्ट्रा रक्षाᳬस्यवमृशानिति वज्रो वा ऽ आपस्तद्वज्रेणैवैतन्नाष्ट्रा रक्षाᳬस्यतोऽपहन्ति तस्मादुदकवतोत्तानेन पात्रेणापिदधाति ॥ २० ॥

सोऽपिदधाति । विष्णो हव्यᳬरक्षेति यज्ञो वै विष्णुस्तद्यज्ञायैवैतद्धविः परिददाति गुप्त्यै तस्मादाह विष्णो हव्यᳬरक्षेति ॥ २१ ॥ ४ ॥

इति पञ्चमप्रपाठके चतुर्थं ब्राह्मणम् । [ ७. १. ]

---

स आतनक्ति—" इन्द्रस्य त्वा भागं सोमेनातनच्मि "-( वा० सं० १ । ४ ) इति । तद्यथैवादो देवतायै हविर्गृहीत्वादिशति—एवमेवैतद्देवताया आदिशति—यदाह—" इन्द्रस्य त्वा भागम् "—इति । " सोमेनातनच्मि "—इति । स्वदयत्येवैनदेतद्देवेभ्यः ॥ १९ ॥

अथोदकवतोत्तानेन पात्रेणापिदधाति । नेदेनदुपरिष्टान्नाष्ट्रा रक्षांस्यवमृशानिति । वज्रो वा आपः । तद्वज्रेणैवैतन्नाष्ट्रा रक्षांस्यतोऽपहन्ति । तस्मादुदकवतोत्तानेन पात्रेणापिदधाति ॥ २० ॥

सोऽपिदधाति—" विष्णो हव्यं रक्ष "—( वा० सं० १ । ४ ) इति । यज्ञो वै विष्णुः । तद्यज्ञायैवैतद्धविः परिददाति गुप्त्यै । तस्मादाह—" विष्णो हव्यं रक्ष "—इति ॥ २१ ॥

---

तत्र मन्त्रमाह—**स आतनक्ति इन्द्रस्य त्वेति** । मन्त्रे देवतानामनिर्देशं प्रशंसति—**तद्यथेति** । पूर्ववद्व्याख्येयम् ( श. ब्रा. ७ अ. १ ब्रा. ६ कं. ) सोमस्य देवतानामतिप्रियत्वात् कीर्तितेन एतद्धव्यं तेभ्यः स्वादु कृतवान् भवति ॥ १९ ॥

**अथोदकवतेति** । पिधानपात्रस्योदकपूर्णत्वे प्रयोजनमाह—**नेदिति** । ' नेत् '—इति परिभये ( " नेत्येष इदित्येतेन सम्प्रयुज्यते परिभये " इति निरु० १ । ३ । ६ ) यद्युदकपूर्णं न कुर्यात्, 'एनत्' क्षीरमुपरिभागे, ' रक्षांसि ', ' अवमृशान् ' अवमृशेयुः; एतद्भयावहमित्यर्थः । सोदकत्वे कथं तत्परिहार इति तदाह—**वज्रो वा आप इति** ॥ २० ॥

**सोऽपिदधातीति** । पिधानमन्त्रे ( " सोदकेनापिदधात्यमृण्मयेन विष्णो हव्यमिति " इति का. श्रौ. सू. ४ अ. ६३ सू. ) विष्णुशब्दार्थमाह—**यज्ञो वा इति** । स च त्र्यात्मना व्यापित्वात् ' यज्ञो विष्णुः ' ॥ २१ ॥ ४ ॥ ( ७. १ )

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीये शतपथब्राह्मणभाष्ये प्रथमकाण्डे सप्तमाध्याये प्रथमं ब्राह्मणम् ॥ ( १ -७- १ ) ॥

---

१—यदिमृण्मयंस्यात्तृणं दारुंवाऽन्तर्दधाति ॥

ऋणꣳ ह वै जायते योऽस्ति । स जायमान ऽएव देवेभ्य ऽऋषिभ्यः पितृभ्यो मनुष्येभ्यः ॥ १ ॥

स यदेव यजेत । तेन देवेभ्य ऽऋणं जायते तद्ध्येभ्य ऽएतत्करोति यदे- नान्यजते यदेभ्यो जुहोति ॥ २ ॥

(त्य) अथ यदेवानुब्रुवीत । तेनऽर्षिभ्य ऽऋणं जायते तद्ध्येभ्य ऽएतत्क- रोत्यृषीणां निधिगोप इति ह्यनूचानमाहुः ॥ ३ ॥

( रु ) अथ यदेव प्रजामिच्छेत । तेन पितृभ्य ऽऋणं जायते तद्ध्येभ्य ऽएतत्करोति यदेषाꣳ सन्तताव्यवच्छिन्ना प्रजा भवति ॥ ४ ॥

---

## अवदानक्लृप्तिः ।

ऋणं ह वै जायते योऽस्ति । स जायमान एव देवेभ्य ऋषिभ्यः पितृभ्यो मनुष्येभ्यः ॥ १ ॥

स यदेव यजेत–तेन देवेभ्य ऋणं जायते । तद्ध्येभ्य एतत् करोति–यदेनान् यजते, यदेभ्यो जुहोति ॥ २ ॥

अथ यदेवानुब्रुवीत–तेन ऋषिभ्य ऋणं जायते । तद्ध्येभ्य एतत् करोति–ऋषीणां निधि[illegible]ः– इति ह्यनूचानमाहुः ॥ ३ ॥

अथ यदेव प्रजामिच्छेत–तेन पितृभ्य ऋणं जायते । तद्ध्येभ्य एतत् करोति–यदेषां सन्तताऽव्य- वच्छिन्ना प्रजा भवति ॥ ४ ॥

---

अवदानस्वरूपं ( श. प. ब्रा. ७।२।६ ) विवक्षुराख्यायिकामाह–**ऋणं हे**ति । 'यः' द्विजातिः 'स जाय- मान एव' देवादिभ्यश्चतुर्भ्योऽपि 'ऋणवान्' अधमर्णिको 'जायते'[२] ऋणित्वे जननमेव निमित्तमित्यर्थः ॥१॥

सङ्ग्रहोक्तं विवृणोति–**स यदेवे**ति ।'यजेत'–इति 'यत्' 'तेन' कारणेन यागेन निमित्तेन 'देवेभ्यः' 'तद् ऋणं जायते' । 'हि' यस्माद् यागकर्मभ्यः 'एभ्यः' देवेभ्यः 'एतत्' इदानीं 'करोति' अतस्तेभ्यः तद् ऋणमित्यर्थः । तच्छब्दार्थमाह -**यदेनानि**ति । यागहोमावुभावपि नियमेन देवार्थमेव यतः क्रियते; अतस्तेषां तौ स्वम्, तस्यावश्यप्रदानत्वादृणी जायत इत्यर्थः । एवमुत्तरवाक्यान्यपि योज्यानि ॥ २ ॥

**अथे**ति । 'अनुब्रुवीत' अनुवचनं कुर्यात्, अधीयेतेत्यर्थः । **निधिगोप इती**ति । उपभुज्यमानोऽपि यो न विनश्यति, स 'निधिः' । तादृशः ऋषीणां सम्बन्धी यो वेदाख्यो निधिः, तस्य गोपायिता 'इति' वेदम् 'अनूच्यमानम्' 'आहुः' बुधाः । अतस्तेषां प्रवचनं धनमिति गम्यते ॥ ३ ॥ ४ ॥

---

१–" मध्यात्पूर्वार्धाच्चासम्भिन्दन्नंगुष्ठपर्वमात्रमवदानम् " इति का. श्रौ. सू. १ । ९ । ६ ॥ २–" जायमानो वै ब्राह्मणस्त्रि- भिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारिवासी " ( तै. सं. ६ ३. ११. १३ ) मं. सं. ६. ३५–३७; ४. २५७ । रामा. २. ४. १३ । म. भा. १. ४६ । ५६ । ५८ ।

(त्यु) अथ यदेव व्वासयेत। तेन मनुष्येभ्य ऽऋणं जायते तद्ध्येभ्य ऽएतत्करोति यदेनान्व्वासयते यदेभ्योऽशनं ददाति स य ऽएतानि सर्व्वाणि करोति स कृतकर्मा तस्य सर्व्वमाप्तꣳ सर्व्वं जितम् ॥ ५ ॥

(त्युँ) स येन देवेभ्य ऽऋणं जायते। तदेनांस्तदवदयते यद्यजतेऽथ यदग्नौ जुहोति तदेनांस्तदवदयते तस्माद्यत्किञ्चाग्नौ जुह्वति तदवदानं नाम ॥ ६ ॥

तद्वै चतुरवत्तं भवति। (ती) इदं वा ऽअनुवाक्याथ याज्याथ व्वषट्कारोऽथ सा देवता चतुर्थी यस्यै देवतायै हविर्भवत्येवꣳ हि देवताऽवदानान्यन्वायत्ता ऽअवदानानि वा देवता ऽअन्वायत्तान्यतिरिक्तꣳ ह तदवदानं यत्पञ्चमं कस्मा ऽउ हि तदवद्येत्तस्माच्चतुरवत्तं भवति ॥ ७ ॥

---

अथ यदेव वासयेत–तेन मनुष्येभ्य ऋणं जायते। तद्ध्येभ्य एतत् करोति–यदेनान् वासयते, यदेभ्योऽशनं ददाति। स य एतानि सर्वाणि करोति, स कृतकर्मा, तस्य सर्वमाप्तं, सर्वं जितम् ॥५॥

स येन देवेभ्य ऋणं जायते–तदेनांस्तदवदयते–यद् यजते। अथ यदग्नौ जुहोति–तदेनांस्तदवदयते। तस्माद् यत् किञ्चाग्नौ जुह्वति तदवदानं नाम ॥ ६ ॥

तद्वै चतुरवत्तं भवति। इदं वा अनुवाक्या, अथ याज्या, अथ वषट्कारः, अथ सा देवता चतुर्थी यस्यै देवतायै हविर्भवति। एवं हि देवता अवदानान्यन्वायत्ता। अवदानानि वा देवता अन्वायत्तानि। अतिरिक्तं ह तदवदानम्, यत् पञ्चमम्। कस्मा उ हि तदवद्येत्। तस्माच्चतुरवत्तं भवति ॥ ७ ॥

---

**अथ यदेवे**ति। 'वासयेत' गृहे; अन्नादिप्रदानेनेदानीमवकाशं प्रयच्छेत्। 'यः' जायमानो ब्राह्मणः 'एतानि' यागानुवचनादीनि 'सर्वाणि' अपि 'करोति'। 'सः' 'कृतकर्मा' कृतकृत्यः। तस्मात् आप्तव्यं 'सर्वमाप्तं' भवति, देवादिसर्वस्थानं 'सर्वं' जेतव्यं 'जितं' भवति ॥ ५ ॥

**स येने**ति। इत्थं तेषामृणत्वं प्रति तेन 'अवदयते' दयतिर्दानार्थः; (धा. पा. भ्वा. आ. ४८१) अव-प्रत्यर्पणम्, देवानां स्वभूतमृणम्, विभज्य दत्तवान् भवति। तच्छब्दार्थमाह–**यद्यजत** इति। यदस्ति तत्तेन यागेनेत्यर्थः; एवं होमेनापि। 'यस्मादेवं' तस्मात् 'यत् किञ्च' चरुपुरोडाशादिकं 'अग्नौ जुह्वति,' 'तत्' अवत्तं हविः '**अवदानम्**'–इति प्रसिद्धं भवति ॥ ६ ॥

तस्यावदेयस्य चतुष्ट्वं विधत्ते–**तद्वा** इति। तत्र कारणमाह–**इदं वा** इति। 'इदं वा' अनुवाक्यात्मक-मिदं खलु प्रथमम्; 'अथ' पश्चाद् 'याज्या,' 'अथ' प्रधानसाधनो 'वषट्कारः'। पश्चाद्धविस्स्वा-मिनी 'देवता,' 'चतुर्थी' भवति। 'एवं' क्रमेण पुरोऽनुवाक्याद्याश्चतस्रो 'देवताः', क्रमेण चत्वारि 'अवदानानि अन्वायत्ताः'। 'हि'–शब्दश्चार्थे ("हीत्येषोऽनेककर्मा" इति निरु. १. २. ४., १. ४. ३); अवदानानि च चत्वारि, चतस्रः पुरोऽनुवाक्यायाज्यादिदेवताः 'अन्वायत्तानि' अनुप्राप्तानि। अत उभयेषां समसङ्ख्याकत्वात् तन्न्यूनाधिकभावो न युक्त इत्यर्थः। चतसृभ्योऽवदानचतुष्टयस्यावश्यकत्वात् न्यूनसङ्ख्या-

( त्यु ) उतो पञ्चावत्तमेव भवति । पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चऽर्तवः संवत्सरस्यैषो पञ्चावत्तस्य सम्पद्बहुर्हैव प्रजया पशुभिर्भवति यस्यैवं विदुषः पञ्चावत्तं क्रियत ऽएतद्ध न्वेव प्रज्ञातं कौरुपाञ्चालं यच्चतुरवत्तं तस्माच्चतुरवत्तं भवति ॥ ८ ॥

स वै यावन्मात्रमिवैवावद्येत् । ( न्मा ) मानुष ᳪ ह कुर्याद्यन्महदवद्येद्व्यृद्धं वै तद्यज्ञस्य यन्मानुषं नेद्व्यृद्धं यज्ञे करवाणीति तस्माद्यावन्मात्रमिवैवावद्येत् ॥ ९ ॥

( त्स ) स ऽआज्यस्योपस्तीर्य । द्विर्हविषोऽवदायाथोपरिष्टादाज्यस्याभिघारयति द्वे वा ऽआहुती सोमाहुतिरेवान्याज्याहुतिरन्या तत ऽएषा केवली

---

उतो पञ्चावत्तमेव भवति । पाङ्क्तो यज्ञः, पाङ्क्तः पशुः, पञ्चर्तवः, संवत्सरस्य एषो पञ्चावत्तस्य संपत् । बहुर्हैव प्रजया पशुभिर्भवति—यस्यैवं विदुषः पञ्चावत्तं क्रियते । एतद्ध न्वेव प्रज्ञातं कौरुपाञ्चालं यच्चतुरवत्तं, तस्माच्चतुरवत्तं भवति ॥ ८ ॥

स वै यावन्मात्रमिवैवावद्येत् । मानुषं ह कुर्याद्—यन्महदवद्येद् । व्यृद्धं वै तद् यज्ञस्य—यन्मानुषं, नेद् व्यृद्धं यज्ञे करवाणीति । तस्माद् यावन्मात्रमिवैवावद्येत् ॥ ९ ॥

स आज्यस्योपस्तीर्य द्विर्हविषोऽवदायाथोपरिष्टादाज्यस्याभिघारयति । द्वे वा आहुती—सोमाहुति-

---

कर्तुं न शक्यम् । अधिकत्वदोषात् पञ्चममाशङ्क्य परिहरति—अतिरिक्तं हेति । अतिरेकमेव दर्शयति—कस्मा इति । ' कस्मै ' प्रयोजनाय ' पञ्चमम् अवद्येत् ? ' तदभिमानिन्याः पञ्चम्या देवताया अभावादिति भावः ॥७॥

अथाभ्युपगम्याधिक्यदोषं यज्ञादिसम्पत्तिलाभाय पञ्चावदानपक्षमप्याह—उतो—इति । यज्ञस्य पाङ्क्तत्वं धानाकरम्भादिहविःपञ्चकादिनाऽवगन्तव्यम्[1] ( तै. सं. ६. ५. ११ ) । ऐतरेयकेऽपि—" यो वै यज्ञम् " इत्यादिना ( ऐ. ब्रा. २. ३. ६. ) हविरक्षरसङ्ख्यादिभिर्बहुधा[2] यज्ञस्य पाङ्क्तत्वमुपपादितम् । पशोः पाङ्क्तत्वं लोमत्वगादिभिरिति प्रागुक्तम् । ( श. प. १।२।३।७ ) हेमन्तशिशिरयोरैक्याभिप्रायेण संवत्सरः पाङ्क्तः । ( ऐ. ब्रा. १. १. १ ) एवन्तु पञ्चावत्ते सति तद्गतपञ्चसङ्ख्याद्वारा ' सम्पत् ' यज्ञात्मकं धनं सम्पद्यत इत्यर्थः ॥

एतज्ज्ञानपूर्वकानुष्ठानफलमाह—बहुर्हैवेति ॥

अथ पुनश्चतुरवत्तमेव स्थापयति—एतदिति । एतदेव ' चतुरवत्तं ' ' कौरुपाञ्चलं ' कुरुपञ्चालदेशे प्रसिद्धम्; अतस्तत्र प्रज्ञातत्वादनुष्ठानसम्प्रदायानुरोधेन ' चतुरवत्तम् ' एव कर्तव्यम् ॥ ८ ॥

अवदानस्येयत्तां विधत्ते—स वा इति । ' यावन्मात्रमिव ' ' इव '—शब्दोऽनर्थको वाक्यालङ्कारे ( "इवशब्दोऽपि दृश्यते " इत्यादि निरु. १. ३. ९. ) ' यावन्मात्रमिव ' अङ्गुष्ठपर्वमात्रमेवेत्यर्थः ।

आधिक्ये दोषमाह—मानुषं ह इति । मनुष्याणां शरावादिपरिमितत्वादाधिक्यं मानुषत्वकरणम् ॥ ९ ॥

इदानीं चतुरवदानप्रकारं दर्शयति—स आज्यस्येति । पुरोडाशांशौ द्वौ; तदध उपरि चोपस्तृताभिघारिताज्याभ्यां ( श. प. ६ अ. १ ब्रा. २१ कं. ) चतुरवत्तत्वम् ।

---

१–'धानाः, करम्भः, परिवापः पुरोडाशः, पयस्या' इति । २–हविष्पङ्क्तिः, अक्षरपङ्क्तिः, नराशंसपंक्तिः, सवनपङ्क्तिः इति ।

यत्सोमाहुतिरथैषाज्याहुतिर्यद्धविर्यज्ञो यत्पशुस्तदाज्यमेवैतत्करोति तस्मादुभयत आज्यं भवत्येतद्वै जुष्टं देवानां यदाज्यं तज्जुष्टमेवैतद्देवेभ्यः करोति तस्मादुभयत ऽआज्यं भवति ॥ १० ॥

( त्य ) असौ वा ऽअनुवाक्येयं याज्या । ते ऽउभे योषे तयोर्मिथुनमस्ति वषट्कार एव तद्वा ऽएष एव वषट्कारो य ऽएष तपति स ऽउद्यन्नेवामूमधिद्रवत्यस्तं यन्निमामधिद्रवति तदेतेन वृष्णेमां प्रजातिं प्रजायते यैनयोरियं प्रजातिः ॥ ११ ॥

---

रेवान्या—आज्याहुतिरन्या । तत एषा केवली यत् सोमाहुतिः । अथैषाज्याहुतिः—यद्धविर्यज्ञः, यत् पशुः । तदाज्यमेवैतत् करोति—तस्मादुभयत आज्यं भवति । एतद्वै जुष्टं देवानां यदाज्यम्, तज्जुष्टमेवैतद् देवेभ्यः करोति—तस्मादुभयत आज्यं भवति ॥ १० ॥

हवनक्लृप्तिः ।

असौ वा अनुवाक्या, इयं याज्या—ते उभे योषे । तयोर्मिथुनमस्ति वषट्कार एव । तद्वा एष एव वषट्कारः—य एष तपति । स उद्यन्नेवामूमधिद्रवति, अस्तं यन्निमामधिद्रवति । तदेतेन वृष्णेमां प्रजातिं प्रजायते—यैनयोरियं प्रजातिः ॥ ११ ॥

---

पुरोडाशस्योभयत आज्यकरणं प्रशंसितुमाह—**द्वे वा** इति । सर्वाप्याहुतिः सोमाज्यभेदेन द्विविधा; तत्र सोमस्य स्वरूपेणाहुतित्वादाज्यापेक्षैव नास्ति; अवशिष्टौ हविर्यज्ञपशुयज्ञावाज्याहुतिकौ भवितव्यौ; अतस्तत्र तयोः ‘एतत्’ एतेनोपस्तरणाभिघारणेन आज्यमेव कृतवान् भवति । ‘एतद्वै जुष्टम्’—इत्यादि स्पष्टम् ॥ १० ॥

अवदानाय धर्ममुक्त्वा प्रधानधर्मं विधातुमाह—**असौ वा** इति । अनुवाक्या—याज्ययोः क्रमेण देवताह्वानहविःप्रदानसाधनत्वं वक्ष्यते ( श. प. ब्रा. ७ अ. २ ब्रा. १७ कं ) आह्वातव्यानां देवानां द्युलोकसम्बन्धात्, प्रदानस्यैवैतल्लोकसम्बन्धात्, तयोः क्रमेण द्युभ्वात्मकता । तयोः स्त्रीलिङ्गत्वाद् द्वन्द्वे, वषट्कारस्य पुँलिङ्गत्वात् सह मिथुनताऽस्ति । उभयोरन्तराले तपन्नादित्य एव वषट्कारः स चोदयास्तमयसमये दिवं पृथिवीं चाधिकृत्य गच्छति ( ऐ. ब्रा. ३. ४. ६ ) । ‘तत्’ तस्मात् ‘एतेन वृष्णा’ अनेन वर्षकेण, आदित्येन सह सङ्गते सत्यौ, ते एवमिदानीं प्रसिद्धाम् ‘इमां प्रजातिं’ ‘प्रजायेते’; सर्वेषामप्युत्पद्यमानानां भावानां तत्रैवोत्पत्तेः, उत्पद्यमानपदार्थात्मना ते एव प्रकृष्टे जायेते इत्यर्थः ॥ ११ ॥

---

१—“अग्निष्टोमोऽत्यग्निष्टोम उक्थः षोडशिमांस्ततः । वाजपेयोऽतिरात्रश्चाप्तोर्यामोऽत्र सप्तमः । इत्येते सुत्याः” इति गो० ब्रा. १. ५. २३ । सुत्याः सोमसंस्थाः सोमयज्ञाः इत्येतेऽभिन्नार्थाः । २—“अग्न्याधेयमग्निहोत्रं पौर्णमास्यममावास्ये । नवेष्टिश्चातुर्मास्यानि पशुबन्धोऽत्र सप्तमः ॥ इत्येते हविर्यज्ञाः” इति गो. ब्रा. १. ५. २३. “अष्टका पार्वणः श्राद्धं श्रावण्याग्रहायणी चैत्र्याश्वयुजीति सप्त पाकयज्ञसंस्थाः” गौ. ध. सू. ८ । ५ ॥ अत्र—अष्टका, पार्वणः, श्राद्धम्, श्रावण्याग्रहायणी, चैत्र्याश्वयुजीति सप्त पाकयज्ञसंस्थाः इत्येवमासां सप्तानामपि पाकयज्ञसंस्थानां पशुयज्ञसंस्थात्वं ब्रुवन् सत्यव्रतसामाश्रमिर्नितान्तं बभ्राम । “तत्रापि पाकयज्ञेनेजे स घृतं दधि मस्त्वामिक्षामित्यप्सु जुहयांचकार” इति ( श. प. १ । ८ । १ । ७ ) शतपथश्रुत्या घृतदध्यादिद्रव्यसाधनयज्ञस्य पाकयज्ञतयाऽऽख्यानात्, पशुपुरोडाशकयज्ञस्य पशुयज्ञताया अन्यत्राख्यानाच्च पाकयज्ञपशुयज्ञयोर्भेदस्य सुप्रसिद्धत्वात् । विशेषस्त्वत्र “आर्यसर्वस्व”—ग्रन्थस्य द्वितीये यज्ञविभागाध्याये द्रष्टव्यः । ३—“स वा एष न कदाचनास्तमेति नोदेति । तं यदस्तमेतीति मन्यतेऽह्न एव तदन्तमित्वाथात्मानं विपर्यस्यते । रात्रीमेवावस्तात्कुरुतेऽहः परस्तात्” इत्यादि । ऐ. ब्रा. ३ । ४ । ६ ॥

सोऽनुवाक्यामनूच्य । याज्यामनुद्रुत्य पश्चाद्वषट्करोति पश्चाद्वै परीत्य वृषा योषामधिद्रवति तदेने ऽउभे पुरस्तात्कृत्वा वृष्णा वषट्कारेणाधिद्रावयति तस्मादु सह वैव वषट्कारेण जुहुयाद्वषट्कृते वा ॥ १२ ॥

देवपात्रं वा एष यद्वषट्कारः । ( स्त ) तद्यथा पात्र उद्धृत्य प्रयच्छेदेवं तदथ यत्पुरा वषट्काराज्जुहुयाद्यथाधो भूमौ निदिग्धं तदमुया स्यादेवं तत्तस्मादु सह वैवं वषट्कारेण जुहुयाद्वषट्कृते वा ॥ १३ ॥ [ शतम् ६०० ]

तद्यथा योनौ रेतः सिञ्चेत् । ( दे ) एवं तदथ यत्पुरा वषट्काराज्जुहुयाद्यथा योनौ रेतः सिक्तं तदमुया स्यादेवं तत्तस्मादु सह वैव वषट्कारेण जुहुयाद्वषट्कृते वा ॥ १४ ॥

---

सोऽनुवाक्यामनूच्य, याज्यामनुद्रुत्य, पश्चाद् वषट्करोति । पश्चाद्वै परीत्य वृषा योषामधिद्रवति । तदेने उभे पुरस्तात् कृत्वा वृष्णा वषट्कारेणाधिद्रावयति । तस्मादु सह वैव वषट्कारेण जुहुयाद्, वषट्कृते वा ॥ १२ ॥

देवपात्रं वा एष यद्वषट्कारः । तद्यथा पात्र उद्धृत्य प्रयच्छेत्—एवं तत् । अथ यत्पुरा वषट्काराज्जुहुयाद्—यथाधो भूमौ निदिग्धं तदमुया स्यात्—एवं तत् । तस्मादु सह वैव वषट्कारेण जुहुयाद्, वषट्कृते वा ॥ १३ ॥

तद् यथा योनौ रेतः सिञ्चेत्—एवं तत् । अथ यत्पुरा वषट्काराज्जुहुयाद्—यथा योनौ रेतः सिक्तं तदमुया स्यात्—एवं तत् । तस्मादु सह वैव वषट्कारेण जुहुयात्, वषट्कृते वा ॥ १४ ॥

---

पुरोऽनुवाक्यायाज्यानां द्युम्वात्मकताभिधानस्य प्रयोजनमाह—**सोऽनुवाक्या**मिति । नयोः समनन्तरं वषट् कुर्यादिति विधिः । उक्तेऽर्थे लोकाचरणं प्रमाणयति—**पश्चाद्वा** इति । 'पश्चात् परीत्य' स्त्रियाः पश्चाद्देशादागत्य 'अधिद्रवति' अभिगच्छति । 'तत्' तेन याज्यापुरोऽनुवाक्यानन्तरं वषट्कारकरणेन 'एने उभे' द्यावापृथिव्यात्मिके याज्यापुरोऽनुवाक्ये 'पुरस्तात् कृत्वा' 'वृष्णा' सेक्त्रा 'वषट्कारेण' तत्सूर्यात्मकेन द्रवणमाकारितवान् भवति । "तस्मात्"—इति स्पष्टम् । वौषडित्युच्चारणकाले वा, समनन्तरं वा प्रदानमस्तु; सर्वथा वषट्कारात् प्राङ् न जुहुयादित्यर्थः । अनेनैव पुरोऽनुवाक्यायाज्ययोर्वषट्कारात् पूर्वभावित्वं सिद्धम्॥ १२

प्रदानस्य वषट्कारानन्तरत्वं प्रकारान्तरेणोपपादयति—**देवपात्रं वा** इति । पिबन्त्यनेन देवा इति 'देवपात्रं' 'वषट्कारः' । 'तत्' वषट्कारावसानं प्रदानम् 'एवं' भवति, पात्रोद्धारपूर्वकप्रदानमिव भवति । उक्तवैपरीत्ये दोषमाह—**अथ यत्पुरे**ति । 'अधोभूमौ निदिग्धम्' भूमौ प्रास्तं दुष्टत्वेनोपयोगाभावात् दग्धमित्युपचर्यते 'अमुया' अनेन वषट्कारात्पूर्वकालहोमेन 'स्यात्' दग्धं स्यादित्यर्थः । 'तस्माद्'—इत्युपसंहारः ॥ १३ ॥

**तद्यथा योनौ**—इत्यादि स्पष्टम् ॥ १४ ॥

( वाऽसौ ) असौ वा ऽअनुवाक्येयं याज्या । सा वै गायत्रीयं त्रिष्टुबसौ स वै गायत्रीमन्वाह तदमूमनुब्रुवन्नसौ ह्यनुवाक्येमामन्वाहेयꣳ हि गायत्री ॥ १५

( त्र्यु ) अथ त्रिष्टुभा यजति तदनया यजन्नियꣳ हि याज्यामुष्या ऽअधि व्वषट्करोत्यसाऽ उ हि त्रिष्टुप्तदेने सयुजौ करोति तस्मादिमे सम्भुञ्जाते ऽअनयोरनुसम्भोगमिमाः सर्व्वाः प्रजा ऽअनुसम्भुञ्जते ॥ १६ ॥

स वा अङ्क्ष्यन्निवैवानुवाक्यामनुब्रूयात् । ( द ) असौ ह्यनुवाक्या बृहद्वचसौ बार्हतꣳ हि तद्रूपं क्षिप्र ऽएव याज्यया त्वरेतेयꣳ हि याज्या रथ-

---

असौ वा अनुवाक्या, इयं याज्या । सा वै गायत्रीयम्, त्रिष्टुबसौ । स वै गायत्रीमन्वाह । तदमूमनुब्रुवन्–" असौ ह्यनुवाक्या "–इमामन्वाह । इयं हि गायत्री ॥ १५ ॥

अथ त्रिष्टुभा यजति । तदनया यजन्–" अयं हि याज्या "–अमुष्या अधिवषट्करोति । असौ उ हि त्रिष्टुप् । तदेने सयुजौ करोति । तस्मादिमे सम्भुञ्जाते । अनयोरनुसम्भोगमिमाः सर्वाः प्रजा अनुसम्भुञ्जते ॥ १६ ॥

स वा अङ्क्ष्यन्निवैवानुवाक्यामनुब्रूयात् । असौ ह्यनुवाक्या, बृहद्वचसौ । बार्हतं हि तद्रूपम् । क्षिप्र एव याज्यया त्वरेत । इयं हि याज्या, रथन्तरं हीयम्, राथन्तरं हि तद्रूपम् । ह्वयति वा

---

पुरोऽनुवाक्यायाज्ये गायत्रीत्रिष्टुभौ कर्तव्ये इति विधातुमाह–**असौ वा** इति । ' अनुवाक्या ' ' असौ ' द्युलोकः, तत्स्थाना; ' याज्या ' तु ' इयम् ' भूः । ' सेयं ' पृथिवी गायत्र्यात्मिका, ' असौ ' द्युलोकः त्रिष्टुबात्मकः । तथा सति " गायत्रीमन्वाह "–इति यत्, ' तत् ' तेन अनुवाक्यात्मकम् ' अनुब्रुवन् ' गायत्रीछन्दोद्वारा ' इमां ' पृथिवीमेवोक्तवान् भवति । द्युलोकस्य कथमनुवक्तव्यतेत्याशङ्क्य अनुवाक्यात्मकत्वं वाक्यमध्य एव स्मारयति । पृथिव्या अप्यनुवक्तव्यत्वं गायत्र्यात्मकत्वादित्याह–**इयꣳ** हीति । इत्थमनुवाक्याया गायत्रीत्वे द्यावापृथिव्यावुभे अपि योजितवान् भवतीत्युक्तम् ॥ १५ ॥

याज्यायास्त्रिष्टुप्त्वसम्पादनेऽपि तथैव योजितवान् भवतीत्याह–**अथे**ति । ' त्रिष्टुभा यजति ' त्रैष्टुभं याज्यां कुर्यात् । तत्र याज्यया ऋचा यजतीति यत्, ' तत् ' तेन ' अनया ' पृथिव्यैव यजति । तत्कथमित्यत आह–**तदि**ति । ' तत् ' तेन त्रिष्टुप्त्वकरणेनानया यजति । एतां भुवमेव याज्यां कृतवान् भवतीत्यर्थः । उक्तार्थसमर्थनाय पूर्वोक्तं स्मारयति–**इयं हि याज्ये**ति । अतः ' अमुष्या अधि ' द्युलोकस्योपरि एव ' वषट् '–कृतवान् भवति । एतत्समर्थनायाह–**त्रिष्टुबि**ति । ' तत् ' तेन, पुरोऽनुवाक्यायाज्ययोर्गायत्रीत्रिष्टुप्त्वकरणेनानेन ' एने ' द्यावापृथिव्यौ प्रतिपादितप्रकारेण ' सयुजौ ' परस्परं संयुक्तौ कृतवान् भवति । ' तस्मात् ' सायुज्यात् ' इमे ' सहाभ्यवहरतः, " द्यावापृथिवीभ्यां स्वाहा "–इति ( ऐ० ब्रा० १. ३. ९ । तै. ब्रा. २ । १ । ७ । १ ॥ ८ । २ ) सहप्रदानात् । अथवा वृष्ट्यन्नयोः परस्परसापेक्षत्वात् ( श० प० कां० १ अ० ९ ब्रा० ३ कं० ९ । १७ । ७ । ३ । १ । ३० ) सहभागः । अतस्तयोः सहभागम् ' अनु ' ' सर्वाः ' अपि ' प्रजाः ' तत्सम्बन्धिन्यः ' अनुसम्भुञ्जते ' अनुसृत्य भुञ्जते । अत उभयोः सभागलोकात्मकत्वात्, तयोश्च परस्परसाहित्याद् याज्यानुवाक्ययोः साहित्येनापि भवितव्यमित्यर्थो लभ्यते ॥ १६ ॥

अथानुवाक्याया उच्चारणधर्ममाह–**स वा अङ्क्ष्यन्निवैवे**ति । ' अङ्क्ष्यन्निव ' वर्णानालोडयन्निव शनैरनुवाक्यां

न्तर॒ᳪं᳖ ह्यीय᳖ᳪं᳖ र॒थन्तर॒ᳪं᳖ हि त॒द्रूप॒ᳪं᳖ ह्व॒यति वा॒ ऽअनु॒वाक्यया प्रय॑च्छति या॒ज्यया त॒स्मादनु॒वाक्यायै रू॒पᳪं᳖ हु॒वे ह॑वामह॒ ऽआगच्छेदम्बा॒र्हिः सीदे॒ति यद्ध्व॒यति हि त॒या प्र॒यच्छति या॒ज्यया त॒स्माद्या॒ज्यायै रू॒पं व्वीहि ह॒विर्जुषस्व ह॒विराव्वृषायस्वाद्धि पिब प्रे॒ति यत्प्र हि त॒या प्र॒च्छति ॥१७॥

सा या पु॒रस्ताल्लक्ष॒णा । सानु॒वाक्या स्याद॒सौ ह्य॒नु॒वाक्या त॒स्या ऽअमु॒ष्या ऽअव॒स्ताल्लक्ष्म च॒न्द्रमा न॒क्षत्राणि सू॒र्यः ॥ १८ ॥

---

**अनुवाक्यया, प्रयच्छति याज्यया । तस्मादनुवाक्यायै रूपम्–हुवे, हवामहे, आगच्छ, इदम्बर्हिः सीद–इति । यद् ह्वयति हि तया । प्रयच्छति याज्यया–तस्माद् याज्यायै रूपम्–वीहि, हविर्जुषस्व, हविरावृषायस्व, अद्धि, पिब, प्र, इति यत्प्र हि तया यच्छति ॥ १७ ॥**

**सा या पुरस्ताल्लक्षणा–सानुवाक्या स्यात् । असौ ह्यनुवाक्या । तस्या अमुष्या अवस्ताल्लक्ष्म,–चन्द्रमा नक्षत्राणि सूर्यः ॥ १८ ॥**

---

ब्रूयात् । अह्वतिर्गत्यर्थः ' पर्यह्वयाते ' ( ऋ० मं० १० सू० १६ ऋ० ७ ) । उक्तविधानुवचनं ' बृहत् ' साम्ना ( सा० सं० आ० गा० १. १. २७ ) स्तौति–**असौ ही**ति । ' अनुवाक्या ' ' असौ ' द्यौः, एवं ' बृहत् ' सामापि द्यौः ( ता० ब्रा० १६ । ११ । ) ( तै० ब्रा० ३. ९. १३ ) । ' हि ' यतो द्युभागोऽनुवाक्या बृहत्साम, ' तत् ' तस्मात् तद्गतं मन्द्रत्वं ' बार्हतं ' बृहतीसम्बन्धि ' रूपम् ' ॥

याज्याया उच्चारणे धर्ममाह–**क्षिप्र एव याज्यये**ति । ' याज्यया ' निमित्तया उच्चारणे वर्णविषयां त्वरां कुर्यात् । **इयं ही**त्यादि ( सा० सं० आ० गा० २. १. २१ । ) ( तै० ब्रा० ३. ९. १३ । ) पूर्वापेक्षया त्वरतीति ' तत् ' क्षिप्रोच्चारणं ' राथन्तरम् ' ( ता० ब्रा० १६. ११ ) ।

अथ पुरोनुवाक्यायाज्ययोर्लक्षणान्यन्यानि वक्तुं कार्यभेदमाह–**ह्वयति वा** इति । ' अनुवाक्यया ' यष्टव्यदेवान् आह्वयति, तानेव ' याज्यया ' यजति । ' तस्मात् ' आह्वानार्थत्वात्, आह्वानार्थं यल्लिङ्गम्, तत् ' अनुवाक्याया रूपम् ' तानि लिङ्गानि दर्शयति–**हुव** इत्यादिना । 'हि' यस्मात् ' तया ' अनुवाक्यया यष्टव्यदेवान् आह्वयति, तस्मादाह्वानप्रकाशकं " हुवे "–इत्यादि यल्लिङ्गजातम्, तद्वत्येव सर्वत्रानुवाक्या कार्येत्यर्थः ॥

**प्रयच्छति याज्यये**त्यादि । यस्माद् याज्या हविःप्रदानसाधनम्, ' तस्मात्' अस्याः तत्प्रदानप्रकाशकं लिङ्गं 'रूपम्' । अभिहितलिङ्गानि दर्शयति–**वीही**ति । ' हि ' यस्मात् ' तया ' याज्यया प्रयच्छति हविः, 'तस्मात्' प्रदानप्रकाशकं यद् " वीहि "–इत्यादिलिङ्गम्, तद्वत्येव सर्वत्र याज्या कार्येत्यर्थः ॥ १७ ॥

लक्षणान्तरमाह–**सा या पुरस्ताल्लक्षणे**ति । ' पुरस्तात् ' मन्त्रस्य पुरोभागे ' लक्षणं ' यष्टव्यदेवनाम यस्यां ' सा ' ' अनुवाक्या ' पुरोऽनुवाक्या । तस्या अधस्ताल्लक्षणत्वे कारणमाह–**तस्या** इति । ' तस्याः ' पुरोऽनुवाक्यायाः 'अमुष्याः' "असौ हि अनुवाक्या" इत्युक्तत्वात् (श० प० कां० १. अ० ७. ब्रा० २. कं०१७)

---

१–शांखायनब्राह्मणमप्यत्रानुसंधेयं " बार्हतराथन्तरं वषट्कुर्यात्–पुरस्ताद्दीर्घमुपरिष्टाद्ध्रस्वं–यद्ध्रस्वं तद्रथन्तरं–यद्दीर्घं तद्बृहत्–अथो इयं वै रथन्तरं–असौ बृहत् । अनयोरेव तत्प्रतितिष्ठति–एतावान्वै वाचो विकारः–सर्वेणैव तद्वाचो विकारेण देवेभ्यो हविः प्रयच्छति " इति । शां. ब्रा. अ ३. ख ५ ।

(योऽथा) अथ योपरिष्टाल्लक्षणा सा याज्या स्यादियᳪं हि याज्या तस्या ऽअस्या ऽउपरिष्टाल्लक्ष्मौषधयो वनस्पतय ऽआपोऽग्निरिमाः प्रजाः १९

सा ह न्वेव समृद्धानुवाक्या। यस्यै प्रथमात्पदाद्देवतामभिव्याहरति सो ऽएव समृद्धा याज्या यस्या ऽउत्तमात्पदाद्देवताया अधिवषट्करोति वीर्यं वै देवतऽर्चस्तदुभयत ऽएवैतद्वीर्येण परिगृह्य यस्यै देवतायै हविर्भवति तस्यै प्रयच्छति॥ २०॥

स वै वौगिति करोति वाग्वै वषट्कारो वाग्रेतो रेत ऽएवैतत्सिञ्चति षडित्यृतवो वै षट् तदृतुष्वेवैतद्रेतः सिच्यते तदृतवो रेतः सिक्तमिमाः प्रजाः प्रजनयन्ति तस्मादेवं वषट्करोति॥ २१॥

---

अथ योपरिष्टाल्लक्षणा—सा याज्या स्यात्। इयं हि याज्या। तस्या अस्या उपरिष्टाल्लक्ष्म—ओषधयः, वनस्पतयः, आपः, अग्निः, इमाः प्रजाः॥ १९॥

सा ह न्वेव समृद्धानुवाक्या—यस्यै प्रथमात् पदाद्देवतामभिव्याहरति। सो एव समृद्धा याज्या—यस्या उत्तमात् पदादेवताया अधि वषट्करोति। वीर्यं वै देवतर्चः। तदुभयत एवैतद् वीर्येण परिगृह्य यस्यै देवतायै हविर्भवति-तस्यै प्रयच्छति॥ २०॥

स वै वौगिति करोति। वाग्वै वषट्कारः, वाग्रेतः, रेत एवैतत्सिञ्चति। षडिति। ऋतवो वै षट्। तदृतुष्वेवैतद्रेतः सिच्यते। तदृतवो रेतः सिक्तमिमाः प्रजाः प्रजनयन्ति। तस्मादेवं वषट्करोति॥२१॥

---

सामानाधिकरण्यम्। तस्याः चन्द्रनक्षत्रसूर्याः 'अवस्ताल्लक्ष्म' अधस्ताल्लक्ष्माणीव; अधोभागे तेषां परिभ्रमणात्। अतोऽस्या अपि तथात्वं युक्तम्॥ १८॥

अथ योपरिष्टाल्लक्षणेति वाक्यं पूर्ववाक्यवद्व्याख्येयम्। 'तस्याः' याज्यारूपायाः 'अस्याः' भूम्याः॥१९॥

उक्तं पुरस्तादुपरिष्टाल्लक्षणत्वं विशिनष्टि—**सा ह न्वेवेति**। 'यस्यै' यस्या अनुवाक्यायाः 'प्रथमात् पदात्' "अग्निः प्रत्नेन सोमगीर्भिः" इत्यादिलक्षणाद् (ऋ० सं० ८. ४४. १२. तै० ब्रा० ३. ९. ६. ३। तै०सं० २. ६. २. २) यष्टव्यदेवता ब्रूयात्, 'सा एव समृद्धा अनुवाक्या'। 'याज्या' तु सा समृद्धा, 'यस्या उत्तमात् पदात्' "जिह्वा अग्ने चकृषे" इत्यादिकात् (ऋ० सं० १०. ८. ६.। तै० ब्रा० ३. ९. ७. २। तै० सं० २. ६. २. ८) तैरभिहितायाः 'देवतायाः' उपरि 'वषट्करोति'। ननु कथं देवतासद्भावमात्रेण समृद्धत्वमिति, तदाह—**वीर्यं वा** इति। 'देवता वै वीर्यम्' ऋगाम्नानस्य तत्प्रकाशनार्थत्वात् (ऋ० सं० १. ९९. ३.)॥ २०॥

अथ याज्यानन्तरभाविनं वषट्कारं विभज्य विधाय प्रशंसति—**स वै वौगितीति**। 'वौगिति' उच्चारणं कुर्यात्। तत्प्रशंसति—**वाग्वा** इति। 'वौग्'—इत्येतदौकारस्थाने आकारे कृते 'वाग्'—इति भवति, अतो 'वषट्कारो वाक्'। सा च 'वाक्' 'रेतः' सेचनसाधनत्वात्। उच्चारणमेव तत्सेकः। तथा षडिति करो-

देवाश्च वा ऽअसुराश्च । ( श्चो ) उभये प्राजापत्याः प्रजापतेः पितुर्दाय-मुपेयुरेतावेवार्द्धमासौ य ऽएवापूर्य्यते तं देवा ऽउपायन्योऽपक्षीयते तमसुराः२२

( स्ते ) ते देवा ऽअकामयन्त । कथं न्विममपि संवृञ्जीमहि योऽयमसुरा-णामिति तेऽर्चन्तः श्राम्यन्तश्चेरुस्त ऽएतᳫँ हविर्यज्ञं ददृशुर्यद्दर्शपूर्ण-मासौ ताभ्यामयजन्त ताभ्यामिष्ट्वैतमपि समवृञ्जत ॥ २३ ॥

य ऽएषोऽसुराणामासीद् । ( द्य ) यदा वा ऽएता ऽउभौ परिप्लवेते ऽअथ मासो भवति मासशः संव्वत्सरः सर्व्वं वै संव्वत्सरः सर्व्वमेव तद्देवा ऽअसुराणाᳫँ समवृञ्जत सर्व्वस्मात्सपत्नानसुरान्निरभजन्त्सर्व्वम्वेवैष ऽएत-

---

## दर्शपूर्णमासनिर्वचनम् ।

देवाश्च वा असुराश्च—उभये प्राजापत्याः प्रजापतेः पितुर्दायमुपेयुः—एतावेवार्द्धमासौ । य एवा-पूर्यते—तं देवा उपायन् । योऽपक्षीयते तमसुराः ॥ २२ ॥

ते देवा अकामयन्त—" कथं न्विममपि संवृञ्जीमहि, योऽयमसुराणामिति " । तेऽर्चन्तः श्राम्यन्त-श्चेरुः । त एतं हविर्यज्ञं ददृशुः—यद्दर्शपूर्णमासौ । ताभ्यामयजन्त । ताभ्यामिष्ट्वैतमपि समवृञ्जत॥२३॥

य एषोऽसुराणामासीत् । यदा वा एता उभौ परिप्लवेते—अथ मासो भवति । मासशः संवत्सरः ।

---

तीत्यनुषज्यते, ब्रूयादित्यर्थः । सङ्ख्याया ऋतुष्वपि सम्भवात् ' ऋतवः ' एव ' षट् '—इत्यनेन विवक्षिताः; प्राक् षडित्यतः वौगित्येतस्य स्थापनात् । तेन ' सिक्तं ' ' रेतः ' ' इमाः ' सर्वाः ' प्रजाः ' उत्पादयन्ति । ' तस्मात् ' ' एवं ' वौषडिति ' वषट् ' कुर्यात् ॥ २१ ॥

इत्थं दर्शपूर्णमासोभयसाधारणमवदानादिकं वषट्कारान्तं धर्ममभिधाय तत्प्रसङ्गाद्यवादिशब्दाभिधानद्वारेण दर्शपूर्णमासयागं प्रशंसति—**देवाश्च वा असुराश्चे**त्यादिना । ' प्राजापत्याः ' प्रजापतेः पुत्राः ' दायं ' पैतृकं वित्तम् ( मं० सं०.९. १६४ । ऋ० सं० १० । ११४ । १० । ऐ० ब्रा० ७ । ३ । ९ ता० ब्रा० १६ । ४ । तै० सं० ३ । १ । ९ । ४ । ) ' उपेयुः ' । किं तत् ? ' एतावेव ' प्रसिद्धावेव ' अर्धमासौ ' मासस्यार्द्धौ शुक्लकृष्णपक्षौ । " अर्द्धं नपुंसकम् " ( पा० सू० २ । २ । २ । ) इत्येकदेशिसमासः । विभज्याह—**य एवा-पूर्यत** इति । प्रजापतेः कालात्मकत्वादनयोस्तद्दत्त्वम् ॥ २२ ॥

एवं विभागे सति ' देवाः ' ' कथम् ' असुरेभ्यः, तदीयमपि भागं ' संवृञ्जीमहि ? ' अपहरेमहि । एवं कामयित्वा तत्साधनं प्रयासेनान्विष्य ' दर्शपूर्णमासौ ' यागावेवापश्यन् । ' ताभ्यां ' ' एतमपि ' कृष्ण-पक्षमपि स्वयमलभन्त ॥ २३ ॥

तद्द्वारा तदुभयावर्तनात्मकं मासम्, तदावर्तनात्मकं संवत्सरं च असुरेभ्यः ' समवृञ्जत ' स्वाधीनं कृतवन्तः । अतो न्यूनाधिककालावयवानां संवत्सरेऽन्तर्भावात् ' संवत्सरः सर्वम् ' संवत्सरात्मकात् ' सर्वस्मात् ' कालात्

त्सपत्नानाᳪं संवृङ्क्ते सर्व्वस्मात्सपत्नान्निर्भजति य ऽएवमेतद्वेद ॥ २४॥

स यो देवानामासीत् । ( त्स ) स यवायुवत हि तेन देवा योऽसुराणाᳪं सोऽयवा न हि तेनासुरा ऽअयुवत ॥ २९ ॥

( ता ) अथो ऽइतरथाहुः । ( र्यं ) य ऽएव देवानामासीत्सोऽयवा न हि तमसुराऽअयुवत योऽसुराणाᳪं स यवायुवत हि तं देवाः सब्दमहः सगरा रात्रिर्थव्या मासाः सुमेकः संवत्सरः स्वेको ह वै नामैतद्यत्सुमेकऽइति

---

सर्वं वै संवत्सरः । सर्वमेव तद्देवा असुराणां समवृञ्जत, सर्वस्मात्सपत्नानसुरान् निरभजन् । सर्वम्वेवैष एतत्सपत्नानां संवृङ्क्ते, सर्वस्मात्सपत्नान्निर्भजति—य एवमेतद्वेद ॥ २४ ॥

स यो देवानामासीत् स यवा । अयुवत हि तेन देवाः । योऽसुराणां सोऽयवा । न हि तेनासुरा अयुवत ॥ २९ ॥

अथो इतरथाहुः । य एव देवानामासीत सोऽयवा । न हि तमसुरा अयुवत । योऽसुराणां स यवा । अयुवत हि तं देवाः । सब्दमहः । सगरा रात्रिः । यव्या मासाः । सुमेकः संवत्सरः । स्वेको

---

' सपत्नान् असुरान् ' भागरहितान् अकुर्वन् । ' निरभजन् '—इति तात्पर्याभिधानम् । ' सर्वम् एव एषः '—इति वेदितुः फलम् । अतो दर्शपूर्णमासानुष्ठानं सपत्नसर्वस्वहरणमिति प्रशंसा ॥ २४ ॥

**स यो देवाना**मिति । ' सः यः ' इति वाक्यालङ्कारे । ' सः ' आपूर्यमाणपक्षः पुरा ' देवानामासीत् ' । ' सः ' ' यवायुवत ' । यौतीति " यु मिश्रणेऽमिश्रणे च " ( धा० पा० अदा० प० २२ । ) यवः, तस्य यवेति नाम । कथम् ? ' हि ' यस्मात् ' तेन ' आपूर्यमाणपक्षेण सह ' देवाः ' ' अयुवत ' समसृज्यन्त । 'असुराणां' कृष्णपक्षस्तु ' अयवा ' । कथम् ? ' हि ' यस्मात् ' तेन ' कृष्णपक्षेण सह ' नायुवत ' तस्य देवैरपहृतत्वात् ॥ २९ ॥

शुक्लकृष्णपक्षयोर्नामधेयव्यत्यासमाह—**अथो** इति । ' देवानां ' स्वभूतो ' यः ' असौ ' अयवा ', देवानां प्रतिनियतस्वभूतत्वेनासुरसम्बन्धाभावात् । अतोऽयवनादमिश्रणादयवा शुक्लपक्षः । ' असुराणां ' स्वभूतः कृष्णपक्षो ' यवा ', उपायेनापहृत्य देवैर्मिश्रितत्वात् ।

अनयोरेवावयवावयवप्रशंसार्थमहोरात्रमाससंवत्सराणामपि नाम दर्शयति—**सब्दमि**त्यादिना । यवशब्दाभिधेयान् शुक्लकृष्णपक्षान् अर्हतीति ( यवशब्दात् ' दण्डादिभ्यो यत् ' इत्यर्हत्यर्थे यत्स्यात् । स्याच्च—दण्डादेराकृतिगणत्वं मन्तव्यम् ) ( पा० सू० ५ अ० १ पा० ६६ सू० ) ' मासः यव्यः ' ' स्वेकः '—इत्यस्य मकारोपजनेन ' सुमेकः '—इति संवत्सरस्य नाम सम्पन्नम् । ' सु ' सुष्ठु 'एकः' ' स्वेकः ' । " सर्वं वै संवत्सरः"—इत्युक्तत्वेन ( श० प० ७ अ० २ ब्रा० २४ कं. ) सर्वस्यापि कालस्य तत्रैवान्तर्भावात् संवत्सर एक एव कालः । अतस्तस्यैतन्नाम युक्तम्, तस्यैव परोक्षेण " परोक्षप्रिया इव हि देवाः "( तै० ब्रा० १ । ५ । ९ । २ । ऐ० ब्रा० ३ । ३ । ९ । ) ' सुमेकः'—इति व्यवहारः ।

य॒वा च॑ हि वा ऽअयवा य॒वेतीवाथ ये॒नैतेषा॒ᳪ होता भवति त॒द्याविहोत्र-मित्याचक्षते ॥ २६ ॥ ५ ॥

इति पञ्चमप्रपाठके पञ्चमं ब्राह्मणम् ( ७ । २ ) ॥

पञ्चमः प्रपाठकः समाप्तः ॥ ५ ॥

---

ह वै नामैतत्–यत्सुमेक इति । यवा च हि वा अयवा–यवेतीव । अथ येनैतेषां होता भवति, तद्-याविहोत्रमित्याचक्षते ॥ २६ ॥

---

प्रसङ्गादहरादिनामाभिधाय प्रकृतमुपसंहरति–**यवा चेति** । 'यवा अयवा च हि' 'यवेतीव' यवेत्येव भवति, यवनस्योभयानुगतत्वात् । अथवा देवैरेवायवात्मकस्य कृष्णपक्षस्यापि यवनात् पक्षद्वयमपि 'यवा' । अतः 'एतेषां' यवादीनां मध्ये 'येन' निमित्तेन 'होता' भवेत्, 'तत्' कार्यं 'याविहोत्रम्' । तैत्तिरी-यकेऽपि "ऋतव्या उपदधाति"–इत्यत्र (तै०सं०५.३.१.२.) चयनप्रकरणे यवादयो व्याख्याताः॥२६॥(७.२)

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये

प्रथमकाण्डे सप्तमाध्याये द्वितीयं ब्राह्मणम् ॥ ( ७-२ )॥

॥ इति प्रथमकाण्डे पञ्चमप्रपाठकः समाप्तः ॥ (१-५ )

---

१–'कल्पः'–यावा अयावा इति सर्त्तव्याः । पाठस्तु " यावा, अयावा, एवा, ऊमाः सब्दः, सगरः, सुमेकः " इति यावाद्याः षट् शब्दा वसन्ताद्यृतुवाचिनः । सुमेकशब्दः संवत्सरवाची । हे इष्टके त्वं तद्रूपाऽसीति योज्यम् । इति तै० सं० ४ । ४ । ८ । २३–२९ । सा० भा० ॥

# अथ प्रथमकाण्डे षष्ठप्रपाठके प्रथमं ब्राह्मणम् ।

## अपि वा ।

## सप्तमाध्याये तृतीयं ब्राह्मणम् ।

यज्ञेन वै देवाः । ( ० ) दिवमुपोदक्रामन्नथ योऽयं देवः पशूनामीष्टे स ऽइहाहीयत तस्माद्वास्तव्य ऽइत्याहुर्वास्तौ हि तदहीयत ॥ १ ॥

स येनैव देवा दिवमुपोदक्रामन् ।( न्ते ) तेनो ऽएवार्चन्तः श्राम्यन्तश्चेरुरथ योऽयं देवः पशूनामीष्टे य ऽइहाहीयत ॥ २ ॥

स ऽऐक्षत । ( ता ) अहास्य हान्तर्यन्त्यु मा यज्ञादिति सोऽनूच्चक्राम स ऽआयतयोत्तरत ऽउपोत्पेदे य ऽएष स्विष्टकृतः कालः ॥ ३ ॥

( स्ते ) ते देवा ऽअब्रुवन् । ( न्मा ) मा विस्रक्षीरिति ते वै मा यज्ञान्मान्तर्गताहुतिं मे कल्पयतेति तथेति स समवृहत्स नास्यत्स न कश्चनाहिनत् ॥ ४ ॥

---

स्विष्टकृदाहुतिः ।

यज्ञेन वै देवा दिवमुपोदक्रामन् । अथ योऽयं देवः पशूनामीष्टे स इहाहीयत । तस्माद्वास्तव्य इत्याहुः । वास्तौ हि तदहीयत ॥ १ ॥

स येनैव देवा दिवमुपोदक्रामन्, तेनो एवार्चन्तः श्राम्यन्तश्चेरुः । अथ योऽयं देवः पशूनामीष्टे–य इहाहीयत ॥ २ ॥

स ऐक्षत–" अहास्य हान्तर्यन्त्यु मा यज्ञाद् " इति । सोऽनूच्चक्राम । स आयतयोत्तरत उपोत्पेदे य एष स्विष्टकृतः कालः ॥ ३ ॥

ते देवा अब्रुवन्–मा विस्रक्षीरिति । ते वै मा यज्ञान्मान्तर्गत; आहुतिं मे कल्पयतेति । तथेति । स समवृहत्, स नास्यत्, स न कश्चनाहिनत् ॥ ४ ॥

---

अथाग्नये स्विष्टकृद्यागम्, तस्य प्रधानयागसमानन्तर्यञ्च विधातुमाख्यायिकामाह–**यज्ञेन वा** इति । पुरा खलु ' देवाः ' ' यज्ञेन ' साधनेन ' दिवं ' प्राप्ताः; तथा पश्वभिमानी ' देवः ' रुद्रः ' इह ' यज्ञवास्तावुषित्वा द्युलोकाद्धीनोऽभूत् । अत एव ' वास्तौ ' एव स्थितत्वाद्रुद्रो ' वास्तव्य इति ' वेदविदः कथयन्ति ॥ १ ॥

रुद्रस्यैव हीनभावे कारणाभिधानायाह–**स येनैवेति** । ' अथ ' रुद्राः ' देवाः ' ' येन ' यज्ञेन साधनेन ' दिवं ' गताः , ' तेनैव ' साधनेन । तत्साधयितुं साधनमतिदुस्सम्पादमिति ब्रुवन् आत्मानमन्तरेण क्लेशापनयनाय स्वर्गसाधनमन्वतिष्ठत्[1] ॥ २ ॥

**स ऽऐक्षतेति** । स चाहं देवैस्त्यक्तोऽभूवम् । मां यज्ञादेते व्यवहितं कुर्वन्तीत्येवेति विचार्य स्वयं यज्ञप्रदेशं प्रत्युच्चक्राम । स क्रुद्धो भूत्वोत्तरस्यां दिशि स्विष्टकृत्काले यज्ञं प्रतिरोद्धुमुत्तस्थौ ॥ ३ ॥

तथा च सति–**ते देवा अब्रुवन्निति** । ' ते देवाः ' अमुं यज्ञं विसृष्टं मा कार्षीरित्यब्रुवन् । अथ सः

---

१–' प्रत्युत्तमासन्नद्धः ' इति क. पा. ।

( त्ते ) ते देवा ऽअब्रुवन् । ( न्या ) यावन्ति नो हवीꣳषि गृहीतान्यभूवन्त्सर्व्वेषां तेषाꣳ हुतमुपजानीत यथास्मा ऽआहुतिं कल्पयामेति ॥ ५ ॥

तेऽध्वर्युमब्रुवन् । ( न्य ) यथापूर्व्वꣳ हवीꣳष्यभिघारयैकस्मा ऽअवदानाय पुनराप्याययायातयामानि कुरु तत ऽएकैकमवदानमवद्येति ॥ ६ ॥

सोऽध्वर्युः । ( र्यं ) यथापूर्व्वꣳ हवीꣳष्यभ्यघारयदेकस्मा ऽअवदानाय पुनराप्याययदयातयामान्यकरोत्तत ऽएकैकमवदानमवाद्यत्तस्माद्वास्तव्य ऽइत्याहुर्व्वास्तु हि तद्यज्ञस्य यद्धुतेषु हविष्षु तस्माद्यस्यै कस्यै च देवतायै हविर्गृह्यते सर्व्वत्रैव स्विष्टकृदन्वाभक्तः सर्व्वत्र ह्येवैनं देवा ऽअन्वाभजन् ॥ ७ ॥

---

ते देवा अब्रुवन् " यावन्ति नो हवींषि गृहीतान्यभूवन्, सर्वेषां तेषां हुतमुपजानीत, यथास्मा आहुतिं कल्पयाम "–इति ॥ ५ ॥

तेऽध्वर्युमब्रुवन्–"यथापूर्वं हवींष्यभिघारय, एकस्मा अवदानाय पुनराप्यायय, अयातयामानि कुरु, तत एकैकमवदानमवद्य"–इति ॥ ६ ॥

सोऽध्वर्युर्यथापूर्वं हवींष्यभ्यघारयत्, एकस्मा अवदानाय पुनराप्याययत्, अयातयामान्यकरोत्, तत एकैकमवदानमवाद्यत् । तस्माद्वास्तव्य इत्याहुः । वास्तु हि तद् यज्ञस्य–यद्धुतेषु हविष्षु । तस्माद्यस्यै कस्यै च देवतायै हविर्गृह्यते, सर्वत्रैव स्विष्टकृदन्वाभक्तः, सर्वत्र ह्येवैनं देवा अन्वाभजन् ॥ ७ ॥

---

रुद्रोऽपि हे देवाः ! ' ते ' यूयं ' मा ' मां ' यज्ञात् ' अन्तर्हितं ' मा ' कार्ष्ट, अत एव आहुतिं ' मे ' मदर्थं ' कल्पयतेति ' उक्तवान् । तैः ' तथा ' अस्तु ' इति ' उक्ते ' सः ' रुद्रो यज्ञं ' समवृहत् ' ऊर्द्ध्वं प्रापयत्; न च हविरादिकं बहिः क्षिप्तवान् । तथा ' कञ्चन ' किमपि यज्ञावयवं न हिंसितवान् ॥ ४ ॥

**ते देवा** इति । अथ ' ते देवाः ' परस्परमित्थम् ' अब्रुवन् ' अस्माकं प्रदानाय ' यावन्ति हवींषि गृहीतानि ', ' तेषां ' पूर्वमाहुतानां ' हुतं ' शिष्टम् ' उपजानीत ' ' यथा ' येन प्रकारेण द्रव्येण ' अस्मै ' रुद्राय ' आहुतिं कल्पयाम ' ' इति ' ॥ ५ ॥

एवमुक्त्वा, " तेऽध्वर्युमब्रुवन् " इति । हे अध्वर्यो ! त्वमस्माकमवत्तानि ' हवींषि ' आग्नेयादिक्रमेण अभिघारणं कुरु । तथा चैकस्मै, ततोऽप्यवशिष्टायावदानाय, ' पुनः ' तदवत्तशेषम्, ' पुनः ' अभिघारणेन ' आप्यायय ', ततः अयातयामं कृत्वा सर्वाण्यप्यवत्तशेषाणि अगतसाराणि कुरु ' ततः ' ' एकैकं ' यावन्तः प्रधानशेषास्तेष्वेकैकमवदानं कुरु ॥ ६ ॥

देवैरभिहितमर्थमध्वर्युणा तथैवानुष्ठितमर्थं श्रुतिर्भूतार्थेन लेटाऽनुवदति–**सोऽध्वर्युरित्यादिना** । इदानीमवशिष्टभाक्त्वेन रुद्रस्य वास्तव्यत्वप्रसिद्धिमाह–**तस्मादिति** । आख्यायिकासिद्धमर्थमिदानीं विधत्ते **तस्माद् यस्यै कस्यै चेति** । हविर्ग्रहणवत्सर्वप्रदेशेष्वपि स्विष्टकृतो नियतत्वे कारणाभिधानं–**सर्वत्र हीति** । रुद्रः ' अन्वाभक्तः ' ॥ ७ ॥

( जंस्त ) तद्वा ऽअग्नय ऽइति क्रियते । ( तेऽग्नि ) अग्निर्वै स देवस्तस्यै-तानि नामानि शर्व्व ऽइति यथा प्राच्या ऽआचक्षते भव ऽइति यथा बाहीकाः पशूनाम्पती रुद्रोऽग्निरिति तान्यस्याशान्तान्येवेतराणि नामान्य-ग्निरित्येव शान्ततमं तस्मादग्नय ऽइति क्रियते स्विष्टकृत ऽइति ॥ ८ ॥

ते होचुः । ( र्यं ) यत्त्वय्यमुत्र सत्ययक्ष्महि तन्नः स्विष्टं कुर्विति तदेभ्यः स्विष्टमकरोत्तस्मात्स्विष्टकृत ऽइति ॥ ९ ॥

सोऽनुवाक्यामनूच्य सम्पश्यति । ये तथाग्निᳪं स्विष्टकृतमयाडग्निरग्नेः प्रिया धामानीति तदाग्नेयमाज्यभागमाहायाट्सोमस्य प्रिया धामानीति

---

तद्वा अग्नय इति क्रियते । अग्निर्वै स देवः । तस्यैतानि नामानि शर्व इति यथा प्राच्या आचक्षते भव इति यथा बाहीकाः पशूनां पती रुद्रः, अग्निरिति । तान्यस्याशान्तान्येवेतराणि नामानि, अग्निरित्येव शान्ततमम् । तस्मादग्नय इति क्रियते स्विष्टकृत इति ॥ ८ ॥

ते होचुः—"यत्त्वय्यमुत्र सत्ययक्ष्महि तन्नः स्विष्टं कुर्विति" । तदेभ्यः स्विष्टमकरोत् । तस्मात् स्विष्टकृत इति ॥ ९ ॥

सोऽनुवाक्यामनूच्य संपश्यति—ये, तथाऽग्निं स्विष्टकृतम् । "अयाडग्निरग्नेः प्रिया धामानि" इति तदाग्नेयमाज्यभागमाह । "अयाट् सोमस्य प्रिया धामानि"—इति तत्सौम्यमाज्य-

---

कथमग्नये स्विष्टकृति क्रियत इत्याशङ्क्याह—तद्वा अग्नय इतीति । प्राच्यादिदेशभेदेन शर्वादिनामभेदेऽपि देवतैकैवेत्यर्थः । यद्येवं तर्हि अन्यन्नाम किन्न स्यादित्यत आह—तान्यस्येति । 'अस्य' रुद्रस्य अग्निनामाभिधेयस्य पावकादिनाम; सर्वलोकोपकारित्वात् 'तस्मात्' तत्र सर्वत्र 'अग्नये—इति क्रियते' ॥ ८ ॥

अथ किमर्थं स्विष्टकृत इति विशेषणं हविर्दातृभिः क्रियते ? तत्र कारणमाह[1]—ते होचुरिति । 'यद्' यस्मात् 'त्वयि' 'अमुत्र' आहवनीयदेशे आहुत्याधारभूते 'सति' 'अयक्ष्महि' इष्टवन्तः, तस्मात्। अथवा 'यत्' हविर्जातम् 'अयक्ष्महि' 'तत्' सर्वं 'स्विष्टम्' अवैकल्येनेष्टं 'कुरु'; यथा साङ्गं फलवद्भवति, तथा कुर्वित्यर्थः । यस्मादूचुः, 'तस्मात्' स तथैव 'स्विष्टमकरोत्' सर्वत्रापि विशेषणत्वेन 'स्विष्टकृत इति' क्रियते । तस्मात् "अग्नये स्विष्टकृते" इति स्विष्टकृद्यागसमये ब्रूयादित्यर्थः ॥ ९ ॥

अथ स्विष्टकृन्निगदमभिधातुमाह[2]—सोऽनुवाक्यामिति । 'सः' होता । स्विष्टकृदनुवाक्यानन्तरं 'ये' आनन्तर्येण प्रयाजाज्यभागादिदेवाः स्विष्टाः, तान्, तं 'स्विष्टकृतमग्निं' च 'सम्पश्यति' संस्मरेत् सम्भूयानुवदेदित्यर्थः । सन्दर्शनप्रकारमनूद्य क्रमेण व्याचष्टे—अयाडग्निरित्यादिना । 'अयं' स्विष्टकृत् 'अग्निः' 'अग्नेः' प्रथमाज्यभागदेवस्य 'प्रिया' प्रियाणि 'धामानि' 'इति' निःशेषाणि 'अयाद्' इष्टवान् । 'तत्'

---

१—'स्विष्टकृत इति विशेषणस्य कारणमाह' इति क० पाठः ।

२—स एव निगदः—अग्निᳪस्विष्टकृतमित्यारभ्य—जातवेदाजुषताᳪहविरित्यन्तः वा० सं० २१ अ० ४७ कंडिका मन्त्रे द्रष्टव्यः ॥

तत्सौम्यमाज्यभागमाहायाडग्नेः प्रिया धामानीति तद्य ऽएष ऽउभयत्राच्युत ऽआग्नेयः पुरोडाशो भवति तमाह ॥ १० ॥

( ब्रा ) अथ यथादेवतम् । ( म ) अयाड्देवानामाज्यपानां प्रिया धामानीति तत्प्रयाजानुयाजानाह प्रयाजानुयाजा वै देवा आज्यपा यक्षदग्नेर्होतुः प्रिया धामानीति तदग्निꣳ होतारमाह तदस्मा ऽएतां देवा आहुतिं कल्पयित्वाथैनेनैतद्भूयः समशाम्यन्प्रिय ऽएनं धामन्नुपाह्वयन्त तस्मादेवꣳ सम्पश्यति ॥ ११ ॥

तद्धैके । देवतां पूर्वां कुर्वन्त्ययाट्कारादग्नेरयाट् सोमस्यायाडिति तदु तथा न कुर्याद्विलोम ह ते यज्ञे कुर्वन्ति ये देवतां पूर्वां कुर्वन्त्ययाट्-

---

भागमाह । “ अयाडग्नेः प्रिया धामानि ”–इति । तद्य एष उभयत्राच्युत आग्नेयः पुरोडाशो भवति तमाह ॥ १० ॥

अथ यथादेवतम् । “ अयाड् देवानामाज्यपानां प्रिया धामानि ”–इति तत्प्रयाजानुयाजानाह । प्रयाजानुयाजा वै देवा आज्यपाः । “ यक्षदग्नेर्होतुः प्रिया धामानि ”—इति तदग्निं होतारमाह । तदस्मा एतां देवा आहुतिं कल्पयित्वाथैनेनैतद्भूयः समशाम्यन् । प्रिय एनं धामन्नुपाह्वयन्त । तस्मादेवं संपश्यति ॥ ११ ॥

तद्धैके देवतां पूर्वां कुर्वन्त्ययाट्कारात्–अग्नेरयाट्, सोमस्यायाडिति । तदु तथा न कुर्यात् । विलोम ह ते यज्ञे कुर्वन्ति–ये देवतां पूर्वां कुर्वन्त्ययाट्कारात् । इदं हि प्रथममभिव्याहरन्नयाट्कारमेवाभिव्याहरति । तस्मादयाट्कारमेव पूर्वं कुर्यात् ॥ १२ ॥

---

तेनैतन्मन्त्रभागपाठेन प्रथमम् ‘ आज्यभागं ’ स्विष्टं कृतवानित्युक्तवान् भवति । एवमितरवाक्यान्यपि योज्यानि । एष स्विष्टकृन्निगद आवाहननिगदेनैव व्याख्यातप्रायः ( श. प. ४ अ. २ ब्रा. १६ कं० ) ॥ १० ॥

संपश्यता चात्र स्विष्टकृदग्निरवान्तरदेववत्स्विष्टीकर्तव्यत्वेनोक्तः, सोऽभिधीयते–**यक्षदग्नेर्होतुः प्रिया धामानी**त्यनेन । अत्राज्यभागादिदेवेभ्योऽयियक्षितत्वादयाडिति भूतार्थे प्रयोगात् स्विष्टकृदग्नेः स्वस्येतः परं यष्टव्यत्वम् । यक्षदिति विध्यर्थः पञ्चमलकारः ( पा० सू० । ४ । ७ । ) **अग्निं होतारमाहे**ति । होमाधारमग्निमाह । स एव स्विष्टकृदग्निः, “ त्वय्यमुत्र सत्ययक्[illegible]ीत्युक्तत्वात् ( श० प० ७ अ० ३ ब्रा० ९ कं० ) ” किमेतत्संदर्शनमात्रेणाग्निः कथं स्विष्टं कुर्यादित्याशङ्क्य तस्य प्रीत्युत्पादनप्रकारं दर्शयति–**तदस्मा** इति । ‘ तत् ’ तस्मात् ‘ अस्मै ’ स्विष्टकृतेऽग्नये पूर्वम् ‘ एतामाहुतिं कल्पयित्वा ’ ‘ अथ ’ इदानीम् ‘ एतेन ’ अनेन यक्षदग्नेरिति भागेन ‘ भूयः समशाम्यन् ’ भूयसीं प्रीतिमुदपादयन् । **तस्मादि**ति । सर्वथाग्नेः सन्तुष्टत्वाय स्विष्टकृत्त्वकरणस्य प्रकाशनादेवं सम्पश्येदित्यर्थः ॥ ११ ॥

अयाट्कारात् प्राग् देवतानामनिर्देशमेकीयपक्षत्वेनोपन्यस्य निराचष्टे–**तद्धैक** इति । तत् स्वयमेव प्रदर्शयति–**अग्नेरयाट् सोमस्यायाडि**ति । अग्नेः सोमस्य च यानि धामानि, तानि स्विष्टकृदग्निः सम्यगिष्ट्वा-

कायादिदꣳ हि प्रथममभिव्याहरन्नयाट्कारमेवाभिव्याहरति तस्मादयाट्-कारमेव पूर्वं कुर्यात् ॥ १२ ॥

( त्रु ) यक्षत्स्वं महिमानमिति । यत्र वा ऽअदो देवता ऽआवाहयति तदपि स्वं महिमानमावाहयति तदतः प्राङ्नैव किञ्चन स्वाय महिम्न ऽइति क्रियते तदत्र तं प्रीणाति तथो हास्यैषोऽमोघायावाहितो भवति तस्मादाह यक्षत्स्वं महिमानमिति ॥ १३ ॥

( त्यु ) आ यजतामेज्या ऽइष ऽइति । प्रजा वा ऽइषस्ता ऽएवैतद्यायजूकाः करोति ता ऽइमाः प्रजा यजमाना ऽअर्चन्त्यः श्राम्यन्त्यश्चरन्ति ॥ १४ ॥

---

" यक्षत् स्वं महिमानम् "–इति । यत्र वा अदो देवता आवाहयति, तदपि स्वं महिमान-मावाहयति । तदतः प्राङ् नैव किञ्चन स्वाय महिम्न इति क्रियते। तदत्र तं प्रीणाति । तथो हास्यै-षोऽमोघायावाहिता भवति । तस्मादाह–यक्षत् स्वं महिमानमिति ॥ १३ ॥

" आ यजतामेज्या इषः "– इति । प्रजा वा इषः । ता एवैतद्यायजूकाः करोति । ता इमाः प्रजा यजमाना अर्चन्त्यः श्राम्यन्त्यश्चरन्ति ॥ १४ ॥

---

नित्यर्थः । ' विलोम ' विरुद्धम्, स्विष्टीकरणस्यैवाभ्यर्हितत्वेन प्रथमनिर्देष्टव्यत्वात् । अतः ' प्रथममभिव्याहरन् ' पुरुषोऽयाट्कारमेव प्रथममभिव्याहरेत् ॥ १२ ॥

स्वं महिमानमित्यस्य तात्पर्यमाह–**यक्षत् स्वं महिमानमिति** । अयं स्विष्टकृदग्निः ' स्वं महिमानं ' स्वकीयं देवतारूपमपि ' यक्षत् ' यजेत । स्विष्टकृत इदानीमपि अकृतत्वादयाडिति नोच्यत इत्यभिप्रायः । ' यत्र ' यष्टव्यदेवताः ' आवाहयति ' तत्रापि ' स्वं महिमानं ' महत्त्वस्य विग्रहमप्यावाहयति । अतो यथा आवाहिता देवताः सर्वा अपीष्टाः, एवं स्वमहिमार्थमपि यष्टव्यम् । यतः, अतः ' प्राक् ' ' किञ्चन ' ' स्वाय महिम्ने ' इदं हविः ' इति ' ' न क्रियते ', तस्माद् ' अत्र ' स्विष्टकृन्निगदाभिधानसमये ' तत् ' तेन स्वं महिमानमित्यनेन ' तम् ' अग्नेर्महिमानं प्रीणितवान् भवति । अत एव यक्षदग्नेरित्येतद् अग्नेरपि यागानुज्ञाप्रदानादेव पूर्वं प्रागा-वाहनसमये आवाहितः स्वो महिमा । ' तथो ह ' तथैव सति ' अस्य ' यजमानस्य ' अमोघाय ' साफल्याय ' आवाहितो ' भवेत् । तस्मादित्युपसंहारः ॥ १३ ॥

**आ यजतेति** । ' आ यजतामेज्या इषः '–इति भागस्य तात्पर्यमाह–इट्शब्देनान्नमुच्यते; तदुपजीवित्वात् ' प्रजाः ' अपि ' इषः '; ' एज्याः ' पुनः पुनरिज्याः, अत एतत्पाठेन यजमानरूपाः प्रजाः ' यायजूकाः ' इष्टिशीलाः ' करोति ' । अतः कारणात् ' ता इमाः ' सर्वा यजमानरूपाः प्रजा इदानीम् ' अर्चन्त्यः ' बहुकर्म कुर्वन्त्यः ' श्राम्यन्त्यः ' आत्मानं व्यापारैः क्लेशयन्त्यः ' चरन्ति ' यागाननुतिष्ठन्ति ॥ १४ ॥

---

१–देवतां देवतानामपूर्वामयाट्कारात् प्राक् । तद्विरुद्धं स्विष्टिकरणस्यैवानभ्यर्हितत्वेन प्रथमं निर्देष्टव्यत्वात् । इति क. पाठः ।

सो ऽअध्वरा जातवेदा जुषताᳬं हविरिति । तद्यज्ञस्यैवैतत्समृद्धिमाशास्ते यद्धि देवा हविर्जुषन्ते तेन हि महज्जयति तस्मादाह जुषताᳬं हविरिति ॥ १९ ॥

तद्यदेते ऽअत्र । याज्यानुवाक्ये ऽअवक्लृप्ततमे भवतस्तृतीयसवनं वै स्विष्टकृद्वैश्वदेवं वै तृतीयसवनं पिप्रीहि देवाँ३ ऽउशतो यविष्ठेति तदनुवाक्यायै वैश्वदेवमग्ने यदद्य विशो ऽअध्वरस्य होतरिति तद्याज्यायै वैश्वदेवं तद्यदेते ऽएवᳬं रूपे भवतस्तेनो ऽएते तृतीयसवनस्य रूपं तस्माद्वा ऽएते ऽअत्र याज्यानुवाक्ये ऽअवक्लृप्ततमे भवतः ॥ १६ ॥

( स्ते ) ते वै त्रिष्टुभौ भवतः । ( तो ) वास्तु वा ऽएतद्यज्ञस्य यत्स्विष्ट-

---

" सोऽध्वरा जातवेदा जुषतां हविः"–इति । तद्यज्ञस्यैवैतत् समृद्धिमाशास्ते । यद्धि देवा हविर्जुषन्ते तेन हि महज्जयति । तस्मादाह जुषतां हविरिति ॥ १९ ॥

तद्यदेते अत्र याज्यानुवाक्ये अवक्लृप्ततमे भवतः। तृतीयसवनं वै स्विष्टकृत् । वैश्वदेवं वै तृतीयसवनम् । " पिप्रीहि देवा ँ३ उशतो यविष्ठ "–इति । तदनुवाक्यायै वैश्वदेवम् । " अग्ने यदद्य विशो अध्वरस्य होतः "–इति । तद्याज्यायै वैश्वदेवम् । तद्यदेते एवंरूपे भवतः–तेनो एते तृतीयसवनस्य रूपम् । तस्माद्वा एते अत्र याज्यानुवाक्ये अवक्लृप्ततमे भवतः ॥ १६ ॥

ते वै त्रिष्टुभौ भवतः । वास्तु वा एतद्यज्ञस्य–यत् स्विष्टकृत् । अवीर्यं वै वास्तु । इन्द्रियं वीर्यं त्रिष्टुप् । इन्द्रियमेवैतद्वीर्यं वास्तौ स्विष्टकृति दधाति । तस्मात्त्रिष्टुभौ भवतः ॥ १७ ॥

---

**सो ऽअध्वरेति** । सो अध्वरेत्यस्य तात्पर्यमाह–**तद्यज्ञस्यैवैतदि**ति । ' हविः ' सौविष्टकृतम्, ' जातवेदाः ' आहुत्याधारः स्विष्टकृदग्निः । ' यत् ' ' हविः ' सौविष्टकृतः ' देवाः ' सेवन्ते, ' तेन ' सेवितेन हविषा ' महत् ' उत्तमं स्थानं ' जयति ' यजमानः, अतः समृद्धेर्हविषोऽधीनत्वादेतत्पाठो युक्तः ॥ १९ ॥

इत्थं स्विष्टकृन्निगदं व्याख्याय तस्य याज्यां पुरोऽनुवाक्यांचाह–**तद्यदि**ति । ' अत्र ' स्विष्टकृति । ' तद्यत् ' तस्मात् ' एते ' वक्ष्यमाणे एव ' याज्यानुवाक्ये ' ' अवक्लृप्ततमे ' अत्यन्तं योग्ये भवतः । तयोरवक्लृप्तत्वमाह–**तृतीयसवनं वा** इति । अयं ' स्विष्टकृद् '–यागः ' तृतीयसवनं ' तत्स्थानीयः; अन्तिमत्वसाम्यात् । तच्च ' तृतीयसवनं ' ' वैश्वदेवं ' विश्वेदेवास्तस्याभिमानिनः; अतः सर्वथा वैश्वदेवेन भवितव्यम् । तत्रापि " **पिप्रीहि**"–इति ( ऋ० सं० १० । २ । १ । ) ( तै० सं० ४ । ३ । १३ । १–३ ) या ऋगस्ति, ' तत् ' ' अनुवाक्यायै ' अनुवाक्यायाः ' वैश्वदेवं ' रूपम्; तत्र " **देवान्** "–इति देवानां बहुत्वश्रवणात् । " अग्ने यदद्य" इत्येतत् ( ऋ० सं० ६ । १९ । १४ । ) ( तै० सं० ४ । ३ । १३ । १४ ) ' याज्यायै ' याज्यायाः वैश्वदेवत्वम्; अत्र " विशः "–इति बहुवचनलिङ्गात् । ' एते ' ऋचौ ' एवंरूपे ' वैश्वदेवलिङ्गके " पिप्रीहि देवान् "–" अग्ने यदद्य विशः "–इत्येवंरूपे; ' तेन उ ' तेनैव कारणेन ' एते ' द्वे ऋचौ ' तृतीयसवनस्य रूपम् '॥ १६ ॥

तयोर्यत् त्रिष्टुप्त्वम्, तत्प्रशंसति–**ते वै त्रिष्टुभावि**ति । स्विष्टकृतो हुतावशिष्टरूपत्वात् ' एतद् ' ' यज्ञस्य'

कृद्वीर्यं वै व्वास्त्विन्द्रियं व्वीर्यं त्रिष्टुबिन्द्रियमेवैतद्वीर्यं व्वास्तौ स्विष्टकृति दधाति तस्मात्त्रिष्टुभौ भवतः ॥ १७ ॥

( ऽ ) उतो ऽअनुष्टुभावेव भवतः । ( तो ) व्वास्त्वनुष्टुब्व्वास्तु स्विष्टकृद्वास्तावेवैतद्वास्तु दधाति पेसुकं वै व्वास्तु पिस्यति ह प्रजया पशुभिर्यस्यैवं व्विदुषोऽनुष्टुभौ भवतः ॥ १८ ॥

( स्तु ) तदु ह भाल्लवेयः । ( योऽ ) अनुष्टुभमनुवाक्यां चक्रे त्रिष्टुभं याज्यामेतदुभयं परिगृह्णामीति स रथात्पपात स पतित्वा बाहुमपि शश्रे स परिममृशे यत्किमकरं तस्मादिदमापदिति स हैतदेव मेने यद्विलोम यज्ञेऽकरमिति तस्मान्न विलोम कुर्यात्सच्छन्दसावेव स्यातामुभे वैवानुष्टुभाऽउभे वा त्रिष्टुभौ ॥ १९ ॥

---

उतो अनुष्टुभावेव भवतः । वास्त्वनुष्टुप् । वास्तु स्विष्टकृत् । वास्तावेवैतद्वास्तु दधाति । पेसुकं वै वास्तु । पिस्यति ह प्रजया पशुभिः—यस्यैवं विदुषोऽनुष्टुभौ भवतः ॥ १८ ॥

तदु ह भाल्लवेयोऽनुष्टुभमनुवाक्यां चक्रे, त्रिष्टुभं याज्याम्—एतदुभयं परिगृह्णामीति । स रथात् पपात, स पतित्वा बाहुमपि शश्रे । स परिममृशे—यत् किमकरम्, तस्मादिदमापदिति । स हैतदेव मेने—यद्विलोम यज्ञेऽकरमिति । तस्मान्न विलोम कुर्यात् । सच्छन्दसावेव स्याताम्—उभे वैवानुष्टुभौ, उभे वा त्रिष्टुभौ ॥ १९ ॥

---

' वास्तु ' वास्तु—स्थानीयम् । तत्र वास्तु ' अवीर्यं ' निस्सारम्; उपयुक्तशेषत्वात् । त्रिष्टुप्प्रजापतेः बलवद्भ्यः उरोबाहुभ्यः सकाशादिन्द्रेण सहोत्पन्नत्वात् ' त्रिष्टुबिन्द्रियम् ' अत एव ' वीर्यम् ' अतः पुरोऽनुवाक्यायास्त्रिष्टुप्त्वकरणेन अवले ' स्विष्टकृति ' ' इन्द्रियं वीर्यमेव ' स्थापितवान् भवति ॥ १७ ॥

पक्षान्तरमाह—उतो अनुष्टुभावेवेति । स्विष्टकृतः प्रधानेभ्योऽतिरिक्तत्वेनाधिकत्वात् ' वास्तु ' ' अनुष्टुप् ' ... गायत्र्यादिसवनच्छन्दसोऽतिरिक्तत्वाद् ' वास्तु '; अत एव ' वास्तावेव ' ' वास्तु ' स्थापितवान् भवति । तत्र वास्तु ' पेसुकम् ' अभिवर्द्धनशीलम्; अत एव तज्ज्ञानवान् यः ' अनुष्टुभौ ' याज्यानुवाक्ये कुर्यात्सोऽपि ' प्रजया पशुभिः ' च पिस्यति ' ( निघ. २ । १४ । २१ । ) " पिसृ पेसृ गतौ " ( धा० पा० भ्वा० प० ७२० ) अभिवृद्धो भवति ॥ १८ ॥

याज्यानुवाक्ययोर्विलक्षणच्छन्दस्त्वपक्षं निराकर्तुमाख्यायिकामाह—तदु हेति । भाल्लवेयस्तूक्तोभयपक्षोक्तफलावरोधाय ' अनुष्टुभमनुवाक्यां ', ' त्रिष्टुभं याज्याम् ' अकरोत् । ' सः ' विलक्षणानुष्ठानदोषेण कदाचित् सञ्चारसमये ' रथात् पपात ' । पतन्नेकं ' बाहुं ' भूमौ प्रसारितवान्; स बाहुर्विस्रस्तोऽभूदित्यभिप्रायः । ' सः ' च विचार्य किञ्चिदविहितं कृतवानस्मि, ' तस्मात् ' ' इदं ' रथात्पतनं ' आपत् ' प्राप्तमभूदिति निश्चित्य, " यदनन्तरं यद्भवति, तत्तस्य कारणम् "—इति न्यायादिदं विपरीतानुष्ठानमेव कारणं बुद्धवान् ।

---

१—अत्र व्यत्ययेन श्यन् । २—' शश्रे '—इत्यस्यैवायमर्थः ।

स वा ऽउत्तरार्द्धादवद्यति । ( त्यु ) उत्तरार्द्धे जुहोत्येषा ह्येतस्य देवस्य दिक्तस्मादुत्तरार्द्धादवद्यत्युत्तरार्द्धे जुहोत्येतस्यै वै दिश ऽउदपद्यत तं तत ऽएवाशमयंस्तस्मादुत्तरार्द्धादवद्यत्युत्तरार्द्धे जुहोति ॥ २० ॥

स वा ऽअभ्यर्द्ध ऽइवेतराभ्य ऽआहुतिभ्यो जुहोति । (ती) इतरा ऽआहुतीः पशवोऽनुप्रजायन्ते रुद्रियः स्विष्टकृद्रुद्रियेण पशून्प्रसजेद्यदितराभिराहुतिभिः सᳫँ सृजेत्तेऽस्य गृह्याः पशव ऽउपमूर्य्यमाणा ऽईयुस्तस्मादभ्यर्द्ध ऽइवेतराभ्य आहुतिभ्यो जुहोति ॥ २१ ॥

---

स वा उत्तरार्द्धादवद्यति । उत्तरार्द्धे जुहोति । एषा ह्येतस्य देवस्य दिक् । तस्मादुत्तरार्द्धादवद्यति, उत्तरार्द्धे जुहोति । एतस्यै वै दिश उदपद्यत, तं तत एवाशमयन्—तस्मादुत्तरार्द्धादवद्यति, उत्तरार्द्धे जुहोति ॥ २० ॥

स वा अभ्यर्द्ध इवेतराभ्य आहुतिभ्यो जुहोति । इतरा आहुतीः पशवोऽनुप्रजायन्ते । रुद्रियः स्विष्टकृत् । रुद्रियेण पशून् प्रसजेत्—यदितराभिराहुतिभिः संसृजेत् । तेऽस्य गृह्याः पशव उपमूर्यमाणा ईयुः । तस्मादभ्यर्द्ध इवेतराभ्य आहुतिभ्यो जुहोति ॥ २१ ॥

---

यस्मादेवं 'तस्मात्' सर्वत्र विपरीतं 'न' अनुतिष्ठेत् । अतः 'उभे' याज्यानुवाक्ये 'अनुष्टुभावेव वा त्रिष्टुभावेव वा'; स्विष्टकृद्याज्यानुवाक्ये 'सच्छन्दसौ' समानच्छन्दस्के भवेताम् ॥ १९ ॥

स्विष्टकृदवदानहोमप्रदेशयोर्विशेषमाह—**स वा उत्तरार्द्धादिति** । 'उत्तरपूर्वदिशो' लोकपालत्वेन रुद्रसम्बन्धः सर्वशास्त्रप्रसिद्धः[1]; तेन कारणेनापि उत्तरार्द्धादेवावदानं, तत्रैव होमश्च कर्तव्य इत्याह—**एतस्यै वै दिश** इति । स्विष्टकृद्यागविधानसमये "उत्तरतः उपोत्पेदे" इत्युक्तत्वात् (श० प० ७ अ० ३ ब्रा० ३ कं० ); "यत उत्पद्यते, 'तं तत एव' शमयितव्यम्"—इति नियमात् उत्तरतोऽवदानहोमौ कर्तव्यौ । तथा च कात्यायनः—"यावद्धविरुत्तरार्द्धात् स्विष्टकृतस्तत एव होमः" इति—( का० श्रौ० सू० ३ अ० ६८–६९ ) ॥ २० ॥

उत्तरदेशे प्रदानेऽपि प्रधानहविषा सहासंस्पर्शं विधत्ते—**स वा अभ्यर्द्ध इवेति** । 'इतराभ्यः' प्रधान—'आहुतिभ्यः' सकाशात् 'अभ्यर्द्धे' सन्निहितप्रदेश एव; न तासां स्थाने । विपक्षे बाधमाह—**इतरा** इति । 'इतरा आहुतीरनु' यजमानस्य 'पशवः' 'प्रजायन्ते'; ताः पशुफलजनका इत्यर्थः । स्विष्टकृद्यागश्च 'रुद्रियः' रुद्रदेवत्यः । एवं सति यदि ताभिः सह स्विष्टकृदाहुतिमासंयोजयेत्, तदा रुद्रेण सह 'पशून्' 'प्रसजेद्' योजयेत् । अत एतेनापराधेन यजमानस्य गृहावस्थिताः 'पशवः' 'उपमूर्यमाणाः' समीप एव म्रियमाणाः प्राप्नुयुः । तस्मादितराभ्यो नातिदूरे जुहुयात् । तथा च सूत्रम्—"असंसृष्टामाहुतिभिः"—इति ( का० श्रौ० सू० ३–७१ ) ॥ २१ ॥

---

१—"इन्द्रो वह्निः पितृपतिर्नैर्ऋतो वरुणो मरुत् । कुबेर ईशः पतयः पूर्वादीनां दिशां क्रमात्" अम० १ । ३ । ३ ॥

( त्ये ) एष वै स यज्ञः । ( ज्ञो ) येन तद्देवा दिवमुपोदक्रामन्नेष ऽआहवनीयोऽथ य ऽइहाहीयत स गार्हपत्यस्तस्मादेतं गार्हपत्यात्प्राञ्चमुद्धरन्ति ॥ २२ ॥

तं वा ऽअष्टासु विक्रमेष्वादधीत । ( ता ) अष्टाक्षरा वै गायत्री गायत्र्यैवैतद्दिवमुपोत्क्रामति ॥ २३ ॥

( त्ये ) एकादशस्वादधीत । ( ते ) एकादशाक्षरा वै त्रिष्टुप्त्रिष्टुभैवैतद्दिवमुपोत्क्रामति ॥ २४ ॥

द्वादशस्वादधीत । द्वादशाक्षरा वै जगती जगत्यैवैतद्दिवमुपोत्क्रामति नात्र मात्रास्ति यत्रैव स्वयं मनसा मन्येत तदादधीत स यद्वा ऽअप्यल्पकमिव प्राञ्चमुद्धरति तेनैव दिवमुपोत्क्रामति ॥ २५ ॥

---

" यज्ञपरिशिष्टम् । "

एष वै स यज्ञो येन तद्देवा दिवमुपोदक्रामन्–एष आहवनीयः । अथ य इहाहीयत–स गार्हपत्यः । तस्मादेतं गार्हपत्यात् प्राञ्चमुद्धरन्ति ॥ २२ ॥

तं वा अष्टासु विक्रमेष्वादधीत । अष्टाक्षरा वै गायत्री । गायत्र्यैवैतद्दिवमुपोत्क्रामति ॥ २३ ॥

एकादशस्वादधीत । एकादशाक्षरा वै त्रिष्टुप् । त्रिष्टुभैवैतद्दिवमुपोत्क्रामति ॥ २४ ॥

द्वादशस्वादधीत । द्वादशाक्षरा वै जगती । जगत्यैवैतद्दिवमुपोत्क्रामति । नात्र मात्राऽस्ति । यत्रैव

---

आहवनीयगार्हपत्ययोरन्यतरस्मिन् हविः–श्रपणं विधास्यति, तदर्थं तयोराधानप्रदेशपरिमाणं विधातुमाह–**एष वा** इति । ' येन ' साधनेन ' तद्देवाः ' ' दिवं ' गताः, ' स एष यज्ञः ' खलु । एष यज्ञ इत्येतद्विशिनष्टि–**एष आहवनीय** इति । यज्ञसाधनत्वादाहवनीयस्य यज्ञत्वम् । यस्त्विह भूमावेवावशिष्टः, ' स गार्हपत्यः ' । ' तस्मात् ' इदानीमपि दिवङ्गन्तुकामाः ' एतम् ' आहवनीयं यज्ञसाधनं ' गार्हपत्यात् ' ' प्राञ्चं ' प्राग्देशं प्रति ' उद्धरन्ति ' यजमानायोद्धरेयुरित्यर्थः ॥ २२ ॥

उद्धृत्य प्राच्यां कियत्पुर आदध्यात् ? इत्यत्र बहून् पक्षानाहुः–**तमष्टास्वित्यादिना** । विक्रमशब्देनात्र विक्रम्यते अनेनैवेति व्युत्पत्त्यैकपादप्रक्षेपपरिमितोंऽश उच्यते ' क्रमु पादविक्षेपे ' ( धा० पा० भ्वा० प० ४७३ ). अन्यत्र यजमानसम्मानस्य करणात् । गार्हपत्यमवधीकृत्य तथाविधेषु अष्टसु प्रक्रमेषु गतेष्वाहवनीयमादधीत । तथा सति तद्द्वारा अष्टसंख्यायुक्त–' गायत्र्यैव ' ' दिवं ' प्राप्तवान् भवति । तस्माद्गायत्रीसाम्यलाभादष्टप्रक्रमपरिमाणाधानं प्रशस्तमित्यर्थः ॥ २३ ॥

एवमुत्तरवाक्यान्यपि योज्यानि ॥ २४ ॥

क्रियासौकर्यानपह्नवेनान्यान् पक्षानभिधाय कर्मणो यावन्मात्रं पर्याप्तमिति मन्यते, तावन्मात्रमेव कुर्यादित्याह–**नात्रेति** । ' अत्र ' आधानविषये अष्टत्वादि–' मात्रा ' ' नास्ति ' शास्त्रतः । अतः स्वेच्छया ' यत्रैव ' देशे

---

[१] " प्रकर्षेण क्रमणं प्रक्रमः । क्रमणेनारत्निमात्रः प्रक्रमो भवति " तस्मात्प्राङ् प्रक्रामति त्रीन्विक्रमान् " इत्यादिश्रुतेः ( ३ । ५ । १ । १ ) अरत्निस्तु पुरुषपञ्चमांशः । तस्माद्द्विपदः प्रक्रमः । इति सत्यव्रतसामाश्रमिणः । परं चायं द्विपदः प्रक्रमो ज्योतिष्टोम एव । आधाने तु एकपद एवेति । तदुक्तं कात्यायनेन श्लोकशुल्बे "आधाने पदिकं कुर्याद्द्विपदः सौमिको भवेत् । अग्नौ च त्रिपदं कुर्यात्प्रक्रमं याज्ञिको बुधः " इति शुल्ब सूत्रे ७ कं. ३४ श्लो. ।

तदाहुः । ( रा ) आहवनीये हवीꣳषि श्रपयेयुरतो वै देवा दिवमुपोदक्रामं-स्तेनो ऽएवार्चन्तः श्राम्यन्तश्चेरुस्तस्मिन्हवीꣳषि श्रपयाम तस्मिन्यज्ञं तनवामहा ऽइत्यपस्खल ऽइव ह स हविषां यद्गार्हपत्ये श्रपयेयुर्यज्ञ ऽआहवनीयो यज्ञे यज्ञं तनवामहा ऽइति ॥ २६ ॥

( त्यु ) उतो गार्हपत्य ऽएव श्रपयन्ति । ( न्त्या ) आहवनीयो वा ऽएष न वा ऽएष तस्मै यदस्मिन्नशृतꣳ श्रपयेयुस्तस्मै वाऽ एष यदस्मिञ्छृतं जुहुयुरित्यतो यतरथा कामयेत तथा कुर्यात् ॥ २७ ॥

---

स्वयं मनसा मन्येत तदादधीत । स यद्वा अप्यल्पकमिव प्राञ्चमुद्धरति, तेनैव दिवमुपोत्क्रामति ॥२५॥

तदाहुः । आहवनीये हवींषि श्रपयेयुः । अतो वै देवा दिवमुपोदक्रामन् । तेनो एवार्चन्तः श्राम्यन्तश्चेरुः—तस्मिन् हवींषि श्रपयाम,· तस्मिन् यज्ञं तनवामहा इति । अपस्खल इव ह स हविषां—यद् गार्हपत्ये श्रपयेयुः । यज्ञ आहवनीयः, यज्ञे यज्ञं तनवामहा इति ॥ २६ ॥

उतो गार्हपत्य एव श्रपयन्ति । आहवनीयो वा एषः । न वा एष तस्मै—यदस्मिन्नश्यतं श्रपयेयुः । तस्मै वा एष—यदस्मिञ्छृतं जुहुयुरिति । अतो यतरथा कामयेत तथा कुर्यात् ॥ २७ ॥

---

आहवनीय आहिते कर्म सुकरं भवतीति 'स्वयं मनसैव मन्येत' निश्चिनुयात्, तत्र 'आदधीत'; तस्मात् 'अल्पकमिव' अल्पकमपि, अष्टप्रक्रमादत्यल्पमपि 'प्राञ्चं' दिशं प्रत्युद्धरेत् । तेनैव' आत्मनैव 'दिवं' प्राप्नोत्येव । अत्र कात्यायनः—" पुरस्तादाहवनीयस्याष्टासु प्रक्रमेष्वेकादशसु द्वादशसु मत्या वा "—इति ( का० श्रौ० सू० ४–२१३ ) ॥ २५ ॥

इदानीं हविः—श्रपणविषये केषाञ्चित्पक्षमाह—**तदाहुरिति** । आहवनीय एव श्रपयतामभिप्रायमाह—**अतो वा** इति । 'अतः' अस्मादाहवनीयात् 'देवाः' 'दिवं' प्राप्ताः, अतोऽस्माभिरपि तत्रैव श्रपणं कर्तव्यमिति तेषामाशयः । उपोत्क्रमणसाधनत्वमेव कुत इत्यत आह—**तेनो एवेति** । तेनैवाहवनीयेन साधनेन प्रयासात्मकं हविः—प्रदानादि सकलं कर्मान्वतिष्ठन्; अतस्तस्योपोत्क्रमणसाधनत्वम् । अतो वयमपि अन्यत्र श्रपणमन्यत्र जुहवाम इति वैयधिकरण्यं मा भूदिति तस्मिन्नेव आहवनीये श्रपणं यागञ्च करवामेति । वैयधिकरण्ये दोषमाह—**अपस्खल इवेति** । 'गार्हपत्ये श्रपयेयुः' इति यत् 'सोऽपस्खल इव' अपस्खलनमिव 'हविषां' भवति । फलितानां व्रीह्यादीनां तुषविमोकादिसम्पादनप्रदेशः 'स्खलः'[1] । यथा व्रीह्यादिराशिः खलाद् बहिरपि प्राप्तो व्यर्थो भवति, एवमन्यत्र श्रपणमपि । अतः प्रागुक्तप्रकारेण आहवनीय एव 'यज्ञे', 'यज्ञं' यज्ञसाधनत्वात् श्रप्यमाणं हविरपि यज्ञः ॥ २६ ॥

अन्येषां पक्षमाह—**उतो** इति । प्रथमपक्षोक्तमाहवनीये श्रपणमत्रापि सम्भावयति—**आहवनीयो वा** इति । आहवनीयस्य इतः प्रणीतत्वात् । किमुपचरितेनाहवनीयेन, साक्षात्तस्मिन्नेव श्रपणमस्त्वित्याशङ्क्य तस्य श्रपणायोग्यत्वमाह—**न वा एष** इति । 'एषः' आहवनीयः शृतश्रपणाय 'न वै' नोचितः खल्वित्यर्थः । तर्हि

---

१–'स्खलाद्' इति पाठान्तरम् । वस्तुतो निःसकार एव पाठः साधुः । "खल उत्तरवेदिः"–इति का० श्रौ० सू० २२ अ० ११४ सू० ॥ का० श्रौ० सू० २२ अ० १६६. सू० । आश्व० श्रौ० सू० ७ । १३ । १४ । "खलात् क्षेत्रादगाराद्वा" इति । ११. १७. मनुनोक्तेश्च ।

( त्सु ) सु हैषु यज्ञ ऽउवाच। नग्नुताया वै बिभेमीति क्वा तेऽनग्नतेत्य- भितु एवु मा पुरिस्तृणीयुरिति तुस्मादेतदग्निमभितः पुरिस्तृणन्ति तृष्णाया वै बिभेमीति क्वा ते तृप्तिरिति ब्राह्मणस्यैव तृप्तिमुनुतृप्येयमिति तुस्मात्सुᳬस्थिते यज्ञे ब्राह्मणं तुर्प्पयितवै ब्रूयाद्यज्ञमेवैतत्तर्प्पयति ॥२८॥१॥

इति षष्ठप्रपाठके प्रथमं ब्राह्मणम्। ( ७. ३. )

प्रजापतिर्ह वै स्वां दुहितरमभिदध्यौ। दिवं वोषसं वा मिथुन्येनया स्यामिति ताᳬसुम्बभूव ॥ १ ॥

---

स हैष यज्ञ उवाच। नग्नताया वै बिभेमीति। का तेऽनग्नतेति। अभित एव मा परिस्तृणीयुरिति। तस्मादेतदग्निमभितः परिस्तृणन्ति। तृष्णाया वै बिभेमीति। का ते तृप्तिरिति। ब्राह्मणस्यैव तृप्तिमनुतृप्येयमिति। तस्मात् संस्थिते यज्ञे ब्राह्मणं तर्पयितवै ब्रूयात्। यज्ञमेवैतत् तर्पयति॥ २८॥

**ब्रह्मणः प्राशित्रहरणम्[1]।**

प्रजापतिर्ह वै स्वां दुहितरमभिदध्यौ—दिवं वा, उषसं वा मिथुन्येनया स्यामिति। तां संबभूव ॥१॥

---

कस्मा उचित इति तत्राह—**तस्मै वा** इति। असौ शृतस्य होमायोचित इत्यर्थः। अथवा एवं व्याख्येयम्। "आहवनीयो वा एष" इति मुख्य आहवनीय एवोच्यते। यस्मात् 'एष आहवनीयः' आहवनार्हः, अत एष पक्वस्य हविषो होमाय योग्यः; न त्वामस्य पाकायेति अग्निद्वयपक्षेऽप्युपपत्तिसम्भवाच्छ्रपणस्यैच्छिकत्वमाह—**अतो यतरथेति**। यथा कामयते, तथैव कुर्यात्॥ २७॥

अथाग्नेः परिस्तरणं विधातुमाह—**स हैष** इति। 'यज्ञः' अग्निः; एष आहवनीय इत्युक्तत्वात्। 'नग्नता' प्रावरणराहित्यम्। अग्नेर्नग्नत्वपरिहारमजानानाः पृच्छन्ति—**का त** इति। 'अनग्नता'—इति च्छेदः। **तस्मादिति** परिस्तरणविधिः। इष्टयङ्गभूतब्राह्मणसंतर्पणं विधातुमाह—**तृष्णाया** इति। भीत्युपन्यासस्तस्यावश्यपरिहर्तव्यत्वद्योतनार्थः। कः परिहारस्तृष्णाया इति पृष्ट आह—**ब्राह्मणस्यैवेति**। 'एव'—कारेण स्वतर्पणादपि ब्राह्मणतर्पणमेव श्रेय इत्ययमर्थो द्योतते। 'ब्राह्मणस्य'—इति जातावेकवचनम् ( पा. सू. १।२।५८ ) ब्राह्मणमित्यभिधानात्। **तस्मादिति**। 'ब्राह्मणं तर्पयितवै ब्रूयात्' यजमान इति शेषः 'एतत्' एतेन। ब्राह्मणतर्पणेन 'यज्ञमेव' अग्निमेव॥ २८॥ १॥ ( ७. ३ )॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये प्रथमकाण्डे सप्तमाध्याये तृतीयं ब्राह्मणम्॥ *

---

( प्राशित्रावदानविध्यर्थमाख्यायिकामाह—**प्रजापतिर्हेति**। दिवमिति केचिदाहुरुषसमित्यपरे। तथा चैतरेयब्राह्मणम् ( ऐ. ब्रा. ३।३।९ ) "दिवमित्यन्य आहुरुषसमित्यन्ये"—इति। **प्रजापतिर्ह वै**। प्राशित्रब्राह्मणमेतत्। तत्र रौद्रस्येषोरनीकं प्रजापतेर्यज्ञस्य शल्यात्मकं निरवदेयम्। ब्रह्मणा च सवितृप्रसूतेन बृहस्पतिरूपेण प्राशनीयमित्येतदाख्यानेन दर्श्यते। 'प्रजापतिः' प्राणपिण्डलोककालयज्ञात्मा, अभि-

---

१—"प्राशित्रं ब्रह्मणो भागावदानम्। तत् ह्रियते येन पात्रेण तत्पात्रं प्राशित्रहरणम्। तच्च आदर्शसदृशं वर्तुलं चमससदृशं चतुरस्रं वा खातवच्च भवति। का. श्रौ. सू. १।३।४०-४१। द्रष्टव्ये।

*—उपलब्धेषु सर्वेष्वपि पुस्तकेषु शतपथब्राह्मणीयप्रथमकाण्डस्यैतदन्तमेव सायणभाष्यं दृश्यते। अप्येतदारभ्य काण्डसमाप्तिपर्यन्तं हरिस्वामिकृतं भाष्यमेव सर्वत्र विद्यते। अतस्तदेव संगृह्यते। "काण्डस्यावशिष्टं सायणीयं भाष्यं लुप्तकल्पतामुपगतमिति मंतव्यं तदन्वेषणे च यावच्छक्यं प्रयतनीयं प्राच्यवैदिकवाङ्मयसंशोधकैः॥ इति॥

तद्वै देवानामाग ऽआस । य ऽइत्थᳪं स्वां दुहितरमस्माकᳪं स्वसारं करोतीति ॥ २ ॥

ते ह देवा ऊचुः । ( यो ) योऽयं देवः पशूनामीष्टेऽतिसन्धं वा ऽअयं चरति य ऽइत्थᳪं स्वां दुहितरमस्माकᳪं स्वसारं करोति विध्येममिति तᳪं रुद्रोऽभ्यायत्य विव्याध तस्य सामि रेतः प्रचस्कन्द तथेन्नूनं तदास ॥ ३ ॥

तस्मादेतदृषिणाभ्यनूक्तम् । पिता यत्स्वां दुहितरमधिष्कन्क्ष्मया रेतः सञ्जग्मानो निषिञ्चदिति तदाग्निमारुतमित्युक्थं तस्मिंस्तद्व्याख्यायते यथा तद्देवा रेतः प्राजनयँस्तेषां यदा देवानां क्रोधोव्यैदथ प्रजापतिमभिषज्यंस्तस्य तᳪं शल्यं निरकृन्तन्त्स वै यज्ञ ऽएव प्रजापतिः ॥ ४ ॥

---

तद्वै देवानामाग आस–य इत्थं स्वां दुहितरमस्माकं स्वसारं करोतीति ॥ २ ॥

ते ह देवा ऊचुर्योऽयं देवः पशूनामीष्टे–" अतिसन्धं वा अयं चरति–य इत्थं स्वां दुहितरमस्माकं स्वसारं करोति, विध्येममिति " । तं रुद्रोऽभ्यायत्य विव्याध । तस्य सामि रेतः प्रचस्कन्द, तथेन्नूनं तदास ॥ ३ ॥

तस्मादेतदृषिणाभ्यनूक्तम्–" पिता यत् स्वां दुहितरमधिष्कन् क्ष्मया रेतः सञ्जग्मानो निषिञ्चत् " इति । तदाग्निमारुतमित्युक्थम् । तस्मिंस्तद्व्याख्यायते–यथा तद्देवा रेतः प्राजनयन् । तेषां

---

ध्यातवान्, ' दिवं वा उषसं वा ' लोकात्मना दिवम्; कालात्मना उषसम्; प्राणपिण्डात्मना ऋक्षेभ्यो मृगो रोहितम्, रोहिणी नाम नक्षत्रम्[1], यज्ञात्मना वाचम् । कथमभिदध्यौ ? ' मिथुनी ' मिथुनवान् ' एनया ' ' स्यामिति' ' तां ' सम्बभूव ' सङ्गतः ॥ १ ॥

**तद्वै देवानाम्** । ' तद् ' दुहितृगमनं ' देवानां ' चेतसि ' आगः ' अपराधो बभूव । अपराधी सर्वमेवं ' करोतीति ' ॥ २ ॥

**ते ह देवाः** । ' योऽयं देवः पशूनामीष्टे तम् ' [illegible] –' अतिसन्धं ' सन्धा सन्धानं मर्यादा व्यवस्था, " दुहिता न गन्तव्या "–इति; अतीत्य सन्धानं तमतिसन्धं संचरणम् । मर्यादामतीत्य ' अयं चरति ' ततश्चापराधित्वान्निग्रहार्ह इति ' विध्य इमम् ' । " व्यध–ताडने " ( धा. पा. दि. प. ७९ ) ताडयेषुणेति । यज्ञाङ्गसृष्टिभवितव्यताप्रसक्तानां चेष्टितम् ' तं ' ' रुद्रः ' आकृष्य इषुं विद्धवान् । " तथेन्नूनम् " । इच्छब्दोऽवधारणार्थः ( निरु. १ । ३ । ९ ) ' नूनं '–शब्दो यस्मादर्थे ( निरु. १ । २ । ४ ) यस्मात् तथैव ' तदास ' ॥ ३ ॥

**तस्मादेतत्** । ' तस्मात् ' तत् ' ऋषिणा ' मन्त्रेण ' अभ्यनूक्तम् ' । ' पिता ' प्रजापतिः ' स्वां दुहितरम्' ' अधिष्कन् ' अधिस्कन्नः, तथा च ' सञ्जग्मानः ' सङ्गतः सन्, 'क्ष्मया' क्ष्मायां पृथिव्यां यत् 'रेतः' ' निषिञ्चत् ' अभिषिक्तवान् । तस्माद्रेतसः " साध्योऽजनयन् ब्रह्म देवा वास्तोष्पतिं व्रतपां निरतक्षन् "–इति ( ऋ. सं. १० । ६१ । ७ ) ( ऐ. ब्रा. ३ । ३ । ९ ) ' तदाग्निमारुतमिति ' नाम्ना ' उक्थं ' शस्त्रम्[2] ।

---

1–" ताम्रृश्यो भूत्वा रोहितं भूत्वा०–० या रोहित्सा रोहिणी " इत्यादि ऐ० ब्रा० ३ । ३ । ९ । 2–" यैषा रौद्री शस्यते" इत्यादि ऐ० ब्रा० ३ । ३ । १० ।

( स्ते ) ते होचुः । ( रु ) उपजानीत यथेदं नामुयासत्कनीयो हाहुतेर्यथेदᳪं स्यादिति ॥ ५ ॥

ते होचुः । ( र्भ ) भगायैनद्दक्षिणत ऽआसीनाय परिहरत तद्भगः प्राशिष्यति तद्यथाहुतमेवं भविष्यतीति तद्भगाय दक्षिणत ऽआसीनाय पर्याजह्रुस्तद्भगोऽवेक्षाञ्चक्रे तस्याक्षिणी निर्ददाह तथेन्नूनं तदास तस्मादाहुरन्धो भग इति ॥ ६ ॥

ते होचुः । ( र्नो ) नो न्वेवात्राशमत्पूष्ण ऽएनत्परिहरतेति तत्पूष्णे पर्याजह्रुस्तत्पूषा प्राश तस्य दतो निर्जघान तथेन्नूनं तदास तस्मादाहुरदन्तकः पूषेति तस्माद्यं पूष्णे चरुं कुर्वन्ति प्रपिष्टानामेव कुर्वन्ति यथादन्तकायैवम् ७

( न्ते ) ते होचुः । ( र्नो ) नो न्वेवात्राशमद्बृहस्पतय ऽएनत्परिहरतेति तद् बृहस्पतये पर्याजह्रुः स बृहस्पतिः सवितारमेव प्रसवायोपाधावत्सविता वै देवानां प्रसवितेदं मे प्रसुवेति तदस्मै सविता प्रसविता प्रासुवत्तदेनᳪं सवितृप्रसूतं नाहिनत्ततोऽर्वाचीनᳪं शान्तं तदेतन्निदानेन यत्प्राशित्रम् ॥८॥

---

यदा देवानां क्रोधोऽव्यैद्-अथ प्रजापतिमभिषज्यन् । तस्य तं शल्यं निरकृन्तन्, स वै यज्ञ एव प्रजापतिः ॥ ४ ॥

ते होचुः—उपजानीत यथेदं नामुयासत्, कनीयो हाहुतेर्यथेदं स्यादिति ॥ ५ ॥

ते होचुः—भगायैनद्दक्षिणत आसीनाय परिहरत, तद्भगः प्राशिष्यति, तद्यथाहुतमेवं भविष्यतीति । तद्भगाय दक्षिणत आसीनाय पर्याजह्रुः; तद्भगोऽवेक्षाञ्चक्रे, तस्याक्षिणी निर्ददाह, तथेन्नूनं तदास । तस्मादाहुरन्धो भग इति ॥ ६ ॥

ते होचुः—नो न्वेवात्राशमत्, पूष्ण एनत् परिहरतेति । तत् पूष्णे पर्याजह्रुः, तत् पूषा प्राश, तस्य दतो निर्जघान, तथेन्नूनं तदास । तस्मादाहुरदन्तकः पूषेति । तस्माद्यं पूष्णे चरुं कुर्वन्ति, प्रपिष्टानामेव कुर्वन्ति, यथा अदन्तकाय—एवम् ॥ ७ ॥

ते होचुः—नो न्वेवात्राशमत्, बृहस्पतय एनत् परिहरतेति । तद् बृहस्पतये पर्याजह्रुः । स बृहस्पतिः सवितारमेव प्रसवायोपाधावत् । सविता वै देवानां प्रसविता । इदं मे प्रसुवेति । तदस्मै सविता

---

'तस्मिन्' 'तद्' विभज्याख्यायते । 'यथा' 'तत्' 'रेतः' 'देवाः' प्रजनितवन्त इत्याख्यानशेषयोजना । यज्ञस्य कृत्स्नतायै 'स वै यज्ञ एव' इत्याख्यानस्य प्रकृतसम्बन्धोपक्षेपः ॥ ४ ॥

ते होचुः । यथेदमिति । यत् 'इदम्' इषोरनीकं यज्ञरसविलिप्तम्, तद् 'यथा' 'न' वृथा स्यात्, 'यथा' च प्रधानाहुतेर्न महत् स्यात्, तथा उपायं जानीतेति 'ते' देवाः 'ऊचुः' ॥ ५ ॥ ६ ॥

ते होचुर्नो न्वेव । प्रायः प्रसन्न एव ब्राह्मणशेषः, किञ्चित्तु वक्ष्यामः । 'नो'—इति प्रतिषेधः ( निरु. १ । ४ । ३७ ॥ वा. १३ । ४ । ९ ); 'नु'—इति वाक्यपूरणः ( निरु. १ । २ । ) "नु इत्येषोऽनेककर्मा" । 'अशमत्' न शान्तम् । 'दतः' दन्तान् । 'प्रपिष्टानां' तण्डुलानामिति शेषः ॥ ७ ॥

'न अहिनत्' । हिनोतेर्हिंसाकर्मणः ( निघं. ४ । ३ । ९४ ) । न हतवान् 'ततोऽर्वाचीनम्' । बृह-

( ७१ ) स यत्प्राशित्रमवद्यति । यदेवात्राविद्धं यज्ञस्य यद्रुद्रियं तदेवैतन्निर्मिमीतेऽथाप ऽउपस्पृशति शान्तिरापस्तदद्भिः शमयत्यथेडां पशून्त्समवद्यति ॥ ९ ॥

स वै यावन्मात्रमिवैवावद्येत् ( च ) तथा शल्यः प्रच्यवते तस्माद्यावन्मात्रमिवैवावद्येदन्यतरत ऽआज्यं कुर्यादधस्ताद्वोपरिष्टाद्वा तथा खदन्निस्सरणवद्भवति तथा निस्रवति तस्मादन्यतरत ऽआज्यं कुर्यादधस्ताद्वोपरिष्टाद्वा ॥ १० ॥

स ऽआज्यस्योपस्तीर्य । द्विर्हविषोवदायाथोपरिष्टादाज्यस्याभिघारयति तद्यथैव यज्ञस्यादानमेवमेव तत् ॥ ११ ॥

---

प्रसविता प्रासुवत् । तदेनं सवितृप्रसूतं नाहिनत् । ततोऽर्वाचीनं शान्तम् । तदेतन्निदानेन—यत प्राशित्रम् ॥ ८ ॥

स यत् प्राशित्रमवद्यति । यदेवात्राविद्धं यज्ञस्य—यद्रुद्रियं, तदेवैतन्निर्मिमीते । अथाप उपस्पृशति । शान्तिरापः । तदद्भिः शमयति ॥

### इडाकर्म ।

अथेडां पशून् समवद्यति ॥ ९ ॥

स वै यावन्मात्रमिवैवावद्येत् । तथा शल्यः प्रच्यवते । तस्माद्यावन्मात्रमिवैवावद्येत् । अन्यतरत आज्यं कुर्यात्—अधस्ताद् वा, उपरिष्टाद् वा । तथा खदन्निस्सरणवद्भवति, तथा निस्रवति । तस्मादन्यतरत आज्यं कुर्यात्—अधस्ताद् वोपरिष्टाद् वा ॥ १० ॥

स आज्यस्योपस्तीर्य, द्विर्हविषोऽवदाय, अथोपरिष्टादाज्यस्याभिघारयति । तद्यथैव यज्ञस्यावदानम्—एवमेव तत् ॥ ११ ॥

---

स्पतिप्रशमनादर्वाक् ‘ शान्तम् ’ । **तदेतन्निदानेने**ति । इतिहासमुपसंहृत्याधिदैवज्ञानाय प्राशिता प्राशोऽस्येति ‘ प्राशित्रम् ’ । “ अणुप्रकरणे अग्नि[illegible] उपसंख्यानम् ”—इति (पा. [illegible] । १ । ९७ वा. [illegible] ) हि स्मरन्ति ॥ ८ ॥

**स यत् । यदेवात्रे**ति । संसारस्वभावाद् यदत्र किञ्चिदशान्तं ‘ तत् ’ ‘ निर्मिमीते ’ बहिष्करोति, निष्कर्षतीत्यर्थः । ‘ अथ ’ ‘ अप उपस्पृशति ’ अध्वर्युः । **अथेडां पशूनि**ति । पशुत्वमिडायाः प्रसिद्धम् । ( ऐ. ब्रा. २ । ४ । ६ ) ( तै. सं. २ । ६ । ७ । ३ । ) पशवश्च रुद्राद्रक्षणीयाः; अतो रुद्रिये प्राशित्रे दत्ते अप उपस्पृश्य ‘ इडामवद्यति ’[1] ॥ ९ ॥

**स वै** । इडावदानार्थतामुपस्पर्शनस्य दर्शयति—‘खदत् ’ । “ खद—स्थैर्ये हिंसायाञ्च ” ( धा. पा. भ्वा. प. ५० ) अल्पतरत्वादस्थिरमगाढबलम्, ‘ निस्सरणवद्भवति ’ इतरथा तु चतुर्गृहीतं महत्त्वाद्गाढं स्यादित्यभिप्रायः ॥ १० ॥

**स आज्यस्य** ।—इति वचनात् विकल्पः पूर्वेण सह ॥ ११ ॥

---

१—“ अप उपस्पृश्येडां पञ्चावत्तामित्यादि ” का. श्रौ. सू. ३ । ७४ ॥

( त्त ) तन्न पूर्वेण परिहरेत् । ( त्पू ) पूर्वेण हैके परिहरन्ति पुरस्ताद्वै प्रत्यञ्चो यजमानं पशव ऽउपतिष्ठन्ते रुद्रियेण ह पशून्प्रसजेद्यत्पूर्वेण परिहरेत्तेऽस्य गृहाः पशव ऽउपमूर्यमाणा ऽईयुस्तस्मादित्येव तिर्यक्प्रजिहीत तथा ह रुद्रियेण पशून्न प्रसजति तिर्यगेवैनं निर्मिमीते ॥ १२ ॥

तत्प्रतिगृह्णाति । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामीति ॥ १३ ॥

तद्यथैवादो बृहस्पतिः । सवितारं प्रसवायोपाधावत्सविता वै देवानां प्रसवितेदं मे प्रसुवेति तदस्मै सविता प्रसविता प्रासुवत्तदेनꣳ सवितृप्रसूतं नाहिनदेवमेवैष ऽएतत्सवितारमेव प्रसवायोपधावति सविता वै देवानां प्रसवितेदं मे प्रसुवेति तदस्मै सविता प्रसविता प्रसौति तदेनꣳ सवितृप्रसूतं न हिनस्ति ॥ १४ ॥

तत्प्राश्नाति । ( त्य ) अग्नेष्ट्वास्येन प्राश्नामीति न वा ऽअग्निं किञ्चन हिनस्ति तथो हैनमेतन्न हिनस्ति ॥ १५ ॥

---

तन्न पूर्वेण परिहरेत् । पूर्वेण हैके परिहरन्ति । पुरस्ताद्वै प्रत्यञ्चो यजमानं पशव उपतिष्ठन्ते । रुद्रियेण ह पशून् प्रसजेत्—यत् पूर्वेण परिहरेत्, तेऽस्य गृहाः पशव उपमूर्यमाणा ईयुः । तस्मादित्येव तिर्यक् प्रजिहीत । तथा ह रुद्रियेण पशून्न प्रसजति । तिर्यगेवैनं निर्मिमीते ॥ १२ ॥

तत् प्रतिगृह्णाति—" **देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि**"—( वा. सं. २ । ११ ) इति ॥ १३ ॥

तद्यथैवादो बृहस्पतिः सवितारं प्रसवायोपाधावत् । सविता वै देवानां प्रसविता—इदं मे प्रसुवेति, तदस्मै सविता प्रसविता प्रासुवत् । तदेनं सवितृप्रसूतं नाहिनत् । एवमेवैष एतत्सवितारमेव प्रसवायोपधावति । सविता वै देवानां प्रसविता—इदं मे प्रसुवेति । तदस्मै सविता प्रसविता प्रसौति । तदेनं सवितृप्रसूतं न हिनस्ति ॥ १४ ॥

तत् प्राश्नाति—" **अग्नेष्ट्वास्येन प्राश्नामि** "—( वा. सं. २ । ११ ) इति । न वा अग्निं किञ्चन हिनस्ति, तथो हैनमेतन्न हिनस्ति ॥ १५ ॥

---

**तन्न पूर्वेण** । ' इत्येव '—इत्यभिनयेन अध्वर्युसञ्चरं[1] दर्शयति । एवमेवाध्वर्युसञ्चरेण ' तिर्यक् प्रजहीत ' । " ओहाङ्—गतौ " ( धा. पा. जु. आ. ७ )—प्रगच्छेत् प्राशित्रम् ॥ १२ ॥

**तत्प्रतिगृह्णाति**[2] ।—इत्यत आरभ्य ब्रह्मत्वं प्राय आध्यायसमाप्तेः ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

---

१—" अध्वर्युः सञ्चरेण ब्रह्मणे प्रदाय पूर्वेणैके " का. श्रौ. सू. ३ । ७४ ॥ २—" देवस्य त्वेति प्रतिगृह्णाति ," का. श्रौ. सू. २ । ३७ । ३८ । ३९ । ४० इत्यादीनि द्रष्टव्यानि ।

तन्न दद्भिः खादेत् । (न्नं) नेन्म ऽइदꣳ रुद्रियं दतो हिनसदिति तस्मान्न दद्भिः खादेत् ॥ १६ ॥

(दु) अथाप ऽआचामति । शान्तिरापस्तदद्भिः शान्त्या शमयतेऽथ परिक्षाल्य पात्रम् ॥ १७ ॥

(मु) अथास्मै ब्रह्मभागं पर्य्याहरन्ति । ब्रह्मा वै यज्ञस्य दक्षिणत ऽआस्ते-ऽभिगोप्ता स ऽएतं भागं प्रतिविदान ऽआस्ते यत्प्राशित्रं तदस्मै पर्य्याहार्षु-स्तत्प्राशीदथ यमस्मै ब्रह्मभागं पर्याहरन्ति तेन भागी स यदत ऽऊर्ध्वमसꣳ-स्थितं यज्ञस्य तदभिगोपायति तस्माद्वा ऽअस्मै ब्रह्मभागं पर्य्याहरन्ति ॥ १८ ॥

स वै वाचंयम ऽएव स्याद् । (द्रु) ब्रह्मन्प्रस्थास्यामीत्यैतस्माद्वचसो विवृहन्ति वा ऽएते यज्ञं क्षण्वन्ति ये मध्ये यज्ञस्य पाकयज्ञिययेडया चरन्ति ब्रह्मा वा ऽऋत्विजां भिषक्तमस्तद्ब्रह्मा सन्दधाति न ह सन्दध्या-द्यद्वावद्यमान ऽआसीत तस्माद्वाचंयम ऽएव स्यात् ॥ १९ ॥

---

तन्न दद्भिः खादेत्, नेन्म इदं रुद्रियं दतो हिनसदिति । तस्मान्न दद्भिः खादेत् ॥ १६ ॥

अथाप आचामति । शांतिरापः । तदद्भिः शान्त्या शमयते । अथ परिक्षाल्य पात्रम् ॥ १७ ॥

अथास्मै ब्रह्मभागं पर्याहरन्ति । ब्रह्मा वै यज्ञस्य दक्षिणत आस्तेऽभिगोप्ता । स एतं भागं प्रति-विदान आस्ते यत् प्राशित्रम् । तदस्मै पर्याहार्षुः । तत् प्राशीत् । अथ यमस्मै ब्रह्मभागं पर्याहरन्ति, तेन भागी सः । यदत ऊर्ध्वमसंस्थितं यज्ञस्य, तदभिगोपायति । तस्माद्वा अस्मै ब्रह्मभागं पयाहरन्ति ॥ १८ ॥

स वै वाचंयम एव स्याद्–" ब्रह्मन् प्रस्थास्यामि "– इत्यैतस्माद् वचसः । विवृहन्ति वा एते, यज्ञं क्षण्वन्ति–ये मध्ये यज्ञस्य पाकयज्ञिययेडया चरन्ति । ब्रह्मा वा ऋत्विजां भिषक्तमः । तद् ब्रह्मा सन्दधाति । न ह सन्दध्याद्–यद्वावद्यमान आसीत । तस्माद्वाचंयम एव स्यात् ॥ १९ ॥

---

**अथापः** । ' अथ परिक्षाल्य पात्रं ' " नाभिमालभते "–[1]इति शाखान्तरात् तच्छेषः ॥ १७ ॥

**अथास्मै ब्रह्मभागम्**[2] ।–इत्याध्वर्यवम् । ' प्रतिविदानः ' जानन्, एष मे भाग इत्याशयः । पूर्वम ' आस्ते ' । ' पर्याहार्षुः ' पर्याहृतवन्तः । ' प्राशीत् ' प्राशितवान् । अनेन तु ब्रह्मभागेन ' भागी ' । स्वीकृते-नैव यज्ञशेषं ' गोपायति ' ॥ १८ ॥

**स वै वाचंयमः** । वाचं यच्छतीति " वाचि यमो व्रते " इति ( पा. सू. ३ । २ । ४० ) " वाचंयमपुर-न्दरौ च " इति पा. सू. ६ । ३ । ६९ ) ' वाचंयमः[3] ' असम्बन्धवचनादुपरमयति, एतद्व्रतो वाचंयमः,

---

१–" प्रक्षाल्य पात्रं नाभिमालभते "इत्यादि का. श्रौ. सू. २ । ४ १ । २–" भागमस्मै परिहरति " का. श्रौ. सू. ३।५६ । ३–' वाग्यत आनुयाजप्रसवात् ' ' भागपरिहरणादि वा '–आवृताऽवषट्कारात्तु इति का. श्रौ. २ । २५ । २६ । २७ ।

(त्स) स यदि पुरा मानुषीं वाचं व्याहरेत्। (क) तत्रो वैष्णवीमृचं वा यजुर्वा जपेद्यज्ञो वै विष्णुस्तद्यज्ञं पुनरारभते तस्यो हैषा प्रायश्चित्तिः॥२०

स यत्राह—ब्रह्मन्प्रस्थास्यामीति तद्ब्रह्मा जपत्येतं ते देव सवितर्यज्ञं प्राहुरिति तत्सवितारं प्रसवायोपधावति स हि देवानां प्रसविता बृहस्पतये ब्रह्मण ऽइति बृहस्पतिर्वै देवानां ब्रह्मा तद्य ऽएव देवानां ब्रह्मा तस्मा ऽएवैतत्प्राह तस्मादाह बृहस्पतये ब्रह्मण ऽइति तेन यज्ञमव तेन यज्ञपतिं तेन मामवेति नात्र तिरोहितमिवास्ति ॥ २१ ॥

मनो जूतिर्जुषतामाज्यस्येति। मनसा वा इदꣳ सर्वमाप्तं तन्मनसैवैतत्सर्व्वमाप्नोति बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञꣳ समिमं दधात्विति

---

स यदि पुरा मानुषीं वाचं व्याहरेत्—तत्रो वैष्णवीमृचं वा, यजुर्वा जपेत्। यज्ञो वै विष्णुः। तद्यज्ञं पुनरारभते, तस्यो हैषा प्रायश्चित्तिः ॥ २० ॥

स यत्राह **"ब्रह्मन् प्रस्थास्यामीति"**—तद् ब्रह्मा जपति—**"एतं ते देव सवितर्यज्ञं प्राहुः"**—( वा० सं० २ । १२ ) इति। तत्सवितारं प्रसवायोपधावति। स हि देवानां प्रसविता। **"बृहस्पतये ब्रह्मणे"**— ( वा० सं० २ । १२ ) इति। बृहस्पतिर्वै देवानां ब्रह्मा। तद् एव देवानां ब्रह्मा तस्मा एवैतत् प्राह। तस्मादाह बृहस्पतये ब्रह्मण इति। **"तेन यज्ञमव, तेन यज्ञपतिं, तेन मामव"**—( वा० सं० २। १२ )इति। नात्र तिरोहितमिवास्ति ॥ २१ ॥

**"मनो जूतिर्जुषतामाज्यस्य"**—(वा०सं०२।१३) इति। मनसा वा इदं सर्वमाप्तम्। तन्मनसैवैतत्सर्वमाप्नोति। **"बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञं समिमं दधातु"**—(वा०सं०२।१३)

---

ब्रह्मा स्यात्। कियन्तं कालम् ? 'ब्रह्मन् ? प्रस्थास्यामीति 'आ एतस्मात्' 'वचसः' अध्वर्युवचनात्। अभिविधावाङ् न मर्यादायाम्; कुतः ? सन्धानवचनात्। 'विवृहन्ति' विच्छिदन्ति। 'क्षण्वन्ति' हिंसन्ति। 'ये मध्ये यज्ञस्य' 'पाकयज्ञियया' पाकयज्ञार्हया विलक्षणया 'इडया' 'चरन्ति'। पाकयज्ञेषु हुतशेषो भक्ष्यते, इडाहुतशेषो भक्ष्यते; तेन पाकयज्ञार्हेत्युच्यते। "ब्रह्मा वा ऋत्विजां भिषक्तमः" अतिशयेन यज्ञस्य चिकित्सिता; स हि प्रायश्चित्तैर्यज्ञं भिषज्यतीत्यभिप्रायः। ततः किम् ? यद् वाचंयमो भवति, 'तत्' तेन 'ब्रह्मा' यज्ञं 'सन्दधाति'; अन्यथा तु नैव सन्दध्यात्। 'यद्' यदि 'वावद्यमानः' पुनःपुनर्वदमानः 'आसीत्' ॥ १९॥

**स यदि पुरा**।—इति प्रायश्चित्तविधिः ॥ २० ॥

**स यत्राह**। इत्यनुयाजप्रसवविधिः। **नात्र तिरोहितमिति**। विस्पष्ट एवार्थः। कथं सविता ? उच्यते—यस्मात् 'ते' तुभ्यम् 'एते' अध्वर्यवो 'यज्ञं प्राहुः', 'बृहस्पतये' च; न मह्यं मनुष्याय, 'तेन' कारणेन त्वमनुज्ञया यज्ञादीनव पालय ( कौ. श्रौ. सू. २ । ४२ ) ॥२१॥

**मनो जूतिः**। 'मनः' च देवानां 'जूतिः' गन्त्री' 'जुषताम्' प्रीयतां तृप्यत्वाज्येन। 'बृहस्पतिः'

---

१–" एतं त इति समिदामन्त्रितः प्रसौतिं " प्रतिष्ठेति ब्रूयाद्वा " इति का. श्रौ. सू. २ । ४२–४३ ।

यद्विवृढं तत्सुन्दधाति व्विश्वे देवास ऽइहु मादयन्तामिति सुर्व्वं वै व्विश्वे देवाः सुर्व्वैणैवैतत्सुन्दधाति स यदि कामयेत ब्रूयात्प्रतिष्ठेति यद्यु कामयेतापि नाद्रियेत ॥ २२ ॥ २ ॥

इति षष्ठप्रपाठके द्वितीयं ब्राह्मणम् [ ७. ४. ] ॥

---

इति । यद्विवृढम्, तत्सन्दधाति । " विश्वे देवास इह मादयन्ताम् "–( वा० सं० २ । १३ ) इति । सर्वं वै विश्वेदेवाः । सर्वेणैवैतत् सन्दधाति । स यदि कामयेत ब्रूयात्–" प्रतिष्ठा "–( वा० सं० २ । १३ ) इति । यद्यु कामयेतापि नाद्रियेत ॥ २२ ॥

---

च ' यज्ञं ' ' तनोतु, सन्दधातु ' च । ' विश्वे ' च ' देवाः ' तृप्यन्तु, त्वयाऽनुज्ञातेऽध्वर्यौ । तस्मादनुजानीहीत्यभिप्रायमालक्ष्य सवितुः, स्वयं ब्रह्मा आह–सार्वात्म्यादहमेव सविता, ततश्च ' प्रतिष्टा ' अध्वर्यौ । अतिसर्जने लोट् ( पा. सू. ३ । ३ । १६३ ) ॥ २२ ॥ २ ( ७. ४. )

इत्याचार्यहरिस्वामिनः कृतौ शतपथभाष्ये सप्तमाध्याये चतुर्थं ब्राह्मणम् ॥

नागस्वामिसुतोऽवन्त्यां पाराशर्यो वसन् हरिः ।
श्रुत्यर्थं दर्शयामास शक्तितः पौष्करीयकः ॥
श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य भूपतेः ।
धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम् ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ शतपथभाष्ये सप्तमोऽध्यायः समाप्तः ॥ ७ ॥

# अथ प्रथमकाण्डे अष्टमाध्याये प्रथमं ब्राह्मणम् ।

मुनवे हु वै प्रातः । ( १ ) अवनेग्यमुदकमाजहुर्यथेदं पाणिभ्यामवनेजनायाहुरन्त्येवं तुस्यावनेनिजानस्य मुत्स्यः पाणी ऽआपेदे ॥ १ ॥

सु हास्मै व्वाचमुवाद । बिभृहि मा पारयिष्यामि त्वेति कुस्मान्मा पारयिष्यसीत्यौघ ऽइमाः सुर्व्वाः प्रजा निर्व्वोढा तुतस्त्वा पारयितास्मीति कथं ते भृतिरिति ॥ २ ॥

सु होवाच । यावद्वै क्षुल्लका भवामो बह्वी वै नस्तावन्नाष्ट्रा भवत्युत मुत्स्य ऽएव मुत्स्यं गिलति कुम्भ्यां माग्रे बिभरासि सु यदा तामतिव्वर्द्धा ऽअथ कर्षूं खात्वा तुस्यां मा बिभरासि सु यदा तामतिव्वर्द्धा ऽअथ मा समुद्रमभ्युवहरासि तुर्हि वा ऽअतिनाष्ट्रो भवितास्मीति ॥ ३ ॥

---

मनवे ह वै प्रातरवनेग्यमुदकमाजहुः,–यथेदं पाणिभ्यामवनेजनायाहरन्ति–एवम् । तस्यावनेनिजानस्य मत्स्यः पाणी आपेदे ॥ १ ॥

स हास्मै वाचमुवाद–" बिभृहि मा, पारयिष्यामि त्वा " इति । ' कस्मान्मा पारयिष्यसि ' इति । ' औघ इमाः सर्वाः प्रजा निर्वोढा; ततस्त्वा पारयितास्मि ' इति । कथं ते भृतिरिति ॥ २ ॥

स होवाच–" यावद्वै क्षुल्लका भवामः,–बह्वी वै नस्तावन्नाष्ट्रा भवति,–उत मत्स्य एव मत्स्यं

---

**मनवे ह वै** । [illegible]मेतत् । तत्रेडायां मानवीमिडां देवतां वक्तुं " मानवी घृतपदी मैत्रावरुणी " इत्येतानि च [illegible]मितिहासः प्रवृत्तः । स चेतिहासः प्रसन्न एव, किञ्चित्तु दर्शयामः ' ' मनवे ' वैवस्वताय, तादर्थ्ये चतुर्थी, ( पा. सू. २ । ३ । १३ । वा. १ ) अवनेज्यते हस्ताद्यनेनेत्यवनेग्यम् । करणे कत्यः । ( पा. सू. ३ । ? । ७० ) ' आजहुः ' आनीतवन्तः, परिचारकाः । 'यथा' 'इदं' अधुना ' पाणिभ्याम् ' [illegible] ' आहरन्ति '–तथा आजहुः । ' तस्य ' मनोः प्रक्षालयतः ' मत्स्यः ' ' पाणी ' प्राप्तः , [illegible]ऽर्थस्य सिद्ध्यर्थं देवतैव मत्स्यरूपेणाजगाम ॥ १ ॥

**स हास्मै** । ' सः ' मत्स्यः ' अस्मै ' मनवे ' वाचम् ' उदितवान् कीदृशीम् ? ' बिभृहि ' पुषाण (पुष्णीहि) ' मा ' माम् । किमर्थम् ? ' पारयिष्यामि '[1]–"पाल–रक्षणे"–( चु. प. ९९ ) रक्षिष्यामि ' त्वा ' ' इति ' । ' कस्मात् ' ? इति भयहेतुप्रश्नः ( पा. सू. १ । ४ । २९ ) । वहतीति ' औघः ' उदकसङ्घातः, स इमा भारतवर्षनिवासिनीः ' प्रजाः ' निःशेषं वोढा–देशान्तरं प्रापयिता; तस्माद्भयहेतोस्त्वा पालयितास्मि ' इति ' मत्स्यवचः । ' कथम् ' ? इति मनोः प्रश्नः–कथं तव ' भृतिः ' भरणम्–पुष्टिः ' इति ' ॥ २ ॥

**स होवाच** । ' क्षुल्लकाः ' क्षुद्रकाः–अल्पकाः ' नाष्ट्रा '–इति । ' गिलति ' " गॄ निगरणे " ( तु. प. १२९ ) निगिरति । ' बिभरासि ' अध्येषणायां ( पा. सू. ३।३।१६१ ) लिङर्थे लेट्, ( पा. सू. ३ । ४ । ७ )

---

१–रलयोरभेदात् ' पालयिष्यामि ' इत्येव तु क्वचित्पाठः ।–" पार तीर कर्म–समाप्तौ " इति चास्ति चु. प. ३७८ धा. ॥

शुश्वद्ध ऋष ऽआस । स हि ज्येष्ठं व्वर्द्धतेऽथेतिथीᳬं सुमां तुदौघ ऽआगन्ता तुन्मा नुावमुपकल्प्योपासासै स ऽऔघ ऽउुत्थिते नुावमापद्यासै तुतस्त्वा पारयितास्मीति ॥ ४ ॥

तुमेवं भृत्वा समुद्रमभ्युवजहार । स यतिथीं तत्सुमां परिदिदेुश ततिथीᳬं सुमां नुावमुपकुल्प्योपासाञ्चक्रे स ऽऔघ उुत्थिते नुावमापेदे तᳬंस मुत्स्य ऽउपन्यापुप्लुवे तुस्य शृङ्गे नावः पुाशं प्रतिमुमोच तेनैतमुत्तरं गिरिमतिदुद्राव ॥ ५ ॥

---

गिलति, कुम्भ्यां माग्रे बिभरासि । स यदा तामतिवर्द्धै, अथ कर्षूं खात्वा तस्यां मा बिभरासि । स यदा तामतिवर्द्धै, अथ मा समुद्रमभ्यवहरासि । तर्हि वा अतिनाष्ट्रो भवितास्मि" इति ॥ ३ ॥

शश्वद्ध झष आस,–स हि ज्येष्ठं वर्द्धते । "अथ इतिथीं समां तदौघ आगन्ता,–तन्मा नावमुपकल्प्योपासासै, स औघ उत्थिते नावमापद्यासै, ततस्त्वा पारयितास्मि" इति ॥ ४ ॥

तमेवं भृत्वा समुद्रमभ्यवजहार । स यतिथीं तत्समां परिदिदेश–ततिथीं समां नावमुपकल्प्योपासाञ्चक्रे । स औघ उत्थिते नावमापेदे । तं स मत्स्य उपन्याप्लुवे । तस्य शृङ्गे नावः पाशं प्रतिमुमोच । तेनैतमुत्तरं गिरिमतिदुद्राव ॥ ५ ॥

---

बिभृयाः–पुष्णीयाः । एवमेव 'अभ्यवहरसि,' 'उपासासै' 'आपद्यासै' इति व्याख्येयानि । 'अतिवर्द्धै' अतिरिच्य वर्द्धितास्मीति प्राप्ते "यदायद्योर्लिङ उपसंख्यानम्" (पा. सू. ३. ३. १४७. वा.) ततश्च 'लिङर्थे लेट्' (पा. सू. ३ । ४ । ७) इति यदायोगे लेट् । 'कर्षूः' (निघं. ३ । २३ । ६) खातिकाः । अतीतो नाष्ट्रान् नाशयितॄन्–इति 'अतिनाष्ट्रः' ॥ ३ ॥

शश्वद्ध । शश्वच्छब्दोऽत्र सामर्थ्यात् क्षिप्रवचनः । 'झषः' महामत्स्यः, क्षिप्रमेव महामत्स्योऽत्रावर्त्ततेत्यर्थः । अथ कस्मात्स शीघ्रमेव महामत्स्यः संवृत्तः ? 'हि' यस्मात् 'सः' 'ज्येष्ठं' बृहत्तमं 'वर्द्धते' ; सर्व एव हि जलचरा अतिशयेन वर्द्धन्ते, स तु मत्स्यत्वादनाष्ट्रत्वाच्च बृहत्तमं वर्द्धत इति श्रुतिवचनम् । 'अथेतिथीम्' इति मत्स्यवचनम्–अयमपि समुद्रमभ्यवहृते 'इतिथीम्' इत्यभिनयः, तेन सङ्ख्येयां समां दर्शितवान् ; इयतीनां दशानां द्वादशानां वा पूरणी–इतिथी–इदम इशादेशश्छान्दसः; (पा. सू. ५ । २ । ३ ।) टिच्वात् ङीप् (पा. सू. ४ । १ । १५ ।) इयत्यस्तिथयो यस्यां सा–इतिथीति केषुचित्कोषेषु,–तेष्वपि इयतिथीं यावतिथीं तावतिथीमिति प्राप्ते छान्दसो यशब्दवशब्दलोपः । समा संवत्सरः, ताम् 'समाम्' समायामित्यर्थः; 'तत्' स इति लिङ्गव्यत्ययः–स पूर्वोक्तः 'औघः' 'आगन्ता,' 'तत्' त... 'नावम्' उपकल्प्य' माम् 'उपासासै' उपासीथाः । 'औघे' चोत्थिते तां 'नावम्' त्वम् 'आपद्यासै' आरोहेरित्यर्थः ॥ ४ ॥

तमेवं भृत्वा । यावतीनां पूरणीं 'यतिथीं' 'परिदिदेश' परिदिष्टवान्–आख्यातवान्, 'ततिथीं' तावतीनां पूरणीं 'समाम्' 'नावमुपकल्प्य' मत्स्यमुपासितवान् । 'औघे' च 'उत्थिते' 'नावम्' अधिरूढः 'तं' च मनुं 'स मत्स्यः' 'उप'–समीपे नीचैः–एनमुपकर्षमिति सम्बन्धः, 'आपुप्लुवे' आगतः । 'तस्य' मत्स्यस्य 'शृंगे' भवितव्यतयैव निष्पादिते 'नावः पाशं' प्रतिबद्धवान् । 'तेन' पाशेन सह मत्स्यः 'एतम्' 'उत्तरं गिरिम्' हिमवन्तमधिजगाम ॥ ५ ॥

स होवाच । ( चा ) अपीपरं वै त्वा वृक्षे नावं प्रतिबध्नीष्व तं तु त्वा मा गिरौ सन्तमुदकमन्तश्छैत्सीद्यावद्यावदुदकꣳसमवायात्तावत्तावदन्ववसर्पासीति स ह तावत्तावदेवान्ववससर्प्प तदप्येतदुत्तरस्य गिरेर्मनोरवसर्प्पणमित्यौघो ह ताः सर्व्वाः प्रजा निरुवाहाथेह मनुरेवैकः परिशिशिषे ॥ ६ ॥ [ अर्धप्रपाठकः ]

सोऽर्च्चञ्छ्राम्यंश्चचार प्रजाकामः । ( स्त ) तत्रापि पाकयज्ञेनेजे स घृतं दधि मस्त्वामिक्षामित्यप्सु जुहवाञ्चकार ततः संवत्सरे योषित्सम्बभूव सा ह पिब्दमानेवोदेयाय तस्यै ह स्म घृतं पदे सन्तिष्ठते तया मित्रावरुणौ सञ्जग्माते ॥ ७ ॥

ताꣳ होचतुः कासीति । मनोर्दुहितेत्यावयोर्ब्रूष्वेति नेति होवाच स

---

स होवाच—" अपीपरं वै त्वा, वृक्षे नावं प्रतिबध्नीष्व, तं तु त्वा मा गिरौ सन्तमुदकमन्तश्छैत्सीद्, यावद् यावदुदकं समवायात् तावत् तावदन्ववसर्पासि " इति । स ह तावत् तावदेवान्ववससर्प । तदप्येतदुत्तरस्य गिरेर्मनोरवसर्पणमिति । औघो ह ताः सर्वाः प्रजाः निरुवाह; अथेह मनुरेवैकः—परिशिशिषे ॥ ६ ॥

सोऽर्चन् श्राम्यंश्चचार प्रजाकामः । तत्रापि पाकयज्ञेनेजे । स घृतं दधि मस्तु आमिक्षाम्—इत्यप्सु जुहवाञ्चकार । ततः संवत्सरे योषित् सम्बभूव । सा ह पिब्दमानेवोदेयाय । तस्यै ह स्म घृतं पदे सन्तिष्ठते । तया मित्रावरुणौ सञ्जग्माते ॥ ७ ॥

तां होचतुः—" का असि " इति । " मनोर्दुहिता " इति । " आवयोर्ब्रूष्व " इति । " न " इति

---

**स होवाच** । मत्स्यवचनम्—पालितवानस्मि त्वाम्; अधुनाऽत्र ' वृक्षे ' ' नावं प्रतिबध्नीष्व '; किञ्चापरम्—' गिरौ ' सन्तं ' त्वा ' त्वाम् ' उदकम् ' ' अन्तश्छैत्सीद् ' तद्देशमध्यं भित्त्वा पृथगकार्षीद्, इदमस्माद्देशादित्यर्थः । कथं पुनस्तां नावं छिनत्ति ? ' यावद् यावद् ' अध्वनः ' उदकं समवायात् ' एकीभावाय,—अव—अधः, अयात्—गच्छेत्—अवतरेदित्यर्थः; ' तावत्तावत् ' त्वमपि तदेवोदकम् ' अनु ' ' अवसर्पासि ' अवतरेः । ' सः ' मनुः प्राप्ते काले ' तावत् तावदेव ' अन्ववसृप्तः । येन च वर्त्मना मनुरवसृप्तः, ' तद् ' अद्यत्वे ' अपि " एतद् ' ' उत्तरस्य गिरेः मनोरवसर्पणम् ' ' इति ' आहुरिति शेषः । अवसृप्तोऽनेनेत्यवसर्पणम् ॥ ६ ॥

**सोऽर्च्चञ्छ्राम्यन्** । तपस्तप्तवान् ' प्रजाकामः ' । तत्रापि ' ' सः ' मनुः ' पाकयज्ञेन ' अनेन ' ईजे ' इष्टवान्—घृतादिभिः । ' ततः ' तस्मात्पाकयज्ञादेव ' संवत्सरे ' पूर्णे ' योषित् ' मिश्रीभावात्मिका सम्भूता । ' सा ' योषित् ' पिब्दमाना ' पाकधर्मात्मिका " पिव—क्षरणे " ( धा. भ्वा. प. ९१८ ) आ—दकारप्रत्ययः, तत्त्वेन साक्षादात्मगामिफलत्वादात्मनेपदम् । पिवतेर्दकारप्रत्यययोगाद् बत्वम्; घृतप्रभवत्वाद् घृतं स्रवन्ती इव ' उदेयाय ' उद्गता; उदकादुत्थिता । एवञ्च सुस्निग्धा पिब्दमाना येन ' तस्यै ' तस्याः ' पदे घृतं सन्तिष्ठते ' ' स्म ' तया च ' मित्रावरुणौ कथमपि संगतौ ॥ ७ ॥

**ताꣳ होचतुः** । आवयोर्दुहितेति ' ब्रूष्व ' ' इति ' ऊचतुः । ' अपि त्वं ' भागः, तं प्रार्थितवन्तौ ।

ऽएव मामजीजनत तस्यैवाहमस्मीति तस्यामपि त्वमीषाते तद्वा जज्ञौ तद्वा न जज्ञावति त्वेवेयाय सा मनुमाजगाम ॥ ८ ॥

ताᳮ ह मनुरुवाच कासीति । तव दुहितेति कथं भगवति मम दुहितेति या ऽअमूरप्स्वाहुतीरहौषीर्घृतं दधि मस्त्वामिक्षां ततो मामजीजनथाः साशीरस्मि तां मा यज्ञेऽवकल्पय यज्ञे चेद्वै मावकल्पयिष्यसि बहुः प्रजया पशुभिर्भविष्यसि यामु मया काञ्चाशिषमाशासिष्यसे सा ते सर्व्वा समर्द्धिष्यत ऽइति तामेतन्मध्ये यज्ञस्यावाकल्पयन्मध्यᳮ ह्येतद्यज्ञस्य यदन्तरा प्रयाजानुयाजान् ॥ ९ ॥

( जाँस्त ) तयार्च्चञ्छ्राम्यँश्चचार प्रजाकामः । ( स्तु ) तयेमां प्रजातिं प्रजज्ञे येयं मनोः प्रजातिर्याम्वेनया काञ्चाशिषमाशास्त सास्मै सर्व्वा समार्द्ध्यत ॥ १० ॥

---

होवाच—" य एव मामजीजनत, तस्यैवाहमस्मि " इति । तस्यामपि त्वमीषाते । तद्वा जज्ञौ, तद्वा न जज्ञावति त्वेवेयाय, सा मनुमाजगाम ॥ ८ ॥

तां ह मनुरुवाच—" का असि " इति । " तव दुहिता " इति । " कथं भगवति ! मम दुहिता " इति । " या अमूरप्स्वाहुतीरहौषीः घृतं, दधि, मस्तु, आमिक्षाम्—ततो मामजीजनथाः, साशीरस्मि, तां मा यज्ञेऽवकल्पय; यज्ञे चेद् वै मावकल्पयिष्यसि—बहुः प्रजया पशुभिर्भविष्यसि, यामु मया काञ्चाशिषमाशासिष्यसे—सा ते सर्वा समर्द्धिष्यते " इति । तामेतन्मध्ये यज्ञस्यावाकल्पयत् । मध्यं ह्येतद् यज्ञस्य—यदन्तरा प्रयाजानुयाजान् ॥ ९ ॥

तयार्चन् श्राम्यंश्चचार—प्रजाकामः । तयेमां प्रजातिं प्रजज्ञे येयं मनोः प्रजातिः, याम्वेनया काञ्चाशिषमाशास्त—सास्मै सर्वा समार्द्ध्यत ॥ १० ॥

---

' तद् ' भागित्वं ' वा जज्ञौ ' वाशब्दश्चशब्दार्थे, जानातिश्च प्रतिपूर्वो द्रष्टव्य; प्रतिज्ञातवती च ' न ' च प्रतिज्ञातवतीति । यावता मैत्रावरुणीति व्यपदिश्यते, तावत्प्रतिज्ञातवती; यत्र तस्याः किंचित्ताभ्यां हूयेतेति,—एवं न प्रतिज्ञातवती ॥ ८ ॥

तां ह मनुः । ' अजीजनथाः ' ' जनितवानसि । ' आशीरस्मि ' आशीर्हेतुत्वादाशीः । ' अवकल्पय ' साङ्गतया समर्थय, समर्थां कुरु । ' मया ' हेतुभूतया—मय्युपहूयमानायाम् " उपहूतोऽयं यजमानः "—इत्येतेन होतृवचनेन ' याम् आशिषम्—आशासिष्यसे ' इति ' ताम् ' ' एतत् ' एतां मैत्रावरुणीं मानवीं घृतपदीं ' मध्ये यज्ञस्य ' यज्ञस्यान्तः, समर्थयन् ' प्रयाजानुयाजान् अन्तरा ' । इति इडायागः[1] ॥ ९ ॥

तयार्चन् । ' तया ' सह दर्शपूर्णमासयोर्देवार्चनव्रतलक्षणं ' तपः ' ' श्राम्यन् ' कुर्वन् ' चचार '

---

१—इडाशब्देनेडायामवत्तं पुरोडाशादिहविर्द्रव्यमुच्यते ।

सैषा निदानेन यदिडा । स यो हैवं विद्वानिडया चरत्येताᳬं हैव प्रजातिं प्रजायते यां मनुः प्राजायत याम्वेनया काञ्चाशिषमाशास्ते सास्मै सर्वा समृद्ध्यते ॥ ११ ॥

सा वै पञ्चावत्ता भवति । पशवो वा ऽइडा पाङ्क्ता वै पशवस्तस्मात्पञ्चावत्ता भवति ॥ १२ ॥

स समवदायेडाम् । पूर्वार्द्धे पुरोडाशस्य प्रशीर्य पुरस्ताद्ध्रुवायै निदधाति ताᳬं होत्रे प्रदाय दक्षिणात्येति ॥ १३ ॥

स होतुरिह निलिम्पति । तद्धोतौष्ठयोर्निलिम्पते मनसस्पतिना ते हुतस्याश्नामीषे प्राणायेति ॥ १४ ॥

( त्यु ) अथ होतुरिह निलिम्पति । तद्धोतौष्ठयोर्निलिम्पते व्वाचस्पतिना ते हुतस्याश्नाम्यूर्ज्जे ऽउदानायेति ॥ १५ ॥

---

सैषा निदानेन—यदिडा । स यो हैवं विद्वानिडया चरति—एतां हैव प्रजातिं—यां मनुः प्राजायत; याम्वेनया काञ्चाशिषमाशास्ते—सास्मै सर्वा समृद्ध्यते ॥ ११ ॥

सा वै पञ्चावत्ता भवति । पशवो वा इडा, पाङ्क्ता वै पशवः । तस्मात् पञ्चावत्ता भवति ॥ १२ ॥

स समवदायेडाम्, पूर्वार्द्धे पुरोडाशस्य प्रशीर्य, पुरस्ताद् ध्रुवायै निदधाति; तां होत्रे प्रदाय दक्षिणात्येति ॥ १३ ॥

स होतुरिह निलिम्पति । तद्धोतौष्ठयोर्निलिम्पते—' मनसस्पतिना ते हुतस्याश्नामीषे प्राणायेति १४

अथ होतुरिह निलिम्पति । तद्धोतौष्ठयोर्निलिम्पते—' वाचस्पतिना ते हुतस्याश्नामि—ऊर्जे उदानाय ' इति ॥ १५ ॥

---

' तया ' हेतुभूतया, ' इमाम् प्रजातिम् '—प्रजायत इति प्रजातिः,—ततो ' याम्वेनया '—इत्यादि तत्करणफलम् ॥ १० ॥ ११ ॥

सा वै पञ्चावत्ता[1] । उपस्तरणादिविशेषः शाखान्तरात् । ' पशवो वा इडा ' पशुप्रभवघृतादिप्रभवत्वात् " पशव इडा " ( तै. सं. २।६।७।३। ) ( ऐ. २।४।६ ) ॥ १२ ॥

स समवदाय[2][3] । प्रसन्ना ॥ १३ ॥

स होतुरिह । इहेत्यभिनयेन प्रदेशिनीपर्वमध्यमं दर्शयति, शाखान्तरात्[4] ॥ १४ ॥

अथ होतुरिह । ' इह '—इति हेत्वन्तरम्; शाखान्तरादेव । ओष्ठयोरिति । अत्राविशेषेण ' निलिम्पते '

---

१-" इडां पञ्चावत्तां " इत्यादि का. श्रौ. सू. ३ । ७४ । २-" यजमानभागं पूर्वार्द्धाद्दीर्घम्प्रशीर्य पुरस्ताद् ध्रुवायाः करोति" " इडा २होत्रे प्रदायाविसृजन्दक्षिणातिक्रामति " इति का. श्रौ. सू. ३ । ७५-७६ ॥ ३-" इडाम्प्रतिगृह्य होतुरङ्गुलिपर्वणी अनक्ति " इति का. श्रौ. सू. ३ । ७७ । ४-" प्रदेशिन्याः पर्वणी उत्तमे अंजयित्यौष्ठयोरम्वात्मं निमार्ष्टि " इति आश्व० श्रौ. सू. १ अ. ७. खं. ॥

( त्ये ) एतुद्ध वै मुनुर्बिभयाञ्चकार । ( रे ) इदं वै मे तुनिष्ठं यज्ञुस्य युदि-यमिडा पाकयज्ञिया यद्वै म ऽइह रुक्षाᳬंसि युज्ञं नु हिᳬंस्युरिति तुमेत-त्पुरा रुक्षोभ्यः पुरा रुक्षोभ्य ऽइत्येव प्रापयत तुथो ऽएुवैनामेषु ऽएतुत्पुरा रुक्षोभ्यः पुरा रुक्षोभ्य ऽइत्येव प्रापयतेुऽथ युत्प्रत्युक्षं नु प्राश्नाति नेदुनुप-हूतां प्राश्नानीत्येतुदेवैनां प्रापयते यदोष्ठयोर्निलिम्पते ॥ १६ ॥

( तेुऽथ ) अुथ होतुः पाणौ समवद्यति । समुवत्तामेवु सतीं तुदेनां प्रत्युक्षᳬं होतरि श्रयति तुयात्मुन्श्रितुया होता युजमानायाशिषमाशास्ते तुस्मा-द्धोतुः पाणौ समुवद्यति ॥ १७ ॥

( त्यु ) अुथोपाᳬंशूपह्वयते । ( तऽ ) एतुद्ध वै मुनुर्बिभयाञ्चकारेदं वै मे तुनिष्ठं यज्ञुस्य युदियमिडा पाकयज्ञिया यद्वै म ऽइह रुक्षाᳬंसि युज्ञं नु हन्युरिति तुामेतुत्पुरा रुक्षोभ्यः पुरा रुक्षोभ्य ऽइत्येवोपाᳬंशूपाह्वयत तुथो ऽएुवैनामेषु ऽएतुत्पुरा रुक्षोभ्यः पुरा रुक्षोभ्य ऽइत्येवोपाᳬंशूपह्वयते ॥१८॥

---

एतद्ध वै मनुर्बिभयाञ्चकार–' इदं वै मे तनिष्ठं यज्ञस्य–यदियमिडा पाकयज्ञिया; यद्वै म इह रक्षांसि यज्ञं न हिंस्युः ' इति । तामेतत् ' पुरा रक्षोभ्यः पुरा रक्षोभ्य–इत्येव प्रापयत । तथो एवै-नामेष एतत् पुरा रक्षोभ्यः पुरा रक्षोभ्य–इत्येव प्रापयते । अथ यत् प्रत्यक्षं न प्राश्नाति–नेदनुप-हूतां प्राश्नानि–इति । एतदेवैनां प्रापयते–यदोष्ठयोर्निलिम्पते ॥ १६ ॥

अथ होतुः पाणौ समवद्यति । समवत्तामेव सतीं तदेनां प्रत्यक्षं होतरि श्रयति । तयात्मन्-श्रितया होता यजमानायाशिषमाशास्ते तस्माद्धोतुः पाणौ समवद्यति ॥ १७ ॥

अथोपांशूपह्वयते । एतद्ध वै मनुर्बिभयाञ्चकार–' इदं वै मे तनिष्ठं यज्ञस्य–यदियमिडा पाक-

---

निलिम्पेदिति श्रुतिः शाखान्तरे तु–अधरमधर उत्तरमुत्तरे । किं पुनर्निलिम्पते ? द्रवत्वात्, सन्निधानाद्, अदनी-यत्वाच्च–आज्यम् । तत्रापि " एतदेवैनां प्रापयते " इतीडानिष्क्रयवचनादिडमेवाज्यमिति गम्यते ॥ १९ ॥

**एतद्ध वै मनुः** । निर्लेपार्थवादोऽयम् । ' बिभयाञ्चकार ' भीतः । ' तनिष्ठम ' तनुतमम्, ' पाकयज्ञिया ' पाकयज्ञार्हा, मनुष्यप्रधानत्वान्मन्दतरवीर्येत्यभिप्रायः । ' यद् ' ' इयम् इडा ' । ' यत् ' ' इह ' तनिष्ठे देशे ' यज्ञं न हिंस्युः ' महत् स्यादिति शेषः । एवं भीतः बिभ्यत् । **तामेतादिति** । ' ताम् ' इडाम् ' एतद् ' यद् " ओष्ठयोर्निलिम्पते "–इति वक्ष्यते, तत् ' पुरा रक्षोभ्यः ' यावदेवोच्चैरुपह्वानं श्रुत्वा रक्षांसि नागच्छन्ति–तावत् ' प्रापयत '–" प्राणेष्वेव हूयते "–इति वक्ष्यते–तं प्राणदेशं प्रापितवान् । ' पुरा रक्षोभ्यः, पुरा रक्षोभ्यः ' इति द्विर्वचनं प्रयोगान्तरव्याप्त्यभिप्रायम् ( पा. सू. ८ । १ । १ वा. ४ ) ॥ १६ ॥

**अथ होतुः** । अवान्तरेडावदानमेतत्[२] ॥ १७ ॥

**अथोपांशु** । अत ऊर्ध्वं हौत्रमिडोपह्वानं विधीयते, तदपि द्विविधम्–उपांशु चोच्चैश्च । तत्र प्रथमं ताव-

---

१–एतन्मन्त्रस्तद्व्याख्यानं च तै. सं. २ । ६ । ८ । इत्यत्र द्रष्टव्यम् । २–" अवान्तरेडामादधाति पूर्ववत् "–" इडाश्च " इति का. श्रौ. सू. ३ । ७८–७९ ॥ ऐ. ब्रा. २ । ४ । ६ ॥ इति ॥

स उपह्वयते । (त॒ऽ) उ॒पहू॒तꣳ र॒थन्त॒रꣳ स॒ह पृ॑थि॒व्योप॒ मा॒ꣳ र॒थन्त॒रꣳ स॒ह पृ॑थि॒व्या ह्व॑यता॒मुप॑हूतं वाम॒देव्य॒ꣳ स॒हान्त॒रिक्षे॒णोप॒ मां वा॒मदे॒व्यꣳ स॒हान्त॒रिक्षे॒ण ह्व॑यता॒मुप॑हूतं बृ॒हत्स॒ह दि॒वोप॒ मां बृ॒हत्स॒ह दि॒वाह्व॑यता॒मिति त॒देता॒मे॒वैत॒दुप॒ह्वय॒मान॒ ऽइ॒मांश्च॒ लो॒का॒नुप॒ह्वय॑त॒ ऽए॒तानि॒ च सामा॑नि॒ ॥१९॥

(न्यु॒) उ॒पहू॑ता गा॒वः स॒हऽर्ष॑भा ऽइ॒ति । प॒शवो॒ वा ऽइडा॒ त॒देनां प॒रो॒ऽक्ष॒मु॒पह्व॒यते स॒हऽर्षभा ऽइ॒ति स॒मि॒थुना॒मे॒वैना॒मेत॒दुप॒ह्वयते ॥ २० ॥

(त॒ऽ) उ॒पहू॑ता स॒प्तहो॒त्रेति । त॒देना॒ꣳ स॒प्तहो॒त्रा सौम्ये॒नाध्व॒रे॒णो॑पह्वयते ॥ २१ ॥

(त॒ऽ) उ॒पहू॑ते॒डा त॒तुरि॒रिति । त॒देनां प्र॒त्य॒क्ष॒मु॒पह्व॒यते त॒तुरि॒ति स॒र्वꣳ ह्ये॒षा पा॒प्मानं॑ त॒रति॒ त॒स्मादा॑ह त॒तुरि॒रिति॒ ॥ २२ ॥

---

यज्ञिया; यद्वै म इह रक्षांसि यज्ञं न हन्युः' इति । तामेतत्पुरा रक्षोभ्यः–पुरा रक्षोभ्य–इत्येवोपांशूपाह्वयत । तथो एवैनामेष एतत् पुरा रक्षोभ्यः–पुरा रक्षोभ्य–इत्येवोपांशूपह्वयते ॥ १८ ॥

स उपह्वयते । "उपहूतं रथन्तरं सह पृथिव्या, उप मां रथन्तरं सह पृथिव्या ह्वयताम् । उपहूतं वामदेव्यं सहान्तरिक्षेण, उप मां वामदेव्यं सहान्तरिक्षेण ह्वयताम्, उपहूतं बृहत् सह दिवा, उप मां बृहत सह दिवा ह्वयताम्–इति । तदेतामेवैतदुपह्वयमान इमांश्च लोकानुपह्वयते–एतानि च सामानि ॥ १९ ॥

उपहूता गावः सहर्षभा इति । पशवो वा इडा । तदेनां परोक्षमुपह्वयते । सहर्षभा इति–समिथुनामेवैनामेतदुपह्वयते ॥ २० ॥

"उपहूता सप्तहोत्रा"–इति–तदेनां सप्तहोत्रा सौम्येनाध्वरेणोपह्वयत ॥ २१ ॥

"उपहूतेडा ततुरिः"–इति–तदेनां प्रत्यक्षमुपह्वयते । ततुरिरिति । सर्वं ह्येषा पाप्मानं तरति–तस्मादाह ततुरिरिति ॥ २२ ॥

---

दुपांशूपह्वानं युज्यते । उपपूर्वो ह्वयतिरभ्यनुज्ञायां वर्तते–उपांश्वनुजानीत इत्यर्थः । **एतादिति**, 'बिभयाञ्चकार' भीतः–बिभ्यत्, पूर्ववद्व्याख्या । इयं हि इडा सर्वैः ऋत्विग्यजमानैर्विभज्य भक्षणीया, तत्र चोनातिरेकाशङ्का-निवृत्तये परस्परमनुज्ञातव्यम्; तच्चैतत्साधारणमेवानुज्ञातं मध्यमस्थानीयो होता सर्वैरन्वारब्धः करोति ॥ १८ ॥

**स उपह्वयते** । यदीडाऽनुज्ञातव्या, रथन्तरादीनां किमापतितम् ? अत आह–**तदेतामेवैतादिति** । इडाया एवैतानि रथन्तरादीनि पृथिव्यादीनि च रूपाणि, ततश्च तस्यामुपहूतायां तान्युपहूतानि भवन्ति,–तेषु चोपहूतेषु सोपहूता भवतीत्याधिदैविकीं विभूतिं ख्यापयितुं तद्द्वारेणैवोपह्वयते । तथा च क्वचिदाह–"तदेनां परोक्षमुपह्वयते" इति । **उप मां रथन्तरमिति**। सर्वत्र रथन्तरादिमयी इडा देवता, तां नार्हन्त्यननुज्ञाता मनुष्या भक्षयितुम्; अतः साऽनुज्ञाप्यते–**मामिति** । एतच्च तुल्यहेतुत्वात्सर्वेषामृत्विग्यजमानानां प्रदर्शनार्थम् ॥ १९ ॥

**उपहूता गावः** । प्रसन्नाश्चतस्रः । 'प्राणः' 'शरीरम्' इडाया एतद् द्रष्टव्यम् ॥२०॥२१॥२२॥२३॥

(त्यु) ऽउपहूतः सखा भक्ष ऽइति । प्राणो वै सखा भक्षस्तत्प्राणमुपह्वयत ऽउपहूतꣳ हेगिति तच्छरीरमुपह्वयते तत्सर्वामुपह्वयते ॥ २३ ॥

(तेऽथ) अथ प्रतिपद्यते । (तऽ) इडोपहूतोपहूतेडोपो ऽअस्माꣳ ऽइडा ह्वयतामिडोपहूतेति तदुपहूतामेवैनामेतत्सतीं प्रत्यक्षमुपह्वयते या वै सासीद्गौर्वै सासीच्चतुष्पदी वै गौस्तस्माच्चतुरुपह्वयते ॥ २४ ॥

स वै चतुरुपह्वयमानः । (नोऽ) अथ नानेवोपह्वयतेऽजामितायै जामि ह कुर्याद्यदिडोपहूतेडोपहूतेत्येवोपह्वयेतोपहूतेडेति त्वेडोपहूतेति तदर्वाचीमुपह्वयत ऽउपहूतेडेति तत्पराचीमुपो ऽअस्माꣳ ऽइडाह्वयतामिति तदात्मानं चैवैतन्नान्तरेत्यन्यथेव च भवतीडोपहूतेति तत्पुनरर्वाचीमुपह्वयते तदर्वाचीं चैवैनामेतत्पराचीं चोपह्वयते ॥ २५ ॥

मानवी घृतपदीति । मनुर्ह्येतामग्रेऽजनयत तस्मादाह मानवीति घृतपदीति यदेवास्यै घृतं पदे समतिष्ठत तस्मादाह घृतपदीति ॥ २६ ॥

उत मैत्रावरुणीति यदेव मित्रावरुणाभ्याꣳ समगच्छत स ऽएव मैत्रावरुणो न्यङ्गो ब्रह्म देवकृतोपहूतेति ब्रह्म ह्येषा देवकृतोपहूतोपहूतो

---

" उपहूतः सखा भक्षः "–इति । प्राणो वै सखा भक्षः–तत् प्राणमुपह्वयते । " उपहूतं हेग् "–इति । तत् शरीरमुपह्वयते । तत् सर्वामुपह्वयते ॥ २३ ॥

अथ प्रतिपद्यते " इडोपहूता–( १ ) उपहूतेडा–( २ ) उपो अस्माँ इडा ह्वयताम्–( ३ ) इडोपहूता–(४) "–इति । तदुपहूतामेवैनामेतत् । सतीं प्रत्यक्षमुपह्वयते । या वै सासीद्–गौर्वै सासीद् । चतुष्पदी वै गौः । तस्माच्चतुरुपह्वयते ॥ २४ ॥

स वै चतुरुपह्वयमानः–अथ नानेवोपह्वयते अजामितायै । जामि ह कुर्याद्–यद्–' इडोपहूता इडोपहूता '–इत्येवोपह्वयेत उपहूतेडेति वा । इडोपहूतेति–तदर्वाचीमुपह्वयते । उपहूतेडा–इति तत् पराचीम् । उपो अस्मानिडा ह्वयतामिति तदात्मानं चैवैतन्नान्तरेति, अन्यथेव च भवति । इडोपहूतेति–तत् पुनरर्वाचीमुपह्वयते । तद् अर्वाचीं चैवैनामेतत् पराचीं चोपह्वयते ॥ २५ ॥

" मानवी घृतपदी "–इति,–मनुर्ह्येतामग्रेऽजनयत, तस्मादाह–' मानवी '–इति । घृतपदी–इति,–यदेवास्यै घृतं पदे समतिष्ठत, तस्मादाह ' घृतपदी '–इति ॥ २६ ॥

"उत मैत्रावरुणी"–इति । यदेव मित्रावरुणाभ्यां समगच्छत । स एव मैत्रावरुणो न्यङ्गः

---

अथ प्रतिपद्यते । " अथोपांशूपह्वयते " इति यदुक्तम्, तस्यावच्छेदार्थम् ' अथ प्रतिपद्यते ' इत्याह । तेनेत ऊर्ध्वं यथाप्राप्तमुच्चैर्वक्तव्यम् ॥ २४ ॥

प्रसन्नाश्चतस्रोऽतः परम् । " वत्सा वै दैव्या अध्वर्यवः "–इति सान्नाय्यं हविः संभवति–अध्वर्युव-

---

१–' तस्य विच्छेदार्थम् ' ' तस्याविच्छेदार्थम् ' इत्यपि क्वचित् पाठः ।

दैव्या ऽअध्वर्य्यव ऽउपहूता मनुष्या ऽइति तद्देवांश्चैवैतदध्वर्यूनुपह्वयते ये च मानुषा व्वत्सा वै दैव्या ऽअध्वर्यवोऽथ य ऽइतरे ते मानुषाः ॥ २७ ॥

( ० ) य ऽइमं यज्ञमवान्ये च यज्ञपतिं व्वर्द्धानिति । ( त्ये ) एते वै यज्ञ-भवन्ति ये ब्राह्मणाः शुश्रुवाᳬंसोऽनूचाना ऽएते ह्येनं तन्वत ऽएत ऽएनं जनयन्ति तदु तेभ्यो निह्नुते व्वत्सा ऽउ वै यज्ञपतिं व्वर्द्धन्ति यस्य ह्येते भूयिष्ठा भवन्ति स हि यज्ञपतिर्व्वर्द्धते तस्मादाह ये च यज्ञपतिं व्वर्द्धानिति ॥ २८ ॥

( त्यु ) उपहूते द्यावापृथिवी पूर्व्वजे ऽऋतावरी देवी देवपुत्रे ऽइति । तदिमे द्यावापृथिवी ऽउपह्वयते ययोरिदᳬं सर्व्वमध्युपहूतोऽयं यजमान ऽइति तद्यजमानमुपह्वयते तद्यदत्र नाम न गृह्णाति परोऽक्षᳬं ह्यत्राशीर्यदिडायां मानुषᳬंह कुर्याद्यन्नाम गृह्णीयाद्व्यृद्धं वै तद्यज्ञस्य यन्मानुषं नेद्व्यृद्धं यज्ञे करवाणीति तस्मान्न नाम गृह्णाति ॥ २९ ॥

---

"ब्रह्मा देवकृतोपहूतेति"—ब्रह्म ह्येषां देवकृतोपहूता । "उपहूता दैव्या अध्वर्यवः, उपहूता मनुष्याः"—इति । तद् दैवांश्चैवैतद् अध्वर्यूनुपह्वयते, ये च मानुषाः । वत्सा वै दैव्या अध्वर्यवः, अथ य इतरे—ते मानुषाः ॥ २७ ॥

"य इमं यज्ञमवान्, ये च यज्ञपतिं वर्द्धान्"—इति,—एते वै यज्ञमवन्ति—ये ब्राह्मणाः शुश्रुवांसोऽनूचानाः । एते ह्येनं तन्वते, एत एनं जनयन्ति,—तदु तेभ्यो निह्नुते । वत्सा उ वै यज्ञपतिं वर्द्धन्ति—यस्य ह्येते भूयिष्ठा भवन्ति—स हि यज्ञपतिर्वर्द्धते । तस्मादाह—ये च यज्ञपतिं वर्द्धानिति॥२८॥

"उपहूते द्यावापृथिवी पूर्वजे ऋतावरी देवी देवपुत्रे"—इति । तदिमे द्यावापृथिवी उपह्वयते—ययोरिदं सर्वमधि । "उपहूतोऽयं यजमानः"—इति, तद् यजमानमुपह्वयते । तद्यदत्र नाम न गृह्णाति—परोक्षं ह्यत्राशीः—यदिडायाम् । मानुषं ह कुर्याद्—यन्नाम गृह्णीयात् । व्यृद्धं वै तद्यज्ञस्य—यन्मानुषम्, नेद् व्यृद्धं यज्ञे करवाणि—इति । तस्मान्न नाम गृह्णाति ॥ २९ ॥

---

दित्यभिप्रायः । इडां च भक्ष्यां भक्ष्यत्वेनानुज्ञाय भक्षयितॄननुजानीते—उपहूता दैव्या अध्वर्यव इत्यादिना ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

तत्राप्यविशेषेणानुज्ञाय विशेषत आग्नीध्रमनुजानीते—उपहूते द्यावापृथिवी इति । स हि द्यावापृथिव्यो रधिदैवरूपेणानुज्ञायते । उपहूतोयं यजमानः इति । यजमानस्य विशेषोपह्वानम्; परोक्षं ह्यत्राशीरिति । कथं परोक्षम् ? उत्तरस्यां देवयज्यायामुपहूत—इत्यनुज्ञामात्रमिह श्रूयते, नाशास्त इति; 'यत्त्वाशास्यते, तदनुज्ञातव्यम्' इति अनुज्ञया आशीर्गम्यत इत्यभिप्रायः । ततश्च यजमानोऽपि सामान्यरूपेणैव—यजमान इति वाच्यः, न विशेषरूपेण—देवदत्तो, यज्ञदत्त इति । तद् विस्पष्टं प्रत्यक्षं मानुषमित्यभिप्रायः ॥ २९ ॥

( त्यु ) उत्तरस्यां देवयज्यायामुपहूत इति । तदस्मा ऽएतज्जीवातुमेव परोऽक्षमाशास्ते जीवन्हि पूर्व्वमिष्ट्वाथापरं यजते ॥ ३० ॥

तदस्मा ऽएतत्प्रजामेव परोऽक्षमाशास्ते । यस्य हि प्रजा भवत्यमुं लोकमात्मनैत्यथास्मिँल्लोके प्रजा यजते तस्मात्प्रजोत्तरा देवयज्या ॥ ३१ ॥

तदस्मा ऽएतत्पशूनेव परोऽक्षमाशास्ते । यस्य हि पशवो भवन्ति स पूर्व्वमिष्ट्वाथापरं यजते ॥ ३२ ॥

भयसि हविष्कुरण ऽउपहूत ऽइति । तदस्मा ऽएतज्जीवातुमेव परोऽक्षमाशास्ते जीवन्हि पर्व्वमिष्ट्वाथ भूयोभूय ऽएव हविष्करोति ॥ ३३ ॥

तदस्मा ऽएतत्प्रजामेव परोऽक्षमाशास्ते । यस्य हि प्रजा भवत्येक ऽआत्मना भवत्यथोत दशधा प्रजया हविष्क्रियते तस्मात्प्रजा भूयो हविष्कुरणम् ॥ ३४ ॥

तदस्मा ऽएतत्पशनेव परोऽक्षमाशास्ते । यस्य हि पशवो भवन्ति स पूर्व्वमिष्ट्वाथ भूयोभूय ऽएव हविष्करोति ॥ ३५ ॥

---

"उत्तरस्यां देवयज्यायामुपहूतः"—इति, तदस्मा एतद् जीवातुमेव, परोक्षमाशास्ते । जीवन् हि पूर्वमिष्ट्वाऽथापरं यजते ॥ ३० ॥

तदस्मा एतत्प्रजामेव परोक्षमाशास्ते । यस्य हि प्रजा भवति—अमुं लोकमात्मनैति । अथास्मिन् लोके प्रजा यजते । तस्मात् प्रजोत्तरा देवयज्या ॥ ३१ ॥

तदस्मा एतत् पशूनेव परोक्षमाशास्ते । यस्य हि पशवो भवन्ति—स पूर्वमिष्ट्वाथापरं यजते ॥३२॥

" भूयसि हविष्करण उपहूतः "—इति, तदस्मा एतद् जीवातुमेव परोक्षमाशास्ते । जीवन् हि पूर्वमिष्ट्वाथ भूयोभूय एव हविष्करोति ॥ ३३ ॥

तदस्मा एतत्प्रजामेव परोक्षमाशास्ते । यस्य हि प्रजा भवति—एक आत्मना भवति,—अथोत दशधा प्रजया हविष्क्रियते । तस्मात्प्रजा भूयो हविष्करणम् ॥ ३४ ॥

तदस्मा एतत्पशूनेव परोक्षमाशास्ते । यस्य हि पशवो भवन्ति—स पूर्वमिष्ट्वाथ भूयो भूय एव हविष्करोति ॥ ३५ ॥

---

उत्तरस्याम् । यदिडायामुपहूतः, तद् ' उत्तरस्यां देवयज्यायामुपहूतः ' साऽपि इडाया एव विभूतिरित्यभिप्रायः । तदस्मा एतदिति । जीवनादीनामुत्तरेज्याहेतुत्वादुत्तरया देवेज्यया जीवनादीनि लक्ष्यन्ते—इति दर्शयति। यच्चाशास्यते तत्रोपह्वान युक्तमिति गम्यमानामाशिषं ' परोक्षमाशास्ते' इति दर्शयति । एतेन ' भूयो हविष्करणम् ' आशास्त इति व्याख्यातम्॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥

एषा वा ऽआशीः । ( जी ) जीवेयं प्रजा मे स्याच्छ्रियं गच्छेयमिति तद्य-त्पशूनाशास्ते तच्छ्रियमाशास्ते श्रीर्हि पशवस्तदेताभ्यामेवैतदाशीर्भ्याᳬं सर्वमाप्तं तस्माद्वा ऽएते ऽअत्र द्वे ऽआशिषौ क्रियेते ॥ ३६ ॥

देवा म ऽइदᳬं हविर्जुषन्तामिति । तस्मिन्नुपहूत ऽइति तद्यज्ञस्यैवैत-त्समृद्धिमाशास्ते यद्धि देवा हविर्जुषन्ते तेन हि महज्जयति तस्मादाह जुषन्तामिति ॥ ३७ ॥ [ शतम् ७०० ] ॥

तां वै प्राश्नन्त्येव । नाग्नौ जुह्वति पशवो वा ऽ इडा नेत्पशूनग्नौ प्रवृण-जामेति तस्मान्नाग्नौ जुह्वति ॥ ३८ ॥

प्राणेष्वेव हूयते । होतरि त्वद्यजमाने त्वदध्वर्य्यौ त्वदथ यत्पूर्वार्द्धं

---

एषा वा आशीः—जीवेयम्, प्रजा मे स्यात्, श्रियं गच्छेयम्—इति । तद्यत्पशूनाशास्ते—तच्छ्रियमाशास्ते । श्रीर्हि पशवः । तदेताभ्यामेवैतदाशीर्भ्यां सर्वमाप्तम् । तस्माद् वा एते अत्र द्वे आशिषौ क्रियेते ॥ ३६ ॥

"देवा म इदं हविर्जुषन्ताम्"—इति । तस्मिन् उपहूतः—इति तद्यज्ञस्यैवैतत्समृद्धिमाशास्ते । यद्धि देवा हविर्जुषन्ते—तेन हि महज्जयति । तस्मादाह—जुषन्तामिति ॥ ३७ ॥

तां वै प्राश्नन्त्येव. नाग्नौ जुह्वति । पशवो वा इडा—नेत् पशूनग्नौ प्रवृणजाम इति । तस्मान्नाग्नौ जुह्वति ॥ ३८ ॥

प्राणेष्वेव हूयते—होतरि त्वद्, यजमाने त्वद्, अध्वर्यौ त्वद् । अथ यत्पूर्वार्द्धं पुरोडाशस्य—प्रशीर्य

---

एषा वा आशीः । एषैव, नातोऽधिकाऽस्तीत्यभिप्रायः । तद्यत्पशूनिति । पशुग्रहणं श्रिय्युपलक्षणार्थमित्यभिप्रायः । तदेताभ्यामिति । यद्यपि जीवनादिलक्षणमेकमुभयत्राभिन्नम्, तथापि स्वरूपेणोत्तरस्या इज्याया बहुहविष्करणं भिद्यते; अल्पेनापि हविषा उत्तरस्या देवयज्याया उपपत्तेः ॥ ३६ ॥

देवा म इदं हविः । 'देवा मे इदं हविः' 'जुषन्ताम्' सेवन्ताम् । यो मनोरथो यजमानस्य तस्य 'तस्मिन्' अयमनुज्ञातः, सोऽस्य समृद्ध्यतामित्यर्थः । तद्यज्ञस्यैवैतदिति । हविर्जोषणद्वारेण यज्ञसमृद्धिफलमाशास्त इति दर्शयति ॥ ३७ ॥

तां वै प्राश्नन्त्येव । प्रसन्ना ॥ ३८ ॥

प्राणेष्वेव । त्वच्छब्दः समुच्चयार्थः । होत्रादिग्रहणं प्रदर्शनार्थम्, ब्रह्माग्नीध्रयोरपि[2]; "पञ्च प्राश्नन्ति"—

---

१—इदमिह पुरोडाशप्राशनमाशीराशासनञ्च संहितापाठे विपर्ययेणाम्नायेते । संहितायां तु—( १ ) संज्योतिषा ज्योतिरिति स्रुचो-र्ध्रुवया समञ्जनमन्त्रमाम्नाय—( २ ) मयीदमिन्द्र इत्याशीर्मन्त्रः, तदनन्तरम्—( ३ ) उपहूता पृथिवी—इति पुरोडाशप्राशनमन्त्रः, ततः—( ४ ) देवस्य त्वा इत्यादिः प्राशित्रप्रतिग्रहप्राशनमन्त्रः, ततः—( ५ ) एतं ते इत्यादिर्ब्रह्मजपमन्त्रः, ततः—( ६ ) एषा ते इति होत्रनुमन्त्रणमन्त्र आम्नायते । इत्थं कतिचित्प्रयोगेषु व्यत्यासो दृश्यते तथा स्रुचोर्ध्रुवया समञ्जनप्रयोगादूर्ध्वं येऽत्र शतपथे प्रयोग-मन्त्रा आख्यातास्ते पुरोडाशप्राशनात् प्राचीनाः केऽपि संहितायां न दृश्यन्त इति संहिताशतपथयोः प्रयोगविभेदः । २—'ब्रह्माग्नीध्रयोरपि ग्रहणे पञ्चसंख्या संपन्ना' इतीहाधिकं क. पाठः ।

पुरोडाशस्य प्रशीर्षं पुरस्ताद्ध्रुवायै निदधाति यजमानो वै ध्रुवा तद्यजमा-
नस्य प्राशितं भवत्यथ यत्प्रत्यक्षं न प्राश्नाति नेदसꣳस्थिते यज्ञे प्राश्ना-
नीत्येतदेवास्य प्राशितं भवति सर्वे प्राश्नन्ति सर्वेषु मे हुतासदिति पञ्च
प्राश्नन्ति पशवो वा ऽइडा पाङ्क्ता वै पशवस्तस्मात्पञ्च प्राश्नन्ति ॥ ३९ ॥

( न्त्य ) अथ यत्र प्रतिपद्यते । तच्चतुर्द्धा पुरोडाशं कृत्वा बर्हिषदं करोति
तदत्र पितॄणां भाजनेन चतस्रो वा ऽअवान्तरदिशोऽवान्तरदिशो वै पितर-
स्तस्माच्चतुर्द्धा पुरोडाशं कृत्वा बर्हिषदं करोति ॥ ४० ॥

---

पुरस्ताद्ध्रुवायै निदधाति—यजमानो वै ध्रुवा, तद्यजमानस्य प्राशितं भवति । अथ यत्प्रत्यक्षं न प्राश्नाति—' नेदसंस्थिते यज्ञे प्राश्नानि ' इति । एतदेवास्य प्राशितं भवति । सर्वे प्राश्नन्ति—सर्वेषु मे हुतासदिति । पञ्च प्राश्नन्ति । पशवो वा इडा, पाङ्क्ता वै पशवः—तस्मात् पञ्च प्राश्नन्ति ॥ ३९ ॥

अथ यत्र प्रतिपद्यते—तच्चतुर्धा पुरोडाशं कृत्वा बर्हिषदं करोति । तदत्र पितॄणां भाजनेन । चतस्रो वा अवान्तरादिशः । अवान्तरदिशो वै पितरः । तस्माच्चतुर्धा पुरोडाशं कृत्वा बर्हिषदं करोति ॥४०॥

---

इति वचनात् । **अथ यत्पूर्वार्द्धमिति** । पुनर्वचनं यजमानभागत्वज्ञापनार्थम् । **नेदसंस्थित** इति । नो संस्थिते; प्राश्नातीति वचनाद्गम्यते । ' अस्य ' यजमानस्य ' प्राशितं भवति ' इति । अग्नौ हुत्वाथ भक्षयति । " दैवो वा अस्यैष आत्मा मानुषोऽयम् "—इत्यनेन दर्शनेनावश्यं यजमानेन प्राशनीयमित्यभिप्रायः । **अथ यत्प्रत्यक्षमिति** । यजमानभागमनुपहूतं न प्राश्नाति; इडां तु विशेषत उपहूतां प्राश्नात्येवं । **नेदसंस्थिते** इति । अद्यापि अनुयाजपत्नीसंयाजदेवता नेज्यन्ते; तास्वनिष्टास्वयुक्तं स्वयमशनमित्यभिप्रायः । **एतदेवास्येति** । होमानन्तरमेव प्राशितं भवतीत्यभिप्रायः । अन्ते तु प्रत्यक्षमेव प्राशिष्यति; अप्राश्यमाने यजमाने भागत्वव्यपदेशानुपपत्तेः । " सर्वे प्राश्नन्ति " इडामिति सम्बध्यते ॥ ३९ ॥

**अथ यत्र प्रतिपद्यते** । ' यत्र ' काले होता ' प्रतिपद्यते ' " इडोपहूता "—इत्येतं निगदम् ' तत् ' तदा ' चतुर्द्धा कृत्वा पुरोडाशम् ' आग्नेयम्; " आग्नेयं चतुर्द्धा करोति "—इति शाखान्तरात् । बर्हिषि सीदतीति ' बर्हिषत् ' । यथा बर्हिषद् भवति, तथा करोति; बर्हिषि सादयतीत्यर्थः । ( तच्चतुर्द्धाकरणमाग्नेयस्य पुरोडाशस्य ब्रह्महोत्रध्वर्य्वग्नीधां भक्ष इति । एवं चतुःप्रकारं चतुर्द्धा, अयजमानाश्चत्वारः प्राश्नन्तीत्येव न पञ्च प्राश्नन्तीति विरोधः ) ' तत् ' चतुर्द्धा कृतस्य बर्हिषः सादनम्, ' अत्र ' दर्शपूर्णमासयोः ' पितॄणां भाजनेन हेतुना, क्रियत इति शेषः । पितॄणां संविभागार्थ इत्यर्थः । किं तत् पितृभ्यो दीयते ? नेत्याह । किन्तर्हि ? चतुस्सङ्ख्यासामान्याद् बर्हिस्सम्बन्धाच्चात्र भक्तिमात्रमेतत् । तदाह—**चतस्रो वा** इति । **अवान्तरदिशो वै पितर** इति । तासु हि पितृयज्ञेन तेभ्यो दीयते । **तस्मादिति** निगमः ॥ ४० ॥

---

१–" उपहूतामप्राश्नन्ति युक्ता यजमानश्च" इति का. श्रौ. सू. ३ । ४ । २२–२३ ॥ २–" इडोपहूतेत्युच्यमाने आग्नेयं बर्हिषदं करोति " इत्यादि–तं चतुर्धा कृत्वा बर्हिषि कल्पिताभ्य आदिशति–उभा वाऽविशेषात् " इति का. श्रौ. सू. ३।८१–८२–८३–८४॥ ३–वन्धनीकृतः पाठः क्वचिदेवोपलभ्यते । ४–" अत्र पितर इति यजमानो जपति " इत्यादि का. श्रौ. सू. ३ । ८५–९० ॥

( त्यु ) अथ यत्राहोपहूते द्यावापृथिवी ऽइति । तदग्नीध आदधाति तद-ग्नीत्प्राश्नात्युपहूता पृथिवी मातोप मां पृथिवी माता ह्वयतामग्निराग्नीध्रा-त्स्वाहोपहूतो द्यौष्पितोप मां द्यौष्पिता ह्वयतामग्निराग्नीध्रात्स्वाहेति द्यावा-पृथिव्यो वा ऽएष यदाग्नीध्रस्तस्मादेवं प्राश्नाति ॥ ४१ ॥

( त्यु ) अथ यत्राशिषमाशास्ते । तज्जपति मयीदमिन्द्र इन्द्रियं दधात्व-स्मान्रायो मघवानः सचन्ताम् ॥ अस्माकँ सन्त्वाशिषः सत्या नः सन्त्वाशिष ऽइत्याशिषामेवैष प्रतिग्रहस्तद्या ऽएवात्रऽर्त्विजो यजमानाया-शिष ऽआशासते ता ऽएवैतत्प्रतिगृह्यात्मन्कुरुते ॥ ४२ ॥

---

अथ यत्राह–' उपहूते द्यावापृथिवी ' इति । तदग्नीध आदधाति, तदग्नीत् प्राश्नाति । " उपहूता पृथिवी माता, उप मां पृथिवी माता ह्वयताम्, अग्निराग्नीध्रात् स्वाहा "–( वा० सं० २।१० ) " उपहूतो द्यौः पिता, उप मां द्यौः पिता ह्वयताम्, अग्निराग्नीध्रात् स्वाहा "–( वा० सं० २ । ११ ) इति । द्यावापृथिव्यो वा एषः–यदाग्नीध्रः, तस्मादेवं प्राश्नाति ॥ ४१ ॥

अथ यत्राशिषमाशास्ते–तज्जपति–' मयीदमिन्द्र इन्द्रियं दधातु, अस्मान् रायो मघवानः सचन्ताम् । अस्माकं सन्त्वाशिषः, सत्या नः सन्त्वाशिषः '–( वा० सं० २।१० ) इति । आशिषामेवैष प्रतिग्रहः । तद्या एवात्रर्त्विजो यजमानायाशिष आशासते–ता एवैतत्प्रति-गृह्यात्मन् कुरुते ॥ ४२ ॥

---

अथ यत्राहोपहूते । ' तदग्नीध आदधाति ' । आङ्पूर्वो दधातिः ( धा. जु. उ. १० ) अन्यत्र स्थापने प्रयुक्तोऽत्र तर्पणे द्रष्टव्यः ।

न चैष इडाभागः; किं तर्हि ? अन्य एवायमग्नीद्भागः; प्राशित्रञ्चेडा च, यच्चाग्नीध आदधातीतीडाया भेदेन व्यपदेशात् । एतेन ब्रह्मभागयजमानभागयोरपीडाव्यतिरेकः सिद्धः । ' द्यावापृथिव्यो वा एष यदाग्नीध्रः ' । अग्निमिन्धे दीपयति सम्मार्गेणेति ' अग्नीत् ' । अग्निसमिन्धनादियोगादाग्नीध्रस्य तत्परत्वम् । स इन्द्रः द्यावा-पृथिव्यौ तर्पयति । " धूमेनामूं वृष्टयेमाम् "–( ऋ. सं. १ । १६४ । ५१ । ) इति । धूमेन ' अमूं ' द्याम्, वृष्ट्या ' इमां ' पृथिवीमिति द्यावापृथिव्यौ आग्नीध्रः; तस्मिन् भक्षणादिना प्रीते सिद्धे, सिद्धा द्यावा-पृथिव्योः प्रीतिरिति ॥ ४१ ॥

अथ यत्राशिषम् । ' यत्र ' काले ' आशिषम् ' " उपहूतोऽयं यजमान उत्तरस्यां देवयज्यायाम् " इति होता ' आशास्ते ', ' तत् ' तदा जपति[२] । कः ? यजमानः, आशिषां तदर्थत्वात् । " तद्या एवात्र-र्त्विजो यजमानायाशिष आशासते, ता एवैतत् प्रतिगृह्यात्मन् कुरुते "–इति वाक्यशेषात् ॥ ४२ ॥

---

१–" प्राश्नन्नुपहूता पृथिवी इति " इति का. श्रौ. सू. ३ । ८९ । २–" आशासने मयीदमिति यजमानो जपति " इति का. श्रौ. सू. ३ । ९० ॥

( तेऽथ ) अथ पवित्रयोर्मार्जयन्ते । पाकयज्ञिययेव वा ऽएतादिडयाचारिषुः पवित्रपूता यदुत ऽऊर्ध्वमसꣳस्थितं यज्ञस्य तत्तनवामहा ऽइति तस्मात्पवित्रयोर्मार्ज्जयन्ते ॥ ४३ ॥

( न्तेऽथ ) अथ ते पवित्रे प्रस्तरेऽपिसृजति । यजमानो वै प्रस्तरः प्राणोदानौ पवित्रे यजमाने तत्प्राणोदानौ दधाति तस्मात्ते पवित्रे प्रस्तरेऽपिसृजति ॥ ४४ ॥ ३ ॥

इति षष्ठप्रपाठके तृतीयं ब्राह्मणम् ॥ ( ८ । १ )

ते वा ऽएते ऽउल्मुके ऽउदूहन्ति । ( न्त्य ) अनुयाजेभ्यो यातयामेव वा ऽएतदग्निर्भवति देवेभ्यो हि यज्ञमूहिवान्भवत्ययातयाम्न्यनुयाजांस्तनवामहा ऽइति तस्माद्वा ऽएते ऽउल्मुके ऽउदूहन्ति ॥ १ ॥

---

अथ पवित्रयोर्मार्जयन्ते । पाकयज्ञिययेव वा एतदिडयाचारिषुः—पवित्रपूता—यदत ऊर्ध्वमसंस्थितं यज्ञस्य—तत्तनवामहा इति । तस्मात्पवित्रयोर्मार्जयन्ते ॥ ४३ ॥

अथ ते पवित्रे प्रस्तरेऽपिसृजति । यजमानो वै प्रस्तरः, प्राणोदानौ पवित्रे; यजमाने तत् प्राणोदानौ दधाति । तस्मात्ते पवित्रे प्रस्तरेऽपिसृजति ॥ ४४ ॥

### अथानुयाजकर्म ।

ते वा एते उल्मुके उदूहन्ति—अनुयाजेभ्यः । यातयामेव वा एतदग्निर्भवति—देवेभ्यो हि यज्ञमूहिवान् भवति; अयातयाम्न्यनुयाजांस्तनवामहै—इति । तस्माद्वा एते उल्मुके उदूहन्ति ॥ १ ॥

---

**अथ पवित्रयोः** । 'पवित्रयोः' पवित्राभ्यामिति विभक्तिव्यत्ययः । कुतः ? 'पवित्रपूता यदतऽऊर्ध्वमसंस्थितं यज्ञस्य तत्तनवामहै'—इति वाक्यशेषात् । मार्जयन्ते[1] "मृजू शौचालङ्कारयोः" ( चुरा. उभ. ३१९ ) । चौरादिकत्वाण्णिच् ( पा. सू. ३ । १ । २९ ) । शोधयन्त्यात्मानमित्यर्थः ॥ ४३ ॥

**अथ ते पवित्रे** । 'यजमानो वै प्रस्तरः' इतरस्माद्बर्हिष उत्कृष्टतरत्वात् । 'प्राणोदानौ पवित्रे, द्वित्वाच्च । अपिसृजति 'संसृजति'[2] ॥ ४४ ॥ ३ ॥ ( ८ । १ )

श्रीमतोऽवन्तिनाथस्य विक्रमार्कक्षितीशितुः ।
धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम् ॥

इत्याचार्य—श्रीहरिस्वामिनः कृतौ शतपथभाष्ये हविर्यज्ञेषु अष्टमाध्याये प्रथमं ब्राह्मणम् ।

**ते वा एते उल्मुके** । अनुयाजब्राह्मणमेतत् । 'अथाग्निं कल्पयति'—इत्यस्मिन् ( श. प. ब्रा. ३ । ३ । १२ ) क्रमे उल्मुके[3] द्वे 'उदूहन्ति' ऊर्ध्वं नयन्ति—अग्नितः पृथक् कुर्वन्ति,—ऋत्विग्यजमानाः । साक्षादध्वर्युः,

---

१–"पवित्रयोर्मार्जयन्ते परेण वेदिं सुमित्रिया न इति" का. श्रौ. सू. ३ । ९२ ॥ २–"ते प्रस्तरे करोति" इति का. श्रौ. सू. ३ । ९३ ॥ ३–'उल्मुकं प्रज्वलत्काष्ठम्' इत्यमरः २ । ९ । ३० ॥

ते पुनरनुसꣳस्पर्शयन्ति पुनरेवैतदग्निमाप्याययन्त्ययातयामानं कुर्व-न्त्ययातयाम्नि यदुत ऽऊर्द्ध्वमसꣳस्थितं यज्ञस्य तत्तनवामहा ऽइति तस्मात्पुनरनुसꣳस्पर्शयन्ति ॥ २ ॥

( न्त्यु ) अथ समिधमभ्यादधाति । समिन्ध ऽएवैनमेतत्समिद्धे यदुत ऊर्द्ध्वमसꣳस्थितं यज्ञस्य तत्तनवामहा ऽइति तस्मात्समिधमभ्यादधाति॥३॥

ताꣳ होतानुमन्त्रयते । ( तऽ ) एषा ते ऽअग्ने समित्तया वर्द्धस्व चा च प्यायस्व ॥ वर्द्धिषीमहि च वयमा च प्यासिषीमहीति तद्यथैवादः समि-द्ध्यमानायान्वाहैवमेवैतदन्वाह तदेतद्धोतुः कर्म स यदि मन्येत न होता वेदेत्यपि स्वयमेव यजमानोऽनुमन्त्रयेत ॥ ४ ॥

---

ते पुनरनुसंस्पर्शयन्ति, पुनरेवैतदग्निमाप्याययन्ति–अयातयामानं कुर्वन्ति; अयातयाम्नि यदुत ऊर्ध्वमसंस्थितं यज्ञस्य–तत्तनवामहै–इति । तस्मात् पुनरनुसंस्पर्शयन्ति ॥ २ ॥

अथ समिधमभ्यादधाति–समिन्ध एवैनमेतत् । समिद्धे–यदुत ऊर्ध्वमसंस्थितं यज्ञस्य–तत्तन-वामहै–इति । तस्मात् समिधमभ्यादधाति ॥ ३ ॥

तां होताऽनुमन्त्रयते–" एषा ते अग्ने समित्–तया वर्द्धस्व चा च प्यायस्व, वर्द्धिषीमहि च वयमा च प्यासिषीमहि "–( वा० सं० २ । १४ ) इति । तद्यथैवादः समि-ध्यमानायान्वाह–एवमेवैतदन्वाह । तदेतद्धोतुः कर्म । स यदि मन्येत–' न होता वेद ' इति, अपि स्वयमेव यजमानोऽनुमन्त्रयेत ॥ ४ ॥

---

इतरे तदनुज्ञानेन । अथ कस्मान्न बहव एव साक्षादुद्वहन्ति ? एकेनोद्वहनेनैकस्यैव कर्तुरपेक्षितत्वात् । यथा चानु-याजयजने तेषां स्वव्यापारापेक्षं बहुत्वम्, एवमुद्वहनेऽपीति गम्यते । किमर्थमुद्वहन्ति ? ' अनुयाजेभ्यः ' अनु-याजार्थम् । कोऽनुयाजेषु तयोरुपयोगः ? इति चेत्, ' यातयामा ' गतरसः, गतवीर्यः 'एतत्' एतस्मिन्ननुयाज-काले अग्निर्भवति; ' देवेभ्य; ' यस्माद् ' यज्ञमूढवान् भवति ' ततश्च गतवीर्यत्वादनुयाजेष्वक्षमः स्यात् । आभ्यां प्रागुन्नीताभ्यां पुनः संसृष्टाभ्यामगतवीर्यो भविष्यतीत्यभिप्रायः । अत एवाग्निकल्पनकाले उद्वहन्तीति गम्यते । अनुयाजेभ्यः उल्मुके उत्सार्य देवयागायाग्निं कल्पयतीति हि तत्र युज्यते ॥ १ ॥

ते पुनरनु । अनुयाजेभ्य उल्मुके उत्सार्य देवयागेऽतीते पश्चात् ' संस्पर्शयन्ति ' सङ्गमयन्ति ॥ २ ॥

अथ समिधमभ्यादधाति । उल्मुकसमासेन पुनर्नवीकृतोऽग्निः ॥ ३ ॥

ताꣳ होता । समिधा सामिधेनीस्थानीयया च " एषा ते "–इत्यनयर्चा "एषा त इति होताऽनुमन्त्रयते" इति (का. श्रौ. सू. ३ । ६ । २) " समिध्यते "–इत्येतदादिभ्यां द्वाभ्यामाह । तदेतदिति । यस्मादेवमनुमन्त्रणा-त्मकं कर्म होतुः, नाध्वर्योः । ' स यजमानः ' ' होता न वेद इति मन्येत ', तदा स्वयमप्यनुमन्त्रयेत ॥ ४ ॥

( त्ता ) अथ सम्मार्ष्टि । युनक्त्येवैनमेतद्युक्तो यदुत ऊर्ध्वमसꣳस्थितं यज्ञस्य तद्वहादिति तस्मात्सम्मार्ष्टि सकृत्सकृत्सम्मार्ष्टि त्रिस्त्रिर्वा ऽअग्रे देवेभ्यः सम्मृजन्ति नेत्तथा करवाम यथा देवेभ्य ऽइति तस्मात्सकृत्सकृत्सम्मार्ष्ट्यजामितायै जामि ह कुर्याद्यत्त्रिः पूर्वं त्रिरपरं तस्मात्सकृत्सकृत्सम्मार्ष्टि ॥ ५ ॥

स सम्मार्ष्टि । ( थ्र्च्यु ) अग्ने वाजजिद्वाजं त्वा ससृवाꣳसं वाजजितꣳ सम्मार्ज्मीति सरिष्यन्तमिति वा ऽअग्र ऽआह सरिष्यन्निव हि तर्हि भवत्यथात्र ससृवाꣳसमिति ससृवेव ह्यत्र भवति तस्मादाह ससृवाꣳसमिति ॥ ६ ॥

( त्यु ) अथानुयाजान्यजति । या वा ऽएतेन यज्ञेन देवता ह्वयति याभ्य ऽएष यज्ञस्तायते सर्वा वै तत्ता ऽइष्टा भवन्ति तद्यत्तासु सर्वास्विष्टास्वथैतत्पश्चेवानुयजति तस्मादनुयाजा नाम ॥ ७ ॥

---

अथ सम्मार्ष्टि–युनक्त्येवैनमेतद्, युक्तो यदत ऊर्ध्वमसंस्थितं यज्ञस्य–तद्वहाद्–इति । तस्मात् संमार्ष्टि । सकृत् सकृत् संमार्ष्टि । त्रिस्त्रिर्वा अग्रे देवेभ्यः संमृजन्ति, नेत्तथा करवाम–यथा देवेभ्यः–इति–तस्मात् सकृत् सकृत् संमार्ष्टि–अजामितायै । जामि ह कुर्याद्–यत् त्रिः पूर्वं त्रिरपरम् । तस्मात् सकृत् सकृत् संमार्ष्टि ॥ ५ ॥

स संमार्ष्टि–"अग्ने वाजजिद् वाजं त्वा ससृवांसं वाजजितं संमार्ज्मि"–( वा०सं० २ । १४ ) इति । सरिष्यन्तमिति वा अग्र आह–सरिष्यन् इव हि तर्हि भवति । अथात्र–ससृवांसम्–इति–ससृवेव ह्यत्र भवति । तस्मादाह ससृवांसमिति ॥ ६ ॥

अथानुयाजान् यजति । या वा एतेन यज्ञेन देवता ह्वयति–याभ्य एष यज्ञस्तायते, सर्वा वै तत्ता इष्टा भवन्ति । तद् यत्तासु सर्वासु इष्टासु अथैतत् पश्चेवानुयजति, तस्मादनुयाजा नाम ॥ ७ ॥

---

अथ सम्मार्ष्टि । सम्मार्गो द्वाभ्यामुच्यते ॥ ५ ॥

स सम्मार्ष्टि । 'ससृवान्' ससृतवानिति प्राप्ते तकारलोपः ॥ ६ ॥

अथानुयाजान् । 'अत्रानुयाजविधिरुपक्रान्तः, तस्मात् "अनुयाजान् यजति"–इत्युपसंहरिष्यते । 'या वा एतेन'–इति निर्वचनम् ॥ ७ ॥

---

१–"सम्मार्ष्टि पूर्ववदपरिक्राम:सकृत्सकृत्ससृवाꣳसमिति" इति का. श्रौ. सू. ३ । १०४ । २–'ससृवांसं सरन्तम् ।" सृ गतौ इत्यस्माल्लिट् । तस्य क्वसुः' इति ससृवांसः प्रासवन्तः । इति च ऋ. सं. सा. भा. ॥ ३–'इह पूर्वं 'न चैष इडाभागः, किं तर्ह्यन्य ( स्य ) एवायमग्नीद्भागः–प्राशित्रं च इडा च यच्चाग्नीध आदध्यात्' इति पूर्वतनः पाठः पुनः क्वाचित्कत्वेन धृतः' इति ॥

( मा ) अथ यदनुयाजान्यजति । च्छन्दाᳬंसि वा ऽअनुयाजाः पशवो वै देवानां छन्दाᳬंसि तद्यथेदं पशवो युक्ता मनुष्येभ्यो वहन्त्येवं च्छन्दाᳬंसि युक्तानि देवेभ्यो यज्ञं वहन्ति तद्यत्र च्छन्दाᳬंसि देवान्त्समतर्पयन्नथ च्छन्दाᳬंसि देवाः समतर्पयंस्तदतस्तत्प्रागभूद्यच्छन्दाᳬंसि युक्तानि देवेभ्यो यज्ञमवाक्षुर्यदेनान्त्समतीतृपन् ॥ ८ ॥

( मा ) अथ यदनुयाजान्यजति । च्छन्दाᳬंसि वा ऽअनुयाजाश्छन्दाᳬंस्येवैतत्सन्तर्प्पयति तस्मादनुयाजान्यजति तस्माद्येन व्वाहनेन धावयेत्तद्विमुच्य ब्रूयात्पाययतैनत्सुहितं कुरुतेत्येष ऽउ व्वाहनस्यापह्नवः ॥ ९ ॥

स वै खलु बर्हिः प्रथमं यजति । तद्वै कनिष्ठं छन्दः सद्गायत्री प्रथमा छन्दसां युज्यते तद्ु तद्वीर्येणैव यच्छ्येनो भूत्वा दिवः सोममाहरत्तद्यथायथं मन्यन्ते यत्कनिष्ठं छन्दः सद्गायत्री प्रथमा छन्दसां युज्यतेऽथात्र यथायथं देवाश्छन्दाᳬंस्यकल्पयन्ननुयाजेषु नेत्पापवस्यसमसदिति ॥ १० ॥

---

अथ यदनुयाजान् यजति,—छन्दांसि वा अनुयाजाः, पशवो वै देवानां छन्दांसि। तद् यथेदं पशवो युक्ता मनुष्येभ्यो वहन्ति—एवं छन्दांसि युक्तानि देवेभ्यो यज्ञं वहन्ति। तद् यत्र छन्दांसि देवान् समतर्पयन्, अथ छन्दांसि देवाः समतर्पयन् । तदतस्तत् प्रागभूत्—यच्छन्दांसि युक्तानि देवेभ्यो यज्ञमवाक्षुः—यदेनान् समतीतृपन् ॥ ८ ॥

अथ यदनुयाजान् यजति—छन्दांसि वा अनुयाजाः, छन्दांस्येवैतत् संतर्पयति—तस्मादनुयाजान् यजति । तस्माद् येन वाहनेन धावयेत्—तद्विमुच्य ब्रूयात्—' पाययतैनत्, सुहितं कुरुत ' इति । एष उ वाहनस्यापह्नवः ॥ ९ ॥

स वै खलु बर्हिः प्रथमं यजति । तद् वै कनिष्ठं छन्दः सद् गायत्री प्रथमा छन्दसां युज्यते । तदु

---

अथ यदनुयाजान् इति अर्थवादसम्बन्धार्थः पुनरुपन्यासः । छन्दांसीति । यदा छन्दोभिर्देवास्तर्पिताः, अथोत्तरकालं देवैश्छन्दांसि, तार्पितानीतीतिहासः । तमधियज्ञं योजयति—' तद् ' ' अतः ' अनुयाजेभ्यः ' प्राग् ' वृत्तमधियज्ञम् । किं तत् ? यच्छन्दोभिर्देवास्तार्पितास्तस्यैतद्यज्ञे रूपं दर्शितम् । प्रयाजादौ स्विष्टकृदन्त इत्यर्थः ॥ ८ ॥

यस्तु द्वितीयो वृत्तान्तो देवैश्छन्दसां तर्पणम्, स यज्ञे दर्शनीयः; तदर्थमनुयाजा इज्यन्त इति दर्शयन्नाह—अथ यदनुयाजान् यजतीति ॥ ९ ॥

स वै खलु । उत्तरस्यां कण्डिकायां बर्हिषो जगतीत्वं वक्ष्यते, अस्यां तु जगत्या अनुयाजेषु प्राथम्यकारणमाह—तद्वै इति । तत्र सामिधेनीषु ' कनिष्ठम् ' अक्षरसङ्ख्ययाऽल्पतमं ' छन्दः ' ' गायत्री ' ' प्रथमा छन्दसां '

स वै खलु बर्हिः प्रथमं यजति । ( त्य ) अयं वै लोको बर्हिरोषधयो बर्हिरस्मिन्न्वेवैतल्लोक ऽओषधीर्दधाति ता ऽइमा ऽअस्मिँल्लोक ऽओषधयः प्रतिष्ठितास्तदिदꣳसर्व्वं जगदस्यां तेनेयं जगती तज्जगतीं प्रथमामकुर्व्वन् ११

( न्न ) अथ नराशꣳसं द्वितीयं यजति । ( त्य ) अन्तरिक्षं व्वै नराशꣳसः प्रजा वै नरस्ता इमा अन्तरिक्षमनु वावद्यमानाः प्रजाश्चरन्ति यद्वै व्वदति शꣳसतीति वै तदाहुस्तस्मादन्तरिक्षं नराशꣳसोऽन्तरिक्षमु वै त्रिष्टुप्तत्त्रिष्टुभं द्वितीयामकुर्व्वन् ॥ १२ ॥

---

तद् वीर्येणैव–यत् श्येनो भूत्वा दिवः सोममाहरत् । तद् अयथायथं मन्यन्ते यत्कनिष्ठं छन्दः सद् गायत्री प्रथमा छन्दसां युज्यते । अथात्र यथायथं देवाश्छन्दांस्यकल्पयन्–अनुयाजेषु; नेत् पापवस्यसम् असद्–इति ॥ १० ॥

स वै खलु बर्हिः प्रथमं यजति । अयं वै लोको बर्हिः, ओषधयो बर्हिः; अस्मिन्नेवैतल्लोके ओषधीर्दधाति । ता इमा अस्मिन् लोके ओषधयः प्रतिष्ठिताः, तदिदं सर्वं जगदस्याम् । तेनेयं जगती । तज्जगतीं प्रथमामकुर्वन् ॥ ११ ॥

अथ नराशंसं द्वितीयं यजति अन्तरिक्षं वै नराशंसः, प्रजा वै नरः–ता इमा अन्तरिक्षमनु वावद्य-

---

यज्ञेषु 'युज्यते' । 'तत्' तेन 'वीर्येण' 'यच्छ्येनो भूत्वा दिवः सोममाहरत्' । यच्च 'अयथायथं' अयथार्थं स्थानविपर्यासं 'मन्यन्ते' विद्वांसः । 'यद्' जगत्यां परिमाणतो ज्येष्ठायामेव तिष्ठमानायामल्पाक्षरा 'गायत्री प्रथमा युज्यते', तद् 'यथायथं' कर्तुमिह 'अनुयाजेषु' 'देवाः' जगतीं प्रथमाम् 'अकल्पयन्' । सा च जगती बर्हिरित्यभिप्रायः । किमर्थम् ? 'नेत् पापवस्यसमसत्' 'पापं' ज्येष्ठापेक्षया कनिष्ठम्, तत् पापमेव, 'वस्यसम्' प्रशस्यतरम्, यत् 'नेत्–असत्'; तदनुकाराच्च प्रजास्वपि यत्पापं वित्तबन्धुकर्मादिना, तद् 'वस्यसम्' वसुतरं, प्रशस्यतरमितरस्मादपापान्मा भूदिति ॥ १० ॥

यदि देवा यथायथमत्राकल्पयन्, एवं तर्हि जगती प्रथमं यष्टव्या, किं बर्हिषा ? एतदाशङ्क्य बर्हिषो जगतीत्वं वक्तुं बर्हिःशब्दप्रयोगे च कारणं वक्तुं पुनराह–**स वै खलु** इति । 'अयं वै लोको बर्हिः' येयं बर्हिराख्या देवताऽत्रेज्यते, एषा अयं लोकः । कथम् ? परिवृद्धो हि सः । एवमपि जगतीशब्देनैव युक्तम्, 'अयं लोको 'बर्हिः' यष्टुम्, किं बर्हिः–शब्देन ? अत आह–**ओषधयो बर्हिरस्मिन्नेवैतल्लोक ओषधीर्दधातीति** । 'बर्हिः–शब्देन जगत्यामपीज्यमानायामयं गुणो लभ्यत इत्यभिप्रायः । यद्ययं लोको बर्हिः, बर्हिश्च प्रथममिज्यते, ततः कथं यथायथं छन्दांसि कल्पितानि भवन्तीत्यत आह–**तदिदमिति** । अयमेव लोको जगत्सम्बन्धाद् 'जगती'; ततश्चास्मिन् लोके बर्हिषीज्यमाने जगती छन्दसां प्रथममिष्टा भवतीत्ययथायथपरिहारः । **तज्जगतीं प्रथमामिति** । "यद्बर्हिः प्रथममयजन् देवाः, तज्जगतीं प्रथमामकुर्वन्नेवं यथायथमकुर्वन्"–इतीतिहासशेषस्य पूर्वेण सम्बन्धः । 'तथो एवैष यद्बर्हिर्यजति, तज्जगतीं प्रथमां करोति । ततश्चापापवस्यसं यथायथं करोति'–इति चोपसंहार इतिहासस्य द्रष्टव्यः ॥ ११ ॥

**अथ नराशंसम्** । नरः प्रजाः शंसन्ति वदन्त्यस्मिन्निति 'अन्तरिक्षं नराशंसः' । 'अन्तरिक्षमु वै

---

१–'पापमेव सद् वस्यः–प्रशस्यतरम्–यज्ञे नेदमसत्'–इति क. पा. ।

(अ) अथाग्निरुत्तमः । (ओ) गायत्री वा अग्निस्तद्गायत्रीमुत्तमामकुर्वन्नेवं यथायथेन क्लृप्तेन च्छन्दाᳫँसि प्रत्यतिष्ठंस्तस्मादिदमपापवस्यसम् ॥ १३ ॥

देवान्यजेत्येवाध्वर्युराह । देवन्देवमिति सर्व्वेषु होता देवानां वै देवाः सन्ति च्छन्दाᳫँस्येव पशवो ह्येषां गृहा हि पशवः प्रतिष्ठो हि गृहाश्छन्दाᳫँसि वा ऽअनुयाजास्तस्माद्देवान्यजेत्येवाध्वर्युराह देवन्देवमिति सर्व्वेषु होता ॥ १४ ॥

---

मानाः प्रजाश्चरन्ति, यद्धै वदति—शसंतीति वै तदाहुः । तस्मादन्तरिक्षं नराशंसः । अन्तरिक्षमु वै त्रिष्टुप्—तत् त्रिष्टुभं द्वितीयामकुर्वन् ॥ १२ ॥

अथाग्निरुत्तमः । गायत्री वा अग्निः, तद्गायत्रीमुत्तमामकुर्वन् । एवं यथायथेन क्लृप्तेन छन्दांसि प्रत्यतिष्ठन्, तस्मादिदमपापवस्यसम् ॥ १३ ॥

'देवान् यज' इत्येवाध्वर्युराह, देवं देवमिति सर्वेषु होता । देवानां वै देवाः सन्ति छन्दांस्येव—पशवो ह्येषाम् । गृहा हि पशवः, प्रतिष्ठो हि गृहाः; छन्दांसि वा अनुयाजाः । तस्माद्—देवान् यजेत्येवाध्वर्युराह, देवं देवमिति सर्वेषु होता ॥ १४ ॥

---

त्रिष्टुप्'; मध्यमत्वादेकादशभागत्वाच्च । दश दिशः, आत्मनैकादश । रुद्रसंम्बन्धाद्वा—इहापि तथैवेतिहासोऽवियज्ञे उपसंहारार्थः । 'यन्नराशंसमयजन्, तत् त्रिष्टुभं द्वितीयामकुर्वन्; 'यन्नराशंसं यजति, तत् त्रिष्टुभं द्वितीयां करोति'—इति ॥ १२ ॥

**अथाग्निरुत्तमः** । अत्र यष्टव्य इति शेषः । गायत्री वा अग्निः' आग्नेयी[3] हि ॥ १३ ॥

**देवान् यजेत्येव** । बर्हिरादिषु यष्टव्येषु बर्हिर्यजेत्यादिरूपेन्द्रयाज्यावचने[3] चेदमुच्यते । 'देवान्'—इति बहुवचनान्तेन देवशब्देनाध्वर्युः प्रेष्यति; न बर्हिर्यजेत्यादिना । होतापि सर्वत्र 'देवंदेवमिति' आह, न बर्हिरायेव केवलमित्यर्थः[4] ।

ननु चोत्तरयोर्देवो देव इत्याह, न देवं देवमिति[5] ? सत्यमेवम् । यथा प्राप्ते त्वनुवदितव्ये देवंशब्दाद्वीप्साद्विर्वचनमेतत् (पा. सू. ३ । ३ । ११३) प्रातिपदिकनिर्देशमात्रपरं द्रष्टव्यम् । किं पुनः कारणं बर्हिरादिषु वक्तव्येषु देवान् आह ? यस्माच्छन्दोदेवत्या अनुयाजाः, 'छन्दांसि' च 'देवानां देवाः', परोक्षत्वाच्च देवशब्दः प्रशस्ततरः । अतः छन्दो वा गायत्र्यादिर्वा, तस्माद् देवान् यजेत्येवाध्वर्युराह—इत्येतमर्थं **'देवानां वै देवाः सन्ति'**—इत्यादिना दर्शयति । 'पशवो हि' इति देवत्वोपपत्तिः । पशूनाञ्च साक्षादेवत्वमसिद्धमिति 'गृहा हि पशवः' इत्याह । गृहभोगाः पशुमर्त[6] एवेति 'गृहाः' पशवः । गृहाणामप्यसिद्धं देवत्वमिति 'प्रतिष्ठो हि गृहाः'—इत्याह । प्रतितिष्ठन्त्यस्यामिति 'प्रतिष्ठा' शरणम्, गतिरित्यर्थः । यश्च यस्य शरणं गतिरत्यन्तोपकारी, स तस्य देव इति प्रसिद्धम् । "**तस्माद् देवान् यजेत्याह**" इत्युपसंहारः ॥ १४ ॥

---

१–एकादश हि रुद्रा मध्यमस्थानाश्चेत्यभिहितं निरुक्तादौ, तत्सम्बन्धात्त च्छन्दसोऽन्तीरक्षत्वमभिहितमित्याशयः । २–अग्निच्छन्दोगायत्र्येवात्राग्निपदेनोक्तेति भावः । ३–' बर्हिर्यजेत्यादिना होतापि सर्वत्र देवं देवमित्याह–इत्येतावन्मात्रम् क्वचित्पुस्तके । ४–" अतिक्रम्याश्राव्याह देवान्यजेति, यज यजेत्युत्तरौ, देवान्देवानिति वा सर्वत्र नियमशब्दाद्विकृतिदर्शनाच्च " इति का. श्रौ. सू. ३ । ५ । ६–९ ॥ ५–' इह प्रथमो बर्हिर्यागः–तत्र देवं इति समाम्नातम् । द्वितीयो नराशंसयागः–तृतीयः स्विष्टकृद्यागः, तत्रोभयत्रैव–देवः–इत्याम्नातम् । ६–पशुमन्त इति तु क्वाचित्कोऽपपाठ एवाभाति ।

व्वसुवने व्वसुधेयस्येति । देवताया ऽएव व्वषाक्क्रियते देवतायै हूयते न वा ऽअत्र देवतास्त्यनुयाजेषु देवम्बर्हिरिति तत्र नाग्निर्नेन्द्रो न सोमो देवो नराशꣳस ऽइति नात ऽएकञ्चन यो वा ऽअत्राग्निर्गायत्री स निदानेन ॥ १९ ॥

(ना) अथ यद्वसुवने व्वसुधेयस्येति यजति ।(त्य) अग्निर्वै व्वसुवनिरिन्द्रो व्वसुधेयोऽस्ति वै छन्दसां देवतेन्द्राग्नी ऽएवैवमु हैतद्देवताया ऽएव व्वषट्क्रियते देवतायै हूयते ॥ १६ ॥

---

"वसुवने वसुधेयस्येति"–देवताया एव वषट् क्रियते, देवतायै हूयते । न वा अत्र देवताऽस्ति–अनुयाजेषु–"देवं बर्हिः"–इति । तत्र नाग्निः, नेन्द्रः, न सोमो देवो "नराशंसः"–इति । नात एकंचन । यो वा अत्राग्निः–गायत्री स निदानेन ॥ १९ ॥

अथ यद् 'वसुवने' 'वसुधेयस्य' इति यजति । अग्निर्वै वसुवनिः, इन्द्रो वसुधेयः । अस्ति वै छन्दसां देवता–इन्द्राग्नी एव । एवमु हैतद् देवताया एव वषट्क्रियते, देवतायै हूयते ॥ १६ ॥

---

वसुवने वसुधेयस्येति । अनुयाजेषु सर्वेषु होता हेति सम्बन्धः । देवताया एवेति । कण्डिकाद्वयेनास्य पदद्वयस्यान्तरार्थव्याख्यानम्[1] । तस्योपक्रमः–सर्वत्रैव यागे 'देवतायै एव' होत्रा 'वषट् क्रियते' । 'देवतायै' एवाध्वर्युणा 'हूयते' एतदुचितम् । 'अत्र' तु 'अनुयाजेषु' प्रसिद्धा 'देवता' 'न अस्ति;' बर्हिर्नराशंसयोर्देवतात्वेनाप्रसिद्धेः, अग्नेश्च गायत्रीप्रधानत्वात् । तेन 'वसुवने' 'वसुधेयस्य'–इति शब्दाभ्यामग्निमिन्द्रञ्चोपादाय, ताभ्यां बर्हिरादीनुपलक्ष्य इन्द्राग्न्यात्मकेभ्यो बर्हिरादिभ्यो वषट् करोति होता, अध्वर्युश्च तदात्मकेभ्य एव जुहोतीत्युपसंहारः ॥ १९ ॥

अथ यद् । अग्निर्वै वसुवनिः । वसु हविर्लक्षणं वनति भजति, इतरद्वा यजमानेभ्यो ददद्भजतीति 'वसुवनिः' । 'इन्द्रो वसुधेयः' । वसूनि हवींषि धीयन्तेऽस्मिन्निति 'वसुधेयः', वसूनि वा दधाति ददातीति वा 'वसुधेयः' । "कृत्यल्युटो बहुलम्"–( पा. सू. ३. ३. ११३ ) इति कर्तर्यधिकरणे वा कृत्यः । ततः किम् ? देवतायै वषट् क्रियत इत्यभिप्रायः । ननु चात्र जगत्यादिभ्यश्छन्दोभ्यो बर्हिरादिशब्दकेभ्यो वषट् कर्तव्यमिन्द्राग्न्योः किमापतितम् ? नैष दोषः । इन्द्राग्निभ्यां प्रसिद्धदेवतारूपप्रतिपत्तये जगत्यादीन्येव लक्षयिष्यन्ते, यथा बर्हिरादिभिः । कथं पुनरिन्द्राग्निभ्यां जगत्यादीनि लक्ष्यन्तेऽसम्बद्धाभ्यामित्यत आह–अस्ति वै छन्दसामिति । प्राणेनेन्द्रेणाधिष्ठितया वाचा छन्दांस्यभिव्यज्यन्त इति 'इन्द्राग्नी एव देवता छन्दसाम्' । ततश्चाधिष्ठात्र्या देवतया शक्यान्यात्मरूपापन्नानि जगत्यादीनि लक्षयितुम् । एवमपि 'वसुवने' इत्यामन्त्रितान्तम्, 'वसुधेयस्य'–

---

१–विशेषव्याख्या, साधारणव्याख्या चेति व्याख्याद्वैविध्यमिहाभिप्रेतम् । तदिह विशेषव्याख्योपक्रान्ताऽपरकण्डिकायां समापयिष्यते । ततस्तस्या एव भाष्यान्ते साधारणव्याख्या चाभिधास्यते ॥

( तेऽथो ) अथोत्तममनुयाजमिष्ट्वा समानीय जुहोति प्रयाजानुयाजा वा ऽएते तद्यथैवादः प्रयाजेषु यजमानाय द्विषन्तं भ्रातृव्यं बलिँ हारयत्यत्र ऽआद्यं बलिँ हारयत्येवमेवैतदनुयाजेषु बलिँ हारयति १७॥४॥

इति षष्ठप्रपाठके चतुर्थं ब्राह्मणम्। [ ८। २ ]

षष्ठः प्रपाठकः ॥ ६ ॥ कण्डिका ॥ १११ ॥

---

अथोत्तममनुयाजमिष्ट्वा समानीय जुहोति। प्रयाजानुयाजा वा एते, तद् यथैवादः प्रयाजेषु यजमानाय द्विषन्तं भ्रातृव्यं बलिं हारयति—अत्र ऽ आद्यं बलिं हारयति—एवमेवैतदनुयाजेषु बलिं हारयति ॥ १७ ॥

---

इति षष्ठ्यन्तम्; ते कथम् ' बर्हिर्वेतु '—इति प्रथमान्तेन बर्हिरादिना सम्बद्ध्येते ? नैष दोषः। एव मु हैतादिति। ध्रुवं द्वे अप्येते विभक्ती व्यत्ययेन ( पा. सू. ३। १। ८९ ) चतुर्थ्यर्थवृत्ते दर्शयति। तथापि च नैव सामानाधिकरण्येन सम्बन्धः। कथं तर्हि ? बर्हिर्वेतु वसुवनि—वसुधेयाभ्यां वौषडिति बर्हिरात्मिका जगती पिबेत्वाज्यम्,—तस्यै एवेन्द्राग्निरूपायै वषडित्यर्थः। ननु चात्र याज्यायामुपपद्येताप्ययमर्थः, प्रैषे तु वषट्कार एव नास्ति—" देवं बर्हिः ०—३ वसुवने वसुधेयस्य यज " ( का. श्रौ. सू. १९। ६। १२ ) इति, तत्र कथमेकवाक्यता स्यात् ? नैष दोषः; तस्यापि हि यास्काचार्येण " वसुवननाय च वसुधानाय च " ( निरु. ९. ४. १० )—इति तादर्थ्यचतुर्थ्या एकवाक्यता दर्शिता। अथवा विनैव विभक्तिव्यत्ययादर्थो वक्तव्यः। हे भगवन्! ' वसुवने ' अग्ने! छन्दसो देवतां त्वदात्मकं त्वदनुगृहीतमेतद् देवं बर्हिःशब्दकं छन्दः ' वसुधेयस्य ' इन्द्रस्य स्वरूपमधिष्ठाय ' वेतु ' इति। एवमपि चेन्द्राग्निसम्बन्धकीर्तनमात्रादेव देवतायै वषट् क्रियत इत्यभिप्रायः। एवं तावदन्तरोऽर्थः। हे 'वसुवने' अग्ने! वसुधेयस्य प्रशस्यस्याज्यभागस्य 'वेतु' 'देवं बर्हिः'—इति बाह्योऽर्थः॥ १६॥

**अथोत्तमम्। प्रयाजानुयाजा वा एत** इति। प्राणादनपेतः ' प्रयाजः ' अपानादनपेतः ' अनुयाजः '। इति " प्राणा वै प्रयाजा अपाना अनुयाजाः " ( निरु. ८। ३। ७ ) इति प्राणापाननिवृत्तौ समानयनेन भवितव्यमित्यभिप्रायः ॥ १७ ॥ ४ ॥ ( ८। २ )

श्रीमतोऽवन्तिनाथस्य विक्रमादित्यभूपतेः।
धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम् ॥ १ ॥

इत्याचार्यश्रीहरिस्वामिनः कृतौ शतपथब्राह्मणभाष्ये हविर्यज्ञेषु अष्टमाध्यायस्य द्वितीयं ब्राह्मणम् ॥ ( ८—२ )॥

इति षष्ठप्रपाठकः समाप्तः ॥ ६ ॥

---

१—इत्येते मन्त्राः तै. ब्रा. ३। ५। ९। १-३। तै. सं. २। ६। ९। ११। इत्यत्र द्रष्टव्याः। २—मन्त्रस्थस्य ' वेतु ' पदस्यार्थोऽयम्। यास्कस्तु ' वीतां ' इत्यस्य ' पिबेतां कामयेतां वा ' इति द्विविधमर्थमुक्तवान्। निरु. ९। ४। १०॥ ३—' यजेति सम्प्रैषः ' इति तत्र तच्छेषः। ४—प्राणापाना एत इति सूचयति। तैश्च सहशैरेव भवितव्यमित्यभिप्रायः—इत्येतावन्मात्रमेतत्कण्डिकाव्याख्यानं क्वचित् पुस्तके :

## अथ प्रथमकाण्डे सप्तमप्रपाठके प्रथमं ब्राह्मणम् ।

स वै स्रुचौ व्यूहति । ( त्य ) अग्नीषोमयोरुज्जितिमनूज्जेषं वाजस्य मा प्रसवेन प्रोहामीति जुहूं प्राचीं दक्षिणेन पाणिनाग्नीषोमौ तमपनुदतां योऽस्मान्द्वेष्टि यं च वयं द्विष्मो वाजस्यैनं प्रसवेनापोहामीत्युपभृतं प्रतीचीᳬ सव्येन पाणिना यदि स्वयं यजमानः ॥ १ ॥

( नो ) यद्यु ऽअध्वर्युः । ( र ) अग्नीषोमयोरुज्जितिमनूज्जयत्वयं यजमानो वाजस्यैनं प्रसवेन प्रोहाम्यग्नीषोमौ तमपनुदतां यमयं यजमानो द्वेष्टि यश्चैनं द्वेष्टि वाजस्यैनं प्रसवेनापोहामीति पौर्णमास्यामग्नीषोमीयᳬ हि पौर्णमासᳬ हविर्भवति ॥ २ ॥

( त्यु ) अथामावास्यायाम् । (मि) इन्द्राग्न्योरुज्जितिमनूज्जेषं वाजस्य मा प्रसवेन प्रोहामीन्द्राग्नी तमपनुदतां योऽस्मान्द्वेष्टि यं च वयं द्विष्मो वाजस्यैनं प्रसवेनापोहामीति यदि स्वयं यजमानः ॥ ३ ॥

---

सूक्तवाक–शंयुवाक–कर्मारम्भः ।

स वै स्रुचौ व्यूहति–" अग्नीषोमयोरुज्जितिमनूज्जेषम्, वाजस्य मा प्रसवेन प्रोहामि "– ( वा. सं. २ । १५ ) इति–जुहूं प्राचीं दक्षिणेन पाणिना । " अग्नीषोमौ तमपनुदतां–योऽस्मान् द्वेष्टि, यं च वयं द्विष्मो, वाजस्यैनं प्रसवेनापोहामि "– ( वा. सं. २ । १५ ) इति–उपभृतं प्रतीचीं सव्येन पाणिना–यदि स्वयं यजमानः ॥ १ ॥

यद्यु अध्वर्युः–" अग्नीषोमयोरुज्जितिमनूज्जयत्वयं यजमानो, वाजस्यैनं प्रसवेन प्रोहामि, अग्नीषोमौ तमपनुदतां यमयं यजमानो द्वेष्टि, यश्चैनं द्वेष्टि, वाजस्यैनं प्रसवेनापोहामि "–इति पौर्णमास्याम् । अग्नीषोमीयं हि पौर्णमासं हविर्भवति ॥ २ ॥

अथामावास्यायाम् । " इन्द्राग्न्योरुज्जितिमनूज्जेषम्, वाजस्य मा प्रसवेन प्रोहामि ।

---

**स वै स्रुचौ व्यूहति** ।( " एत्य जुहूपभृतौ व्यूहति "इत्यादि का. श्रौ. सू. ३ । ११७ ) । 'ऊह–वितर्के' ( भ्वा. आ. ६४९ ) प्रेरणे त्वत्र द्रष्टव्यः । अन्योऽन्यविपरीतं नामयतीत्युपन्यासमधिकर्तुं व्यूहनस्य प्रेरकताद्यनेकगुणश्रुतेस्त्वेन्तावेव विधी मन्तव्यौ । **अग्नीषोमयोरि**ति । ( का. श्रौ. सू. ३ । ११७ ) । लिङ्गक्रमाभ्यां प्राप्तमन्त्रानुवादः । ' जुहूं प्राचीं दक्षिणेन पाणिना ' व्यूहतीत्यनुवर्तते । एष तावदेको विधिः, अपरोऽपि–' **उपभृतं प्रतीचीं सव्येन पाणिना** ' इति ( का. श्रौ. सू. ३ । ११७ ) । ' यदि स्वयं यजमानः '–इति, लिङ्गात् प्राप्तस्य यजमानस्यानुवादः ॥ १ ॥

एवमेव ' यद्यु अध्वर्युः ' इति ( " अध्वर्युर्वानूजयत्वयं " इत्यादि का. श्रौ. सू. ३ । ११९ ) मन्त्रोत्पत्ति-

---

१–' नामयतीत्युपन्यासमात्रमेतत्, अत्रानेक ( प्राप्तानेक ) गुणश्रुतेस्त्वन्तावेव विधी मन्तव्यौ ' इति क. पु. पाठः ।

( नो ) यद्यु ऽअध्वर्य्युः । ( रिं ) इन्द्राग्न्योरुज्जितिमनूज्जयत्वयं यजमानो व्वाजस्यैनं प्रसवेन प्रोहामीन्द्राग्नी तमपनुदतां यमयं यजमानो द्वेष्टि यश्चैनं द्वेष्टि व्वाजस्यैनं प्रसवेनापोहामीत्यमावास्यायामैन्द्राग्नꣳ ह्यामावास्यꣳ हविर्भवत्येवं यथादेवतं व्यूहति तद्यदेवं व्यूहति ॥ ४ ॥

यजमान ऽएव जुहूमनु । योऽस्मा ऽअरातीयति स ऽउपभृतमनु प्राञ्चमेवैतद्यजमानमुदूहत्यपाञ्चं तमपोहति योऽस्मा ऽअरातीयत्यत्तैव जुहूमन्वाद्य ऽउपभृतमनु प्राञ्चमेवैतदत्तारमुदूहत्यपाञ्चमाद्यमपोहति ॥ ५ ॥

तद्वा ऽएतत् । ( त्स ) समान ऽएव कर्म्मन्व्याक्रियते तस्मादु समानादेव पुरुषादत्ता चाद्यश्च जायेते ऽइदꣳ हि चतुर्थे पुरुषे तृतीये सङ्गच्छामह ऽइति व्विदेवं दीव्यमाना जात्या ऽआसत ऽएतस्मादु तत् ॥ ६ ॥

---

इन्द्राग्नी तमपनुदतां—योऽस्मान् द्वेष्टि, यं च वयं द्विष्मः,—वाजस्यैनं प्रसवेनापोहामि" ( वा. सं २ । १५ ) इति—यदि स्वयं यजमानः ॥ ३ ॥

यद्यु अध्वर्युः—' इन्द्राग्न्योरुज्जितिमनूज्जयत्वयं यजमानो—वाजस्यैनं प्रसवेन प्रोहामि । इन्द्राग्नी तमपनुदतां यमयं यजमानो द्वेष्टि, यश्चैनं द्वेष्टि,—वाजस्यैनं प्रसवेनापोहामि "—इति अमावास्यायाम् । ऐन्द्राग्नं ह्यामावास्यं हविर्भवति । एवं यथादेवतं व्यूहति । तद्यदेवं व्यूहति ॥ ४ ॥

यजमान एव जुहूमनु । योऽस्मा अरातीयति स उपभृतमनु । प्राञ्चमेवैतद् यजमानमुदूहति, अपाञ्चं तमपोहति—योऽस्मा अरातीयति । अत्तैव जुहूमनु । आद्य उपभृतमनु । प्राञ्चमेवैतद् अत्तारमुदूहति, अपाञ्चमाद्यमपोहति ॥ ५ ॥

तद्वा एतत् समान एव कर्मन् व्याक्रियते । तस्मादु समानादेव पुरुषाद् अत्ता चाद्यश्च जायेते । इदं हि—चतुर्थे पुरुषे तृतीये संगच्छामहे—इति विदेवं दीव्यमाना जात्या आसते—एतस्मादु तत् ॥ ६ ॥

---

परोऽध्वर्योरनुवादः । अनुवादे च सति यदि कालवचनः पौर्णमासीशब्दः, यदि वा कर्म्मवचनः—प्रयोगे न कश्चित् कर्मणि विशेषः ॥ २ ॥ ३ ॥

एवं यथादेवतं व्यूहतीत्यर्थवत्त्वाय विधिः । ततश्च " अग्नेरग्नीषोमयोरिति पौर्णमास्याम् ", " अग्नेर्विष्णोरिन्द्रस्येति" सान्नाय्ययाजिनोऽमावास्यायां प्रयोगः सिद्धः । ननु च या—या यत्र—यत्र देवता तां—तां तत्र—तत्रेत्यस्मिन्नर्थे अयमव्ययीभावः समासो यथादेवतमिति, ततश्च प्रयाजादिदेवताभिरपि व्यूहनं प्राप्नोति ? नैष दोषः । प्रधानदेवतं अग्निषोमावन्द्राग्नी याजकस्य । एवंशब्देन प्रधानदेवतालक्षणमिति प्रकारमतिदिशति । ततश्च प्रधानदेवताभिरेव व्यूहनम्, नान्याभिः; असर्वाभिरित्यर्थः ॥ ४ ॥

यजमानः । प्रसन्ना ॥ ५ ॥

तद्वा एतत् । यस्माद् ' एतत् ' ' समाने ' अभिन्ने, व्यूहनकर्मणि विलक्षणम् ' आक्रियते ' अभिव्यज्यते,

---

१–' इति पौर्णमास्यामित्याद्यपि लैङ्गिकया एव व्यवस्थया अनुवादः ' इत्यधिकं क. पु. । २–तयोरनुकरणस्य–क. पु. । ३–प्रकारमीतिदिश्यते–पा. । ४–' व्यूहेत । न सर्वाभिरित्यर्थः ' क. पु. पा. ।

मोक्तृत्वं भोग्यत्वञ्च; तस्माद्यज्ञानुकारेण भूतेष्वपि ' समानाद् ' अभिन्नात् पुरुषाद् ' अत्ता च ' भोक्ता च, ' आद्यश्च ' भोग्यश्च–भर्ता च भार्या च ' जायेते ' । यथा समाने कर्मणि जुहूप्रभृतौ तथैव[1] ।

ननु समानजातीययोर्विवाह एव नास्ति, कुतो भोक्तृभोग्यभावः ? पशुन्यायेन सति सापि कश्चिद्वर्तेत, न स यज्ञानुकार[2]ः स्यात् ; किं तर्हि ? यजमानैकतानुकारः स्यात् ? सत्यम् ; एवं व्यवहारस्य अन्याय्यस्यापि यज्ञमूलत्वात् । तमेव व्यवहा[3]रं दर्शयति–इदᳪह्यीति । ( यस्माद्[4] ' इदं ' प्रत्यक्षं विलक्षणम् ' आसते ' अधुनापि ' जात्याः ' समानजातीयाः ), ' दीव्यमानाः ' रममाणाः परितुष्टान्तःकरणाः नाकार्य्यकारिण इवापरिद्यूनाः ' आसते ' कथं दीव्यमानाः ? ' विदेवम् ' दिवेर्व्यवहारार्थस्य ( दिवा. पर. १ ) अन्योन्यं भोक्तारो भोग्यैः सह, भोग्या भोक्तृभिः सह ' दीव्यामहे ' व्यवहृत्य व्यवहृत्य । कथं व्यवहृत्य ? व्यवहर्तॄणामभिप्रायेण । व्यवहारं दर्शयति– ' इदं ' प्रत्यक्षमेव–विवाहेन वयं सङ्गच्छामहे । एकस्मादेव पुरुषान्मूलतः उत्पद्य, पुनरेव कुटुम्बारम्भेण समानापत्यारम्भेण च संयुज्यामह इति भर्तॄणां भार्याणां चाभिप्रायवचनम् । एवं व्यवहारं दीव्यमाना आसते । ते क्व पुनः सङ्गच्छामह इत्याहुः, किमनन्तर एव पुरुषे ? नेत्याह–' **चतुर्थे तृतीये** ' । वा–शब्दोऽत्र लुप्तनिर्दिष्टो द्रष्टव्यः; चतुर्थे वा तृतीये वेत्यर्थः । तथा च काण्वानां " तृतीये चतुर्थे वा "–इति श्रूयते । ( तृतीये पुरु[5]षे संगच्छामह इति, चतुर्थे सङ्गच्छामह इति च युज्यते । ) चतुर्थे सङ्गच्छामह इति सौराष्ट्राणां व्यवहारः । तृतीये सङ्गच्छामह इति दाक्षिणात्यानाम् । ते हि मातुलदुहितृषु पितृष्वसृपुत्रेषु सङ्गच्छन्ते । ते च मूलपुरुषाद् गण्यमानास्तृतीया भवन्ति । तत्रैतस्माल्लिङ्गादेव दीव्यमाना आसत इति । । तच्च न जात्याः न जातीयाः, सदृशाः, श्रेयसः कर्म्मणश्चतुरन्तरस्याभ्यन्तरा इत्यर्थः । ततः किम् ? एतस्मादेव स्रुग्व्यूहनात् कारणात् तथा भवतीति शेषः ॥

एवं चानुष्ठिते कथं विवहनमिति समुदये श्रुतितो निर्णयः । स्थाली चाङ्गाराश्चेकम्, स्रुक् च स्रुवश्चेत्येकम्, आहवनीयश्च समिच्चेत्येकम् ; आहुतिश्च स्वाहाकारश्चेत्येकम् ; इत्थं चत्वारः । चतुर्थे निवृत्ते तृतीये च निवृत्ते वयं सङ्गच्छामह इति शिष्टानां समुदयः । चतुर्थे प्रयाजे समानीय, पञ्चमेऽनुयाजे च समानीय, ततो व्यूहनमिति देशव्यवहृत्यनुसारात् ; न शास्त्रप्रवृत्तेः । यथा " मातुलस्य सुतां केचित् पितृस्वसृसुतादिकाम् । विवहन्ति क्वचिद्देशे सङ्कोच्यापि सपिण्डताम् " ( निर्ण. सि. धृतशातातपः ) इति । "आयाहीन्द्र पथिभिरीळितेभिर्यज्ञमिमं नो भागधेयं जुषस्व । तृप्तां जुहुर्मातुलस्येव योषा भागस्ते पैतृष्वसेयी वपामिव "–( ऋ.सं. १०।१०।९ ) इति ऋग्वेदे विवहनमेव । "असपिण्डा च या मातुरसगोत्रा च या पितुः । सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥ "[8] (मनुसं. ३ अ. ९. श्लो.) इति मनोः सङ्गत्या मूलतः षण्मिथुनान्यतीत्य विवहेदिति श्रौतं विवहनम् । "यो ह वा अग्निहोत्रे षण्मिथुनानि वेद, मिथुनेन मिथुनेन ह प्रजायते"–( श. प. ११ । २ । ९ । १ ) इति षण्मिथुनानि[9] । इत्थं मिथुनसंगत्या परिणयनमिति जात्यां[10]ः। न चेयं श्रुतिर्विवाहविषया[11], किन्त्वियत्सन्तानावध्य-

---

१–जुहूस्थानापन्नानां च शूर्पार्कपर्णदोहनौदुम्बरस्रुवादीनामपि व्यूहनं भवति । वसाहोमहवन्याश्च पृषदाज्योपभृतश्च उपभृत्स्थानापन्नात्वात् । का. श्रौ. सू. ३ । ५ । १३ इत्यस्य वृत्तिर्द्रष्टव्या । २–' पश्वान्न्यायेन सतिसापिण्ड्ये कश्चिद्वर्तेत–न स यज्ञानुकारी ' इति क. पु. पाठः । ३–' किं तर्हि ? समानजातीयेऽपि क्वचित् दीवनादि व्यवहारं ' इति क. पु. पा. । ४–'इदमासते–कथमासते ? ' इत्येव बन्धनीधृतपाठस्थाने क. पा. । ५–काण्वानां तृतीये पुरुषे संगच्छामह इति श्रूयते, चतुर्थे संगच्छामह इति युज्यते पा. । ६–बन्धनीधृतः पाठो नास्त्येव क्वचित् । ७–इतः परमयं षष्ठकण्डिकान्तो ग्रन्थो नास्ति क. । ८–मातुलकन्याद्युद्वाहनिषेधोऽपि तत्रैव म. सं. ११ अ. १७१–१७२ श्लो० ॥ ९–( १ मि. ) यजमानः, पत्नी च । ( २ मि. ) वत्सः, अग्निहोत्री च । ( ३ मि. ) स्थाली, अङ्गाराश्च । ( ४ मि. ) स्रुक्, स्रुवश्च । ( ५ मि. ) आहवनीयः, समिच्च । ( ६ मि. ) आहुतिः स्वाहाकारश्च ॥ १०–" सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु । आनुलोम्येन सम्भूता जात्या ज्ञेयास्त एव ते " इति म. सं. १० अ. ५ श्लो० ॥ ११–केचनानया शतपथश्रुत्या " मातुलस्य सुतामूढ्वा " इत्यादि शातातपप्रभृतिस्मृतिभिः प्रतिपादितस्य मातुल–

( ड ) अथ जुह्वा परिधीन्त्समनक्ति । यथा देवेभ्योऽहौषीद्यया यज्ञꣳ समतिष्ठिपत्तयैवैतत्परिधीन्प्रीणाति तस्माज्जुह्वा परिधीन्त्समनक्ति ॥ ७ ॥

स समनक्ति । व्वसुभ्यस्त्वा रुद्रेभ्यस्त्वादित्येभ्यस्त्वेत्येते वै त्रया देवा यद्वसवो रुद्रा ऽआदित्या ऽएतेभ्यस्त्वेत्येवैतदाह ॥ ८ ॥

( ढ ) अथ परिधिमभिपद्याश्रावयति । परिधिभ्यो ह्येतदाश्रावयति यज्ञो वा ऽआश्रावणं यज्ञेनैवैतत्प्रत्यक्षं परिधीन्प्रीणाति तस्मात्परिधिमभिपद्याश्रावयति ॥ ९ ॥

---

अथ जुह्वा परिधीन् समनक्ति । यया देवेभ्योऽहौषीद् यया यज्ञं समतिष्ठिपत्—तयैवैतत् परिधीन् प्रीणाति । तस्माद् जुह्वा परिधीन् समनक्ति ॥ ७ ॥

स समनक्ति—" वसुभ्यस्त्वा रुद्रेभ्यस्त्वादित्येभ्यस्त्वा "—(वा. सं. २ । १६ ।) इति। एते वै त्रया देवाः—यद् वसवो रुद्रा आदित्याः । एतेभ्यस्त्वेत्येवैतदाह ॥ ८ ॥

अथ परिधिमभिपद्याश्रावयति । परिधिभ्यो ह्येतदाश्रावयति । यज्ञो वा आश्रावणम्—यज्ञेनैवैतत् प्रत्यक्षं परिधीन् प्रीणाति—तस्मात्परिधिमभिपद्याश्रावयति ॥ ९ ॥

---

विभागप्रशंसा । यथा जुहूपभृतौ चिरकालं सह स्थिते, तथा तृतीयचतुर्थसन्तानावधि सह स्थितिः । ततः किम् ? ' एतस्माद् ' एवम्प्रकारेण स्रुग्व्यूहनात् ' तद् ' विवहनम् । ' उ ' इति " अथाप्युकार एतस्मिन्नेवार्थे उत्तरेण " ( निरु. १. २. ४. ) इति यास्कभणितेरुकारो विनिग्रहार्थीयः । एवं चात्र विनिग्रहार्थः । यथा—मूलात् षडतीत्य ततो विवहनम् । मूलात् षष्ठे च पञ्चातीत्य, इत्येवं प्रदर्शनपरम् स्त्रीमिथुने पुम्मिथुने चेति 'तत्' तथा भवतीति विशेषः ॥ ६ ॥

**अथ जुह्वा** । ' समनक्ति ' संस्नेहयति । जुह्वा ' स्रुक्—पात्रेण, अर्थात्तद्गतेनाज्येन । **यया देवेभ्य** इति । परिधयोऽपि ह्यग्नयो देवाः , तेऽपि देवपात्रेण देवान्नमर्हन्ति; पालयित्वा तु न समग्रमित्यभिप्रायः ' अहौषीत् ' हुतवानध्वर्युः । ' समतिष्ठिपत् ' संस्थापितवान् ॥ ७ ॥

**स समनक्ति** । त्रय एते मन्त्राः । एषामेकैकेन एकैकमुपधानक्रमेण यथाक्रममनक्ति । ' एतेभ्यस्त्वेत्येवैतदाह इत्यपि प्रत्येकाभिप्रायम् । वसुभ्यो देवेभ्योऽर्थाय त्वामनज्मि । त्वयि पार्थिवाग्न्यात्मके तृप्ते पार्थिवा वसवस्तृप्यन्ते; वस्वर्थं त्वामनज्मीत्यर्थः । एवमुत्तरत्रापि योज्यम् ॥ ८ ॥

**अथ परिधिम्** । ' अभिपद्य ' अभिगम्य, हस्तेनालभ्येत्यर्थः[२] ।

**परिधिभ्यो हीति** । ननु सूक्तवाकप्रैषायैतदाश्रावयति, तद्द्वारेण च सूक्तवाकदेवताभ्यः, प्रस्तराय वा, परिधीनां किमापतितम् ? सत्यमेतत् । तद्देवत्वाद्यज्ञार्हाः परिधयः, तेन प्रसिद्धयज्ञोपकरणेनाश्रावणेन परार्थेनारो-

---

—कन्यामातुलगोत्रजकन्यापरिणयननिषेधस्य बाधमिच्छन्ति । परं तत्तेषामज्ञानं वा स्वीयानाचारस्य शास्त्रीयत्वस्थापनार्थं बुद्धिपूर्वको दुराग्रहः । यतः अस्याः शतपथश्रुतेर्लौकिकार्थवादघटितत्वेन तादृशार्थवादकल्पितश्रुत्या प्रत्यक्षस्मृतिबाधस्यानुचितत्वात् । अलौकिकार्थवादश्रुत्याकल्पितश्रुत्यैव स्मृतिबाध इति पूर्वतन्त्रराद्धान्तात् ॥

१—" अभ्युक्ष्य जुह्वा परिधीननक्ति यथापूर्वं वसुभ्य इति प्रतिमन्त्रं " इति का. श्रौ. सू. ३ । ५ । १० ॥ २—" प्रथमं परिधिं गृहीत्वाऽऽश्राव्याहेषितेति " इत्यादि का श्रौ. सू. ३ । ६ । २ ॥

स ऽआश्राव्याह । ( हे ) इषिता दैव्या होतार ऽइति दैव्या वा ऽएते होतारो यत्परिधयोऽग्नयो हीष्टा दैव्या होतार ऽइत्येवैतदाह यदाहेषिता दैव्या होतार ऽइति भद्रवाच्यायेति स्वयं वा ऽएतस्मै देवा युक्ता भवन्ति यत्साधु वदेयुर्यत्साधु कुर्युस्तस्मादाह भद्रवाच्यायेति प्रेषितो मानुषः सूक्तवाकायेति तदिमं मानुषꣳहोतारꣳसूक्तवाकाय प्रसौति ॥ १० ॥

( त्यु ) अथ प्रस्तरमादत्ते । यजमानो वै प्रस्तरस्तद्यत्रास्य यज्ञोऽगं-स्तदेवैतद्यजमानꣳ स्वगाकरोति देवलोकं वा ऽअस्य यज्ञोऽगन्देवलोक-मेवैतद्यजमानमपिनयति ॥ ११ ॥

स यदि वृष्टिकामः स्यात् । ( दे ) एतेनैवाददीत सञ्जानाथां द्यावापृथिवी ऽइति यदा वै द्यावापृथिवी सञ्जानातेऽथ वर्षति तस्मादाह सञ्जानाथां द्यावापृथिवी ऽइति मित्रावरुणौ त्वा वृष्ट्यावतामिति तद्यो वर्षस्येष्टे स

---

स आश्राव्याह–" इषिता दैव्या होतारः "–इति । दैव्या वा एते होतारो–यत्परिधयः; अग्नयो हीष्टा दैव्या होतारः–इत्येवैतदाह–यदाह–'इषिता दैव्या होतारः' इति। "भद्रवाच्याय"–इति । स्वयं वा एतस्मै देवा युक्ता भवन्ति–यत् साधु वदेयुः–यत्साधु कुर्युः–तस्मादाह–भद्रवाच्यायेति । " प्रेषितो मानुषः, सूक्तवाकाय "–इति । तदिमं मानुषं होतारं सूक्त-वाकाय प्रसौति ॥ १० ॥

अथ प्रस्तरमादत्ते । यजमानो वै प्रस्तरः । तद् यत्रास्य यज्ञोऽगन्–तदेवैतद् यजमानं स्वगा-करोति । देवलोकं वा अस्य यज्ञोऽगन्,–देवलोकमेवैतद् यजमानमपि नयति ॥ ११ ॥

स यदि वृष्टिकामः स्यात्–एतेनैवाददीत–" संजानाथां द्यावापृथिवी "–( वा. सं. २. १६ )

---

प्यालम्य क्रियमाणेन लेशतो यज्ञभाजः कृता भवन्तीत्युपकारमात्रलक्षणार्था तादर्थ्ये चतुर्थी प्रयुक्ता । प्रत्यक्षम-व्यभिचारि यज्ञरूपमाश्रावणम्, तेन ' एतत् प्रत्यक्षम् ' यो यज्ञः; जुहूस्तु होमेष्वपि यज्ञेष्वपि भवतीति तन्न तथा प्रत्यक्षः जुह्वाञ्जने यज्ञः ॥ ९ ॥

**स आश्राव्याह** । ' दैव्या वा एते होतारो यत्परिधयः ' इति प्रतिज्ञा । ' अग्नयो ही ' ति हेतुवचनम् । ' इष्टाः ' इति इषितव्याः इच्छायाः स्थानम् ' अवीष्टाः '–सान्विता इत्यर्थः ॥ १० ॥

**अथ प्रस्तरम्** । ' स्वगा ' अव्ययमेतत्, स्वस्थानगामिवचनम्, स्वस्थानगामिनं करोतीत्यर्थः । ' अगन्' अगमत्, गत इत्यर्थ. । ' अपिनयति ' सन्नयति[२] ॥ ११ ॥

**स यदि वृष्टिकामः** । काम्यतया मन्त्रं विधाय नित्यतयापि तमेव विधत्ते–समेतेनैवाददीतेति । यदा

---

१–स्वगाशब्दः स्वागतार्थो वैदिकभाषाशब्दः । स्वगा–करोति–स्वागतं करोतीत्यर्थः ॥ " स्वगा स्वाधीनं तै. सं. १ । ४ । ४४ । ५ सा. भा. ॥ २–" सञ्जानाथामिति प्रस्तरादानं " इति का. श्रौ. सू. ३ । ६ । ४ ।

त्वा व्वृष्ट्यावत्वित्त्येवैतदाहायं वै व्वर्षस्येष्टे सोऽयं पवते सोऽयमेक इवैव पवते सोऽयं पुरुषेऽन्तः प्रविष्टः प्राङ्च प्रत्यङ्च ताविमौ प्राणोदानौ प्राणोदानौ वै मित्रावरुणौ तद्य एव व्वर्षस्येष्टे स त्वा व्वृष्ट्यावत्वित्त्येवैतदाह तमेतेनैवाददीत यदा ह्येव कदा च व्वृष्टिः सामिव तमनक्त्याहुतिमेवैतत्करोत्याहुतिर्भूत्वा देवलोकं गच्छादिति ॥ १२ ॥

स वा ऽअग्रं जुह्वामनक्ति । मध्यमुपभृति मूलं ध्रुवायामग्रमिव हि जुहूर्मध्यमिवोपभृन्मूलमिव ध्रुवा ॥ १३ ॥

सोऽनक्ति । व्यन्तु व्वयोक्तꣳ रिहाणा ऽइति व्वय ऽएवैनमेतद्भूतमस्मान्मनुष्यलोकाद्देवलोकमभ्युत्पातयति तन्नीचैरिव हरति द्वयं तद्यस्मान्नीचैरिव हरेद्यजमानो वै प्रस्तरोऽस्या एवैनमेतत्प्रतिष्ठायै नोद्धन्तीहो एव व्वृष्टिं नियच्छति ॥ १४ ॥

---

इति । यदा वै द्यावापृथिवी संजानाते—अथ वर्षति । तस्मादाह—' संजानाथां द्यावापृथिवी ' इति । " मित्रावरुणौ त्वा वृष्ट्यावताम् "—( वा. सं. २. १६ ) इति । तद्यो वर्षस्येष्टे—स त्वा वृष्ट्यावतु—इत्येवैतदाह । अथ वै वर्षस्येष्टे योऽयं पवते । सोऽयमेक इवैव पवते, सोऽयं पुरुषेऽन्तः प्रविष्टः प्राङ् च प्रत्यङ् च । ताविमौ प्राणोदानौ; प्राणोदानौ वै मित्रावरुणौ । तद्य एव वर्षस्येष्टे स त्वा वृष्ट्यावतु—इत्येवैतदाह । तमेतेनैवाददीत। यदा ह्येव कदा च वृष्टिः सामिव तमनक्ति—आहुतिमेवैतत् करोति । आहुतिर्भूत्वा देवलोकं गच्छाद्—इति ॥ १२ ॥

स वा अग्रं जुह्वामनक्ति, मध्यमुपभृति, मूलं ध्रुवायाम् । अग्रमिव हि जुहूः, मध्यमिवोपभृत्, मूलमिव ध्रुवा ॥ १३ ॥

सोऽनक्ति—" व्यन्तु वयोऽक्तं रिहाणाः "—( वा. सं. २. १६ ) इति । वय एवैनमेतद्भूतम् । अस्माद् मनुष्यलोकाद् देवलोकमभ्युत्पातयति तन्नीचैरिव हरति, द्वयं तद्—यस्मान्नीचैरिव हरेत्; यजमानो वै प्रस्तरः—अस्या एवैनमेतत् प्रतिष्ठायै नोद्धन्ति—इहो एव वृष्टिं नियच्छति ॥ १४ ॥

---

ह्येवेति । सर्वदैव वृष्टिः सुखम्, ततश्च सर्व एव वृष्टिकाम इत्यभिप्रायः । ततश्च स्वर्गादिकामेनाप्यविरुद्धत्वात् प्रयोक्तव्य एवैषः । आहुतिमेवैतदिति । अञ्जनेनायं होमयोग्यो भवतीत्यभिप्रायः ॥ १२ ॥

स वा अग्रम् । ' अग्रं ' अग्रमिव जुहूः सा ह्युपभृतं हित्वाहवनीयं यावद्याति । ' मध्यम् ' मध्यमिवोपभृत्; सापि हि वेदेरङ्गजतिस्थानं यावदुत्क्रामति । ' मूलम् ' मूलमिव ध्रुवा, न हि सा चलति क्वचित् ॥ १३ ॥

सोऽनक्ति । ' व्यन्तु ' खादन्तु इमं प्रस्तरं देवाः येभ्यो होष्यते । कीदृशम् ? वयः पक्षिभूतं गतं सत्, तेनाहवनीयं द्युलोकं वा—इत्येवं मन्त्रार्थं ' वय एवैनम् '—इति दर्शयति ॥ १४ ॥

---

१—" अग्रञ्जुह्वामुपभृति मध्यम्मूलमितरस्याम् " इति का. श्रौ. सू. ३ । ६ । ६ । ७ ॥

स हरति । मरुतां पृषतीर्गच्छेति देवलोकं गच्छेत्येवैतदाह यदाह मरुतां पृषतीर्गच्छेति वशा पृश्निर्भूत्वा दिवं गच्छ ततो नो वृष्टिमावहेतीयं वै वशा पृश्निर्यदिदमस्यां मूलि चामूलं चान्नाद्यं प्रतिष्ठितं तेनेयं वशा पृश्निरियं भूत्वा दिवं गच्छेत्येवैतदाह ततो नो वृष्टिमावहेति वृष्टाद्वा ऽऊर्ग्रसः सुभूतं जायते तस्मादाह ततो नो वृष्टिमावहेति ॥ १५ ॥

(त्य) अथैकं तृणमुपगृह्णाति । यजमानो वै प्रस्तरः स यत्कृत्स्नं प्रस्तरमनुप्रहरेत्क्षिप्रे ह यजमानोऽमुं लोकमियात्तथो ह यजमानो ज्योग्जीवति यावद्वेवास्येह मानुषमायुस्तस्मा ऽएवैतदुपगृह्णाति ॥ १६ ॥

तन्मुहूर्त्तं धारयित्वानुप्रहरति । तद्यत्रास्येतर ऽआत्मागंस्तदेवास्यैतद्गमयत्यथ यन्नानुप्रहरेदन्तरियाद्ध यजमानं लोकात्तथो ह यजमानं लोकान्नान्तरेति ॥ १७ ॥

---

स हरति– " मरुतां पृषतीर्गच्छ "–( वा. सं. २. १६ ) इति । देवलोकं गच्छ–इत्येवैतदाह– यदाह 'मरुतां पृषतीर्गच्छ' इति । " वशा पृश्निर्भूत्वा दिवं गच्छ ततो नो वृष्टिमावह "–( वा. सं. २. १६ ) इति । इयं वै वशा पृश्निः–यदिदमस्यां मूलि चामूलं चान्नाद्यं प्रतिष्ठितम् । तेनेयं वशा पृश्निः । इयं भूत्वा दिवं गच्छ–इत्येवैतदाह । ततो नो वृष्टिमावह–इति । वृष्टाद्वा ऊर्ग्रसः, सुभूतं जायते; तस्मादाह–ततो नो वृष्टिमावह–इति ॥ १५ ॥

अथैकं तृणमपगृह्णाति । यजमानो वै प्रस्तरः । स यत्कृत्स्नं प्रस्तरमनुप्रहरेत्–क्षिप्रे ह यजमानोऽमुं लोकमियात्; तथो ह यजमानो ज्योग् जीवति यावद् उ एवास्येह मानुषमायुः–तस्मा एवैतदपगृह्णाति ॥ १६ ॥

तन्मुहूर्तं धारयित्वाऽनुप्रहरति । तद्यत्रास्येतर आत्मागन्, तदेवास्यैतद्गमयति । अथ यन्नानुप्रहरेद्–अन्तरियाद्ध यजमानं लोकात्; तथो ह यजमानं लोकान्नान्तरेति ॥ १७ ॥

---

**स हरति** । इयं भूत्वेति । यथेयं पृथिवी मूल्यमूला अन्नसंस्पृष्टा 'पृश्निः', तद्योगाच्च वशा वश्या काम्या; [illegible] चर्मापि दर्भमयत्वान्मूलिनान्तेनोपेतः, कृतेन वा मूलेन; ततश्च 'इयमिव भूत्वा'–इत्येतमर्थमनेनाह । 'वृष्टाद्वा ऊर्ग्रसः' 'सुभूतं' भूतानां समृद्धिः–'जायते' इति वृष्ट्यावाहनप्रयोजनम् ॥ १५ ॥

**अथैकं तृणम्** । यदेकं तृणमपगृह्णाति, तथा क्रियमाणे 'यजमानः' 'ज्योक्' 'चिरं' 'जीवति' । एवं यावत् कृत्यानुप्रहरणकृतदोषपरिहारायापगृह्णाति इत्युक्तम्, अधुना त्वन्यकृतोऽप्यायुषः क्षयोऽत्र तेनापग्रहणेन रक्ष्यत इत्याह–**यावद्वेवेति** । उ–शब्दश्चार्थे । 'यावत्' च 'इह' लोके, 'अस्य' 'मानुषम्' पूर्वकर्मोपात्तम् 'आयुः' 'तस्मै एव एतदपगृह्णाति' इति । एवशब्दः समुच्चये ॥ १६ ॥

**तन्मुहूर्तम्** । प्रसन्ना ॥ १७ ॥

---

१–" मरुतामिति नोर्चर्हरत्वा " इति का० श्रौ० सू० ३।३।७ ॥ २–" तृणमादायानुप्रहरति " इति का० श्रौ० सू० ३।६।७॥

तं प्राञ्चमनुसमस्यति । प्राची हि देवानां दिगथो ऽउदञ्चमुदीची हि मनुष्याणां दिक्तमङ्गुलिभिरेव योयुप्येरन्न काष्ठैर्दारुभिर्वा ऽइतरꣳ शवं व्यृषन्ति नेत्तथा करवाम यथेतरꣳ शवमिति तस्मादङ्गुलिभिरेव योयुप्येरन्न काष्ठैर्यदा होता सूक्तवाकमाह ॥ १८ ॥

( हा ) अथाग्नीदाहानुप्रहरेति । तद्यत्रास्येतर ऽआत्मागंस्तदेवास्यैतद्गमयेत्येवैतदाह तूष्णीमेवानुप्रहृत्य चक्षुष्पा ऽअग्नेऽसि चक्षुर्मे पाहीत्यात्मानमुपस्पृशति तेनो ऽअप्यात्मानं नानुप्रवृणक्ति ॥ १९ ॥

( त्त्यु ) अथाह संवदस्वेति । संवादयैनं देवैरित्येवैतदाहागानग्नीदित्यगन्खल्वित्येवैतदाहागन्नितीतरः प्रत्याह श्रावयेति तं वै देवैः श्रावय तमनुबोधयेत्येवैतदाह श्रौषडिति विदुर्वा ऽएनमनुवा ऽएनमभुत्सतेत्येवैतदा हैवमध्वर्युश्चाग्नीच्च देवलोकं यजमानमुपिनयतः ॥ २० ॥

---

तं प्राञ्चमनुसमस्यति–प्राची हि देवानां दिक् । अथो उदञ्चम्–उदीची हि मनुष्याणां दिक् । तमङ्गुलिभिरेव योयुप्येरन्–न काष्ठैः । दारुभिर्वा इतरं शवं व्यृषन्ति । नेत्तथा करवाम–यथेतरं शवमिति । तस्मादङ्गुलिभिरेव योयुप्येरन्–न काष्ठैः । यदा होता सूक्तवाकमाह ॥ १८ ॥

अथाग्नीदाह–' अनुप्रहर ' इति । तद्यत्रास्येतर आत्मागन्–तदेवास्यैतद्गमय–इत्येवैतदाह । तूष्णीमेवानुप्रहृत्य–" चक्षुष्पा अग्नेऽसि, चक्षुर्मे पाहि "–( वा. सं. २. १६ ) इति । आत्मानमुपस्पृशति । तेनो अप्यात्मानं नानुप्रवृणक्ति ॥ १९ ॥

अथाह–' **संवदस्व** '–इति । संवादयैनं देवैरित्येवैतदाह । ' **अगानग्नीत्** ' इति–अगन्

---

**तं प्राञ्चमनु** । ' तं ' प्रकृतं प्रस्तरं ' प्राञ्चं ' प्रागग्रं सूक्तवाके उक्तप्राये ' अनु ' पश्चात् ' समस्यति ' समग्रमेव प्रक्षिपति । ' **तमङ्गुलिभिरेव योयुप्येरन्** ' । " युप रुप लुप विमोहने " ( दिवा. प. १२९–१३१ ) पुनः–पुनस्तं मूर्च्छयेयुः , ' न काष्ठैः ' , हस्तेनोपक्षिपेयुरित्यर्थः । किं कारणम् ? " दारुभिर्वा इतरं मानुषं शवं व्यृषन्ति " ऋष–ऋषी–गतौ ( तुदा. पर. ७ ) नयनेऽत्र द्रष्टव्यः । विस्तारयन्ति, सुगन्धित्वायेत्यर्थः । तदुपचाराच्चास्य यज्ञियस्य विलक्षणेनोपचारेण भवितव्यमिति । **नेत्तथेति** । ' नेत् '–इति परिभये । तत्तथेत्याह ॥ १८ ॥

**अथाग्नीदाह** । प्रसक्ता [२] ॥ १९ ॥

**अथाह** । [३] संवदस्वेत्यादीनां व्याहृतीनां बाह्यस्तावदर्थः । अग्नीदध्वर्युं प्रेष्यति–' संवदस्व ' त्वं मया सह शंयुवाकप्रैषार्थमिति । तमध्वर्युः पृच्छति–' अगानग्नीत् ' हे अग्नीत् ! किमगमत् प्रस्तरशरीरो यज-

---

१–सुदग्धत्वायेत्यर्थः–क० पा० । २–" अग्नीदाहानुप्रहरेति " इति का० श्रौ० सू० ३ । १३२ ॥ " प्रास्य तृणं चक्षुष्पा इत्यात्मानमालभते " इति का० श्रौ० सू० ३।१३३ ॥ ३–" संवदस्वागानग्नीदगञ्छ्रावयेत्यादि " इति का० श्रौ०सू० ३।१३४ ॥

( तौ ) अथाह स्वगा दैव्या होतृभ्य ऽइति । दैव्या वा ऽएते होतारो यत्परिधयोऽग्नयो हि तानेवैतत्स्वगाकरोति तस्मादाह स्वगा दैव्या होतृभ्य इति स्वस्तिर्मानुषेभ्य ऽइति तदस्मै मानुषाय होत्रेऽह्वलामाशास्ते ॥ २१ ॥

( स्तेऽथ ) अथ परिधीननुप्रहरति । स मध्यममेवाग्रे परिधिमनु प्रहरति यं परिधिं पर्यधत्था ऽअग्ने देव पणिभिर्गुह्यमानः ॥ तं त ऽएतमनु-

---

खल्वित्येवैतदाह । 'अगन्'–इतीतरः प्रत्याह । 'श्रावय' इति, तं वै देवैः श्रावय, तमनुबोधयेत्येवैतदाह । 'श्रौषट्' इति–विदुर्वा एनम्, अनु वा एनमभुत्सत–इत्येवैतदाह । एवमध्वर्युश्चाग्नीच्च देवलोकं यजमानमपिनयतः ॥ २० ॥

अथाह–'**स्वगा दैव्या होतृभ्यः**'–इति । दैव्या वा एते होतारो यत्परिधयः । अग्नयो हि । तानेवैतत् स्वगा करोति । तस्मादाह–स्वगा दैव्या होतृभ्य–इति । '**स्वस्तिर्मानुषेभ्यः**' इति–तदस्मै मानुषाय होत्रेऽह्वलामाशास्ते ॥ २१ ॥

अथ परिधीननुप्रहरति । स मध्यममेवाग्रे परिधिमनुप्रहरति–"**यं परिधिं पर्यधत्था अग्ने**

---

मानः स्वर्गं लोकम् ? किं दग्धः प्रस्तर इत्यर्थः । अग्नीत्तु 'अगन्' इति प्रतिवचनं ददाति । गतो यजमानः, दग्धः प्रस्तर इत्यर्थः । अध्वर्युस्त्वाह–यद्येवम्, ततः शंयुवाकपरिधिप्रहरणयोः कालो वर्तते, ततश्च 'श्रावय' होतारम्, आकर्णयेत्यर्थः । अग्नीच्चाह–'श्रौषट्' शृणोत्येवायमवहितः, ब्रूहि त्वं यद्विवक्षितमिति ।

'स्वगा दैव्या होतृभ्यः' इति शंयुवाकप्रैषः । हे होतः ! शंयोर्बार्हस्पत्यस्य ऋषेरार्षम् ब्रूहि । 'स्वगा' स्वस्थानगामिनं त्वां 'दैव्या' देवेभ्यो 'होतृभ्यः' परिधिशरीरेभ्योऽत्र हूयन्ताम् परिधय इत्यर्थः । 'मानुषेभ्यः' तु होतृभ्यः 'स्वस्ति' अविनाशोऽस्त्वित्येवंरूपं वाक्यं "ब्रूहि" इति । श्रुतिस्तु साङ्केतिकं गूढतरमर्थं व्याचष्टे–तत्र च यथैव प्रहरणसम्बन्धसूक्तवाकप्रैषसंबद्धमाश्रावणमनुषङ्गतः परिधीनामुपकारकमित्युक्तम्; तथेहापि परिधिप्रहरणसम्बन्धशंयुवाकप्रैषसम्बद्धा व्याहृतयोऽनुषङ्गात् प्रस्तरवृत्तान्तं प्रकाशयन्तीति दर्शयति । **संवादयैनं देवैरिति** । प्रियमिवातिथिमागतैर्देवैः सम्भाषयेत्यर्थः । णिचो लोपमत्र दर्शयति–**अगानग्नीदिति** । गमनद्रढिम्ने । तमेवाग्नीधं पृच्छति–किं गतोऽयं यजमानो येन संवाद्यते ? न गत इतीतरेणोक्तेऽध्वर्युराह–तमेव तर्हि मद्वचनेन श्रावयैतमिति । अग्नीच्चाह–श्रौषडिति । 'विदुर्वा एनमिति' जानन्त्येवैनं देवाः; उपकारित्वादनाख्यातमपीत्यर्थः । **अनु वा एनमभुत्सतेति** । पूर्वमेवायं बुद्धो देवैरित्ययं वा श्रौषडित्यस्यार्थः ॥ २० ॥

"**अथाह स्वगा**" । "तदस्मै मानुषाय"–इति प्रयोगे बहूनां मानुषाणां होतॄणामभावादेकवचनस्थाने एवैतद्बहुवचनमिति दर्शयति ॥ २१ ॥

**अथ परिधीन्** । प्रसन्ना ॥ २२ ॥

---

१–"स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहि" इति का. श्रौ. सू. ३ । ६ । १६ ।

जोषं भराम्येष नेत्त्वदपचेतयाता ऽइत्यग्नेः प्रियं पाथोऽपीतमितीतरावनु समस्यति ॥ २२ ॥

( त्यु ) अथ जुहूञ्चोपभृतं च सम्प्रगृह्णाति । ( त्य ) अदो हैवाहुतिं करोति यदनक्त्याहुतिर्भूत्वा देवलोकं गच्छादिति तस्माज्जुहूञ्चोपभृतञ्च सम्प्रगृह्णाति ॥ २३ ॥

स वै विश्वेभ्यो देवेभ्यः सम्प्रगृह्णाति । यद्वा अनादिष्टं देवतायै हविर्गृह्यते सर्वा वै तस्मिन्देवता अपित्विन्यो मन्यन्ते न वा ऽएतत्कस्यैचन देवतायै हविर्गृह्णन्नादिशति यदाज्यं तस्माद्विश्वेभ्यो देवेभ्यः सम्प्रगृह्णात्येतदु वैश्वदेवꣳ हविर्यज्ञे ॥ २४ ॥

स सम्प्रगृह्णाति । सꣳस्रवभागा स्थेषा बृहन्त ऽइति सꣳस्रवो ह्येव खलु

---

देव पाणिभिर्गृह्यमानः । तं त एतमनुजोषं भरामि–एष नेत् त्वदपचेतयातै "–( वा. सं. २. १७) इति । " अग्नेः प्रियं पाथोऽपीतम् "–( वा. सं. २. १७ ) इतीतरावनुसमस्यति॥२२॥

अथ जुहूं चोपभृतं च संप्रगृह्णाति । अदो हैवाहुतिं करोति–यदनक्ति । आहुतिर्भूत्वा देवलोकं गच्छाद्–इति । तस्माद् जुहूं चोपभृतं च संप्रगृह्णाति ॥ २३ ॥

स वै विश्वेभ्यो देवेभ्यः सम्प्रगृह्णाति । यद्वा अनादिष्टं देवतायै हविर्गृह्यते–सर्वे वै तस्मिन् देवता अपित्विन्यो मन्यन्ते । न वा एतत् कस्यैचन देवतायै हविर्गृह्णन्नादिशति–यदाज्यम् । तस्माद् विश्वेभ्यो देवेभ्यः सम्प्रगृह्णाति । एतदु वैश्वदेवं हविर्यज्ञे ॥ २४ ॥

स सम्प्रगृह्णाति । " संस्रवभागा स्थेषा बृहन्तः "–( वा. सं. २. १८ ) संस्रवो ह्येव खलु

---

**अथ जुहूम्** । ' सम्प्रगृह्णाति ' सङ्गते उद्गृह्णाति–संस्रवहोमाय, आज्यशेषस्य स्वगाकाराय च । कुत एतत् ? मन्त्रवर्णाद् वाक्यशेषाच्च । **आहुतिर्भूत्वेति** । ' एतेन प्रस्तरमनुसमस्यति ' ' परिधीननुप्रहरति '–इत्येते ( श० प० ८ । ३ । २८ । २२ ) ( कौ० श्रौ० सू० ३ । १३५ ) अपि होमचोदने एव वक्तव्ये । " अदो हैवाहुतिम् "–इति परिधिसंस्काराशंकां निवर्तयति । एवं ह्याशङ्कते–" यद्वै हविरभ्यक्तं यदभिवारितं तज्जुष्टं तन्मेध्यम् "–इति वचनाद् हविरभिघारणीयम्, अनन्तरमेव च हुताः परिधयः; तेऽभिघारिताः आहुतिर्भवति; अतस्तेषामाहुतित्वायैते स्रुचौ सम्प्रगृह्येते, न पृथगेव संस्रवहोमः कर्मेति; तन्निराकरोति । अत एव परिधय आहुतिकृता ये ते आज्येन जौहवेनाक्तास्तस्मान्न तेषामाहुतित्वाय स्रुचौ सम्प्रगृह्येते, किं तर्हि ? आहुतिर्भूत्वा इदमेवाज्यं ' देवलोकं ' गच्छेदित्येवमर्थं ' सम्प्रगृह्णाति ' । यथैव प्रस्तरपरिधीनां स्वगाकारो ह्युक्तः, एवमाज्यशेषस्यापि विलग्नस्येत्यभिप्रायः ॥ २३ ॥

**स वै विश्वेभ्यः** । ' अपित्विन्यः ' भागिन्यः; अत्र वयमपीत्येवं मन्यन्ते ॥ २४ ॥

**स सम्प्रगृह्णाति** । ( कौ० श्रौ० सू० ३ । १३६ ) संस्रवो ह्येवेति । यदा यः परिशिष्टः संस्रवः,

---

१–" परिधीननु प्रहरति यम्परिधिमिति प्रथममितरा च युगपदग्नेः प्रियमिति " इति का. श्रौ. सू. ३ । १३५ । २–" स्रुचौ प्रगृह्णाति स२ स्रवभागा इति स२ स्रवां जुहोति " इति का. श्रौ. सू. ३ । १३६ ॥

परिशिष्टो भवन्ति प्रस्तरेष्ठाः परिधेयाश्च देवा ऽइति प्रस्तरश्च हि परिधय-श्चानुप्रहृता भवन्तीमां वाचमभिविश्वे गृणन्त ऽइत्येतदु वैश्वदेवं करो-त्यासद्यास्मिन्बर्हिषि मादयध्वꣳस्वाहावाडिति तद्यथा वषट्कृतꣳहुत-मेवमस्यैतद्भवति ॥ २९ ॥

स यस्यानसो हविर्गृह्णन्ति । ( न्त्यु ) अनसस्तस्य धुरि विमुञ्चन्ति यतो युनजाम ततो विमुञ्चामेति यतो ह्येव युञ्जन्ति ततो विमुञ्चन्ति यस्यो पात्रे स्फ्ये तस्य यतो युनजाम ततो विमुञ्चामेति यतो ह्येव युञ्जन्ति ततो विमुञ्चन्ति ॥ २६ ॥

युजौ ह वा ऽएते यज्ञस्य यत्स्रुचौ । ते ऽएतद्युङ्क्ते यत्प्रचरति स यं निधा-यावद्येद्यथा वाहनमवाच्छेंदेवं तत्ते ऽएतत्स्विष्टकृति विमोचनमागच्छ-तस्ते तत्सादयति तद्विमुञ्चति ते ऽएतत्पुनः प्रयुङ्क्ते ऽनुयाजेषु सो ऽनुयाजे-

---

परिशिष्टो भवति । " प्रस्तरेष्ठाः परिधेयाश्च देवाः "–( वा. सं. २ । १८ ) इति । प्रस्तरश्च ह परिधयश्चानुप्रहृता भवन्ति । " इमां वाचमभिविश्वे गृणन्तः "–( वा. सं. २ । १८ ) इति । एतदु वैश्वदेवं करोति । " आसद्यास्मिन् बार्हिषि मादयध्वं स्वाहावाट् "–( वा. सं. २।१८ ) इति । तद्यथा वषट्कृतं हुतम्–एवमस्यैतद्भवति ॥ २९ ॥

स यस्यानसो हविर्गृह्णन्ति–अनसस्तस्य धुरि विमुञ्चन्ति–यतो युनजाम ततो विमुञ्चाम इति । यतो ह्येव युञ्जन्ति ततो विमुञ्चन्ति । यस्यो पात्रे स्फ्ये तस्य–यतो युनजाम ततो विमुञ्चाम इति । यतो ह्येव युञ्जन्ति ततो विमुञ्चन्ति ॥ २६ ॥

युजौ ह वा एते यज्ञस्य–यत्स्रुचौ । ते एतद्युङ्क्ते–यत् प्रचरति । स यं निधायावद्येद्, यथा वाहन-मवाच्छेंद्–एवं तत् । ते एतत् स्विष्टकृति विमोचनमागच्छतः । ते तत्सादयति, तद्विमुञ्चति, ते

---

तदा तद्भाजः संस्रवभागा एव भवन्तीत्यभिप्रायः । प्रस्तरश्च हीति । प्रस्तरे परिधिषु च हुतेषु तदिन्धनोऽग्निः शरीरं येषां ते, ' प्रस्तरेष्ठाः परिधेयाश्च ' भवन्त्येवेत्यभिप्रायः ॥ २९ ॥

**स यस्यानसः** । विमुञ्चन्ति ' जुहूपभृतौ । यतो युनजामेति व्याख्यातम् ॥ २६ ॥

**युजौ ह वा एते** । विमोचनार्थवादोऽयम् । तत्र च " यज्ञं वा अनु प्रजाः "–इत्यधिभूतं वक्ष्यते, ( श० प० ८ अ० ३ ब्रा० २७ कं० ) तदुपक्रमार्थं ' युजौ ' योक्तव्यावस्थौ ' एते यज्ञस्य यत् स्रुचौ '–इत्याह । **स यं निधायावद्येदि**ति । प्रसङ्गेनार्थप्राप्तं चरकश्रुतिप्राप्तं च निधायावदानं प्रतिषेधति । ' वाहनं ' वाहयति तदेभिरिति वाहनमश्वादि, यथा तत् ' अवाच्छेंत् ' अधः पतेत् वाह्यमानं, ' एवं ' निधानं स्रुचोः प्राग्विमोकादधश्चलनम्, ' तत् ' यज्ञस्य स्यादित्यर्थः । **ते एतत् स्विष्टकृती**ति । ये चरतां युङ्क्ते, ' ते ' ' स्विष्टकृति ' अतीते इति शेषः । ' वि ' अपरिसमाप्तोऽर्थः ( निरु० १ । १ । ९ ) । विमुच्यतेऽस्मिन्निति ' विमोचनम् ' स्थानम्, तत् ' आगच्छतः ' । ' ते ' ' तत् ' तत्र ' सादयति ' अध्वर्युः, ' तत् ' तत्र ' विमु-

श्चरित्वैतद्विमोचनमागच्छति ते तत्सादयति तद्विमुञ्चति ते ऽएतत्पुनः प्रयुङ्क्ते यत्सम्प्रगृह्णाति तद्यां गतिमभियुङ्क्ते तां गतिं गत्वा विमुञ्चते यज्ञं वा ऽअनुप्रजास्तस्मादयं पुरुषो युङ्क्तेऽथ विमुञ्चतेऽथ युङ्क्ते तद्यां गतिमभियुङ्क्ते तां गतिं गत्वान्ततो विमुञ्चते स सादयति घृताची स्थो धुर्यौ पातꣳ सुम्ने स्थः सुम्ने माधत्तमिति साध्व्यौ स्थः साधौ माधत्तमित्येवैतदाह ॥२७॥

इति सप्तमप्रपाठके प्रथमं ब्राह्मणम् ॥ ७--१ ॥

---

एतत्पुनः प्रयुङ्क्तेऽनुयाजेषु । सोऽनुयाजैश्चरित्वैतद्विमोचनमागच्छति । ते तत्सादयति, तद्विमुञ्चति, ते एतत् पुनः प्रयुङ्क्ते—यत् सम्प्रगृह्णाति । तद्यां गतिमभियुङ्क्ते, तां गतिं गत्वा विमुञ्चते । यज्ञं वा अनु प्रजाः । तस्मादयं पुरुषो युङ्क्ते, अथ विमुञ्चते, अथ युङ्क्ते, तद्यां गतिमभियुङ्क्ते तां गतिं गत्वाऽन्ततो विमुञ्चते । स सादयति—" घृताची स्थो धुर्यौ पातं, सुम्ने स्थः सुम्ने मा धत्तम् "— ( वा. सं. २ । १९ ) इति । साध्व्यौ स्थः । साधौ मा धत्तमित्येवैतदाह ॥ २७ ॥

---

ञ्चति ' । विश्रामार्थम् ' पुनः ' च ' अनुयाजेषु ' प्रयुङ्क्ते । तद ' च विश्रामार्थमेव पुनः ' विमुञ्चति ' । ' पुनः ' च ' सम्प्रगृह्णाति ' ' प्रयुङ्क्ते '; तदन्ते च कृतार्थः सन् ' गतिं ' गतं ' अभियुंक्ते ' करोति । मन्त्रेण देशनियमेन च गम्यत इति ' गतिः ' अध्वा गन्तव्यः । ' यां गतिं ' यमध्वानं ' अभि ' गन्तुं ' युङ्क्ते ', ' तां गतिं ' तमध्वानं ' गत्वा ' विमुञ्चते । " यज्ञं वा अनुप्रजाः " इत्यधियाज्ञिकयोर्योगविमोकयोरधिभूतवचनम् । ' साध्व्यौ '—इति ' सुम्ने'—इत्यस्य व्याख्यानम्; ' साधौ '—इति च ' सुम्ने '—इत्यस्य ' सुम्नं ' सुखम्, तत्र साध्वित्यभिप्रायः " घृताची इति धुरि निदधाति—अनसि चेद्ग्रहणं " " स्फ्ये पात्र्याञ्चेत् " ( का० श्रौ० सू० ३ । १३७–१३८ । ) ॥ २७ ॥ १ ॥ ( ८. ३. ) ॥

इत्याचार्यहरिस्वामिनः कृतौ शतपथभाष्येऽष्टमस्य तृतीयं ब्राह्मणम् ।

नागस्वामिसुतोऽवन्त्यां पाराशर्यो वसन् हरिः ।
श्रुत्यर्थं दर्शयामास शक्तितः पौष्करीयकः ॥
श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य भूपतेः ।
धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम् ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ शतपथभाष्येऽष्टमोध्यायः समाप्तः ॥ ८ ॥

# अथ प्रथमकाण्डे नवमाध्याये प्रथमं ब्राह्मणम् ।

स यत्राह । इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकायेति यदतो होतान्वाह सूक्तैव तदाह यजमानायैवैतदाशिषमाशास्ते तद्वा ऽएतदुपरिष्टाद्यज्ञस्याशिषमाशास्ते द्वयं तद्यस्मादुपरिष्टाद्यज्ञस्याशिषमाशास्ते ॥ १ ॥

यज्ञं वा ऽएष जनयति । यो यजत ऽएतेन ह्युक्ता ऽऋत्विजस्तन्वते तं जनयन्त्यथाशिषमाशास्ते तामस्मै यज्ञ ऽआशिषँ सन्नमयति यामाशिषमाशास्ते यो माजीजनतेति तस्माद्वा ऽउपरिष्टाद्यज्ञस्याशिषमाशास्ते ॥ २ ॥

देवान्वा ऽएष प्रीणाति । यो यजत ऽएतेन यज्ञेनऽर्ग्भिरिव त्वद्यजुर्भिरिव त्वदाहुतिभिरिव त्वत्स देवान्प्रीत्वा तेष्वपित्वी भवति तेष्वपित्वी

---

स यत्राह–' इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकायेति ' । यदतो होतान्वाह–सूक्तैव तदाह । यजमानायैवैतदाशिषमाशास्ते । तद्वा एतदुपरिष्टाद् यज्ञस्याशिषमाशास्ते । द्वयं तद्, यस्मादुपरिष्टाद् यज्ञस्याशिषमाशास्ते ॥ १ ॥

यज्ञं वा एष जनयति–यो यजते । एतेन ह्युक्ता ऋत्विजस्तन्वते, तं जनयन्ति, अथाशिषमाशास्ते । तामस्मै यज्ञ आशिषं सन्नमयति–यामाशिषमाशास्ते, यो माऽजीजनतेति । तस्माद्वा उपरिष्टाद् यज्ञस्याशिषमाशास्ते ॥ २ ॥

देवान्वा एष प्रीणाति–यो यजते । एतेन यज्ञेनर्ग्भिरिव त्वद्, यजुर्भिरिव त्वत्, आहुतिभिरिव

---

**स यत्राह** । आध्वर्यवः सूक्तवाकप्रैषः शंयुवाकप्रैषश्चाधस्तादुक्तः ( श० प० ब्रा० अ० ८ । ब्रा० ३ । कं० १० ) तत्प्रसङ्गात् सूक्तवाकशंयुवाकयोर्हौत्रयोरेतद्ब्राह्मणम् । तत्रापि सूक्तवाकस्य प्रयोजनं विवक्षुः–कालसम्बन्धागतमुपादाय प्रयोजनमाह–**स यत्राहेति** । यस्मिन् कालेऽध्वर्युराह–" इषिता दैव्या "–इत्यादि, ( का० श्रौ० सू० । ३ । १२१ सू० ) ' अतः ', अत इति सर्वनामव्यत्ययो द्रष्टव्यः, तत ऊर्द्ध्वं ' होता ' ' यदाह ' " इदं द्यावापृथिवी "–इत्यादि, ( श० प० अ० ९ । ब्रा० १ । कं० ४ ) ' तत् ' ' सूक्तैवान्वाह ' । इति सूक्तवाकशब्दनिर्वचनम् । शोभनार्थत्वाच्छोभनादिवचनानि सूक्तानि, ततश्च सूक्तानां वाकः वाचको ग्रन्थः सूक्तवाक इत्येवं सूक्तवाकशब्दो निर्वाच्य इत्यभिप्रायः । यजमानायेति सूक्तवाकस्य संक्षेपार्थाभिधानम् । यदपि चात्रातीतार्थकीर्तनं तदपि आशीःपरमेवेति दर्शयिष्यति " तद्यज्ञस्यैवैतत्समृद्धिमाशास्ते "–इति ( श. प. अ. ९ । ब्रा. १ । कं. १० ) तद्वा एतदिति कारणविवक्षयोपन्यासः ॥ १ ॥

**यज्ञं वा** । ' एषः ' ' यः ' यजमानः ' मा ' ' अजीजनत ' जनितवान्, ' अस्मै ' तस्मै ' आशिषं ' सन्नमयामीति मन्यमानो ' यज्ञः ' यजमानमुत्तरकालं ' सन्नमयति ', न प्रागित्यभिप्रायः ॥ २ ॥

**देवान्वा एषः** । त्वच्छब्दः समुच्चये; ऋग्भिश्च यजुर्भिश्चाहुतिभिश्चेत्यर्थः । ' देवान् ' ' प्रीत्वा ' तर्पयित्वा,

भूत्वाथाशिषमाशास्ते तामस्मै देवा आशिषꣳ सन्नमयन्ति यामाशिषमा-
शास्ते यो नोऽप्रैषीदिति तस्माद्वा ऽउपरिष्टाद्यज्ञस्याशिषमाशास्ते ॥ ३ ॥

(स्तेऽथ) अथ प्रतिपद्यते । इदं द्यावापृथिवी भद्रमभूदिति भद्रꣳ ह्यभूद्यो यज्ञस्य सꣳस्थामगन्नार्ध्म सूक्तवाकमुत नमोवाकमित्युभयं वा ऽएतद्यज्ञ ऽएव यत्सूक्तवाकश्च नमोवाकश्चारात्स्म यज्ञमविदाम यज्ञमित्येवैतदाहाग्ने त्वꣳ सूक्तवागस्युपश्रुती दिवस्पृथिव्योरित्यग्निमेवैतदाह त्वꣳ सूक्तवाग-स्युपश्रृण्वत्योरनयोर्द्यावापृथिव्योरित्योमन्वती तेऽस्मिन्यज्ञे यजमान द्यावा-पृथिवी स्तामित्यन्नवत्यौ तेऽस्मिन्यज्ञे यजमान द्यावापृथवी स्तामि-त्येवैतदाह ॥ ४ ॥

---

त्वत् स देवान् प्रीत्वा तेष्वपित्वी भवति । तेष्वपित्वी भूत्वाथाशिषमाशास्ते । तामस्मै देवा आशिषं सन्नमयन्ति—यामाशिषमाशास्ते, यो नोऽप्रैषीदिति । तस्माद्वा उपरिष्टाद् यज्ञस्याशिषमाशास्ते ॥ ३॥

अथ प्रतिपद्यते । " इदं द्यावापृथिवी भद्रमभूदिति " । भद्रं ह्यभूद्–यो यज्ञस्य संस्थामगन् । " आर्ध्म सूक्तवाकमुत नमोवाकम् "–इति । उभयं वा एतद्यज्ञ एव–यत् सूक्तवाकश्च नमोवाकश्च । अरात्स्म यज्ञम्, अविदाम यज्ञमित्येवैतदाह । " अग्ने त्वं सूक्तवागस्युपश्रुती दिवस्पृथिव्योरिति "। अग्निमेवैतदाह। त्वं सूक्तवागसि, उपश्रृण्वत्योरनयोर्द्यावापृथिव्यो-

---

शास्त्रपरिषदीर्वे सन्तप्रश्ने ( ? ) सन्दत्त्वा, ' तेषु ' देवेषु, तेषां मध्ये ' अपित्वी ' भागी भवति । भागी हि भागं प्रार्थयमानो लभते, नाभागीत्यभिप्रायः । ' यो नः ' ' अप्रैषीत् ' तर्पितवान् ' तस्मै ' ' आशिषं ' सन्नमयाम इति मन्यमाना ' देवाः ' ' सन्नमयन्ति ' । तच्चोर्द्ध्वं यज्ञात्, न प्रागित्यभिप्रायः ॥ ३ ॥

**अथ प्रतिपद्यते** । होता वक्तुमारभत इत्यर्थः । " इदं द्यावापृथिवी "–इत्यादिसूक्तवाकः ( तै० ब्रा० ३ । ९ । १० । ) तत्रादौ तावत् हे ' द्यावापृथिव्यौ ! ' ' इदं ' तावद् युवयोः प्रसादादस्माकं कल्याणं जातमेव । किम् ? ' आर्ध्म ' ऋद्धवन्तः, ' सूक्तवाकं ' देवान् स्तुतवन्तो वयमित्यर्थः । ' उत ' अपि ' नमोवाकम् ' अन्नदानवचनं च प्राप्तवन्तः । यज्ञेन द्वयमपि भवेदिति देवता इष्टा अस्माभिरित्यर्थः । अधुना युवयोरेव प्रसादादिदं ' सूक्तोच्यं ' सूक्तवचनमृद्ध्यास्मेत्याशीः । ' अग्ने त्वम् '–इति अग्निं होतारमुपधावति । हे भगवन् ! ' अग्ने ! ' ' त्वम् ' एव सूक्तानां वक्ता ' असि '; नाहं मानुष इति विदित्वा मामधिष्ठातुमर्हसीत्यभिप्रायः । ' उपशृण्वत्योः ' ' द्यावापृथिव्योरिति ' एकान्तमनक्तमपि कुर्यात्, न जनसंसदीत्यभिप्रा[illegible] "ओमन्वती "–इत्याशीर्यजमानं प्रत्यक्षीकृत्य । " तयोराविदि, अग्निरिदमित्यादि " (तै०ब्रा० ३ । ९ । [illegible]) मिथो हेतुवचनम्,–यस्माद्–द्यावापृथिव्योरनुमन्यमानयोरग्न्यादयो हवींष्यजुषन्त, तस्माद् द्यावापृथिव्यौ ओमन्वदादिगुणौ स्तामिति सम्बन्धः । **अस्या मृधेदिति** । परोक्षीकृत्य यजमानं तस्मा आशिष आशास्ते ।

---

१–" नमोवाकमृध्यास्म सूक्तोच्यमग्ने त्वं सूक्तवागसि " इति यः पाठः स आश्वलायनानां शांखायनानां च बोध्यः । तत्सूत्रयो-स्तथा पाठात् ॥ २–' शास्त्रपद्धत्या तर्पणीयं दत्त्वा ' इति युक्तः पाठः ।

शुङ्गवी जीवुदानू ऽइति । शुङ्गवी ते जीवुदानू स्तामित्युवैतुदाहात्रस्नू ऽअप्रवेदे ऽइति मुाह कुस्माच्चनु प्रत्रासीम्मों त ऽइदुं पुष्टं कुश्चन प्रविद-तेत्युवैतुदाह ॥ ५ ॥

( ह्रो ) उरुगव्यूती अभयं कृताविति । ( त्यु ) उरुगव्यूती तुऽभये स्तामि-त्युवैतुदाह व्वृष्टिद्यावा रीत्यापेति व्वृष्टिमत्यौ ते स्तामित्युवैतुदाह ॥ ६ ॥

---

रिति । "**ओमन्वती तेऽस्मिन् यज्ञे यजमान द्यावापृथिवी स्तामिति**" । अन्नवत्यौ तेऽस्मिन् यज्ञे यजमान ! द्यावापृथिवी स्तामित्येवैतदाह ॥ ४ ॥

"**शङ्गवी जीवदानू**"–इति । शङ्गवी ते जीवदानू स्तामित्येवैतदाह । "**अत्रस्नू अप्रवेदे**"– इति । मा ह कस्माच्चन प्रत्रासीः । मो त इदं पुष्टं कश्चन प्रविदतेत्येवैतदाह ॥ ५ ॥

"**उरुगव्यूती अभयं कृताविति**" । उरुगव्यूती तेऽभये स्तामित्येवैतदाह । "**वृष्टिद्यावा रीत्यापेति**" । वृष्टिमत्यौ ते स्तामित्येवैतदाह ॥ ६ ॥

---

**उत्तरां देवयज्या**मित्यादि । यदनेन हविषेत्याशिष एव समाप्ते "इदञ्च नमो देवेभ्य" इति याचितेभ्यो निह्नवः । एतमेवार्थं 'भद्रं ह्यभूत्'–इत्यादि विवृण्वन् दर्शयति । 'अरात्स्म यज्ञम्'–इति तत् "आर्ध्म सूक्तवाकमित्यस्य पर्यायवचनम् 'अरात्स्म'–इत्यस्यापि 'अविदाम'–इत्येतत्पर्यायवचनं संसाधितवन्तो लब्ध-वन्तो यज्ञं, वयमित्यर्थः । 'उपश्रुती' । उपशृणोतीत्युपश्रुतिः, ततः सप्तमीद्विवचने उपश्रुत्योरिति प्राप्तम्, ततश्छान्दसः पूर्वसवर्णः 'उपश्रुती'–इति; उपशृण्वत्योरिति तद् दर्शयति । **दिवस्पृथिव्योः**–इत्यस्य शब्द-समाधिः 'द्यावापृथिव्योः' इति । **ओमन्वती** । अवति तर्पयति इति 'ओमन्' ( निरु. ६ । १ । ९ ) अन्नम् तद्वती, ओमन्वत्यौ 'अन्नवत्यौ'–इति समाधिः ॥ ४ ॥

**शङ्गवी** । शञ्च ते गावौ च शङ्गव्याविति प्राप्ते पूर्वसवर्णः । **जीवदानू**[१] जीवनस्य दात्र्यौ । अत्रसनशीले "अत्रस्नू" । अत्रस्नू च ते देवते उपासीनो न त्रस्यतीति देवधर्मं यजमाने दर्शयति–**मा ह कस्माच्चन प्रत्रासी**रिति । "अप्रवेदे" प्रवेदनं प्रलाभः, नास्ति प्रवेदनमेतयोः 'अप्रवेदे' दुर्लभे; तादृश्यौ चोपासी-नस्य । 'पुष्टम्' पुष्टिरित्येतद् दुर्लभता न भवतीत्येतत् 'मो त इदं पुष्टं' 'कश्चन' कश्चिदपि 'प्रविदत' प्रालभत इत्यतिदिशति ॥ ५ ॥

**उरुगव्यूती** । गावः अवन्ति तृप्यन्त्यस्यामिति 'गव्यूतिः' गोप्रचारः; सा च क्षेम उर्वी भवति । व्याघ्रादि-भये त्रसन्ति, न दूरं ग्रामाद्गावो गच्छन्तीत्यनुर्वी गव्यूतिर्भवति । तेन गवां क्षेमहेतू द्यावापृथिव्यौ स्तामित्यर्थः । **अभयं कृता**विति । सामान्येनाभयङ्करे स्यातामिति । 'वृष्टिद्यावा' वृष्टेर्दात्र्यौ । ददातेर्वनिप् ( पा० सू० ३ । २ । ७४ ) यकारश्चागमः "आतो यक्"–इति ( पा० सू० ७ । ३ । ३३ ) वृष्टिदातारāविति प्राप्ते । "रीत्यापा" । 'रीतिस्तृतिस्तामापत इति 'रीत्यापा'; सुष्ठु वर्षवत्याविति अर्थः ॥ ६ ॥

---

१–जीवदानु–जीरदानु–शब्दावभिन्नार्थौ । संहिताभेदाद्भिन्नरूपौ श्रूयेते । एतत्पदसिद्ध्यर्थमेव वार्तिककृता "रकि ज्यः सम्प्रसारणं" इति पठितम् । ( पा. सू. १।१।४ ) तत्र 'रकि जीवेरपि सिद्धं भवतीति च भाष्येष्टिः । तै. ब्रा. 'जीरदानू'।(३।५।१०)

शम्भुवौ मयोभुवाविति । शम्भुवौ ते मयोभुवौ स्तामित्येवैतदाहोर्ज्जस्वती च पयस्वती चेति रसवत्यौ त ऽउपजीवनीये स्तामित्येवैतदाह ॥७॥

सूपचरणा च स्वधिचरणा चेति । सूपचरणाह तेऽसावस्तु यामधस्तादुपचरसि स्वधिचरणो त ऽइयमस्तु यामुपरिष्टादधिचरसीत्येवैतदाह तयोराविदीति तयोरनुमन्यमानयोरित्येवैतदाह ॥ ८ ॥

( ह्रा ) अग्निरिदᳬहविः । ( र ) अजुषतावीवृधतमहो ज्यायोऽकृतेति तदाग्नेयमाज्यभागमाह सोम ऽइदᳬहविरजुषतावीवृधतमहो ज्यायोऽकृतेति तत्सौम्यमाज्यभागमाहाग्निरिदᳬहविरजुषतावीवृधतमहो ज्यायोऽकृतेति तद्य एष ऽउभयत्राच्युत आग्नेयः पुरोडाशो भवति तमाह ॥ ९ ॥

---

'शम्भुवौ मयोभुवाविति'। शम्भुवौ ते मयोभुवौ स्तामित्येवैतदाह । 'ऊर्जस्वती च पयस्वती चेति'। रसवत्यौ त उपजीवनीये स्तामित्येवैतदाह ॥ ७ ॥

'सूपचरणा च स्वधिचरणा चेति'। सूपचरणा ह तेऽसावस्तु यामधस्तादुपचरसि । स्वधिचरणो त इयमस्तु—यामुपरिष्टादधिचरसीत्येवैतदाह । 'तयोराविदीति' तयोरनुमन्यमानयोरित्येवैतदाह ॥ ८ ॥

"अग्निरिदं हविरजुषतावीवृधतमहो ज्यायोऽकृतेति" । तदाग्नेयमाज्यभागमाह । "सोम इदं हविरजुषतावीवृधतमहो ज्यायोऽकृतेति" । तत्सौम्यमाज्यभागमाह । "अग्निरिदं हविरजुषतावीवृधतमहो ज्यायोऽकृतेति" । तद् य एष उभयत्राच्युत आग्नेयः पुरोडाशो भवति तमाह ॥ ९ ॥

---

**शम्भुवौ** । दुःखोपशमनं 'शम्' भावयत इति 'शम्भुवौ' स्यातामिति सर्वेण प्रार्थ्यते । 'मयः' सुखम्, अनुकूलवेदनीयम्, तद्भावयतः 'मयोभुवौ'। 'ऊर्जस्वती' ( तै० सं० २ । ६ । ९ । ) "ऊर्ज—बलप्राणनयोः" ( धा० पा० चु० प० १९ ) ऊर्जयतीति 'ऊर्ग्' रसः, सोऽनयोरस्तीत्यूर्जस्वत्यौ । ऊर्जो मतुप्यसुगागमः । मकारस्य वत्वम् ( पा० सू० ८ । २ । ९ । ) 'एतदाह'—**रसवत्यौ ते स्तामित्याहेति** । 'पयः' आप्यायनं स्थावरजङ्गमानां नोपघातकम्, तद्वत्यौ; तदाह—**उपजीवनीये स्तामित्येवैतदाहेति** ॥७॥

**सूपचरणा** । अकृच्छ्रेणोपचर्यत इति सूपचरणा द्यौः; सा ह्यविरुद्धा अकृच्छ्रेणैवोपचर्यते । एवं 'स्वधिचरणा' पृथिवी; तस्यां हि दृढायामकृच्छ्रेण चरन्ति । "छन्दसि गत्यर्थेभ्यः"—इति ( पा० सू० ३ । ३ । २१९ ) खलर्थे युच्प्रत्ययः । एतदाह—**सूपचरणा ह तेऽसावस्त्वित्यादिना** । आवेदनम् 'आवित्'। आवेदनेनात्र यज्ञविषया मतिर्लक्ष्यते । यस्य जानतः शक्तस्य यत् क्रियते, स तदनुमन्यत इति गम्यते ॥ ८ ॥

**अग्निरिदᳬहविः** । तदाग्नेयमिति समस्तार्थवचनम । यदेतदग्निना हविषः सेचनमतीतं कीर्त्यत एवं तावद् आग्नेयाज्यभागं याग इत्याह । अथवा आज्यश्चासौ भागश्चेत्याज्यभागः; आज्यमेव होतव्यमिति भागशब्दार्थं दर्शयति । एवं पुरोडाशेन वैलक्षण्यं भवति; इतरथा तत्र पुरोडाशेन यागो लक्ष्येत । 'अजुषत'—इत्यादींस्तु शब्दानग्रे व्याख्यास्यति ॥ ९ ॥

( ब्रा ) अथ यथादेवतम् । (तं) देवा ऽआज्यपा आज्यमजुषन्तावीवृधन्त महो ज्यायोऽक्रतेति तत्प्रयाजानुयाजानाह प्रयाजानुयाजा वै देवाऽआज्यपा ऽअग्निर्होत्रेणेदꣳ हविरजुषतावीवृधत महो ज्यायोऽकृतेति तदग्निꣳ होत्रेणाजुषतेत्येवं याऽ इष्टा देवता भवन्ति ताः सम्पश्यत्यसौ हविरजुषतासौ हविरजुषतेति तद्यजस्यैवैतत्समृद्धिमाशास्ते यद्धि देवा हविर्जुषन्ते तेन हि महज्जयति तस्मादाहाजुषतेत्यवीवृधतेति यद्वै देवा हविर्जोषयन्ते तदपि गिरिमात्रं कुर्व्वते तस्मादाहावीवृधतेति ॥ १० ॥

महो ज्यायोऽक्रतेति । यज्ञो वै देवानां महस्तꣳ ह्येतज्ज्यायाꣳसमिव कुर्व्वते तस्मादाह महो ज्यायोऽक्रतेति ॥ ११ ॥

---

अथ यथादेवतम् । " देवा आज्यपा आज्यमजुषन्तावीवृधन्तमहो ज्यायोऽक्रतेति "—तत् प्रयाजानुयाजानाह । प्रयाजानुयाजा वै देवा आज्यपाः । " अग्निर्होत्रेणेदं हविरजुषतावीवृधतमहोज्यायोऽकृतेति "—तदग्निं होत्रेणाजुषतेति । एवं या इष्टा देवता भवन्ति ताः संपश्यति—असौ हविरजुषत असौ हविरजुषतेति । तद्यज्ञस्यैवैतत्समृद्धिमाशास्ते । यद्धि देवा हविर्जुषन्ते—तेन हि महज्जयति । तस्मादाह,—अजुषतेति, अवीवृधतेति । यद्वै देवा हविर्जोषयन्ते तदपि गिरिमात्रं कुर्वते । तस्मादाह—अवीवृधतेति ॥ १० ॥

महो ज्यायोऽक्रत इति । यज्ञो वै देवानां महः । तं ह्येतज्ज्यायांसमिव कुर्वते । तस्मादाह—महो ज्यायोऽकृतेति ॥ ११ ॥

---

**अथ यथादेवतम्** । या या देवता यष्टव्या, तां तामाहेति वर्तन्ते । **प्रयाजानुयाजा वै देवा आज्यपाः** इति । प्रयाजानुयाजदेवता देवानामाज्यपा इत्यर्थः । ' अग्निः ' ' होत्रेण ' । " इत्थंभूतलक्षणे तृतीया " ( पा० सू० २ । ३ । २१ ) ' होत्रेण ' देवताह्वानेन कर्म्मणा युक्तः ' अग्निः ' हविः अजुषत ' स्विष्टकृदित्यर्थः । एवं या इष्टा इत्येतया यथादेवतस्यार्थं स्फुटीकरोति । ततश्चेष्टदेवतावाचिनामेव देवतापदानामस्मिन् प्रदेशे मन्त्रत्वावगते विकृतावूहविधी सेत्स्यतः । प्रकृतौ च पौर्णमास्यमावास्यादेवतापदानां व्यवस्था भविष्यति । ' समृद्धिमाशास्ते ' इत्येतदनुपपन्नम्; भूतानुवादस्वरूपत्वात् । अजुषतेत्यस्य यदपि हेतुवचनं यद्धि देवा हविर्जुषन्ते, तेन हि महज्जयतीति, तदप्याशीस्त्वं न सावयति; किन्तर्हि—" ओमन्वती तेऽस्मिन् यज्ञे यजमान द्यावापृथिवी स्तामिति " ( श० प० ९ अ० १ ब्रा० ४ कं० ) अत्राशिषो हेतुत्वेनोच्यते—अग्निरजुषतेति । ततश्च यस्माद् द्यावापृथिव्योराविदि अग्निरजुषत, तस्माद् द्यावापृथिव्यौ ओमन्वती स्तामित्याशीःपरमेवातीतजोषणकीर्तनमित्युपपन्नं यज्ञसमृद्ध्याशीर्वचनम् । **' यद्वै देवा हविर्जोषयन्ते '**—इति । स्वैरनुचरैः सेव्यन्ते; तेषां हि बहूनां तृतये यत् स्तोकमपि यजमानेन दत्तम्, तद् बहु कुर्वन्तीत्यर्थः ॥ १० ॥

**महो ज्यायोऽक्रतेति** । पूर्वमेकवचनान्तं व्याख्याय इदं बहुवचनान्तं व्याचष्टे । व्याख्यानद्वाज्ञापितज्ञापनार्थम् । **यज्ञो वै देवानां महः** । महनं महः, पूजा, विभूतिः । सा च यज्ञं देवा वृद्धतरं प्रशस्यतरं वा प्रागवस्थानं कुर्वन्ति ॥ ११ ॥

---

१–होत्रेणाहाजुषतेति इति क. पा. ।

( त्य ) अस्यामृधेद्धोत्रायां देवङ्गमायामिति । ( त्य ) अस्याꣳराध्नोतु होत्रायां देवङ्गमायामित्येवैतदाहाशास्तेऽयं यजमानोऽसाविति नाम गृह्णाति तदेनं प्रत्यक्षमाशिषा सम्पादयति ॥ १२ ॥

दीर्घायुत्वमाशास्त ऽइति । सा यामुत्रोत्तरा देवयज्या तदिह प्रत्यक्षं दीर्घायुत्वम् ॥ १३ ॥

( ष्ठं ) सुप्रजास्त्वमाशास्त ऽइति । तद्यदमुत्र भूयो हविष्करणं तदिह प्रत्यक्षꣳ सुप्रजास्त्वं प्रशासनꣳ स कुर्याद्य ऽएवं कुर्यादुत्तरां देवयज्यामाशास्त ऽइति त्वेव ब्रूयात्तदेव जीवातुं तत्प्रजां तत्पशून् ॥ १४ ॥

( न्भू ) भूयो हविष्करणमाशास्त ऽइति । तद्धेव तत्सजातवनस्यामाशास्त ऽइति प्राणा वै सजाताः प्राणैर्हि सह जायते तत्प्राणानाशास्ते ॥१५॥

---

"अस्यामृधेद्धोत्रायां देवङ्गमायामिति"। अस्यां राध्नोतु होत्रायां देवङ्गमायामित्येवैतदाह । "आशास्तेऽयं यजमानोऽसाविति"–नाम गृह्णाति। तदेनं प्रत्यक्षमाशिषा सम्पादयति ॥१२॥

"दीर्घायुत्वमाशास्ते"–इति सा यामुत्रोत्तरा देवयज्या तदिह प्रत्यक्षं दीर्घायुत्वम् ॥१३॥

"सुप्रजास्त्वमाशास्त" इति । तद्यदमुत्र भूयो हविष्करणं तदिह प्रत्यक्षं सुप्रजास्त्वम् । प्रशासनं स कुर्याद्–य एवं कुर्यात् । "उत्तरां देवयज्यामाशास्त"–इति त्वेव ब्रूयात्, तदेव जीवातुं, तत्प्रजां तत्पशून् ॥ १४ ॥

"भूयो हविष्करणमाशास्ते" इति तद्धेव तत् । "सजातवनस्यामाशास्ते" इति । प्राणा वै सजाताः । प्राणैर्हि सह जायते । तत् प्राणानाशास्ते ॥ १५ ॥

---

अस्यामृधेत् । तदेनं प्रत्यक्षमिति । श्रुतया आशिषा विशेषेण 'आशास्ते' 'अयं यजमानः' इति । स 'ऋधेत्' 'राध्नोतु'। 'देवङ्गमायां' देवप्रापणशीलायाम् । यच्चेडायाम् "उपहूतोऽयं यजमानः" इति ( श० प० ८ अ० १ ब्रा० २९ कं० ) आशीःशब्दाभावान्नामाभावाच्च परोक्षम् आशिषा सम्पादयति॥१२॥

दीर्घायुत्वमाशास्ते । 'अमुत्र' इडायाम् । 'उत्तरा देवयज्या' "उपहूतोऽयं यजमान उत्तरस्यां देवयज्यायाम्" इति, ( श० प० ८ अ० १ ब्रा० ३० कं० ) 'तदिह' 'प्रत्यक्षं' श्रौतं 'दीर्घायुत्वम्' आशास्त इति दीर्घजीवित्वमुपदिश्यत इत्यर्थः ॥ १३॥

सुप्रजास्त्वमाशास्ते । 'प्रशासनं' प्रशास्यन्तेऽनेन देवाः प्रार्थ्यमाना इति प्रशासनम्, पुरुषस्य साक्षात् स्वार्थपरत्वं 'कुर्यात्' इत्यर्थः । "उत्तरां देवयज्याम्"–इत्येवं देवार्थाशीःपूर्वकान् स्वार्थानासीरन् यजमानाः । यजनीयदेवानां भवति च यथा जीवनादित्रयमन्तर्गतम्, तथोक्तमेव ( श०प० १।८।१।३१–३३ ) ॥ १४॥

भूयो हविष्करणमाशास्ते । तद्धेव तदिति । यदेवैतत् पूर्वं जीवनादित्रय देवपुरःसरम "उत्तरां देवयज्याम्" इत्युक्तम् ( तै० ब्रा० ३।५। १० ) । तदेतद् 'भूयो हविष्करणमिति । किमर्थं तर्हि ? तदेवोच्यते–तद्धेव तदिति; अर्थभेदात् । अन्या हि उत्तरा देवेज्या, पुनर्योगमात्रमन्यद् 'भूयः' बहु 'हवि-

दि॒व्यं धाम॒ाशा॑स्त ऽइ॒ति । दे॒व॒लो॒के मे॒ऽप्यस॒दिति॒ वै य॑जते॒ यो य॑जते॒ तद्दे॑वलो॒क ऽए॒वैन॑मे॒तद॑पित्वि॒नं क॑रोति॒ यद॒नेन॑ ह॒विषा॒शास्ते॒ तद॑श्याॖत्तद्द्॑ध्या॒दिति॒ यद॒नेन॑ ह॒विषा॒शास्ते॒ तद॑स्मै॒ सर्व॑ᳯँ समृद्ध्य॒ताम्मि॒त्ये॒वैतदा॑ह ॥ १६ ॥

ता वा॒ ऽए॒ताः । प॒ञ्चाशि॑षः करोति॒ ति॒स्र ऽइ॒डायां॒ ता ऽअ॒ष्टाव॒ष्टाक्ष॑रा॒ वै गा॑य॒त्री वी॒र्यं गा॑य॒त्री वी॒र्य॑मे॒वैतदा॒शिषो॒ऽभिस॒म्पाद॑यति ॥ १७ ॥

ना॒तो भ॒यसीः कुर्यात् । ( इ ) अ॒तिरिक्त॑ᳯँ ह कु॒र्याद्यद॒तो भू॒यसीः कुर्या॒द्यद्वै य॒ज्ञस्या॑ति॒रिक्तं॒ द्विष॑न्तᳯँ हास्य॒ तद्भ्रातृ॑व्यम॒भ्य॑ति॒रिच्य॑ते॒ तस्मा॒न्नातो भू॒यसीः कुर्यात् ॥ १८ ॥

(द)अपी॒द्वै कनी॑यसीः स॒प्त । तद॑स्मै दे॒वा रा॑सन्ता॒मिति॒ तद॑स्मै दे॒वा ऽअनु॑मन्यन्ता॒मि॒त्ये॒वैतदा॑ह॒ तद॒ग्निर्दे॒वो दे॒वेभ्यो॒ वनु॒तां व॒यम॒ग्नेः परि॒मानु॑षा

---

" दिव्यं धामाशास्ते "–इति । देवलोके मेऽप्यसदिति वै यजते–यो यजते । तद्देवलोक एवैनमेतदपित्विनं करोति–यदनेन हविषाशास्ते । " तदश्यात्, तदृध्याद् "–इति । यदनेन हविषाशास्ते–तदस्मै सर्वं समृद्ध्यतामित्येवैतदाह ॥ १६ ॥

ता वा एताः पञ्चाशिषः करोति । तिस्र इडायाम् । ता अष्टौ । अष्टाक्षरा वै गायत्री । वीर्यं गायत्री । वीर्यमेवैतदाशिषोऽभिसम्पादयति ॥ १७ ॥

नातो भूयसीः कुर्यात् । अतिरिक्तं ह कुर्याद्–यदतो भूयसीः कुर्याद् । यद्वै यज्ञस्यातिरिक्तं–द्विषन्तं हास्य तद्भ्रातृव्यमभ्यतिरिच्यते । तस्मान्नातो भूयसीः कुर्यात् ॥ १८ ॥

अपीद्वै कनीयसीः सप्त । " तदस्मै देवा रासन्ताम् "–इति । तदस्मै देवा अनुमन्यन्ता-

---

ष्करणम्;' प्रयोगवाहुल्यात्मकमनल्पहविष्कत्वञ्चेत्यपौनरुक्त्यम् । सजाता भ्रातरः, आत्मिकास्तु प्राणास्तेषाञ्च रास्य सम्भक्तिस्तैरवियोगः ' सजातवनस्या ' ( तै० सं० २ । ६ । ९ ) । ' वनस् '–शब्दः कण्ड्वादिषु द्रष्टव्यः ; " कण्ड्वादिभ्यो यक् " ( पा० सू० ३ । १ । २७ ) वननं वनस्या ॥ १५ ॥

**दिव्यं धाम** । दिवि भवं ' दिव्यम् ' । **देवलोके मेऽपीति** । ' यो यजते ' स एवमर्थं इह तावन्नामास्त्येव, येन कार्यं देवलोकेऽपि मे कथं नाम स्यादिति तत्र स्थानमात्मन आशास्त इत्यभिप्रायः । ' अश्यात् ' " अशू व्याप्तौ " ( धा० पा० स्वा० प० १७ ) प्राप्नोतु । ' ऋध्यात् ' समृद्ध्यताम् ॥ १६ ॥

**ता वा ऽएताः** । ' पञ्चाशिषः ' उत्तरदेवयज्या, भूयो हविष्करणम्, सजातवनस्या, दिव्यं धाम, यदनेनेति च कर्मफलं समीहितम्; एताः पंच । ' तिस्र इडायां ' देवयज्याहविष्करणम् " देवा म इदं हविर्जुषताम् " इति ( श० प० १ का० ८ । १ । ३०–३७ ) । " वीर्यं गायत्री " वीर्यवती सा, यद्गायत्री श्येनो हि भूत्वा दिवः सोममाहरत् ॥ १७ ॥

**नातो भूयसीः** । शाखान्तराधीतानां प्रतिषेधः ॥ १८ ॥

**अपीद्वै कनीयसीः** । कनीयस्त्वे कारणं प्रदेशान्तरे उक्तम् " न्यूनाद्वा ऽइमाः प्रजाः प्रजायन्ते तच्छुः–

---

१–" सजाताः प्राणानेव नान्तरेति " ।

ऽइति तदग्निर्देवो देवेभ्यो वनुतां वयमग्नेरध्यस्मा ऽएतद्धनवामहा ऽइत्येवैतदाह ॥ १९ ॥

( हे ) इष्टश्च वित्तश्चेति । ( त्यै ) ऐषिषुरिव वा ऽएतद्यज्ञन्तमविदं- स्तस्मादाहेष्टश्च वित्तश्चेत्युभे चैनं द्यावापृथिवी ऽअꣳहसस्पातामित्युभे चैनं द्यावापृथिवी आर्त्तेर्गोपायतामित्येवैतदाह ॥ २० ॥

तदु हैक ऽआहुः । ( रु ) उभे च मेति तथा होताशिष ऽआत्मानं नान्तरेतीति तदु तथा न ब्रूयाद्यजमानस्य वै यज्ञ ऽआशीः किन्नु तत्रर्त्विजां यां वै काञ्च यज्ञ ऋत्विज ऽआशिषमाशासते यजमानस्यैव सा न ह स ऽएतां कचनाशिषं प्रतिष्ठापयति य ऽआहोभे च मेति तस्मादु ब्रूयादुभे चैन- मित्येव ॥ २१ ॥

---

मित्येवैतदाह । "तदग्निर्देवो देवेभ्यो वनुतां वयमग्नेः परिमानुषा" इति । तदग्निर्देवो देवेभ्यो वनुतां वयमग्नेरध्यस्मा एतद्धनवामहा इत्येवैतदाह ॥ १९ ॥

" इष्टश्च वित्तश्चेति " । ऐषिषुरिव वा एतद्यज्ञम्, तमविदन्,–तस्मादाह–इष्टश्च वित्तश्चेति । " उभे चैनं द्यावापृथिवी अंहसस्पाताम् "– इति । उभे चैनं द्यावापृथिवी आर्त्तेर्गोपायता- मित्येवैतदाह ॥ २० ॥

तदु हैक आहुः–' उभे च मा ' इति । तथा होताशिष आत्मानं नान्तरेतीति । तदु तथा न ब्रूयात् । यजमानस्य वै यज्ञ आशीः किन्नु तत्रर्त्विजाम् । यां वै काञ्च यज्ञ ऋत्विज आशिष- माशासते–यजमानस्यैव सा । न ह स एतां कचनाशिषं प्रतिष्ठापयति–य आह–उभे च मा–इति । तस्माद्दु ब्रूयाद्–' उभे चैनम् '–इत्येव ॥ २१ ॥

---

श्रेयसमुत्तरावत् " ( श० प० २ । १ । १ । १३ ) इति । ' रासन्ताम् ' " रासृ दाने " ( धा० पा० भ्वा० आ० ६२७ ) ददतु; कर्मभिर्यज्यमाना देवा अनुमन्यन्तामिति भावः । ' तत् ' ' अग्निः ' होता ' देवः ' ' देवेभ्यः ' ' वनुताम् ' " वनु याचने " ( धा०-पा० त० आ० ८ ) याचताम् । ' वयं ' च मानुष- होतारः । आत्मनि बहुवचनम्[1] । ' अग्नेः ' ' अधि '–शब्दोऽत्राग्निरित्यस्य पञ्चम्यन्तत्वद्योतनार्थः । अनेकपञ्च- म्यर्थसम्भवेऽपादानार्थत्वद्योतकः ( पा० सू० २ अ० ३ पा० २८ सू० भा० ) ॥ १९ ॥

**इष्टश्च वित्तश्च ।** ' उभे च द्यावापृथिवी ' ' एनम् ' यजमानयज्ञं ' गोपायताम् ' इति सम्बन्धः । ' इष्टं ' कर्म, यज्ञः, सर्वकालं मनोरथैर्वाञ्छितमित्यर्थः । ' वित्तं ' तदेव लब्धम् । देवेषु ' ऐषिषुः ' प्रार्थितवन्तः ऋत्वि- ग्यजमानाः । ' यज्ञम् तमविदन् ' " विद्लृ लाभे " ( धा० पा० तु० उ० १६१ ) लब्धवन्तः ॥ २० ॥

**तदु हैक ऽआहुः ।** ' उभे च मा ' मां द्यावापृथिवी इत्येवं होता ब्रूयात् । एके आहुः–" **यजमानस्य वै यज्ञ आशीः; किन्नु तत्रर्त्विजाम्** "–इति; न काश्चिदप्याशिष ऋत्विजामित्यर्थः । कथम् ? ' यां काञ्च '

---

१–" नैकवचनं युञ्जीत गुरावात्मनि चेश्वरे " इति ॥

( धं ) इह गतिर्वामस्येति । तद्यदेव यज्ञस्य साधु तदेवास्मिन्नेतद्दधाति तस्मादाहेह गतिर्वामस्येति ॥ २२ ॥

( ती ) इदं च नमो देवेभ्य ऽइति । तद्यज्ञस्यैवैतत्सᳫंस्थां गत्वा नमो देवेभ्यः करोति तस्मादाहेदञ्च नमो देवेभ्य ऽइति ॥ २३ ॥

( त्यु ) अथ शंयोराह । शंयुर्ह वै बार्हस्पत्योऽञ्जसा यज्ञस्य सᳫंस्थां विदाञ्चकार स देवलोकमपीयाय तत्तदन्तर्हितमिव मनुष्येभ्यऽआस॥२४॥

तद्धा ऽऋषीणामनुश्रुतमास । शंयुर्ह वै बार्हस्पत्योऽञ्जसा यज्ञस्य सᳫंस्थां विदाञ्चकार स देवलोकमपीयायेति ते तामेव यज्ञस्य सᳫंस्था-

---

" इह गतिर्वामस्य "-इति । तद्यदेव यज्ञस्य साधु; तदेवास्मिन्नेतद्दधाति, तस्मादाह-इह गतिर्वामस्येति ॥ २२ ॥

" इदं च नमो देवेभ्यः "-इति । तद् यज्ञस्यैवैतत् संस्थां गत्वा नमो देवेभ्यः करोति । तस्मादाह-' इदञ्च नमो देवेभ्य ' इति ॥ २३ ॥

अथ शंयोराह । शंयुर्ह वै बार्हस्पत्योऽञ्जसा यज्ञस्य संस्थां विदाञ्चकार, स देवलोकमपीयाय. तत्तदन्तर्हितमिव मनुष्येभ्य आस ॥ २४ ॥

तद्धा ऋषीणामनुश्रुतमास-'शंयुर्ह वै बार्हस्पत्योऽञ्जसा यज्ञस्य संस्थां विदाञ्चकार, स देवलोक-

---

सर्वामित्यर्थः; ' आशिषमाशासते ', ' यजमानस्यैव सा ' भवति न त्वृत्विजाम् । ततश्च य एव सार्थो भवति, ' न ' ' सः ' ' क्वचन ' कचिदपि ' एतामाशिषं प्रतिष्ठापयति ' । कथम ? यत्र तया प्रतिष्ठातव्यो यजमानः, तत्र शंसन्नाह । यश्चाहात्मनि, तत्र स न प्रतितिष्ठतीति । " **तस्मादु ब्रूयादुभे चैनमित्येव** "-इति । उभे च मेतीत्येतच्छब्दस्यार्थः ॥ २१ ॥

**इह गतिः** । ' इह ' यजमाने ' गतिः ' प्रतिष्ठा ' वामस्य ' वननीयस्य ( निरु० ९ ४ । ४ । ९ ) ' साधु ' अस्तीति शेषः । तद्यदेव यज्ञस्य साध्विति । असाध्वपि-किञ्चिदस्यास्ति, तद् यजमाने मा भूदित्यर्थः ॥ २२ ॥

**इदञ्च नमः** । इदमिति नमस्करणं प्रत्यक्षम्, तदाह-' नमस्करोति '-इति । होता ' देवेभ्यः ' 'वैगुण्याशङ्कानिह्नवाय, यज्ञकृतकदर्थननिह्नवाय वा वदेदित्यभिप्रायः ॥ २३ ॥

**अथ शंयोः**[1] । शंयुर्नाम[2] बृहस्पतेः पुत्रः । स यावदत्र लोके आस्ते, तावत्तादृशी यज्ञस्य संस्था न भवति, यादृशीं ' स विदाञ्चकार '; द्युलोकगते तु शंयौ तत्समानवीर्या कनीयसी संस्था सम्भवतीत्येतदितिहासेनाह- **शंयोर्वाकमिति** । विशेषत आह होता अध्वर्युणा प्रेषितः सन् ' अञ्जसा ' ऋजु, सम्यगित्यर्थः । ' सः ' च क्वचित्काले ' देवलोकम् ' ' अपीयाय ' अपिगतः । ' तत् ' तदा ' तद् ' विज्ञान भवितव्यतावशादेव ' अन्तर्हितं ' विच्छिन्नं ' मनुष्येभ्यः ' बभूव ॥ २४ ॥

**तद्धा ऋषीणाम्** । कथं तस्याः संस्थायाः प्रतिसन्धेयम्, तदृषिभिस्तत्काले श्रुतावानीय तस्याश्च कालं

---

१-इत आरभ्य शंयुवाकमन्त्रव्याख्यानम् । तत्पाठस्तु । तै० ब्रा० ३ । ५ । ११ अनुवाकः समग्रः । तद्व्याख्यानन्तु तै. सं० २।६।१०। २-' शम्युः ' शंयुः-इत्युभयविधः पाठो दृश्यते । बृहस्पतिपुत्राणामेकस्यैतन्नामधेयमृग्वेदप्रसिद्धम् ।

सुपायन्याᳫँ᳭शंयुर्बार्हस्पत्यो ऽवेद्यच्छंयोरब्रुवंस्ताम्वेवैष ऽएतद्यज्ञस्य सᳫँ᳭स्थामुपेति याᳫँ᳭शंयुर्बार्हस्पत्योऽवेद्यच्छंयोराह तस्माद्वै शंयोराह ॥ २९ ॥

स प्रतिपद्यते । तच्छंयो रावृणीमह ऽइति तां यज्ञस्य सᳫँ᳭स्थामावृणीमहे याᳫँ᳭शंयुर्बार्हस्पत्योऽवेदित्येवैतदाह ॥ २६ ॥

गातुं यज्ञाय गातुं यज्ञपतय ऽइति । गातुᳫँ᳭ ह्येष यज्ञायेच्छति गातुं यज्ञपतये यो यज्ञस्य सᳫँ᳭स्थां दैवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्य ऽइति स्वस्ति नो देवत्रास्तु स्वस्ति मनुष्यत्रेत्येवैतदाहोर्ध्वं जिगातु भेषजमित्यूर्ध्वो नोऽयं यज्ञो देवलोकं जयत्वित्येवैतदाह ॥ २७ ॥

शन्नो ऽअस्तु द्विपदे शं चतुष्पद ऽइति । ( त्ये ) एतावद्वा ऽइदᳫँ᳭सर्वं यावद्द्विपाच्चैव चतुष्पाच्च तस्मा ऽएवैतद्यज्ञस्य सᳫँ᳭स्थां गत्वा शं करोति तस्मादाह शन्नो ऽअस्तु द्विपदे शं चतुष्पद ऽइति ॥ २८ ॥

---

मपीयाय' इति। ते तामेव यज्ञस्य संस्थामुपायन्–यां शंयुर्बार्हस्पत्योऽवेद्–यच्छंयोरब्रुवन् । ताम्वेवैष एतद् यज्ञस्य संस्थामुपैति–यां शंयुर्बार्हस्पत्योऽवेद्–यच्छंयोराह । तस्माद्वै शंयोराह ॥ २९ ॥

स प्रतिपद्यते–" तच्छंयोरावृणीमहे " इति । तां यज्ञस्य संस्थामावृणीमहे–यां शंयुर्बार्हस्पत्योऽवेदित्येवैतदाह ॥ २६ ॥

" गातुं यज्ञाय गातुं यज्ञपतये "–इति । गातुं ह्येष यज्ञायेच्छति, गातुं यज्ञपतये–यो यज्ञस्य संस्थाम् । " दैवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्यः "–इति । स्वस्ति नो देवत्रास्तु, स्वस्ति मनुष्यत्रा–इत्येवैतदाह । " ऊर्ध्वं जिगातु भेषजम् "–इति । ऊर्ध्वः नोऽयं यज्ञो देवलोकं जयत्वित्येवैतदाह ॥ २७ ॥

" शन्नोऽअस्तु द्विपदे शं चतुष्पदे "–इति । एतावद्वा इदं सर्वं यावद् द्विपाच्चैव चतुष्पाच्च । तस्मा एवैतद् यज्ञस्य संस्थां गत्वा शं करोति । तस्मादाह ' शन्नो अस्तु द्विपदे शं चतुष्पदे ' इति ॥ २८ ॥

---

विदित्वा तामधोऽवतारितवन्तः । तस्याश्चान्यूनवीर्यतायै आह–ते **तामेवेति** । यच्छंयोर्वाकमब्रुवन् ॥ २९ ॥

**स प्रतिपद्यते** । यत् ' शंयोः ' सम्बन्धि संस्थानं शंयुना दृष्टम्, 'तत्' ' आवृणीमहे ' प्रार्थयामहे ॥२६॥

**गातुं यज्ञाय** । कीदृशम्? ' गातुं ' गमनं ' यज्ञाय ' द्युलोकगमनम्, 'यज्ञपतये' अपि च, यज्ञे यजमाने च ' दैवी ' देवेषु भवा ' स्वस्तिः ' अविनाशः 'नः' अस्माकम् 'अस्तु'; ' स्वस्तिः ' च ' मानुषेभ्यः ' मानुषेषु च ' नः ' अविनाशोऽस्तु । न इति ब्रुवन् स्वामिनं व्यपदिशति । 'ऊर्ध्वं' देवलोकं ' जिगातु ' जयतु, ' भेषजं ' संसारव्याधिविनाशनं यज्ञाख्यं कर्म । यज्ञेन हि यो जितः स यजमानेन जित एव भवतीत्यभिप्रायः ॥ २७ ॥

**शन्नोऽअस्तु** । यज्ञे गच्छति तदनुकारेण द्विपदादेरपि गमनं मा भूदिति 'शं' सुखमाशास्ते । एवमेव मन्त्रार्थं ब्राह्मणं व्याचष्टे, तत्प्रसन्नमेव ॥ २८ ॥

( त्यु ) अथानयेत्युपस्पृशति । ( त्यु ) अमानुष ऽइव वा ऽएतद्भवति यदार्त्विज्ये प्रवृत ऽइयं वै पृथिवी प्रतिष्ठा तदस्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठति तदु खलु पुनर्मानुषो भवति तस्मादनयेत्युपस्पृशति ॥ २९ ॥

इति सप्तमप्रपाठके द्वितीयं ब्राह्मणम् ॥७।२॥ ( ९. १. ) ( अर्धप्रपाठकः ॥ )

ते वै पत्नीः संयाजयिष्यन्तः प्रतिपरायन्ति । जुहूं च स्रुवं चाध्वर्युरादत्ते वेदꣳहोताज्यविलापनीमग्नीत् ॥ १ ॥

( त्त ) तद्धैकेषामध्वर्युः । पूर्वेणाहवनीयं पर्येति तदु तथा न कुर्याद्बहिर्द्धा ह यज्ञात्स्याद्यत्तेनेयात् ॥ २ ॥

---

अथानयेत्युपस्पृशति । अमानुष इव वा एतद् भवति–यदार्त्विज्ये प्रवृतः। इयं वै पृथिवी प्रतिष्ठा । तदस्यामेवैतत् प्रतिष्ठायां प्रतितिष्ठति । तदु खलु पुनर्मानुषो भवति । तस्मादनयेत्युपस्पृशति ॥२९॥

" अथ पत्नीसंयाजः । "

ते वै पत्नीः संयाजयिष्यन्तः प्रतिपरायन्ति । जुहूं च स्रुवं चाध्वर्युरादत्ते, वेदं होता आज्यविलापनीमग्नीत् ॥ १ ॥

तद्धैकेषामध्वर्युः पूर्वेणाहवनीयं पर्येति । तदु तथा न कुर्याद् । बहिर्द्धा ह यज्ञात् स्यात्–यत्तेनेयात् २

---

**अथानया** । ' अनया ' दक्षिणस्य पाणेः कनिष्ठिकया ' इति ' एवमित्यभिनयेन ( ' आवृणीमहे' इत्यादौ ऋत्विक्त्वे यतः प्रवृत्तो व्यावृत्तः ) पृथिव्या उपदर्शनं दर्शयति । " इयं–वै पृथिवीति वाक्यशेषादन्यत्त्वनयेत्येवसन्तं मन्त्रं मन्यन्ते;–अनयेत्येतेन मन्त्रेणोपस्पृशति । किम् ? वाक्यशेषात् पृथिवीमिति । तेषामेव कनिष्ठिकया पृथिवीमुपस्पृशतीति काण्वश्रुत्युपरोधः । कः पुनरुपस्पृशति ? " यदतो होतान्वाह " इति ( श० प० १ । ९ । १ । १ ) उत्तरत्र होतृशब्दश्रवणादध्वर्युरुपस्पृशति । " अमानुष इव वाऽएतत् "–इति " अग्निर्देवो दैव्यो होता " ( श० प० १ । ९ । १ । ९ )–इति व्रियमाणोऽग्निभावं चित्तेनोपगतः स पृथिवीस्पर्शनेनाभिनयेन मानुषायतनं पृथिवीमुपगतोऽस्तीति दर्शयति । पृथिव्युपगमेनापि तत्स्थमानुषभावोपगममुपलक्ष्य । योनिविमोचने वक्ष्यत्येतद्–" यद्धि युक्तं न विमुच्यते, प्र तद्दह्यते "–इति ( श० प० ६ । ७ । ४ । ८ ), तस्मात् सर्वयज्ञेषु युक्तं विमोक्तव्यम् । एवं प्रासङ्गिकं होतृब्राह्मणं समाप्तम् ॥ २९ ॥ ( ९. १ )

श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य शासितुः । धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम् ॥

इत्याचार्यहरिस्वामिनः कृतौ **शतपथभाष्ये हविर्यज्ञेषु** नवमाध्यायस्य प्रथमं ब्राह्मणम् ॥

**ते वै पत्नीः** । पत्नीसंयाजब्राह्मणमेतत्[२] । ' ते ' वक्ष्यमाणा अध्वर्य्वादयः ' पत्नीः ' देवानां ' संयाजयिष्यन्तः ' देवैः सह संगता याजयिष्यन्तः । यजमानः संयजते, न यजमानेन समिज्यमानास्ते ऋत्विजः संयाजयन्ति । संयाजनार्थं ' प्रति ' यस्मादेव गार्हपत्यदेशादगताः, तमेव ' परियन्ति ' गमनप्रतिलोम आहवनीयात्परास्तमभिमुखमायन्ति । आगच्छन्तश्चेदं कुर्वन्ति–"**जुहूं च स्रुवं चाध्वर्युरादत्ते** "–इत्यादि ॥ १ ॥

**तद्धैकेषाम्** । ' बहिर्द्धा ' बहिरेव बहिर्द्धा, ' यज्ञात्स्यात् ' साधनम् । शरीरी यज्ञः, न चाहवनीयात् प्राक् साधनं किञ्चिदस्ति, ततश्चाध्वर्युणा यज्ञाङ्गेन यज्ञशरीरं मोक्तव्यमित्यभिप्रायः ॥ २ ॥

---

१–" नास्तीत्येव बन्धनीस्थः पाठः क्वचित्पुस्तके । २–" पत्नीसंयाजेभ्यो गार्हपत्यं गच्छन्ति " इत्यादीनि सूत्राण्यालोच्यानि का. श्रौ. सू. ३ । १४०–१४३ ॥

( ज्ञ ) जघुनेनो हैव पुत्नीम् । ( मे ) एकेषामध्वर्युरेति नो ऽएव तुथा कुर्यात्पूर्व्वार्द्धो वै युज्ञुस्याध्वर्युर्जघनार्द्धः पुत्नी यथा भसत्तः शिरः प्रतिदध्यादेवं तुद्बहिर्द्धा हैव यज्ञात्स्याद्यत्तेनेयात् ॥ ३ ॥

( ड्ड ) अुन्तरेणो हैव पुत्नीम् । ( मे ) एकेषामध्वर्युरेति नो ऽएव तुथा कुर्यादन्तुरियाद्ध युज्ञात्पुत्नीं यत्तेनेयात्तुस्मादु पूर्व्वेणैव गार्हपत्यमुन्तरेणाहवनीयश्चैति तथा ह नु बहिर्द्धा युज्ञाद्भवति युथो ऽएवादः प्रचुरन्नुन्तरेण सञ्चुरति सु ऽउ ऽएवास्यैष सुञ्चुरो भवति ॥ ४ ॥

( त्यु ) अुथ पुत्नीः सुंयाजयन्ति । युज्ञाद्वै प्रजाः प्रुजायन्ते युज्ञात्प्रजायमाना मिथुनात्प्रुजायन्ते मिथुनात्प्रजायमाना ऽ अन्ततो युज्ञुस्य प्रुजायन्ते तुदेना ऽएतुदन्ततो युज्ञस्य मिथुनात्प्रजुननात्प्रुजनयति तुस्मान्मिथुनात्प्रजुननादन्ततो युज्ञस्येमाः प्रजाः प्रुजायन्ते तुस्मात्पुत्नीः सुंयाजयन्ति ॥ ५ ॥

---

जघनेनो हैव पत्नीमेकेषामध्वर्युरेति, नो एव तथा कुर्यात् । पूर्वार्द्धो वै यज्ञस्याध्वर्युः, जघनार्द्धः पत्नी । यथा भसत्तः शिरः प्रतिदध्याद्–एवं तत् । बहिर्द्धा हैव यज्ञात् स्याद्–यत्तेनेयात् ॥ ३ ॥

अन्तरेणो हैव पत्नीमेकेषामध्वर्युरेति । नो एव तथा कुर्याद् । अन्तरियाद्ध यज्ञात् पत्नीम्–यत्तेनेयात् । तस्मादु पूर्वेणैव गार्हपत्यमन्तरेणाहवनीयश्चैति । तथा ह न बहिर्द्धा यज्ञाद् भवति । यथो एवादः प्रचरन्नन्तरेण सञ्चरति–स उ एवास्यैष सञ्चरो भवति ॥ ४ ॥

अथ पत्नीः संयाजयन्ति । यज्ञाद्वै प्रजाः प्रजायन्ते । यज्ञाद्–प्रजायमाना मिथुनात् प्रजायन्ते । मिथुनात्प्रजायमाना अन्ततो यज्ञस्य प्रजायन्ते । तदेना एतदन्ततो यज्ञस्य मिथुनात् प्रजन-

---

जघनेनो । गार्हपत्यमुत्तरेणातीत्य पत्नी चापरेण । पत्नीदक्षिणपार्श्वे स्थितो यज्ञादित्यपरे शाखिन आहुः । भसदुत्सर्गायतनम् ' भसत्तः ' यथा भसदि शिरः संयोजयेत्, तच्चायुक्तमित्यभिप्रायः ॥ ३ ॥

अन्तरेणो । ' गार्हपत्यमन्तरेण ' अतीत्य गार्हपत्यस्य पत्न्याश्चान्तरालेनेत्यपरे ॥ ४ ॥

अथ पत्नीः । " यज्ञाद्वै प्रजाः "–इत्यस्मिन् काले पत्नीषु संयाज्यमानासु ' यज्ञस्य ' जघनार्द्धे मिथुनं प्रजननं कृतं भवतीत्याह । प्रजापतिभावाय यज्ञसम्पादनाय युक्तः सन् सर्गस्य हेतुर्भवति । सोऽपि न च सर्वात्मना किं तर्हि ? यदाधियज्ञिकं मिथुनं तेनांशेन प्रजासर्गस्य साक्षात्कारणं भवति । तदाह–यज्ञात् प्रजायमाना मिथुनात् प्रजायन्ते न स्वतः, एवं च तदपि मिथुनं यद्यज्ञस्यान्ते वर्त्तते, तस्मात् ' प्रजाः प्रजायन्ते ' । स हि यज्ञपुरुषस्य जघनार्द्धभागित्यभिप्रायः । ततश्च यदेताः पत्नीः सह देवैर्यजति, 'तदेनाः' प्रजाः एतदन्ततो यज्ञस्य ' मिथुनात् प्रजननात् प्रजनयति ' यस्माच्चैवमधियज्ञं क्रियते, 'तस्माद्' यज्ञानुकारिणो ' मिथुनाद् ' एव लिङ्गद्वयात् 'प्रजननादन्ततः' जघनभावाद् ' यज्ञस्य' यज्ञकार्यपुरुषस्य ' इमाः ' ' प्रजायन्ते ' तस्मान्नियमनम् ॥ ५ ॥

चतस्रो देवता यजति । चतस्रो वै मिथुनं द्वन्द्वं वै मिथुनं द्वे द्वे हि खलु भवतो मिथुनमेवैतत्प्रजननं क्रियते तस्माच्चतस्रो देवता यजति ॥ ६ ॥

ता वा ऽआज्यहविषो भवन्ति । रेतो वा ऽआज्यꣳरेत ऽएवैतत्सिञ्चति तस्मादाज्यहविषो भवन्ति ॥ ७ ॥

तेनोपाꣳशु चरन्ति । तिर ऽइव वै मिथुनेन चर्यते तिर ऽइवैतद्यदुपाꣳशु तस्मादुपाꣳशु चरन्ति ॥ ८ ॥

( न्त्यु ) अथ सोमं यजति । रेतो वै सोमो रेत ऽएवैतत्सिञ्चति तस्मात्सोमं यजति ॥ ९ ॥

( त्यु ) अथ त्वष्टारं यजति । त्वष्टा वै सिक्तꣳ रेतो विकरोति तदेषु ऽएवैतत्सिक्तꣳरेतो विकरोति तस्मात्त्वष्टारं यजति ॥ १० ॥

---

नात् प्रजनयति । तस्मान्मिथुनात् प्रजननादन्ततो यज्ञस्येमाः प्रजाः प्रजायन्ते । तस्मात् पत्नीः संयाजयन्ति ॥ ९ ॥

चतस्रो देवता यजति । चतस्रो वै मिथुनम् । द्वन्द्वं वै मिथुनम् । द्वे द्वे हि खलु भवतः । मिथुनमेवैतत् प्रजननं क्रियते । तस्माच्चतस्रो देवता यजति ॥ ६ ॥

ता वा आज्यहविषो भवन्ति । रेतो वा आज्यम् । रेत एवैतत्सिञ्चति । तस्मादाज्यहविषो भवन्ति ७

तेनोपांशु चरन्ति । तिर इव वै मिथुनेन चर्यते । तिर इवैतद्—यदुपांशु । तस्मादुपांशु चरन्ति ८

अथ सोमं यजति ( १ ) । रेतो वै सोमः—रेत एवैतत् सिञ्चति । तस्मात् सोमं यजति ॥ ९ ॥

अथ त्वष्टारं यजति ( २ ) । त्वष्टा वै सिक्तं रेतो विकरोति । तस्मात् त्वष्टारं यजति ॥ १० ॥

---

**चतस्रो देवताः** । चतस्र इति[1] । देवानां पत्न्यो यद्यपि बह्व्यः ( श० प० ११ कां० १ अ० ६ ब्रा० २७ क० ) तथाप्येकैव सा हविर्भागदेवतेत्यभिप्रायः । **द्वे द्वे हीति** । द्वाभ्यां देवताभ्यां मिथुनम्, अपराभ्यामपर मिथुनम्, ताभ्यामपि मिथुनाभ्यामपरं मिथुनमित्येतद्दर्शयति ॥ ६ ॥

**ता वा आज्यहविषः** । ' रेत आज्यम् ' सारत्वात्, कारणद्रव्यत्वस्नेहैश्च । रेत एवैतदभियज्ञं ' सिञ्चति ' प्रजार्थम् ॥ ७ ॥

**तेनोपांशु** । उपांशुचरणशब्देन सर्व ( "उपाꣳशु चरति" "चरणशब्दे सर्वं देवताऽन्यत्र" इति ( का० श्रौ० सू० ३ । १४४ १४५ । १४६ ) होत्राध्वर्यवमेव श्राव्यं ' तिरः ' अन्तर्हितमप्रकाशं ' मिथुनेन ' लिङ्गद्वयेन ' चर्यते ' लोके तेन यज्ञपूर्वकेन भवनीयम् ' उपांशु ' चाप्रकाशम् । तस्मादुपांश्वित्युपसंहारः ॥८॥

**अथ सोमम्** । यद्यप्याज्येनैव रेतोऽर्थः सिद्धः, तथापि देवलोकमपि तत्सम्पाद्यमिति ' सोमं ' यजति ( " यजति सोमं त्वष्टारं देवानां पत्नीरग्निं गृहपतिमिति " का० श्रौ० सू० ३ । १४६ ) ॥ ९ ॥

**अथ त्वष्टारम्** । मिथुनोपपादनाय यत्र क्वचन पुंसि यष्टव्ये मिथुनात् त्रिगुण एवाश्रयणीय इत्यभिप्रायः ।

---

1—" चतस्रोऽवान्तरदिशः, त एव चत्वारः पत्नीसंयाजाः" इत्य॰ इहैवोपरिष्टात् ( ११ । १ । ६ । २७ ) इत्यत्र द्रष्टव्यम् ॥

( त्यु ) अथ देवानां पत्नीर्यजति । पत्नीषु वै योनौ रेतः प्रतिष्ठितं तत्ततः प्रजायते तत्पत्नीष्वेवैतद्योनौ रेतः सिक्तं प्रतिष्ठापयति तत्ततः प्रजायते तस्माद्देवानां पत्नीर्यजति ॥ ११ ॥

स यत्र देवानां पत्नीर्यजति । तत्पुरस्तात्तिरः करोत्युप ह वै तावद्देवता ऽआसते यावन्न समिष्टयजुर्जुहोतीदं नु नो जुहोत्विति ताभ्यऽएवैतत्तिरः करोति तस्मादिमा मानुष्यः स्त्रियस्तिरऽइवैव पुꣳसो जिघत्सन्ति या ऽइव तु ता ऽइवेति ह स्माह याज्ञवल्क्यः ॥ १२ ॥

( ल्क्योऽथा ) अथाग्निं गृहपतिं यजति । ( त्य ) अयं वा ऽअग्निर्लोक ऽइममेवैतल्लोकमिमाः प्रजा ऽअभिप्रजनयाति ता ऽइमं लोकमिमाः प्रजा ऽअभिप्रजायन्ते तस्मादग्निं गृहपतिं यजति ॥ १३ ॥

---

अथ देवानां पत्नीर्यजति ( ३ )। पत्नीषु वै योनौ रेतः प्रतिष्ठितं, तत्ततः प्रजायते । तत्पत्नीष्वेवैतद्योनौ रेतः सिक्तं प्रतिष्ठापयति तत्ततः प्रजायते । तस्माद् देवानां पत्नीर्यजति ॥ ११ ॥

स यत्र देवानां पत्नीर्यजति—तत्पुरस्तात्तिरः करोति । उप ह वै तावद्देवता आसते—यावन्न समिष्टयजुर्जुहोति—इदं नु नो जुहोत्विति । ताभ्य एवैतत्तिरः करोति । तस्मादिमा मानुष्यः स्त्रियस्तिर इवैव पुंसो जिघत्सन्ति । या इव तु ता इवेति ह स्माह याज्ञवल्क्यः ॥ १२ ॥

अथाग्निं गृहपतिं यजति ( ४ )। अयं वा अग्निर्लोकः । इममेवैतल्लोकमिमाः प्रजा अभि-

---

'त्वष्टा' वायुः सोऽध्यात्ममवस्थितः सिक्तमात्रमेव 'रेतः' यावन्त्यस्थीनि यस्य प्राणिनः, तावन्ति तस्य सूक्ष्म-विभागानि खण्डितानि करोति । तच्चाधियज्ञानुकारेण, नान्यथेति यज्ञेऽपि मिथुने त्वष्टा विकुर्वन् दर्शनीयः सोऽय यक्ष्यत इति तदेष एवैतदित्याह ॥ १० ॥

**अथ देवानां पत्नीः । पत्नीषु वै योनाविति** । पत्न्या एव 'योनिः' प्रजाधारणस्थानम्, तस्मिन्नेव 'रेतः' 'प्रतिष्ठितम्' । 'ततः' एव च 'प्रजायते' अपत्यरूपेण; पत्नीनां योनेरेव विकृतरेतसः प्रसूतिर्भवति । 'तत्पत्नीष्वेव' योनिभूतासु 'सिक्तं रेतः' प्रतिष्ठापयति । 'ततः' 'ताभ्यो' देवानां पत्नीभ्यः 'प्रजायते' सर्वाः; योषितोऽनुलक्ष्येत्यभिप्रायः ॥ ११ ॥

**स यत्र देवानाम्पत्नीः** । तत्पुरस्तात्तिरः करोति अन्तर्द्धानैमाहवनीयात् । ताभ्य एवैतत् 'तिरः' अन्तर्द्धानं 'करोति' । 'तस्मात्' हेतोः 'मानुष्यः स्त्रियः' 'तिर इव' 'पुंसः' "अन्तर्द्धौ येनादर्शनमिच्छति"—इत्यपादानात्पञ्चमी ( पा. सू. १ । ४ । २८ ) 'पुंसः'—इति । पुंसः अन्तर्हिता, पुंसः अदृश्यमाना 'जिघत्सन्ति' भक्षयितुमिच्छन्ति । 'या इव'—इत्यनुकारः । याः पुंसः पुरो जिघत्सन्त्यश्नन्ति स्त्रियः, 'ता इव' । अस्माद्यज्ञाङ्गानुकारात् 'इत्याह याज्ञवल्क्यः' । क्षुद्रयोषितस्तु पुंसः समक्षमप्यन्तेऽश्नन्ति; तथैवातोऽनुकारादित्यभिप्रायः ॥ १२ ॥

**अथाग्निं गृहपतिम्** । 'अयं लोकोऽग्निः' गृहपतिः । गार्हपत्यो हि गृहपतिः; "अयमग्निर्गार्हपत्यः"—

---

१–निरु. ८ । २ । १०, ११, १२; १० । ३ । १० इत्येतेषु खण्डेषु व्याख्यातः । २–" तृतीयेऽन्तर्द्धानं पुरस्तात् " पत्न्यन्वारभतेऽध्वर्युं " का. श्रौ. सू. ३ । १४७ । १४८ ॥

तद्दिडान्तं भवति । न ह्यत्र परिधयो भवन्ति न प्रस्तरो यत्र वा ऽअदः प्रस्तरेण यजमानꣳ स्वगाकरोति पतिं वा ऽअनुजाया तदेवास्यापि पत्नी स्वगाकृता भवतीयसितꣳ ह कुर्याद्यत्प्रस्तरस्य रूपं कुर्यात्तस्मादिडान्तमेव स्यादुतो प्रस्तरस्यैव रूपं क्रियते ॥ १४ ॥

स यदि प्रस्तरस्य रूपं कुर्याद् । ( य ) यथैवादः प्रस्तरेण यजमानꣳ स्वगाकरोत्येवमेवैतत्पत्नीꣳ स्वगाकरोति ॥ १५ ॥

स यदि प्रस्तरस्य रूपं कुर्यात् । (द्वे) वेदस्यैकं तृणमाच्छिद्याग्रं जुह्वामनक्ति मध्यꣳ स्रुवे बुध्नꣳ स्थाल्याम् ॥ १६ ॥

---

प्रजनयति । ता इमं लोकमिमाः प्रजा अभिप्रजायन्ते । तस्मादग्निं गृहपतिं यजति ॥ १३ ॥

तदिडान्तं भवति । नह्यत्र परिधयो भवन्ति, न प्रस्तरः । यत्र वा अदः प्रस्तरेण यजमानं स्वगाकरोति, पतिं वा अनुजाया—तदेवास्यापि पत्नी स्वगाकृता भवति । इयसितं ह कुर्याद्—यत्प्रस्तरस्य रूपं कुर्यात् । तस्मादिडान्तमेव स्यात् । उतो प्रस्तरस्यैव रूपं क्रियते ॥ १४ ॥

स यदि प्रस्तरस्य रूपं कुर्याद्—यथैवादः प्रस्तरेण यजमानं स्वगाकरोति—एवमेवैतत् पत्नीं स्वगाकरोति ॥ १५ ॥

स यदि प्रस्तरस्य रूपं कुर्याद्—वेदस्यैकं तृणमाच्छिद्याग्रं जुह्वामनक्ति, मध्यं स्रुवे, बुध्नं स्थाल्याम्१६

---

इति वचनात्; गार्हपत्यश्चायं लोकः । ततश्च यत् 'अग्निं' 'गृहपतिं यजति' तत् 'इमं लोकम्' लोकोपलक्षिते देशे 'प्रजाः प्रजनयति' । ततश्च यज्ञानुकारेण तथैव 'ताः प्रजायन्ते' ॥ १३ ॥

**तादिडान्तम्** । इडान्तवत् 'इडान्तम्[1]' । 'इडान्तं' यजनान्तमित्यभिप्राप्ते, तद् इडा पत्नीसंयाजेषु विधीयते । तस्याश्च पूर्वोक्त एव विधिः । अर्थवादोऽपि च पूर्वोक्त एवेति नोक्तः । तस्माद्यज्ञेऽवकल्पयेत्यादि यथैव हि देवेष्विडाऽवक्लृप्ता, तथा स्त्रीष्वपि देवेष्वित्यभिप्रायः । "न ह्यत्र परिधयः"—इत्यादिस्तु इडाया अन्तत्वेऽर्थवादः । तत्राभिप्रायः । अत्रापि पत्नीयज्ञे । यथैव इडा देवयज्ञे भवत्येवं सूक्तवाक—शंयुवाकाभ्यामपि भवितव्यमित्यत आह—**न ह्यत्र परिधयो भवन्तीति** । परिधिप्रस्तरसम्बन्धौ सूक्तवाक—शंयुवाकौ तदभावेऽनुपपन्नावित्यभिप्रायः । ननु च प्रस्तरप्रहरणेन यजमानः स्वगाकृतो देवयज्ञः, अत्रापि यज्ञे पत्नी तथा स्वगाकर्तव्या; इतरथा तु स्वर्गाल्लोकात्साऽन्तरितैव स्यात् ? इत्यत आह—**प्रस्तरेणेति** । प्रस्तरकरणे 'इयसितं ह कुर्यात्' 'इयस्'—शब्दोऽवसानवचनः, कण्ड्वादिषु (ग.पा. ३ । १ । २७–३४) पठ्यते । अवसन्नमवसादं पत्न्याः कुर्याद्;—यजमाने गच्छति स्वर्गं लोकं पत्नी न गता, अत्रैवावसन्ना सा, अधुना यातीत्येतत्कुर्याद्; न च युक्तम्; पतिं ह्यनु च जायेत्यभिप्रायः ॥ १४ ॥

**स यदि प्रस्तरस्य** । 'प्रस्तरस्य' 'रूपं' प्रतिनिधिं 'कुर्यात्', अध्वर्युणा ततः **यथैवाद** इति । स्वेनैव महिम्ना यजमानवत् । तां 'स्वगाकरोति' नाभिदघ्नामानयतीत्यर्थः ॥ १५ ॥

**स यदि** । प्रसन्ना ॥ १६ ॥

---

१-" शंय्वन्तं भवतीडान्तं वा " इति का. श्रौ. सू. ३ । १४९ ॥

( मु ) अथाग्नीदाहानुप्रहरेति । तूष्णीमेवानुप्रहृत्य चक्षुष्पा ऽअग्नेऽसि चक्षुर्मे पाहीत्यात्मानमुपस्पृशति तेनो ऽअप्यात्मानं नानुप्रवृणक्ति ॥ १७ ॥

( त्त्यु ) अथाह संवदस्वेति । ( त्यु ) अगानग्नीदगन्नश्रावय श्रौषट् स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहीति ॥ १८ ॥

( त्यु ) अथ जुहूं च स्रुवञ्च सम्प्रगृह्णाति । ( त्य ) अदो हैवाहुतिं करोति यदनक्त्याहुतिर्भूत्वा देवलोकं गच्छादिति तस्माज्जुहूञ्च स्रुवञ्च सम्प्रगृह्णाति ॥ १९ ॥

स वा ऽअग्नये सम्प्रगृह्णाति । ( त्यु ) अग्नेऽदब्धायोऽशीतमेत्यमृतो ह्यग्निस्तस्मादाहादब्धायवित्यशीतमेत्यशिष्ठो ह्यग्निस्तस्मादाहाशीतमेति पाहि मा दिद्योः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्मन्या ऽइति सर्व्वाभ्यो मार्तिभ्यो गोपायेत्येवैतदाहाविषं नः पितुं कृण्वित्यन्नं वै पितुरनमीवं न

---

अथाग्नीदाह–" अनुप्रहरेति "। तूष्णीमेवानुप्रहृत्य–" चक्षुष्पा अग्नेऽसि, चक्षुर्म्मे पाहि "–इत्यात्मानमुपस्पृशति । तेनो अप्यात्मानं नानुप्रवृणक्ति ॥ १७ ॥

अथाह–" संवदस्वेति–अगानग्नीद्, अगन् । श्रावय, श्रौषड् । स्वगा दैव्या होतृभ्यः, स्वस्तिर्मानुषेभ्यः, शंयोर्ब्रूहि "–इति ॥ १८ ॥

अथ जुहूं च स्रुवञ्च सम्प्रगृह्णाति । अदो हैवाहुतिं करोति यदनक्ति । आहुतिर्भूत्वा देवलोकं गच्छादिति तस्माज्जुहूञ्च स्रुवञ्च सम्प्रगृह्णाति ॥ १९ ॥

स वा अग्नये सम्प्रगृह्णाति–" अग्नेऽदब्धायोऽशीतम " इति । अमृतो ह्यग्निः । तस्मादाह–अदब्धायो–इति । अशीतम–इति । अशिष्ठो ह्यग्निस्तस्मादाह–अशीतम–इति । "पाहि मा दिद्योः, पाहि प्रसित्यै, पाहि दुरिष्ट्यै पाहि दुरद्मन्यै "–इति । सर्वाभ्यो मा आर्तिभ्यो गोपायेत्ये-

---

अथाग्नीदाह । स प्रस्तररूपवचनात् सूक्तवाको मा प्रापदित्याह–अथाग्नीदाहेति । यावदुक्तमेव भवति; प्रैषसामर्थ्यात्; न सूक्तवाकमाह ॥ १७ ॥

अथाह संवदस्व । प्रसन्ना ॥ १८ ॥

अथ जुहूं च स्रुवं च सम्प्रगृह्णातीति । होतुं तत्स्थमाज्यम्; न तु चरुवत् तृणस्याहुतिकरणार्थत्वम् । किं कारणम् ? 'अद एव' तृणमध्वर्युः ' आहुतिं करोति ' । ' यत् ' तत् ' अनक्ति ' अग्रं जुह्वामित्यादि । किमर्थं जुहूञ्च स्रुवञ्च सम्प्रगृह्णाति, किमर्थं वाऽनक्ति ? ' आहुतिर्भूत्वा ' इदमाज्यं ' देवलोकं गच्छादिति ' ॥ १९ ॥

स वा अग्नये । '[१]अशीतमः ' भोक्तृतमः ( धा० पा० क्र्या० ५१ ) ' अनमीवम् ' अमीवा व्याधिः,

---

१–' अश्नाति भुंक्ते इत्यशी अतिशयेनाशी आशितमः । दीर्घश्छान्दस ' इति वा. सं. २ । २० महीधरभाष्योक्तेः । " अग्नयं संवेशपतये स्वाहा । सरस्वत्यै यशोभगिन्यै स्वाहा "–मन्त्रस्त्वेतावन्मात्रः ।

ऽइदमकिल्बिषमन्नं कुर्वित्येवैतदाह सुषदा योनावित्यात्मन्येतदाह स्वाहा वाडिति तद्यथा वषट्कृतꣳ हुतमेवमस्यैतद्भवति ॥२०॥ [ शतम् ८०० ]

( त्यु ) अथ वेदं पत्नी विस्रꣳसयति । योषा वै वेदिर्वृषा वेदो मिथुनाय वै वेदः क्रियतेऽथ यदेनेन यज्ञऽउपालभते मिथुनमेवैतत्प्रजननं क्रियते ॥ २१ ॥

( तेऽथ ) अथ यत्पत्नी विस्रꣳसयति । योषा वै पत्नी वृषा वेदो मिथुनमेवैतत्प्रजननं क्रियते तस्माद्वेदं पत्नी विस्रꣳसयति ॥ २२ ॥

सा विस्रꣳसयति । वेदोऽसि येन त्वं देव वेद देवेभ्यो वेदोऽभवस्तेन मह्यं वेदो भूया ऽइति यदि यजुषा चिकीर्षेदेतेनैव कुर्यात् ॥ २३ ॥

---

वैतदाह । "अविषं नः पितुं कृणु "–इति । अन्नं वै पितुः अनमीवं न इदमकिल्बिषमन्नं कुर्वित्ये-वैतदाह । " सुषदा योनौ "–इति । आत्मन्येतदाह । " स्वाहा वाड्" ( वा०सं० २।२० )–इति । तद्यथा वषट्कृतं हुतम्–एवमस्यैतद्भवति ॥ २० ॥

अथ वेदं पत्नी विस्रंसयति । योषा वै वेदिः । वृषा वेदः । मिथुनाय वै वेदः क्रियते । अथ यदेनेन यज्ञ ऽउपालभते, मिथुनमेवैतत्प्रजननं क्रियते ॥ २१ ॥

अथ यत्पत्नी विस्रंसयति । योषा वै पत्नी, वृषा वेदः । मिथुनमेवैतत्–प्रजननं क्रियते । तस्माद् वेदं पत्नी विस्रंसयति ॥ २२ ॥

सा विस्रंसयति–" वेदोऽसि; येन त्वं देव वेद, देवेभ्यो वेदोऽभवः, तेन मह्यं वेदो भूयाः"–इति । यदि यजुषा चिकीर्षेद्–एतेनैव कुर्यात् ॥ २३ ॥

---

स यस्य कार्यतया नास्ति, तदनमीवम्[1] । ' आत्मनि ' अग्नौ; दक्षिणाग्निहोमादि शाखान्तरात्[2] ॥ २० ॥

अथ वेदं । ( " पत्नी वेदं प्रमुञ्चति वेदोऽसीति योक्त्रं च " इत्यादि का० श्रौ० सू० ३ । १९६ ) । विस्रंसनमुपन्यस्तमेव, अर्थवादस्तु " यद्धि युक्तं न विमुच्यते प्र तद्दह्यते "–इति ( श० प० ६ का० ७ अ० ४ ब्रा० ८ कं० ) गम्यमान एवेति नोक्तः । पत्न्यास्तु कर्तृत्वेऽर्थवादं वक्ष्यति–" अथ यत्पत्नी विस्रंꣳसयति "–इति, ( श० प० १ कां० ९ । २ । २२ ) अधुना विस्रंसनप्रसङ्गादुत्पत्ति–विनीयोगौ वेदस्याह । तत्रो-त्पत्तिस्तावद् योषा वै वेदिरिति । विनियोगः–' अथ यत् । ' एतेन ' वेदेन ' यज्ञे ' किञ्चित् ' उपाल-भते ' उपगृह्णाति, गृहीतमपि सत् ' उपचर्याय ' उपकाराय सुगृहीतत्वाद् यद् गृह्णाति; यत् ' मिथुनं क्रियते '; उपग्राह्यस्य च वेदस्येत्युपग्रहणे[3] विनियोगः । स च एकद्रव्ये इत्येतन्मिथुनवचनादेव गम्यते; नैक-द्रव्ये हि कर्मणि आवृत्तौ अन्योन्यमिव मिथुनं सिद्धम् । तदपि साज्ये कर्मणि संस्रवहोमादौ वेदेनोपग्रहणम्, न सर्वत्रेत्येतच्छाखान्तरात् ॥ २१ ॥

अथ यत् पत्नी । प्रसन्ना ॥ २२ ॥

सा विस्रꣳसयति । ' यदि यजुषा ' कर्तुमिच्छेदिति ' यदि '–शब्दात् पाक्षिकं वेदस्य यजुषा करणमिति

---

१–" शंय्वन्ते स्रुक्स्रुवं प्रगृह्णात्यग्नेदब्धायविति " इति का. श्रा. सू. ३ । १५३ ॥ २–" सव्येनावृत्य दक्षिणाग्नौ जुहोत्यग्नये सरस्वत्या इति च " इति का. श्रौ. सू. ३ । ५४ ॥ " पिष्टलेपाञ्जुहोति " का. श्रौ. सू. ३ । १५५ ॥ इत्यादि ॥

३–" एकद्रव्ये साज्ये वेदेनोपग्रहणं "–" स्फ्येनान्यत्र "–"कुशैरसक्तु " का. श्रौ. सू. १। १० । ६ । ७ । ८ ।

( त्त ) तमा वेदेः सꣳस्तृणाति । योषा वै वेदिर्वृषा वेदः पश्चाद्वै परीत्य वृषा योषामधिद्रवति पश्चादेवैनामेतत्परीत्य वृष्णा वेदेनाधिद्रावयति तस्मादा वेदेः सꣳस्तृणाति ॥ २४ ॥

( त्थ ) अथ समिष्टयजुर्जुहोति । प्राङ्मे यज्ञोऽनुसन्तिष्ठाता ऽइत्यथ यद्धुत्वा समिष्टयजुः पत्नीः संयाजयेत्प्रत्यङ्ङु हैवास्यैष यज्ञः सन्तिष्ठेत तस्माद्वा ऽएतर्हि समिष्टयजुर्जुहोति प्राङ्मे यज्ञोऽनुसन्तिष्ठाता ऽइति ॥२५ ॥

( त्थ ) अथ यस्मात्समिष्टयजुर्नाम । या वा ऽएतेन यज्ञेन देवता ह्वयति याभ्य एष यज्ञस्तायते सर्वा वै तत्ताः समिष्टा भवन्ति तद्यत्तासु सर्वासु समिष्टास्वथैतज्जुहोति तस्मात्समिष्टयजुर्नाम ॥ २६ ॥

( प्ता ) अथ यस्मात्समिष्टयजुर्जुहोति । या वा ऽएतेन यज्ञेन देवता ह्वयति याभ्य एष यज्ञस्तायत ऽउप ह वै ता ऽआसते यावन्न समिष्टयजुर्जुह्वतीदं

---

तमा वेदेः संस्तृणाति । योषा वै वेदिः । वृषा वेदः । पश्चाद्वै परीत्य वृषा योषामधिद्रवति । पश्चा-देवैनामेतत् परीत्य वृष्णा वेदेनाधिद्रावयाति । तस्मादा वेदेः संस्तृणाति ॥ २४ ॥

( अथ समिष्टयजुः । )

अथ समिष्टयजुर्जुहोति–' प्राङ्मे यज्ञोऽनुसन्तिष्ठाता ' इति । अथ यद्धुत्वा समिष्टयजुः पत्नीः संयाजयेत्–प्रत्यङ्ङु हैवास्यैष यज्ञः सन्तिष्ठेत । तस्माद्वा एतर्हि समिष्टयजुर्जुहोति–प्राङ्मे यज्ञो-ऽनुसन्तिष्ठाता इति ॥ २५ ॥

अथ यस्मात्समिष्टयजुर्नाम । या वा एतेन यज्ञेन देवता ह्वयति–याभ्य एष यज्ञस्तायते, सर्वा वै तत्ताः समिष्टा भवन्ति । तद् यत् तासु सर्वासु समिष्टासु–अथैतज्जुहोति । तस्मात्समिष्टयजुर्नाम २६

अथ यस्मात्समिष्टयजुर्जुहोति । या वा एतेन यज्ञेन देवता ह्वयति–याभ्य एष यज्ञस्तायते, उप ह वै ता आसते–यावन्न समिष्टयजुर्जुह्वति–'इदं नु नो जुह्वतु ' इति । ता एवैतद् यथायथं व्यवसृजति–

---

गम्यते । अथ यजुषा करणचिकीर्षाऽऽनुपपन्नेति सामर्थ्यात् पतिः कुर्यादिति । तच्च करणमासाद्याज्यनिर्वापकाले चिकीर्षति । कः पुनः कुर्यात् ? यजमानः; शाखान्तरात् " मह्यं भूयाः " इति मन्त्रलिङ्गाच्च ॥ २३ ॥

तमा वेदेः । " स्तृणात्या वेदेः " इति ( का० श्रौ० सू० ३ । १९७ ) । 'आङ्' अत्राभिविधौ, संस्त-र्यते वेदिं व्याप्येति । " योषा वै वेदिर्वृषा वेदः "–इति शेषात् । वेदिं संस्तृणाति समाख्यानादध्वर्युः; हौत्रे तु विशेषवचनाद्धोता संस्तृणाति ॥ २४ ॥

अथ समिष्टयजुः । " ध्रौवं समिष्टयजुर्जुहोति देवा गातुविद इति " इति ( का० श्रौ० सू० ३ । १९८ ) प्रसन्नाश्चतस्रः ॥ २५–२८ ॥

---

१–' इति वचनादाशीर्योगः ' इत्यधिकं क्वचित् । २–शांखायणे तूत्तरेण गार्हपत्यमा बर्हिषस्तीर्त्वेति । ( १ । १५ । १५ ) । ३–" तन्होता आवेदेः स्तृणातीति " ( ३ । १५७ ) इत्यत्र कातीयश्रौतसूत्रभाष्ये कर्कः ।

नु नो जुहवत्विति ता ऽएवैतद्यथायथं व्यवसृजति यत्रयत्रासां चरणं तदनु यज्ञं वा ऽएतदजीजनत यदेनमतत तं जनयित्वा यत्रास्य प्रतिष्ठा तत्प्रतिष्ठापयाति तस्मात्समिष्टयजुर्जुहोति ॥ २७ ॥

स जुहोति । देवा गातुविद ऽइति गातुविदो हि देवा गातुं वित्त्वेति यज्ञं वित्त्वेत्येवैतदाह गातुमितेति तदेतेन यथायथं व्यवसृजति मनसस्पत ऽइमं देवयज्ञꣳ स्वाहा वाते धा ऽइत्ययं वै यज्ञो योऽयं पवते तदिमं यज्ञꣳ सम्भृत्यैतस्मिन्यज्ञे प्रतिष्ठापयाति यज्ञेन यज्ञꣳ सन्दधाति तस्मादाह स्वाहा वाते धा ऽइति ॥ २८ ॥

( त्य ) अथ बर्हिर्जुहोति । ( त्य ) अयं वै लोको बर्हिरोषधयो बर्हिरस्मिन्नेवैतल्लोक ऽओषधीर्दधाति ता ऽइमा ऽअस्मिँल्लोक ऽओषधयः प्रतिष्ठितास्तस्माद्बर्हिर्जुहोति ॥ २९ ॥

तां वा ऽअतिरिक्तां जुहोति । समिष्टयजुर्ह्येवान्तो यज्ञस्य यदूर्ध्वꣳ समिष्टयजुषोऽतिरिक्तं तद्यदा हि समिष्टयजुर्जुहोत्यथैताभ्यो जुहोति तस्मादिमा ऽअतिरिक्ता ऽअसम्मिताऽओषधयः प्रजायन्ते ॥ ३० ॥

---

यत्रयत्रासां चरणं तदनु । यज्ञं वा एतदजीजनत—यदेनमतत, तं जनयित्वा यत्रास्य प्रतिष्ठा तत्प्रतिष्ठापयति । तस्मात्समिष्टयजुर्जुहोति ॥ २७ ॥

स जुहोति—"देवा गातुविदः"—इति । गातुविदा हि देवाः । "गातुं वित्वा"—इति । यज्ञं वित्वेत्येवैतदाह । "गातुमित"—इति । तदेतेन यथायथं व्यवसृजति । "मनसस्पत इमं देवयज्ञं स्वाहा वातेधाः"—( वा० सं० २ । २९ ) इति । अयं वै यज्ञो योऽयं पवते । तमिमं यज्ञं सम्भृत्यैतस्मिन् यज्ञे प्रतिष्ठापयति । यज्ञेन यज्ञं सन्दधाति । तस्मादाह—स्वाहा वाते धाः—इति२८

अथ बर्हिर्जुहोति । अयं वै लोको बर्हिः । ओषधयो बर्हिः । अस्मिन्नेवैतल्लोक ओषधीर्दधाति । ता इमा अस्मिँल्लोक ओषधयः प्रतिष्ठिताः । तस्माद्बर्हिर्जुहोति ॥ २९ ॥

तां वा अतिरिक्तां जुहोति । समिष्टयजुर्ह्येवान्तो यज्ञस्य । यदूर्ध्वं समिष्टयजुषः—अतिरिक्तं तत् । यदा हि समिष्टयजुर्जुहोति-अथैताभ्यो जुहोति । तस्मादिमा अतिरिक्ता असम्मिता ओषधयः प्रजायन्ते ॥ ३० ॥

---

**अथ बर्हिः** ( "बर्हिः सम्बर्हिरिति" इति का० श्रौ० सू० ३ । १९९ ) । 'अयं वै लोको बर्हिः' "बृहि वृद्धौ" ( धा० पा० भ्वा० प० ७३७ ) परिवृद्धोऽयं लोकः । ततः कियदेतद्बर्हिःशब्दवाच्यता च ओषधिवाच्यता च ? बर्हिःशब्दवाच्यांशेन 'तद् बर्हिरयं लोकः' तस्यापि बर्हिःशब्दकत्वात्, ओषधित्वांशेन तत्सर्वा 'ओषधयः' । ततश्च यद् 'बर्हिः' अधियज्ञं 'जुहोति', तत् 'एतल्लोके' 'ओषधीः' बर्हिष ओषध्यात्मकत्वात् 'दधाति'; तत्रेदं तथैव दृश्यते ॥ २९ ॥

**तां वा अतिरिक्ताम्** । बर्हिराहुतिं यज्ञात् 'अतिरिक्तां जुहोति' । कथम् ? 'समिष्टयजुर्ह्येवान्तो

स जुहोति । सम्बर्हिरङ्क्ताᳬ हविषा घृतेन सुमादित्यैर्व्वसुभिः सुम्मरुद्भिः । समिन्द्रो विश्वेदेवेभिरङ्क्तां दिव्यं नभो गच्छतु यत्स्वाहेति ॥ ३१ ॥

( त्यु ) अथ प्रणीता दक्षिणतः परीत्य निनयति । युङ्क्ते वा ऽएतद्यज्ञं यदेनं तनुते स यन्त्र निनयेत्पराङ् हाविमुक्त ऽएव यज्ञो यजमानं प्रक्षिणीयात्तथो ह यज्ञो यजमानं न प्रक्षिणाति तस्मात्प्रणीता दक्षिणतः परीत्य निनयति ॥ ३२ ॥

स निनयति । कस्त्वा विमुञ्चति स त्वा विमुञ्चति कस्मै त्वा विमुञ्चति तस्मै त्वा विमुञ्चति पोषायेति तत्पुष्टिमुत्तमां यजमानाय निराह स

---

स जुहोति–" सं बर्हिरङ्क्तां हविषा घृतेन, समादित्यैर्वसुभिः सम्मरुद्भिः । समिन्द्रो विश्वेदेवेभिरङ्क्तां दिव्यं नभो गच्छतु यत् स्वाहा "–( वा० सं० २ । २२ ) इति ॥३१॥

अथ प्रणीता दक्षिणतः परीत्य निनयति । ' युङ्क्ते वा एतद् यज्ञम् '–यदेनं तनुते । स यत्र निनयेत्–पराङ् हाविमुक्त एव यज्ञो यजमानं प्रक्षिणीयात् । तथो ह यज्ञो यजमानं न प्रक्षिणाति । तस्मात्प्रणीता दक्षिणतः एव परीत्य निनयति ॥ ३२ ॥

स निनयति–" कस्त्वा विमुञ्चति स त्वा विमुञ्चति, कस्मै त्वा विमुञ्चति तस्मै त्वा

---

यज्ञस्य; तद्धि देवताविसर्जनार्थमित्यभिप्रायः । ततश्च या ' ऊर्द्ध्वं समिष्टयजुषः ' साऽतिरिक्ता, तृप्तासु गतासु च देवतासु । ' यदा हि '–'हि' शब्दः 'च'–शब्दार्थे; यदा च ' समिष्टयजुर्जुहोति ', ' अथ ' अनन्तरम् ' एताभ्यः ' ओषधिभ्यः । " तादर्थ्ये चतुर्थी " ( पा० सू० २ । ३ । १३ वा० १ ) ओषधयोऽस्मिँल्लोके कथं नाम भविष्यन्तीत्येवमर्थं ' जुहोति ' ॥ ३० ॥

स जुहोति । प्रसन्ना ॥ ३१ ॥

अथ प्रणीताः । ( १२ । ९ । २ । ७ इत्यत्र प्रणीताप्रणयनं वक्ष्यति ) अध्वर्युरुत्तरपार्श्वाद् दक्षिणपार्श्वं वेदेः ( आहवनीयं प्रदक्षिणतो ) गत्वा स्वदेशेऽवस्थिता एव ' प्रणीताः ' ' निनयति ' नीचैर्नयति, भूमौ पर्यस्यतीत्यर्थः । ' युङ्क्ते वा ' इति निनयनार्थवादः । ' दक्षिणतः ' इत्येतस्य तु " तथा ह्युदग् भवति " इत्यर्थवादं वक्ष्यति ( श० प० १ । ९ । ३ । १ ) ' पराङ् ' अनावृत्तो ' यज्ञो यजमानं प्रक्षिणीयात् ' " क्षि हिंसायाम् " ( क्र्या० प० २८ ) हिंस्यात् । ' तथा ' नीयमानासु प्रणीतासु ' न प्रक्षिणाति ' न हिनस्ति ॥ ३२ ॥

स निनयति । ( " वेद्यां प्रणीतानि नयति परीत्य कस्त्वेति " इति का० श्रौ० सू० ३ । १६० ) तत्पुष्टिमुत्तमामिति । पुष्टेर्हेतुरापः, तासु निरस्यमानासु मा भूत् पुष्टेर्निरासस्तेन पुष्टिं निराह–उत्तमामिति ।

---

१–समिष्टयजुर्होमेनैव यज्ञसमाप्तिः । अत एतत्प्रातिपत्तिकर्मेत्युच्यते । अथेहोपरिष्टादाहुतिपरिगणनानुसारतः सामिधेनीसंख्या चेत्थं श्रुता " ताः पंचदश सामिधेन्यः, द्वावाघारौ, पंच प्रयाजाः, इडात्रयोऽनुयाजाः, सूक्तवाकश्च शंयोर्वाकश्च तास्त्रयो दशाहुतयोऽथ यदवदानः पत्नीसंयाजेषु सम्प्रगृह्णाति समिष्टयजुश्च ताः पंचदशाहुतयः इत्यादि ११ । २ / ९ । ५ । ६ ॥

येनैव प्रणयति तेन निनयति येन ह्येव योग्यं युञ्जन्ति तेन विमुञ्चन्ति योक्त्रेण हि योग्यं युञ्जन्ति योक्त्रेण विमुञ्चन्त्यथ फलीकरणान्कपालेनाधोऽधः कृष्णाजिनमुपास्यति रक्षसां भागोऽसीति ॥ ३३ ॥

देवाश्च वाऽअसुराश्च । ( श्रो ) उभये प्राजापत्याः पस्पृधिर ऽएतस्मिन्यज्ञे प्रजापतौ पितरि संव्वत्सरेऽस्माकमयम्भविष्यत्यस्माकमयम्भविष्यतीति ॥ ३४ ॥

ततो देवाः । सर्व्वं यज्ञꣳ संव्वृज्याथ यत्पापिष्ठं यज्ञस्य भागधेयमासीत्तेनैनाग्निरभजन्नस्ना पशोः फलीकरणैर्हविर्यज्ञात्सुनिर्भक्ताऽअसन्नित्येष वै सुनिर्भक्तो यं भागिनं निर्भजन्त्यथ यमभागं निर्भजन्त्यैव स

---

विमुञ्चति, पोषाय "–इति । तत्पुष्टिमुत्तमां यजमानाय निराह । स येनैव प्रणयति–तेन निनयति । येन ह्येव योग्यं युञ्जन्ति--तेन विमुञ्चन्ति । योक्त्रेण हि योग्यं युञ्जन्ति–योक्त्रेण विमुञ्चन्ति । अथ फलीकरणान् कपालेनाधोऽधः कृष्णाजिनमुपास्यति । "रक्षसां भागोऽसि "–( वा० सं० २ । २३ । ) इति ॥ ३३ ॥

देवाश्च वा असुराश्च–उभये प्राजापत्याः पस्पृधिरे एतस्मिन्यज्ञे प्रजापतौ पितरि संवत्सरे–'अस्माकमयम्भविष्यत्यस्माकमयम्भविष्यति ' इति ॥ ३४ ॥

ततो देवाः सर्वं यज्ञं संवृज्य, अथ यत् पापिष्ठं यज्ञस्य भागधेयमासीत्–तेनैनाग्निरभजन्–अस्ना पशोः फलीकरणैर्हविर्यज्ञात्–सुनिर्भक्ता असन्निति । एष वै सुनिर्भक्तो यं भागिनं निर्भजन्ति ।

---

आध्वर्यवस्यान्ते इत्यर्थः । आध्वर्यवे शिष्टम् तच्च रक्षोनिरासप्रधानयागादि; ततश्च निनयनमेवाध्वर्योर्यज्ञे उक्तमित्यभिप्रायः । **स येनैव प्रणयतीति** । कस्त्वेत्येताभिरनिरुक्ताभिर्व्याहृतिभिरित्यभिप्रायः । **अथ फलीकरणान् कपालेनाधोऽधः** । फलीक्रियन्ते तण्डुला एभिरिति फलीकरणा अङ्गीभवन्ति तण्डुलनिष्पत्तौ " अभूततद्भावे " ( पा० सू० ५ । ४ । ५० । वा० १. ) "कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः"– (पा० सू० ५ । ४ । ५० ) 'फलीकरणान् ' तण्डुलादीन् ' उपास्यति ' उत्क्षिपति उत्करे । ' कपालेन ' मध्यमेन प्रथमं नातिक्रामेदिति ' अधोऽधः ' अधस्तान्नातिदूरे ' कृष्णाजिनम् '–इति, ' अधोऽध इत्येतद्योगनिमित्ता द्वितीया–( पा० सू० २ । ३ । वा० ३ ) । कृष्णाजिनस्याधस्तात्, समीप इत्यर्थः " पुरोडाशकपालेन कणानपास्यत्यधः कृष्णाजिनꣳरक्षसामिति " ( का० श्रौ० सू० ३ । १६१ ) ॥ ३३ ॥

**देवाश्च वै** । प्रसन्ना ॥ ३४ ॥

**ततो देवाः** । ' सर्वं यज्ञं ' हविर्यज्ञाख्यम, ' संवृज्य ' समाप्तिपूर्वं संहृत्य । **अथेति** । ' अथ ' अनन्तरम् । ' भागधेयं ' भाग एव भागधेयम्; स्वार्थिको धेयः " भागरूपनामभ्यो धेयः " इति ( पा० सू० ६ । ४ ।

---

१–एष एव पाठः साधीयान्प्रतीयते । शंसेराङ्पूर्वस्येच्छार्थकत्वात् " आशंसते "–इति पदस्यैव प्रकृते प्रयोक्तुमौचित्यात् । एवकारोऽप्याङः परतः प्रयुक्तः साधुरवकल्पते । पदादुत्तरस्यैव तत्प्रयोगस्य व्यावहारिकत्वात् । वाक्यादौ तत्प्रयोगस्यानौचित्यात् । भाष्यनुरोधात्तु मूलपाठे " एकार "–एवात्र निर्दिष्ट इति भाव्यम् ॥

तावच्छꣳसत ऽउत हि वशे लब्ध्वाह किं मा बभक्थेति स यमेवैभ्यो देवा भागमकल्पयंस्तमेवैभ्य ऽएष एतद्भागं करोत्यथ यदधोऽधः कृष्णाजिनमुपास्यत्यनग्नावेवैभ्य ऽएतदन्धे तमसि प्रवेशयति तथो ऽएवासृक्पशो रक्षसां भागोऽसीत्यनग्नावन्धे तमसि प्रवेशयति तस्मात्पशोस्तेदनीं न कुर्वन्ति रक्षसाꣳ हि स भागः ॥ ३९ ॥ ३ ॥

इति सप्तमप्रपाठके तृतीयं ब्राह्मणम् ॥ [ ९।२ ]

सꣳस्थिते यज्ञे । दक्षिणतः परीत्य पूर्णपात्रं निनयति तथा ह्युदग्भवति तस्माद्दक्षिणतः परीत्य पूर्णपात्रं निनयति देवलोके मेऽप्यसदिति वै

---

अथ यम् अभागं निर्भजन्ति—ऐव स तावच्छंसते । उत हि वशे लब्ध्वाह—' किं मा बभक्थ ' इति । स यमेवैभ्यो देवा भागमकल्पयन्—तमेवैभ्य एष एतद्भागं करोति । अथ यदधोऽधः कृष्णाजिनमुपास्यति—अनग्नावेवैभ्य एतदन्धे तमसि प्रवेशयति । तथो एवासृक् पशोः "रक्षसां भागोऽसि"—इति—अनग्नावन्धे तमसि प्रवेशयति । तस्मात् पशोस्तेदनीं न कुर्वन्ति । रक्षसां हि स भागः ॥ ३९ ॥

अथ याजमानो विष्णुक्रमः ।

संस्थिते यज्ञे दक्षिणतः परीत्य पूर्णपात्रं निनयति । तथा ह्युदग् भवति । तस्माद्दक्षिणतः परीत्य

---

३६ । वा० २ ) । ' तेन ' भागधेयेन पापिष्ठेन ' एनान् ' असुरान् ' निरभजन् ' निर्भक्तवन्तः; बहिर्यज्ञाद् कृतवन्तः । केन, कस्मात् ? आह—" अस्ना पशोः " । असृक्शब्दस्य असन्नादेशः (पा०सू० ६ । १ । ६३) ' अस्ना ' लोहितेन ' पशोः ' ' निरभजन् ' । ' फलीकरणैः ' पाण्डुरभागैः ' हविर्यज्ञात् निर्भजन्तोऽभूवन् ' एष सुनिर्भक्तः ' ' भागिनं ' स्वल्पभागेनापि भक्तम् । 'अभागं ' भागमदत्त्वा यं ' निर्भजन्ति ' ' सः ' भागी प्रथमम् ' शंसते ' एव । ' उत ' अपि । अबलो हि बलवतां वशे भवति ! ' लब्ध्वा ' आसाद्य ' आह ' ब्रूते—कुतश्चित्कालपर्यायात् । ' किं ' त्वं ' मा ' मां ' बभक्थ ', मनसि किं मह्यं त्वया दत्तमित्यर्थः । यं ' भागम् ' ' एभ्यः ' रक्षोभ्यः ' देवाः ' ' अकल्पयन् ' कल्पितवन्तः । ' उपास्यति ' समीपे प्रक्षिपति । अग्निहीने ' अन्धे तमसि ' ' प्रवेशयति ' ' तथा' ' पशोः असृक् ' अपि । **तस्मादि**ति । तेदनीकरणाभावेन रक्षोभागः । तेदनीकरणेन लोहितं सिद्धम् ॥ ३९ ॥ ३ । [ ९. २ ] ॥

श्रीमतोऽवन्तिनाथस्य विक्रमादित्यभूपतेः । धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम् ॥

इत्याचार्यहरिस्वामिनः कृतौ शतपथभाष्ये हविर्यज्ञेषु **नव**माध्यायस्य द्वितीयं ब्राह्मणम् ।

---

**संस्थिते यज्ञे** । याजमानकर्माभिधायि ब्राह्मणमेतत् । ' दक्षिणतः परीत्य ' अध्वर्युः ' निनयति ' ' हि ' यतः, ' तथा ' कृते ' उदग् भवति ', परीत्येत्युक्ते दक्षिणादागत्य निनयनायोदगागमनं भवति । उदपात्र-

**यजते यो यजते सोऽस्यैष यज्ञो देवलोकमेवाभिप्रैति तदनूची दक्षिणा यां ददाति सैति दक्षिणामन्वारभ्य यजमानः ॥ १ ॥**

**स ऽएष देवयानो वा पितृयाणो वा पन्थाः । (स्तु) स्तदुभयतोऽग्निशिखे समोषन्त्यौ तिष्ठतः प्रति तमोषतो यः प्रत्युष्योऽत्यु तꣳसृजेते योऽतिसृज्यः शान्तिरापस्तदेतमेवैतत्पन्थानꣳशमयति ॥ २ ॥**

---

**पूर्णपात्रं निनयति । ' देवलोके मेऽप्यसद् ' इति वै यजते—यो यजते । सोऽस्यैष यज्ञो देवलोकमेवाभिप्रैति । तदनूची दक्षिणा—यां ददाति, सैति । दक्षिणामन्वारभ्य यजमानः ॥ १ ॥**

**स एष देवयानो वा पितृयाणो वा पन्थाः । तदुभयतोऽग्निशिखे समोषन्त्यौ तिष्ठतः । प्रति तमोषतो—यः प्रत्युष्यः, अत्यु त सृजेते योऽतिसृज्यः । शान्तिरापः । तदेतमेवैतत्पन्थानं शमयति ॥ २ ॥**

---

निनयनस्यानुवादो न सर्वतो विधिः । कुतः ? "अथ विष्णुक्रमान् क्रमते "—इति (श०प० १ । ९।३।८) परतः 'अथ '—शब्देनानन्तर्यवचनं संयुज्य पदार्थान्तराणां विधानात् । तथा ह्युदगित्ययं दक्षिणतः परीत्येत्यर्थवादोऽयम् । पूर्णनिनयने **देवलोके मेऽप्यस**दित्यादि । अयं यज्ञः ' असत् ' भवतु । एवमर्थं यजमानो 'यजते' ' यो यजते ' स यज्ञोऽस्य यजमानस्य देवलोकमेवाभिप्रैति ' । मां संस्कृतवानसौ, अतो मया प्रत्युपकरणीयमित्यभिप्रायः । ' तदनूची ' दक्षतेः समृद्ध्यर्थस्य ( भ्वा० आ० धा०पा०६०९ ) दक्षिणारूपम् । यज्ञसमृद्ध्यर्थं यज्ञमनु विलग्ना दक्षिणेति । 'दक्षिणामन्वारभ्य ' सा हि परिक्रमार्था; ऋत्विङ्निष्पादिता परिक्रीयते, यथान्यत्रापि परिक्रयसम्बद्धः परिक्रेता, एवमत्रापि ॥ १ ॥

* [ **संस्थिते** समाप्ते यज्ञे पूर्णपात्रासादितं जलं निनयति अर्थादध्वर्युर्यजमानाञ्जलौ । यजमानोऽपि तदञ्जलिना प्रतिगृह्णातीति वक्ष्यति । यो दर्शपूर्णमासात्मना यजते, मम यज्ञोऽयं देवलोकेऽपि असत् । लेट् लिङर्थे, स्यादित्यर्थः । एष यज्ञोऽस्य देवलोकमेव, आभिमुख्येन एति । तस्मादन्वगच्छनशीलामन्वाहार्यलक्षणशीलां यां दक्षिणां ददाति सा देवलोकमेति । ततो दक्षिणां समृद्धिस्वरूपामन्वारभ्य यजमानो देवलोकमेत्येव ॥ १ ॥ ]

**स एष देवयानः** । आत्मयाजिनस्तस्य कुणपादिमोक्षप्राप्तेः, देवयाजिनः पितृलोकः पन्थाः । एवञ्च केवलकर्मिणः पुनरावृत्तिर्दर्शिता । यतस्त्वत्रायमेव ' अन्वावर्त्तते '—इत्युपसंहारः ( श० प० १ । ९ । ३ । २० ) अपि हि न ऋषेर्वचः श्रुतम्—"द्वे सृती अशृणवं पितणाम् " इत्युपक्रम्य, ज्ञानसमुच्चितकर्मिणः पुनरावृत्तिर्दर्शिता— " ते य एवमेतद्विदुः "—इत्यादिना ( श० प० १४ । ९ । १ ; ४—१९ ) । ' वा '—शब्दो व्यवस्थितः ' तदुभयतः ' ' अग्निशिखे ' अग्निज्वाले ' ओषन्त्यौ ' भस्मसात्कुर्वन्त्यौ ' सन्तिष्ठतः ' । दहनान्मुक्तिरित्यर्थः। ज्ञानसहकारिकर्मकारी यजमानः ' अतिसृज्यः ' । ज्ञानिनश्चोष्णं पन्थानञ्च उष्णशमनसमर्थाभिरद्भिः शमयति । शान्तिसाधनं ' शान्तिः ' । ज्ञानसमुच्चितकर्मफलमलक्षालकं भवतीति सम्मतम् । केवलस्य स्वर्गादिफलं तु कार्यारम्भादौपचारिकमिति यदि फलभोगाय देवलोकं यजमानो याति, स देव एव । स एष देवफलभोगार्थं

---

* **परिशिष्टम्**—कतिचित्पुस्तकेषु—एतत्काण्डस्थान्तिमब्राह्मणगतानामेतासां कण्डिकानां हरिस्वामिकृतं भाष्यमन्यथा दृश्यते । तत्तत्कण्डिकानामधोऽत्र परिशिष्टरूपेण विद्वद्वराणां समालोचनार्थं संगृह्यते ॥

१—' इत्यस्मात् पूर्वं ( मां कोकिलग्रहेणैव गच्छन्तीति यतस्तेऽतः किम् । ') इति पाठः क्वचित् पुस्तकेऽस्ति ।

पू॒र्णं नि॒नयति । स॒र्व्वं वै॒ पू॒र्णꣳस॒र्व्वेणै॒वैनमेत॒च्छमयाति स॒न्ततम॒व्यव॒च्छिन्नं नि॒नयाति स॒न्ततेनै॒वैनमेत॒द॒व्यवाच्छिन्नेन शमयति ॥ ३ ॥

य॒द्वेव॒ पूर्णपात्रं नि॒न॒यति । य॒द्वै य॒ज्ञस्य मिथ्या॒ क्रियते॒ व्यस्य त॒द्वृहन्ति क्षण्व॒न्ति शा॒न्तिरा॒पस्त॒दा॒द्भिः शा॒न्त्या शमयाति त॒दद्भिः स॒न्दधाति ॥ ४ ॥

पू॒र्णं नि॒नयाति । स॒र्व्वं वै॒ पू॒र्णꣳ स॒र्व्वेणै॒वैतत्स॒न्दधाति स॒न्ततम॒व्यवाच्छिन्नं नि॒नयाति स॒न्ततेनै॒वैतद॒व्यव॒च्छिन्नेन स॒न्दधाति ॥ ५ ॥

---

पूर्णं निनयति । सर्वं वै पूर्णम् । सर्वेणैवैनमेतच्छमयति । सन्ततमव्यवच्छिन्नं निनयति । सन्ततेनैवैनमेतदव्यवच्छिन्नेन शमयति ॥ ३ ॥

यद्वेव पूर्णपात्रं निनयति । यद्वै यज्ञस्य मिथ्या क्रियते—व्यस्य तद्वृहन्ति, क्षण्वन्ति । शान्तिरापः । तदाद्भिः शान्त्या शमयति, तदद्भिः संदधाति ॥ ४ ॥

पूर्णं निनयति । सर्वं वै पूर्णम् । सर्वेणैवैतत्संदधाति । सन्ततमव्यवच्छिन्नं निनयति । सन्ततेनैवैतदव्यवच्छिन्नेन संदधाति ॥ ५ ॥

---

देवानेति; " देवो भूत्वा देवानप्येति " इति वचनात् । पितॄंश्च केवलात्कर्मणः । ' तदुभयतः ' तत्र उभयतः, उभयोरपि मार्गयोः ' अग्निशिखे ' सूर्यरश्मयः ' ओषतः-' दहतः । योऽकृतकृत्यः, तमोषतः; यस्तु कृतनियतकर्मा, तमतिसृजतः । परन्त्वनेन पूर्णसेकेन शान्ते जाते ' यः ' ' प्रत्युष्यः ' " उष दाहे " ( धा० पा० भ्वा० प० ६९७ ) प्रतिदहनार्हः ' तं ' ' प्रत्योषतः ' प्रतिदहतः । यथा दर्शितयज्ञादावेष एवाग्निसंयोगो निमित्तमिति, एवं तदपि ते प्रदीप्ते दहतः । ' अतिसृजेते ' अतिसर्जनम् विसर्जनम् ॥ २ ॥

[ देवलोकप्राप्तौ प्रसंगान्मार्गान्तरं श्रुतिरेवाह—**स एषः** । स यज्ञो देवयानः देवैः प्रापणीयः, पितृभिः प्रापणीयः पितृयाणः, देवयानोऽग्निहोत्रिणामध्वा स्वर्गगमनाय; पितृयाणोऽन्यमनुष्याणामध्वा । तदुभयतः अग्नेराहवनीयादेः देवयानपितृयाणौ शिखे ऊर्ध्वज्वाले ओषन्त्यौ सन्तिष्ठतः । अपां शान्तिस्वरूपत्वात् तन्निनयनेन शान्तो भवति देवपथः ॥ २ ॥ ]

**पूर्णम्** । अपां पूर्णम्; ' शान्तिरापः'—इति वचनात् ( श. प. १ कां. ९ अ. ३ ब्रा. २ कं. ) उदकस्यैवं तावदाधिदैविकं निनयनस्य प्रयोजनम् ( कौ. श्रौ. सू. ३ । १६२ ) ॥ ३ ॥

[ **पूर्णम्** । अर्थाज्जलेन निनयनधर्माच्च पूर्णम् । सन्ततमव्यवच्छिन्नम् , अनवखण्डितेन धारानिनयनेन ॥ ३ ॥ ]

अधियज्ञं दर्शयन्नाह—**यद्वेवेति** । ' यद्वै मिथ्या क्रियते यज्ञस्य' अकरणमन्यथाकरणञ्च, ' तद्विवृहन्ति ' व्यर्थं कुर्वन्ति 'यज्ञीया आपः क्षण्वन्ति, 'क्षणु हिंसायाम्' (धा०पा०त० उ०२) हिंसन्ति, दुःखायन्तीत्यर्थः ॥४॥५॥

[ **यद्वेव** । यज्ञस्य यत्किञ्चिन्मिथ्या प्रमादादिना क्रियते । व्यस्य तदिति । अस्य यजमानस्य तन्मिथ्याकृतं विवृहन्ति विनाशयति, यज्ञः सम्पूर्णो भवति; क्षण्वन्ति हिनस्ति, तत् मिथ्यादि न दुःखायतीत्यर्थः । शान्तिराप इति समानम् ॥ ४ ॥ ]

[ **पूर्णम्** । एतत् मिथ्याकृतं सन्दधाति सन्धितं करोति । सन्ततमनवखण्डितम् । तेन यज्ञस्यानुसन्धानं भवतीति शेषः ॥ ५ ॥ ]

---

१—" पूर्णपात्रं निनयति परीत्य संततं यजमानोऽञ्जलिना प्रतिगृह्णाति संवर्चसेति " इति ॥

तदञ्जलिना प्रतिगृह्णाति । सं वर्चसा पयसा सन्तनूभिरगन्महि मनसा सꣳशिवेन ॥ त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टमिति यद्विवृढं तत्संदधाति ॥ ६ ॥

(त्यु) अथ मुखमुपस्पृशते । द्वयं तद्यस्मान्मुखमुपस्पृशतेऽमृतं वाऽआपोऽमृतेनैवैतत्सꣳस्पृशत ऽएतदु चैवैतत्कर्म्मात्मन्कुरुते तस्मान्मुखमुपस्पृशते ॥ ७ ॥

---

तदञ्जलिना प्रतिगृह्णाति—" सं वर्चसा पयसा सन्तनूभिरगन्महि मनसा सं शिवेन । त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टम् "—( वा० सं० २ । २४ । )इति। यद्विवृढं तत् संदधाति ॥ ६ ॥

अथ मुखमुपस्पृशते । द्वयं तद्—यस्मान्मुखमुपस्पृशते । अमृतं वा आपः । अमृतेनैवैतत्संस्पृशते । एतदु चैव—एतत्कर्म्मात्मन् कुरुते । तस्मान्मुखमुपस्पृशते ॥ ७ ॥

---

**तदञ्जलिना** । ( का० श्रौ० सू० ३ । १६२ ) यद्यपि " अनुमार्ष्टु तन्वो यद्विलिष्टम् "—इति लिङ्गात् मुखोपस्पर्शनाङ्गता मन्त्रस्य प्रतिभाति तथापि वाक्यात्प्रतिग्रहणांगता । तथाहि " यद्विवृढं तत्सन्दधाति " इति ग्रहणार्थवाद एव परतो दृश्यते, अर्थवादान्तराभावात्; अथशब्देन च मुखोपस्पर्शनस्य व्यवधानार्थवादान्तरदर्शनाच्च । लिङ्गं चाविरुद्धमेव; मुखब्रह्मस्तयोरपि शरीरैकदेशत्वात् । **यद्विवृढमिति** । यजमानस्यैव यज्ञो वर्तते; तत्रैव स्थितस्य ' यद्विवृढं तत्सन्दधाति '—इत्यभिप्रायः । कण्वानान्तु[1] " तदञ्जलिना प्रतिगृह्णाति—तत्र जपति संवर्चसेति " । गृह्णतो यज्ञवीर्यमत्र च जप्यमानः प्रतिग्रहणाय स्पर्शनेऽपि प्रकाशयिष्यति । कः पुनः प्रतिगृह्णाति ? यजमानः; अध्वर्योर्निनयने व्यापृतत्वात्, अन्यः कोऽपीति सिद्धे आशीर्लिङ्गत्वान्मन्त्रस्य यजमान एव । तथाच यज्ञस्य " यद्विवृढं तत्सन्दधातीति " उपपत्त्या, अत उत्तरत्र च ( श. प. १ कां ९ अ. ३ ब्रा. ७ क. ) " एतदु चैवैतत् कर्म कुरुते "—इति मन्त्रवाक्यशेषैरेव च सवमेवातः परं याजमानमित्यवसीयते ॥ ६ ॥

**अथ मुखम्** । "मुखं विमृष्टे"( का० श्रौ० सू० ३।१६३) । "एतदु चैवैतत्कर्मात्मन् कुरुते "—इति शेषाद्यजमान आत्मीयमेव मुखमद्भिरुपस्पृशत इति गम्यते । यस्मात् कारणान्मुखं स्पृशति, ' तद् द्वयम् ' द्वे ते कारणे इत्यर्थः । तत्रैकं तावत्—' अमृतेनैवैतदात्मानं संस्पृशते '—इति । कथमद्भिः संस्पृश्यमाने अमृतेन संस्पृश्यते ? तदाह—**अमृतं वा आपः** इति । यत्ते देवानामन्नममृतम्, ता आपः; आप एव हि शुद्धतमा अमृतमित्यभिप्रायः । अमृतसंस्पर्शनं यजमानेन कर्तव्यमित्येकं कारणम् । अपरमपि—एतच्च कर्म आत्मनि ' कुरुते ' यजमानः । कथम् ? यज्ञो वा आपः; आपश्च संश्लेषणहेतुरित्यभिप्रायः ॥ ७ ॥

---

१—कण्वशाखीयानां प्रतिग्रहोत्तरं मन्त्रजपं प्रतिजानानेन भाष्यकृता प्रकृतस्यैतस्य शतपथश्रुतिपाठस्य माध्यन्दिनशाखीयत्वं सूच्यते । किन्तु माध्यन्दिनसंहितात्वेन प्रसिद्धस्य यजुर्वेदसंहितापाठस्य मन्त्रपाठक्रमानुसारिणीयं प्रकृता शतपथश्रुतिर्नास्तीत्यन्यत्र सुविशदं प्रदर्शितम् ।

( तेऽथ ) अथ विष्णुक्रमान्क्रमते । देवान्वा ऽएष प्रीणाति यो यजत ऽएतेन यज्ञेनऽर्ग्भिरिव त्वद्यजुर्भिरिव त्वदाहुतिभिरिव त्वत्स देवान्प्रीत्वा तेष्वपित्वी भवति तेष्वपित्वी भूत्वा तानेवाभिप्रक्रामति ॥ ८ ॥

यद्वेव विष्णुक्रमान्क्रमते । यज्ञो वै विष्णुः स देवेभ्यऽइमां विक्रान्तिं विचक्रमे यैषामियं विक्रान्तिरिदमेव प्रथमेन पदेन पस्पाराथेदमन्तरिक्षं द्वितीयेन दिवमुत्तमेनैतामेवैष ऽएतस्मै विष्णुर्यज्ञो विक्रान्तिं विक्रमते तस्माद्विष्णुक्रमान्क्रमते तद्वा ऽइतऽएव पराचीनं भूयिष्ठा ऽइव क्रमन्ते ॥९॥

तदु तत्पृथिव्यां विष्णुर्व्यक्रꣳस्त । गायत्रेण च्छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्मोऽन्तरिक्षे विष्णुर्व्यक्रꣳस्त त्रैष्टुभेन च्छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यञ्च वयं द्विष्मो दिवि विष्णुर्व्य-

---

अथ विष्णुक्रमान् क्रमते । देवान्वा एष प्रीणाति-यो यजते-एतेन यज्ञेन-ऋग्भिरिव त्वद्, यजुर्भिरिव त्वद्, आहुतिभिरिव त्वत् । स देवान् प्रीत्वा तेष्वपित्वी भवति । तेष्वपित्वी भूत्वा तानेवाभिप्रक्रामति ॥ ८ ॥

यद्वेव विष्णुक्रमान् क्रमते । यज्ञो वै विष्णुः । स देवेभ्य इमां विक्रान्तिं विचक्रमे-यैषामियं विक्रान्तिः । इदमेव प्रथमेन पदेन पस्पार, अथेदमन्तरिक्षं द्वितीयेन, दिवमुत्तमेन, एतामेवैष एतस्मै विष्णुर्यज्ञो विक्रान्तिं विक्रमते । तस्माद्विष्णुक्रमान् क्रमते । तद्वा इत एव पराचीनं भूयिष्ठा इव क्रमन्ते ॥९

तदु तत् " पृथिव्यां विष्णुर्व्यक्रंस्त गायत्रेण च्छन्दसा । ततो निर्भक्तो योऽस्मान् द्वेष्टि, यं च वयं द्विष्मः । अन्तरिक्षे विष्णुर्व्यक्रंस्त त्रैष्टुभेन च्छन्दसा । ततो निर्भक्तो योऽस्मान् द्वेष्टि यं च वयं

---

**अथ विष्णुक्रमान्** । ( का० श्रौ० सू० ३ । १६४ । ) विष्णोः यज्ञस्य सम्प्रवेशमिव दत्त्वा ' देवान् प्रीत्वा ', देवेषु मध्ये ' अपित्वी ' भागी ' भूत्वा ' च उपैति विष्णुक्रमैर्देवयाजीत्यर्थः । " अनुपसर्गाद्वा ' इति ( पा० सू० १ । ३ । ४३ ) क्रमेरात्मनेपदम् ॥ ८ ॥

[ **अथ विष्णुक्रमान्** । विष्णोर्यज्ञस्य क्रमणं विष्णुक्रमस्तं विष्णुप्रवेशमेव कुरुते । देवान्वा । देवानेतान् एष यजमानः प्रीतान् करोति, यो हविर्यज्ञं संस्थापयाति । त्वच्छब्दः समुच्चये । ऋगादिभिर्देवान् प्रीत्वा तेषु देवेषु मध्ये भागवान् भवति । भागित्वं प्राप्य तान् विष्णुक्रमानेव सन्ततभावेन प्रक्रामति ॥ ८ ॥ ]

**यद्वेव विष्णुक्रमान्** । यजमानशरीरस्थ एव ' यज्ञो विष्णुः ' यजमानार्थं ' विक्रमते ' । ' तद्वै ' तत्र ' इत एव ' लोकात् ' पराचीनम् ' ऊर्ध्वम्, अन्तरिक्षं दिवमित्येवं ' भूयिष्ठा इव ' बहुतमा इव ' क्रमन्ते ' ॥९॥

[ विष्णुरेव देवेभ्योऽर्थायेमां विष्णुक्रमलक्षणां विक्रान्तवान् । प्रथमेन पादेन पृथिवींक्रमलक्षणेन पस्पार । " स्पृ प्रीतिचलनयोः " लिट् । द्वितीयेन पादेनान्तरिक्षं विक्रान्तवान् । उत्तमेन दिवि क्रमणात्मकेन, एतां विष्णुक्रमात्मिकां यज्ञो विक्रमते । तस्माद्धेतोः विष्णुक्रमान् क्रमते इति ॥ ९ ॥ ]

विष्णुक्रमणे मन्त्राः-" **तदु तत् पृथिव्याम्** "-इति प्रसन्ना । " इत्येवमिमाँल्लोकान् "-इति उत्तर-

---

१-" विष्णुक्रमान्क्रमते दिवि विष्णुरिति प्रतिमन्त्रं पृथिव्यामितीत ऊर्ध्वां वा " इति ॥ का. श्रौ. सू. ३ । १६४ ॥

ऽक्रंस्त जागतेन च्छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यञ्च व्वयं द्विष्म ऽइत्येवमिमाँल्लोकान्त्समारुह्याथैषा गतिरेषा प्रतिष्ठा य ऽएष तपति तस्य ये रश्मयस्ते सुकृतोऽथ यत्परं भाः प्रजापतिर्व्वा स स्वर्गो वा लोकस्तदेव-मिमाँल्लोकान्त्समारुह्याथैतां गतिमेतां प्रतिष्ठां गच्छति परस्तात्त्वेवार्व्वाङ् क्रमेत यऽइतोऽनुशासनं चिकीर्षेद्द्वयं तद्यस्मात्परस्तादर्वाङ्क्रमते ॥ १० ॥

(ते८द) अपसरणतो ह वा ऽअग्रे देवा जयन्तोऽजयन् । (न्दि) दिवमेवाग्रे ऽथेदमन्तरिक्षमथतोऽनपसरणात्सपत्नाननुदन्त तथो ऽएवैष एतदपसरणत ऽएवाग्रे जयञ्जयति दिवमेवाग्रेऽथेदमन्तरिक्षमथेतोऽनपसरणात्सपत्नान्नुदत ऽइयं वै पृथिवी प्रतिष्ठा तदस्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठति ॥ ११ ॥

---

द्विष्मः । दिवि विष्णुर्व्यक्रंस्त जागतेन च्छन्दसा । ततो निर्भक्तो योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः "—इत्येवमिमाँल्लोकान्त्समारुह्य—अथैषा गतिः, एषा प्रतिष्ठा—य एष तपति । तस्य ये रश्मयः—ते सुकृतः, अथ यत्परं भाः—प्रजापतिर्वा सः, स्वर्गो वा लोकः । तदेवमिमाँल्लोकान्त्समारुह्य—अथैतां गतिमेतां प्रतिष्ठां गच्छति । परस्तात् त्वेवार्वाङ् क्रमेत—य इतोऽनुशासनं चिकीर्षेत् । द्वयं तद्-यस्मात् परस्तादर्वाङ् क्रमते ॥ १० ॥

अपसरणतो ह वा अग्रे देवा जयन्तोऽजयन्—दिवमेवाग्रे, अथेदमन्तरिक्षम्, अथेतोऽनपसरणात्सपत्नाननुदन्त । तथो एवैष एतदपसरणत एवाग्रे जयन् जयति—दिवमेवाग्रे, अथेदमन्तरिक्षम्, अथेतोऽनपसरणात्सपत्नान्नुदते । इयं वै पृथिवी प्रतिष्ठा । तदस्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठति ॥ ११

---

पक्षस्यार्थवादः । गम्यत इति 'गतिः', प्रतितिष्ठन्त्यस्यामिति 'प्रतिष्ठा' 'तस्य' आदित्यस्य 'ये रश्मयः' कदम्बकेसरवदनन्तभेदाः, 'ते सुकृतः' ये पूर्वे यजमानाः तेजःशरीराः । उपरितनमेव 'यद्' यज्ञरूपः 'प्रजापतिः', 'स्वर्गो वा लोकः अज्ञानानां कर्मकर्तॄणां प्रजानां पतिः, ज्ञानिनामुपभोग्यं स्थानम्, 'तत्' तत्र; ते गच्छन्तीत्यभिप्रायः । 'भाः' प्रकाशमात्रं सूर्यरूपम् । ( पक्षान्तरोपन्यासः ) "परस्तात् त्वेव" । 'तु'—शब्दः स्वशब्दार्थे' 'एव'—इत्यवधारणार्थः । 'इतः' अस्मादेव लोकात् 'अनुशासनम्' अस्मिन्नेव लोके फलोपभोगं बहुकालमाशास्ते, सः 'अर्वाङ्' विक्रमणेनैव 'यस्मात्' अध्वर्यवः 'परस्तात्' क्रमेत, 'तद्द्वयं' कारणम् ॥ १० ॥

[ **तदु तत् पृथिव्यां** । प्रसन्ना । इमान् पृथिव्यन्तरिक्षद्युसंज्ञकान्, एवं समारूढान् कृत्वा अनन्तरम् । विष्णुक्रमणस्यार्थवादः—एषा गतिः । गम्यत इति गतिः, प्रतिकूलं तिष्ठत्यस्यामिति प्रतिष्ठा । य एष आदित्यः तस्यादित्यस्य ये रश्मयः किरणकदम्बाः ते सुकृत इति । अथेति । परमुत्कृष्टं भासनं प्रजापतिर्वा, स एव स्वर्गो लोको निरुपद्रवत्वात् । एवम्प्रकारेण, यज्वा एतां गतिं प्रतिष्ठां प्राप्नोति । परस्तात्तु अर्वाङ् अर्वाञ्चनशीलः क्रमेत । इतो लोकादनुशासनं कर्तुमिच्छेत् । द्वयमिहामुत्रालक्षणमर्वाञ्चनञ्चेति ॥ १० ॥ ]

**अपसरणतो ह** । जितापसरणेन जितवन्तो द्युलोकाख्यम्, अस्माल्लोकादपसृत्य असुरान् हतवन्तो देवाः । द्वितीयश्च फलोपभोगानन्तरं प्रतिष्ठायां प्रच्युतानां स्वर्गाल्लोकान्निरुपद्रवात् । ततश्च यदितः पराचीनं क्रमेत, तदेतां गतिं गत्वा 'प्रतिष्ठायां प्रतितिष्ठति' ॥ ११ ॥

[ **अपसरणतः** । जयन्तो देवा दिवमग्रे, ततोऽन्तरिक्षम् । इतः अपसरणात् एतदाचरणादेव सम्पन्नाञ्छत्रून् व्यथितवन्तः । एवमस्याचरणस्यापि भवति । इयं वै इति । अतिरोहितम् ॥ इति ॥ ११ ॥ ]

तद्दु तद्दिवि विष्णुर्व्यक्रश्ंस्त । जागतेन च्छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यञ्च वयं द्विष्मोऽन्तरिक्षे विष्णुर्व्यक्रश्ंस्त त्रैष्टुभेन च्छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यञ्च वयं द्विष्मः पृथिव्यां विष्णुर्व्यक्रश्ंस्त गायत्रेण च्छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यञ्च वयं द्विष्मोऽस्मादन्नादस्यै प्रतिष्ठाया ऽइत्यस्याश्ँहीदश्ँ सर्वमन्नाद्यं प्रतिष्ठितं तस्मादाहास्मादन्नादस्यै प्रतिष्ठाया ऽइति ॥ १२ ॥

( त्यु ) अथ प्राङ्प्रेक्षते । प्राची हि देवानां दिक्तस्मात्प्राङ्प्रेक्षते ॥ १३ ॥

स प्रेक्षते । ( तेऽग ) अगन्म स्वरिति देवा वै स्वरगन्म देवानित्येवैतदाह संज्योतिषाभूमेति सं देवैरभूमेत्येवैतदाह ॥ १४ ॥

---

तद्दु तद् "दिवि विष्णुर्व्यक्रंस्त जागतेन च्छन्दसा–ततो निर्भक्तो योऽस्मान् द्वेष्टि यश्च वयं द्विष्मः । अन्तरिक्षे विष्णुर्व्यक्रंस्त त्रैष्टुभेन च्छन्दसा–ततो निर्भक्तो योऽस्मान् द्वेष्टि यश्च वयं द्विष्मः । पृथिव्यां विष्णुर्व्यक्रंस्त गायत्रेण च्छन्दसा–ततो निर्भक्तो योऽस्मान् द्वेष्टि यश्च वयं द्विष्मः । अस्मादन्नादस्यै प्रतिष्ठायै "–इति । अस्यां हीदं सर्वमन्नाद्यं प्रतिष्ठितम् । तस्मादाह–अस्मादन्नादस्यै प्रतिष्ठाया इति ॥ १२ ॥

अथ प्राङ् प्रेक्षते । प्राची हि देवानां दिक् । तस्मात् प्राङ् प्रेक्षते ॥ १३ ॥

स प्रेक्षते–"अगन्म स्वः"–इति । देवा वै स्वः । अगन्म देवानित्येवैतदाह । " सं ज्योतिषाभूम "–( वा० सं० २ । २५ ) इति । सं देवैरभूमेत्येवैतदाह ॥ १४ ॥

---

**तद्दु तद्दिवि** । ( का. श्रौ. सू. ३ । १६५–१६६ ) यद्धि स्वर्गे अन्नाद्यम्, तदप्यस्मिन्नेव लोके प्रतिष्ठितम्; चन्द्रमसोऽप्याप्यायनं प्रतिपदि सान्नाय्येन क्रियते; अतः 'अस्मादन्नात्' निष्कासने द्विषन् सर्वस्मान्निष्कासितो भवति ॥ १२ ॥

[ इत ऊर्ध्वा वेदीति तत्प्रकारमाह–**तद्दु तदिति** । दिवि–अन्तरिक्षे पृथिव्यामस्मादन्नाद्भागलक्षणात् । अस्यै प्रतिष्ठाया वेदेः । " यावती वै वेदिस्तावती पृथिवीति " ॥ १२ ॥ ]

**अथ प्राङ् प्रेक्षते** । "अगन्म स्वारिति प्राक्" इति (का. श्रौ. सू. ३ । १६७) प्राङ् निरीक्षणेन सन्तर्पिता गच्छन्तो देवा निरीक्षिता भवन्तीत्यप्रायः ॥ १३ ॥

**स प्रेक्षते** । ( "संज्योतिषेत्याहवनीयं " इति का. श्रौ. सू. ३ । १६८ ) मञ्चाः क्रोशन्तीतिवत् 'स्वर्देवाः' तेजःशरीरत्वात् ज्योतिर्देवाः । 'समभूम ' तद्देवत्वं प्राप्ता इत्यर्थः ॥ १४ ॥

[ **स प्रेक्षते** । स्वरिति । यज्ञो ह वै स्वरिति यज्ञदेवसूर्याः स्वःशब्दवाच्याः अत्र देवा अभिप्रेताः । देवानगन्मेति । इति ॥१४॥ ]

---

१–" अस्मादन्नादिति भागमवेक्षते " " अस्यै प्रतिष्ठाया इति भूमिं " का. श्रौ. सू. ३ । १६५-१६६ ॥

( ह्वा ) अथ सूर्यमुदीक्षते । सैषा गतिरेषा प्रतिष्ठा तदेतां गतिमेतां प्रतिष्ठां गच्छति तस्मात्सूर्यमुदीक्षते ॥ १९ ॥

स ऽउदीक्षते । स्वयम्भूरसि श्रेष्ठो रश्मिरित्येष वै श्रेष्ठो रश्मिर्यत्सूर्यस्तस्मादाह स्वयम्भूरसि श्रेष्ठो रश्मिरिति वर्चोदा ऽअसि वर्चो मे देहीति त्वेवाहं ब्रवीमीति ह स्माह याज्ञवल्क्यस्तद्ध्येव ब्राह्मणेनैष्टव्यं यद्ब्रह्मवर्चसी स्यादित्युतो ह स्माहौपोदितेय ऽएष वाव मह्यं गा दास्यति गोदा गा मे देहीत्येवं यं कामं कामयते सोऽस्मै कामः समृद्ध्यते ॥ १६ ॥

( तेऽथा ) अथावर्तते । सूर्यस्यावृतमन्वावर्त ऽइति तदेतां गतिमेतां प्रतिष्ठां गत्वैतस्यैवावृतमन्वावर्तते ॥ १७ ॥

---

अथ सूर्यमुदीक्षते । सैषा गतिः, एषा प्रतिष्ठा । तदेतां गतिमेतां प्रतिष्ठां गच्छति । तस्मात्सूर्यमुदीक्षते ॥ १९ ॥

स उदीक्षते–"स्वयम्भूरसि श्रेष्ठो रश्मिः"–( वा.सं. २।२६ ) इति । एष वै श्रेष्ठो रश्मिः–यत्सूर्यः–तस्मादाह–'स्वयम्भूरसि श्रेष्ठो रश्मिः' इति । "वर्चोदा असि वर्चो मे देहि"–वा. सं. २।२६ ) इति त्वेवाहं ब्रवीमि–इति ह स्माह याज्ञवल्क्यः । तद्ध्येव ब्राह्मणेनैष्टव्यम्–यद् ब्रह्मवर्चसी स्यादिति । उतो ह स्माहौपोदितेयः–एष वाव मह्यं गा दास्यति । गोदा गा मे देहीति । एवं यं कामं कामयते सोऽस्मै कामः समृद्ध्यते ॥ १६ ॥

अथावर्तते–"सूर्यस्यावृतमन्वावर्ते"–( वा. सं. २ । २६ ) इति । तदेतां गतिमेतां प्रतिष्ठां गत्वा, एतस्यैवावृतमन्वावर्त्तते ॥ १७ ॥

---

अथ सूर्यमुदीक्षते । "स्वयम्भूरिति सूर्यम्" इति । "वर्चोदा इति यं वा कामं कामयते" इति ( का. श्रौ. सू. ३ । १६९–१७० ) सूर्यः खलु यज्ञकर्तॄणां गन्तव्यं प्रतिष्ठा च ॥ १९ ॥

स उदीक्षते ( का. श्रौ. सू. ३ । १६९–१७० ) तेजोघनो रश्मिशब्देनोच्यते । एषः तेषामतिशयः । 'याज्ञवल्क्य इत्याह स्म'–'वर्चोदा असि वर्चो मे देहीति' ( एतदेवाशास्महे वयम् ) 'अहमिति ब्रवीमि' । 'ब्राह्मणेन तदेष्टव्यम्' 'यत्' अहं ब्राह्मण्ययुक्तः स्यामिति तु 'आह स्म' उक्तवान् 'औपोदितेयः' । उपगम्य उदिता पितुरुपोदिता; "स्त्रीभ्यो ढक्" ( पा. सू. ४ । १ । १२० ) उपोदिताया अपत्यमिति विग्रहः । 'गा दास्यति' इति गो-प्रार्थना 'एवं' प्रजादिष्वपि वक्तव्यम् ॥ १६ ॥

[ स उदीक्षते । प्रसन्ना । 'इति त्वेवाहं इत्येवाहं' ब्रवीमि । वर्च एव याचते ब्राह्मणेन तद्धि एष्टव्यमेव यतो ब्रह्मवर्चसी स्यात् । उप समीपे उदित आदित्यो यस्या इत्युपोदिता तस्या अपत्यमौपोदितेयः । एष राजा मह्यं सम्प्रदानभूताय गाः पयस्वतीः दास्यति । हे गोदाः मे मह्यं गा देहि । एवमित्याद्याशीः इति ॥ १६ ॥ ]

अथावर्त्तते । प्रदक्षिणमावर्त्तते । एवं हि तस्य सूर्यस्यावृत्तिः "सूर्यस्येत्यावर्तते प्रदक्षिणं" इति ( का. श्रौ. सू. ३ । १७१ ) ॥ १७ ॥

(तेऽथ) अथ गार्हपत्यमुपतिष्ठते । द्वयं तद्यस्माद्गार्हपत्यमुपतिष्ठते गृहा वै गार्हपत्यो गृहा वै प्रतिष्ठा तद्गृहेष्वेवैतत्प्रतिष्ठायां प्रतितिष्ठति यावद्वेवास्येह मानुषमायुस्तस्मा ऽएवैतदुपतिष्ठते तस्माद्गार्हपत्यमुपतिष्ठते ॥१८॥

स ऽउपतिष्ठते । (तेऽग्ने) अग्ने गृहपते सुगृहपतिस्त्वयाग्नेऽहं गृहपतिना भूयासꣳ सुगृहपतिस्त्वं मयाग्ने गृहपतिना भूया ऽइति नात्र तिरोहितमिवास्त्यस्थूरि णौ गार्हपत्यानि सन्त्वित्यनार्तानि नौ गार्हपत्यानि सन्त्वित्येवैतदाह शतꣳ हिमा ऽइति शतं वर्षाणि जीव्यासमित्येवैतदाह तदप्येतद्ब्रुवन्नाद्रियेतापि हि भूयाꣳसि शताद्वर्षेभ्यः पुरुषो जीवति तस्मादप्येतद्ब्रुवन्नाद्रियेत ॥ १९ ॥

---

अथ गार्हपत्यमुपतिष्ठते । द्वयं तद्–यस्माद्गार्हपत्यमुपतिष्ठते । गृहा वै गार्हपत्यः । गृहा वै प्रतिष्ठा । तद्गृहेष्वेवैतत् प्रतिष्ठायां प्रतितिष्ठति । यावद्वेवास्येह मानुषमायुः–तस्मा एवैतदुपतिष्ठते । तस्माद्गार्हपत्यमुपतिष्ठते ॥ १८ ॥

स उपतिष्ठते–"अग्ने गृहपते सुगृहपतिस्त्वयाग्नेऽहं गृहपतिना भूयासम्, सुगृहपतिस्त्वं मयाग्ने गृहपतिना भूयाः"–(वा. सं. २।२७) इति । नात्र तिरोहितमिवास्ति । "अस्थूरि णौ गार्हपत्यानि सन्तु"–इति । अनार्तानि नौ गार्हपत्यानि सन्तु–इत्येवैतदाह । "शतं हिमाः"–इति । शतं वर्षाणि जीव्यासमित्येवैतदाह । तदप्येतद्ब्रुवन्नाद्रियेत–अपि हि भूयांसि शताद्वर्षेभ्यः पुरुषो जीवति तस्मादप्येतद् ब्रुवन्नाद्रियेत ॥ १९ ॥

---

अथ गार्हपत्यम् । " गार्हपत्यमुपतिष्ठते " इत्यादि–( का. श्रौ. सू. ३ । १७३ ) कारणद्वयं तस्याप्युपस्थाने । सूर्योपस्थानादिना स्वगतिः, गार्हपत्योपस्थानेन स्वगृहे प्रतितिष्ठति । द्वितीयञ्च 'यावद्वेवास्येह' मानुषायुषः 'उपतिष्ठते' ॥ १८ ॥

[ अथ गार्हपत्यम् । द्वयं गतिप्रतिष्ठात्मकं गार्हपत्योपस्थानादवाप्यते । गृहा वै इत्याद्याशीः प्रवर्तनार्था । यावद्धिति । उ इति अनेककर्मा निपातः । यावत्प्रमाणमस्य पुरुषस्य आयुर्जीवनं तस्मै एतदायुषे उपतिष्ठते । तस्मादिति निगमः । इति॥१८॥]

स उपतिष्ठते । 'अस्थूरि' 'णौ' असहायगोवाह्यः स्थूरः, तत्रासहायमात्रं लक्ष्यते; स्थूरोऽस्मिन्नस्तीति स्थूरि, न स्थूरि अस्थूरि, ससहायि 'नौ' तव गार्हपत्ये कर्मणि प्रवृत्ते अहमिन्धनादिना पालकः, अस्थूरी गृहपतिः; त्वं कर्मणाम् अत आह–अनार्तानीति । अस्थूरित्वेन च सामर्थ्यादाक्षिप्तं यजमानस्य जीवितमिति " शतं वर्षाणि जीव्यासमित्याह "–इति ( का० श्रौ० सू० । ३ । १७३ । ) विवृणोति ॥ १९ ॥

[ स उपतिष्ठते । अग्ने इति । गृहपत्योः परस्परमाशंसनं स्फुटतरमेव । अस्थूरि असहायगोवाह्यः स्थूरः, तत्रासहायमात्रं लक्ष्यते; स्थूरोऽस्मिन्नस्तीति स्थूरि, अस्थूरि सहाययुक्तः त्वम् । अत आहानार्तानीति । अस्थूरित्वेन च सामर्थ्याक्षिप्तं यजमानस्य

---

१–"अस्थूरि" 'अस्थूरिणि' एकाश्वयुक्तः शकटः स्थूरिरित्युच्यते, तद्विपरीतो बहुभिरश्वैरुपेतः शकटोऽस्थूरिः तेन च सम्पूर्णता लक्ष्यते । इति ऋ. सं. ६ । १५ । १९ सा. भा. । एकपार्श्वे बलीवर्दयुक्तं शकटं स्थूरि–न स्थूरि–अस्थूरि लुप्तोपमानं इति वा. सं. २ । २७ । १ इत्यत्र महीधरः । इहोत्तरत्रापि पुनः श्रोष्यति ३ । ७ । ४ । १०॥

( ताथा ) अथावर्त्तते । सूर्यस्यावृतमन्वावर्त्त ऽइति तदेतां गतिमेतां प्रतिष्ठां गत्वैतस्यैवावृतमन्वावर्त्तते ॥ २० ॥

( तेऽथ ) अथ पुत्रस्य नाम गृह्णाति । ( ती ) इदं मेऽयं वीर्यं पुत्रोऽनुसन्तनवदिति यदि पुत्रो न स्यादप्यात्मन ऽएव नाम गृह्णीयात् ॥ २१ ॥

( इ ) अथाहवनीयमुपतिष्ठते । प्राङ्मे यज्ञोऽनुसन्तिष्ठाता ऽइति तूष्णीमुपतिष्ठते ॥ २२ ॥

---

अथावर्त्तते-" सूर्यस्यावृतमन्वावर्त्ते "-( वा० सं० २ । २७ ) इति । तदेतां गतिमेतां प्रतिष्ठां गत्वा-एतस्यैवावृतमन्वावर्त्तते ॥ २० ॥

अथ पुत्रस्य नाम गृह्णाति । इदं मेऽयं वीर्यं पुत्रोऽनुसन्तनवदिति । यदि पुत्रो न स्याद्-अथात्मन एव नाम गृह्णीयात् ॥ २१ ॥

अथाहवनीयमुपतिष्ठते ' प्राङ्मे यज्ञोऽनुसन्तिष्ठातै ' इति । तूष्णीमुपतिष्ठते ॥ २२ ॥

---

जीवितमाशास्ते-शतं हिमाः वर्षाणि शतसंख्याकानि जीव्यासम् । इत्याहेति विवृणोति-एतद्ब्रुवन्नपि नाद्रियेत । तेनापि वर्षेभ्यः शतात् वर्षशतमतीत्यापि पुरुषो जीवति । तस्मादिति निगमनम् इति ॥ १९ ॥ ]

**अथावर्त्तते** । " सूर्यस्येत्यावर्तते प्रदक्षिणम् " इति ( का० श्रौ० सू० ३ । १७४ ) मन्त्रवर्णात् प्रादक्षिण्यञ्च; सूर्यस्यावृतमन्विति मन्त्रे दृश्यते, सूर्यो हि प्रादक्षिण्येन गच्छति " गच्छति प्राङुरुविष्णविति " इति ( का० श्रौ० सू० ३ । १७९ ) ' एतस्यैव ' सूर्यस्य ॥ २० ॥

[ **अथावर्तते** । सूर्यस्यावर्तनमावृत्-तामन्वावर्तते । तदेतामिति । निगदव्याख्यातम् । श्रुत्या मन्त्रवर्णात्प्रदक्षिणं समावृत्याशिषं गृह्णीयात् इति ॥ २० ॥ ]

**अथ पुत्रस्य** । " ततोऽसितन्तुरस्यनुमेत्यादि०—०पुत्रनाम गृह्णाति " इति ( का. श्रौ. सू. ३ । १७६ ) कथं पुनर्गृह्णाति ? " ततोऽसि तन्तुरसि "—इत्येतस्मिन्मन्त्रे " आत्मनोऽविद्यमाने ततेवे त्वा ज्योतिषे त्वेति वा " इति—( का. श्रौ. सू. ३ । १७७ । ) तत्पदैरेकवाक्यभूतं गृह्णाति । कुतः ? काण्वसमाम्नानात् । ' इदं मे कर्म, इदं वीर्यम्, पुत्रो देवदत्तोऽनुसन्तनवत् '—इति । किमर्थं नाम गृह्णाति ? ' इदं मे ' ' वीर्यं ' विक्रमम्, ' पुत्रः ' देवदत्तादिः ' अयम् ' ' अनुसन्तनवत् ' अनुसन्तनोतु । कथम् ? ' मे ' मम ' इदं वीयमनुसन्तनवदिति ' मा विच्छिन्द्यादित्येवमर्थम् । पक्षान्तरमाह—' यदि पुत्रो न स्यात् " कथञ्चित् पुत्ररहितश्चेत्, अजातपुत्रो मृतपुत्रो वा तदा ' आत्मनो नाम गृह्णीयात् ' । तथा च ' इदं मे कर्मेदं वीय देवदत्तोऽहं सन्तनवानि '—इति नामग्रहणम्[1] ॥ २१ ॥

**अथाहवनीयम्** । " आहवनीयमुपतिष्ठते तूष्णीम् " इति ( का. श्रौ. सू. ३ । १७८ ) गार्हपत्योपस्थानादिकर्मणा यत्पदं न प्राप्नोति, अत उपस्थानयज्ञक्रिया प्रत्यक्संस्था जाता; सा च जघन्या, अधोगतित्वात्; अत आहवनीयोपस्थानं विधत्ते प्राक्संस्थित्यै । अपि च प्रत्यग्गमनशब्दो हि नरकपातवाचकः; एवञ्चाधोगतिर्यज्ञस्य स्यात् । तूष्णीमिति[2] । सामर्थ्यान्मन्त्रे प्राप्ते तूष्णीमुपस्थानं विधेयमिति मन्त्रनिवृत्तिः क्रियते ॥ २२ ॥

[ **अथाहवनीयम्** । प्राक्संस्थं यज्ञस्याशास्ते । तूष्णीमेवोपस्थानम् इति ॥ २२ ॥ ]

---

१—" अनेकेषु पुत्रेषु सर्वेषां ज्येष्ठस्य पुत्रस्य नामाभिव्याहृत्य " इति सांख्यायनः २।१२।११ " प्रियस्य पुत्रस्य नाम गृह्णाति " इत्यापस्तम्बः । ४ । १६ । ४ । २—"तूष्णीमिति लौकिकवागुच्चारणनिषेधः क्रियते; मन्त्राभावात् । एवं च तत्समीपे स्थित्वा तं विलोकयत्येव " इति हि याज्ञिकदेवः ।

( तेऽथ ) अथ व्रतं विसृजते। ( त ) इदमहं य एवास्मि सोऽस्मीत्यमानुष ऽइव वा ऽएतद्भवति यद्व्रतमुपैति न हि तदवकल्पते यद्ब्रूयादिदमहꣳ सत्यादनृतमुपैमीति तदु खलु पुनर्मानुषो भवति तस्मादिदमहं यऽ एवास्मि सोऽस्मीत्येवं व्रतं विसृजेत ॥ २३ ॥ ४ ॥

इति सप्तमप्रपाठके चतुर्थं ब्राह्मणम् ॥ ४ ॥ कण्डिकासंख्या ११४ ॥
ब्राह्मणसंख्या ३७ एवं कण्डिकासंख्या ८३८ ॥

---

अथ व्रतं विसृजते—"इदमहं य एवास्मि सोऽस्मि"—( वा० सं० २ । २८ ) इति अमानुष—इव वा एतद्भवति—यद्व्रतमुपैति । न हि तदवकल्पते यद्ब्रूयाद्—इदमहं सत्यादनृतमुपैमि इति । तद्वु खलु पुनर्मानुषो भवति । तस्माद् 'इदमहं य एवास्मि सोऽस्मि' इत्येवं व्रतं विसृजेत ॥ २३ ॥

इति दर्शपूर्णमासेष्टिः सम्पूर्णा ॥

---

अथ व्रतम् । "व्रतं विसृजते येनोपेयात्" इति—( का. श्रौ. सू. ३ । १७९ ) पूर्वोक्तामितिकर्तव्यतामनूद्य यज्ञसमाप्तिर्व्रतविसर्गसम्बद्धा विधीयते; यदिदमुक्तं "संस्थिते" श. प. १ कां. १ । १ । ३ । ) इति, तदिदमवसरप्राप्तं व्रतं विसृजते । स्वशाखायाम् "इदमहमनृतात् सत्यमुपैमि"—( श. प. १ कां. १ । १ ।४ ) इति मन्त्रोच्चारोऽभिप्रेतः—अत एव पक्षान्तरन्यासो न कृतो भगवत्या श्रुत्या ॥

समाप्तोऽयं पौर्णमासः, सर्वास्विष्टिषु पशुबन्धेषु यागेषु सौत्रामण्यां च प्रकृतिभूतः । यद्यप्ययं कृताधानस्य भवति, तथापि आधानेष्टीनां तनूहविस्सञ्ज्ञकानां पौर्णमासयागः प्रकृतिः, तस्मात् पूर्वमुपदेश्यः । ननु तर्हि तनूहविषामेव सर्वेष्टिप्रकृतित्वं कृत्वा तान्येव पूर्वं कस्मान्नोपदिष्टानि ? सत्यम् ! किन्तु तेष्वितिकर्तव्यतावैकृत्यदर्शनात् सर्वप्रकृतित्वं न सम्भवति, तस्मात्पौर्णमासयाग एव पूर्वमुपदिष्टः ॥ २३ ॥ ४ ॥

[ **अथ व्रतं** । व्रतमिति कर्मणो नामधेयम् । तस्य विसर्गं कुरुते यजमानः **इदमहमिति** । यद्व्रतं विसृजते, तेन व्रतोऽमानुष इव देव इव भवति । न हीति । मन्त्ररूपान्तरं दूषणम् । व्रतविसर्गानन्तरं पुनः मानुषो जायते, तस्मादिदमहमित्येतेन मन्त्रेण व्रतं विसृजेतेति विधिः । तदु खल्वित्यवधारणार्थः । "अथाप्युकार एतस्मिन्नेवार्थे उत्तरेण" इति स्मरणात् ( निरु. १ । २ । ४ ) खलुपदं सत्यवचनसिद्धये स वै सत्यमेव वदेदित्यादि विध्यर्थम् इति ॥ २३ ॥ ] ॥ **इति परिशिष्टम्** ॥

इत्याचार्यहरिस्वामिनः कृतौ शतपथभाष्ये नवमाध्याये तृतीयं ब्राह्मणम् ॥ ९ ॥ ३ ॥

नागस्वामिसुतोऽवन्त्यां पाराशर्यो वसन् हरिः । श्रुत्यर्थं दर्शयामास शक्तितः पौष्करीयकः ॥
श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य भूपतेः । धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम् ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ शतपथभाष्ये नवमोऽध्यायः समाप्तः ॥ ९ ॥

इति सप्तमः प्रपाठकः समाप्तः ॥ ७ ॥

भूभर्त्रा विक्रमार्केण क्लृप्तां कनकवेदिकाम् । दानायाध्यास्य कृतवान् श्रुत्यर्थविवृतिं हरिः ॥ १ ॥

इति श्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीनां शुक्लयजुर्वेदीये माध्यन्दिनशतपथब्राह्मणभाष्ये हविर्यज्ञं नाम प्रथमं काण्डं समाप्तम् ॥ १ ॥

---

इति श्रीशतपथब्राह्मणे सायणभाष्यसमेतं प्रथमं काण्डम् ।

( तत्र ७ अ. ४ ब्राह्मणादारभ्य हरिस्वामिन एव भाष्यमुपलब्धम् । )

ॐ

श्रीमद्वाजसनेयिमाध्यन्दिन-

# शतपथब्राह्मणम् ।

सायणभाष्यसमेतम् ।

तत्र

## द्वितीयं काण्डम् २ ।

॥ श्रीः ॥

# एकादिकानाम-द्वितीयकाण्डे प्रथमः प्रपाठकः ।

## प्रथमोऽध्यायः प्रारभ्यते ।

### तत्र प्रथमं ब्राह्मणम् ।

हरिः ओ३म् ॥ स यद्वा ऽइतश्चेतश्च सम्भरति । तत्सम्भाराणाँ सम्भारत्वं यत्रयत्राग्नेर्न्यक्तं ततस्ततः सम्भरति तद्यशसेव त्वदेवैनमेतत्समर्द्धयति पशुभिरिव त्वन्मिथुनेनेव त्वत्सम्भरन् ॥ १ ॥

---

**अथाग्न्याधानम्[1] ।**

**तत्र सम्भारब्राह्मणम्[2] ।**

**स यद्वा इतश्चेतश्च सम्भरति तत्–सम्भाराणां सम्भारत्वम् । यत्र–यत्राग्नेर्न्यक्तं ततस्ततः सम्भरति । तद् यशसेव त्वद्–एवैनमेतत् समर्द्धयति । पशुभिरिव त्वत् । मिथुनेनेव त्वत्– सम्भरन् ॥ १ ॥**

---

**सायणभाष्यम् ।**

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे । यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ २ ॥

आद्ये काण्डे प्रपञ्चेन पौर्णमासेष्टिरीरिता । सा सम्पूर्णोपदेशत्वादन्यासां प्रकृतिर्मता[3] ॥ ३ ॥

पवमानेष्ट्यादिकानां द्वितीये त्वग्निसिद्धये । आधानं पवमानेष्टिरग्निहोत्रमुपस्थितिः ॥

चातुर्मास्यादिकः सर्वो हविर्यज्ञोऽत्र वर्ण्यते ॥ ४ ॥

तावत् सर्वेष्टिप्रकृतित्वेन प्राक् प्रतिपादिताया दर्शपूर्णमासेष्टेः, विधास्यमानानामग्निहोत्रादिकर्मणा च त्रेताग्निसाध्यत्वात् तद्धेतुभूतमाधानं प्रतिपाद्यते । तत्र चोदकहिरण्यादिसम्भाराणां पञ्चानां सम्भरणं विधित्सुः सम्भारनामनिर्वचनं करोति–**स यद्वा** इति । 'इतश्च' अस्माद् वक्ष्यमाणादुदकहिरण्यादिद्रव्यजातात् 'सः' अध्वर्युस्तदेकदेशमाहृत्य 'यद्' यस्मादेकस्थाने 'सम्भरति' समूहीकरोति, ('तत्[6]' तस्मात् 'सम्भ्रियन्ते

---

१–२ एकपादिकाभिधेऽस्मिन् काण्डे प्रकरणचतुष्टयम् । तत्र तावत्सप्तभिर्ब्राह्मणैः प्रथममग्न्याधानप्रकरणम्, ततः षड्ब्राह्मणै द्वितीयमग्निहोत्रप्रकरणम्, ततो ब्राह्मणत्रयेणेष्टिप्रकरणं तृतीयम्, ततोऽष्टभिर्ब्राह्मणैरन्तिमं चातुर्मास्यप्रकरणमभिहितम् । तत्र प्रथमेऽग्न्याधानप्रकरणे प्रथमं सम्भारब्राह्मणम्, ततो द्वे मुहूर्त्तब्राह्मणे, तत्रैकं नक्षत्रविचारात्मकमपरमृतुविचारात्मकम्, तत उपवसथब्राह्मणं चतुर्थम्, ततः पञ्चमं पूर्णाहुतिब्राह्मणम्, षष्ठं दक्षिणाब्राह्मणम्, सप्तमं च पुनराधानब्राह्मणमिति ज्ञेयम् । ३–यत्र सर्वं कर्तव्यं प्रकर्षेण कर्मान्तरनैरपेक्ष्येणोपादिश्यते सा प्रकृतिः । यत्र विशेषरूपमेवं कर्तव्यं श्रुत्योपदिश्यते इतरत्सर्वं प्रकृतेरतिदिश्यते सा विकृतिः । प्रकृतिश्च द्विविधा–मूलप्रकृतिरवान्तरप्रकृतिश्चेति । सर्वात्मना कर्मान्तरनिरपेक्षा मूलप्रकृतिः । कतिपयेष्वङ्गेषु कर्मान्तरं चापेक्षते स्वयं च कैश्चित्कर्मभिरपेक्षणीया भवति सेयमवान्तरप्रकृतिः । सर्वं चेदं मीमांसायां सप्तमेऽष्टमेऽध्याये च निरूपितम् । तथा च न्यायमालायाः ८ अ. १ पा. ३ अ. २ वर्णके इष्ट्यग्निहोत्रसोमानामेव सर्वयागमूलप्रकृतित्वं प्रतिपादितम् ॥ ४–"दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नयः । अग्नित्रयमिदं त्रेता" इत्यमरः ( २ । ७ । २० ) । ५–' उदकम् १ हिरण्यम् २ ऊषाः ३ आखुकरीषम् ४ शर्कराः ५ इति पञ्च संभाराः । ६–' बन्धनीधृतग्रन्थस्थाने ' तच्च हिरण्यादिनानावस्तूनां संभारनामत्वमिति'–इति पाठ उपलभ्यते क. पुस्तके ।

( न्न ) अथोल्लिखति । तद्यदेवास्यै पृथिव्या ऽअभिष्ठितंवाभिष्ठ्यूतं वा तदेवास्या ऽएतदुद्धन्त्यथ यज्ञियायामेव पृथिव्यामाधत्ते तस्माद्वा उल्लिखति ॥ २ ॥

( त्यु ) अथाद्भिरभ्युक्षति । ( त्ये ) एष वा अपाᳬं सम्भारो यदद्भिरभ्युक्षति तद्यदपः सम्भरत्यन्नं वा ऽआपोऽन्नᳬं हि वा ऽआपस्तस्माद्यदेमं लोकमाप आगच्छन्त्यथेहान्नाद्यं जायते तदन्नाद्येनैवैनमेतत्समर्द्धयति ॥ ३ ॥

---

अथोल्लिखति, तद्-यदेवास्यै पृथिव्या अभिष्ठितं वा, अभिष्ठ्यूतं वा तदेवास्या एतदुद्घ्नन्ति । अथ यज्ञियायामेव पृथिव्यामाधत्ते तस्माद्वा उल्लिखति ॥ २ ॥

अथाद्भिरभ्युक्षति । एष वा अपां सम्भारो यदद्भिरभ्युक्षति । तद् यद्-अपः सम्भरति-अन्नं वा आपः-अन्नं हि वा आपस्तस्माद् यदेमं लोकमाप आगच्छन्ति अथेहान्नाद्यं जायते । तदन्नाद्येनैवैनमेतत् समर्द्धयति ॥ ३ ॥

---

इति सम्भाराः ' इति व्युत्पत्त्या तेषां ' सम्भार '-नाम सम्पन्नमित्यर्थः । ) **इतश्चेतश्चे**ति । " नित्यवीप्सयोः "-( पा० सू० ८ । १ । ४ ) इति द्विर्वचनम् । एतदेव विशदयन् सम्भरणं विक्रियते-**यत्र-यत्रे**ति । यस्मिन् यस्मिन् पदार्थे ' अग्नेः ' सम्बन्धि तेजो ' न्यक्तं ' निलीनं भवति, तस्मात् सर्वस्मादपि सम्भरणं कार्यमित्यर्थः । एतत् सम्भरणीयद्रव्यविशेषोपजीवनेन प्रशंसति-**तद्यशसेवे**ति । सम्भरन्नित्युपरिष्टात्सर्वशेषतया श्रुतत्वात् त्रिष्वपि वाक्येषु त्वदित्यनन्तरं सम्बध्यते । त्वच्छब्दश्च एकशब्दपर्यायः " उत त्वः पश्यन् " ( ऋ० सं० १० । ७१ । ७ ) इत्यादौ तथा दर्शनात् । " अप्येकः पश्यन् न पश्यति वाचम " इति यास्कः । ( नि० १ । ६ । ३ ) 'तत्' तत्र ' त्वेत्[3] ' एकं हिरण्याख्यं वस्तु ' सम्भरन् ' ' एनम् ' अग्निमेतेन सम्भरणेन ' यशसेव समर्द्धयति ' । हिरण्यस्य यशोरूपत्वमग्रे ( श० प० २ । १ । १ । ५ ) वक्ष्यते । एवमुत्तरवाक्ययोरपि योजना । तत्र त्वदिति पदाभ्यामुषोदकद्रव्ये विवक्षिते । तयोश्च पशुमिथुनै[3]रूपत्वे उपरिष्टात् ( श० प० २ । १ । १ । ४-६ ) समाम्नास्येते ॥ १ ॥

तस्य च हिरण्यादिसम्भारस्य निवपनमुल्लेखनाभ्युक्षणसंस्कृतेष्वेव गार्हपत्याद्यायतनेषु कार्यमित्यभिप्रेत्य प्रथममुल्लेखनं विधाय प्रशंसति-**अथोल्लिखती**ति । ' अस्यै पृथिव्यै ' इति षष्ठ्यर्थे चतुर्थी ( पा० सू० २ । ३ । ६१ ) । अस्याः पृथिव्याः सम्बन्धि, यत् ' अभिष्ठितम् ' उपर्यवस्थानेन पादस्पर्शजनितम्[4], ' अभिष्ठ्यूतम्, तदुपरि निष्ठीवनादिजनितश्चेत्यर्थः । 'वा '-शब्दौ चार्थौ । **यज्ञियायामि**ति । यज्ञार्हायामित्यर्थः ॥ २ ॥

उल्लिखितानामग्न्यायतनानामभ्युक्षणं विधत्ते-**अथे**ति । एतदभितः सर्वतो यदभ्युक्षणम्, ' एष वा अपां सम्भारः ' न तु हिरण्यादिवत् पृथगुपादाय तासां निवपनं कार्यमित्यर्थः । ' अन्नं वै ' इत्यादि निगदसिद्धम् ॥ ३ ॥

---

१-वातमिति पा. । २-' तत् ' इति पा. । ३-यदि च श्रुतौ मिथुनस्याग्रे विधानं, पशूनां तत उत्तरं तथापि "अल्पाच्तरं" ( पा. सू. २ । २ । ३४ ) इति शासनात्पशुशब्दस्येह द्वन्द्वनिमित्तः पूर्वनिपातो ज्ञेयः । ४-एतदनन्तरम् " अमेध्यत्वमिति नैकप्रतीकोद्गूर्णदूरश्लेष्मादिजममेध्यत्वम् "-इत्यधिकमुपलभ्यते क. पु. । ५-" स्थानमुल्लिख्याभ्युक्ष्यान्वारब्धे हिरण्यं निधायोपाखूत्करान्निवपत्यन्तेषु शर्कराः " इति का. श्रौ. सू. ४ । २१० ॥

योषा वा ऽआपः । ( पो ) वृषाग्निर्मिथुनेनैवैनमेतत्प्रजननेन समर्द्धयत्यद्भिर्वा ऽइदꣳ सर्वमाप्तमद्भिरेवैनमेतदाप्त्वाधत्ते तस्मादपः सम्भरति ॥ ४ ॥

(त्यु) अथ हिरण्यꣳ सम्भरति । (त्य) अग्निर्ह वा ऽअपोऽभिदध्यौ मिथुन्याभिः स्यामिति ताः सम्बभूव तासु रेतः प्रासिञ्चत्तद्धिरण्यमभवत्तस्मादेतदग्निसङ्काशमग्नेर्हि रेतस्तस्मादप्सु विन्दन्त्यप्सु हि प्रासिञ्चत्तस्मादेनेन न धावयति न किञ्चन करोत्यथ यशो देवरेतसꣳहि तद्यशसैवैनमेतत्समर्द्धयति सरेतसमेव कृत्स्नमग्निमाधत्ते तस्माद्धिरण्यꣳ सम्भरति ॥ ५ ॥

---

योषा वा आपः, वृषाग्निः । मिथुनेनैवैनमेतत् प्रजननेन समर्द्धयति । अद्भिर्वा इदं सर्वमाप्तम् । अद्भिरेवैनमेतदाप्त्वाधत्ते—तस्मादपः सम्भरति ॥ ४ ॥

अथ हिरण्यं सम्भरति । अग्निर्ह वा अपोऽभिदध्यौ—"मिथुन्याभिः स्यामिति" । ताः सम्बभूव' तासु रेतः प्रासिञ्चत्—तद्धिरण्यमभवत्; तस्मादेतदग्निसङ्काशम् । अग्नेर्हि रेतः । तस्मादप्सु विन्दन्ति, अप्सु हि प्रासिञ्चत् । तस्मादनेन न धावयति, न किञ्चन करोति । अथ यशो देवरेतसं हि । तद्यशसैवैनमेतत् समर्द्धयति । सरेतसमेव कृत्स्नमग्निमाधत्ते । तस्माद्धिरण्यं सम्भरति ॥ ५ ॥

---

एवमन्नाद्यहेतुत्वेनाभ्युक्षणं प्रशस्य मिथुनरूपेण प्रशंसति—**योषा वा** इति । अपां स्त्रीलिङ्गत्वादग्नेश्च पुँल्लिङ्गत्वादुभयं मिलितं सदेकं मिथुनम्, तच्च पुत्रपौत्रादिप्रजननहेतुररिति ' एनम् ' अग्निं ' समर्द्धयति ' एतेन 'मिथुनेन ' । त्वदिति प्रागुक्तं तद्विवृतं भवति । एवं लिङ्गोपजीवनेन प्रशस्य अप्शब्दप्रतिपादितार्थपर्यालोचनयापि प्रशंसति—**अद्भिर्वा** इति । " आपो वा इदमग्रे सलिलमासीत् "—इति श्रुतिः (तै० ब्रा० १ । १ । ३ । ५.) ' सर्वम् ' ' इदम् ' जगत् ' अद्भिः ' खलु ' आप्तम् ' अत आपनशीलाभिस्ताभिरद्भिः ' एनम् ' अग्निं प्राप्य ' आधत्ते ' इत्यर्थः । यस्मादेवं तस्मात् सम्भारनिवपनसमयेऽभ्युक्षणार्थं कस्मिंश्चित् पात्रेऽपः सम्भरेदिति निगमयति **तस्मादिति** ॥ ४ ॥

हिरण्यस्य सम्भरणं विधत्ते—**अथ हिरण्यमिति** । तस्य हिरण्यस्याग्निरेतस्त्वं प्रतिपादयति—**अग्निर्ह वा** इत्यादिना । ' अभिदध्यौ ' अभिध्यातवानित्यर्थः । " ध्यै चिन्तायाम् " ( भ्वा० प० ९३३ ) इत्यस्माल्लिटि " आत औ णलः " ( पा० सू० ७ । १ । ३४ ) इत्यौत्वम्, अभिध्यानप्रकारमाह—**मिथुन्याभिरिति** । ' आभिः ' अद्भिरभ्युक्षणाद्भिः स्त्रीभिः ' मिथुनी स्याम्' प्रयोगमिथुनं तत्संयोगान्मिथुनं भवानीत्यर्थः । मिथुनशब्दादभूततद्भावे ( पा० सू० ५ । ४ । ५० । वा० २ ) च्विः । **तस्मादेतदिति** । यस्मादग्निवीर्यं हिरण्यात्मना परिणतम्, ' तस्मात् ' एतत् हिरण्यम् ' अग्निसङ्काशम ' अग्नेः सदृशमेव वर्ण्यतं उपलभ्यते । यस्माच्चाप्सु निषिक्तम्, ' तस्मात् ' तद्धिरण्यम् ' अप्सु ' ' विन्दन्ति ' लभन्त इत्यर्थः । **तस्मादनेनेति** । यस्मादाग्नेयं हिरण्यम् , ' तस्मादेनेन ' दन्तान् ' न धावयेत् ' । तथा यदन्यत् किमपि हीनं कर्म, तदपि तेन न कुर्यादित्यर्थः ।

**अथ यश** इति । ' अथ '—शब्दो वाक्यालङ्कारे । यस्मात्तद्धिरण्यं ' देवरेतसं ' देवस्याग्नेर्वीर्यम्, तस्माद् यशोरूपम् । देवरेतसमिति " अनसन्तात् "—( पा० सू० ५ । ४ । १०३ ) इत्यकारः समासान्तः । तथा च

( त्य ) अथोषान्सम्भरति । ( त्य ) असौ ह वै द्यौरस्यै पृथिव्या ऽएतान्पशून्प्रददौ तस्मात्पशव्यमूषरमित्याहुः पशवो ह्येवैते साक्षादेव तत्पशुभिरेवैनमेतत्समर्द्धयति तेऽमुत ऽआगता ऽअस्यां पृथिव्यां प्रतिष्ठितास्तमनयोर्द्यावापृथिव्यो रसं मन्यन्ते तदनयोरेवैनमेतद्द्यावापृथिव्यो रसेन समर्द्धयति तस्मादूषान्त्सम्भरति ॥ ६ ॥

( त्य ) अथाखुकरीषꣳ सम्भरति । ( त्या ) आखवो ह वा ऽअस्यै पृथिव्यै रसं विदुस्तस्मात्तेऽधोऽध ऽइमां पृथिवीं चरन्तः पीविष्ठा ऽअस्यै हि रसं विदुस्ते यत्र तेऽस्यै पृथिव्यै रसं विदुस्तत ऽउत्किरन्ति तदस्या ऽएवैनमेतत्पृथिव्यै रसेन समर्द्धयाति तस्मादाखुकरीषꣳ सम्भरति पुरीष्य ऽइति वै तमाहुर्यः श्रियं गच्छति समानं वै पुरीषं च करीषं च तदेतस्यैवावरुद्ध्यै तस्मादाखुकरीषꣳ सम्भरति ॥ ७ ॥

---

अथोषान् सम्भरति । असौ ह वै द्यौरस्यै पृथिव्या एतान् पशून् प्रददौ, तस्मात् पशव्यमूषरमित्याहुः । पशवो ह्येवैते साक्षादेव । तत् पशुभिरेवैनमेतत् समर्द्धयति । तेऽमुत आगता अस्यां पृथिव्यां प्रतिष्ठिताः । तमनयोर्द्यावापृथिव्यो रसं मन्यन्ते । तदनयोरेवैनमेतद् द्यावापृथिव्यो रसेन समर्द्धयति । तस्मादूषान् सम्भरति ॥ ६ ॥

अथाखुकरीषं सम्भरति । आखवो ह वा अस्यै पृथिव्यै रसं विदुः, तस्मात्तेऽधोऽध इमां पृथिवीं चरन्तः पीविष्ठाः अस्यै हि रसं विदुस्ते । यत्र तेऽस्यै पृथिव्यै रसं विदुः; ततः उत्किरन्ति ।

---

हिरण्यसम्भरणेन ' यशसैव ' ' एनम् ' अग्निं समृद्धं करोति । एतेन—' यशसेव त्वद् ' इति प्रागुक्तं ( श० प० २ । १ । १ । १ ) व्याख्यातं भवति । **सरेतसमेवे**ति । हिरण्यस्य सम्भरणाभावे हि रेतसोऽन्यत्र स्थितत्वात् तद्रहित आहितोऽग्निरकृत्स्न एव भवति; तत्सम्भरणे तु सरेतसः सः ॥ ५ ॥

ऊषाख्यमृद्विशेषस्य संभरणं विधत्ते—**अथोषा**निति । ऊषाणां पशुरूपत्वं प्रतिपादयन् तत् समृद्धिहेतुत्वेन स्तौति—**असौ ह वा** इति । यस्मात् ' पृथिव्यै ' द्युलोकेन इमे पशवो दत्ताः, ' तस्मात् ' , तत्सम्बन्धि ' ऊषरम् ' ऊषयुक्तं स्थानं पशव्यं पशुभ्यो हितम् ' इति ' ब्रह्मवादिनः ' आहुः ' । पशवो हि, तादृशं स्थानमासाद्य लिहन्ति; अतः पशुहितत्वात् पश्वात्मकाः 'एवैते ' ऊषाः । **ऊषर**मिति । " ऊषसुषिमुष्कमधो रः " ( पा. सू. ५ । २।१०७ ) इति मत्वर्थीयो रः । स्पष्टमन्यत् । द्यावापृथिव्यो रसत्वेनैतान् प्रशंसति—**तेऽमुत** इति । ' अमुतः' अमुष्माद् द्युलोकात् ' आगताः ', ' अस्यां ' पृथिव्यां प्रतिष्ठिताः च; अतः पश्वात्मकस्य ऊषद्रव्यस्य द्यावापृथिवीरसत्वम् । किं ततः इत्याह—**तदनयो**रिति ॥ ६ ॥

द्रव्यान्तरस्य सम्भरणं विधत्ते—" **अथाखुकरीष**मिति । आखुभिः खननेन बिलात् बहिर्नीताः पांसव आखुकरीषम् । तदेतत्पृथिवीरसत्वेन स्तौति—**आखवो** हेति । यस्मात् 'आखवः' पृथिवीरसज्ञाः 'तस्मात्' एव पृथिवी-

---

१–' रसजाताः ' इति क० पु० पा० ।

( त्यु ) अ॒थ शर्क॑राः सु॒म्भरति । दे॒वाश्च॒ वा ऽअसु॑राश्चो॒भये॑ प्राजाप॒त्याः पस्पृधिरे॒ सा हे॒यं पृ॑थि॒व्यले॑लायद्य॒था पुष्करप॒र्णमे॒वं ताᳪं ह स्म॒ वातः॑ सं॒वह॑ति सो॒पैव॑ दे॒वाञ्ज॑गा॒मोपा॒सुरान्त्सा य॒त्र दे॒वानु॒पज॑गाम ॥ ८ ॥

तद्धो॑चुः । ( ह्रूं ) ह॒न्तेमां॒ प्रति॑ष्ठां दृᳪंहामहै तस्यां॑ ध्रु॒वाया॑मशिथि॒लाया॑मग्नी ऽआ॒दधा॑महै॒ ततो॑ऽस्यै स॒पत्ना॒न्निर्भ॑क्ष्याम॒ ऽइति॑ ॥ ९ ॥

---

तदस्या एवैनमेतत् पृथिव्यै रसेन समर्द्धयति । तस्मादाखुकरीषं सम्भरति, पुरीष्य इति वैत- माहुः—यः श्रियं गच्छति । समानं वै पुरीषं च करीषं च । तदेतस्यैवावरुद्ध्यै,—तस्मादाखु- करीषं सम्भरति ॥ ७ ॥

अथ शर्कराः सम्भरति । देवाश्च वा असुराश्च उभये प्राजापत्याः पस्पृधिरे । सा हेयं पृथिव्यले- लायत्, यथा—पुष्करपर्णमेवम् । तां ह स्म वातः संवहति । सोपैव देवान् जगामोपासुरान् । सा यत्र देवानुपजगाम ॥ ८ ॥

तद्धोचुः—“ हन्तेमां प्रतिष्ठां दृंहामहै, तस्यां ध्रुवायामशिथिलायामग्नी आदधामहै; ततोऽस्यै सपत्नान् निर्भक्ष्याम इति ” ॥ ९ ॥

---

मध्ये ‘अधोऽधः चरन्तः’ पृथिव्या अन्तरधस्तात् समीपे चरन्तः, ( तत्रत्यरसास्वादनेन ‘ पीविष्ठाः ’ अतिशयेन पीवानो मांसलाः, ते च ) ( तद्रसास्वादनसम्बन्धिनि ‘ यत्र यत्स्थाने ‘ रसं ’ ‘ विदुः ’ जानन्ति तत् स्थानं गत्वा ) ‘ रसम् ’ उपजीव्य पांसून् बहिः ‘ उत्करन्ति ’ उत्क्षिपन्ति । “ कॄ विक्षेपे ” ( तु० प० १३९ ) इति धातुः । अत आखूत्करस्य पृथिवीरसत्वात् तेनैव ‘ एनम् ’ अग्निं समृद्धं करोति । प्रकारान्तरेण स्तौति—**पुरीष्य इतीति** । ‘ यः ’ खलु ‘ श्रियं ’ सम्पदं ‘ गच्छति, ’ ‘तं पुरीष्य इति’ लोका वर्णयन्ति । नन्वेवं पुरीष- स्यैव श्रीप्राप्तिहेतुता, करीषस्य किमायातमित्यत आह—**समानमिति** । पुरीषकरीषशब्दावत्र समानार्थावित्यर्थः । अतः करीषसम्बन्धादग्निः श्रियं प्राप्नोति । तादृशस्याग्नेरवरोधाय करीषसम्भरणं कार्यमित्यर्थः ॥ ७ ॥

शर्कराणां सम्भरणं विधत्ते—**अथ शर्करा** इति । मृन्मिश्रिताः सूक्ष्मपाषाणाः शर्कराः । तेषामधिश्रितानां दार्ढ्यहेतुत्वमितिहासेन दर्शयति—**देवाश्च वा** इति । देवा असुरा उभये स्पर्द्धाञ्चक्रिरे । देवासुरेषु युद्धाय कृतो- द्यमेषु तद्भयात् ‘ पृथिवी अलेलायत् ’ चाञ्चल्यं प्राप्नोत् । तत्र दृष्टान्तमाह—**यथेति** । ‘ यथा ’ जलस्योपरि ‘ पुष्करपर्णम् ’ इतस्ततश्चञ्चलं भवति, ‘ एवम् ’ पृथिव्यपि इतस्ततः कम्पिता । ‘ तां ’ तदवस्थामापन्नां पृथिवीं ‘ वातः ’ वायुः पुष्करपर्णवदेव ‘ संवहति स्म ’ यथा दारुमयीं ( नावं ) कश्चित् परपारं नयति, स्थानात् स्थानान्तरं प्रापयति । ‘ सा ’ त्वेवं कम्पमाना पृथिवी उभयविधानपि तान् ‘ उपजगाम ’ पदा- न्तरे ‘ सा ’ ‘ उप ’ ‘ आ ’ ‘ एव ’ इति छेदः ॥ ८ ॥

यदा च सा देवान् प्राप्नोत्, तदा तत्कृतं परिहारं दर्शयति—**तद्धोचुरिति** । ‘प्रतिष्ठां’ प्रतिष्ठितां ‘दृंहामहै’ दृढीकरवामहै । ‘ ध्रुवायां ’ निश्चलायाम्, ‘ अशिथिलायां ’ दृढायाम् ‘ अग्नी ’ गार्हपत्याहवनीयावादध्मः । वाक्यार्थः स्पष्टः । ‘ ततः ’ तस्मात् अग्न्याधानात् ‘ अस्यै ’ अस्याः पृथिव्याः सकाशात् शत्रुभूतानसुरान् ‘ निर्भक्ष्यामः ’ निर्भक्तान् भागरहितान् कुर्यामेत्यर्थः । इत्थं प्रतिज्ञापयामासुः ॥ ९ ॥

तद्यथा शङ्कुभिश्चर्म्म विहन्यात् । ( दे ) एवमिमां प्रतिष्ठाꣳ शर्क्कराभिः पर्य्यबृꣳहन्त सेयं ध्रुवाऽशिथिला प्रतिष्ठा तस्यां ध्रुवायामशिथिलायामग्नी ऽआदधत ततोऽस्यै सपत्नान्निरभजन् ॥ १० ॥

(जँस्त) तथो ऽएवैष ऽएतत । ( दि ) इमां प्रतिष्ठाꣳ शर्क्कराभिः परिबृꣳहते तस्यां ध्रुवायामशिथिलायामग्नी ऽआधत्ते ततोऽस्यै सपत्नान्निर्भजति तस्माच्छर्क्कराः सम्भरति ॥ ११ ॥

तान्वा ऽएतान् । ( न्पु ) पञ्च सम्भारान्त्सम्भरति पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चऽर्त्तवः संव्वत्सरस्य ॥ १२ ॥

तदाहुः । षडेवऽर्त्तवः संवत्सरस्येति न्यूनमु तर्हि मिथुनं प्रजननं क्रियते न्यूनाद्वा ऽइमाः प्रजाः प्रजायन्ते तच्छ्रेयसमुत्तरावत्तस्मात्पञ्च भवन्ति यद्यु षडेवऽर्त्तवः संव्वत्सरस्येत्यग्निरेवैतेषाꣳ षष्ठस्तथो ऽएवैतदन्यूनं भवति ॥ १३ ॥

---

तद्यथा शङ्कुभिश्चर्म विहन्यात्, एवमिमां प्रतिष्ठां शर्कराभिः पर्यबृंहन्त । सेयं ध्रुवाऽशिथिला प्रतिष्ठा । तस्यां ध्रुवायामशिथिलायामग्नी आदधत । ततोऽस्यै सपत्नान्निरभजन् ॥ १० ॥

तथो एवैष एतत् इमां प्रतिष्ठां शर्कराभिः परिबृंहते । तस्यां ध्रुवायामशिथिलायामग्नी आधत्ते । ततोऽस्यै सपत्नान् निर्भजति । तस्माच्छर्कराः सम्भरति ॥ ११ ॥

तान्वा एतान् पञ्च सम्भारान् सम्भरति । पाङ्क्तो यज्ञः । पाङ्क्तः पशुः । पञ्चर्तवः संवत्सरस्य॥१२॥

तदाहुः—षडेवर्त्तवः संवत्सरस्य इति । न्यूनमु तर्हि मिथुनं प्रजननं क्रियते । न्यूनाद्वा इमाः प्रजाः

---

इत्थं प्रतिज्ञाय तैः कृतं दर्शयति—**तद्यथेति** । 'यथा' आर्द्रं 'चर्म' भूमौ प्रसार्य 'शंकुभिः' परितो 'विहन्यात्' 'एवं' 'प्रतिष्ठां' सर्वप्राण्यास्पदभूताम् 'इमां' पृथिवीं शर्कराभिः 'पर्यबृंहन्त' परितः शर्करास्थापनेन दृढीकृतवन्तः । निगदसिद्धमन्यत् ॥ १० ॥

एवं पुरावृत्तमुदाहृत्यैतद्दृष्टान्तेन प्रकृतमनुसन्धत्ते—**तथो एवेति** । उक्तार्थमेतत् ॥ ११ ॥

विहितसम्भरणमनूद्य तत्सङ्ख्योपजीवनेन प्रशंसति—**तान् वा एतानिति** । तान् पूर्वोक्तान् 'पञ्च सम्भारान्' 'सम्भरति' उदकहिरण्योषाखुकरीषशर्कराः पञ्च सम्भाराः । **पाङ्क्तो यज्ञ** इति । पञ्चपदा पङ्क्तिः, ( ऐ. ब्रा. ६ । ४ । ४; ९।४।२। ) तद्वत्त्वात्, 'यज्ञः' अपिधानाकरम्भादिपञ्चहविष्क[1] ( ऐ. ब्रा. २।३।६ ) इति पञ्चसङ्ख्यायोगात् 'पाङ्क्तः' । अस्थिमज्जेति पञ्चधातुमयत्वात्[2] 'पशुः' अपि 'पाङ्क्तः' ( ऐ. ब्रा. ६ । ९ । ३ ) संवत्सरसम्बन्धिनः 'ऋतवः' वसन्ताद्या अपि पञ्चसङ्ख्याकाः । हेमन्तशिशिरयोः समासाभिप्रायमेतत् । तथा चैतरेयकम्—" हेमन्तशिशिरयोः समासेन "—( ऐ. ब्रा. १ । १ । १ ) इति ॥ १२ ॥

तदेतत् पञ्चत्वं लोकप्रसिद्धिविरुद्धमित्याक्षिपति—**तदाहुरिति** । हेमन्तशिशिरौ हि पृथक्त्वेन लोके प्रसिद्धौ;

---

१—धानाः, करम्भः, परिवापः, पुरोडाशः, पयस्या इति पञ्च हवींषि । २—त्वक्, मांसम्, स्नायुः, अस्थि, मज्जा चेति पञ्च धातवः । यद्यपि धातवः सप्तसंख्याका एवाभिहिताः सर्वत्र, तथापि यज्ञे पञ्चानामेवोपयोगात् पञ्चधातुमयत्वमेत्राभिहितं पशूनाम् ।

तदाहुः । ( नैं ) नैवैकश्चन सम्भारᳪं सम्भरेदित्यस्यां वा ऽएते सर्वे पृथिव्यां भवन्ति स यदेवास्यामाधत्ते तत्सर्वान्त्सम्भारानाप्नोति तस्मान्नैवैकश्चन सम्भारᳪं सम्भरेदिति तदु समेव भरेद्यदहैवास्यामाधत्ते तत्सर्वान्त्सम्भारानाप्नोति यदु सम्भारैः सम्भृतैर्भवति तदु भवति तस्मादु समेव भरेत् ॥ १४ ॥ १ ॥

इति प्रथमप्रपाठके प्रथमं ब्राह्मणम् ॥ ( १-१ ) ॥

---

प्रजायन्ते । तच्छ्वःश्रेयसमुत्तरावत् । तस्मात्पञ्च भवन्ति । यद्यु षडेवर्तवः संवत्सरस्येति । अग्निरेवैतेषां षष्ठः, तथो एवैतदन्यूनं भवति ॥ १३ ॥

तदाहुः—नैवैकश्चन सम्भारं सम्भरेदिति । अस्यां वा एते सर्वे पृथिव्यां भवन्ति । स यदेवास्यामाधत्ते, तत्सर्वान् सम्भारानाप्नोति । तस्मात्—नैवैकश्चन सम्भारं सम्भरेदिति । तदु समेव भरेत् । यदहैवास्यामाधत्ते—तत् सर्वान् सम्भारानाप्नोति । यदु सम्भारैः सम्भृतैर्भवति, तदु भवति । तस्मादु समेव भरेत् ॥ १४ ॥ १ ॥

इत्यग्न्याधानप्रकरणे सम्भारब्राह्मणम् ।

---

अतस्तयोरैक्यं न युक्तमिति भावः । परिहरति—न्यूनमिति । 'तर्हि' तथा सति ऋतुषट्के मिथुनत्रयसम्पत्तिः; पञ्चके तु तन्मिथुनत्रयमेकेन 'न्यूनं' भवति, तच्चे प्रजननसाधनम् । अत्र लोकप्रसिद्धिमाह—न्यूनादिति । स्त्रीपुंसयोर्वीर्यस्य परस्परन्यूनत्वे सति तस्मात् 'न्यूनात्' मिथुनात् स्त्रीपुंसलक्षणान्यपत्यानि 'जायन्ते' । यस्मादेवं 'तस्मात्' 'पञ्चसम्भारलक्षणेन यत् मिथुनस्य न्यूनत्वम्, 'तत्' 'श्वःश्रेयसम्' श्वः परदिवसे, श्रेयसो जनकम् । "श्वसो वसीयःश्रेयसः" (पा०सू० ५।४।८० ) इत्यच् समासान्तः । 'उत्तरावत्', उत्तरा आगामिन्यभिवृद्धिः, तथोपेतमित्यर्थः । एवमृतूनां षट्केऽपि सम्भाराणां पञ्चसङ्ख्याकत्वमुपपाद्याथापि न्यूनत्वं नाम कश्चिन्मन्येतेत्याशङ्क्य परिहरति— यद्यु इति । यदि षडृतुत्वं संवत्सरस्य सङ्ख्यास्ति, तर्हि एतेषां सम्भाराणामाधीयमानः 'अग्निरेव' 'षष्ठः' षट्सङ्ख्यापूरकः ॥ १३ ॥

असम्भारपक्षमाह—तदाहुरिति । एकश्चनेति । एकमपीत्यर्थः । अत्रोपपत्तिमाह—अस्यामिति । आरोपित सर्वसम्भारभूतायां पृथिव्यामाधानादेव तत्कार्यप्राप्तेर्न पृथक् सम्भारापेक्षेत्यर्थः । सम्भरणपक्षमेव निगमयति—तदु समेवेति । यदु सम्भारैरिति । 'यत्' खल्वाधाने सम्भृतैः 'सम्भारैः' निष्पन्नं भवति, 'तत्' खल्वाधानं भवति, सम्भारविरहे तु तदाधानमेव न भवतीति कुतस्तस्य पृथिवीसम्बन्धवशात् सम्भरणप्राप्तिरित्यर्थः ॥ १४ ॥ १ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वितीये काण्डे प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥ १ ॥

---

१-'तच्चाप्रजननसाधनम्' इति पाठान्तरम् । २-'न्यूनत्वं वा न कश्चिद्दोषः' इति क. पुस्तके ।

कृत्तिकास्वग्नी ऽआदधीत । (तै) एता वा ऽअग्निनक्षत्रं यत्कृत्तिकास्त-द्वै सलोम यो ऽग्निनक्षत्रे ऽग्नी ऽआदधातै तस्मात्कृत्तिकास्वादधीत ॥ १ ॥

(तै) एकं द्वे त्रीणि । चत्वारीति वा ऽअन्यानि नक्षत्राण्यथैता एव भूयिष्ठा यत्कृत्तिकास्तद्भूमानमेवैतदुपैति तस्मात्कृत्तिकास्वादधीत ॥ २ ॥

(तै) एता ह वै प्राच्यै दिशो न च्यवन्ते । सर्वाणि ह वाऽअन्यानि नक्ष-त्राणि प्राच्यै दिशश्च्यवन्ते तत्प्राच्यामेवास्यैतद्दिश्याहितौ भवतस्तस्मात् कृत्तिकास्वादधीत ॥ ३ ॥

(ता) अथ यस्मान्न कृत्तिकास्वादधीत । (क्षा) ऋक्षाणाᳪँह वाऽएता अग्रे पत्न्य आसुः सप्तऽर्षीनु ह स्म वै पुराऽक्षा इत्याचक्षते ता मिथुनेन

---

अथ नक्षत्रब्राह्मणम् ।

कृत्तिकास्वग्नी आदधीत । एता वा अग्निनक्षत्रं यत् कृत्तिकाः । तद्वै सलोम—योऽग्निनक्षत्रेऽग्नी आदधातै । तस्मात् कृत्तिकास्वादधीत ॥ १ ॥

एकं द्वे त्रीणि चत्वारीति वा अन्यानि नक्षत्राणि । अथैता एव भूयिष्ठाः यत् कृत्तिकाः तद् भूमान-मेवैतदुपैति । तस्मात् कृत्तिकास्वादधीत ॥ २ ॥

एता ह वै प्राच्यै दिशो न च्यवन्ते । सर्वाणि ह वा अन्यानि नक्षत्राणि प्राच्यै दिशश्च्यवन्ते । तत्प्राच्यामेवास्यैतद्दिश्याहितौ भवतः । तस्मात्—कृत्तिकास्वादधीत ॥ ३ ॥

अथ यस्मात्—न कृत्तिकास्वादधीत । ऋक्षाणां ह वा एता अग्रे पत्न्य आसुः । सप्तर्षीनु ह स्म

---

कर्मणः कालसापेक्षत्वादाधानस्य नक्षत्रं विधत्ते—**कृत्तिकास्वि**त्यादिना ( का. श्रौ. सू. ४ । १७६ ) । 'अग्नी' गार्हपत्याहवनीयावित्यर्थः । अग्निदेवताकत्वादग्निनक्षत्रं कृत्तिकाख्यम् । श्रूयते हि—"[1]कृत्तिका नक्षत्र-मग्निर्देवता" इति । तस्मिन्नग्निनक्षत्रेऽग्न्याधानं 'सलोम' सदृशं, योग्यमिति यावत् ॥ १ ॥

अथैतस्य नक्षत्रस्य बहुत्वोपजीवनेन प्रशंसति—**एक**मिति । कृत्तिकातः 'अन्यानि नक्षत्राणि एक—द्वि—त्रि-चतुः—सङ्ख्याधिष्ठानान्यल्पीयांसि, कृत्तिकास्तु षट्सङ्ख्याधिष्ठानयोगात् 'भूयिष्ठाः' बहुतराः । तत्र[2]आर्द्रादीनाम् 'एकम्' अधिष्ठानम् , फल्गुन्यादीनां 'द्वे' अश्विन्यादीनां 'त्रीणि' पुनर्वस्वादीनां 'चत्वारि' । 'तत्' तस्मात्, एभ्यो भूयिष्ठनक्षत्राधानात् यजमानोऽपि 'भूमानं' बहुत्वमेवोपगच्छतीत्यर्थः ॥ २ ॥

नियतदिक्सम्बन्धवशेनैताः प्रशंसति—**एता ह वा** इति । 'प्राच्यै' प्राच्याः 'दिशः' सकाशात् 'न च्यवन्ते' दक्षिणत उत्तरतो वा विक्षेपवशान्न चलन्ति, किन्तु नियमेन शुद्धप्राच्यामेवोद्यन्ति; 'अन्यानि' तु 'नक्षत्राणि' प्राचीदिग्भागाद् दक्षिणत उत्तरतो वा विक्षेपवशाच्चलन्ति, प्राचीदिग्भागाद् दक्षिणत उत्त-रतश्च नियमेन परिवर्त्तन्ते । **तत् प्राच्यामि**त्यादि । निगदसिद्धम् ॥ ३ ॥

कृत्तिकास्वाधानपक्षं मिथुनव्यृद्धिहेतुत्वान्निषेधति—**अथ यस्मादि**ति । 'यस्माद्' वक्ष्यमाणदोषोऽस्ति,

---

१—"एतद्वा अग्नेर्नक्षत्रं यत् कृत्तिकाः" ( तै० ब्रा० १. १. २. १. ) २—"तत्र चित्रादीनाम् इ० क० पाठः ।

व्यार्ध्यन्तामी ह्युत्तराहि सप्तऽर्षय उद्यन्ति पुर एता अशमिव वै तद्यो मिथुनेन व्यृद्धः स नेन्मिथुनेन व्यृद्ध्याऽइति तस्मान्न कृत्तिकास्वादधीत ॥ ४ ॥
तद्वैव दधीत । (ँ ताग्नि ) अग्निर्वा ऽएतासां मिथुनमाग्निनैता मिथुनेन समृद्धास्तस्मादेव दधीत ॥ ५ ॥

रोहिण्यामग्नी ऽआदधीत । रोहिण्याᳯं ह वै प्रजापतिः प्रजाकामोऽग्नी ऽआदधे स प्रजा असृजत ता अस्य प्रजाः सृष्टा एकरूपा उपस्तब्धास्तस्थू रोहिण्य इवैव तद्वै रोहिण्यै रोहिणीत्वं बहुर्हैव प्रजया पशुभिर्भवति य एवं विद्वान् रोहिण्यामाधत्ते ॥ ६ ॥

---

वै पुरक्षा इत्याचक्षते । ता मिथुनेन व्यार्ध्यन्त । अमी ह्युत्तराहि सप्तर्षय उद्यन्ति, पुर एताः । अशमिव वै तत्–यो मिथुनेन व्यृद्धः । स नेन्मिथुनेन व्यृद्ध्यै इति । तस्मात्–न कृत्तिकास्वादधीत ॥४॥
तद्वैव दधीत । अग्निर्वा एतासां मिथुनम् । अग्निनैता मिथुनेन समृद्धाः । तस्मादेव दधीत ॥५॥
रोहिण्यामग्नी आदधीत । रोहिण्यां ह वै प्रजापतिः प्रजाकामोऽग्नी आदधे स प्रजा असृजत । ता अस्य प्रजाः सृष्टा एकरूपा उपस्तब्धास्तस्थुः, रोहिण्य इवैव । तद्वै रोहिण्यै रोहिणीत्वम् । बहुर्हैव प्रजया पशुभिर्भवति–य एवं विद्वान् रोहिण्यामाधत्ते ॥ ६ ॥

---

तस्मात् ' कृत्तिकासु न आदधीत ' । कोऽसौ दोषः ? तमुपन्यस्यति– **ऋक्षाणां** हेति । ऋक्षशब्दार्थमाह–**सप्तर्षीनि**ति । ' ऋक्षं ' नक्षत्रम्; तद्रूपेणावस्थानात् । इह ' ऋक्ष '–शब्देन सप्तर्षयोऽभिधीयन्ते पुर ऋक्षा इति पुरेत्यस्य " ऋत्यकः " ( पा. सू. ६-१-१२८ ) इति प्रकृतिभावो ह्रस्वश्च । 'व्यार्ध्यन्त' विगतर्द्धिका अभवन् । वृद्धिमेव देशभेदोदयेन स्पष्टयति–**अमी ही**ति । ' अमी ' खलु ' सप्तर्षयः ' ' उत्तराहि ' । " आहि च दूरे "–( पा. सू. ५ । ३ । ३७ ) इति । ' आहि ' प्रत्ययः । दूरदेशे उत्तरदिग्भागे ' उद्यन्ति ' । ' एताः ' कृत्तिकाः ' पुरः ' पूर्वस्यां दिशि । अत[2] एव तासां विभिन्नदेशावस्थानेन पुरुषसम्भोगविरहान्मिथुनव्यृद्धिः । तच्चासमीचीनमित्याह–**अशमिव वै तादि**ति । अतः कृत्तिकास्वाधानं कुर्वन्नपि तद्वत् मिथुनेन व्यृद्ध्यते, अतो ' न इत् ' नैवाहं ' मिथुनेन ' ' व्यृद्ध्यै ' व्यृद्धो भवानीत्यभिप्रेत्य तत्र नादधीतेत्यर्थः ॥ ४ ॥
अथैतद्दोषं परिहरन्नाधानपक्षमेव निगमयति–**तद्वैवे**ति । ' तत उ[3] आ एव ' तस्मिन्[4]नपि नक्षत्रे आदधीतैव । **अग्निर्वा** इत्यादि । स्पष्टम्[5] ॥ ५ ॥
नक्षत्रान्तरं विधाय प्रशंसति–**रोहिण्यामि**ति । ' आदधे ' आधानं कृतवान् । ' उपस्तब्धाः' प्रतिबद्धगतयो विनाशरहिताः पुत्रपौत्रादिरूपेणैकरूपा अविच्छिन्नप्रवाहाः ' तस्थुः ' स्थितवत्यः । ताश्च ' रोहिण्यः ' स्वर्गादिलोकारोहणसाधनभूता इव स्थिताः । एतदुपजीवनेन नामनिर्वचनं करोति–**तद्वा** इति । स्पष्टार्थमन्यत् ॥ ६ ॥

---

१–यद्यपि मूले ' पुरऽक्षाः ' इत्येव पाठ उपलभ्यतेऽथापि ' पुर ऋक्षा ' इत्येव भाष्यसंमतः पाठ इति प्रतीयते । २–' अत एवातीव संभिन्नदेशावस्थानेन ' इति पा. । ३–' तत, उ, आ, एव ' इति पदानि इति क. पा. । ४–' तत्रास्मिन्नपि ' इति पा. ५–" अमावास्यायामग्न्याधेयं "=" कृत्तिकारोहिणीमृगशीरःफल्गुनीषु " इति का. श्रौ. सू. ४ । १७५–१७६ ।

रोहिण्यामु ह वै पशवः । ( वो ) अग्नीऽआदधिरे मनुष्याणां कामꣳ रोहेमेति ते मनुष्याणां काममरोहन्यमु हैव तत्पशवो मनुष्येषु काममरोहंस्तमु हैव पशुषु कामꣳरोहति य एवं विद्वान्रोहिण्यामाधत्ते ॥ ७ ॥

मृगशीर्षेऽग्नीऽआदधीत । ( तै ) एतद्वै प्रजापतेः शिरो यन्मृगशीर्षꣳ श्रीर्वैशिरः श्रीर्हि वै शिरस्तस्माद्योऽर्द्धस्य श्रेष्ठो भवत्यसावमुष्यार्द्धस्य शिर इत्याहुः श्रियꣳ ह गच्छति य एवं विद्वान् मृगशीर्षऽआधत्ते ॥ ८ ॥

( त्तेऽथ ) अथ यस्मान्न मृगशीर्ष ऽआदधीत प्रजापतेर्वा एतच्छरीरं यत्र वा ऽएनं तदविध्यंस्तदिषुणा त्रिकाण्डेनेत्याहुः स ऽएतच्छरीरमजहाद्वास्तु वै शरीरमयज्ञियं निर्व्वीर्यं तस्मान्न मृगशीर्ष ऽआदधीत ॥ ९॥

---

रोहिण्यामु ह वै पशवोऽग्नी आदधिरे—मनुष्याणां कामं रोहेमेति । ते मनुष्याणां काममरोहन् । यमु हैव तत् पशवो मनुष्येषु काममरोहन्, तमु हैव पशुषु कामं रोहति—य एवं विद्वान् रोहिण्यामाधत्ते ॥ ७ ॥

मृगशीर्षेऽग्नी आदधीत । एतद्वै प्रजापतेः शिरो यन्मृगशीर्षम् । श्रीर्वै शिरः श्रीर्हि वै शिरस्तस्मात्—योऽर्द्धस्य श्रेष्ठो भवति, असावमुष्यार्द्धस्य शिर इत्याहुः । श्रियं ह गच्छति—य एवं विद्वान् मृगशीर्ष आधत्ते ॥ ८ ॥

अथ यस्मात्—न मृगशीर्ष आदधीत । प्रजापतेर्वा एतच्छरीरं यत्र वा एनं तदविध्यँस्तदिषुणा

---

रोहिण्याधानं प्रकारान्तरेण प्रशंसति—**रोहिण्यामु** हेति । **मनुष्याणां कामं रोहेमे**ति । 'मनुष्याणां' 'कामः' भोग्यवस्तुविषयः, तत्पूरणसामर्थ्ययोगेन[1] तं प्राप्नुयामेत्यर्थः । **यमु हैवे**ति । रोहिण्याधानेन काम्यमानभोग्य[2]-वस्तुजातपूरणसामर्थ्यम् ' मनुष्येषु ' अवस्थितम् ' यमु ' यमेव ' कामं ' प्राक् प्राप्नुवन्, ' तम् ' एव इदानीं ' पशुषु ' अवस्थितं रोहिण्यामाधानतः प्राप्नोति[3] । एतमेव सर्वे जना उपजीव्यत्वेन कामयन्त इति भावः ॥७॥

नक्षत्रान्तरं विधाय प्रशंसति—**मृगशीर्ष** इति । **एतद्वा** इति । पुरा खलु प्रजापतिः मृगरूपमास्थाय[4] मृगीभूतां स्वदुहितरमेवोपागमत्[5] । एतत् ज्ञात्वा—अकार्यकारिणः प्रजापतेः शिरश्छेत्तुं देवाः कञ्चित् क्रोधमयं पुरुषं निर्माय प्रत्यतिष्ठिपन् । स चेषुणा तस्य शिरश्चिच्छेद । तच्च मृगशरीरमिषुच्छिन्नशिरश्चेत्येतदुभयमन्तरिक्षमुत्प्लुत्य[6] नक्षत्रात्मनाऽवस्थितं संदृश्यते । तथा चैतरेयके—" प्रजापतिर्वै स्वां दुहितरमभ्यध्यायत् "—( ऐ० ब्रा० ३. ३. ९. ) इत्युपक्रम्य " सो एवेषुस्त्रिकाण्डा "—इत्यन्तेनायमर्थः प्रतिपादितः । ईदृशी श्रुत्यन्तरप्रसिद्धिरत्र वैशब्देन द्योत्यते । **श्रीर्वै शिर** इत्यादि । व्याख्यातम् ॥ ८ ॥

तदेतन्मृगशीर्षाख्यस्य नक्षत्रस्याधाने प्रजापतिशिरश्छेदसंभूतेस्तद्दोषादाधानं निषेधति—**अथ यस्मान्ने**ति ।

---

१–' योग्येन ' इति पा. । २–' काम्यमानं भोग्यवस्तुजातं पूरणसामर्थ्यायोगात् ' इति क. पा. । ३–" यो रोहिण्यामग्निमाधत्ते, ऋध्नोत्येव " इति तै० ब्रा० १. १. २. २. । ४–' कृष्णमृगरूपमास्थाय ' इति पा. । ५–' स्वां दुहितरमेवाभ्युपागमत् ' इति पा. । ६–' वेगवशेनेषुश्च शिरश्चेत्येतदुभयम् ' इति पा. ।

**तद्वैव दधीत । न वा ऽएतस्य देवस्य वास्तु नायज्ञियं न शरीरमस्ति यत्प्रजापतेस्तस्मादेव दधीत पुनर्व्वस्वोः पुनराधेयमादधीतेति ॥ १० ॥**

**फल्गुनीष्वग्नी ऽआदधीत । (ते) एता वा ऽइन्द्रनक्षत्रं यत्फल्गुन्योऽप्यस्य प्रतिनाम्न्योऽर्जुनो ह वै नामेन्द्रो यदस्य गुह्यं नामार्जुन्यो वै नामैतास्ता एतत्परोऽक्षमाचक्षते फल्गुन्य इति को ह्येतस्यार्हति गुह्यं नाम**

---

त्रिकाण्डेनेत्याहुः । स एतच्छरीरमजहात् । वास्तु वै शरीरमयज्ञियं निर्वीर्यम् । तस्मात्–न मृगशीर्ष आदधीत ॥ ९ ॥

तद्वैव दधीत । न वा एतस्य देवस्य वास्तु, नायज्ञियम्, न शरीरमस्ति; यत्–प्रजापतेः। तस्मादेव दधीत । पुनर्वस्वोः पुनराधेयमादधीतेति ॥ १० ॥

फल्गुनीष्वग्नी आदधीत । एता वा इन्द्रनक्षत्रं यत् फल्गुन्यः । अप्यस्य प्रतिनाम्न्यः । अर्जुनो ह वै नामेन्द्रो यदस्य गुह्यं नाम अर्जुन्यो वै नामैताः । ता एतत् परोक्षमाचक्षते–फल्गुन्य इति ।

---

मृगशीर्षाधानं न कार्यम्, अत्र हेतुः प्रतिपाद्यत इत्यर्थः । कोऽसौ हेतुः ? तमाह–**प्रजापतेरिति** । मृगशीर्षाख्यस्य नक्षत्रस्य प्रजापतिशरीरत्वमाह–'यत्र' यस्मिन् समये 'एनम्' प्रजापतिं मृगरूपम्, 'तत्' तेन स्वदुहितृगमनरूपेण दोषेण हेतुना देवाः 'अविध्यन्', 'तत्' तदानीं पत्रदारुशल्यरूपावयवैत्रयोपेतेन 'इषुणा' खलु तच्छिरश्छिन्नम् 'इत्याहुः' ब्रह्मवादिनः । 'स' च प्रजापतिस्तदानीम् 'एतच्छरीरम्' त्यक्तवान् । अतो निरात्मकत्वात् 'निर्वीर्यम्' नक्षत्रात्मनाऽवस्थितं मृगशिरः 'वास्तु' शून्यस्थानम् । यत एवात्मना त्यक्तम्, अत एव 'शरीरम्' विशरणशीलम् अत एव च 'अयज्ञियम्' यज्ञानर्हम्, न हि मृतशरीरस्य यज्ञात्मत्वं सम्भवति । 'तस्मात्' तदात्मके मृगशीर्षाख्ये नक्षत्रे आधानं न युक्तमित्यर्थः ॥ ९ ॥

इमं दोषं परिहरन् प्रागुक्तमेव पक्षं निगमयति–**तद्वैवेति** । **देवस्येति** । मनुष्येण त्यक्तस्य शरीरस्य हि वास्त्वादिरूपत्वम् । अयं हि प्रजापतिर्देवः, तेन त्यक्तस्य तत्त्वाभावात् वास्त्वादिरूपो दोषो नास्ति; मृगरूपस्य तस्य शिरः स्वमहिम्नैव नक्षत्ररूपेर्णे सम्पन्नम्, न खलु मानुषं शिरस्तथा भवितुमर्हति । तस्मात् तत् सर्वार्यमेवेति तत्राधाने नोक्तदोष इत्यर्थः ।

पुनर्वस्वाख्यस्य नक्षत्रस्य लिङ्गवशात् पुनराधेयविषयतामाह–**पुनर्वस्वोरिति** । आहितानामप्यग्नीनां पुनर्निमित्तवशादाधानं पुनराधेयम् । (पुनर्वस्वोरिति द्विवचनं पुष्याभिप्रायम्) नक्षत्रं चैतत् नष्टस्य वसुनः पुनःप्राप्तिहेतुत्वात् पुनर्वस्वाख्यम् । तथा च तैत्तिरीयके स्पष्टमाम्नातम्–"स पुनर्वस्वोरग्निमादधीत, पुनरेवैनं वामं वसूपावर्तते"–(तै. ब्रा. १. १. २. ३.) इति ॥ १० ॥

नक्षत्रान्तरं विधाय प्रशंसति–**फल्गुनीष्वग्नी** इति । पूर्वोत्तरयोः फल्गुन्याख्ययोर्नक्षत्रयोः प्रत्येकमधिष्ठानद्वित्वयोगाद्बहुत्वम् । फल्गुनीनामोपजीवनेन प्रशंसति–**एता वा** इति । कथमस्य नक्षत्रस्येन्द्रसम्बन्ध इत्यत

---

१–'कृष्णमृगरूपम्' इति पाठः । २–"त्रिकाण्डा, अनीकं, शाल्यः, तेजनम् इत्यवयवत्रयोपेता"–इति ऐ. ब्रा. ३ । ३ । ९ सा. भाष्ये । ३–'परित्यक्तस्य तत्प्रभावाद्' इति पा. । ४–'नक्षत्ररूपत्वं संपन्नम्' इति पा. । ५–"पुनराधेयमाधानाभ्रतिज्ञातस्य" का. श्रौ. सू. ४. २५९. "पुनर्वस्वोः" का. श्रौ. सू. ४. २६३ ॥ ६–'पुनर्वस्वाभिज्ञवशात्'–इति क. पा. । ७–'द्वित्वम्' इति क. ।

ग्रहीतुमिन्द्रो वै यजमानस्तत्स्व ऽएवैतन्नक्षत्रेऽग्नी आधत्त ऽइन्द्रो यज्ञस्य देवतैतेनो हास्यैतत्सेन्द्रमग्न्याधेयं भवति पूर्वयोरादधीत पुरस्तात्क्रतुर्हैवास्मै भवत्युत्तरयोरादधीत श्वःश्रेयसर्ठ हैवास्मा ऽउत्तरावद्भवति ॥ ११ ॥

हस्तेऽग्नीऽआदधीत य इच्छेत्प्र मे दीयेतेति तद्धा ऽअनुष्ठ्या यद्धस्तेन प्रदीयते प्र हैवास्मै दीयते ॥ १२ ॥

चित्रायामग्नी ऽआदधीत । देवाश्च वा असुराश्चोभये प्राजापत्याः पस्पृधिरे त ऽउभय ऽएवामुं लोकर्ठ समारुरुक्षाञ्चक्रुर्दिवमेव ततोऽसुरा रौहिणमित्यग्निं चिक्यिरेऽनेनामुं लोकर्ठ समारोक्ष्याम इति ॥ १३ ॥

---

को ह्येतस्यार्हति गुह्यं नाम ग्रहीतुम् । इन्द्रो वै यजमानः । तत् स्व एवैतन्नक्षत्रेऽग्नी आधत्ते । इन्द्रो यज्ञस्य देवता । एतेनो हास्यैतत् सेन्द्रमग्न्याधेयं भवति । पूर्वयोरादधीत—पुरस्तात्क्रतुर्हैवास्मै भवति । उत्तरयोरादधीत—श्वःश्रेयसं हैवास्मा उत्तरावद् भवति ॥ ११ ॥

हस्तेऽग्नी आदधीत—य इच्छेत् ' प्र मे दीयेतेति ' । तद्धा अनुष्ठ्या, यद्धस्तेन प्रदीयते । प्र हैवास्मै दीयते ॥ १२ ॥

चित्रायामग्नी आदधीत । देवाश्च वा असुराश्चोभये प्राजापत्याः पस्पृधिरे । त उभय एवामुं लोकं समारुरुक्षाञ्चक्रुर्दिवमेव । ततोऽसुरा रौहिणमित्यग्निं चिक्यिरे—" अनेनामुं लोकं समारोक्ष्याम " इति ॥ १३ ॥

---

आह—**अप्यस्येति** । ' अस्य ' इन्द्रस्य प्रतिनिधिभूताः फल्गुन्यः सम्भाव्यन्ते । ' अपिः ' सम्भावनार्थः । प्रतिनिधित्वं च समानशब्दाभिधेयत्वादित्याह— **अर्जुनो हेति** । ' अर्जुनः ' ' इति ' हि इन्द्रस्य रहस्यं नाम; अत एव खलु तत्पुत्रे पाण्डवमध्यमे तन्नामप्रवृत्तिः । अर्जुनफल्गुनशब्दौ च पर्यायौ; "अर्जुनः फल्गुनः पार्थः"—इति समानार्थतया परिगणनात् । 'अर्जुन्यः' एव 'एताः', पारोक्ष्येण 'फल्गुन्य इति' उच्यन्ते । ननु किं पारोक्ष्येणेत्यत आह—**कोर्हतीति** । अतः फल्गुनीशब्दस्य परम्परयेन्द्रोपलक्षकत्वात् तन्नामकं नक्षत्रम् । **इन्द्रो वा** इत्यादि । स्पष्टम् । फल्गुनीषु पूर्वोत्तरत्वमुपजीव्य तद्विहितमाधानं प्रशंसति—**पूर्वयो**रित्यादिना । **पुरस्तात् क्रतुरिति** । पूर्वस्मिन्नागामिनि कालेऽग्निष्टोमादिलक्षणः 'क्रतुः' शीघ्रं सिद्ध्यतीत्यर्थः । **श्वःश्रेयसमित्यादि** । उक्तार्थम् ॥ ११ ॥

एवं परोक्षार्थमाधानस्य प्रपञ्च्य नक्षत्रार्थं नक्षत्रान्तरं प्रशंसति—**हस्तेऽग्नी** आदधीतेत्यादि । अयं मह्यं प्रदीयतामिति य इच्छेत् स हस्ते आदधीताग्नी । हस्तेन प्रदत्तं साक्षात् प्रदीयत एव । ' ह ' इति पुरावृत्ते । ' अनुष्ठ्या '—शब्दः साक्षाद्वाची । स्वहस्तेन ' यत् ' खलु दानम्, ' तद् ' एव ' अनुष्ठ्या ' अनुष्ठानेन समीचीनम् । अतो हस्तनक्षत्रे अग्न्याधानात् परकर्तृकं हस्तेन दानं प्राप्नोतीति तात्पर्यार्थः ॥ १२ ॥

नक्षत्रान्तरं विधाय प्रशंसति—**चित्रायाँ**मित्यादि । **आरुरुक्षाञ्चक्रु**रिति । आरोढुमिच्छां कृतवन्त इत्यर्थः ।

---

१–" पूर्वयोः फल्गुन्योरग्निमादधीत " इत्यादि, " उत्तरयोः फल्गुन्योरग्निमादधीत " इत्यादि च तै० ब्रा० १. १. २. ४. ।
२–" हस्तो लाभकामस्य " का० श्रौ० सू० ४. १७७ । ३–" चित्रा च क्षत्रियस्य " इति का० श्रौ० सू० ४ । १७८ ।

( त्री ) इन्द्रो ह वा ऽईक्षाञ्चक्रे । ( क्र ८ ) इमं चेद्वा ऽइमे चिन्वते तत एव नोऽभिभवन्तीति स ब्राह्मणो ब्रुवाण एकेष्टकां प्रबध्येयाय ॥ १४ ॥

स होवाच । हन्ताहमिमामुप्युपदधा ऽइति तथेति तामुपाधत्त तेषामल्पकादेवाग्निरसञ्चित ऽआस ॥ १५ ॥

( स्रु ) अथ होवाच । ( चा ) अन्वाऽअहं तां दास्ये या ममेहेति तामभिपद्याबबर्ह तस्यामाबृढायामग्निर्व्यवशशादाग्नेर्व्यवशादमन्वसुरा व्यवशेदुः स ताऽएवेष्टका व्वज्रान्कृत्वा ग्रीवाः प्रचिच्छेद ॥ १६ ॥

---

इन्द्रो ह वा ईक्षाञ्चक्रे 'इमं चेद्वा इमे चिन्वते, तत एव नोऽभिभवन्ति' इति । स ब्राह्मणो ब्रुवाण एकेष्टकां प्रबध्येयाय ॥ १४ ॥

स होवाच—'हन्ताहमिमामप्युपदधै' इति । तथेति तामुपाधत्त । तेषामल्पकादेवाग्निरसञ्चित आस ॥ १५ ॥

अथ होवाच—'अन्वा अहं तां दास्ये या ममेह' इति । तामभिपद्याबबर्ह । तस्यामाबृढायामग्निर्व्यवशशाद । अग्नेर्व्यवशादमनु असुरा व्यवशेदुः । स ता एवेष्टका वज्रान् कृत्वा ग्रीवाः प्रचिच्छेद ॥ १६ ॥

---

अमुमिति 'अदस्'—शब्देन पारोक्ष्येण यो लोको निर्दिष्टः, तं विशिनष्टि—दिवमेवेति । 'ततः' अनन्तरम् 'असुराः' 'रौहिणमिति' एतन्नामकं रोहणसाधनम् 'अग्निं' 'चिक्ये'[1] । व्यत्ययेनैकवचनम्, (पा. सू. १ । ४ । ९ ) 'चिक्यिरे' चितवन्तः । अनेनेत्यादि । स्पष्टम् ॥ १३ ॥

इत्थं द्युलोकं समारुरुक्षतोऽसुरानाकलय्य तेषां विभ्रेषणमिन्द्रश्चेतयति—इन्द्रो हेति । इमं चेदित्यादि । यम् 'इमम्' अग्निं वयं चेष्यामः, इममेव चेदसुरा अपि चिन्वीरन्, 'ततः' तस्मात् 'एव' साधनात् 'नः' अस्मान् 'अभिभवन्ति' असुराः अभिभवितुं समर्था भवन्ति । 'इति' एवं विचार्य, 'सः' इन्द्रः 'ब्राह्मणः' भूत्वा असुरहितं ब्रुवाण एव 'एकामिष्टकां' 'प्रबध्य' गृहीत्वा 'इयाय' जगाम ॥ १४ ॥

स होवाचेति । गत्वा च तान् असुरान् 'उवाच' । 'अहम्' अपि 'इमाम्' इष्टकां भवदीयेऽग्नौ 'उपदधै' उपधानं करवाणि 'इति' । 'तथा' 'इति' तैरनुज्ञातः, 'ताम्' इष्टकां तत्र 'उपाधत्त' । अन्यदीये चयने अन्यदीयेष्टकोपधानमशास्त्रीयमित्येतस्मात् 'अल्पकादेव' भ्रेषात्[2] 'तेषाम्' असुराणाम् 'अग्निः' असम्यक् चितो विकलो बभूव ॥ १५ ॥

अथ होवाचेति । 'अथ' कालान्तरे स एव ब्राह्मणरूप इन्द्रस्तानसुरान् 'उवाच' । 'इह' अस्मिन्क्षितिप्रदेशे 'या' 'मम' इष्टका, 'ताम्' अहम् 'आदास्ये' इत्युक्त्वा तत्समीपमभिप्राप्य, 'ताम्' इष्टकाम् 'आबबर्ह' उद्यमयाम, तस्मात् स्थानादचालयदित्यर्थः । "बृह् उद्यमने"—( तु. प. ६७ ) इति धातुः । 'तस्यां' चेष्टकायां चित्याग्नेः सकाशाच्चालितायां सत्याम्, सः 'अग्निः' 'व्यवशशाद'

---

१—भाष्यकारमते 'चिक्ये' इत्येव मूले न तु 'चिक्यिरे' इत्यनेन व्याख्यानेन प्रतीयते । २—"भ्रेषो भ्रंशो यथोचितात्" इत्यमरः । १ । ८ । २३ । 'व्यवससाद' इति पाठः ।

ते ह देवाः समेत्योचुः । ( श्रि ) चित्रं वाऽअभूम य ऽइयतः सपत्नानवधिष्मेति तद्वै चित्रायै चित्रात्वं चित्रꣳह भवति हन्ति सपत्नान्हन्ति द्विषन्तं भ्रातृव्यं य एवं विद्वांश्चित्रायामाधत्ते तस्मादेतत्क्षत्रिय एव नक्षत्रमुपेत्सेज्जिघांसतीव ह्येष सपत्नान्वीव जिगीषते ॥ १७ ॥

नाना ह वाऽएतान्यग्रे क्षत्राण्यासुः । ( स्रु ) यथैवासौ सूर्य्यऽएवं तेषामेष उद्यन्नेव वीर्य्यं क्षत्रमादत्त तस्मादादित्यो नाम यदेषां वीर्य्यं क्षत्रमादत्त १८

ते ह देवा ऊचुः ।( स्रां ) यानि वै तानि क्षत्राण्यभूवन् न वै तानि क्षत्राण्यभूवन्निति तद्वै नक्षत्राणां नक्षत्रत्वं तस्मादु सूर्य्यनक्षत्रऽएव स्यादेष

---

ते ह देवाः समेत्योचुः—' चित्रं वा अभूम, य इयतः सपत्नानवधिष्म ' इति । तद्वै चित्रायै चित्रात्वम् । चित्रं ह भवति, हन्ति सपत्नान्, हन्ति द्विषन्तं भ्रातृव्यम्, य एवं विद्वांश्चित्रायामाधत्ते । तस्मादेतत् क्षत्रिय एव नक्षत्रमुपेत्सेत् । जिघांसतीव ह्येष सपत्नान्, वीव जिगीषते ॥ १७ ॥

नाना ह वा एतान्यग्रे क्षत्राण्यासुः—यथैवासौ सूर्यः; एवम् । तेषामेष उद्यन्नेव वीर्य्यं क्षत्रमादत्त । तस्मादादित्यो नाम—यदेषां वीर्य्यं क्षत्रमादत्त ॥ १८ ॥

ते ह देवा ऊचुः—' यानि वै तानि क्षत्राण्यभूवन्, न वै तानि क्षत्राण्यभूवन् ' इति; तद्वै नक्षत्राणां

---

विशीर्णो बभूव । तदनन्तरं तच्चेतारः ' असुराः ' च ' व्यवशेदुः ' व्यवसन्नाः, शिथिला बभूवुः । स ता इत्यादि । ' सः ' इन्द्रः ' ताः ' चित्याग्निसंबद्धाः ' इष्टकाः ' ' एव ' ' वज्रान् ' विधाय असुरसंबन्धिनीः ' ग्रीवाः ' प्रचिच्छेद ॥ १६ ॥

चित्रानाम निर्वक्ति—ते ह देवा इति । चित्राख्येष्टका । ' इयतः ' एतावतः ' सपत्नान् ' ' अवधिष्म ' अमस्तकांश्चक्रम । तत् अस्या एवं चित्रहेतुत्वात् ' चित्रा ' नाम सम्पन्नमित्यर्थः । चित्रं हेत्यादि निगदसिद्धम् । तस्मादेतदित्यादि । यस्मादुक्तरीत्या चित्रानक्षत्रस्य शत्रुहननसाधनत्वम्, ' तस्मात् ' आधाने क्षत्रिय एव, ' एतत् ' नक्षत्रं ' उपेत्सेत् ' स्वीकुर्यात् । तत्र कारणमाह—जिघांसतीवेति । ' एषः ' खलु क्षत्रियः यः अन्यान्—शत्रून् ' जिघांसति ' हन्तुमिच्छति ' इव ,' तथा ' विजिगीषते ' ' इव ' विजेतुमिच्छतीव । तस्माच्छत्रुहननकामस्य क्षत्रियस्यैवैतन्नक्षत्रम्, नेतरस्येत्यर्थः ॥ १७ ॥

सूर्येणापहृतवीर्याणि कृत्तिकादिनक्षत्राण्यनादृत्य तेजस्विनि सूर्यात्मके नक्षत्र उद्यति सत्याधानं कार्यमित्याह—नाना ह वा इति । पुरा खलु कृत्तिकादिनक्षत्रमण्डलानि सूर्यमण्डलवत् तेजस्वीन्येव बभूवुः । ' एषः ' खलु ' सूर्यः ' ' उद्यन् ' उदयं प्राप्नुवन् ' क्षत्रं ' तेजः सामर्थ्यं चोदयमाप्नुवन् ' एव ' ' तेषां ' ' वीर्यम् ' ' आदत्त ' स्वीकृतवान् । ' तस्मात् ' आदानात् ' आदित्यः ' इति उच्यते ॥ १८ ॥

नक्षत्रमिति नामधेयं निर्वक्ति—ते हेति । ' यानि ' खलु पुरा ' क्षत्राणि ' ' अभूवन् ,' ' तानि ' इदानीं सूर्येण

---

१–' व्यवसेदुः '–इ. क. पु. पा. । २–" चित्रा च क्षत्रियस्य " का. श्रौ. सू. ४ । १७८ । ३–" स चित्रायामग्निमादधीत " इत्यादि तै० ब्रा० १. १. २. ६. । ४–' आददानः ' इति पाठान्तरम् ।

हृयेषां वीर्यं क्षत्रमादत्त यद्यु नक्षत्रकामः स्यादेतद्वाऽअपराद्धं नक्षत्रं यत्सूर्य्यः स एतेनैव पुण्याहेन यदेतेषां नक्षत्राणां कामयेत तदुपेत्सेत्तस्माद् सूर्यनक्षत्र ऽएव स्यात् ॥ १९ ॥

इति प्रथमप्रपाठके द्वितीयं ब्राह्मणम् ॥ २ ॥

वसन्तो ग्रीष्मो वर्षाः । ( स्ते ) ते देवा ऽऋतवः शरद्धेमन्तः शिशिरस्ते पितरो य एवापूर्य्यतेऽर्द्धमासः स देवा योऽपक्षीयते स पितरोऽहरेव देवा रात्रिः पितरः पुनरह्नः पूर्वाह्णो देवाऽ अपराह्णः पितरः ॥ १ ॥

---

नक्षत्रत्वम् । तस्माद्ु सूर्यनक्षत्र एव स्यात्, एष ह्येषां वीर्य्यं क्षत्रमादत्त । यद्यु नक्षत्रकामः स्यात् । एतद्वा अनपराद्धं नक्षत्रं यत् सूर्यः । स एतेनैव पुण्याहेन यदेतेषां नक्षत्राणां कामयेत, तदुपेत्सेत् । तस्माद्ु सूर्यनक्षत्र एव स्यात् ॥ १९ ॥ इत्यग्न्याधानप्रकरणे नक्षत्रब्राह्मणम् ।

अथ ऋतुब्राह्मणम् ।

वसन्तो ग्रीष्मो वर्षाः–ते देवा ऋतवः शरद् हेमन्तः शिशिरः–ते पितरः । य एवापूर्यतेऽर्द्धमासः स देवाः । योऽपक्षीयते, स पितरः । अहरेव देवाः । रात्रिः पितरः । पुनरह्नः पूर्वाह्णो देवाः । अपराह्णः पितरः ॥ १ ॥

---

क्षत्रगुणस्यापहृतत्वात्, न विद्यते क्षत्रमेषामिति व्युत्पत्त्या 'नक्षत्राणि' सम्पन्नानीत्यर्थः।"तथा नेमानि क्षत्राणीति" यास्कः। अपाहृततेजस्कत्वादिमानि क्षत्राणि न भवन्तीति नक्षत्रशब्दव्युत्पत्तिः। यस्मादेवं कृत्तिकादीन्यपहृतवीर्याणि, तस्मात् एव कारणात् सूर्यात्मके ' एव ' तेजस्विनि नक्षत्रे आधानं स्यात्[1] । तत्र हेतुमाह–एष हीति । ' हि ' यस्मात् ' एषः ' सूर्यः ' एषां ' नक्षत्राणां वीर्यादिकम् ' आदत्ते', तस्मात् सवीर्ये तस्मिन्नाधानं युज्यत इत्यर्थः। यदि च यजमानः तैस्तत्पूजार्थं[2] नक्षत्रकामः स्यात्, तदानीमपि सूर्यात्मकमेव नक्षत्रमुपाददीतेत्याह–एतद्वा इति । ' अनपराद्धम् '–इति हेतुगर्भविशेषणम् । यतस्तेजोवियोगलक्षणापराधरहितम्, अतस्तदेव सूर्यात्मकं नक्षत्रं काम्येतेत्यर्थः । तेन कृत्स्ननक्षत्र[3]फलप्राप्तिमाह–स एतेनैवेति । ' एतेनैव ' सूर्येणोपचता पुण्यकालात्मना ' तत् ' कृत्स्ननक्षत्र[4]ाधानफलं ' उपेत्सेत् ' उपगच्छेत् । उपेत्सेत्–इत्युपपूर्वक ऋध्नोति ( स्वा० प० २९ ) गत्यर्थः सन्नन्तः । " आप्ज्ञप्यृधामीत् " ( पा० सू० ७. ४. ५५ ) इतीत्वम् । आधानार्थमुपगन्तुमिच्छेदित्यर्थः । ' तस्मात् ' सूर्यात्मके एव नक्षत्र उद्यति सत्याधानं स्यात्, न रात्रावित्यर्थः ॥ १९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ (२–१–२ ) ॥

अथाधानस्य वसन्ताद्यृतुषु फलसिद्ध्यर्थं वसन्तादीनां देवपित्रात्मना द्वेधा विभागमाह–वसन्त इत्यादिना ।

---

१–" सूर्यो नक्षत्रं कालोपलक्षणं यस्य सोऽयं सूर्यनक्षत्रः । सूर्यापेक्षित एव काले आदधीत । न नक्षत्रोपलक्षित इत्यर्थः । कथं तत्सूर्यकालं लक्षयति । उदगयनम् " इत्यादि–आह हरिस्वामी । २ " तत्तस्मात् प्राप्त्यर्थम् ' इति पाठः । ३–' नक्षत्राणां प्राप्ति ' इति क० पा० । ४–' नक्षत्रेऽप्याधानफल '–इति क० पा० ।

(स्ते) ते वा ऽएत ऽऋतवः। (वो) देवाः पितरः स यो हैवं विद्वान्देवाः पितर ऽइति ह्वयत्या हास्य देवा देवहूयं गच्छन्त्या पितरः पितृहूयमुवन्ति हैनं देवा देवहूयेऽवन्ति पितरः पितृहूये य ऽएवं विद्वान्देवाः पितर ऽइति ह्वयति ॥ २ ॥

स यत्रोदङ्ङावर्त्तते। देवेषु तर्हि भवति देवांस्तर्ह्यभिगोपायत्यथ यत्र दक्षिणावर्तते पितृषु तर्हि भवति पितॄंस्तर्ह्यभिगोपायति ॥ ३ ॥

स यत्रोदङ्ङावर्तते तर्ह्यग्नी ऽआदधीतापहतपाप्मानो देवा अप पाप्मानꣳ हतेऽमृता देवा नामृतत्वस्याशास्ति सर्व्वमायुरेति यस्तर्ह्याधत्तेऽथ यत्र दक्षिणावर्तते यस्तर्ह्याधत्तेऽनपहतपाप्मानः पितरो न पाप्मानमपहते मर्त्याः पितरः पुरा ह्यायुषो म्रियते यस्तर्ह्याधत्ते ॥ ४ ॥

---

ते वा एत ऋतवः—देवाः, पितरः। स यो हैवं विद्वान् 'देवाः पितरः' इति ह्वयति—आ हास्य देवा देवहूयं गच्छन्ति, आ पितरः पितृहूयम्। अवन्ति हैनं देवा देवहूये, अवन्ति पितरः पितृहूये- य एवं विद्वान् 'देवाः, पितरः' इति ह्वयति ॥ २ ॥

स यत्रोदङ्ङावर्त्तते—देवेषु तर्हि भवति, देवाँस्तर्ह्यभिगोपायति। अथ यत्र दक्षिणावर्त्तते—पितृषु तर्हि भवति, पितॄंस्तर्ह्यभिगोपायति ॥ ३ ॥

स यत्रोदङ्ङावर्त्तते, तर्ह्यग्नी आदधीत। अपहतपाप्मानो देवाः, अप पाप्मानं हते, अमृता देवाः—नामृतत्वस्याशास्ति, सर्वमायुरेति यस्तर्ह्याधत्ते। अथ यत्र दक्षिणावर्त्तते, यस्तर्ह्याधत्ते—अनपहतपाप्मानः पितरः, न पाप्मानमपहते। मर्त्याः पितरः पुरा ह्यायुषो म्रियते—यस्तर्ह्याधत्ते ॥ ४ ॥

---

वसन्ताद्यृतुत्रये देवानां सूर्यदर्शनादहर्भवतीति तेषां तादात्म्यम्; शारदादीनां तद्वैलक्षण्यात् पितृरूपत्वम्। य एवापूर्यत—इत्यादि। निगदसिद्धम् ॥ १ ॥

ते वा एत ऋतव इति। स यो हैवं विद्वानित्यादि। एवमृतूनां देवत्वं पितृत्वं च 'सः' 'विद्वान्' तान्[1] ऋतून् 'देवाः पितरः' 'इति' 'ह्वयति' व्यवहरेदित्यर्थः। तस्य फलमाह—आ हास्येति। 'अस्य' आह्वातुः 'देवहूयं' देवाह्वानं प्रति देवाः 'आगच्छन्ति' तथा 'पितृहूयं' पैतृकमाह्वानं प्रति पितरोऽप्यागच्छन्ति आगताश्च ते स्वसम्बद्धे कर्मणि 'एनम्' आह्वातारम् 'अवन्ति' इत्यर्थः ॥ २ ॥

आधानस्योदगयनं कालं विधित्सुद्वयोरप्यनयोर्देवपितृसम्बन्धं क्रमेणाह—स यत्रेति। 'सः' सूर्यो यस्मिन् काले दक्षिणगोलादुत्तरगोलं प्रति 'उदङ्' पर्यावर्त्तते, 'तर्हि' तदा, तस्मिन् समये मेरोरुपरिभागेऽवस्थितानां देवानां स दृष्टिगोचरो भवतीति तेषु उदङ् 'देवेषु' प्रकाशको भवतीति। 'अथ' 'यत्र' यस्मिन् काले पुनरुत्तरगोलाद् दक्षिणगोलं पर्यावर्त्तते[2], तदा दक्षिणदिगवस्थितस्य पितृलोकस्य प्रकाशकः सन् तेषु 'पितृषु' भवति ॥ ३ ॥

एवमुत्तरायणे दक्षिणायने च देवपितृसम्बन्धमभिधाय, तत्सम्बद्धमाधानमपि तत्रैव कार्यमिति विधत्ते—स

---

१—'तांस्तान्' इति क्व० पा०। २—प्रत्यावर्तते' इ. क. पा.।

ब्रह्मैव व॒सन्तः॑ क्ष॒त्रं ग्री॒ष्मो वि॒डेव॒ व॒र्षास्त॒स्माद्ब्राह्म॒णो व॒सन्त॒ ऽआद॑धीत ब्रह्म॒ हि व॒सन्तस्त॒स्मात्क्षत्रि॒यो ग्री॒ष्म ऽआद॑धीत क्ष॒त्रꣳ हि ग्री॒ष्मस्त॒स्माद्वैश्यो॑ व॒र्षास्वाद॑धीत वि॒ड्ढि व॒र्षाः ॥ ५ ॥

स य॒ः काम॒येत । ब्रह्मवर्च॒सी स्या॒मिति व॒सन्ते स आ॒दधीत ब्रह्म॒ वै व॒सन्तो ब्रह्मवर्च॒सी है॒व भवति ॥ ६ ॥

( त्य॒ ) अ॒थ य॒ः काम॒येत । क्ष॒त्रꣳ श्रि॒या य॒शसा स्या॒मिति ग्री॒ष्मे स ऽआ॒दधीत क्ष॒त्रं वै ग्री॒ष्मः क्ष॒त्रꣳ है॒व श्रि॒या य॒शसा भवति ॥ ७ ॥

( त्य॒ ) अ॒थ य॒ः काम॒येत । ब॒हुः प्र॒जया प॒शुभिः स्या॒मिति व॒र्षासु स ऽआ॒दधीत वि॒ड्वै व॒र्षा अ॒न्नं वि॒शो ब॒हुर्है॒व प्र॒जया प॒शुभिर्भवति य॒ ए॒वं वि॒द्वान्व॒र्षास्वाधत्ते ॥ ८ ॥

---

ब्रह्मैव वसन्तः, क्षत्रं ग्रीष्मो, विडेव वर्षाः । तस्माद् ब्राह्मणो वसन्त आदधीत, ब्रह्म हि वसन्तः । तस्मात् क्षत्रियो ग्रीष्म आदधीत, क्षत्रं हि ग्रीष्मः । तस्माद् वैश्यो वर्षास्वादधीत, विड्ढि वर्षाः ॥ ५ ॥

स यः कामयेत–' ब्रह्मवर्चसी स्याम् ' इति, वसन्ते स आदधीत । ब्रह्म वै वसन्तो, ब्रह्मवर्चसी हैव भवति ॥ ६ ॥

अथ यः कामयेत–' क्षत्रं श्रिया, यशसा स्याम् ' इति, ग्रीष्मे स आदधीत । क्षत्रं वै ग्रीष्मः । क्षत्रं हैव श्रिया यशसा भवति ॥ ७ ॥

अथ यः कामयेत–'बहुः प्रजया पशुभिः स्याम्' इति, वर्षासु स आदधीत । विड् वै वर्षाः, अन्नं विशः । बहुर्हैव प्रजया पशुभिर्भवति–य एवं विद्वान् वर्षास्वाधत्ते ॥ ८ ॥

---

**यत्रेति** । तदेतत् प्रशंसति–**अपहतपाप्मान** इति । देवानां पापराहित्यान्मरणधर्मराहित्याच्च तत्सम्बन्धिन्ययनेऽग्न्याधानकारिणोऽपि तदुभयं सिद्ध्यतीत्यर्थः । दक्षिणायन आधातुरुक्तवैपरीत्यमाह–**अथ यत्रेति** ॥ ४ ॥

एवमुदगयनं विधाय तत्रापि ब्रह्मक्षत्रादिवर्णानुसारेण ऋतुव्यवस्थां करोति–**ब्रह्मैव वसन्त** इत्यादिना । वसन्ताद्या ऋतवः जात्या ब्रह्मक्षत्राद्यात्मकाः, अतस्तेषां क्रमेण तत्तज्जात्याधानकालत्वम् ॥ ५ ॥

एवं नित्यपक्षमभिधाय काम्यपक्षमाह–**स य** इति । **ब्रह्मवर्चसी हैवेति** । ब्राह्मणजात्यात्मके वसन्त आधानात् क्षत्रियादिरपि ब्राह्मणतेजस्सम्पन्नो भवतीत्यर्थः । एवमुत्तरत्रापि योज्यम् ॥ ६ ॥

**अथ यः कामयेतेति** । **क्षत्रं श्रियेति** । क्षत्रियजातेरपि ' श्रिया ' सम्पदा कीर्त्या च क्षत्रात्मकः स्यामिति कामयमानस्य ब्राह्मणादेः ग्रीष्म आधानकाल इत्यर्थः ॥ ७ ॥

**अथ यः कामयेतेति** । बहुप्रजापश्वादिसमृद्धिकामस्य वैश्यस्यापि तत्फलप्राप्तये वर्षास्वाधानं सम्पद्यत इत्यर्थः ॥ ८ ॥

---

१–" वसन्तो ब्राह्मणब्रह्मवर्चसकामयोः " का० श्रौ० सू० ४. १७९ । २–" ग्रीष्मः क्षत्रियश्रीकामयोः " का० श्रौ० सू० ४ । १८० । ३–" वर्षाः प्रजापशुकामवैश्यरथकृताम् " का० श्रौ० सू० ४ । १८१ ।

ते वाऽ एतऽ ऋतवः । ( ऽ ) उभयऽएवापहतपाप्मानः सूर्य्यऽएवैषां पाप्मनोऽपहन्तोद्यन्नेवैषामुभयेषां पाप्मानमपहन्ति तस्माद्यदैवैनं कदा च यज्ञ ऽउपनमेदथाग्नीऽआदधीत न श्वःश्वमुपासीत को हि मनुष्यस्य श्वो वेद ॥ ९ ॥

इति प्रथमप्रपाठके तृतीयं ब्राह्मणम् ( १ । ३ ) ॥

यदहरस्य श्वोऽग्न्याधेयꣳ स्यात् । ( हि ) दिवैवाश्नीयान्मनो ह वै देवा मनुष्यस्याजानन्ति तेऽस्यैतच्छ्वोऽग्न्याधेयं विदुस्तेऽस्य विश्वे देवा गृहानागच्छन्ति तेऽस्य गृहेषूपवसन्ति स उपवसथः ॥ १ ॥

---

ते वा एत ऋतवः–उभय एवापहतपाप्मानः । सूर्य एवैषां पाप्मनोऽपहन्ता । उद्यन्नेवैषामुभयेषां पाप्मानमपहन्ति । तस्माद्–यदैवैनं कदा च यज्ञ उपनमेत्, अथाग्नीं आदधीत । न श्वःश्वमुपासीत । को हि मनुष्यस्य श्वो वेद ॥ ९ ॥ इत्यग्न्याधानप्रकरणे तृतीयमृतुब्राह्मणम् ॥

अथ उपवसथब्राह्मणम् ।

यदहरस्य श्वोऽग्न्याधेयं स्यात्, दिवैवाश्नीयात् । मनो ह वै देवा मनुष्यस्याजानन्ति । तेऽस्यैतच्छ्वोऽग्न्याधेयं विदुः । तेऽस्य विश्वे देवा गृहानागच्छन्ति । तेऽस्य गृहेषूपवसन्ति–स उपवसथः ॥ १ ॥

---

एवमयनविशेषमृतुविशेषं चाभिधाय पक्षान्तरं च वक्तुं सर्वेषामप्यृतूनां पापसम्बन्धराहित्यमाह–ते वा एत इति । उभय एवेति । देवपितृसम्बन्धितया द्विधा प्रतिपादिता एवेत्यर्थः । पापराहित्ये कारणमाह–सूर्य एवेति । यस्मादेवं सर्वेऽप्यृतवः पापराहित्येन शुद्धाः, 'तस्मात्' यस्मिन् कस्मिंश्चिदृतौ सोमयागमभिगच्छेत्, 'अथ' अनन्तरमेवाग्न्याधानं कुर्यात् । न श्वःश्वमुपासीतेति । 'श्वः श्वः करवाणि' इत्येवं कालान्तरप्रतीक्षां न कुर्यात् । तत्र हेतुमाह–को हीति । 'मनुष्यस्य' 'श्वः' श्वःकालसम्बन्धि जीवनं 'कः' नाम 'वेद' जानीयात् ? आयुषोऽस्थिरत्वादित्यर्थः ॥ ९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे प्रथमाध्याये तृतीयं ब्राह्मणम् ॥ १ । ३ ॥

---

अग्न्याधेयदिवसात् पूर्वस्मिन् उपवसथदिवसे कर्त्तव्यं व्रतमुपदिशति–यदहरस्येति । 'दिवैव' इत्येवकारेण रात्रावशनं व्यावर्त्यते । "मनो ह वै देवाः"–इत्यादि दर्शपूर्णमासिकप्रस्तावे प्रागेव ( श. प. १ । १ । १ । ७ । ८ ) व्याख्यातम् ॥ १ ॥

---

१–"शिशिरः सार्ववर्णिकः"–इति च शाखान्तरम् । २–'प्रतीक्षा न कार्या' इति पा. ।

( स्तु ) तुन्न्वेवुानवक्लृतं य्यो मनुष्येष्वुनश्नत्सु पूर्व्वोऽश्नीयादुथ किमु य्यो देवेष्वुनश्नत्सु पूर्वोऽश्नीयात्तुस्मादु दिवैवाश्नीयात्तद्द्वपि काममेव नुक्तमश्नीयान्नो ह्यनाहिताग्नेर्व्व्रतचर्यास्ति मानुष्यो ह्येवैष तावद्भवति यावदुनाहिताग्निस्तुस्माद्द्वपि काममेव नुक्तमश्नीयात् ॥ २ ॥

( त्त ) तद्धैकेऽजमुपबध्नन्ति । ( न्त्या ) आग्नेयोऽजोऽग्नेरेवु सर्व्वत्वायेति व्वुदन्तस्तुदु तुथा नु कुर्याद्यद्यस्याजः स्यादग्नीधऽएवैनं प्रातर्द्द्यात्तेनैव ते काममाप्नोति तुस्मादु तन्नाद्रियेत ॥ ३ ॥

( त्ता ) अुथ चातुष्प्राश्यमोदनं पचन्ति च्छुन्दाᳪंस्यनेन प्रीणीम इति युथा येन व्वाहनेन स्यन्तस्यन्त्स्यात्तत्सुहितं कुर्त्तवै ब्रूयादेवमेत्तदिति व्वुदन्त-

---

तन्न्वेवानवक्लृप्तम्—यो मनुष्येष्वनश्नत्सु पूर्वोऽश्नीयात्, अथ किमु यो देवेष्वनश्नत्सु पूर्वोऽश्नीयात्; तस्मादु दिवैवाश्नीयात् । तद्वपि काममेव नक्तमश्नीयात् । नो ह्यनाहिताग्नेर्व्रतचर्यास्ति, मानुषो ह्येवैष तावद् भवति—यावदनाहिताग्निः; तस्माद्वपि काममेव नक्तमश्नीयात् ॥ २ ॥

तद्धैकेऽजमुपबध्नन्ति—' आग्नेयोऽजोऽग्नेरेव सर्वत्वाय ' इति वदन्तः । तदु तथा न कुर्यात् । यद्यस्याजः स्यात्, अग्नीध एवैनं प्रातर्दद्यात्, तेनैव तं काममाप्नोति; तस्मादु तन्नाद्रियेत ॥ ३ ॥

अथ चातुष्प्राश्यमोदनं पचन्ति—'छन्दांस्यनेन प्रीणीम ' इति । यथा येन वाहनेन स्यन्तस्यन् स्यात्,

---

दिवैव भोजनं न रात्राविति प्रतिपाद्य पक्षान्तरमाह—**तन्न्वेवेति** । **तद्वपीति** । ' तत् ' तत्र विषये ' कामं ' यथेच्छं रात्रावपि ' अश्नीयात् ' । तत्र कारणमाह—**नो ह्यनाहिताग्नेरिति** । ' न ' खलु ' अनाहिताग्नेः ' व्रतचरणम् ' अस्ति '; तस्येतरपुरुषवन्मानुषत्वात्, आहिताग्निर्हि संस्कारेण देवभावं प्राप्नोति । व्रतचरणमर्हतीति भावः ॥ २ ॥

**तद्धैक** इति । **अजमुपबध्नन्तीति** । उपवसथदिवसस्य रात्रौ गार्हपत्यागारे कस्यचिदजस्य बन्धनं कार्यमित्येकेषां मतम् । तेषामभिप्रायमाह—**आग्नेयोऽज** इति । अग्निना सह प्रजापतिमुखजातत्वात् ' अजः आग्नेयः ', अतोऽजस्य सम्बन्धमाधीयमानस्य ' अग्नेः ' ' सर्वत्वाय ' कार्त्स्न्याय सम्पद्यते, ' इति ' इममभिप्रायं बदन्त इत्यर्थः । तदेतन्निरस्यति—**तदु तथा नेति** । कथं तर्हि कार्यमिति, तदाह—**यदीति** । ' अस्य ' यजमानस्य ' अजः ' विद्यते चेत्, ' एनम् ' अजम् ' प्रातः ' आधानदक्षिणाकाले ' अग्नीधे ' आग्नीध्राय ' दद्यात् ' तथा च कात्यायनः—" गार्हपत्यागारेऽजं बध्नाति न वा विद्यमानं प्रातरग्नीधे दद्यात् " ( का. श्रौ. सू. ४. १९.७ ) —इति । **तेनैवेत्यादि** । निगदसिद्धम् ॥ ३ ॥

ब्रह्मौदनपाकविधिं मतभेदकथनेनोक्तं प्रतिपादयति—**अथ चातुष्प्राश्यमौदनमिति** । चतुर्भिरध्वर्युब्रह्मा-

---

१—" प्रजापतिरकामयत प्रजायेयेति, स मुखतस्त्रिवृतं निरमिमीत तमग्निर्देवतान्वसृज्यत, गायत्री छन्दो रथन्तरं साम ब्राह्मणो मनुष्याणामजः पशूनां, तस्मात्ते मुख्या मुखतो ह्यसृज्यन्त "—इति तैत्ति० सं० ७. १. १. ४. ।

स्तदु तथा न कुर्याद्यद्वाऽअस्य ब्राह्मणाः कुले वसन्त्यृत्विजश्चानृत्विजश्च तेनैव तं काममाप्नोति तस्मादु तन्नाद्रियेत ॥ ४ ॥

तस्य सर्पिरासेचनं कृत्वा । सर्पिरासिच्याश्वत्थीस्तिस्रः समिधो घृतेनान्वज्य समिद्वतीभिर्घृतवतीभिर्ऋग्भिरभ्यादधाति शमीगर्भमेतदाप्नुम इति वदन्तः स यः पुरस्तात्संवत्सरमभ्यादध्यात्स ह तं काममाप्नुयात्तस्मादु तन्नाद्रियेत ॥ ५ ॥

---

तत् सुहितं कर्त्तवै ब्रूयात्; एवमेवदिति वदन्तः । तदु तथा न कुर्यात् । यद्वा अस्य ब्राह्मणाः कुले वसन्ति—ऋत्विजश्चानृत्विजश्च, तेनैव तं काममाप्नोति; तस्मादु तन्नाद्रियेत ॥ ४ ॥

तस्य सर्पिरासेचनं कृत्वा सर्पिरासिच्य, आश्वत्थीस्तिस्रः समिधो घृतेनान्वज्य, समिद्वतीभिर्घृतवतीभिर्ऋग्भिरभ्यादधाति शमीगर्भमेतदाप्नुमः ' इति वदन्तः । स यः पुरस्तात्संवत्सरमभ्यादध्यात्—स ह तं काममाप्नुयात्; तस्मादु तन्नाद्रियेत ॥ ५ ॥

---

दिभिर्ऋत्विग्भिः प्राशितव्यमित्यर्थः । **छन्दांस्यनेनेति** । 'अनेन' ब्रह्मौदनपाकेन गायत्रीत्रिष्टुप्[1]जगत्याख्यानि छन्दांसि ' प्रीणीमः ' तर्पयाम इत्यभिप्रायः । अस्यौदनस्य चतुर्भिर्ऋत्विग्भिः प्राशनं युक्तमिति दृष्टान्तेनोपपादयति—**यथेति** । ' येन वाहनेन ' अश्वादिना ' स्यन्त्स्यन् ' यास्यन् ' स्यात् ' ' तद् ' वाहनं ' सुहितं ' ' सुतृप्तं ' कर्तुं यथा ब्रूयात्, 'एवमेतत्' आदौ ऋत्विजां कर्मोपयुक्तानां प्राशनं युक्तमित्यर्थः । स्यन्त्स्यन्निति "स्यन्दू प्रस्रवणे" ( भ्वा. आ० ७६२ )—इत्यस्माल्लृटः शत्रादेशः ।

इमं प्राशनपक्षं निषिध्योपपादयति—**तदु तथेति** । ' ऋत्विजश्चानृत्विजश्च ब्राह्मणाः ' ' अस्य ' यजमानस्य ' कुले वसन्ति ' इति ' यत् ' ' तेनैव ' वासेन ' तं काममाप्नोति, ' यः कामः प्राशननिमित्तकः प्रागुक्त इत्यर्थः ॥ ४ ॥

अथ पक्वस्यौदनस्य कस्तर्ह्युपयोग इत्याह—**तस्य सर्पिरासेचनमिति** । सर्पिरासिच्यतऽस्मिन्निति सर्पिरासेचनम्, घृतधारणार्थमोदनं निम्नं 'कृत्वा' इत्यर्थः । **सर्पिरासिच्येत्यादि** । स्पष्टम् । **समिद्वतीभिर्घृतवतीभिरिति** । समिच्छब्दयुक्ताभिर्घृतशब्दयुक्ताभिश्चेत्यर्थः । तास्तु कात्यायन उदाजहार—"आश्वत्थीस्तिस्रः[3] समिधो घृताक्ता आदधाति समिधाग्निमिति प्रत्यृचम्" ( का. श्रौ. सू. ४ । १९९ ) इति । समिदाधानं कुर्वतामभिप्रायमाह—**शमीगर्भमिति** । शमीगर्भो योऽश्वत्थः, तत्रस्थो योऽग्निः, तम्, ' एतत् ' एतेनाश्वत्थसमिदाधानेन ' आप्नुमः ' ' इति ' ब्रुवाणा इत्यर्थः । तस्य च समिदाधानस्य कालविशेषमाह—**स य** इति । अग्न्याधानस्य ' पुरस्तात् ' ' यः ' यजमानः ' ताः ' समिधः ' अभ्यादध्यात् ' ' सः ' खलु ' तं कामम् ' प्राप्नुयात् ' 'तस्मात्' समिदाधानार्थ एवैतदतो न प्राशनार्थ इति ' तत् ' प्राशनं नादरणीयमिति । निगमयति—**तस्मादिति** ॥ ५ ॥

---

१–' जगत्यादिच्छन्दांसि ' इति पाठः । २–' रात्रौ ' इति पाठः । ३–" उद्वास्यासेचनं मध्ये कृत्वा सर्पिरासिच्याश्वत्थीस्तिस्रः समिधो घृताक्ता आदधाति समिधाग्निमिति प्रत्यृचम् " ( का० श्रौ० सू० ४.१९९ )

तद्ु होवाच भाल्लवेयः । ( यो ) यथा वा ऽअन्यत्करिष्यन्त्सोऽन्यत्कुर्या-द्यथाऽन्यद्वदिष्यन्त्सोऽन्यद्वदेद्यथाऽन्येन पथैष्यन्त्सोऽन्येन प्रतिपद्येतैवं तद्य एतं चातुष्प्राश्यमोदनं पचेदपराद्धिरेव सेति न हि तदवकल्पते यस्मिन्न-ग्नावृचा वा साम्ना वा यजुषा वा समिधं वाभ्यादध्यादाहुतिं वा जुहुया-द्यत्तं दक्षिणा वा हरेयुरनु वा गमयेयुर्दक्षिणा वा ह्येनꣳ हरन्त्यन्वाहार्य-पचनो भविष्यतीत्यनु वा गमयन्ति ॥ ६ ॥

( न्त्यु ) अथ जाग्रति जाग्रति देवाः ( स्तु ) तद्देवानेवैतदुपावर्त्तते स सदेवतरः श्रान्ततरस्तपस्वितरोऽग्नी ऽआधत्ते तद्वपि काममेव स्वप्यान्नो ह्यनाहिताग्नेर्व्रतचर्यास्ति मानुषो ह्येवैष तावद्भवति यावदनाहिताग्नि-स्तस्माद्वपि काममेव स्वप्यात् ॥ ७ ॥

---

तद्ु होवाच भाल्लवेयः–' यथा वा अन्यत्करिष्यन् सोऽन्यत् कुर्यात्, यथाऽन्यद्वदिष्यन् सोऽन्यद्व-देत्, यथाऽन्येन पथैष्यन् सोऽन्येन प्रतिपद्येत; एवं तत्–य एतं चातुष्प्राश्यमोदनं पचेत् । अपराद्धि-रेव सेति । न हि तदवकल्पते–यस्मिन्नग्नावृचा वा, साम्ना वा यजुषा वा, समिधं वाऽभ्यादध्यात्, आहुतिं वा जुहुयात्; यत्तं दक्षिणा वा हरेयुः, अनु वा गमयेयुः । दक्षिणा वा ह्येनं हरन्ति, अन्वाहार्यपचनो भविष्यतीत्यनु वा गमयन्ति ॥ ६ ॥

अथ जाग्रति जाग्रति देवाः, तद्देवानेवैतदुपावर्त्तते । स सदेवतरः श्रान्ततरस्तपस्वितरोऽग्नी आधत्ते, तद्वपि काममेव स्वप्यात् । नो ह्यनाहिताग्नेर्व्रतचर्यास्ति, मानुषो ह्येवैष तावद् भवति–यावदनाहि-ताग्निः, तस्माद्वपि काममेव स्वप्यात् ॥ ७ ॥

---

अस्मिन्नर्थे संवादं दर्शयति–**तद्ु होवाच भाल्लवेय** इति । ' तत् ' तत्र विषये इन्द्रद्युम्नः ' भाल्लवेयः ' उक्तवान् । कथमिति; तदाह–**यथा वा** इत्यादि । ' यथा ' ' अन्यत् ' चिकीर्षतः तदनुपयुक्तस्यान्यस्य करणं यथा व्यधिकरणत्वादसङ्गतम्, तथा अग्नीनाधित्सताऽग्नावेव किञ्चित् कर्त्तव्यम्। तत्परित्यज्य चातुष्प्राश्यकरण-मसङ्गतम्; अतोऽसमृद्धिक एव तथाविधौदनपाक इति भाल्लवेयाभिप्रायः ।

तमिमं दोषं परिहृत्य प्राशनपक्षमेव निगमयति–**न हि तदि**त्यादिना । ऋक्सामादिमन्त्रैर्यस्मिन्नग्नौ समिध-माहुतिं च प्रक्षिपेद्, तस्याग्नेर्दक्षिणाहरणमनुगमनं च यदि स्यात्, सोऽग्निरन्वाहार्यपचनः । अन्वाहार्य ओदनः, तस्य पाकहेतुर्भविष्यति । अतो दक्षिणाहरणमनुगमनं वाहुतिसंस्कृतस्याग्नेर्नावकल्पते । अतः पक्व-तण्डुलो न होमार्थः, किन्तु प्राशनार्थ इत्यभिप्रायः । **गतमन्यत्** ॥ ६ ॥

तस्यां रात्रौ यजमानस्य जागरणं विधत्ते–**अथ जाग्रती**ति । व्यत्ययेन ( पा. सू. ३ । १ । ८९ ) बहु-वचनम्, जागर्तीत्यर्थः । **जाग्रति देवा** इत्यादि । श्वः करिष्यमाणेष्वाधानादिकर्मस्वङ्गभूता ये देवा उपवसथे-

---

१ " इन्द्रद्युम्न एव भाल्लवेयः " इत्यग्रे स्फुटीभविष्यति ( श. प. १० । ६ । १ । १ ) अन्यत्र च ( छां. उप. ५ । ११ । १ )
२ तत्पाकहेतुः ' इति पा. ३–" रात्रिं जागरणधारणे " श्रौ. सू. ४ २०७ ।

( त्त ) तद्धैकेऽनुदिते मथित्वा । तमुदिते प्राञ्चमुद्धरन्ति तदु तदुभे ऽअहोरात्रे परिगृह्णीमः प्राणोदानयोर्मनसश्च वाचश्च पर्याप्त्यै ऽइति वदन्तस्तदु तथा न कुर्यादुभौ हैवास्य तथाऽनुदित ऽआहितौ भवतोऽनुदिते हि मथित्वा तमुदिते प्राञ्चमुद्धरन्ति स य ऽउदित ऽआहवनीयं मन्थेत्स ह तत्पर्याप्नुयात् ॥ ८ ॥

( द ) अहर्वै देवाः । ( ऽ ) अनपहतपाप्मानः पितरो न पाप्मानमपहते मर्त्याः पितरः पुरा ह्यायुषो म्रियते योऽनुदिते मन्थत्यपहतपाप्मानो देवा अप पाप्मानꣳ हतेऽमृता देवा नामृतत्वस्याशास्ति सर्वमायुरेति श्रीर्हि देवाः श्रियं गच्छति यशो देवा यशो ह भवति य एवं विद्वानुदिते मन्थति ॥ ९ ॥

---

अग्निमन्थनब्राह्मणम् ।

तद्धैकेऽनुदिते मथित्वा, तमुदिते प्राञ्चमुद्धरन्ति । तदु तदुभे अहोरात्रे परिगृह्णीमः–' प्राणोदानयोर्मनसश्च वाचश्च पर्याप्त्यै ' इति वदन्तः । तदु तथा न कुर्यात्–उभौ हैवास्य तथाऽनुदित आहितौ भवतः । अनुदिते हि मथित्वा तमुदिते प्राञ्चमुद्धरन्ति । स य उदित आहवनीयं मन्थेत्–स ह तत्पर्याप्नुयात् ॥ ८ ॥

अहर्वै देवाः । अनपहतपाप्मानः पितरो न पाप्मानमपहते । मर्त्याः पितरः । पुरा ह्यायुषो म्रियते;–

---

ऽहनि यजमानगृहमागताः, ते खल्वस्यां रात्रौ ' जाग्रति ' जागरणं कुर्वन्ति । तेषु च जाग्रत्सु यजमानस्य स्वापो न युक्त इति तेन जागरणेन यजमानो ' देवानेव ' जाग्रतः ' उपावर्त्तते ' उपगतो भवति । ' सः ' च यजमानः ' सदेवतरः ' अतिशयेन देवसहितो निद्राभावादिना । अतिशयितं श्रममातोऽग्न्याधानयोग्यतां जागरणवशात् प्राप्नोतीत्यर्थः । अथाशनवत्स्वापमप्यनुजानाति–तद्वपीति ॥ ७ ॥

एवं रात्रौ नीतायामाधास्यमानस्याग्नेर्मन्थनविषयमेकीयं मतमुपन्यस्यति–तद्धैक इति । ' अनुदिते' सूर्योदयात् प्रागेवोषःकाले[1] मन्थनं कार्यम्, सूर्ये चोदिते आहवनीयार्थं तस्य प्रागुद्धरणम्[2] एवं वदतामभिप्रायमाह–तदिति । तेन मन्थनोद्धरणयोरहोरात्रसम्बन्धित्वेन, अत एव ' अहोरात्रे '' परिगृह्णीमः ' कर्माङ्गतया स्वीकुर्मः । तस्यापि प्रयोजनमाह–प्राणोदानयोरिति । अहोरात्रे–परिग्रहस्य तद्रूपयोः ' प्राणोदानयोः ' वाङ्मनसयोश्च 'पर्याप्तिः' प्रयोजनमित्येवं प्रतिपादयन्त इत्यर्थः । तमिमं पक्षं निषेधति–न कुर्यादिति । तत्र दोषमाह–उभौ हैवेति । गार्हपत्याहवनीयौ ' उभौ ' अपि ' अस्य ' यजमानस्य ' अनुदिते ' रात्रावेव ' आहितौ ' भवतः । ननु उदिते ह्याहवनीयमादधीतेति, कथमुभयोरनुदिते आधानमिति, तत्राह–अनुदिते हीति । 'अनुदिते' मथितो योऽग्निः, स एवाहवनीयत्वेन स्थाप्यत इति तस्यापि रात्रिसम्बन्धो दुर्निवारः । तस्मात् ' उदिते ' एव ' आहवनीयम् ' अग्निं ' मन्थेत् ' ॥ ८ ॥

रात्रौ मन्थनस्य दोषाभिधानपुरःसरमुदिते मन्थनं प्रशंसति–अहर्वा इति । गतार्थमेतत् ॥ ९ ॥

---

१–" प्रागेवोषाकाले " इति क. पा. । २–" उदिते तूद्धरणम् " का. श्रौ. सू. ४ । २१६ ।

तदाहुः ।( यं ) यन्नर्चा न साम्ना न यजुषाऽग्निराधीयतेऽथ केनाधीयत इति ब्रह्मणो हैवैष ब्रह्मणाधीयते वाग्वै ब्रह्म तस्यै वाचः सत्यमेव ब्रह्म ता वाऽएताः सत्यमेव व्याहृतयो भवन्ति तदस्य सत्येनैवाधीयते ॥ १०

भूरिति वै प्रजापतिः ।( रि ) इमामजनयत भुवऽइत्यन्तरिक्षꣳस्वरिति दिवमेतावद्वा ऽइदꣳ सर्व्वं यावदिमे लोकाः सर्व्वेणैवाधीयते ॥ ११ ॥

भूरिति वै प्रजापतिः ।( र्ब्र ) ब्रह्माजनयत भुव इति क्षत्रꣳ स्वरिति विशमेतावद्वाऽइदꣳ सर्व्वं यावद्ब्रह्म क्षत्रं विट् सर्व्वेणैवाधीयते ॥ १२ ॥

---

योऽनुदिते मन्थति । अपहतपाप्मानो देवा अपपाप्मानं हते । अमृता देवाः । नामृतत्वस्याशास्ति–सर्वमायुरेति । श्रीर्देवाः । श्रियं गच्छति । यशो देवाः । यशो ह भवति; य एवं विद्वानुदिते मन्थति[१]॥

तदाहुः–यन्नर्चा, न साम्ना, न यजुषाऽग्निराधीयतेऽथ केनाधीयत इति । ब्रह्मणो हैवैषः, ब्रह्मणाधीयते । वाग् वै ब्रह्म, तस्यै वाचः सत्यमेव ब्रह्म । ता वा एताः सत्यमेव व्याहृतयो भवन्ति, तदस्य सत्येनैवाधीयते ॥ १० ॥

भूरिति वै प्रजापतिरिमामजनयत, भुव इत्यन्तरिक्षम्, स्वरिति दिवम् । एतावद्वा इदं सर्वम्–यावदिमे लोकाः सर्वेणैवाधीयते ॥ ११ ॥

भूरिति वै प्रजापतिर्ब्रह्माजनयत, भुव इति क्षत्रम्, स्वरिति विशम् । एतावद्वा इदं सर्वम्–यावद् ब्रह्म-क्षत्रं-विट् । सर्वेणैवाधीयते ॥ १२ ॥

---

अथ व्याहृतीनामाधानसाधनत्वं विधातुं प्रस्तौति–**तदाहुरिति** । ऋक्सामयजुरात्मकास्त्रिविधा मन्त्राः, तैः 'यद्' यस्मात् 'अग्निः न आधीयते' केन तर्हि स आधेय इति ब्रह्मवादिनां प्रश्नः । तस्योत्तरम्–**ब्रह्मणो** हेति । ब्रह्मणः सम्बन्धि यद् ब्रह्म तेनाधानं कार्यम् । किं तदिति, तदुभयं दर्शयति–**वाग्वा** इति । षष्ठ्यन्तेन निर्दिष्टं यद् ब्रह्म, तद् वागात्मकम्; तस्या वाचः सम्बन्धि यद् वाक्यम्, 'सत्यम्' विद्यमानार्थप्रतिपादकम्, तद् 'एव' 'ब्रह्म' । तत्र वाचः सत्यं किमिति तद् दर्शयति–**ता वा एता** इति । 'ताः' एता भूरादि-व्याहृतयो यदुर्दारितसत्यरूपाः, 'तत्' तस्मात् 'अस्य' यजमानस्य व्याहृतिभिरग्न्याधाने 'सत्येनैव' सोऽग्निराहितो भवति ॥ १० ॥

व्याहृतीनां सत्यरूपत्वमुपपादयंस्तत्करणकमाधानं प्रशंसति–**भूरिति वा** इति । सृष्टिसमये प्रजापतिः 'भूरिति' अनया व्याहृत्या 'इमां' भूमिम् 'अजनयत' । 'भुव इत्यन्तरिक्षम्' इत्यादावप्येवं योजना । **इमे त्रयो लोका** इति । यावदस्ति एतावदेव हीदं सर्वं जगदतो भूरादिलोकहेतुभिर्व्याहृतिभिराधीयमानोऽग्नि-रनेन 'सर्वेणैव' जगता आहितो भवति ॥ ११ ॥

ब्रह्मक्षत्रादिवर्णत्रयोत्पत्तिहेतुत्वेन तत्करणकमाधानं प्रशंसति–**भूरिति वा** इति । 'ब्रह्म' ब्राह्मणजातिः, 'क्षत्रं' क्षत्रियजातिः । **स्वरित्यादि** । निगदसिद्धम् ॥ १२ ॥

---

१–यत्तु कचित् पुस्तके अत्र 'रात्रौ मन्थनस्य दोषाभिधानसाधनत्वम्' इति पाठ उपलभ्यते, तदनवधानविजृम्भितम् । तस्य पूर्वकण्डिकावतरणान्तर्गतत्वात् ।

भूरिति वै प्रजापतिः । ( रा ) आत्मानमजनयत भुवऽइति प्रजाᳫं स्वरिति पशूनेतावद्वा इदᳫं सर्वं यावदात्मा प्रजा पशवः सर्वेणैवाधीयते ॥ १३ ॥ स वै भूर्भुव इति । ( त्ये ) एतावतैव गार्हपत्यमादधात्यथ यत्सर्वैरादध्यात्तेनाहवनीयमादध्याद्द्वे ऽअक्षरे परिशिनष्टि तेनोऽएतान्ययातयामानि भवन्ति तैः सर्वैः पञ्चभिराहवनीयमादधाति भूर्भुवःस्वरिति तान्यष्टावक्षराणि सम्पद्यन्तेऽष्टाक्षरा वै गायत्री गायत्रमग्नेश्छन्दः स्वेनैवैनमेतच्छन्दसाधत्ते ॥ १४ ॥

देवान्ह वा ऽअग्नी ऽआधास्यमानान् । ( नांस्ता ) तानसुररक्षसानि ररक्षुर्नाग्निर्जनिष्यते नाग्नी आधास्यध्व ऽइति तद्यदरक्षंस्तस्माद्रक्षाᳫंसि ॥ १५ ॥

---

भूरिति वै प्रजापतिरात्मानमजनयत, भुव इति प्रजाम्, स्वरिति पशून् । एतावद्वा इदं सर्वम्–यावदात्मा-प्रजा-पशवः । सर्वेणैवाधीयते ॥ १३ ॥

स वै भूर्भुव इत्येतावतैव गार्हपत्यमादधाति । अथ यत्सर्वैरादध्यात् केनाहवनीयमादध्यात् । द्वे अक्षरे परिशिनष्टि, तेनो एतान्ययातयामानि भवन्ति । तैः सर्वैः पञ्चभिराहवनीयमादधाति भूर्भुवः स्वरिति । तान्यष्टावक्षराणि सम्पद्यन्ते । अष्टाक्षरा वै गायत्री । गायत्रमग्नेश्छन्दः । स्वेनैवैनमेतच्छन्दसाधत्ते ॥ १४ ॥

देवान् ह वा अग्नी आधास्यमानांस्तानसुररक्षसानि ररक्षुः–नाग्निर्जनिष्यते, नाग्नी आधास्यध्व इति । तद्–यदरक्षंस्तस्माद्रक्षांसि ॥ १५ ॥

---

स्वात्मप्रजापशुसर्जनहेतुत्वेन तत् प्रशंसति–**भूरिति** वा इति । **एतावद्वा** इति । ' इदं सर्वं ' सर्वं जगत् ' एतावद् वै ' एतावदेव । ' यावत् ' आत्मास्वरूपेणावस्थितः[1] स्वात्मनो भोगसम्पादनहेतवः ' प्रजा ' ' पशवः ' चेति एतत्त्रितयान्तर्गतमेव सर्वं जगत्, अनेन ' सर्वेण ' सोऽग्निराहितो भवतीत्यर्थः ॥ १३ ॥

एवं साधारण्येन व्याहृतीनामाधानसाधनत्वं प्रतिपाद्य गार्हपत्याधाने विशेषमाह–**स वा** इति । द्वाभ्यामेव व्याहृतिभ्यां ' गार्हपत्यम् ' ' आदधाति ' । तिसृभिरपि व्याहृतिभिर्गार्हपत्याधाने आहवनीयाधानस्य मन्त्रो न स्यात्, अतः सुवरिति ' द्वे अक्षरे ' परिशेषयेत् । ' तेन ' कारणेन परिशिष्टाक्षरद्वयसहितान्येतानि भूराद्यक्षराणि 'अयातयामानि' अगतसाराणि ' भवन्ति' । आहवनीयाधाने तिसृणां व्याहृतीनां विनियोगमाह–**तैः सर्वैरिति** । ' **तान्यष्टावक्षराणि** ' इत्यादि निगदसिद्धम् । **गायत्रमग्नेश्छन्द** इति । उभयोः प्रजापतिमुखजातत्वात्[2] ॥ १४ ॥

अग्निमन्थनसमये तस्य पुरस्तादश्वस्य धारणं विधित्सुरितिहासं दर्शयति–**देवानिति** । ' अग्नी ' गार्हपत्याहवनीयौ । ' ररक्षुः ' निरुद्धवन्त इत्यर्थः । निरोधप्रकारमाह–**नाग्निरिति** ॥ १५ ॥

---

१–' भोक्तृरूपेणावस्थितः ' इति पा० । २–प्रजापतिरकामयत प्रजायेयेति । स मुखतस्त्रिवृतं निरमिमीत । तमग्निर्देवतान्वसृज्यत, गायत्री छन्दो रथन्तरं साम–" इत्यादि तै० सं० ७. १. १. ४.।

ततो देवा एतं वज्रं ददृशुः । ( यं ) यदश्वं तं पुरस्तादुदश्रयंस्तस्याभयेऽनाष्ट्रे निवातेऽग्निरजायत तस्माद्यत्राग्निं मन्थिष्यन्त्स्यात्तदश्वमानेतवै ब्रूयात्स पूर्व्वेणोपतिष्ठते वज्रमेवैतदुच्छ्रयति तस्याभयेऽनाष्ट्रे निवातेऽग्निर्जायते ॥ १६ ॥

स वै पूर्व्ववाट् स्यात् । ( स्स ) स ह्यपरिमितं वीर्य्यमभिवर्द्धते यदि पूर्व्ववाहं न विन्देदपि यऽएव कश्चाश्वः स्याद्यद्यश्वं न विन्देदप्यनड्वानेव स्यादेष ह्येवानडुहो बन्धुः ॥ १७ ॥

( स्तं ) तं यत्र प्राञ्चᳫं हरन्ति । तत्पुरस्तादश्वं नयन्ति तत्पुरस्तादेवैतन्नाष्ट्रा रक्षाᳫंस्यपघ्नन्नेत्यथाभयेनानाष्ट्रेण हरन्ति ॥ १८ ॥

---

ततो देवा एतं वज्रं ददृशुर्यदश्वम् । तं पुरस्तादुदश्रयन् । तस्याभयेऽनाष्ट्रे निवातेऽग्निरजायत । तस्माद्यत्राग्निं मन्थिष्यन्त्स्यात्–तदश्वमानेतवै ब्रूयात् । स पूर्वेणोपतिष्ठते, वज्रमेवैतदुच्छ्रयति, तस्याभयेऽनाष्ट्रे निवातेऽग्निर्जायते ॥ १६ ॥

स वै पूर्ववाट् स्यात्, स ह्यपरिमितं वीर्यमभिवर्द्धते । यदि पूर्ववाहं न विन्देत्, अपि य एव कश्चाश्वः स्यात् । यद्यश्वं न विन्देत्, अप्यनड्वानेव स्यात् । एष ह्येवानडुहो बन्धुः ॥ १७ ॥

तं यत्र प्राञ्चं हरन्ति, तत्पुरस्तादश्वं नयन्ति । तत्पुरस्तादेवैतन्नाष्ट्रा रक्षांस्यपघ्नन्नेति । अथाभयेनानाष्ट्रेण हरन्ति ॥ १८ ॥

---

देवैः कृतं परिहारं दर्शयति– **ततो देवा** इति । अश्वाख्यं ‘ यत् ’ वज्रं ‘ तं ’ मन्थनदेशस्य ‘ पुरस्तात् ’ ‘ उदश्रयन् ’ उच्छ्रितमस्थापयन् । ‘ तस्य ’ वज्रस्य सम्बन्धिनि, ‘ अभये ’ भयरहिते, ‘ अनाष्ट्रे ’ रक्षःप्रभृतिनाशकरहिते, ‘ निवाते ’ वातरहिते; एवम्भूते स्थाने मन्थनाद् ‘ अग्निः’ उदपद्यतेत्यर्थः । एवमितिहासमुपन्यस्य प्रकृते योजयति–**तस्मा**दिति । ‘ आनेतवै ’ आनेतुमित्यर्थः । तुमर्थे तवैप्रत्ययः ( पा. सू. ३ । ४ । ९ ) । **स पूर्वेणे**त्यादि । उक्तप्रायम् ॥ १६ ॥

स चाश्वः पूर्ववयस्क एवानेतव्य इत्याह–**स वै पूर्ववा**डिति । पूर्वे वयसि वहतीति ‘ पूर्ववाट् ’ । “ वहश्च ” ( पा. सू. ३. २. ६४. ) इति ण्विः । तस्यालाभे पक्षान्तरमाह–**अपि य एवे**ति । निगदसिद्धमन्यत् । **एष ह्येवे**ति । अश्वविधेर्यः स्तावकोऽर्थवादः, अनडुद्विधेरपि एष एव स्तावक इत्यर्थः ॥ १७ ॥

आहवनीयदेशं प्रत्यग्नेर्हरणसमयेऽश्वस्यापि पुरस्तान्नयनं विधत्ते–**त**मिति । तस्य प्रयोजनमाह–**तत्पुरस्ता**दिति । स चाश्वोऽग्नेः पुरस्ताद् गमनमार्गे विद्यमानं रक्षःप्रभृतिकम् ‘ अपघ्नन् ’ हिंसन् ‘ एति ’ गच्छति । तथा च भयादिरहितेन मार्गेण तस्याग्नेर्हरणं सिध्यतीत्यर्थः ॥ १८ ॥

---

१–अत्रोपसर्गात्परत्वान्न जकारवदुच्चारणम् । २–“ अश्वमानयेति ब्रूयात् ” का० श्रौ० सू० ४ । २१८ । ३–“ वामदेव्यमिति प्रेष्यत्यश्वः पुरस्तायुवा तदभावेऽयुवाऽश्वाभावेऽनड्वान् ” का. श्रौ० सू० ४ । २३४ ।

तं वै तथैव हरेयुः । ( र्य ) यथैनमेष प्रत्यङ्ङुपाचरेदेष वै यज्ञो यदग्निः प्रत्यङ् हैवैनं यज्ञः प्रविशति तं क्षिप्रे यज्ञ उपनमत्यथ यस्मात्पराङ्भवति पराङ् हैवास्माद्यज्ञो भवति स यो हैनं तत्रानुव्याहरेत्पराङस्माद्यज्ञोऽभूदितीश्वरो ह यत्तथैव स्यात् ॥ १९ ॥

( दे ) एष उ वै प्राणः । ( स्तं ) तं वै तथैव हरेयुर्यथैनमेष प्रत्यङ्ङुपाचरेत्प्रत्यङ् हैवैनं प्राणः प्रविशत्यथ यस्मात्पराङ्भवति पराङ् हैवास्मात्प्राणो भवति स यो हैनं तत्रानुव्याहरेत्पराङस्मात्प्राणोऽभूदितीश्वरो ह यत्तथैव स्यात् ॥ २० ॥ [ शतम् ९०० ]

( द ) अयं वै यज्ञो योऽयं पवते । तं वै तथैव हरेयुर्यथैनमेष प्रत्यङ्ङुपाचरेत्प्रत्यङ् हैवैनं यज्ञः प्रविशति तं क्षिप्रे यज्ञऽउपनमत्यथ यस्मात्पु-

---

तं वै तथैव हरेयुः—यथैनमेष प्रत्यङ्ङुपाचरेत् । एष वै यज्ञो—यदग्निः । प्रत्यङ् हैवैनं यज्ञः प्रविशति, तं क्षिप्रे यज्ञ उपनमति । अथ यस्मात्पराङ् भवति, पराङ् हैवास्माद्यज्ञो भवति । स यो हैनं तत्रानुव्याहरेत्—' पराङस्माद्यज्ञोऽभूत् ' इति, ईश्वरो ह यत्तथैव स्यात् ॥ १९ ॥

एष उ वै प्राणः । तं वै तथैव हरेयुः—यथैनमेष प्रत्यङ्ङुपाचरेत् । प्रत्यङ् हैवैनं प्राणः प्रविशति अथ यस्मात्पराङ् भवति, पराङ् हैवास्मात् प्राणो भवति । स यो हैनं तत्रानुव्याहरेत्—' पराङस्मा त्प्राणोऽभूत् ' इति, ईश्वरो ह यत्तथैव स्यात् ॥ २० ॥

अयं वै यज्ञो, योऽयं पवते । तं वै तथैव हरेयुः—यथैनमेष प्रत्यङ्ङुपाचरेत् । प्रत्यङ् हैवैनं यज्ञः

---

तस्मिन् हरणे विशेषमाह–तं वा इति । ' यथा ' ' एनं ' यजमानम् ' एषः ' अग्निः ' प्रत्यङ् उपाचरेत् ' अभिमुखमुपावर्त्तेत, ' तम् ' अग्निम् ' तथैव [1]हरेयुः ' आहवनीयायतनस्य पूर्वभागं प्रापयेयुरित्यर्थः । तस्य प्रयोजनमाह–एष वा इति । ' एषः ' एव ' वै ' खल्वग्निः ' यज्ञः ' तन्निष्पादकत्वात् । तस्य प्रत्यगावर्त्तनेन ' एनं ' यजमानं ' यज्ञः ' एव ' प्रत्यङ प्रविशति ' अभिमुख आवर्त्तते । तथा च ' तं ' यजमानं ' क्षिप्रे ' अल्पकाल एव, शीघ्रं यज्ञः उपगच्छति । एतद् व्यतिरेकमुखेनोपपादयति–अथ यस्मादिति । सोऽग्निः ' यस्मात् ' [2]यजमानात् ' पराङ् ' पराङ्मुखो भवति, तर्हि ' अस्मात् ' ' यज्ञः ' अपि पराङ्मुख एव 'भवति' ' तत्र ' तथा सति ' यः ' कश्चिद् द्वेष्यः ' एनं ' यजमानम् ' अनुव्याहरेत् ' । किमिति–' यज्ञोऽस्मात् पराङ अभूत् ' इति स यजमानः ' तथैव ' भवितुम् ' ईश्वरः ' ' स्यात् ' ॥ १९ ॥

एवमग्नेर्यज्ञरूपत्वेन प्रत्यगावर्त्तनं प्रतिपाद्य प्राणात्मकत्वादपि तत् प्रतिपादयति–एष उ वा इति । ' एषः ' खल्वग्निः ' प्राणः ' । तं वा इत्यादि । पूर्ववत् ॥ २० ॥

अथैनं यज्ञात्मकमग्निं वायुतादात्म्येन स्तौति–अयं वा इति । तं वा इत्यादि पूर्ववत् ॥ २१ ॥

---

१–' अवहरेयुः ' इ क० पा० । २–' बहुयजमानात् ' इति क० पा० ।

राङ्भवति पराङ्ु हैवास्माद्यज्ञो भवति स यो हैनं तत्रानुव्याहरेत्पराङ-स्माद्यज्ञोऽभूदितीश्वरो ह यत्तथैव स्यात् ॥ २१ ॥

( दे ) एष उ वै प्राणः । ( स्तं ) तं वै तथैव हरेयुर्यथैनमेष प्रत्यङ्ङुपा-चरेत्प्रत्यङ् हैवैनं प्राणः प्रविशत्यथ यस्मात्पराङ्भवति पराङ्ु हैवास्मा-त्प्राणो भवति स यो हैनं तत्रानुव्याहरेत्पराङस्मात्प्राणोऽभूदितीश्वरो ह यत्तथैव स्यात्तस्मादु तथैव हरेयुः ॥ २२ ॥

( र ) अथाश्वमाक्रमयति । तमाक्रमय्य प्राञ्चमुन्नयति तं पुनरावर्तयति तमुदञ्चं प्रमुञ्चति व्वीर्य्यं वाऽअश्वो नेदस्मादिदं पराग्वीर्य्यमसदिति तस्मात्पुनरावर्तयति ॥ २३ ॥

तमश्वस्य पदऽआधत्ते व्वीर्य्यं वाऽअश्वो व्वीर्य्यऽएवैनमेतदाधत्ते तस्मा-दश्वस्य पद आधत्ते ॥ २४ ॥

---

प्रविशति, तं क्षिप्रे यज्ञ उपनमति । अथ यस्मात्पराङ् भवति, पराङु हैवास्माद् यज्ञो भवति । स यो हैनं तत्रानुव्याहरेत्–' पराङस्माद् यज्ञोऽभूत् ' इति, ईश्वरो ह यत्तथैव स्यात् ॥ २१ ॥

एष उ वै प्राणः । तं वै तथैव हरेयुः–यथैनमेष प्रत्यङ्ङुपाचरेत् । प्रत्यङ् हैवैनं प्राणः प्रविशति । अथ यस्मात्पराङ् भवति, पराङु हैवास्मात् प्राणो भवति । स यो हैनं तत्रानुव्याहरेत्–' पराङस्मा-त्प्राणोऽभूत् ' इति, ईश्वरो ह यत्तथैव स्यात् । तस्मादु तथैव हरेयुः ॥ २२ ॥

अथाश्वमाक्रमयति । तमाक्रमय्य प्राञ्चमुन्नयति । तं पुनरावर्त्तयति । तमुदञ्चं प्रमुञ्चति । वीर्यं वा अश्वः, नेदस्मादिदं परागू वीर्यमसदिति । तस्मात्पुनरावर्त्तयति ॥ २३ ॥
तमश्वस्य पद आधत्ते । वीर्य्यं वा अश्वः, वीर्य्य एवैनमेतदाधत्ते । तस्मादश्वस्य पद आधत्ते ॥२४॥

---

वाय्वात्मकमग्निं प्राणरूपतया स्तौति–**एष उ वा इति** । अन्यत् पूर्ववत् ॥ २२ ॥

एवमग्नेर्हरणप्रकारमित्थं प्रतिपाद्य तदनन्तरकर्त्तव्यमाह–**अथाश्वमिति** । आहवनीयायतने सम्भारान् निधाय दक्षिणपूर्वपादेन ' अश्वमाक्रमयति ' । एवम् ' आक्रमय्य ' ' प्राञ्चं ' नीत्वा ' तम् ' अश्वम् ' पुनरावर्त्तयति ' आवृत्य स्थापयति । अनन्तरं ' तम् ' अश्वम् ' उदञ्चम् ' उदङ्मुखं प्रमुञ्चति । सूत्र्यते हि कात्यायनेन– " सम्भारानधिष्ठाप्य दक्षिणपूर्वपादेन प्राञ्चं नीत्वाऽऽवर्त्य स्थापयति" ( का० श्रौ० सू० ४ । २३९ ) इति । पुनरावर्त्तनस्य प्रयोजनमाह–**नेदस्मादिति** । अश्वलक्षणं यद् ' इदं ' वीर्यम्, तत् ' नेत् ' नैव ' अस्मात् ' ' पराग् '–भूतम् भवेदित्यनेनाभिप्रायेण तस्याश्वस्य पुनरावर्त्तनं कार्यमित्यर्थः ॥ २३ ॥

आहृतस्याग्नेराधानं विधत्ते–**तमश्वस्येति** । आहवनीयायतने यदश्वस्य पदम्, तस्मिन् ' तम् ' अग्निं मन्त्रेण स्थापयेत् । तदेतत् प्रशंसति–**वीर्यं वा इति** ॥ २४ ॥

स वै तूष्णीमेवाग्रऽउपस्पृशति । (स्य) अथोद्यच्छत्यथोपस्पृशति भूर्भुवः स्वरित्येव तृतीयेनादधाति त्रयो वा ऽइमे लोकास्तदिमानेवैतल्लोकानाप्नो-त्येतन्न्वेकम् ॥ २९ ॥

(मु) अथेदं द्वितीयम् । (न्तू) तूष्णीमेवाग्रऽ उपस्पृशत्यथोद्यच्छति भूर्भुवः स्वरित्येव द्वितीयेनादधाति यो वाऽ अस्यामप्रतिष्ठितो भारमुद्यच्छति नैनꣳ शक्नोत्युद्यन्तुꣳ सꣳ हैनꣳ शृणाति ॥ २६ ॥

स यत्तूष्णीमुपस्पृशति । तदस्यां प्रतिष्ठायां प्रतितिष्ठन्ति सोऽस्यां प्रतिष्ठित आधत्ते तथा न व्यथते तद्ध हैतत् पश्चेव दध्रिरे ऽआसुरिः पाञ्चिर्माधुकिः सर्वं वाऽ अन्यदियसितमिव प्रथमेनैवोद्यत्यादध्याद् भूर्भु-

---

स वै तूष्णीमेवाग्र उपस्पृशति, अथोद्यच्छति, अथोपस्पृशति, भूर्भुवः स्वरित्येव तृतीयेनादधाति । त्रयो वा इमे लोकाः, तदिमानेवैतल्लोकानाप्नोति । एतन्न्वेकम् ॥ २९ ॥

अथेदं द्वितीयम् । तूष्णीमेवाग्र उपस्पृशति, अथोद्यच्छति, भूर्भुवः स्वरित्येव द्वितीयेनादधाति । यो वा अस्यामप्रतिष्ठितो भारमुद्यच्छति, नैनं शक्नोत्युद्यन्तुम्; सं हैनं शृणाति ॥ २६ ॥

स यत्तूष्णीमुपस्पृशति, तदस्यां प्रतिष्ठायां प्रतितिष्ठन्ति; सोऽस्यां प्रतिष्ठित आधत्ते, तथा न व्यथते । तद्ध हैतत् पश्चेव दध्रिरे–आसुरिः, पाञ्चिः, माधुकिः । सर्वं वा अन्यदियसितमिव, प्रथमेनैवोद्यत्याद-

---

तत्र विशेषमाह–**स वा** इति । ‘ अग्रे ’ प्रथमम् अश्वस्य पदमग्निना ‘ तूष्णीम् ’ ‘ उपस्पृशति ’ तमग्नि-मुद्यम्य पुनरपि ‘ उपस्पृशति ’ । एवं द्विरुपस्पृश्य तृतीयेनोपस्पर्शनेन व्याहृतिभिस्तमग्निं तस्मिन् पदे स्थाप-यति । व्याहृतिगतं त्रित्वं प्रशंसति–**त्रयो वा** इति । इमं [illegible] निगमयति–**एतादिति** । ‘ एतत् ’ खल्वाहव-नीयाधानस्य ‘ एकं ’ विधानमित्यर्थः ॥ २९ ॥

पक्षान्तरमपि वक्तुं प्रतिजानीते–**अथेदं द्वितीयमिति** । **तूष्णीमेवेत्यादि** । अश्वपदं ‘ तूष्णीं ’ सकृदेवा-ग्निनोपस्पृश्य, तमुद्यम्य द्वितीयेनोपस्पृशति । न व्याहृतिभिस्तत्र स्थापयेदित्यर्थः । एतस्योपस्पर्शनस्य प्रयोजन-माह–**यो वा अस्यामिति** । ‘ अस्यां ’ भूम्यां दृढमनवस्थितः सन् ‘ यः ’ वोढा ‘ भारमुद्यच्छति ’ सः ‘ एनं ’ भारम् ‘ उद्यन्तुं ’ वोढुं ‘ न शक्नोति ’; प्रत्युत निपततोऽस्योपरि निपतन् भार एव ‘एनं’ पुरुषं हिनस्ति ॥ २६ ॥

**स यत् तूष्णीमुपस्पृशतीति** । यस्तु भूम्यां प्रतिष्ठाय भारमुद्यच्छति; स भारं वोढुं शक्नोतीति । तत्समान-मेवैतद् भूमेः सकृदुपस्पर्शनम् तथा च तेन स्पर्शनेन भूम्यां प्रतिष्ठित एवाग्निराहितो भवति, ‘ न व्यथते ’ न चलति । “ (व्यथ भयसंचलनयोः” धा. पा. भ्वा. आ. ७६९ )–इति धातुः । पक्षान्तरं वक्तुमन्यस्मिन् पक्षे दोषमाह–**तद्ध हैतदिति** । आसुरिप्रभृतयस्त्रयो मुनयः तदेतदुपस्पृश्योद्यम्य द्वितीयस्पर्शनेनैवाधानं ‘ पश्चेव ’ पश्चाद्भूतमिव ‘ दध्रिरे ’ अधारयन् । एतावता को दोष इति तत्राह–**सर्वं वा** इति । अग्निनोपस्पृश्य पुनस्तस्यो-

---

१–“ बृहदिति प्रेष्यत्याग्निना पदं द्विरुपस्पृश्य तृतीयेनादधाति द्वितीयेन प्रथमेन वा भूर्भुवः स्वरिति पूर्ववत् ” का. श्रौ. सू. ४।२।३।

वुःस्वारिति तदेवानियसितमित्यतो यतमथा कामयेत तथा कुर्यात् ॥ २७ ॥

(३) अथ पुरस्तात्परीत्य । पूर्व्वार्द्धमुल्मुकानामभिपद्य जपति द्यौरिव भू-
म्ना पृथिवीव व्वरिम्णेति यथाऽसौ द्यौर्वह्वी नक्षत्रैरेवं बहुर्भूयासमित्येवैतदाह
यदाह द्यौरिव भूम्नेति पृथिवीव व्वरिम्णेति यथेयं पृथिव्युर्व्येवमुरुर्भूयास-
मित्येवैतदाह तस्यास्ते पृथिवि देवयजनि पृष्ठेऽ इत्यस्यै ह्येनं पृष्ठऽ
आधत्तेऽग्निमन्नादमन्नाद्यायादधऽ इत्यन्नादोऽग्निरन्नादो भूयासमित्येवैत-
दाह सैषाशीरेव स यदि कामयेत जपेदेतद्यद्यु कामयेतापि नाद्रियेत ॥ २८ ॥

---

ध्याद्–भूर्भुवः स्वारिति; तदेवानियसितमिति । अतो यतमथा कामयेत; तथा कुर्यात् ॥ २७ ॥

अथ पुरस्तात्परीत्य पूर्वार्द्धमुल्मुकानामभिपद्य जपति–"द्यौरिव भूम्ना पृथिवीव वरिम्णा"–
( वा सं० ३ अ० ५ मं० ) इति । यथाऽसौ द्यौर्वह्वी नक्षत्रैः, एवं बहुर्भूयासमित्येवैतदाह–यदाह–'द्यौरिव
भूम्ना इति । पृथिवीव वरिम्णेति । यथेयं पृथिव्युर्वी, एवमुरुर्भूयासमित्येवैतदाह–" तस्यास्ते
पृथिवि देवयजनि पृष्ठे "–( ३ अ० ५ मं० ) इति । अस्यै ह्येनं पृष्ठ आधत्ते । "अग्निमन्नाद-
मन्नाद्यायादधे "–( ३ अ० ५ मं० ) इति । अन्नादोऽग्निः, अन्नादो भूयासमित्येवैतदाह । सैषा-
ऽऽशीरेव, स यदि कामयेत–जपेत् । यद्यु कामयेत आपि नाद्रियेत ॥ २८ ॥

---

…भवति । अतो-
धमनेन तद्व्यतिरिक्तं सर्वमायतनस्थं सम्भारादिकम् 'इयसितम्' इयत्तया परिच्छिन्नं व्यक्तमिव भवति । अतो-
ऽग्निमुद्यम्य प्रथमेनैवोद्यमनेन व्याहृतिभिः 'आदध्यात्' । तथा एवं सति 'अनियसितम्' अव्यक्तमेव सर्वं भवति ।
उक्तानां पक्षाणामिच्छया विकल्पमाह–**यतमथेति** । एतत् पक्षत्रयमपि सूत्रितं कात्यायनेन–" अग्निना पदं
द्विरुपस्पृश्य तृतीयेनादधाति, द्वितीयेन प्रथमेन वा भूर्भुवः स्वारिति "–( का. श्रौ. सू. ४. २३६.) इति॥ २७॥

आहितस्याग्नेः पूर्वभागस्थमुल्मुकमन्वारभ्य मन्त्रस्य जपं विधत्ते–**अथ पुरस्तादिति** । मन्त्रतात्पर्यमाह–**यथा-
ऽसाविति** । बहुभिः 'नक्षत्रैः' 'यथाऽसौ द्यौः' 'वह्वी' बहुत्वोपेता, 'एवम्' अहमपि पुत्रपौत्रादिबहुत्वेन
'बहुर्भूयासम्' इति 'द्यौरिव भूम्ना' इत्यस्य भागस्यार्थः । पृथिवीत्यादिकमनूद्य तात्पर्यमाह–**यथेऽयं
पृथिवीति** 'उर्वी' विस्तीर्णा, 'एवम्' अहमपि 'वरिम्णा' उरुत्वेन सुविस्तीर्णो भूयासमिति । [भागान्तरमनूद्य
व्याचष्टे–**तस्यास्त इति** । उरुत्वं प्रत्युपमानभूतायाः 'तस्याः' 'ते' तव 'पृष्ठे' उपरिभागे 'अग्निम् आदधे'–
इत्युत्तरत्र सम्बन्धः । **अस्यै हीति** । अस्या एव खलु पृथिव्याः 'पृष्ठे' उपरि आधत्ते, अतो युक्तं 'तस्यास्ते'
इति वाक्यमिति भावः । अन्तिमं भागमनूद्य व्याचष्टे–**अग्निमन्नादमिति** । आहवनीयादिरूपेण जाठररूपेण च
हविर्लक्षणम्, तद्विलक्षणं च सर्वमन्नमत्तीति 'अन्नादोऽग्निः' । एवमन्नादशब्देनाग्नेर्विशेषणादहमप्यन्नादो भूयास-
मिति तात्पर्यगम्योऽर्थः । **सैषाशीरित्यादि** । 'एषा' मन्त्रात्मिका ऋक् 'आशीः' फलप्रार्थनमेव; अतः सत्यां
कामनायां तस्य मन्त्रस्य जपः; तदभावे तु जपोऽपि न कर्तव्य इत्यर्थः ॥ २८ ॥

---

१–" इयसुशब्दोऽवसानवचनः कण्ड्वादिषु पठयते " । इति सायणाचार्यः । श. प. ब्रा १ । ९ । २ । १४ । इत्यत्र ॥

२–" पुरस्तात् परिक्रम्येध्मपूर्वार्द्धं गृहीत्वा द्यौरिव भूम्नेत्याह ", का. श्रौ. सू. ४. २३७ ।

( त्रा ) अथ सर्पराज्ञ्या ऋग्भिरुपतिष्ठते । ( त८ ) आयं गौः पृश्निरक्रमीद्‌-सदन्मातरं पुरः । पितरं च प्रयन्त्स्वः ॥ अन्तश्चरति रोचनाऽस्य प्राणादपानती । व्यख्यन्महिषो दिवम् ॥ त्रिꣳशद्धाम विराजति वाक्पतङ्गाय धीयते । प्रतिवस्तोरह द्युभिरिति तद्यदेवास्यात्र सम्भारैर्वा नक्षत्रैर्वर्तुभिर्वाऽऽधानेन वाऽनाप्तं भवति तदेवास्यैतेन सर्वमाप्तं भवति तस्मात्सर्पराज्ञ्या ऋग्भिरुपतिष्ठते ॥ २९ ॥

तदाहुः । ( नं ) न सर्पराज्ञ्या ऋग्भिरुपतिष्ठेतेतीयं वै पृथिवी सर्पराज्ञी स यदेवास्यामाधत्ते तत्सर्वान्कामानाप्नोति तस्मान्न सर्पराज्ञ्या ऋग्भिरुपतिष्ठेतेति ॥ ३० ॥

इति प्रथमाध्याये प्रथमप्रपाठके चतुर्थं ब्राह्मणम् ॥४॥ इति प्रथमोऽध्यायः ॥१॥

---

## अग्न्युपस्थानब्राह्मणम् ।

अथ सर्पराज्ञ्या ऋग्भिरुपतिष्ठते—"आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः । पितरं च प्रयन्त्स्वः"–( ३ अ० ६ मं० ) "अन्तश्चरति रोचनाऽस्य प्राणादपानती । व्यख्यन्महिषो दिवम्"–वा० सं० ( ३ अ० ७ मं० ) "त्रिꣳशद्धाम विराजति वाक् पतङ्गाय धीयते । प्रति वस्तोरह द्युभिः"–( ३ अ० ८ मं० ) इति । तद्यदेवास्यात्र सम्भारैर्वा, नक्षत्रैर्वा, ऋतुभिर्वा, आधानेन वाऽनाप्तं भवति; तदेवास्यैतेन सर्वमाप्तं भवति । तस्मात्सर्पराज्ञ्या ऋग्भिरुपतिष्ठते ॥ २९ ॥

तदाहुः– न सर्पराज्ञ्या ऋग्भिरुपतिष्ठेतेति । इयं वै पृथिवी सर्पराज्ञी, स यदेवास्यामाधत्ते, तत् सर्वान् कामानाप्नोति । तस्मान्न सर्पराज्ञ्या ऋग्भिरुपतिष्ठेतेति ॥ ३० ॥

इत्यग्न्याधानप्रकरणे चतुर्थमुपवसथब्राह्मणम् ।

---

अथ तस्याग्नेः सार्पराज्ञीभिरुपस्थानं विधत्ते–**अथ सर्पराज्ञ्या** इति । सर्पणशीलानां प्राणिनां राज्ञी 'सर्पराज्ञी' तत्सम्बन्धिनीभिर्ऋग्भिरग्निम् 'उपतिष्ठते' । काः पुनस्ता इति तिस्र ऋचः पठति–**आयं गौरि**ति प्रथमा, अन्तश्चरति रोचनेति द्वितीया, त्रिंशद्धामेति ( वा. सं. ३ । ६. ७. ८. ) तृतीया । आयं गौरित्यादिमन्त्रार्थो मन्त्रभाष्ये प्रोक्तः । अस्योपस्थानस्य प्रयोजनमाह–**तद् यदेवे**ति । 'अस्य' यजमानस्य 'अत्र' अस्मिन्नाधाने सम्भारादिभिर्विकल्पनिमित्तेन यत् 'अनाप्तम्' अप्राप्तं भवति, 'एतेन' उपस्थानेन 'अस्य' तत् 'सर्वम्' आप्यते, सर्पराज्ञ्याः सर्वाधिष्ठानभूतत्वात् । अत एव तन्नामनिर्वचनमन्यत्राम्नातम्–"इयं वै सर्पराज्ञी, देवा वै सर्पाः, तेषामियं राज्ञी" ( ऐ० ब्रा० ९. ४. ४. ) इति च ॥ २९ ॥

तेषां पृथिव्यामाधानादेव सम्भारादीनां सर्वेषामवाप्तत्वात्, तदवाप्तये सर्पराज्ञीभिरुपस्थानं न कार्यमिति

---

१–"आयं गौरिति चोपतिष्ठते सार्पराज्ञीभिः" का० श्रौ० सू० ४० । २३८ । २–"इयं वै सर्पतो राज्ञी" इति तै० ब्रा० १. ४. ६. ६. । "देवा वै सर्पास्तेषामियं राज्ञी" इति तै० ब्रा० २. २. ६. १. । तां० ब्रा० ९. । ८ । ७ ( ब्रह्मवादिनां ) आर्षे ब्रा० ३ । २९ ( सर्पाणाम् ) ऋ. सं. १० । १८९ । सा. भा. ( ऋषिः )

# अथ द्वितीयाध्याये प्रथमं ब्राह्मणम् ।

**उद्धृत्याहवनीयं पूर्णाहुतिं जुहोति । तद्यत्पूर्णाहुतिं जुहोत्यन्नादं व्वाऽएतमात्मनो जनयते यदग्निं तस्माऽएतदन्नाद्यमपिदधाति यथा कुमाराय वा जाताय व्वत्साय वा स्तनमपि दध्यादेवमस्माऽएतदन्नाद्यमपिदधाति ॥ १ ॥**

## पूर्णाहुतिहोमब्राह्मणम् ।

उद्धृत्याहवनीयं पूर्णाहुतिं जुहोति। तद्यत्पूर्णाहुतिं जुहोति, अन्नादं वा एतमात्मनो जनयते—यदग्निम्; तस्मा एतदन्नाद्यमपिदधाति; यथा कुमाराय वा जाताय वत्साय वा स्तनमपिदध्यात्, एवमस्मा एतदन्नाद्यमपिदधाति ॥ १ ॥

पक्षान्तरमाह—**तदाहुरिति**। निगदव्याख्यातम् ॥ ३० ॥ [ १. ४. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये
द्वितीयकाण्डे प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥ ( २–१–४ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः
कार्पासीयं कृपावान् गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजाः
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे प्रथमोऽध्यायः समाप्तः ॥ १ ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

आदित आरभ्यैतावत्पर्यन्तं तात्पर्यार्थाभिधानविनियोगादिप्रदर्शनपुरस्सरं वाक्ययोजनं कृतम्; इत आरभ्योपरितनाध्यायगतानि यानि वाक्यानि, तानि समानन्यायतया पूर्ववदेव योजयितुं शक्यानीति ग्रन्थविस्तरभयात् केवलं प्रकटार्थकथनं[1] विषमपदविवरणं च क्रियते । एवं गार्हपत्याद्यग्निषु स्थानेषु स्वरूपेण सिद्धेषु क्षुधितस्याग्नेः शमनाय पूर्णाहुतिं विधत्ते[2]—**उद्धृत्याहवनीय**मित्यादिना ॥ १ ॥

१–' प्रघट्टघट्टकार्थकथनम् ' इति क० पा० । २–" उद्धरेति यजमानो ब्रूयात् सायंप्रातरग्निहोत्रे " " गार्हपत्यादाहवनीयस्योद्धरणमनस्तमितानुदितयोः " का० श्रौ० सू० ४ । १२ । १–२ ।

स एतेनान्नेन शान्तः । ( ऽ ) उत्तराणि हवीᳬंषि श्रप्यमाणान्युपरमति शश्वद्ध वाऽअध्वर्युं वा यजमानं वा प्रदहेत्तौ ह्यस्य नेदिष्ठं चरतो यदस्मिन्नेतामाहुतिं न जुहुयात्तस्माद्वाऽएतामाहुतिं जुहोति ॥ २ ॥

तां व्वै पूर्णां जुहोति । सर्व्वं वै पूर्णᳬं सर्व्वेणैवैनमेतच्छमयति स्वाहाकारेण जुहोत्यनिरुक्तो वै स्वाहाकारः सर्व्वं वाऽअनिरुक्तᳬं सर्व्वेणैवैनमेतच्छमयति ॥ ३ ॥

यां व्वै प्रजापतिः प्रथमामाहुतिमजुहोत्स्वाहेति वै तामजुहोत्सो स्विदेषा निदानेन तस्मात्स्वाहेति जुहोति तस्यां व्वरं ददाति सर्व्वं वै व्वरः सर्व्वेणैवैनमेतच्छमयति ॥ ४ ॥

तदाहुः । ( रे ) एतामेवाहुतिᳬं हुत्वाथोत्तराणि हवीᳬंषि नाद्रियेतैतयैव तं काममाप्नोति यमभिकाममुत्तराणि हवीᳬंषि निर्व्वपतीति ॥ ५ ॥

---

स एतेनान्नेन शान्त उत्तराणि हवींषि श्रप्यमाणान्युपरमति । शश्वद्ध वा अध्वर्युं वा यजमानं वा प्रदहेत्, तौ ह्यस्य नेदिष्ठं चरतः; यदस्मिन्नेतामाहुतिं न जुहुयात् । तस्माद्वा एतामाहुतिं जुहोति ॥ २ ॥

तां वै पूर्णां जुहोति । सर्वं वै पूर्णम्, सर्वेणैवैनमेतच्छमयति । स्वाहाकारेण जुहोति । अनिरुक्तो वै स्वाहाकारः, सर्वं वा अनिरुक्तम्; सर्वेणैवैनमेतच्छमयति ॥ ३ ॥

यां वै प्रजापतिः प्रथमामाहुतिमजुहोत्, स्वाहेति वै तामजुहोत् । सो स्विदेषा निदानेन । तस्मात्स्वाहेति जुहोति । तस्यां वरं ददाति । सर्वं वै वरः, सर्वेणैवैनमेतच्छमयति ॥ ४ ॥

### उत्तराहुतिः ।

तदाहुः—एतामेवाहुतिं हुत्वा—अथोत्तराणि हवींषि नाद्रियेत । एतयैव तं काममाप्नोति—यमभिकाममुत्तराणि हवींषि निर्वपतीति ॥ ५ ॥

---

स एतेनान्नेन शान्त इति । शश्वद्ध वा अध्वर्युमिति । अशान्तः[1] खल्वग्निः ‘ शश्वत् ’ ध्रुवम्—अध्वर्यु-यजमानयोरन्यतरं प्रदहेत्; ‘ तौ ’ खलु ‘ अस्य ’ अग्नेः ‘ नेदिष्ठम् ’ अन्तिकतमम्, समीपे सञ्चरेत[2]—इत्यर्थः । “ अन्तिकबाढयोर्नेदसाधौ”—( पा. सू. ५ । ३ । ६३ ) इतीष्ठनि अन्तिकस्य नेदादेशः ॥ २ ॥ ३ ॥

मन्त्ररहितेन स्वाहाकारमात्रेण[3] होममुपपादयति—यां वा इति । पुरा खलु प्रजापतिः पुरुषोश्वादिसर्वजगत्स-[4]र्जनहेतुभूतां ‘ प्रथमामाहुतिम् ’ स्वाहाकारेणैव ‘ अजुहोत् ’ । ‘ एषा ’ अपि पूर्णाहुतिस्तथा क्रियमाणा ‘ निदानेन ’ निदानभूतेन फलकारणेन ‘ सो स्वित् ’ सैव, प्रजापतिना हुता प्रथमाहुतिः खल्वित्यर्थः ॥ ४ ॥

पूर्णाहुतेः सकलकामावाप्तिहेतुत्वमाह—तदाहुरिति । यम् ‘ कामम् ’ ‘ अभि ’—लक्ष्य ‘ उत्तराणि ’ पवमानादीनि ‘ हवींषि ’ निरुप्यन्ते । ‘ तम् कामम् ’ ‘ एतयैव ’ पूर्णाहुत्या प्राप्नोतीत्यर्थः ॥ ५ ॥

---

१–‘अशान्तो ह्यग्निः’ इति क० पा० । २–‘ संचरेते ’ इति क० पा० । ३–“निरुप्याज्यं गार्हपत्येऽधिश्रित्य स्रुक्स्रुवं न संमृज्यो-द्वास्योत्पूयावेक्ष्य गृहीत्वाऽन्वारब्ध ... “सर्वत्र स्वाहेति ” का. श्रौ. सू. ४ । २४७ । ४–पुरुषपश्वादि इत्यपि पाठ उपलभ्यते ।

स वाऽअग्नये पवमानाय निर्व्वपति । प्राणो वै पवमानः प्राणमेवास्मिन्नेत-
द्दधाति तद्वेतयैवास्मिंस्तद्दधात्यन्नꣳ हि प्राणोऽन्नमेषाहुतिः ॥ ६ ॥
( २ ) अथाग्नये पावकाय निर्व्वपति । ( स्व ) अन्नं वै पावकमन्नमेवा-
स्मिन्नेतद्दधाति तद्वेतयैवास्मिंस्तद्दधात्येषा ह्येव प्रत्यक्षमन्नमाहुतिः ॥७॥
( ३ ) अथाग्नये शुचये निर्व्वपति । वीर्य्यं वै शुचि यद्वाऽअस्यैतदु-
ज्ज्वलत्येतदस्य वीर्य्यꣳ शुचि वीर्य्यमेवास्मिन्नेतद्दधाति तद्वेतयैवा-
स्मिंस्तद्दधाति यदा ह्येवास्मिन्नेतामाहुतिं जुहोत्यथास्यैतद्वीर्य्यꣳ शुच्यु-
ज्ज्वलति ॥ ८ ॥

तस्मादाहुः । ( रे ) एतामेवाहुतिꣳ हुत्वाथोत्तराणि हवीꣳषि नाद्रियेत-
तैतयैव सं काममाप्नोति यमभिकाममुत्तराणि हवीꣳषि निर्व्वपतीति तद्
निर्व्वपेदेवोत्तराणि हवीꣳषि परोऽक्षमिव वाऽएतद्यददस्तदिदमितीव ॥ ९ ॥

---

स वा अग्नये पवमानाय निर्वपति । प्राणो वै पवमानः, प्राणमेवास्मिन्नेतद्दधाति; तद्वेतयैवा-
स्मिंस्तद्दधाति । अन्नं हि प्राणः, अन्नमेषाहुतिः ॥ ६ ॥
अथाग्नये पावकाय निर्वपति । अन्नं वै पावकम्, अन्नमेवास्मिन्नेतद्दधाति; तद्वेतयैवास्मिंस्तद्द-
धाति । एषा ह्येव प्रत्यक्षमन्नमाहुतिः ॥ ७ ॥
अथाग्नये शुचये निर्वपति । वीर्यं वै शुचि । यद्वा अस्यैतदुज्ज्वलति, एतदस्य वीर्यम् । शुचि
वीर्यमेवास्मिन्नेतद्दधाति, तद्वेतयैवास्मिंस्तद्दधाति । यदा ह्येवास्मिन्नेतामाहुतिं जुहोति, अथास्यैतद्वीर्यं
शुच्युज्ज्वलति ॥ ८ ॥
तस्मादाहुः—एतामेवाहुतिं हुत्वाथोत्तराणि हवींषि नाद्रियेत । एतयैव तं काममाप्नोति, यमभि-
काममुत्तराणि हवींषि निर्वपतीति । तद्ु निर्वपेदेवोत्तराणि हवींषि । परोक्षमिव वा एतत्—यददः,
तदिदमितीव ॥ ९ ॥

---

तत्प्राप्तिकारणमाह—स वा इत्यादिना । पवमानहविर्भिर्हि जातेऽग्नौ प्राणान्नवीर्याणि यथाक्रमं स्थाप्यन्ते ।
' तत् ' सर्वम् ' एतयैव ' पूर्णाहुत्या भवतीत्यर्थः ॥ ६ ॥ ७ ॥ ८ ॥
निर्वापपक्षमेव सिद्धान्तयति—उत्तराणीति । आधानानन्तरभाविनि 'अग्नये पवमानाय—' इत्यादिना विधेयानीत्यर्थः । परोक्षमिव
अतः पवमानेष्टिकार्यस्य पूर्णाहुत्यैव कृतत्वादन्येषामनिर्वापपक्षं निगमयति—तस्मादाहुरिति ।
' एतत् ' परोक्षमिव, पवमानेष्टिभिः ' तत्—
वेति । ' यददः ' प्राणान्नवीर्यधारणं पूर्णाहुत्याऽग्नौ क्रियते,

---

१—" अग्नये पवमानाय—प्रथमा " ( का. श्रौ. सू. ४. २५० ) " अग्नये पावकायाग्नये शुचये " ( का. श्रौ. सू. ४. २५१ ) ।
२—" आधानादनन्तरभवानि " इति पा० । ३—' यददः ' इति क० ।

स यदग्नये पवमानाय निर्व्वपति । प्राणो वै पवमानो यदा वै जायतेऽथ प्राणोऽथ यावन्न जायते मातुर्व्वैव तावत्प्राणमनुप्राणिति यथा वा तज्जातऽ-एवास्मिन्नेतत्प्राणं दधाति ॥ १० ॥

( त्यु ) अथ यदग्नये पावकाय निर्व्वपति । ( त्यु ) अन्नं वै पावकं तज्जा-तऽएवास्मिन्नेतदन्नं दधाति ॥ ११ ॥

(त्यु) अथ यदग्नये शुचये निर्व्वपति । व्वीर्य्यं व्वै शुचि यदा वाऽअन्नेन व्वर्द्धतेऽथ व्वीर्य्यं तदन्नेनैवैनमेतद्वर्द्धयित्वाथास्मिन्नेतद्वीर्य्यᳪं शुचि दधाति तस्मादग्नये शुचये ॥ १२ ॥

तद्धैतदेव सद्विपर्य्यस्तमिव । ( वा ) अग्निर्ह यत्र देवेभ्यो मनुष्यानभ्युपाव-र्त्तते तद्धेक्षाञ्चक्रे मैव सर्व्वेणेवात्मना मनुष्यानभ्युपावृतमिति ॥१३॥

---

स यदग्नये पवमानाय निर्वपति । प्राणो वै पवमानः, यदा वै जायतेऽथ प्राणः । अथ यावन्न जायते, मातुर्वैव तावत् प्राणमनुप्राणिति । यथा वा—तज्जात एवास्मिन्नेतत्प्राणं दधाति ॥ १० ॥

अथ यदग्नये पावकाय निर्वपति । अन्नं वै पावकम्, तज्जात एवास्मिन्नेतदन्नं दधाति ॥ ११ ॥

अथ यदग्नये शुचये निर्वपति । वीर्यं वै शुचि । यदा वा अन्नेन वर्द्धते, अथ वीर्यम् । तदन्नेनैवैनमेतद् वर्द्धयित्वा, अथास्मिन्नेतद् वीर्यं शुचि दधाति । तस्मादग्नये शुचये ॥ १२ ॥

तद्धैतदेव सद्विपर्यस्तमिव । अग्निर्ह यत्र देवेभ्यो मनुष्यानभ्युपावर्तते । तद्धेक्षाञ्चक्रे—मैव सर्वेणे-वात्मना मनुष्यानभ्युपावृतमिति ॥ १३ ॥

---

इदम्—इति—इव ' प्रत्यक्षत एव क्रियते; पवमानपावकशुचिशब्दैः प्राणान्नवीर्याणां प्रतिपादनात् । अतस्ता इष्टयो नियमेन कर्त्तव्या इत्यर्थः ॥ ९ ॥

ता इष्टीर्विधाय प्रशंसति—स यदित्यादिना । प्राणो वै पवमान इति । पवनक्रिया हि वायुधर्मः, प्राणश्च वाय्वात्मक इति पवमानशब्देन तत्प्रतिपादनम् । एतेन चाग्निं विशिंषन् प्राणमेवास्मिन् जातेऽग्नौ स्थापितवान् भवति । जननात् पूर्वं मातुर्गर्भावस्थस्य तु प्राणो मातुः प्राणादभिन्न इति न तत्र पृथक् तद्धारणापेक्षेत्यर्थः १०॥११

अथ यदग्नये शुचय इति । यदा वा अन्नेनेति लौकिकदृष्टान्तकथनम् । अन्नेनैवैनमिति । पावकेष्टिरूपे-णान्नेनाग्निं ' वर्द्धयित्वा ' अनन्तरमेव ' अस्मिन् ' अग्नावनया तृतीयेष्टया ' शुचि ' दीप्यमानं ' वीय ' च धारयतीत्यर्थः ॥ १२ ॥

तद्धैतदिति । ' तदेतत् ' सर्वं पूर्णाहुतिपक्षे ' सत् ' विद्यमानमपि ' विपयस्तमिव ' भवति । अतो नासौ पक्षो युक्त इत्यर्थः । न केवलमेतावदेवेष्टीनां प्रयोजनम्, अपि तु मनुष्यैराधीयमानस्याग्नेः कार्त्स्न्यमप्याभिः

---

१–' एवमादिनेष्टी–' इति पा० क० । २–'प्राणा ' इति क. पा. । ३–' पवमानक्रिया हि वायुधर्मः प्राणः, स वाय्वात्मकः ' इति क. पाठः । ४–' जानिते ' इति क० पा० ।

स एतास्तिस्रस्तनूरेषु लोकेषु विन्यधत्त । यदस्य पवमानꣳ रूपमासीत्तदस्यां पृथिव्यां न्यधत्ताथ यत्पावकं तदन्तरिक्षेऽथ यच्छुचि तद्दिवि तद्वाऽऋषयः प्रतिबुबुधिरे यऽउ तर्ह्यृषयऽआसुरसर्वेण वै नऽआत्मनाग्निरभ्युपावृतदिति तस्माऽएतानि हवीꣳषि निरवपन् ॥ १४ ॥

( न्त्स ) स यदग्नये पवमानाय निर्वपति । यदेवास्यास्यां पृथिव्याꣳरूपं तदेवास्यैतेनाप्नोत्यथ यदग्नये पावकाय निर्वपति यदेवास्यान्तरिक्षे रूपं तदेवास्यैतेनाप्नोत्यथ यदग्नये शुचये निर्वपति यदेवास्य दिवि रूपं तदेवास्यैतेनाप्नोत्येवमु कृत्स्नमेवाग्निमनपनिहितमाधत्ते तस्मादु निर्वपेदेवोत्तराणि हवीꣳषि॥ १५ ॥

---

स एतास्तिस्रस्तनूरेषु लोकेषु विन्यधत्त । यदस्य पवमानं रूपमासीत्, तदस्यां पृथिव्यां न्यधत्त। अथ यत्पावकम्, तदन्तरिक्षे । अथ यच्छुचि, तद्दिवि । तद्वा ऋषयः प्रतिबुबुधिरे; य उ तर्ह्यृषय आसुः । असर्वेणैव न आत्मनाग्निरभ्युपावृतादिति । तस्मा एतानि हवींषि निरवपन् ॥ १४ ॥

स यदग्नये पवमानाय निर्वपति—यदेवास्यास्यां पृथिव्यां रूपम्, तदेवास्यैतेनाप्नोति । अथ यदग्नये पावकाय निर्वपति—यदेवास्यान्तरिक्षे रूपम्, तदेवास्यैतेनाप्नोति । अथ यदग्नये शुचये निर्वपति यदेवास्य दिवि रूपम्, तदेवास्यैतेनाप्नोति । एवमु कृत्स्नमेवाग्निमनपनिहितमाधत्ते । तस्मादु निर्वपेदेवोत्तराणि हवींषि ॥ १५ ॥

---

सम्पद्यत[1] इत्याख्यायिकापुरस्सरमाह—**अग्निर्ह यत्रेति**। **अभ्युपावृतमिति** । अभ्युपागममित्यर्थः । वृतेर्लुङि उत्तमैकवचने द्युतादित्वात् ( पा. सू. ३ । १ । ५५ ) च्लेरङ् ॥ १३ ॥

**स एतास्तिस्र**[2] इति । ' सः ' अग्निर्हि मनुष्यान् प्रत्यागमनसमये ' एताः ' पवमानपावकशुच्याख्याः ' तिस्रः ' आत्मीयाः ' तनूः ' पृथिव्यन्तरिक्षद्युलोकेषु यथाक्रमं निधाय ' असर्वेणं[3] ' अकृत्स्नेनैव ' आत्मना ' स्वरूपेण अस्मान् ' अभि '—लक्ष्य ' उपावृतत् ' उपागमत् । ' इति ' इममर्थम् ' ऋषयः ' अबुध्यन्त । ' तस्मै ' अग्नये कार्त्स्न्यसम्पादनाय पवमानहवींषि निरवपन्नित्यर्थः ॥ १४ ॥

**स यदग्नये पवमानायेत्यादि** । स्पष्टम् । **अनपनिहितमाधत्त** इति । यत् पृथिव्यादिष्वग्निना निक्षिप्तमात्मीयं रूपम् , तदाभिः पवमानेष्टिभिः स्वीकृत्य ' कृत्स्नमेव ' तम् ' अग्निम् ' आहितवान् भवतीत्यर्थः । **तस्मादि**ति, निर्वापपक्षनिगमनम् । कात्यायनोऽपि "द्वादशाहान्ते तनूहवींषि निर्वपति" ( का. श्रौ. सू. ४. २४९ )—इति तनूरूपपवमानेष्टिनिर्वापं प्रक्रम्य " सद्यो वा न वा" ( का. श्रौ. सू. ४. २४९ ) इत्यकरणपक्षमपि सूत्रयामास ॥ १५ ॥

---

१–' संपाद्यते ' इ. क. पा. । २–" आग्नेय एव वा पुरस्तादादित्यस्य " इति का. श्रौ. सू. १० । ११ । ३–' न सर्वेण ' इ. क. पा. ।

केवलबर्हिः प्रथमꣳ हविर्भवति समानबर्हिषी ऽउत्तरे ऽअयं वै लोकः प्रथमꣳ हविरथेदमन्तरिक्षं द्वितीयं द्यौरेव तृतीयं बहुलेव वा इयं पृथिवी लेलयेवान्तरिक्षं लेलयेवासौ द्यौरुभे चिदेनां प्रत्युद्यामिनी स्तामिति तस्मात्समानबर्हिषी ॥ १६ ॥

अष्टाकपालाः सर्वे पुरोडाशा भवन्ति । ( न्त्य ) अष्टाक्षरा वै गायत्री गायत्रमग्नेश्छन्दः स्वेनैवैनमेतच्छन्दसाधत्ते तानि सर्वाणि चतुर्विꣳशतिः कपालानि सम्पद्यन्ते चतुर्विꣳशत्यक्षरा वै गायत्री गायत्रमग्नेश्छन्दः स्वेनैवैनमेतच्छन्दसाधत्ते गायत्र्यो याज्यानुवाक्या भवन्ति गायत्रमग्नेश्छन्दः स्वेनैवैनमेतच्छन्दसाधत्ते ॥ १७ ॥

---

केवलबर्हिः प्रथमं हविर्भवति । समानबर्हिषी उत्तरे । अयं वै लोकः प्रथमं हविः, अथेदमन्तरिक्षं द्वितीयम्, द्यौरेव तृतीयम् । बहुलेव वा इयं पृथिवी, लेलयेवान्तरिक्षम्, लेलयेवासौ द्यौः; उभे चिदेनां प्रत्युद्यामिनी स्तामिति । तस्मात्समानबर्हिषी ॥ १६ ॥

अष्टाकपालाः सर्वे पुरोडाशा भवन्ति। अष्टाक्षरा वै गायत्री, गायत्रमग्नेश्छन्दः; स्वेनैवैनमेतच्छन्दसाधत्ते । तानि सर्वाणि चतुर्विंशतिः कपालानि सम्पद्यन्ते । चतुर्विंशत्यक्षरा वै गायत्री, गायत्रमग्नेश्छन्दः; स्वेनैवैनमेतच्छन्दसाधत्ते । गायत्र्यो याज्यानुवाक्या भवन्ति । गायत्रमग्नेश्छन्दः, स्वेनैवैनमेतच्छन्दसाधत्ते ॥ १७ ॥

---

केवलबर्हिरिति । अग्नये पवमानायैतत्[1] यत् 'प्रथमं हविः', तत् 'केवलबर्हिः' यजनम्, न साधारणं तन्त्रयुक्तं कर्तव्यम्[2]; हविरन्तरेण न समुच्चित्यानुष्ठेयमित्यर्थः । समानबर्हिषी इति । 'उत्तरे' तु हविषी समानतन्त्रे कार्ये इत्यर्थः । तदेतद्द्वयमुपपादयति "अयं वा इत्यादिना । 'बहुला, इव' स्थूलेव । लेलयेवान्तरिक्षमिति । लीनमिव ह्यन्तरिक्षं नीरूपत्वात् । तथा 'द्यौः' अपि विप्रकृष्टत्वाल्लीयमानेव भवति[3] । अत एते 'उभे' अपि 'एनाम्' पृथिवीं 'प्रति उद्यामिनी' 'स्ताम्' बाधितुमुद्युक्ते[4] भवेताम् । अतः प्रथमं हविः पृथक्तन्त्रं कार्यम्, उत्तरे तु समानतन्त्रे कार्ये-इति निगमयति—तस्मादिति ॥ १६ ॥

अष्टाकपालाः सर्व इत्यादि । स्पष्टम् । गायत्र्यो याज्यानुवाक्या भवन्तीति । यागान्तरेषु हि पुरोनुवाक्या गायत्री, याज्या त्रिष्टुप्; अत्र तु पुरोनुवाक्या याज्याश्च सर्वा गायत्र्यः कर्तव्याः । अत एवाश्वलायनेन तथैव सूत्रि-

---

१–'पवमानायेति यत्' इति क० पा० । २–'जननसाधारणम्; तत्र युक्तम्'–इति क० पा० । ३–'लीयमानेवाल्पतरमिव भवति' इति क० पु० पा० । ४–'हन्तुमुद्युक्ते' इति पा० । ५–कात्यायनोऽप्येवमाह–" अग्नऽआयूꣳष्यग्नेपवस्वेति प्रथमस्य हविषो याज्यानुवाक्ये । द्वितीयायाम् अग्नेपावकरोचिषासनः पावकदीदिव इति हविषः । अग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः कविः । शुचीरोचतऽआहुतः । उदग्नेशुचयस्तवशुक्राभ्राजंतऽईरते ॥ तवज्योतीꣳष्यर्चय इति द्वितीयस्य । इति हौत्रिकपरिशिष्टं अ. २ खंडः १–२ । तथा स्विष्टकृत्सूत्रमपि । गायत्र्यावीडितवत्यौ संयाज्ये । अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजं । होतारꣳ रत्नधातमम् । तंत्वामज्मेषुवाजिनं तन्वानाअग्नेऽअध्वरं । धुनिꣳहोतारमीडित इति । खंड १ । द्वितीयायां अग्निवत्यौ संयाज्ये । अग्निनाऽग्निः समिध्यते कविर्गृहपतिर्युवा । हव्यवाड्जुह्वास्यः । त्वꣳह्यग्नेऽअग्निनाविप्रोविप्रेण संन्त्सता । सखासख्यासमिध्यसे । इति हौत्रिकपरिशिष्टं अ० २ खंड० । १–२ ।

( सेऽथा ) अथादित्यै चरुं निर्वपति । प्रच्यवत इव वा एषोऽस्मा-ल्लोकाद्य एतानि हवीᳬषि निर्वपतीमान्हि लोकान्त्समारोहन्नेति ॥ १८ ॥

स यददित्यै चरुं निर्वपति । ( सी ) इयं वै पृथिव्यदितिः सेयं प्रतिष्ठा तदस्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठति तस्माददित्यै चरुं निर्वपति ॥ १९ ॥

तस्यै विराजौ संयाज्ये स्यातामित्याहुः । ( वि ) विराड्डीयमित्यथो त्रिष्टुभौ त्रिष्टुब्भीयमित्यथो जगत्यौ जगती हीयमिति विराजावित्त्वेव स्याताम् ॥ २० ॥

तस्यै धेनुर्दक्षिणा । धेनुरिव वाऽइयं मनुष्येभ्यः सर्वान्कामान्दुहे माता धेनुर्मातेव वाऽइयं मनुष्यान्बिभर्त्ति तस्माद्धेनुर्दक्षिणैतन्न्वेकमयनम् ॥ २१ ॥

---

अथादित्यै चरुं निर्वपाति । प्रच्यवत इव वा एषोऽस्माल्लोकाद्—य एतानि हवींषि निर्वपति, इमान् हि लोकान् समारोहन्नेति ॥ १८ ॥

स यददित्यै चरुं निर्वपति, इयं वै पृथिव्यदितिः, सेयं प्रतिष्ठा—तदस्यामेवैतत् प्रतिष्ठायां प्रतितिष्ठति । तस्माददित्यै चरुं निर्वपति ॥ १९ ॥

तस्यै विराजौ संयाज्ये स्यातामित्याहुः विराड्डीयमिति । अथो त्रिष्टुभौ । त्रिष्टुब्भीयमिति । अथो जगत्यौ । जगती हीयमिति । विराजावित्त्वेव स्याताम् ॥ २० ॥

तस्यै धेनुर्दक्षिणा धेनुरिव वा इयं मनुष्येभ्यः सर्वान् कामान् दुहे । माता धेनुः । मातेव वा इयं मनुष्यान् बिभर्त्ति । तस्माद्धेनुर्दक्षिणा । एतन्न्वेक मयनम् ॥ २१ ॥

---

अथादित्यै चरुमिति । " आदित्यै चरुस्तृतीया " ( का. श्रौ. सू. ४ । २ । २९२ ) इमान् हि लोकान्त्समारोहन्नेतीति । पृथिव्यन्तरिक्षद्युलोकात्मकानि पवमानहवींषि क्रमेण निर्वपंस्तद्द्वारा इमानेव पृथिव्यादिलोकान् सोपानक्रमेण सम्यगारोहन्नस्माल्लोकात् ' प्रच्यवते ' । अतस्तत्परिहारायादित्येष्टिः कर्तव्येत्यर्थः १८॥१९

तस्यै विराजौ संयाज्ये—इति । " प्रेद्धो अग्ने " " इमो अग्ने " ऋ. सं. ७ । १ । १ । ३, १८. ) इत्येते स्विष्टकृतो याज्यानुवाक्ये ' स्याताम् ' इत्यर्थः । विराजावित्त्वेवेति । तु—शब्देन त्रिष्टुब्जगतीपक्षौ व्यावर्त्येते ॥ २० ॥

तस्यै धेनुरिति । ( का. श्रौ. सू ४. २९६ । ) एतन्न्वेकमयनमिति । पवमानेष्टियजताम् ' एतत् नु एकम् ' अनुष्ठानस्य विधानम् ॥ २१ ॥

तम्—" अग्न आयूंषि पवसेऽग्ने पवस्व स्वपाः, स नः पावक दीदिवोऽग्ने पावक रोचिषाऽग्निः शुचिव्रततम उदग्ने शुचयस्तवेति ( आश्व. श्रौ. सू. २ । १ । २०—२९ ) ॥ १७ ॥

---

१—" तृतीयायां विराजौ संयाज्ये । प्रेद्धोऽअग्ने० । वा० सं० अ० १७ म० ७६ । " इमोऽअग्नेवीततमानिहव्याजलोवक्षिदेवतातिमच्छ । प्रतिनई २ सुरभीणिव्यन्त्विति " । का. हौ. सू. अ. २ खंडः ३ । सां० सू० २ । २ । १५ ॥

(म) अथेदं द्वितीयम् । (मा) आग्नेयमेवाष्टाकपालं पुरोडाशं निर्व्वपति परोऽक्षमिव वाऽएतद्यदग्नये पवमानायाग्नये पावकायाग्नये शुचय ऽइतीवाथाञ्जसैवैनमेतत्प्रत्यक्षमाधत्ते तस्मादग्नयेऽथादित्यै चरुं निर्व्वपति स य एव चरोर्बन्धुः स बन्धुः ॥ २२ ॥

इति प्रथमप्रपाठके पञ्चमं ब्राह्मणम् ॥ १ ॥ ५ ॥ २ ॥ १ ॥

घ्नन्ति वाऽएतद्यज्ञम् । यदेनं तन्वते यन्न्वेव राजानमभिषुण्वन्ति तत्तं घ्नन्ति यत्पशुँ संज्ञपयन्ति विशासति तत्तं घ्नन्त्युलूखलमुसलाभ्यां दृषदुपलाभ्याँ हविर्यज्ञं घ्नन्ति ॥ १ ॥

---

अथेदं द्वितीयम्, आग्नेयमेवाष्टाकपालं पुरोडाशं निर्वपति । परोक्षमिव वा एतत्—यदग्नये पवमानाय, अग्नये पावकाय, अग्नये शुचये इतीव । अथाञ्जसैवैनमेतत् प्रत्यक्षमाधत्ते—तस्मादग्नये । अथादित्यै चरुं निर्वपति । स य एव चरोर्बन्धुः स बन्धुः ॥ २२ ॥

दक्षिणाब्राह्मणम् ।

घ्नन्ति वा एतद्यज्ञं यदेनं तन्वते । यन्न्वेव राजानमभिषुण्वन्ति, तत्तं घ्नन्ति । यत् पशुं संज्ञपयन्ति, विशासति, तत्तं घ्नन्ति । उलूखलमुसलाभ्यां दृषदुपलाभ्यां हविर्यज्ञं घ्नन्ति ॥ १ ॥

---

अन्यदप्यस्तीत्याह—**अथेदमिति** । **आग्नेयमेवेति** । न तु पवमानादिविशेषणमादरणीयमित्येवकारार्थः । **परोक्षमिव वा** इति । पवमानादिविशेषणैर्विशेष्यमाणोऽग्निस्तत्तद्वैशिष्ट्यद्वारा पारोक्ष्यमापद्यते; अतस्तत्परिहारेण ‘ अञ्जसा ’ ऋजुनैव मार्गेण केवलाग्नये, पवमानायाग्नये, पावकायाग्नये, शुचयेऽग्नये निर्वपन् तं प्रत्यक्षत एव स्वीकरोतीत्यर्थः । अस्मिन्नपि पक्षे आदित्ययागः कर्त्तव्य इत्याह—**अथादित्या** इति । **स य एवेति** । प्रागुक्तब्राह्मणातिदेशः ॥ २२ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये
द्वितीयकाण्डे द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ २–२–१ ॥

षड्द्वादशादिदक्षिणा आधानस्य विधास्यन् तन्नाम निर्वक्तुं प्रस्तौति—**घ्नन्तीति** । **यदेनं तन्वत** इति । सामान्येनोक्तं विभजति—**यन्न्वेवेति** । यज्ञं सोमाभिषवपशुसंज्ञपनावहननादिकरणात् । तद्द्वारा तत्सम्बन्धी यज्ञ एव हतो भवतीत्यर्थः ॥ १ ॥

---

१–“ आग्नेय एव वा पुरस्तादादित्यस्येति ” कात्यायनः अ० ४ खं० १० सू०: ११ अस्मिन्पक्षे=आग्नेयीष्टिः १ अदितीष्टिश्च २ तीष्टिद्वयमेव न पवमानेष्टिः पावकेष्टिश्चेति ।

स॒ऽए॒ष य॒ज्ञो ह॒तो न॒ द॒द॒क्षे । तं दे॒वा द॒क्षिणा॑भिरदक्षयं॒स्तद्य॒देनं॒ द॒क्षिणा॑भिरदक्षयं॒स्त॒स्माद्द॒क्षिणा॒ ना॒म त॒द्य॒दे॒वा॒त्र य॒ज्ञ॒स्य ह॒त॒स्य व्य॒थ॒ते त॒दे॒वा॒स्यै॒तद्द॒क्षिणा॑भिर्दक्षय॒त्य॒थ स॒मृ॒द्ध ए॒व य॒ज्ञो भ॑वति त॒स्माद्द॒क्षिणा द॑दाति ॥ २ ॥

ता वै षड् द॑द्यात् । (त्ष) ष॒ड् वा॒ऽऋ॒तव॑: सं॒व्वत्स॒र॒स्य सं॒व्वत्स॒रो य॒ज्ञः प्र॒जाप॑तिः स या॒वाने॒व य॒ज्ञो या॒वत्य॒स्य मा॒त्रा ता॒वती॑भिर्दक्षयति ॥ ३ ॥

द्वाद॑श द॒द्यात् । (द्द्वा) द्वाद॑श॒ वै मा॒साः सं॒वत्स॒र॒स्य सं॒व्वत्स॒रो य॒ज्ञः प्र॒जाप॑तिः स या॒वाने॒व य॒ज्ञो या॒वत्य॒स्य मा॒त्रा ता॒वती॑भिर्दक्षयति ॥ ४ ॥

च॒तुर्वि॑ꣳ श॒तिं द॒द्यात् । (च्च)च॒तु॒र्व्वि॑ꣳ श॒तिर्व्वै॒ सं॒व्वत्स॒र॒स्यार्द्धमा॒साः सं॒व्वत्स॒रो य॒ज्ञः प्र॒जाप॑तिः स या॒वाने॒व य॒ज्ञो या॒वत्य॒स्य मा॒त्रा ता॒वती॑भिर्दक्षयत्येषा मा॒त्रा द॒क्षिणा॑नां द॒द्यात्त्वे॒व य॒था॒श्र॒द्धं भूय॑सी॒स्त॒द्य॒द्द॒क्षिणा द॒दाति[१] ॥ ५ ॥

---

स एष यज्ञो हतो न ददक्षे । तं देवा दक्षिणाभिरदक्षयन् । तद् यदेनं दक्षिणाभिरदक्षयन्, तस्माद्दक्षिणा नाम । तद्यदेवात्र यज्ञस्य हतस्य व्ययते तदेवास्यैतद्दक्षिणाभिर्दक्षयति, अथ समृद्ध एव यज्ञो भवति । तस्माद्दक्षिणा ददाति ॥ २ ॥

ता वै षड् दद्यात् । षड् वा ऋतवः सम्वत्सरस्य । सम्वत्सरो यज्ञः, प्रजापतिः । स यावानेव, यज्ञः, यावत्यस्य मात्राः तावतीभिर्दक्षयति ॥ ३ ॥

द्वादश दद्यात् । द्वादश वै मासाः सम्वत्सरस्य । सम्वत्सरो यज्ञः, प्रजापतिः । स यावानेव यज्ञः यावत्यस्य मात्राः तावतीभिर्दक्षयति ॥ ४ ॥

चतुर्विंशतिं दद्यात् । चतुर्विंशतिर्वै सम्वत्सरस्यार्द्धमासाः । सम्वत्सरो यज्ञः, प्रजापतिः । स यावानेव यज्ञः यावत्यस्य मात्राः तावतीभिर्दक्षयति । एषा मात्रा दक्षिणानाम् । दद्यात् त्वेव यथाश्रद्धम् । भूयसीस्तत्–यद् दक्षिणा ददाति ॥ ५ ॥

---

**स एष यज्ञ** इति । **न ददक्ष** इति । फलं जनयितुं न शशाकेत्यर्थः । ' अदक्षयन् ' दक्षं समर्थमकुर्वन् । **तद्यदेन**मित्यादि दक्षिणानामनिर्वचनम् । एवं पुरावृत्तमुपन्यस्य प्रकृते योजयति–**तद्यदेवे**ति । "व्यृद्धं समर्द्धयतीति दक्षिणा " इति यास्कोऽपि[१] ॥ २ ॥

**ता वा** इति, दक्षिणादानविधिः । द्वादशचतुर्विंशतिपक्षावत्र वैकल्पिकौ द्रष्टव्यौ । अत एवोक्तं सूत्रकृता– "षड् दक्षिणाः प्रविभज्य ददाति, द्वादश, चतुर्विंशति वा" (का० श्रौ० सू० ४. २७४) इति । आपस्तम्बोऽप्याह स्म– " षड् देया द्वादश देयाश्चतुर्विंशतिर्देया इति ता विकल्प्यन्ते "–( आ० श्रौ० सू० ५ । २ । १३ । १४. ) इति ॥ ३ ॥ ४ ॥

**एषा मात्रे**ति । एतद् दक्षिणानां परिमाणमित्यर्थः । इतोऽधिकमपि यथाविभवमिच्छानुसारेण देयमिति विधत्ते–**दद्यात् त्वे**वेति ॥ ५ ॥

---

१–निरु. अ० १ पा. ३. सं० ७ । २–" भूयसीश्च यथाश्रद्धम् " का० श्रौ० सू० ४ । २५५ ।

द्वया वै देवा देवाः । ( ऽ ) अहैव देवा ऽअथ ये ब्राह्मणाः शुश्रुवाꣳसो ऽनूचानास्ते मनुष्यदेवास्तेषां द्वेधा विभक्त एव यज्ञ आहुतय एव देवानां दक्षिणा मनुष्यदेवानां ब्राह्मणानाꣳ शुश्रुवुषामनूचानानामाहुति-भिरेव देवान्प्रीणाति दक्षिणाभिर्मनुष्यदेवान्ब्राह्मणाञ्छुश्रुवुषोऽनूचानांस्त ऽएनमुभये देवाः प्रीताः सुधायां दधति ॥ ६ ॥

तद्यथा योनौ रेतो दध्यात् । ( दे ) एवमेवैतदृत्विजो यजमानं लोके दधति तद्यदेभ्य ऽएतद्ददाति ये मेदꣳ सम्प्रापिपन्निति नु दक्षिणानाम् ॥ ७ ॥

देवाश्च वाऽअसुराश्च । ( श्रो ) उभये प्राजापत्याः पस्पृधिरे तऽउभय ऽएवानात्मान आसुर्मर्त्त्या ह्यासुरनात्मा हि मर्त्यस्तेषूभयेषु मर्त्येष्वग्नि-रेवामृत आस तꣳ ह स्मोभयेऽमृतमुपजीवन्ति स यꣳ ह स्मैषां घ्नन्ति तद्ध स्म वै स भवति ॥ ८ ॥

---

द्वया वै देवाः । देवा अहैव देवाः । अथ ये ब्राह्मणाः शुश्रुवांसोऽनूचानाः, ते मनुष्यदेवाः । तेषां द्वेधा विभक्त एव यज्ञः । आहुतय एव देवानाम्, दक्षिणा मनुष्यदेवानां ब्राह्मणानां शुश्रुवुषामनूचानानाम् । आहुतिभिरेव देवान् प्रीणाति, दक्षिणाभिर्मनुष्यदेवान् ब्राह्मणाञ्छुश्रुवुषोऽनूचानान् । त एनमुभये देवाः प्रीताः सुधायां दधति ॥ ६ ॥

तद्यथा—योनौ रेतो दध्यात्, एवमेवैतदृत्विजो यजमानं लोके दधति । तद्ध यदेभ्य एतद्ददाति । ये मेदं सम्प्रापिपन्, इति नु दक्षिणानाम् ॥ ७ ॥

फलवादब्राह्मणम् ।

देवाश्च वा असुराश्चोभये प्राजापत्याः पस्पृधिरे । त उभय एवानात्मान आसुः मर्त्त्या आसुः, अनात्मा हि मर्त्यः । तेषूभयेषु मर्त्त्येष्वग्निरेवामृत आस । तं ह स्मोभयेऽमृतमुपजीवन्ति । स यं ह स्मैषां घ्नन्ति, तद्ध स्म वै स भवति ॥ ८ ॥

---

आहुतिदृष्टान्तेनैतद्दक्षिणादानं प्रशंसति—**द्वया वा** इति । द्वैविध्यमेव दर्शयति—**देवा अहैवेति** । अग्न्यादि-देवरूपा एव देवाः केचित्, अपरे तु ब्राह्मणरूपदेवास्ते विशेष्यन्ते—**शुश्रुवांस** इत्यादिना । 'शुश्रुवांसः' बहु-श्रुताः, 'अनूचानाः' साङ्गवेदाध्ययनेन ज्ञातार्थानुष्ठानपराः । एते मनुष्यरूपा देवाः । अत एव तैत्तिरीयकम्—"एते देवाः प्रत्यक्षं यद् ब्राह्मणाः" ( तै. सं. १. ७. ३. १ ) इति । यथा आहुतिभिरग्न्यादिदेवानां प्रीतिर्यज्ञे, एवं मनुष्यदेवान् प्रीणयितुं दक्षिणादानमित्यर्थः ॥ ६ ॥

**तद्यथा योनाविति** । यथा गर्भाशये सिक्तं रेतो गर्भरूपेण परिणमति, न व्यर्थो भवति; एवमेवर्त्विजो यज-मानं कर्मफले स्वर्गलोके स्थापयन्तीत्यर्थः । **ये मेदमिति** । 'ये' खलु ऋत्विजो 'मा' माम् 'इदम्' कर्म-फलं 'सम्प्रापिपन्' सम्यक् प्रापितवन्तः 'इति' अनेनाभिप्रायेणैभ्यो दक्षिणा देयेत्यर्थः ॥ ७ ॥

अथाधानस्य भ्रातृव्यजयहेतुत्वं वक्तुमाख्यायिकामाह—**देवाश्चेति** । **अनात्मान आसुरिति** । आत्मज्ञानरहिताः

ततो देवाः । ( स्तु ) तनीयाᳪसं इव परिशिशिषिरे तेऽर्चन्तः श्राम्यन्तश्चेरुरुतासुरान्त्सपत्नान्मर्त्यानभिभवेमेति तऽएतदमृतमग्न्याधेयं ददृशुः ९
( स्ते ) ते होचुः । ( हं ) हन्तेदममृतमन्तरात्मन्नादधामहै तऽ इदममृतमन्तरात्मन्नाधायामृता भूत्वाऽस्तर्य्या भूत्वा स्तर्य्यान्त्सपत्नान्मर्त्यानभिभविष्याम इति ॥ १० ॥

ते होचुः । ( रु ) उभयेषु वै नोऽयमग्निः प्र त्वेवासुरेभ्यो ब्रवामेति ॥ ११ ॥

ते होचुः । ( रा ) आ वै वयमग्नी धास्यामहेऽथ यूयं किं करिष्यथेति १२

ते होचुः । ( रु ) अथैनं वयं न्येव धास्यामहेऽत्र तृणानि दहात्र दारूणि

---

ततो देवास्तनीयांस इव परिशिशिषिरे । तेऽर्चन्तः श्राम्यन्तश्चेरुः—उतासुरान् सपत्नान् मर्त्यानभिभवेम इति । त एतदमृतमग्न्याधेयं ददृशुः ॥ ९ ॥

ते होचुः—हन्तेदममृतमन्तरात्मन्नादधामहै, त इदममृतमन्तरात्मन्नाधाय, अमृता भूत्वा, अस्तर्य्या भूत्वा; स्तर्यान् सपत्नान्मर्त्यानभिभविष्याम इति ॥ १० ॥

ते होचुः—उभयेषु वै नोऽयमग्निः, प्र तु एवासुरेभ्यो ब्रवामेति ॥ ११ ॥

ते होचुः—आ वै वयमग्नी धास्यामहे, अथ यूयं किं करिष्यथेति ॥ १२ ॥

ते होचुः—अथैनं वयं न्येव धास्यामहे 'अत्र तृणानि दह' 'अत्र दारूणि दह' 'अत्रौदनं पच' 'अत्र मांसं पच' इति । स यं तमसुरा न्यदधत, तेनानेन मनुष्या भुञ्जते ॥ १३ ॥

---

अविवेकिनो जाताः । अनात्मत्वादेव हेतोः 'मर्त्याः' मरणधर्म्माश्च सञ्जाताः । 'तेषूभयेषु' देवासुरेषु 'मर्त्येषु' सत्सु 'अग्निरेव' अमरणशीलः 'आस' । यं ह स्मैषामिति । 'एषाम्' देवानां मध्ये 'यम्' एव असुराः 'घ्नन्ति,' 'तत्' तत्र 'स वै हत' एव 'भवति' ॥ ८ ॥

**ततो देवा** इति । एवं क्रमेणासुरैर्हतेषु देवाः अल्पीयांस एव परिशिष्टा बभूवुः । ( मरणधर्मोपेतानसुरान् वयमभिभवेमेत्यभिप्रायेण ) 'ते' देवाः 'अर्चन्तः, तपस्यन्तः, 'श्राम्यन्तः' श्रमं प्राप्नुवन्तः 'चेरुः' **त एत**-दित्यादि । स्पष्टम् ॥ ९ ॥

**ते होचुरिति** । **अमृतमन्तरात्मन्निति** । मरणधर्मरहितमग्निम् 'आत्मनि' हृदये आधाय वयमपि 'अमृता भूताः' अत एव 'अस्तर्य्याः' अहिंस्याश्च भूता इत्यर्थः ॥ १० ॥

**ते होचुरिति** । **उभयेषु वा** इति । देवासुरेषु 'उभयेषु' अस्मासु स्थितः, 'अयमग्निः' अतः 'असुरेभ्यः' । निवेद्यैवास्माभिः स आधातव्य इति विचारितवन्त इत्यर्थः ॥ ११ ॥

**ते होचुरित्यादि** । निगदसिद्धम् ॥ १२ ॥

**ते होचुरिति** । **न्येव धास्यामह** इति । यदि यूयं देवा अग्निमाधास्यद्ध्वं, तर्हि वयमपि तमेवाग्निं निधास्या-

---

१–'तेषु भूतेषु' इति क० पा० । २–'अग्निरेक एव' इति क० पा० । ३-'तत्र स देवो हत एव भवति' इति क. पा. । 'तत्र सर्वहत एव भवति' इत्यपि क. पा. । 'तत्र सम स हत एव भवति' इत्यन्यमपि क. पाठः । ४–कोष्ठान्तर्गतः पाठः क० पुस्तके नोपलभ्यते । ५–'मरणरहितम्' इति क. पा. । ६–'अवाधातव्य' इति क. पा. ।

दहात्रौदनं पचात्र माꣳसं पचेति स यं तमसुरा न्युदधत तेनानेन मनुष्या भुञ्जते ॥ १३ ॥

( तेऽथै ) अथैनं देवाः । (ऽ) अन्तरात्मन्नादधत त ऽइमममृतमन्तरात्मन्नाधायामृता भूत्वाऽस्तर्य्या भूत्वा स्तर्य्यान्त्सपत्नान्मर्त्यानभ्यभवंस्तथो ऽएवैष एतदमृतमन्तरात्मन्नाधत्ते नामृतत्वस्याशास्ति सर्वमायुरेत्यस्तर्य्यो हैव भवति न हैनꣳ सपत्नस्तस्तूर्षमाणश्चन स्तृणुते तस्माद्यदाहिताग्निश्चानाहिताग्निश्च स्पर्द्धेतेऽआहिताग्निरेवाभिभवत्यस्तर्य्यो हि खलु स तर्हि भवत्यमृतः ॥ १४ ॥

( स्त ) तद्यत्रैनमदो मन्थन्ति । तज्जातमभि प्राणिति प्राणो वा ऽअग्निर्जातमेवैनमेतत्सन्तं जनयति स पुनरपानिति तदेनमन्तरात्मन्नाधत्ते सोऽस्यैषोऽन्तरात्मन्नग्निराहितो भवति ॥ १५ ॥

तमुद्दीप्य समिन्धे । (न्धऽ) इह यक्ष्यऽइह सुकृतं करिष्यामीत्येवैनमेतत्समिन्धे सोऽस्यैषोऽन्तरात्मन्नग्निराहितो भवति ॥ १६ ॥

---

अथैनं देवा अन्तरात्मन्नादधत । त इममम‍ृतमन्तरात्मन्नाधाय, अमृता भूत्वा, अस्तर्य्या भूत्वा; स्तर्यान् सपत्नान्मर्त्त्यानभ्यभवन् । तथो एवैष एतदमृतमन्तरात्मन्नाधत्ते । नामृतत्वस्याशास्ति, सर्वमायुरेति; अस्तर्यो हैव भवति । न हैनं सपत्नस्तुस्तूर्षमाणश्चन स्तृणुते । तस्माद्—यदाहिताग्निश्चानाहिताग्निश्च स्पर्द्धेते, आहिताग्निरेवाभिभवति । अस्तर्यो हि खलु स तर्हि भवत्यमृतः ॥ १४ ॥

तद्यत्रैनमदो मन्थति, तज्जातमभिप्राणिति । प्राणो वा अग्निः, जातमेवैनमेतत्सन्तं जनयति । स पुनरपानिति । तदेनमन्तरात्मन्नाधत्ते । सोऽस्यैषोऽन्तरात्मन्नग्निराहितो भवति ॥ १५ ॥

तमुद्दीप्य समिन्धे । इह यक्ष्ये, इह सुकृतं करिष्यामि, इत्येवैनमेतत्समिन्धे । योऽस्यैषोऽन्तरात्मन्नग्निराहितो भवति ॥ १६ ॥

---

महे । ‘ तृणानि दह ’ इत्याद्यसुरवाक्यम् । हे अग्ने ! अत्र पृथिव्याम् ‘ तृणानि दह, दारूणि दह ’ इत्येवमग्निं प्रेषयन्तो भूमौ तमस्थापयन्, यन्निहितवन्तोऽसुरास्तेनाग्निनाऽमुना मर्त्या भुञ्जते ॥ १३ ॥

**अथैन**मित्यादि । ‘ देवाः ’ तु ‘ एनम् ’ अग्निम् ‘ आत्मन् ’ आत्मनि, ‘ अन्तः ’ हृदयमध्ये ‘ आधाय ’ यथासङ्कल्पमकुषतेत्यथः ।

आख्यायिकासिद्धमर्थं प्रकृते योजयति—**तथो एवैष** इति । **अस्तर्यो ही**ति । अमृतरूपाग्निधारणेन यस्मादाहिताग्निरहिंस्यः, तस्माद् विवदमानोऽसावनाहिताग्निमभिभवितुं शक्नोतीत्यर्थः ॥ १४ ॥

नन्वग्निगार्हपत्याद्यायतने बहिराधीयते, कथं तस्यान्तर्द्धारणमिति, तत्राह—**तद्यत्रे**ति । **अभिप्राणिती**ति । मन्थनात् ‘ जातम् ’ ‘ तम् ’ अग्निम् ‘ अभि ’ उपरि प्राणनं करोति । **स पुनरपानिती**ति । अग्नेर्होपरि श्वासमुत्सृज्य तमेव श्वासं पुनरन्तर्नयेत् । तेन सार्द्धमग्निरप्यन्तः प्रविशन् यजमानस्य हृदय आहितो भवतीत्यर्थः ॥ १५ ॥

नियतस्याबाह्यस्याग्नेरुद्दीपनसमिन्धने विधत्ते—**तमि**ति । उद्दीपनं काष्ठप्रक्षेपः, समिन्धनं सम्यक् प्रज्वलनम्,

अन्तरेणागाद्व्यवृतदिति । न ह वाऽअस्यैतं कश्चनान्तरेणैति यावज्जीवति योऽस्यैषोऽन्तरात्मन्नग्निराहितो भवति तस्मादु तन्नाद्रियेत यदनुगच्छेन्न ह वाऽअस्यैषोऽनुगच्छति यावज्जीवति योऽस्यैषोऽन्तरात्मन्नग्निराहितो भवति ॥ १७ ॥

ते वाऽएते प्राणा ऽएव यदग्नयः । प्राणोदानावेवाहवनीयश्च गार्हपत्यश्च व्यानोऽन्वाहार्यपचनः ॥ १८ ॥

तस्य वाऽएतस्याग्न्याधेयस्य । सत्यमेवोपचारः स यः सत्यं वदति यथाऽग्निꣳसमिद्धं तं घृतेनाभिषिञ्चेदेवꣳ हैनꣳस उद्दीपयति तस्य भूयो-

---

अन्तरेणागाद् व्यवृतादिति । न ह वा अस्यैतं कश्चनान्तरेणैति, यावज्जीवति; योऽस्यैषोऽन्तरात्मन्नग्निराहितो भवति । तस्माद्ु तं नाद्रियेत, यदनुगच्छेत् । न ह वा अस्यैषोऽनुगच्छति, यावज्जीवति; योऽस्यैषोऽन्तरात्मन्नग्निराहितो भवति ॥ १७ ॥

ते वा एते प्राणा एव, यदग्नयः । प्राणोदानावेव, आहवनीयश्च गार्हपत्यश्च । व्यानोऽन्वाहार्यपचनः ॥ १८ ॥

### आहिताग्नेर्व्रतब्राह्मणम् ।

तस्य वा एतस्याग्न्याधेयस्य सत्यमेवोपचारः । स यः सत्यं वदति, यथा—अग्निं समिद्धं तं घृतेनाभिषिञ्चेत्, एवं हैनं स उद्दीपयति । तस्य भूयो भूय एव तेजो भवति, श्वः श्वः श्रेयान् भवति । अथ

---

तदुभयमन्तरग्नौ दर्शयति—इहेति । 'इह' अस्मिन् बाह्येऽग्नौ 'यक्ष्ये' यागं करिष्ये, तत्फलञ्च सम्पादयिष्यामीति यौ मनोव्यापारौ सङ्कल्पौ, ते एवान्तराहितस्याग्नेरुद्दीपनसमिन्धने इत्यर्थः । योऽस्यैषोऽन्तरात्मन्नग्निराहितो भवतीत्युपसंहारः ॥ १६ ॥

एवमन्तरग्निमादधानस्य व्यवायादिदोषोऽपि नास्तीति प्रतिपादयति—अन्तरेणेत्यादिना । अग्नियजमानयोर्मध्ये देवदत्तादेरागतेन च व्यवायादिभिः 'व्यवृतत्' व्यावृतो विमुखो भवेदिति यो दोषः, सोऽप्यत्र नास्ति । तत्र हेतुमाह—न ह वा इति । न खलु हृदयमध्ये स्थापितस्याग्नेर्यजमानस्य च मध्ये कोऽपि गच्छति यावज्जीवम्; अतो व्यवायशङ्का न कार्येति । एवं विदुषोऽग्न्यनुगमनशङ्कापि न कार्येत्याह—तस्मादिति । न ह वा अस्येति । बाह्यस्याग्नेरनुगमेऽपि अन्तराहितस्याग्नेर्यावज्जीवमवस्थानात्, न खल्वस्य यजमानस्यैषोऽग्निरनुगच्छत्युपशाम्यति ॥ १७ ॥

नन्वन्तर्गार्हपत्याद्यग्नयो न सन्ति, कथं तेषामनुगम इत्यत आह—ते वा इति । गार्हपत्यादीनां प्राणोदानव्यानात्मनाऽवस्थितत्वात् नोक्तदोष इत्यर्थः ॥ १८ ॥

आहिताग्निना सत्यमेव वदितव्यम्, न कदाचिदप्यनृतमित्युभयं प्रतिपादयति—तस्य वेत्यादिना ॥ १९ ॥

---

१–'तदुभयमान्तरेऽग्नौ' इति क्व. पा. । २–"अनृतातिथ्यपनोदपूतिदार्वाधानर्वा सपक्वनाव्युदकानि वर्जयेत्" का० श्रौ० सू० ४. २५७ ।

भूय एव तेजो भवति श्वःश्वः श्रेयान्भवत्यथ योऽनृतं वदति यथाऽग्निꣳ समिद्धं तमुदकेनाभिषिञ्चेदेवꣳ हैनꣳ स जासयति तस्य कनीयः कनीय एव तेजो भवति श्वःश्वः पापीयान्भवति तस्माद् सत्यमेव वदेत् ॥ १९ ॥

(त्त) तद् हाप्यरुणमौपवेशिं ज्ञातयऽऊचुः । स्थविरो वाऽअस्यग्नी ऽआधत्स्वेति स होवाच ते मैतद्ब्रूथ वाचंयम ऽएवैधि न वाऽआहिताग्निनाऽनृतं वदितव्यं न वदञ्जातु नानृतं वदेत्तावत्सत्यमेवोपचारऽइति ॥ २० ॥

इति प्रथमप्रपाठके षष्ठं ब्राह्मणम् ॥६ (२।२) प्रथमः प्रपाठकः समाप्तः ॥१॥

---

योऽनृतं वदति, यथा—अग्निं समिद्धं तमुदकेनाभिषिञ्चेत्, एवं हैनं स जासयति । तस्य कनीयः कनीय एव तेजो भवति, श्वः श्वः पापीयान् भवति । तस्माद् सत्यमेव वदेत् ॥ १९ ॥

तद् हाप्यरुणमौपवेशिं ज्ञातय ऊचुः—स्थविरो वा असि, अग्नी आधत्स्वेति । स होवाच—ते मैतद् ब्रूथ, वाचंयम एवैधि । न वा आहिताग्निनानृतं वदितव्यम् । न वदन् जातु नानृतं वदेत् । तावत् सत्यमेवोपचार इति ॥ २० ॥ इत्यग्न्याधानविधिः संपूर्णः ॥

---

[ अस्याः कण्डिकाया हरिस्वामिकृतापि व्याख्या समुपलभ्यते, सा यथा—**तस्य वा एतस्ये**ति । बाह्याभ्यन्तरस्याग्न्याधेयस्य; तेषामाहितानामग्नीनां बाह्याभ्यन्तराणामित्यर्थः । 'सत्यमेव' नानृतम्, उपधायाचरणमुपचारः; सत्येनैव पूतवचनेन ते अग्नी यज्ञे आधीयन्तेत्यर्थः । कथम् ? यः सत्यं वदति आहिताग्निः स एनमग्निमाहितमन्तर्बहिश्च घृतेनाभिषिञ्चति; अनृतवादी तूदकेन अभिषिञ्चन् 'जासयति' "जसु हिंसायाम्" । हिनस्ति क्षपयति । तस्य चाधातुरनेन कारणेनैव तेजसो वृद्धिहानी भवतः । तस्मादाहिताग्नेः रक्षणार्थं सत्यविधिः ॥ १९ ॥ ]

एतत्सत्यवदनस्याग्निसमिन्धनहेतुत्वमृषिवाक्यसम्बन्धेन द्रढयंति—**तद्** हेति । 'तत्' तत्रोक्तविषयेऽपि खल्वेवं पूर्ववृत्तान्तः संजातः । उपवेशो नाम कश्चित्, तस्य पुत्रम् 'अरुणम्' तदीयाः 'ज्ञातयः' उक्तवन्तः । किमिति ? हे अरुण ! 'स्थविरः' वृद्धः 'असि' अत आमुष्मिकसिद्धये अग्न्याधानं कुर्विति । स चैवं प्रत्युक्तवान् । कथमिति । मैतद् ब्रूथेति तद्वचनम् । 'वाचंयम एवैधि' वाग्यत एव भवेति । कुत एवं प्रार्थ्यते तत्राह—**न वा** इति । आहिताग्निना हि अनृतं न वदितव्यम् । वाग्व्यवहारं कुर्वतस्त्वनृतवदननिषेधो न सम्भवति । यस्मादेवमृषिणोक्तम्—"न वदन् जातु"—इत्यादि तस्मात् सत्यवचनमेवाग्न्याधेयस्याङ्गमित्यर्थः ॥ २० ॥ ६ ॥ (२–२)

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये
द्वितीयकाण्डे द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २–२–२ ॥

---

१–कथमिति–अहमग्नी आधास्ये ? 'ते' यूयम् 'मैतद्' वचनं 'ब्रूथ' । इति क० पाठः । २–"अनृतातिथ्यापनोदपूतिदार्वाधानबीसपक्कनाव्युदकानि वर्जयेत्" इति का० श्रौ० सू० ४ । २९७ । यजमान आधानानंतरमेतानि यावज्जीवं वर्जयेत् । इति तत्र दे० या० भा० ॥

## अथ द्वितीयाध्याये तृतीयं ब्राह्मणम्, द्वितीयप्रपाठके प्रथमं ब्राह्मणम् ।

वरुणो हैनद्राज्यकाम ऽआदधे । स राज्यमगच्छत्तस्माद्यश्च वेद यश्च न वरुणो राजेत्येवाहुः सोमो यशस्कामः स यशोऽभवत्तस्माद्यश्च सोमे लभते यश्च नोभावेवागच्छतो यशऽएवैतद् द्रष्टुमागच्छन्ति यशो ह भवति राज्यं गच्छति य ऽएवं विद्वानाधत्ते ॥१॥

( तेऽग्नौ ) अग्नौ ह वै देवाः । सर्वाणि रूपाणि निदधिरे यानि च ग्राम्याणि यानि चारण्यानि विजयं वोपप्रैष्यन्तः कामचारस्य वा कामायायं नो गोपिष्ठो गोपायदिति वा ॥ २ ॥

तान्यु हाग्निर्निचकमे । तैः सङ्गृह्यऽर्तून्प्रविवेश पुनरेम इति देवा एदग्निं तिरोभूतं तेषाᳬं हेयसेवास किमिह कर्तव्यं केह प्रज्ञेति वा ॥ ३॥

---

### अथ पुनराधानम् ।

वरुणो हैनद् राज्यकाम आदधे । स राज्यमागच्छत् । तस्माद्यश्च वेद, यश्च न; वरुणो राजेत्येवाहुः । सोमो यशस्कामः । स यशोऽभवत् । तस्माद्यश्च सोमे लभते, यश्च न; उभावेवागच्छतः यश एवैतद् द्रष्टुमागच्छन्ति । यशो ह भवति, राज्यं गच्छति—य एवं विद्वानाधत्ते ॥ १ ॥

अग्नौ ह वै देवाः सर्वाणि रूपाणि निदधिरे । यानि च ग्राम्याणि, यानि चारण्यानि, विजयं वोपप्रैष्यन्तः, कामचारस्य वा कामाय, अयं नो गोपिष्ठो गोपायदिति वा ॥ २ ॥

तान्यु हाग्निर्निचकमे । तैः सङ्गृह्यर्तून् प्रविवेश । पुनरेम इति देवा एदग्निं तिरोभूतम् । तेषां ह हेयसेवास—किमिह कर्तव्यम् ? केह प्रज्ञेति ? वा ॥ ३ ॥

---

अथ पुनराधेयं[1] विवित्सुः स्वपक्षा[2]तिभूतमुक्तमग्न्याधेयं पर[3]कृतिरूपार्थवादेन रा[4]ज्ययशोहेतुत्वेन प्रशंसति—**वरुण** इति । **सोमो यशस्काम** इति । आदधे[5] इत्यनुषङ्गः उक्तमर्थं प्रकृते योजयति—**यशो** हेति । ' यशः ' यशस्वी भवतीत्यर्थः ॥ १ ॥

पुन[6]राधेयं विधातुमाख्यायिकया प्रस्तौति—**अग्नौ** हेति । निधाने कारणानि वैकल्पिकानि त्रीण्युपन्यस्यति—**विजयं** वेति । असुरान् विजेतुमुपगमनसमये पूर्वसि[7]द्धाग्न्याधानस्यार्थमर्थनिधानमित्येकः पक्षः । ' कामचारस्य ' कामाय यथेच्छं क्रीडितुम्, सञ्चरणस्य यः कामः तदर्थं वा तन्निधानमिति द्वितीयः । गृह एव स्थितानां ' नः ' अस्माकं देवानां मध्येऽयमग्निः ' गोपिष्ठः ' गोपायितृतमो रक्षणकुशलोऽस्मदीयं धनं ' गोपा[8]यत् ' रक्षितुं शक्नोतीत्यनेनाभिप्रायेण वा तन्निधानमिति तृतीयः पक्षः ॥ २ ॥

**तान्यु** हेत्यादि । ' तानि ' देवैर्निहितानि ' ग्राम्यारण्यानि ' रूपाणि सः ' अग्निः ' नितरां कामितवान्,

---

१–"पुनराधेयमाधानाप्रतिज्ञातस्य" का०श्रौ० सू० ४।२५९। २–"प्रकृतिभूतम्" इति क.पा.। ३–"प्रकृतिरूपा"–इति क०पा०। ४–" राज्ययशस्कामस्य वा " का० श्रौ० सू ४ । २६० । ५–' एनदादधे ' इति क० पा० । ६–' पुनराधेयविधायकमाख्यायिकया ' इति क० पा० । ७–' पूर्वसिद्धस्याधानस्य क्षेमार्थं निधान–' इति क० पा० । ८–' गोपायितुम् ' इति क० पा० ॥

तत ऽएतत्त्वष्टा पुनराधेयं ददर्श । तदादधे तेनाग्नेः प्रियं धामोपजगाम सोऽस्माऽउभयानि रूपाणि प्रतिनिःससर्ज यानि च ग्राम्याणि यानि चारण्यानि तस्मादाहुस्त्वाष्ट्राणि वै रूपाणीति त्वष्टुर्ह्येव सर्वꣳ रूपमुप ह त्वेवान्याः प्रजा यावच्छो यावच्छ इव तिष्ठन्ते ॥ ४ ॥

तस्मै कं पुनराधेयमादधीत । ( ते ) एवꣳ हैवाग्नेः प्रियं धामोपगच्छति सोऽस्माऽउभयानि रूपाणि प्रतिनिःसृजाति यानि च ग्राम्याणि यानि चारण्यानि तस्मिन्नेतान्युभयानि रूपाणि दृश्यन्ते परमता वै सा स्पृहयन्त्यु हास्मै तथा पुष्याति लोक्यम्वेवापि ॥ ५ ॥

---

तत एतत् त्वष्टा पुनराधेयं ददर्श । तदादधे तेनाग्नेः प्रियं धामोपजगाम । सोऽस्मा उभयानि रूपाणि प्रतिनिःससर्ज—यानि च ग्राम्याणि, यानि चारण्यानि । तस्मादाहुस्त्वाष्ट्राणि वै रूपाणीति । त्वष्टुर्ह्येव सर्वं रूपम् । उप ह त्वेवान्याः प्रजा यावच्छो यावच्छः इव तिष्ठन्ते ॥ ४ ॥

तस्मै कं पुनराधेयमादधीत । एवं हैवाग्नेः प्रियं धामोपगच्छति । सोऽस्मा उभयानि रूपाणि प्रतिनिःसृजति—यानि च ग्राम्याणि, यानि चारण्यानि । तस्मिन्नेतान्युभयानि रूपाणि दृश्यन्ते । परमता वै सा । स्पृहयन्त्यु हास्मै तथा पुष्यति लोक्यम्वेवापि ॥ ५ ॥

---

अहमेवैतत् सर्वमुपभोक्ष्ये इति । ‘ तैः ’ विक्षेपैः सह विद्यमानं सर्वं सङ्गृह्य वसन्ताद्यान् ‘ ऋतून् ’ चोरादिः पर्वतमिव-प्रविष्टवान् । देवा अप्यस्मदीयं स्थानं ‘ पुनः ’ ‘ एमः ’ आगच्छामः । ‘ इति ’ अनेनाभिप्रायेण तं ‘ तिरोभूतम् ’ ‘ अग्निम् ’ अगच्छन्[2] । पूर्वं यस्मिन्स्थाने सोऽग्निः स्थितः, तत्र तमपश्यतां ‘ तेषाम् ’ देवानाम्[3] ‘ इयसा[4] इव आस ’ विहीनावस्था प्राप । अग्निरस्मदीयं सर्वं धनमपहृत्य गतः, ‘ इह ’ अस्मिन् विषये ‘ किम् ’ अस्माभिः ‘ कर्त्तव्यम् ’ ? ‘ का वा ’ बुद्धिः ? ‘ इति ’ ॥ ३ ॥

**तत एतदिति** । एवं विचारयतां मध्ये ‘ ततः ’ अनन्तरमेव ‘ त्वष्टा ’ ‘ एतद् ’ वक्ष्यमाणं ‘ पुनराधेयम् ’ ‘ ददर्श ’ । **तदादध** इत्यादि । निगदसिद्धम । **उप ह त्वेवेति** । ‘ उप ह तु एव ’ । ‘ यावच्छः[5] ’ यावत्प्रकारविशिष्टं त्वाष्ट्रं रूपम् ‘ अन्याः प्रजाः ’ ‘ उपतिष्ठन्ते, ’ तावत्यो जायन्त इत्यर्थः । वीप्सा तु सर्वसङ्ग्रहार्था ॥ ४ ॥

**तस्मा** इति । पुनराधेयविधिः । यदाख्यायिकया प्रतिपन्नं प्रयोजनम्, अग्निप्रियधामोपगमनादिलक्षणम्, तदर्थं पुनराधानं कुर्यादित्यर्थः । प्रथममाहितस्याग्नेः विधानान्तरेण पुनस्तेष्वायतनेषु स्थापनं पुनराधेयम् । **एवं हे**त्यादि । निगदसिद्धम् । **परमता वै सेति** । येयं ग्राम्यारण्योभयप्राप्तिः ‘ सा ’ ‘ परमता ’ परमत्वं सर्वोत्कृष्टत्वम् । किञ्च ‘ अस्मै ’ पुनराधेयं कृतवते सर्वे जनाः ‘ स्पृहयन्ति ’ आद्रियन्ते । “ स्पृहेरीप्सितः ”—( पा०

---

१—‘ अतोऽग्ने ‘ अन्तर्दधे ’ इति कयोश्चित्पुस्तकयोः, ‘ अनन्तरम् ’ इति च क० पुस्तकेऽधिकमुपलभ्यते । २—‘ आगच्छन् ’ इति क० । ३—‘ देवानामतिहीनामवस्थां प्राप ’ ‘ देवानां विहीनावस्थां प्राप ’ इति च क० । ४—‘ इयसा ’ चिन्तेति हरिस्वामिनः । प्रथमकाण्डेऽप्युक्तं तेन, इयसूशब्दोऽवसानवचनः कंड्वादिषु पठयते इति ९ । २ । १४ इत्यत्र भाष्ये । वस्तुतस्तु ‘ इयस्यते ’ ‘ इयसा ’ ‘ इयसितं ’ इतित्रीण्यपि रूपाणि एकधातुजानि समानार्थानि च । इहैवोत्तरत्र ( १० कं. ) ‘ इयस्यते ’ इति च विवेच्यम् । ५—यावच्छो यावच्छ इव । यावच्छब्दोऽल्पवचनः । अल्पमल्पमित्यर्थः ॥ इति हरिस्वामी ॥

( ५या ) आग्नेयोऽयं यज्ञः । ज्योतिरग्निः पाप्मनो दग्धा सोऽस्य पाप्मानं दहति स इह ज्योतिरेव श्रिया यशसा भवति ज्योतिरमुत्र पुण्यलोकत्वैतन्नु तद्यस्मादादधीत ॥ ६ ॥

स वै व्वर्षास्वादधीत । व्वर्षा वै सर्व्वऽऋतवो व्वर्षा हि वै सर्व्वऽऋतवोऽथादो व्वर्षमकुर्मादो व्वर्षमकुर्मेति संव्वत्सरान्त्सम्पश्यन्ति व्वर्षा ह त्वेव सर्व्वेषामृतूनाᳬं रूपमुत हि तद्वर्षासु भवति यदाहुर्ग्रीष्मऽइव वाऽअग्नेत्युतो तद्वर्षासु भवति यदाहुः शिशिरऽइव वाऽअग्नेति व्वर्षादिद्वर्षाः ॥ ७ ॥

( ५ ) अथैतदेव परोऽक्षᳬं रूपम् । यदेव पुरस्ताद्वाति तद्वसन्तस्य रूपं यत्स्तनयति तद्ग्रीष्मस्य यद्वर्षति तद्वर्षाणां यद्विद्योतते तच्छरदो यद्वृष्ट्वोदगृ-

---

आग्नेयोऽयं यज्ञः। ज्योतिरग्निः पाप्मनो दग्धा । सोऽस्य पाप्मानं दहति।स इह ज्योतिरेव श्रिया यशसा भवति । ज्योतिरमुत्र पुण्यलोकत्वा । एतन्नु तद्-यस्मादादधीत ॥ ६ ॥

स वै वर्षास्वादधीत। वर्षा वै सर्व ऋतवः। वर्षा हि वै सर्व ऋतवः-अथादो वर्षमकुर्म, अदो वर्षमकुर्मेति संवत्सरान् संपश्यन्ति । वर्षा ह त्वेव सर्वेषामृतूनां रूपम्, उत हि तद्वर्षासु भवति । यदाहुः-ग्रीष्म इव वा अद्येति। उतो तद् वर्षासु भवति। यदाहुः-शिशिर इव वा अद्येति। वर्षादिद्वर्षाः ॥७॥

अथैतदेव परोक्षं रूपम् । यदेव पुरस्ताद्वाति, तद्वसन्तस्य रूपम् । यत्स्तनयति, तद् ग्रीष्मस्य ।

---

सू० १. ४. ३६. ) इति सम्प्रदानसञ्ज्ञा । तथा अयमपि 'लोक्यम्' लोकनीयमुत्कर्षं प्राप्य 'पुष्यति' प्रवृद्धो भवति ॥ ९ ॥

विहितं पुनराधेयमग्निसम्बन्धोपजीवनेन प्रशंसति-**आग्नेयोऽयं यज्ञ** इति ।ज्योतिरात्मको ह्यग्निः 'पाप्मनः' 'दग्धा' दाहकः । अतः 'सः' अग्निः स्वसम्बन्धियज्ञं कुर्वतः 'अस्य । पापं निर्दहति। **एतन्नु तदि**ति । यस्मै फलाय आदधीत '[1]एतत्' उक्तविधिफलं खलु 'तत्' इत्यर्थः ॥ ६ ॥

तस्य पुनराधेयस्य त्रैवर्णिकसाधारण्येन ऋतुविशेषं विधत्ते[2]-**स वा** इति। ऋत्वन्तरं परित्यज्य [3]वर्षर्तुविधाने कारणमाह- **वर्षा वा** इति । एतदुपपादयति-**वर्षा हि वा** इत्यादिना । यस्मादेवं वर्षर्तुः सर्वात्मकः, तस्मात् समुदायात्मकं संवत्सरं वर्षशब्देन लोको व्यवहरतीति दर्शयति-**अथे**ति । सर्वर्तुरूपा वर्षा इति प्रतिपादयितुं प्रतिजानीते-**वर्षा ह त्वेवे**ति । एतदुपपादयति-**तदि**ति । ग्रीष्मशिशिरधर्मयोः प्रकाशशैत्ययोः, वर्षासु महो[4]वायुवृष्टियोगाच्च वर्षर्त्तोस्तावदृतुत्रयात्मकत्वम्। तत्र[5] ग्रीष्मे वसन्तस्य, वर्षासु शरदः, शिशिरे हेमन्तस्य, समानधर्मतयाऽन्तर्भावात् सर्वर्त्तुरूपत्व सिद्धमित्यर्थः ॥ ७ ॥

एवं प्रत्यक्षविषयं प्रकाशादिधर्मयोगेन सर्वत्वमभिधाय परोक्षधमवशादपि तत् प्रतिपादयति-**अथैतदि**ति ।

---

१-' एतदुक्तविधं खलु श्रीयशा ज्योतिश्च युङ्क्ते एतन्नु तदित्यर्थः । 'अमुत्र' अमुष्मिंल्लोके पुण्यलोकत्वेन ज्योतिरेतदाधाने भवेत् । इतीदृक् पाठः क्वचित्पुस्तक उपलभ्यते । २-" वर्षासु मध्यंदिने वा" का० श्रौ० सू० ४. २६४.। ३-' वर्षर्तावेव विधाने' इति क. । ४-'सद्भावात्, वर्षयोगाच्च वर्षर्त्तोस्तावदुभयात्मकत्वम्' इति क. पा. । ५-' तत्' इति क. पा. ।

ह्णाति तद्धेमन्तस्य व्वर्षाः सर्व्वऽ ऋतव ऋतून्प्राविशदृतुभ्य एवैनमेतान्नि- र्म्मिमीते ॥ ८ ॥

( तऽ ) आदित्यस्त्वेव सर्व्वऽऋतवः । ( वो ) यदैवोदेत्यथ व्वसन्तो यदा सङ्गवोऽथ ग्रीष्मो यदा मध्यन्दिनोऽथ व्वर्षा यदाऽपराह्णोऽथ शरद्य- दैवास्तमेत्यथ हेमन्तस्तस्मादु मध्यन्दिनऽएवादधीत तर्हि ह्येषोऽस्य लोकस्य नेदिष्ठं भवति तन्नेदिष्ठादेवैनमेतन्मध्यान्निर्मिमीते ॥ ९ ॥

छाययेव वाऽअयं पुरुषः । पाप्मनानुषक्तः सोऽस्यात्र कनिष्ठो भवत्यध- स्पदमिवेयस्यते तत्कनिष्ठमेवैतत्पाप्मानमवबाधते तस्मादु मध्यन्दिन ऽएवादधीत ॥ १० ॥

---

यद्वर्षति, तद्वर्षाणाम् । यद् विद्योतते, तच्छरदः । यद् वृष्टोद्गृह्णाति, तद्धेमन्तस्य । वर्षाः सर्व ऋतवः । ऋतून् प्राविशत्, ऋतुभ्य एवैनमेतन्निर्मिमीते ॥ ८ ॥

आदित्यस्त्वेव सर्वे ऋतवः । यदैवोदेति–अथ वसन्तः । यदा सङ्गवः । अथ ग्रीष्मः । यदा मध्य- न्दिनः–अथ वर्षाः । यदापराह्णः–अथ शरत् । यदैवास्तमेति–अथ हेमन्तः । तस्मादु मध्यन्दिन एवादधीत तर्ह्येषोऽस्य लोकस्य नेदिष्ठं भवति, तन्नेदिष्ठादेवैनमेतन्मध्यान्निर्मिमीते ॥ ९ ॥

छाययेव वा अयं पुरुषः पाप्मनानुषक्तः । सोऽस्यात्र कनिष्ठो भवति–अधस्पदमिवेयस्यते । तत् कनिष्ठमेवैतत्पाप्मानमवबाधते । तस्मादु मध्यन्दिन एवादधीत ॥ १० ॥

---

पुरोवातादयो हि वसन्तादीनां परोक्षभूताः धर्माः । तेषां च सर्वेषां वर्षासु सद्भावात् सर्वर्तुरूपतेत्यर्थः । ऋतून् प्राविशदित्यादि । यस्मादग्निः प्रागुक्तरीत्या ऋतून् प्राविशत्, तस्मादेनं वर्षास्वादधानस्तेभ्य एवर्तुभ्यः पुनरुत्पादयतीत्यर्थः ॥ ८ ॥

तच्च पुनराधानमहनि मध्यन्दिने कार्यमिति विधित्सुस्तदर्थमादित्यस्य सर्वर्तुरूपतामाह–आदित्यस्त्वेवेति । प्रातःसङ्गवमध्याह्नापराह्णसायङ्कालात्मका अह्नोऽवयवाः सूर्यसम्बन्धिनः पञ्चर्तवः । तत्र वर्षास्वाधानस्य विहितत्वात् तदात्मके मध्यन्दिन एव तत् कुर्यादित्यर्थः । तदेतन्मध्यन्दिनाधानं प्रशंसति–तर्हीति । 'तर्हि' तस्मिन् मध्यन्दिने समये 'एषः' आदित्यः 'अस्य लोकस्य' 'नेदिष्ठम्' अन्तिकतमो 'भवति' । सिद्धमन्यत् ॥९॥

प्रकारान्तरेण तन्मध्यन्दिनाधानं प्रशंसति–छाययेवेति । सोऽस्येति । 'अस्य' पुरुषस्य छायारूपः 'सः' पाप्मा 'अत्र' अस्मिन् मध्यन्दिने 'कनिष्ठः' अल्पतमः 'भवति' । स च पाप्मा पुरुषस्य पादयोरधस्तादिव 'इयस्यते' प्राप्नोति । "इण् गतौ"–( धा. पा. अ. प. ३९ ) इति धातुः । तत् कनिष्ठमित्यादि सुगमम् ॥ १० ॥

---

१–'इत्यादयो हि' इति क. पु. पा. । २–"वर्षासु मध्यन्दिने वा" का० श्रौ० सू० ४. २६४ । ३–'पुरुषरूपस्य' इति क. । ४–'तृतीयकण्डिकास्था टिप्पणी द्रष्टव्या । ५–'इ गतौ' इति कयोश्चित्पुस्तकयोः ।

तं वै दर्भैरुद्धरति । दारुभिर्वै पूर्वमुद्धरति दारुभिः पूर्वं दारुभिरपरं जामि कुर्य्यात्समदं कुर्य्याद्दापो दर्भा ऽआपो वर्षा ऽऋतून्प्राविशदद्भिरे-वैनमेतदद्भ्यो निर्मिमीते तस्माद्दर्भैरुद्धरति ॥ ११ ॥

( त्य ) अर्कपलाशाभ्याम् । व्रीहिमयमपूपं कृत्वा यत्र गार्हपत्यमा-धास्यन्भवति तन्निदधाति तद्गार्हपत्यमादधाति ॥ १२ ॥

( त्य ) अर्कपलाशाभ्याम् । यवमयमपूपं कृत्वा यत्राहवनीयमाधास्य-न्भवति तन्निदधाति तदाहवनीयमादधाति पूर्वाभ्यामेवैनावेतदग्निभ्याम-न्तर्दध्म इति वदन्तस्तदु तथा न कुर्य्याद्रात्रिभिर्ह्येवान्तर्हितौ भवतः॥ १३॥

---

तं वै दर्भैरुद्धरति । दारुभिर्वै पूर्वमुद्धरति । दारुभिः पूर्वम्, दारुभिरपरम्; जामि कुर्यात्, समदं कुर्यात्, आपो दर्भाः, आपो वर्षाः, ऋतून् प्राविशत् । अद्भिरेवैनमेतदद्भ्यो निर्मिमीते । तस्माद्दर्भै-रुद्धरति ॥ ११ ॥

अर्कपलाशाभ्यां व्रीहिमयमपूपं कृत्वा यत्र गार्हपत्यमाधास्यन् भवति, तन्निदधाति; तद् गार्हपत्य-मादधाति ॥ १२ ॥

अर्कपलाशाभ्यां यवमयमपूपं कृत्वा यत्राहवनीयमाधास्यन् भवति, तन्निदधाति; तदाहवनीयमा-दधाति । पूर्वाभ्यामेवैनावेतदग्निभ्यामन्तर्दध्म इति वदन्तः । तदु तथा न कुर्यात्—रात्रिभिर्ह्येवान्त-र्हितौ भवतः ॥ १३ ॥

---

तस्य पुनराधित्सितस्याग्नेर्दर्भैरेवोद्धरणं कार्यमिति विधत्ते—**तं वा** इति । आधानवत् पुनराधानेऽपि दारुभि-रुद्धरणे दोषमाह—**दारुभिः पूर्वमिति** । उभयोरैकरूप्ये जामितादोषः स्यात् । तथा 'समदम्' दारुविषयं परस्परं तयोः कलहमपि जनयेदित्यर्थः । विहितं दर्भैरुद्धरणं प्रशंसति—**आप** इति । दर्भाणामब्विकारत्वं प्रथम-काण्डे प्रतिपादितम्—" ता उपर्य्युपर्यतिपुप्लुविरेऽत इमे दर्भाः "—इति ( श. प. १।१।३।५ ) ॥ ११ ॥

व्रीहियवमययोरपूपयोरर्कपर्णद्वयसङ्गृहीतयोर्गार्हपत्याहवनीयायतनयोर्निधानं विधत्ते—**अर्कपलाशाभ्यामि-**त्यादिना । अत एवोक्तं कात्यायनेन—" वर्षासु मध्यन्दिने वा " " कुशैराधानम् " " व्रीह्यपूपमर्कपलाशयोः पक्कं गार्हपत्यस्य स्थाने निदधात्येवमाहवनीयस्य यावम् " ( का० श्रौ० सू० ४. २६४–२६६ ) इति ॥ १२॥

अपूपनिधानस्य प्रयोजनमाह—**पूर्वाभ्यामिति** । पूर्वमाहितौ यौ गार्हपत्याहवनीयौ ताभ्यामित्यर्थः । तदेत-न्निषेधति—**तदु तथेति** । **रात्रिभिर्ह्येवेति** । अनुगतयोस्तयोः रात्रिभिरेव व्यवधानात् । नापूपव्यवधानेन प्रयोजनमित्यर्थः ॥ १३ ॥

---

१–" कुशैराधानम् " का० श्रौ० सू० ४. २६५ । २–" व्रीह्यपूपमर्कपलाशयोः पक्कं गार्हपत्यस्थाने निदधात्येवमाहवनीयस्य याव२ँसद्यश्चेत् " का. श्रौ. सू. ४. २६६ ।

( तऽ ) आग्नेयमेव पञ्चकपालं पुरोडाशं निर्व्वपति । तस्य पञ्चपदाः पङ्क्तयो याज्यानुवाक्या भवन्ति पञ्च वा ऋतव ऽऋतून्प्राविशदृतुभ्य ऽएवैनमेतन्निर्मिमीते ॥ १४ ॥

सर्व्वऽ आग्नेयो भवति । ( त्ये ) एवᳫँ हि त्वष्टाग्नेः प्रियं धामोपागच्छत्त-स्मात्सर्व्वऽआग्नेयो भवति ॥ १५ ॥

तेनोपाᳫँशु चरन्ति । यद्वै ज्ञातये वा सख्ये वा निष्केवल्यं चिकीर्षति तिरऽइवैतेन बोभवद्वैश्वदेवोन्यो यज्ञोऽथैष निष्केवल्य ऽआग्नेयो यद्वै तिर-ऽइव तदुपाᳫँशु तस्मादुपाᳫँशु चरन्ति ॥ १६ ॥

( न्त्यु ) उच्चैरुत्तममनुयाजं यजति । कृतकर्मेव हि स तर्हि भवति सर्व्वो हि कृतमनुबुध्यते ॥ १७ ॥

---

आग्नेयमेव पञ्चकपालं पुरोडाशं निर्वपति । तस्य पञ्चपदाः पङ्क्तयो याज्यानुवाक्या भवन्ति । पञ्च वा ऋतवः ऋतून् प्राविशत् । ऋतुभ्य एवैनमेतन्निर्मिमीते ॥ १४ ॥

सर्वं आग्नेयो भवति । एवं हि त्वष्टाग्नेः प्रियं धामोपागच्छत् । तस्मात् सर्व आग्नेयो भवति ॥१५॥
तेनोपांशु चरन्ति । यद्वै ज्ञातये वा सख्ये वा निष्केवल्यं चिकीर्षति, तिर इवैतेन बोभवत् । वैश्व-देवोऽन्यो यज्ञः-अथैष निष्केवल्य आग्नेयः । यद्वै तिर इव, तदुपांशु । तस्मादुपांशु चरन्ति ॥ १६ ॥
उच्चैरुत्तममनुयाजं यजति । कृतकर्मेव हि स तर्हि भवति । सर्वो हि कृतमनुबुध्यते ॥ १७ ॥

---

**आग्नेयमेवेति** । यदाऽग्न्याधेये पवमानेष्टिकार्यम्, तदाग्नेय एव पञ्चकपालं करोतीति न पृथक्तया कर्त्तव्या इत्येवकारार्थः ॥ १४ ॥

**सर्वं आग्नेयो भवतीति** । अस्यां पञ्चकपालेष्टावाज्यभागादिः सर्वोऽपि यागोऽग्निदेवत्यः काय इत्यर्थः ॥१५॥
**तेनोपांशु चरन्तीति** । विहितमुपांशुत्वमुपपादयति—**ज्ञातये वेति** । 'यद्' हुतं 'निष्केवल्यम्' इत-रेभ्यो निष्कृष्य केवलम्, तदेकभागं चिकीर्षति, कर्तुमिच्छति । 'एतेन' 'तिर इव' 'बोभवद्' भवति, तिरोहितं परोक्षमेव तत् प्रदीयत इत्यर्थः । **यद्वै तिर इवेति** । 'यत्' खलु तिरोहितमिव[३] भवति, तत् 'उपांशु' भवति । उपांशूच्चार्यमाणस्यापि परश्रोत्रग्राह्यत्वाभावेन तिरोहितत्वादित्यर्थः ॥ १६ ॥

**उच्चैरुत्तममनुयाजं करोतीति** । यावत् 'उत्तमः' तृतीयोऽनुयाजः, तावत्पयन्तमुपांशुस्वरः, तत ऊर्द्ध्व-मुच्चैरेव मन्त्रप्रयोग इत्यर्थः । तत्र कारणमाह—**कृतकर्मेवेति** ॥ १७ ॥

---

१-' यदाऽग्न्याधेयपवमानेष्टिकार्यम्, तदाग्नेय एव ( पञ्च ) कपालः करोति " इति क. पा. । २-" आग्नेयः पञ्चकपाल उपांशु प्रागुत्तमादनुयाजात् " " तद्वर्जम्वा " का. श्रौ. सू. ४ । २६७ । २६८ ॥ ३-तिरोहितवत् ' उपांशु ' इति क. ।

स आश्राव्याह। समिधो यजेति तदाग्नेयꣳ रूपं परोऽक्षं त्वग्नीन्यजेति त्वेव ब्रूयात्तदेव प्रत्यक्षमाग्नेयꣳ रूपम् ॥ १८ ॥

(ꣳ) स यजति। (त्यु) अग्नऽआज्यस्य व्यन्तु व्वौझगग्निमाज्यस्य व्वेतु व्वौझगग्निनाज्यस्य व्यन्तु व्वौझगग्निराज्यस्य व्वेतु व्वौझगिति ॥ १९ ॥

(त्यु) अथ स्वाहाग्निमित्याह। (हा) आग्नेयमाज्यभागꣳ स्वाहाग्निं पवमानमिति यदि पवमानाय ध्रियेरन्त्स्वाहाग्निमिन्दुमन्तमिति यद्यग्नय ऽइन्दुमते ध्रियेरन्त्स्वाहाग्निꣳ स्वाहाग्नीनाज्यपाञ्जुषाणोऽअग्निराज्यस्य व्वेत्विति यजति ॥ २० ॥

(त्यु) अथाहाग्नयेऽनुब्रूहीति। (त्या) आग्नेयमाज्यभागꣳ सोऽन्वाहाग्निꣳ स्तोमेन बोधय समिधानोऽअमर्त्यम्। हव्या देवेषु नो दधदिति

---

स आश्राव्याह–"समिधो यज"–इति। तदाग्नेयं रूपम्, परोक्षं तु "अग्नीन्यज" इति त्वेव ब्रूयात्। तदेव प्रत्यक्षमाग्नेयं रूपम् ॥ १८ ॥

स यजति–"अग्न आज्यस्य व्यन्तु वौझक्। अग्निमाज्यस्य वेतु वौझक्। अग्निनाऽऽज्यस्य व्यन्तु वौझक्–अग्निराज्यस्य वेतु वौझक्"–इति ॥ १९ ॥

अथ स्वाहाग्निमित्याह आग्नेयमाज्यभागम्–"स्वाहाग्निं पवमानम्"–इति। यदि पवमानाय ध्रियेरन्। "स्वाहाग्निमिन्दुमन्तम्"–इति। यद्यग्नय इन्दुमते ध्रियेरन् "स्वाहाग्निं स्वाहाऽग्नीनाज्यपान् जुषाणो अग्निराज्यस्य वेतु"–इति यजति ॥ २० ॥

अथाह अग्नयेऽनुब्रूहि इति आग्नेयमाज्यभागम्, सोऽन्वाह–"अग्निं स्तोमेन बोधय समि-

---

प्रयाजादिषु सर्वाग्नेयंकरणं[1] प्रतिपादयति–**स आश्राव्ये**त्यादिना। प्रथमप्रयाजे यत् "समिधो यज"–इति प्राकृतं वचनम्, 'तदाग्नेयं रूपम्', समिन्धनप्रत्यभिज्ञानात्; किन्तु तत् 'परोक्षम्'। अतः समिध इत्येतस्य स्थाने "अग्नीन्[2] यज"–'इत्येव' 'ब्रूयात्' ॥ १८ ॥

प्रायाजयाज्यास्वपि क्रमेणाग्निविभक्तिं[3] योजयति[4]–**स यजती**ति। प्रकृतिषु याज्यास्वाज्यशब्दात् पूर्वं यथाक्रमम् 'अग्ने', 'अग्निम्', 'अग्निना', 'अग्निः'–एताश्चतस्रो विभक्तीः प्रक्षिप्य ताभिर्यजेदित्यर्थः[5] ॥ १९[6] ॥

पञ्चमप्रयाजानुयाजयोर्विशेषमाह–**अथ स्वाहे**ति। प्रकृतिवत् प्रथमाज्यभागदेवतां सङ्कीर्त्य द्वितीयाज्यभागदेवतायाः[7] सोमस्य स्थानेऽग्निः पवमानोऽग्निरिन्दुमान् वा अध्वर्युप्रयोगानुसारेण विकल्पेन निर्देष्टव्य इत्यर्थः। **स्वाहा देवानाज्यपा**निति प्रयाजदेवतानिर्देशेऽपि "स्वाहाग्नीनाज्यपान्" इति प्रयोक्तव्यम् ॥ २० ॥

**अथाहाग्नय** इति। प्रथमाज्यभागस्य "अग्निं[8] स्तोमेन बोधय"–इति बुधिधातुयुक्तामनुवाक्यां दर्शयित्वा

---

१–'तत्सहचारितत्करणम्' इति क. पा.। २–"अग्नीनिति वा प्रथमे प्रयाजेऽनुयाजे च" (का. श्रौ. सू. ४. २६९) ३–'विभक्तियोजनं प्रतिपादयति' इति क.। ४–'करोति' इति क.। ५–'विहिता एताभिः' इति क.। 'साहिताः, एताभिः' इत्यपि क. पाठः। ६–अत्र मूले यत्, 'वौझक्' इत्यसकृदाम्नातम्। तस्य व्याख्यानमिह नाकारि भाष्यकारेण कथमिति चिन्तनीयम्। पूर्वं तु 'वौक्' इत्यस्य व्याख्यानं कृतमेवेति तद्द्रष्टव्यम् (श. प. ब्रा. अ. ७।२।२१) इत्यत्र भाष्ये। ७–"आज्यभागो द्वितीयोऽग्नये पवमानायेन्दुमते वा" का० श्रौ. सू. ४. २१७.। ८–ऋक्संहिता मं. ५. सू. १४. ऋ. १. द्रष्टव्या.। वा. सं. अ. २२–मं. १५।

स्वपितीव खलु वाऽएतद्यदुद्वासितो भवति सम्प्रबोधयत्येवैनमेतत्समुदीर्य्यति जुषाणो अग्निराज्यस्य व्वेत्विति यजति ॥ २१ ॥

( त्यु ) अथ यद्यग्नये पवमानाय ध्रियेरन् । ( न्न ) अग्नये पवमानायानुब्रूहीति ब्रूयात्सोऽन्वाहाग्नऽआयूᳫंषि पवसऽआसुवोर्ज्जमिषं च नः ॥ आरे बाधस्व दुच्छुनामिति तथाहाग्नेयो भवति सोमो वै पवमानस्तदु सौम्यादाज्यभागान्नयन्ति जुषाणोऽअग्निः पवमान ऽआज्यस्य व्वेत्विति यजति २२॥

( त्यु ) अथ यद्यग्नयऽइन्दुमते ध्रियेरन् । ( न्न ) अग्नयऽइन्दुमतेऽनुब्रूहीति ब्रूयात्सोऽन्वाहेह्यूषु ब्रवाणि तेऽग्नऽइत्थेतरा गिरः । एभिर्व्वर्द्धास ऽइन्दुभिरिति तथाहाग्नेयो भवति सोमो वाऽइन्दुस्तदु सौम्यादाज्यभागान्नयन्ति जुषाणोऽअग्निरिन्दुमानाज्यस्य व्वेत्विति यजत्येवमु सर्व्वमाग्नेयं करोति ॥ २३ ॥

---

धानो अमर्त्यम् । हव्या देवेषु नो दधत् "–इति ( ऋ. सं. मं. ९ सू. १४. ऋ. १ । वा. स. अ. २२ मं. १९ ) स्वपितीव खलु वा एतद् यदुद्वासितो भवति । सम्प्रबोधयत्येवैनमेतत्समुदीर्यति– " जुषाणो अग्निराज्यस्य वेतु "–इति यजति ॥ २१ ॥

अथ यद्यग्नये पवमानाय ध्रियेरन्–" अग्नये पवमानायानुब्रूहि " इति ब्रूयात् । सोऽन्वाह– " अग्न आयूंषि पवस आसुवोर्ज्जमिषं च नः । आरे बाधस्व दुच्छुनाम् "–( वा. सं अ. १९ मं. ३८ ) इति । तथाहाग्नेयो भवति । सोमो वै पमानः । तदु सौम्यादाज्यभागान्नयन्ति– " जुषाणोऽअग्निः पवमान आज्यस्य वेतु "–इति यजति ॥ २२ ॥

अथ यद्यग्नय इन्दुमते ध्रियेरन्–" अग्नय इन्दुमतेऽनुब्रूहीति ब्रूयात् । सोऽन्वाह–"एह्यूषु ब्रवाणि तेऽग्न इत्थेतरा गिरः । एभिर्वर्द्धास इन्दुभिः "–इति ( वा. सं.अ. २६ मं. १३ ) तथाहाग्नेयो भवति । सोमो वा इन्दुः । तदु सौम्यादाज्यभागान्नयन्ति–" जुषाणो अग्निरिन्दुमानाज्यस्य वेतु "–इति यजति । एवमु सर्वमाग्नेयं करोति ॥ २३ ॥

---

तस्याः पुनरावेयानुकल्पमाह–स्वपितीवेति । ' समुदीर्यति ' समुद्गमयतीत्यर्थः ॥ २१ ॥

द्वितीयाज्यभागस्य प्रागुक्तपक्षद्वयेऽपि याज्यानुवाक्ये दर्शयति–अथ यदीत्यादिना । निगदसिद्धोऽर्थः॥२२॥

अथ यद्यग्नय इति । एवमु सर्वमिति । उक्तरीत्या प्रयाजानामाज्यभागयोश्चाग्निसम्बन्धकरणात् तत् सर्वमाग्नेयं भवतीत्यर्थः ॥ २३ ॥

(त्यु) अथाहाग्नयेऽनुब्रूहीति हविषः । (षोऽग्निं) अग्निं यजाग्नये स्विष्टकृतेऽनुब्रूह्यग्निᳬ स्विष्टकृतं यजेत्यथ यद्देवान्यजेत्यग्नीन्यजेत्येवैतदाह॥२४॥

स यजति । (त्य) अग्नेर्व्वसुवने व्वसुधेयस्य व्वेतु व्वौऽझगग्नाऽउ व्वसुवने व्वसुधेयस्य व्वेतु व्वौऽझग्देवोऽअग्निः स्विष्टकृदिति स्वयमाग्नेयस्तृतीय ऽएवम्वाग्नेयाननुयाजान्करोति ॥ २५ ॥

ता वाऽएताः । षड्विभक्तीर्यजति चतस्रः प्रयाजेषु द्वेऽअनुयाजेषु षड्वाऽऋतव ऽऋतून्प्राविशद्दतुभ्य एवैनमेतान्निर्म्मिमीते ॥ २६ ॥

द्वादश वा त्रयोदश वाऽक्षराणि भवन्ति । द्वादश वा वै त्रयोदश वा संव्वत्सरस्य मासाः संव्वत्सरमृतून्प्राविशद्दतुभ्य एवैनमेतत्संव्वत्सरान्निर्म्मिमीते न द्वे चन सहाजामितायै जामि ह कुर्य्याद्यद्द्वे चित्सह स्यातां व्यन्तु व्वेत्वित्येव प्रयाजानाᳬ रूपं व्वसुवने व्वसुधेयस्येत्यनुयाजानाम् ॥ २७ ॥

---

अथाह—" अग्नयेऽनुब्रूहि " इति " हविषोऽग्निं यज " " अग्नये स्विष्टकृतेऽनुब्रूहि " " अग्निं स्विष्टकृतं यज " इति । अथ यद् " देवान् यज "—इति । अग्नीन् यजेत्येवैतदाह ॥ २४ ॥

स यजति—" अग्नेर्वसुवने वसुधेयस्य वेतु वौझक् अग्ना उ वसुवने वसुधेयस्य वेतु वौझक् देवो अग्निः स्विष्टकृत—" इति स्वयमाग्नेयस्तृतीयः। एवं वा आग्नेयाननुयाजान् करोति २५

ता वा एताः षड् विभक्तीर्यजति । चतस्रः प्रयाजेषु, द्वे अनुयाजेषु । षड् वा ऋतवः । ऋतून् प्राविशत् । ऋतुभ्य एवैनमेतन्निर्मिमीते ॥ २६ ॥

द्वादश वा त्रयोदश वा अक्षराणि भवन्ति । द्वादश वा वै त्रयोदश वा सम्वत्सरस्य मासाः । सम्वत्सरमृतून् प्राविशत् । ऋतुभ्य एवैनमेतत् सम्वत्सरान्निर्म्मिमीते । न द्वे चन सहाजामितायै । जामि ह कुर्याद्—यद् द्वे चित् सह स्याताम् । " व्यन्तु वेतु"—इत्येव प्रयाजानां रूपम् । " वसुवने वसुधेयस्य "—इत्यनुयाजानाम् ॥ २७ ॥

---

आधानस्विष्टकृतोस्त्वग्निसम्बन्ध इति दर्शयति—**अथाहाग्नय** इति । प्रथमप्रयाजवत् प्रथमानुयाजेऽपि ' देवान् यज "—इत्यस्य स्थाने " अग्नीन् यज "—इत्यग्निविर्भक्तिः कार्या ॥ २४ ॥

तथा द्वितीयेऽप्यनुयाजे " अग्ना उ "—इति विभक्तिः प्रयोक्तव्येति प्रतिपादयति—**स यजती**त्यदिना । **स्वयमाग्नेय** इति ' तृतीयः ' त्वनुयाजः ' स्वयमाग्नेयः स्वयमेवाग्निशब्दवानिति न पृथक् तत्राग्निविभक्तिः प्रक्षेप्तव्येत्यर्थः ॥ २५ ॥

एवं प्रयाजानुयाजेषु प्रक्षिप्ताः सम्भूयानूद्य प्रशंसति—**ता वा** इति ॥ २६ ॥

तासां विभक्तीनामक्षरसङ्ख्यामुपजीव्य प्रशंसति—**द्वादश वेति** । ' अग्ना उ '—इत्यत्रान्तिमाक्षरत्यागे सति

---

१—" प्रधानस्विष्टकृतोऽग्निस्त्वेव सम्बन्धः स्वतः संबन्ध इति दर्शयति " इति क०पु० "अधुना स्विष्टकृतोऽप्याग्निसंबन्ध इति" इति—च क० पु० पा० ॥ २—का० श्रौ० सू० ४ । ११ । ११ । द्रष्टव्यम् ।

तस्य हिरण्यं दक्षिणा । ( णाग्ने ) आग्नेयो वाऽएष यज्ञो भवत्यग्ने रेतो हिरण्यं तस्माद्धिरण्यं दक्षिणानड्वान्वा स हि वहेनाग्नेयोऽग्निदग्धमिव ह्यस्य वहं भवति देवानाᳫं हव्यवाहनोऽग्निरिति वहति वा ऽएष मनुष्येभ्यस्तस्मादनड्वान्दक्षिणा ॥ २८ ॥

इति द्वितीयेऽध्याये तृतीयं ब्राह्मणम् । ( २ । ३ )

प्रजापतिर्ह वा ऽइदमग्र ऽएक एवास स ऐक्षत कथं नु प्रजायेयेति सोऽश्राम्यत्स तपोऽतप्यत सोऽग्निमेव मुखाज्जनयाञ्चक्रे तद्यदेनं मुखादजनयत तस्मादन्नादोऽग्निः स यो हैवमेतमग्निमन्नादं वेदान्नादो हैव भवति ॥ १ ॥

---

तस्य हिरण्यं दक्षिणा । आग्नेयो वा एष यज्ञो भवति, अग्ने रेतो हिरण्यम्, तस्माद्धिरण्यं दक्षिणा । अनड्वान्वा । स हि वहेनाग्नेयः । अग्निदग्धमिव ह्यस्य वहं भवति । देवानां हव्यवाहनोऽग्निरिति । वहति वा एष मनुष्येभ्यः । तस्मादनड्वान् दक्षिणा ॥ २८ ॥ इति पुनराधेयविधिः सम्पूर्णः ।

इत्याधानब्राह्मणं समाप्तम् ।

अथाग्निहोत्रब्राह्मणम् ।

प्रजापतिर्ह वा इदमग्र एक एवास । स ऐक्षत—" कथं नु प्रजायेय" इति । सोऽश्राम्यत्, स तपोऽतप्यत सोऽग्निमेव मुखाज्जनयाञ्चक्रे । तद् यदेनं मुखादजनयत—तस्मादन्नादोऽग्निः । स यो हैवमेतमग्निमन्नादं वेद, अन्नादो हैव भवति ॥ १ ॥

---

द्वादशाक्षराणि भवन्ति, तेन सह त्रयोदश भवन्तीत्यर्थः । **न द्वे चनेति** । चनेशब्दोऽप्यर्थः । 'द्वे' अपि वक्ष्यमाणे 'न' 'सह' प्रयुञ्जीत, किमर्थम् ? 'अजामितायै' जामितादोषराहित्याय । व्यतिरेके तत्सद्भावमाह—**जामि हेति** । के पुनस्ते द्वे ? इति ते विभज्य दर्शयति—**व्यन्तु—वेत्वित्यादिना** ॥ २७ ॥

पुनराधेयस्य दक्षिणां विधत्ते—**तस्येति** । **स हि वहेनेति** । सः खल्वनड्वान् 'वहेन' स्कन्धेनाग्निसम्बद्धो भवति । तस्योपपातम्—**अग्निदग्धमिवेति** । अनडुहश्च साम्यमाह—**देवानामिति** । अतो वहनसाम्यात् पुनराधीयमानस्याग्नेः 'अनड्वान् दक्षिणा' उत्कृष्टतरा इत्यर्थः ॥ २८ ॥ १ [ २. ३. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये
द्वितीयकाण्डे द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ २–२–३ ॥

एवमाधानपुनराधाने विधाय तन्निष्पन्नानामग्नीनां फलवत्कर्मार्थत्वात् तत्साध्यं सायम्प्रातरनुष्ठेयमग्निहोत्राख्यं कर्म विधित्सुस्तदर्थमाख्यायिकामाह—**प्रजापतिर्हवा** इत्यादिना ॥ १ ॥

---

१–' असाकल्ये तु चिच्चन ' इति अमरकोषः ३ । ४ । ३ । २–" हिरण्यं दक्षिणाऽनड्वान् वाग्न्याधेयिकीश्चेच्छन्त्युतेः " का. श्रौ. सू. ४. २७१. । ३–प्रथमकाण्डस्य अ. १ ब्रा. २ कं. ९ द्रष्टव्या. । ४–' वहनं स्यात् । ' इति क. पा. ॥ ५–' तत्साधनचतुष्टयसाध्यम् ' इति क. सा. ।

तद्वा ऽएनमेतदग्रे देवानामजनयत । तस्मादग्निरग्निर्ह वै नामैतद्यदग्निरिति स जातः पूर्वः प्रेयाय यो वै पूर्व एत्यग्रऽएतीति वै तमाहुः सोऽएवास्याग्निता ॥ २ ॥

स ऐक्षत प्रजापतिः । ( २ ) अन्नादं वाऽइममात्मनोऽजीजने यदग्निं न वा ऽइह मदन्यदन्नमस्ति यं वाऽअयं नाद्यादिति काल्वालीकृता हैव तर्हि पृथिव्यास नौषधय आसुर्न वनस्पतयस्तदेवास्य मनस्यास ॥ ३ ॥

( सा ) अथैनमग्निर्व्यात्तेनोपपर्यावर्त्त । तस्य भीतस्य स्वो महिमापचक्राम वाग्वाऽअस्य स्वो महिमा वागस्यापचक्राम सऽआत्मन्येवाहुतिमीषे स ऽउदमृष्ट तद्यदुदमृष्ट तस्मादिदं चालोमकमिदं च तत्र विवेद घृताहुतिं वैव पय आहुतिं वोभयँ हत्वेव तत्पयऽएव ॥ ४ ॥

---

तद्वा एनमेतदग्रे देवानामजनयत—तस्मादग्निः । अग्निर्ह वै नामैतद्—यदग्निरिति । स जातः पूर्वः प्रेयाय । यो वै पूर्व एति—अग्र एतीति वै तमाहुः । सा उ एवास्य अग्निता ॥ २ ॥

स ऐक्षत—प्रजापतिः । अन्नादं वा इममात्मनोऽजीजने यदग्निम् । न वा इह मदन्यदन्नमस्ति, यं वा अयं नाद्यादिति । काल्वालीकृता हैव तर्हि पृथिव्यास, नौषधय आसुः, न वनस्पतयः, तदेवास्य मनस्यास ॥ ३ ॥

अथैनमग्निर्व्यात्तेनोपपर्यावर्त । तस्य भीतस्य स्वो महिमाऽपचक्राम । वाग्वा अस्य स्वोऽमहिमा । वागस्यापचक्राम । स आत्मन्येवाहुतिमीषे । स उदमृष्ट । तद् यदुदमृष्ट—तस्मादिदं चालोमकमिदं च । तत्र विवेद—घृताहुतिं वैव पयआहुतिं वा—उभयं ह त्वेव तत् पय एव ॥ ४ ॥

---

**तद्वा इति** । अग्रे जातत्वादग्निः; स एवाग्निरिति पारोक्ष्येणोच्यत इति नामनिर्वचनं कृत्वा प्रकारान्तरेणापि निर्ब्रूयात् । **स जात इति** । 'अग्रे' एति गच्छतीति अग्निः । 'अस्य' अग्नेः साधिका 'अग्निता' इत्यर्थः ॥ २ ॥

एवं सायमग्निहोत्रदेवताया अग्नेरुत्पत्तिमभिधाय होम इत्यस्य उत्पत्तिं प्रतिपादयति—**स ऐक्षतेत्यादिना** । **अजीजन इति** । अजनयमित्यथः । मया सृष्टोऽग्निरित्यन्नादः तस्य चाग्नेर्न भवितव्यम् । न च मत्तोऽन्यदन्नमिह विद्यते, यदन्नमसावद्यादित्यर्थः । ननु भूम्यामोषधयो विद्यन्ते, तदेव तस्यान्नं भविष्यतीत्यत आह—**काल्वालीकृतेति** । 'तर्हि' तस्मिन् समये, यदहन्येव पृथिवी बभूव, तत ओषधिवनस्पतयः । एवं सति 'तत्' वक्ष्यमाणमन्नम् 'एध' 'अस्य' प्रजापतेः मनसि बभूव ॥ ३ ॥

**अथैनमिति** । अथ अस्मिन्नवसरे 'अग्निः' 'एनम्' 'व्यात्तेन' प्रजापतिविवृतेन मुखेन भक्षयितुं पर्यावृत्तो बभूव । तस्माद् 'भीतस्य' प्रजापतेः । **स्वो महिमेत्यादि**, स्पष्टम् । **स आत्मन्येवेति** । 'सः' प्रजापतिः

---

१— अग्निजननप्रकारः शतपथे चतुर्दशे कांडे १४ प्रथमेऽध्याये १ प्रथमप्रपाठके १ द्वितीये २ सृष्टिब्राह्मणे "अथेत्यभ्यमंथत" इति मन्त्रः" ११। २—" अपनीतवालाः काल्वालाः "—इति हरिस्वामी । तदेवं खल्वालाः, खल्वाटाः काल्वाला इति समानार्थाः ।

सा हैनं नाभिराधयाञ्चकार । केशमिश्रेव हास तां व्यौक्षदोषं धयेति ततऽओषधयः समभवंस्तस्मादोषधयो नाम स द्वितीयमुदमृष्ट तत्रापरामाहुतिं विवेद घृताहुतिं वैव पयआहुतिं वोभयꣳ ह त्वेव तत्पय एव ॥५॥

सा हैनमभिराधयाञ्चकार । स व्यचिकित्सज्जुहवानी ३ मा हौषा ३ मिति तꣳ स्वो महिमाभ्युवाद जुहुधीति स प्रजापतिर्विदाञ्चकार स्वो वै मा महिमाहेति स स्वाहेत्येवाजुहोत्तस्मादु स्वाहेत्येव हूयते तत एष उदियाय य एष तपति ततोऽयं प्रबभूव योऽयं पवते तत एवाग्निः पराङ् पर्य्यावर्त ॥ ६ ॥

---

सा हैनं नाऽभिराधयाञ्चकार । केशमिश्रेव हास । तां व्यौक्षत्—ओषं धयेति । तत ओषधयः समभवन्—तस्मादोषधयो नाम । स द्वितीयमुदमृष्ट । तत्रापरामाहुतिं विवेद, घृताहुतिं वैव पयआहुतिं वा—उभयं ह त्वेव तत्पय एव ॥ ५ ॥

सा हैनमभिराधयाञ्चकार । स व्यचिकित्सत्—जुहवानी ३ मा हौषा ३ मिति । तं स्वो महिमाऽभ्युवाद—जुहुधीति । स प्रजापतिः विदाञ्चकार—स्वो वै मा महिमाऽऽहेति । स स्वाहेत्येवाजुहोत्—तस्मादु स्वाहेत्येव हूयते । तत एष उदियाय—य एष तपति । ततोऽयं प्रबभूव—योऽयं पवते । तत एवाग्निः पराङ् पर्य्यावर्त ॥ ६ ॥

---

'आत्मनि' स्वशरीरे 'एव' आहुतिद्रव्यं सम्पादयितुमिच्छां कृतवान् । कृत्वा च 'सः' 'उदमृष्ट' हस्ताभ्यां स्वाङ्गस्योन्मार्जनं कृतवान् । यस्मादेवं तस्मादेव कारणात् इदञ्च इदं च उभयमपि पाणितलम् 'अलोमकं रोमरहितं दृश्यते । उन्मार्जनेन 'तत्राहूतिं' 'विवेद' लेभे । तां विशिनष्टि—**घृताहुतिमिति** । **उभयं** हेति । यदेतत् पयोघृतसाध्यमाहुतिद्वयम् 'तत् उभयम्' अपि 'पय एव' घृतस्य पयोविकारत्वादित्यर्थः ॥ ४ ॥

**सा हैनमित्यादि** । 'नाभिराधयाञ्चकार' अभिराद्धं तृप्तं न चकारेत्यर्थः । तत्र दृष्टान्तः—**केशमिश्रेवेति** । कीटादिदूषिता आहुतिर्न तृप्तिम्, प्रत्युत बीभत्सामेव जनयति । एवं प्रजापतिशरीरजं द्रव्यमाहुतियोग्यं नासीदित्यर्थः । 'तां' चाहुतिं तस्मिन्नग्नौ 'व्यौक्षत्' अत्यजत् इदमाहुतिद्रव्यम् 'ओषं' पक्कं कृत्वा 'धय' पिब 'इति' । एवमग्नौ प्रक्षिप्तात् तस्मात् 'ओषधयः' पृथिव्यां समभवन् । एवमोषधिरूपस्य द्रव्यस्योत्पत्तिमुक्त्वा प्रातराहुतिदेवतायाः सूर्यस्योत्पत्तिमाह—**स द्वितीयमिति** । पूर्ववद् योज्यम् ॥ ५ ॥

**सा हैनमित्यादि** । **स व्यचिकित्सादिति** । अस्यां द्वितीयस्यामाहुतौ स प्रजापतिः विचिकित्सां कृतवान्, किमिदं मदङ्गाज्जातं द्रव्यं जुहवानि, किं वा नेति । एवं संशयापन्ने अग्निभयात् प्राङ्निर्गतो वाग्रूपः स्वकीयो 'महिमा' 'अभ्युवाद' अभिलक्ष्योक्तवान्,- 'संशयं मा कार्षीः, होमं कुरु' इति । **स्वो वा** इति । यस्मात् 'स्वो महिमा आह, तस्मात् 'सः' प्रजापतिः 'स्वाहेत्येव तत्' द्रव्यम् अजुहोत् । **तत एष** इति । तस्माद्धोमात् 'एषः' सूर्य उदित उत्पन्नो बभूव । पवमानो वायुरपि तत एवोत्पन्नः । एवमनयोरुत्पन्नयोः सतोः सः अग्निः अपि प्रजापतिसकाशात् भक्षणात् उपरतः पराङ्मुखः पर्यावृत्तो बभूवेत्यर्थः ॥ ६ ॥

स हुत्वा प्रजापतिः । प्र चाजायतात्स्यतश्चाग्नेर्मृत्योरात्मानमत्रायत स यो हैवं विद्वानग्निहोत्रं जुहोत्येताᳪं हैव प्रजातिं प्रजायते यां प्रजापतिः प्राजायतैवमु हैवात्स्यतोऽग्नेर्मृत्योरात्मानं त्रायते ॥ ७ ॥

स यत्र म्रियते । यत्रैनमग्नावभ्यादधति तदेषोऽग्नेरधिजायतेऽथास्य शरीरमेवाग्निर्दहति तद्यथा पितुर्वा मातुर्वा जायेतैवमेषोऽग्नेरधिजायते शश्वद्ध वा ऽएष न सम्भवति योऽग्निहोत्रं न जुहोति तस्माद्वा ऽअग्निहोत्रᳪं होतव्यम् ॥ ८ ॥

तद्वा एतत् । (दे) एव विचिकित्सायै जन्म यत्प्रजापतिर्व्यचिकित्सत्स विचिकित्सञ्छ्रेयस्यध्रियत यः प्र चाजायतात्स्यतश्चाग्नेर्मृत्योरात्मानमत्रायत स यो हैवमेतद्विचिकित्सायै जन्म वेद यद्ध किञ्च विचिकित्सति श्रेयसि हैव ध्रियते ॥ ९ ॥

स हुत्वा न्यमृष्ट । ततो विकङ्कतः समभवत्तस्मादेष यज्ञियो यज्ञपात्रीयो

---

स हुत्वा प्रजापतिः प्र चाजायत, अत्स्यतश्चाग्नेर्मृत्योरात्मानमत्रायत । स यो हैवंविद्वानग्निहोत्रं जुहोति—एतां हैव प्रजातिं प्रजायते—यां प्रजापतिः प्राजायत । एवमु हैवात्स्यतोऽग्नेर्मृत्योरात्मानं त्रायते ॥ ७ ॥

स यत्र म्रियते, यत्रैनमग्नावभ्यादधति—तदेषोऽग्नेरधिजायते । अथास्य शरीरमेवाग्निर्दहति । तद् यथा पितुर्वा मातुर्वा जायेत, एवमेषोऽग्नेरधिजायते । शश्वद्ध वा एष न सम्भवति—योऽग्निहोत्रं न जुहोति—तस्माद् वा अग्निहोत्रं होतव्यम् ॥ ८ ॥

तद्वा एतदेव विचिकित्सायै जन्म—यत् प्रजापतिर्व्यचिकित्सत् । स विचिकित्सञ्छ्रेयस्यध्रियत—यः प्र चाजायत, अत्स्यतश्चाग्नेर्मृत्योरात्मानमत्रायत । स यो हैवमेतद्विचिकित्सायै जन्म वेद—यद्ध किञ्च विचिकित्सति, श्रेयसि हैव ध्रियते ॥ ९ ॥

स हुत्वा न्यमृष्ट-ततो विकङ्कतः समभवत् । तस्मादेषः, यज्ञियो यज्ञपात्रीयो वृक्षः । तत एते

---

**स हुत्वेत्यादि** । यस्मादेवं प्रजापतिराहुत्या सूर्यादिलक्षणां प्रजामुदपादयत् 'अत्स्यतः' भक्षणं करिष्यतः 'अग्नेः' 'आत्मानम्' 'अत्रायत' । तस्माद् विदुषोऽप्येवं भवतीत्याह—**स य** इति ॥ ७ ॥

**स यत्र म्रियत** इति । अग्निहोत्रहोमं कुर्वन् देहावसाने 'अग्नौ' प्रक्षिप्तः मातापितृशरीरादिवत् तस्मादग्नेः सकाशात् दिव्यशरीरोऽभिनव उत्पद्यते । यस्त्वग्निहोत्रं न जुहोति, स त्वेवं नोत्पद्यत इत्यर्थः ॥ ८ ॥

**तद्वा एतदि**त्यादि । विचिकित्सापुरस्सरमाहुत्यनुष्ठानेन प्रजापतेः श्रेयःप्राप्तिर्जाता, 'एवञ्चिद्' इदानीन्तनोऽपि यजमानो विमर्शपूर्वकानुष्ठानेन श्रेयः प्राप्नोतीत्यर्थः ॥ ९ ॥

अग्निहोत्रहवणी स्रुक् विकङ्कतवृक्षेण निर्मातव्येत्यभिप्रेत्य तस्योत्पत्तिमाह—सहुत्वेति । प्रागुक्तमग्निवायुसूर्याणां

---

१—"वैकङ्कत २ स्रुक्स्रुवं प्रतप्य पाणिना सम्मार्ष्टि" इति का. श्रौ. सू. ४।३२१।

व्वृक्षस्तुत एतुे देवुानां वीरा अजायन्ताग्निर्योऽयं पुवते सूर्य्यः स यो हैवुमे-तान्देवुानां व्वीरान्वेदाहास्य व्वीरो जायते ॥ १० ॥

तुऽउ हैतुऽऊचुः । (र्व) व्वयं वै प्रजापतिं पितरमनु स्मो हुन्त व्वयं तत्सृजामहै यदस्मानन्वसादिति ते परिश्रित्य गायत्रेणापहिङ्कारेण तुष्टुविरे तद्यत्पर्य्यश्रयन्त्स समुद्रोऽथेयमेव पृथिव्या स्तावः ॥ ११ ॥

(स्ते) ते स्तुत्वा प्राञ्च ऽउच्चक्रमुः । पुनरेम ऽइति देवा एद्गाᳪं सम्भूताᳪं सा हैनानुदीक्ष्य हिञ्चकार ते देवा विविदाञ्चक्रुरेष साम्नो हिङ्कार ऽइत्युपहिङ्कारᳪं हैव पुरा ततः सामास स ऽएष गवि साम्नो हिङ्कारस्तस्मादेषोपजीवनीयोपजीवनीयो ह वै भवति य एवमेतं गवि साम्नो हिङ्कारं व्वेद ॥ १२ ॥

ते होचुः । (र्भ) भद्रं वा ऽइदमजीजनामहि ये गामजीजनामहि यज्ञो ह्येवेयं नो ह्यृते गोर्यज्ञस्तायतेऽन्नᳪं ह्येवेयं यद्धि किञ्चान्नं गौरेव तदिति॥१३॥

---

देवानां वीरा अजायन्त—अग्निः, योऽयं पवते, सूर्यः। स यो हैवमेतान् देवानां वीरान् वेद—आहास्य वीरो जायते ॥ १० ॥

त उ हैत ऊचुः—वयं वै प्रजापतिं पितरमनु स्मः, हन्त वयं तत् सृजामहै—यदस्मानन्वसादिति । ते परिश्रित्य गायत्रेणापहिङ्कारेण तुष्टुविरे। तद् यत्पर्यश्रयन् स समुद्रः ।अथेयमेव पृथिव्या स्तावः॥ ११

ते स्तुत्वा प्राञ्च उच्चक्रमुः—पुनरेम इति देवा एद्गां सम्भूताम्। सा हैनानुदीक्ष्य हिंचकार । ते देवाः विदाञ्चक्रुः 'एष साम्नो हिङ्कारः' इति। अपहिङ्कारं हैव पुरा ततः सामास। स एष गवि साम्नो हिङ्कारः—तस्मादेषोपजीवनीया । उपजीवनीयो ह वै भवति—य एवमेतं गवि साम्नो हिङ्कारं वेद ॥ १२ ॥

ते होचुः—भद्रं वा इदमजीजनामहि—ये गामजीजनामहि यज्ञो ह्येवेयम्, नो ह्यृते गोर्यज्ञस्तायते। अन्नं ह्येवेयम्, यद्धि किञ्चान्नं—गौरेव तदिति ॥ १३ ॥

---

जन्म अनूद्य, तद्वेदनफलमाह—**तत एत** इति । देवानां मध्ये 'वीराः' प्रबला इत्यर्थः ॥ १० ॥

अथ होमद्रव्यस्य पयस उत्पत्तिं वक्तुं[1] प्रथमतो गोरुत्पत्तिमाह—**त उ हे**ति। यथाऽस्मदीयः पिता प्रजापतिः अस्मान् सृष्टवान् 'वयं' 'तम् अनु' 'स्मः' भवामः 'यत्' यत्र 'अस्मान्' 'अनु' अनन्तरम् 'असद्' भवेत् जायेत, 'तद् वयं सृजामहै' एवं प्रतिज्ञाय गां संसृजन्तः हिङ्कारवर्जितेन गायत्रसाम्ना बहिष्पवमानेन 'तुष्टुविरे' स्तुतवन्तः। 'तस्य' स्तोत्रदेशस्य 'यत्' परिश्रयणं 'स समुद्रः' अभवत् यश्च 'स्तावः' स्तोत्रदेशः, सा 'पृथिवी' जातेत्यर्थः ॥ ११ ॥

**ते स्तुत्वे**ति। **पुनरेम इति**। पुनरागच्छाम इति स्तोत्रदेशात् प्रागुत्क्रम्य तस्मात् स्तोत्रात् 'सम्भूतां गां ते देवाः' प्राप्नुवन्नित्यर्थः। **सा हैनानि**त्यादि निगदसिद्धम् ॥ १२ ॥

**ते होचुरि**त्यादि। 'भद्रम्' उत्कृष्टं खलु 'इदम्' 'अजीजनामहि' अजनयाम। तदेतत् भद्रत्वमाह—

---

१—'वक्ष्यन्' इति क. पा.।

तद्वाऽएतद्देवैतासां नाम। (मै) एतद्यज्ञस्य तस्मादेतत्परिहरेत्साधु पुण्यमिति बह्वयो ह वाऽअस्यैता भवन्त्युपनामुक ऽएनं यज्ञो भवति य ऽएवं विद्वानेतत्परिहरति साधु पुण्यमिति ॥ १४ ॥

तासु हाग्निरभिदध्यौ। मिथुन्यनया स्यामिति ताᳬं सम्बभूव तस्याᳬं रेतः प्रासिञ्चत्तत्पयोऽभवत्तस्मादेतदामायां गवि सत्याᳬं शृतमग्नेर्हि रेतस्तस्माद्यदि कृष्णायां यदि रोहिण्याᳬं शुक्लमेव भवत्यग्निसङ्काशमग्नेर्हि रेतस्तस्मात्प्रथमदुग्धमुष्णं भवत्यग्नेर्हि रेतः ॥ १५ ॥

(स्ते) ते होचुः (हं) हन्तेदं जुहवामहाऽइति कस्मै नऽइदं प्रथमाय होष्यन्तीति मह्यमिति हैवाग्निरुवाच मह्यमिति योऽयं पवते मह्यमिति सूर्यस्ते न सम्पादयाञ्चक्रुस्ते हासम्पाद्योचुः प्रजापतिमेव पितरं प्रत्ययाम स यस्मै नऽइदं प्रथमाय होतव्यं वक्ष्यति तस्मै नऽइदं प्रथमाय होष्यन्तीति ते प्रजापतिं पितरं प्रतीत्योचुः कस्मै न इदं प्रथमाय होष्यन्तीति॥१६॥

---

तद्वा एतद्देवैतासां नाम, एतद्यज्ञस्य । तस्मादेतत्परिहरेत् साधु पुण्यमिति । बह्वयो ह वा अस्यैता भवन्ति उपनामुक एनं यज्ञो भवति–य एवं विद्वानेतत्परिहरति–साधु पुण्यमिति ॥ १४ ॥

तासु हाग्निरभिदध्यौ–मिथुन्यनया स्यामिति । तां सम्बभूव । तस्यां रेतः प्रासिञ्चत् । तत्पयोऽभवत् । तस्मादेतदामायां गवि सत्यां शृतम्, अग्निर्हि रेतः । तस्माद्यदि कृष्णायाम्, यदि रोहिण्याम्, शुक्लमेव भवति अग्निसङ्काशम्, अग्नेर्हि रेतः–तस्मात् प्रथमदुग्धमुष्णं भवति अग्नेर्हि रेतः ॥ १५ ॥

ते होचुः–हन्तेदं जुहवामहा इति । कस्मै न इदं प्रथमाय होष्यन्तीति । मह्यमिति हैवाग्निरुवाच, मह्यमिति–योऽयं पवते, मह्यमिति सूर्यः । ते न सम्पादयाञ्चक्रुः । ते हासम्पाद्योचुः–प्रजापतिमेव पितरं प्रत्ययाम, स यस्मै न इदं प्रथमाय होतव्यं वक्ष्यति, तस्मै न इदं प्रथमाय होष्यन्तीति । ते प्रजापतिं पितरं प्रतीत्योचुः–कस्मै न इदं प्रथमाय होष्यन्तीति ॥ १६ ॥

---

**यज्ञो** हीति । यस्माद् गोर्व्यतिरेके क्षीरघृतादिहविषोऽभावात् यज्ञो न विस्तीर्यते, तत इयं गौः यज्ञात्मिका । अन्नरूपत्वेनापि स्तौति–**अन्नं** हीति ॥ १३ ॥

नाम्नां गवां यज्ञस्य च साधारणमेकं नामोपदिश्य प्रशंसति–**तद्वा** इति । गां यज्ञं च एतदुभयमुत्कृष्टं पुण्यरूपमिति अनेनाभिप्रायेण 'परिहरेत्' रक्षेत् । तस्य परिहरणस्य फलमाह–**बह्वयो**हेति । 'उपनामुकः' उपनमनशीलः, यज्ञ एनमुपगतो भवतीत्यर्थः ॥ १४ ॥

पयस उत्पत्तिमाह–**तासु** हेति । 'अभिदध्यौ' अभिध्यानं कृतवान् । कथमिति, एतया गवा मिथुनीभवानीति । **तां सम्बभूवे**त्यादि, स्पष्टम् ॥ १५ ॥

एवं पयोरूपस्य हविष उत्पत्तिमभिधाय, अग्निसूर्य्यवायूनां मध्ये कस्मै प्रथमं देयं कस्मै चानन्तरमित्येतद् विभजति–**ते होचु**रिति । ते देवाः 'ऊचुः' अस्मदीयः पिता प्रजापतिः यथा अजुहोत्, एवमिदं वयं 'जुह-

सु होवाच । ( चा ) अग्नयेऽग्निरनुष्ठ्या स्वᳪं रेतः प्रजनयिष्यते तथा प्रजनिष्यध्व ऽइत्यथ तुभ्यमिति सूर्य्यमथ यदेव हूयमानस्य व्यश्नुते तदेवैतस्य योऽयं पवतऽइति तदेभ्य इदमप्येतर्हि तथैव जुह्वत्यग्नयऽएव सायᳪं सूर्य्याय प्रातरथ यदेव हूयमानस्य व्यश्नुते तदेवैतस्य योऽयं पवते १७॥

ते हुत्वा देवाः । ( ऽ ) इमां प्रजातिं प्राजायन्त यैषामियं प्रजातिरिमां विजितिं व्यजयन्त येयमेषां विजितिरिममेव लोकमग्निरजयदन्तरिक्षं वायुर्दिवमेव सूर्य्यः स यो हैवं विद्वानग्निहोत्रं जुहोत्येताᳪं हैव प्रजातिं प्रजायते यामेतऽएतत्प्राजायन्तैतां विजितिं विजयते यामेतऽएत-

---

स होवाच—अग्नये । अग्निरनुष्ठ्या स्वं रेतः प्रजनयिष्यते, तथा प्रजनयिष्यध्व इति । अथ तुभ्यमिति सूर्यम् । अथ यदेव हूयमानस्य व्यश्नुते, तदेवैतस्य—योऽयं पवत इति । तदेभ्य इदमप्येतर्हि तथैव जुह्वति—अग्नय एव सायम्, सूर्याय प्रातः, अथ यदेव हूयमानस्य व्यश्नुते तदेवैतस्य—योऽयं पवते ॥ १७ ॥

ते हुत्वा देवा इमां प्रजातिं प्राजायन्त—यैषामियं प्रजातिः, इमां विजितिं व्यजयन्त—येयमेषां विजितिः । इममेव लोकमग्निरजयत्, अन्तरिक्षं वायुः, दिवमेव सूर्यः । स यो हैवं विद्वानग्निहोत्रं जुहोति—

---

वामहै’ । किञ्चेमे यजमानाः ‘ नः ’ अस्माक मध्ये ‘ कस्मै ’ ‘ प्रथमाय ’ ‘ होष्यन्ति ’ ‘ इति ’ उक्तवन्तः । मह्यमित्यादि, निगदसिद्धम् । **ते न सम्पादयाञ्चक्रुरिति** । ‘ ते ’ देवाः परस्परं सम्पन्नाः ऐकमत्यं गता न बभूवुरित्यर्थः ॥ १६ ॥

**स होवाचेति । अग्निरनुष्ठ्यै** इति । एवं विवदमानेषु आगतेषु स प्रजापतिरेवमुक्तवान्—‘ अग्नेः प्रथमं होतव्यम् ’ ‘ अग्निर्हि ’ ‘ अनुष्ठ्या ’ अनुष्ठानेन प्रयत्नेन स्वकीयं ‘ रेतः ’ गवि पयोरूपेण निरवर्त्तयत् ‘ तथा ’ यूयमपि । तस्मादग्नेरनन्तरमेव ‘ प्रजनिष्यध्वे ’ प्रजाता भवथ । तस्मादग्नय एव प्रथमं होतव्यमित्युक्त्वा, प्रजापतिः ‘ अथ ’ अनन्तरं ‘ तुभ्यम ’ होतव्यम् ‘ इति ’ ‘ सूर्यम् ’ प्रति उक्तवान् । हूयमानस्य च पयसः ‘ यद् ’ ‘ व्यश्नुते ’ विशुद्धिमाप्नोति[1] स एव वायोर्भाग इति वायुं प्रत्यब्रवीत् । **तदेभ्य** इत्यादि । यस्मादेवं प्रजापतिनोक्तम्, तस्मादेव कारणात् तत् पय एव ‘अग्नये सायं जुह्वति’, ‘प्रातः सूर्य्याय’ इति विभागः सम्पन्नः[2] ॥ १७

‘ **ते हुत्वा देवा** इति । ते च देवाः ’ एवं ‘ हुत्वा ’ प्रजात्यादिष्टं फलं प्राप्नुवन् । एतद् ज्ञात्वा इदानीन्तनोऽपि यजमानो ‘ यः ’ ‘अग्निहोत्रं जुहोति,’ सः ‘एताम्’ अग्निसूर्य्यादिभिः प्राप्तां प्रजातिम् । इतः सुगमम् ॥

---

१–‘ विशुद्धिमेति ’–इ. क. पा. । २–“ क्षीरहोमी ” इति का. श्रौ. सू. ४ । १० । १३ । “वाग्यतो दोहप्रभृत्याहोमात् क्षीरहोता चेत्–इति च तत्रैव ॥ तथा “ पयसा स्वर्गकामः पशुकामो वा, यवाग्वा ग्रामकामः, तण्डुलैर्बलकामः, दध्नेन्द्रियकामः, अनधिश्रयणे च श्रुतिसामर्थ्याभ्यां, घृतेन तेजस्कामः, संवत्सरं जुहुयादेतेषामेकैकेन कामसंयोगे”–इत्यादीनि सूत्राणि ( का. श्रौ. सू. ४ । १५ । २१–२६ ) पर्यालोच्यानि ॥

व्यजयन्तैतैरु हैव सलोको भवति यऽ एवं विद्वानग्निहोत्रं जुहोति तस्माद्वा ऽअग्निहोत्रꣳ होतव्यम् ॥ १८ ॥

इति द्वितीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ २–२ ॥

इति द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥ २–२–४ ॥

इति द्वितीयकाण्डे द्वितीयोऽध्यायः ॥ २ ॥

---

एतां हैव प्रजातिं प्रजायते–यामेत एतत् प्राजायन्त, एतां विजितिं विजयते–यामेत एतद्व्यजयन्त । एतैरु हैव सलोको भवति, य एवं विद्वानग्निहोत्रं जुहोति । तस्माद्वा अग्निहोत्रं होतव्यम् ॥ १८ ॥

---

एतावता अग्निहोत्राख्यस्य कर्मणः पयो द्रव्यम्, तच्च सायम्प्रातःकालयोरनुष्ठेयम्, तत्र सायङ्कालीनस्य अग्निर्देवता, प्रातःकालीनस्य सूर्य[3]:, इत्येतत् प्रतिपादितं भवति ॥ १८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥ २–२–४ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥ २ ॥

धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः
कार्पासीयं कृपावान् गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥ ३ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे द्वितीयोऽध्यायः समाप्तः ॥ २ ॥ २ ॥ २ ॥

---

१–" सायं प्रातर्वा " का. श्रौ. सू. ४ । १५–२७ । २–" प्रदीप्तामभिजुहोत्यग्निर्ज्योतिरिति सजूरिति वा "–"अग्निर्वर्च इति ब्रह्मवर्चसकामस्य " का. श्रौ. सू. ४ । १४ । १४–१५ ॥ ३–" अग्निशब्दे सूर्यः–रात्र्युषसाहेति वा–ज्योतिः सूर्य इति वा प्रातः " इति का. श्रौ. सू. ४ । १५ । ८–९–१० ॥

# अथ तृतीयाध्याये प्रथमं ब्राह्मणम् ।

सूर्य्यो ह वा ऽअग्निहोत्रम् । तद्यदेतस्या ऽअग्र आहुतेरुदैत्तस्मात्सूर्य्यो ऽअग्निहोत्रम् ॥ १ ॥

(२ऽ) स यत्सायमस्तमिते जुहोति । य इदं तस्मिन्निह सति जुहवानीत्यथ यत्प्रातरनुदिते जुहोति य ऽइदं तस्मिन्निह सति जुहवानीति तस्माद्वै सूर्य्योऽग्निहोत्रमित्याहुः ॥ २ ॥ [ शतम् १००० ]

(३) अथ यदस्तमेति । तदग्नावेव योनौ गर्भो भूत्वा प्रविशति तं गर्भं भवन्तमिमाः सर्व्वाः प्रजा अनुगर्भा भवन्तीलिता हि शेरे सञ्जानाना ऽअथ यद्रात्रिस्तिर ऽ एवैतत्करोति तिर ऽइव हि गर्भाः ॥ ३ ॥

---

सूर्यो ह वा अग्निहोत्रम् । तद्यदेतस्या अग्रे आहुतेरुदैत्, तस्मात्सूर्योऽग्निहोत्रम् ॥ १ ॥

स यत्सायमस्तमिते जुहोति—य इदं तस्मिन्—इह सति जुहवानीति । अथ यत् प्रातरनुदिते जुहेति—य इदं तस्मिन्—इह जुहवानीति । तस्माद्वै सूर्योऽग्निहोत्रमित्याहुः ॥ २ ॥

अथ यदस्तमेति, तदग्नावेव योनौ गर्भो भूत्वा प्रविशति । तं गर्भं भवन्तमिमाः सर्वाः प्रजा अनुगर्भा भवन्ति ईलिता हि शेरे सञ्जानानाः । अथ यद् रात्रिः, तिर एवैतत्करोति । तिर इव हि गर्भाः॥३॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्म्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

सायंप्रातर्होमयोः कालविशेषं विधित्सुरग्निहोत्रं सूर्यात्मना प्रशंसति—**सूर्य्यो** हेति । तदुपपादयति—**एतस्या** इति । प्रजापतिना प्रथमं हुताया इत्यर्थः ॥ १ ॥

प्रकारान्तरेण सूर्य्यात्मकतां ब्रुवन् सायंप्रातर्होमयोः कालविशेषं विधत्ते—**स यदि**ति । ' यः ' यजमानः ' इह ' अग्नौ तस्मिन् सूर्ये ' सति ' ' इदं ' हविः जुहवानि इति मन्यते, सः सायमग्निहोत्रमस्तमिते कुर्य्यात्, प्रातर्होमञ्चानुदिते, अनुदितो हि सूर्य्योऽग्निनैकीभूतो वर्त्तते; " अग्निं वाव आदित्यः सायं प्रविशति "—(तै०ब्रा० २ । १ । २ । ९) इति श्रुतेः । यस्मादेवमग्निहोत्रं सूर्य्यसम्बद्धम् तस्मात् तादात्म्येन स्तुतिः ॥ २ ॥

रात्रौ सूर्य्यस्याग्न्यवस्थानं प्रतिपादयति—**अथ यदि**ति । सूर्यस्य गर्भभावमनु रात्रौ 'सर्व्वाः प्रजाः' 'गर्भा' एव ' भवन्ति ' । तासां गर्भसाम्यमाह—**ईलिता ही**ति । रात्रौ हि सर्वाः प्रजाः ' सञ्जानानाः ' समानमेकविधं ज्ञानं प्राप्ताः ' ईलिताः ' स्तुता हृष्टाः ' शेरे ' शेरते । " लोपस्त आत्मनेपदेषु " इति तलोपः ( पा. सू. ७।१।४१ ) पुनरपि गर्भसाम्यमाह—**अथ यदि**ति । गर्भरूपेणाग्नावस्थितं सूर्यं रात्रिः ' तिर एव ' तिरोहितमाच्छादितं करोति । यस्तदेवं तस्मात् असौ ' गर्भः ' ' तिर इव हि ' लौकिकगर्भस्य प्रसिद्धिर्हि शब्देनोक्ता ॥ ३ ॥

---

१—"उद्धरेति यजमानो ब्रूयात्सायंप्रातयोरग्निहोत्रे" । का. श्रौ. सू. ४ । १३ । १ ॥ २—"अस्तमिते जुहोति " । का. श्रौ सू. ४ । १४ । ६ ॥ ३—"प्रातर्जुहोत्यनुदिते " । का. श्रौ. सू. ४ । १५ । १ ।

स यत्सायमस्तमिते जुहोति । गर्भमेवैतत्सन्तमभिजुहोति गर्भᳬं सन्तमभिकरोति स यद्गर्भᳬं सन्तमभिजुहोति तस्मादिमे गर्भा अनश्नन्तो जीवन्ति ॥ ४ ॥

( न्त्यु ) अथ यत्प्रातरनुदिते जुहोति । प्रजनयत्येवैनमेतत्सोऽयं तेजो भूत्वा विभ्राजमान ऽउदेति शश्वद्ध वै नोदियाद्यदस्मिन्नेतामाहुतिं न जुहुयात्तस्माद्वा ऽएतामाहुतिं जुहोति ॥ ५ ॥

स यथाऽहिस्त्वचो निर्मुच्येत । ( तै ) एवᳬं रात्रेः पाप्मनो निर्मुच्यते यथा ह वाऽअहिस्त्वचो निर्मुच्येतैवᳬं सर्वस्मात्पाप्मनो निर्मुच्यते य ऽएवं विद्वानग्निहोत्रं जुहोति तदेतस्यैवानु प्रजातिमिमाः सर्वाः प्रजाऽअनु प्रजायन्ते वि हि सृज्यन्ते यथार्थम् ॥ ६ ॥

---

स यत् सायमस्तमिते जुहोति—गर्भमेवैतत्सन्तमभिजुहोति, गर्भं सन्तमभि करोति । स यद्गर्भं सन्तमभिजुहोति—तस्मादिमे गर्भा अनश्नन्तो जीवन्ति ॥ ४ ॥

अथ यत् प्रातरनुदिते जुहोति—प्रजनयत्येवैनमेतत्सोऽयं तेजो भूत्वा विभ्राजमान उदेति । शश्वद्ध वै नोदियाद्—यदस्मिन्नेतामाहुतिं न जुहुयात् । तस्माद्वा एतामाहुतिं जुहोति ॥ ५ ॥

स यथाऽहिस्त्वचो निर्मुच्येत—एवं रात्रेः पाप्मनो निर्मुच्यते । यथा ह वा अहिस्त्वचो निर्मुच्येत—

---

एवं गर्भरूपत्व प्रतिपाद्य अस्तमिते होममुपपादयति—**स यत्सायमिति** । **गर्भं सन्तमिति** । अस्तमयात्, पूर्वं हि सूर्यस्याकाशेऽवस्थानाद् गर्भभावो नास्ति, तदूर्ध्वन्तु अग्नौ गर्भरूपेण प्रविशन्तम् ‘ अभि ’ होमं कुर्वन् परस्मिन् दिवसे पुनर्जनयितुं वर्द्धयति । **यद् गर्भमित्यादि** । यस्माद् गर्भभूतस्य सूर्यस्य रात्रावग्निहोत्रहविषा वर्द्धनम्, तस्मादेवञ्जातीया इतरे गर्भाः ‘ अनश्नन्तः ’ अशनमकुर्वन्तोऽपि ‘ जीवन्ति ’ वर्द्धन्ते ॥ ४ ॥

एवं सायंहोमस्य गर्भवृद्धिहेतुतामभिधाय, प्रातर्होमस्य तज्जननहेतुत्वमुपपादयन्, तस्य ततः प्रागेवानुदिते कर्त्तव्यतामाह—**अथ यत् प्रातरिति** । अन्वयव्यतिरेकाभ्यां प्रातराहुतेर्जननहेतुतामुपपादयति—**सोऽयमिति** । **तेजो भूत्वेति** । आहुत्या वार्द्धितस्तेजस्वी भूत्वेत्यर्थः । **शश्वद्ध वा** इति । नित्यमेवेत्यर्थः ॥ ५ ॥

उद्यतः सूर्यस्य तेजःप्राप्तिं दृष्टान्तेनोपपादयति—**स यथेति** । **रात्रेः पाप्मन** इति । रात्रिरूपात् तेजःप्रतिबन्धकात् पापादित्यर्थः । एवं सूर्य्याग्निहोत्रहोमात्ययंनिर्मोकं प्रतिपाद्य विदुषोऽपि प्रतिपादयति—**यथा ह वा** इति । **वि हि सृज्यन्त** इति । अनुदितहोमान्ते सूर्यस्योदये सति ‘ यथार्थं ’ यथाप्रयोजनं ‘ सर्वाः प्रजाः ’ विसृज्यन्ते प्रवर्त्तन्त इत्यर्थः ॥ ६ ॥

---

१—संति चात्र बहवः काम्यकालविषयः । तद्यथा—“प्रथमास्तमिते पर्युदयश्च स्वर्गकामस्य, तमोऽत्यये सायं जुहुयाद्वियति प्रातरायुष्कामस्य, अन्तःपशौ पशुकामस्य सायं प्रातः, शयाने श्रीकामस्य प्रातः” का. श्रौ. सू. ४ । १५ । १२—१५ तथैव होमायाग्न्यवस्था अपि बहुविधास्तत्रैवोक्ताः—“ प्रथमसमिद्ध धूप्यमाने प्रजासु निहत्येव सहसान्नमत्स्यतः, भूयिष्ठार्चिषि गृहीत्वेव सहसा, प्रदीप्ततमे श्रीयशस्कामस्य, अर्चिःप्रत्यवाये मंत्रेणान्नमत्स्यतः अंगारेषु चाकश्यमानेषु ब्रह्मवर्चसकामस्य” इति का.श्रौ.सू. ४।१५।१६—२०॥

(७) स यः पुराऽऽदित्यस्यास्तमयात्।(दा) आहवनीयमुद्धरत्येते वै विश्वे देवा रश्मयो योऽथ यत्परं भाः प्रजापतिर्वा स ऽइन्द्रो वै तद्व ह वै विश्वे देवा अग्निहोत्रं जुह्वतो गृहानागच्छन्ति स यस्यानुद्धृतमागच्छन्ति तस्माद्देवा ऽअपप्रयन्ति तद्वाऽअस्मै तद्व्यृध्यते यस्माद्देवा अपप्रयन्ति तस्यानु व्यृद्धिं यश्च वेद यश्च नानुद्धृतमभ्युस्तमगादित्याहुः ॥ ७ ॥

(र)अथ यः पुराऽऽदित्यस्यास्तमयात् । (दा) आहवनीयमुद्धरति यथा श्रेयस्यागमिष्यत्यावसथेनोपक्लृप्तेनोपासीतैवं तत्स यस्योद्धृतमागच्छन्ति तस्याहवनीयं प्रविशन्ति तस्याहवनीये निविशन्ते ॥ ८ ॥

---

एवं सर्वस्मात्पाप्मनो निर्मुच्यते-य एवं विद्वानग्निहोत्रं जुहोति । तदेतस्यैवानु प्रजातिमिमाः सर्वाः प्रजा-अनु प्रजायन्ते । वि हि सृज्यन्ते यथार्थम् ॥ ६ ॥

स यः पुराऽऽदित्यस्यास्तमयादाहवनीयमुद्धरति । एते वै विश्वे देवा रश्मयः, योऽथ यत्परं भाः, प्रजापतिर्वा स इन्द्रो वा । तद्व ह वै विश्वे देवा अग्निहोत्रं जुह्वतो गृहानागच्छन्ति । स यस्यानुद्धृतमागच्छन्ति, तस्माद् देवा अपप्रयन्ति । तद्वा अस्मै तद् व्यृध्यते—यस्माद् देवा अपप्रयन्ति । तस्यानु व्यृद्धिं-यश्च वेद, यश्च न,—अनुद्धृतमभ्यस्तमगादित्याहुः ॥ ७ ॥

अथ यः । पुराऽऽदित्यस्यास्तमयादाहवनीयमुद्धरति । यथा श्रेयस्यागमिष्यत्यावसथेनोपक्लृप्तेनोपासीत एवं तत् । स यस्योद्धृतमागच्छन्ति तस्याहवनीयं प्रविशन्ति तस्याहवनीये निविशन्ते ॥ ८ ॥

---

सायमग्निहोत्रस्याहवनीयविहरणमस्तमयात् प्रागेव कर्त्तव्यमिति विधिमभिप्रेत्य सिद्धवदनुवदति—**स यः पुरेति** । **आहवनीयमुद्धरतीति** । गार्हपत्यादाहवनीयं प्रणयेदित्यर्थः । एतदुपपादयितुं यजमानगृहं प्रति देवानामागमनमाह—**एते वा** इत्यादिना । एते खलु सूर्यस्य 'रश्मयः' 'विश्वे देवाः' 'अथ' 'यत्' 'परं भाः' रश्मीनामुपर्यवस्थितं सूर्याख्यं ज्योतिः 'स प्रजापतिर्वा इन्द्रो वा' तत् ज्योतिः प्रजापत्यात्मकमिन्द्रात्मकं च विकल्पेन भवतीत्यर्थः । 'तेऽस्तमयात् प्रागवस्थिता विश्वे देवाः' अग्निहोत्रिणो यजमानस्य 'गृहान् आगच्छन्ति' ते चागता आहवनीयानुद्धरणे सत्याश्रयाभावात् निवर्त्तन्ते, उद्धृते त्वाहवनीये तं प्रविश्य निविशन्त इत्याह—**स यस्यानुद्धृतमि**त्यादिना । **तद्वा अस्मा** इति । आगतानां देवानां यदपगमनम् तेन अस्मै यजमानाय तद् अग्निहोत्रं व्यृद्ध्यते विगतर्द्धिकं भवतीत्यर्थः । **तस्यानु व्यृद्धिमि**ति । 'तस्य' अग्निहोत्रस्य 'व्यृद्धिम्' अनुलक्ष्य, 'यश्च' एवं 'वेद', 'यश्च' 'न वेद' ते सर्वे अनुद्धृतमाहवनीयमभिलक्ष्य सूर्योऽस्तमगादिति सर्वे निन्दन्तीत्यर्थः॥७॥

**अथ यः पुरे**ति । **आवसथेनोपक्लृप्तेने**ति । आवसन्त्यस्मिन्निति 'आवसथम्' आसनम् । तेनोपक्लृप्तेन आयास्यन्तं श्रेयांसं यथोपासीत, 'एवं' 'तत्' अस्तमयात् प्राक् आहवनीयोद्धरणमित्यर्थः । निविशन्त इति "नेर्विशः"-( पा० सू० १ । ३ । १७ ) इत्यात्मनेपदम् ॥ ८ ॥

---

१—गार्हपत्यादाहवनीयस्योद्धरणमनस्तमितानुदितयोः । इति का. श्रौ. सू. ४। १३। ३।

स यत्सायमस्तमिते जुहोति । ( त्य ) अग्नावेवैभ्य ऽएतत्प्रविष्टेभ्यो जुहोत्यथ यत्प्रातरनुदिते जुहोत्यप्रेतेभ्य ऽएवैभ्य ऽएतज्जुहोति तस्मादुदितहोमिनां विच्छिन्नमग्निहोत्रं मन्यामह ऽइति ह स्माहासुरिर्यथा शून्यमावसथमाहरेदेवं तदिति ॥ ९ ॥

द्वयं वा ऽइदं जीवनम् । ( म्मू ) मूलि चैवामूलं च तदुभयं देवानाᳬं सन्मनुष्या ऽउपजीवन्ति पशवो मूला ओषधयो मूलिन्यस्ते पशवो मूला ओषधीर्मूलिनीर्जग्ध्वापः पीत्वा तत एष रसः सम्भवति ॥१०॥

स यत्सायमस्तमिते जुहोति । ( त्य ) अस्य रसस्य जीवनस्य देवेभ्यो जुहवानि यदेषामिदᳬं सदुपजीवामऽ इति स यत्ततो रात्र्याश्नाति हुतोच्छिष्टमेव तन्निरवत्तबल्यश्नाति हुतोच्छिष्टस्य ह्येवाग्निहोत्रं जुह्वदशिता ॥ ११ ॥

---

स यत् सायमस्तमिते जुहोति—अग्नावेवैभ्य एतत्प्रविष्टेभ्यो जुहोति । अथ यत्प्रातरनुदिते जुहोति—अप्रेतेभ्य एवैभ्य एतज्जुहोति । तस्मादुदितहोमिनां विच्छिन्नमग्निहोत्रं मन्यामह—इति ह स्माहासुरिः । यथा शून्यमावसथमाहरेद्—एवं तदिति ॥ ९ ॥

द्वयं वा इदं जीवनम्—मूलि चैवामूलं च । तदुभयं देवानां सन्मनुष्या उपजीवन्ति । पशवो मूलाः, ओषधयो मूलिन्यः । ते पशवो मूला ओषधीर्मूलिनीर्जग्ध्वाऽपः पीत्वा तत एष रसः सम्भवति॥ १०॥

स यत् सायमस्तमिते जुहोति—अस्य रसस्य जीवनस्य देवेभ्यो जुहवानि, यदेषामिदं सदुपजीवाम इति । स यत्ततो रात्र्याऽश्नाति, हुतोच्छिष्टमेव तन्निरवत्तबल्यश्नाति । हुतोच्छिष्टस्य ह्येवाग्निहोत्रं जुह्वदशिता ॥ ११ ॥

---

**स यत् साय**मित्यादि । निगदसिद्धम् । **तस्मादुदितहोमिना**मित्यादि । यस्मात् सूयरश्मिरूपा विश्वेदेवा उदयात् प्राक् अग्नौ आसते, उदिते च सूर्ये ततोऽपगच्छन्ति, तस्मात् उदयात् परं प्रातर्होमं कुर्वताम् 'अग्निहोत्रं विच्छिन्नम्' एव भवति । कथं विच्छिन्नमित्यत ऊर्द्ध्वं दर्शयति—**यथा शून्य**मिति । 'यथा' आगतेऽतिथौ गृहापगते सति ' शून्यं ' तदावासस्थानं प्रतिपन्नमिति न तपणीयान्नपानादिकम् ' आहरेत् ' ' एवं ' आहवनीयाद्रश्मिरूपेषु देवेषु ' तत् ' उदितं सूर्यं प्रति गतेषु तदुद्देशेनाहवनीयहोम इत्यर्थः ॥ ९ ॥

एतावेवास्तमितानुदितहोमौ प्रकारान्तरेण प्रशंसति—**द्वयं वा इद**मित्यादिना । देवानां सदिति । ' देवानां ' स्वभूतं सदित्यथः । किं तत् ? मूलं किं वा मूलयुक्तम् ? **एष रस** इति । क्षीरात्मको रस इत्यर्थः ॥ १० ॥

**स यत्सायमस्तमित** इति । **अस्य रसस्य जीवनस्ये**ति । मूलयमूलोभयनिष्पन्नस्य सर्वप्राणिजीवनहेतोः क्षीरात्मकस्य रसस्य भागं प्रथमं ' देवेभ्यः ' तत्स्वामिभ्यः ' जुहवानि' पश्चात् तदुपभुक्तशेषैः सर्वे वयम् ' उप

---

१—कथं विच्छित्तिरित्येतद्दर्शयति । इति क. पु. पाठः ।

( ताथ ) अथ यत्प्रातरनुदिते जुहोति । ( त्य ) अस्य रसस्य जीवनस्य देवेभ्यो जुहवानि यदेषामिदꣳ सदुपजीवाम इति स यत्ततोऽह्नाऽश्नाति हुतोच्छिष्टमेव तन्निरवत्तबल्यश्नाति हुतोच्छिष्टस्य ह्येवाग्निहोत्रं जुह्वदशिता ॥ १२ ॥

तदाहुः । समेवान्ये यज्ञास्तिष्ठन्तेऽग्निहोत्रमेव न सन्तिष्ठतेऽपि द्वादशसंव्वत्सरमन्तवदेवाथैतदेवानन्तꣳ सायꣳ हि हुत्वा व्वेद प्रातर्होष्यामीति प्रातर्हुत्वा व्वेद पुनः सायꣳ होष्यामीति तदेतदनुपस्थितमग्निहोत्रं तस्यानुपस्थितिमन्वनुपास्थिता ऽइमाः प्रजाः प्रजायन्तेऽनुपास्थितो ह वै श्रिया प्रजया प्रजायते यऽएवमेतदनुपस्थितमाग्निहोत्रं व्वेद ॥ १३ ॥

---

अथ यत् प्रातरनुदिते जुहोति—अस्य रसस्य जीवनस्य देवेभ्यो जुहवानि—यदेषामिदं सदुपजीवाम इति । स यत्ततोऽह्नाऽश्नाति, हुतोच्छिष्टमेव तन्निरवत्तबल्यश्नाति । हुतोच्छिष्टस्य ह्येवाग्निहोत्रं जुह्वदशिता ॥ १२ ॥

तदाहुः । समेवान्ये यज्ञास्तिष्ठन्ते, अग्निहोत्रमेव न सन्तिष्ठते, अपि द्वादशसंवत्सरम्—अन्तवदेव, अथैतदेवानन्तम् । सायं हि हुत्वा वेद—प्रातर्होष्यामीति । प्रातर्हुत्वा वेद—पुनः सायं होष्यामीति । तदेतदनुपस्थितमग्निहोत्रम् । तस्यानुपस्थितिमन्वनुपास्थिता इमाः प्रजाः प्रजायन्ते । अनुपस्थितो ह वै श्रिया प्रजया प्रजायते-य एवमेतमदनुपस्थितमाग्निहोत्रं वेद ॥ १३ ॥

---

जीवामः ' ' इति ' अनेनाभिप्रायेण पयसा[1] ' अग्निहोत्रं ' जुहुयादित्यर्थः । तस्य प्रयोजनमाह—**स यदिति** । ' ततः ' अतो होमानन्तरं रात्र्या कालेन ' यत् ' अशितं भवति, ' तत्[2] ' सर्वं ' हुतोच्छिष्टमेव ' भुक्तं भवति । **निरवत्तबलीति** । निष्कृष्यावत्तो बलिर्देवभागो यस्मात्, तन्निरवत्तबलि । एवम् ' अग्निहोत्रं जुह्वत् ' पुरुषः हुतोच्छिष्टस्यैव रात्रौ ' अशिता ' भोक्ता भवति ॥ ११ ॥

प्रातर्होमेऽप्येवमाह—**अथ यदिति** ॥ १२ ॥

अग्निहोत्रहोमस्येतरयज्ञवैलक्षण्येनासंस्थितत्वं प्रतिपादयति—**तदाहुरिति** । ' अन्ये ' ज्योतिष्टोमादयो ' यज्ञाः ' संतिष्ठन्ते ' समाप्यन्त एव । यत्तु द्वादशसंवत्सरसाध्यं सत्रम्, तदप्यवसानवदेव; अग्निहोत्रं तु ' अनन्तं ' अन्तरहितम् । तदेवानन्त्यं दर्शयति—**सायं हीति** । अस्त्वेवमग्निहोत्रस्यासंस्थितयज्ञत्वम्, । किं तत इत्याह—**तस्यानुपस्थितिमन्विति** । अनुपस्थिताः परिसमाप्तिरहिताः । ' श्रिया ' ' अनुपस्थितः ' अपरिसमाप्तः, सर्वदा तद्युक्त इत्यर्थः ॥ १३ ॥

---

१—"पयसा स्वर्गकामः पशुकामो वा " का. श्रौ. सू. ४ । ३६५ ॥ २—तत्सर्वं हुतोच्छिष्टमेव । इति क. पु. पाठः ॥

तद्दुग्ध्वाधिश्रयति। शृतमसदिति तदाहुर्यर्ह्युदन्तं तर्हि शृतं तर्हि जुहुयादिति तद्वै नोदन्तं कुर्यादुप ह दहेद्यदुदन्तं कुर्यादप्रजज्ञि वै रेत ऽउपदग्धं तस्मान्नोदन्तं कुर्यात् ॥ १४ ॥

( द ) अधिश्रित्यैव जुहुयात्। ( ध ) यन्न्वेवैतदग्ने रेतस्तेन न्वेव शृतं यद्वेनदग्नावधिश्रयन्ति तेनोऽएव शृतं तस्मादधिश्रित्यैव जुहुयात्॥ १५ ॥

( न ) तदवज्योतयति। शृतं व्वेदानीत्यथापः प्रत्यानयति शान्त्यै न्वेव रसस्यो चैव सर्व्वत्वायेदꣳ हि यदा व्वर्षत्यथौषधयो जायन्तऽ ओषधीर्जग्ध्वापः पीत्वा तत एष रसः सम्भवति तस्माद्रसस्यो चैव सर्व्वत्वाय तस्माद्यद्येनं क्षीरं केवलं पानेऽभ्याभवेदुदस्तोकमाश्चोतयितवै ब्रूयाच्छान्त्यै न्वेव रसस्यो चैव सर्व्वत्वाय ॥ १६ ॥

---

तद्दुग्ध्वाऽधिश्रयति। शृतमसदिति। तदाहुः यर्ह्युदन्तं तर्हि शृतं तर्हि जुहुयादिति। तद्वै नोदन्तं कुर्यात्, उप ह दहेद् यदुदन्तं कुर्यात्-अप्रजज्ञि वै रेत उपदग्धम्-तस्मान्नोदन्तं कुर्यात् ॥ १४ ॥

अधिश्रित्यैव जुहुयात्। यन्न्वेवैतदग्ने रेतस्तेन न्वेव शृतम्। यद्वेनदग्नावधिश्रयन्ति तेनो एव शृतम्। तस्मादधिश्रित्यैव जुहुयात् ॥ १५ ॥

तदवज्योतयति-शृतं वेदानीति। अथापः प्रत्यानयति-शान्त्यै न्वेव, रसस्यो चैव सर्वत्वाय। इदं हि यदा वर्षति-अथौषधयो जायन्ते, ओषधीर्जग्ध्वाऽपः पीत्वा तत एष रसः सम्भवति-तस्माद् रसस्यो चैव सर्वत्वाय। तस्माद् यद्येनं क्षीरं केवलं पानेऽभ्याभवेत्-उदस्तोकमाश्चोतयितवै ब्रूयात्-शान्त्यै न्वेव रसस्यो चैव सर्वत्वाय ॥ १६ ॥

---

एवं पयसो होमसाधनत्वं विधाय तस्य दोहनानन्तरमग्नावधिश्रयणं विधत्ते-**तद्दुग्ध्वाधिश्रयतीति**। 'शृतमसत्' पक्वं भवेदित्यनेनाभिप्रायेणेत्यर्थः। "शृतं पाके" ( पा. सू. ६।१।२७ ) इति निपात्यते। कियदवधिकः पाक इत्याशङ्क्य तत्रैकं मतमुपन्यस्यति-**तदाहुरिति**। 'यर्हि' यस्मिन् काले तत् पयः 'उदन्तं' पाकवशादुद्गतान्तं बुद्बुदवद् भवति, 'तर्हि' तस्मिन् काले तच्छृतं भवति। तदवस्थापन्नेन पयसा 'जुहुयात्' इत्यर्थः। तदेतन्निषिध्य पक्षान्तरमाह-**तद्वा** इति। उप ह दहेत् एव। को दोष इति, तत्राह-**अप्रजज्ञीति**। रेतः संस्तुतं ह्येतत् पयः तच्च 'उपदग्धम्', अप्रजज्ञि अप्रजननशीलम्, प्रजोत्पादकं न भवतीत्यर्थः ॥ १४ ॥

कथं तर्हि दग्धव्यमित्याह-**अधिश्रित्यैवेति**। अधिश्रयणानन्तरमेव 'जुहुयात्', न तु पाकेनोदन्तं कुर्यात्। नन्वशृतस्य होमयोग्यत्वं नास्तीति चेत् तत्राह-**यन्न्वेवेति**। पयसोऽग्निरेतस्त्वं प्रागाम्नातम्-"तस्या१ रेतः प्रासिञ्चत् तत् पयोऽभवत्"-( श० प० २ का० २ अ० ४ ब्रा० १९ कं. ) इति। तथा चाग्निरेतस्त्वादेव पयः शृतमेव सर्वदा। अतश्चाग्नावधिश्रयणमात्रादेव तच्छृतं भवतीति तदवस्थेनैव जुहुयादित्यर्थः ॥ १५ ॥

**तदवज्योतयतीति**। ज्वालायुक्तेन दर्भाग्रेण अवाङ्मुखं प्रकाशतीत्यर्थः। **अथापः प्रत्यानयतीत्यादि**, स्पष्टम्। **उदस्तोकमाश्चोतयितवा** इति। उदकस्य बिन्दुराश्चोतयितव्य आसेक्तव्य इति ब्रूयादित्यर्थः ॥ १६ ॥

---

१-"पूर्वेणाहवनीयमाहृत्य गार्हपत्येऽधिश्रयत्युत्तरतो निरूह्याङ्गारान्" इति का.श्रौ.सू. ४।३।१६॥ २-'दातव्यम्' 'होतव्यम्' इ.पा.।

( ग्राथ ) अथ चतुरुन्नयति । चतुर्द्धा विहितᳪं हीदं पयोऽथ समिधमादायोदाद्रवति समिद्धहोमायैव सो ऽनुपसाद्य पूर्व्वामाहुतिं जुहोति स यदुपसादयेद्यथा यस्मा ऽअशनमाहरिष्यन्त्स्यात्तदन्तरा निदध्यादेवं तदथ यदनुपसाद्य यथा यस्मा ऽअशनमाहरेत्तस्मा ऽआहृत्यैवोपनिदध्यादेवं तदुपसाद्योत्तरां नानावीर्येऽएवैनेऽएतत्करोति मनश्च ह वै वाक्चैते ऽआहुती तन्मनश्चैवैतद्वाचं च व्यावर्तयति तस्मादिदं मनश्च वाक्च समानमेव सन्नानेव ॥ १७ ॥

स वै द्विरग्नौ जुहोति । द्विरुपमार्ष्टि द्विः प्राश्नाति चतुरुन्नयति तद्दश दशाक्षरा वै विराड् विराड् वै यज्ञस्तद्विराजमेवैतद्यज्ञमभिसम्पादयति॥ १८॥

---

अथ चतुरुन्नयति, चतुर्द्धा विहितं हीदं पयः । अथ समिधमादायोदाद्रवति–समिद्धहोमायैव । सोऽनुपसाद्य पूर्वामाहुतिं जुहोति । स यदुपसादयेद् यथा यस्मा अशनमाहरिष्यन्त्स्यात्, तदन्तरा निदध्याद् एवं तत् । अथ यदनुपसाद्य–यथा यस्मा अशनमाहरेत् तस्मा आहृत्यैवोपनिदध्याद् एवं तत् । उपसाद्योत्तरां नानावीर्ये एवैने एतत् करोति । मनश्च ह वै वाक् चैते आहुती । तन्मनश्चैवैतद्वाचं च व्यावर्तयति । तस्मादिदं मनश्च वाक् च समानमेव सन्नानेव ॥ १७ ॥

स वै द्विरग्नौ जुहोति, द्विरुपमार्ष्टि, द्विः प्राश्नाति, चतुरुन्नयति, तद्दश । दशाक्षरा वै विराट् । विराड् वै यज्ञः । तद्विराजमेवैतद्यज्ञमभिसम्पादयति ॥ १८ ॥

---

**अथ चतुरुन्नयतीति** । **चतुर्द्धा विहितं हीति** । चतुर्भ्यः स्तनेभ्यो दुग्धत्वात् चतुर्द्धा विहितत्वम् । **समिद्धहोमायैवेति** । समिद्धेऽग्नौ होमार्थमुन्नीतपयस्कायां वैकङ्कत्यां स्रुचि एकां समिधमुपरि निधाय गार्हपत्यदेशादाहवनीयं प्रतिगच्छेदित्यर्थः । गत्वा च तस्मिन्नाहवनीयापरभागे होमद्रव्यम् ' अनुपसाद्य ' अभिधाय, हस्ते धृत्वैव गार्हपत्यदेशादाहवनीयं प्रतिसृत्यैव पूर्वामाहुतिं जुहुयात् "होष्यन्नुपसादयति"–इति यदुपसादनं तैत्तिरीयके समाम्नातम् । तदनूद्य तस्यायुक्ततां दृष्टान्तेनोपपादयति–**स यदुपसादयेदिति** । **अन्तरा निदध्यादिति,** भोक्तुमुपविष्टस्य पुरःस्थितं पात्रमप्राप्य मध्ये मार्गे अशनं दित्सितमन्नादिकं निदध्यात् ' एवं ' ' तत् ' उपसादनमित्यर्थः । अनुपसादनस्यानुगुण्यमाह–**यदनुपसाद्येति** । एवं प्रथमामाहुतिं हुत्वा उपसादनपुरस्सरमेव द्वितीयामाहुतिं जुहुयादिति विधत्ते–**उपसाद्योत्तरामिति** । जुहोतीत्यनुषङ्गः । एवमनुपसादनोपसादनलक्षणधर्मभेदादेते आहुती ' नानावीर्ये ' नानासामर्थ्ये एव करोतीत्यर्थः । एते अनुपसादनोपसादने प्रकारान्तरेण प्रशंसति–**मनश्च ह वा** इति । ' व्यावर्त्तयति ' धर्मभेदेन पृथक् करोतीत्यर्थः ॥ १७ ॥

होमोपमार्जनप्राशनोन्नयनानां सङ्ख्यां समुच्चित्य प्रशंसति–**स वै द्विरिति** । **विराड् वै यज्ञ** इति । सर्वप्रकृतिभूतस्याग्निष्टोमस्य शतस्तोत्रियायोगेन विराट्सम्पत्तेर्यज्ञस्य विराट्त्वमित्यर्थः । अनयोः स्तुत्योपमार्जनप्राशनयोरविहितयोः स्तोतुमयोग्यत्वात् तयोर्विधिरुन्नेतव्यः ॥ १८ ॥

---

१–चतुरः स्रुवानुन्नयति । का. श्रौ. सू. ४ । ३२४ । २–उन्नीयोपसादयति, पृथिवीमेव प्रीणाति । होष्यन्नुपसादयति, अन्तरिक्षमेव प्रीणाति । हुत्वोपसादयति, दिवमेव प्रीणाति । तै. ब्रा. २ । १ । ५ । ८ ।

स यदग्नौ जुहोति । तद्देवेषु जुहोति तस्माद्देवाः सन्त्यथ यदुपमार्ष्टि तत्पितृषु चौषधीषु च जुहोति तस्मात्पितरश्चौषधयश्च सन्त्यथ यद्धुत्वा प्राश्नाति तन्मनुष्येषु जुहोति तस्मान्मनुष्याः सन्ति ॥ १९ ॥

या वै प्रजा यज्ञेऽनन्वाभक्ताः । पराभूता वै ता एवमेवैतद्या ऽइमाः प्रजा अपराभूतास्ता यज्ञमुखऽआभजति तेनो ह पशवोऽन्वाभक्ता यन्मनुष्याननु पशवः ॥ २० ॥

तदु होवाच याज्ञवल्क्यः । ( ल्क्यो ) न वै यज्ञ इव मन्तवै पाकयज्ञ ऽइव वाऽइतीदᳬ हि यदन्यस्मिन्यज्ञे स्रुच्यवद्यति सर्वं तदग्नौ जुहोत्यथैतदग्नौ हुत्वोत्सृप्याचामति निर्लेढि तदस्य पाकयज्ञस्येवेति तदस्य तत्पशव्यᳬ रूपं पशव्यो हि पाकयज्ञः ॥ २१ ॥

---

स यदग्नौ जुहोति–तद्देवेषु जुहोति–तस्माद्देवाः सन्ति । अथ यदुपमार्ष्टि–तत्पितृषु, चौषधीषु च जुहोति–तस्मात्पितरश्चौषधयश्च सन्ति । अथ यद्धुत्वा प्राश्नाति–तन्मनुष्येषु जुहोति–तस्मान्मनुष्याः सन्ति ॥ १९ ॥

या वै प्रजा यज्ञेऽनन्वाभक्ताः–पराभूता वै ताः । एवमेवैतत्–या इमाः प्रजा अपराभूतास्ता यज्ञमुख आभजति । तेनो ह पशवोऽन्वाभक्ताः–यन्मनुष्याननु पशवः ॥ २० ॥

तदु होवाच याज्ञवल्क्यः–न वै यज्ञ इव मन्तवै पाकयज्ञ इव वा इति, इदं हि यदन्यस्मिन्यज्ञे स्रुच्यवद्यति सर्वं तदग्नौ जुहोति । अथैतदग्नौ हुत्वोत्सृप्याचामति, निर्लेढि । तदस्य पाकयज्ञस्येवेति । तदस्य तत्पशव्यं रूपम् । पशव्यो हि पाकयज्ञः ॥ २१ ॥

---

तेषां होमोपमार्जनप्राशनानामुपयोगमाह–**स यदिति** । **देवाः सन्तीति** । अग्नौ प्रक्षिप्तेनाग्निहोत्रहविषोपचितावयवाः सन्तः सर्वदा विद्यन्त इत्यर्थः । **पितृषु चौषधीषु चेति** । तत्र प्रथमोपमार्जनेन ओषधीनां तृप्तिः द्वितीयेन पितॄणामिति द्रष्टव्यम् । **ओषधयश्च सन्तीति** । सर्वदा विद्यन्त इत्यर्थः ॥ १९ ॥

**या वै प्रजा इति** । ' अनन्वाभक्ताः ' भागरहिताः, ' ताः पराभूताः ' खलु । अत एव प्राशने सति ' या इमाः ' सर्वाः प्रजाः ' यज्ञमुखे ' यज्ञानां मुखभूतेऽग्निहोत्रे यजमान आहुतिभागयुक्ताः करोतीत्यर्थः । कस्तर्हि पशूनां भाग इति, तत्राह–**तेनो हेति** । ' मनुष्यान् अनु ' मनुष्याधीनतया यतो गवाद्याः ' पशवः ' तिष्ठन्ति, तेनैव कारणेन मनुष्यद्वारा तेऽपि भागयुक्ता इत्यर्थः ॥ २० ॥

अस्याग्निहोत्रस्य याज्ञवल्क्याभिमतं पाकयज्ञत्वमुपन्यस्यति–**तदु होवाचेति** । न खल्वग्निहोत्रहोमो दर्शपूर्णमासादियज्ञवत् केवलयज्ञत्वेन मन्तव्यः, अयं खलु पाकयज्ञ इव भवति ' इति '–शब्दो वाक्यसमाप्तौ । एतदुपपादयति–**इदं हीति** । इदं खल्वग्निहोत्रं वक्ष्यमाणरूपम् ' तत्र पशव्यावदानादिकं ( कर्म ) केवलो यज्ञधर्मः

---

१–उत्सृप्य निर्लेढयाचम्योत्सिञ्चति देवाञ्जिन्व पितॄञ्जिन्व तृतीयामुदुक्षति सप्त ऋषीञ्जिन्वेति । का, श्रौ. सू. ४ । ३४१ ।

सैषैकाहुतिरेवाग्रे । यामेवामूं प्रजापतिरजुहोदथ यदेत ऽएतत्पश्चेवाध्रि-यन्ताग्निर्योऽयं पवते सूर्य्यस्तस्मादेषा द्वितीयाहुतिर्हूयते ॥ २२ ॥

सा या पूर्वाहुतिः । साग्निहोत्रस्य देवता तस्मात्तस्यै जुहोत्यथ योत्तरा स्विष्टकृद्भाजनमेव सा तस्मात्तामुत्तरार्द्धे जुहोत्येषा हि दिक् स्विष्टकृत-स्तन्मिथुनायैवैषा द्वितीयाहुतिर्हूयते द्वन्द्वᳫँ हि मिथुनं प्रजननम् ॥ २३ ॥

तद्द्वयमेवैते ऽआहुती । भूतं चैव भविष्यच्च जातं च जनिष्यमाणं चागतं चाशा चाद्य च श्वश्च तद्द्वयमेवानु ॥ २४ ॥

( ब्रा ) आत्मैव भूतम् । ( म ) अद्धा हि तद्यद्भूतमद्धो तद्यदात्मा प्रजैव भविष्यदनद्धा हि तद्यद्भविष्यदनद्धो तद्यत्प्रजा ॥ २५ ॥

---

सैषैकाहुतिरेवाग्रे यामेवामूं प्रजापतिरजुहोत् । अथ यदेतत्पश्चेवाध्रियन्त अग्निर्योऽयं पवते सूर्य-स्तस्मादेषा द्वितीयाहुतिर्हूयते ॥ २२ ॥

सा या पूर्वाहुतिः साग्निहोत्रस्य देवता। तस्मात्तस्यै जुहोति। अथ योत्तरा—स्विष्टकृद्भाजनमेव सा। तस्मात्तामुत्तरार्द्धे जुहोति, एषा हि दिक् स्विष्टकृतः। तन्मिथुनायैवैषा द्वितीयाहुतिर्हूयते । द्वन्द्वं हि मिथुनं प्रजननम् ॥ २३ ॥

तद् द्वयमेवैते आहुती भूतं चैव भविष्यच्च, जातं च जनिष्यमाणं च, आगतं च आशा च, अद्य च श्वश्च, तद्द्वयमेवानु ॥ ॥ २४ ॥

आत्मैव भूतम् । अद्धा हि तद्—यद्भूतम् अद्धो तद्—यदात्मा । प्रजैव भविष्यत् । अनद्धा हि तद्—यद्भविष्यत् अनद्धो तद्—यत् प्रजा ॥ २५ ॥

---

अग्नौ किञ्चिद्धुत्वा किञ्चिदवशेषमुत्सृज्य वहिर्निर्गम्य आचमननिर्लेहनादिकः पाकयज्ञधर्मः, तस्याग्निहोत्रस्य पाकयज्ञस्य सतो रूपम् । अस्त्वेवम्, किं तत इत्याह—तदस्येति । 'तत्' पाकयज्ञियम् 'अस्य' अग्निहोत्रस्य 'रूपं पशव्यम्' पशुभ्यो हितम्, पशुप्राप्तिसाधनमित्यर्थः ॥ २१ ॥

सैषेत्यादि । 'अमूं' विप्रकृष्टां 'याम्' आहुतिं 'प्रजापतिः' सृष्टिकाले प्रथमम् 'अजुहोत्' 'सैषा' 'एका' अग्निहोत्रस्य पूर्वाहुतिः । अनन्तरञ्च 'यदेते' अग्निवायुसूर्याः 'पश्चा' पश्चात् 'इव' 'आध्रियन्त' अवस्थिताः अतस्तदनुप्रीतय एषा द्वितीयाहुतिरित्यर्थः ॥ २२ ॥

तत्र पूर्वाहुतिरग्निहोत्रस्य प्रधानदेवताप्रीतिकरीत्याह—**सा येति** । द्वितीया तु स्विष्टकृत्स्थानीयेत्याह—**अथ येति । एषा हि दिगिति** । 'स्विष्टकृतः' स्विष्टकृदाहुतेः 'उत्तरार्द्धे' यथाक्रमेण "भूतञ्चैव भविष्यच्च"—इत्यादि वक्ष्यमाणद्वयात्मक इत्यर्थः ॥ २३ ॥

**तद् द्वयमेवेति । भूतमित्यादि** । 'भूतम्' अतीतकालावच्छिन्नम् 'भविष्यत्' आगामिकालावच्छिन्नम् । एवं जातादिषु योज्यम् । **आशा चेति** । आशागोचरं प्राप्तव्यमित्यर्थः । **अद्य च श्वश्चेति** । वर्त्तमानानागत-कालौ । एवं बहुविधं 'तद् द्वयमेवानु' तद्भागरूपे यथाक्रममेते आहुती भवत इत्यर्थः ॥ २४ ॥

अथ तयोराहुत्योः समन्त्रकामन्त्रकत्वे विधास्यन् भूतभविष्यदादिद्वन्द्वस्यात्मप्रजारूपत्वम्, अद्धानद्धारूपत्वं च दर्शयति—आत्मैव भूतमित्यादिना। आत्मा स्वयं पिता 'एव' भूतम्, यच्च भूतम् तद् 'अद्धा'; अनु-

( जाऽऽत्मै ) आत्मैव जातम् । ( म ) अद्धा हि तद्यज्जातमद्धो तद्यदात्मा प्रजैव जनिष्यमाणमनद्धा हि तद्यज्जनिष्यमाणमनद्धो तद्यत्प्रजा ॥ २६ ॥

( जाऽऽत्मै ) आत्मैवागतम् । ( म ) अद्धा हि तद्यदागतमद्धो तद्यदात्मा प्रजैवाशानद्धा हि तद्यदाशानद्धो तद्यत्प्रजा ॥ २७ ॥

( जाऽऽत्मै ) आत्मैवाद्य । ( द्या ) अद्धा हि तद्यदद्याद्धो तद्यदात्मा प्रजैव श्वोऽनद्धा हि तद्यच्छ्वोऽनद्धो तद्यत्प्रजा ॥ २८ ॥

सा या पूर्वाहुतिः । सात्मानमभिहूयते तां मन्त्रेण जुहोत्यद्धा हि तद्यन्मन्त्रोऽद्धो तद्यदात्माऽथ योत्तरा सा प्रजामभिहूयते तां तूष्णीं जुहोत्यनद्धा हि तद्यत्तूष्णीमनद्धो तद्यत्प्रजा ॥ २९ ॥

---

आत्मैव जातम् । अद्धा हि तद्—यज्जातम् अद्धो तद्—यदात्मा । प्रजैव जनिष्यमाणम् । अनद्धा हि तद्—यज्जनिष्यमाणम् । अनद्धो यद्—यत्प्रजा ॥ २६ ॥

आत्मैवागतम् । अद्धा हि तद्—यदागतम् अद्धो तद्—यदात्मा । प्रजैवाशा । अनद्धा हि तद्—यदाशा अनद्धो तद्—यत्प्रजा ॥ २७ ॥

आत्मैवाद्य । अद्धा हि तद्—यदद्य । अद्धो तद्यदात्मा । प्रजैव श्वः । अनद्धा हि तद्—श्वः अनद्धो तद्—यत्प्रजा ॥ २८ ॥

सा या पूर्वाहुतिः सात्मानमभिहूयते । तां मन्त्रेण जुहोति । अद्धा हि तद्—यन्मन्त्रः । अद्धो तद्—यदात्मा । अथ योत्तरा सा प्रजामभिहूयते । तां तूष्णीं जुहोति । अनद्धा हि तद्—यत्तूष्णीम् । अनद्धो तद्—यत् प्रजा ॥ २९ ॥

---

भूतत्वात् प्रत्यक्षम् । एवमात्मनो भूतस्य च अद्धात्वसाम्यादात्मा भूतमिति तादात्म्यमित्यर्थः । " प्रजैव भविष्यदिति " प्रतिज्ञा । तदुपपादनम्—अनद्धा हीत्यादि । ' अनद्धा ' अप्रत्यक्षम्; प्रजाभविष्यतोरप्रत्यक्षत्व—साम्यात् तादात्म्यमित्यर्थः ॥ २५ ॥

एवम् आत्मैव जातमित्यादिषु द्वन्द्वान्तरेषु योजना ॥ २६ ॥

आत्मैवागतमिति । आत्मप्रजारूपेण अद्धानद्धारूपेण चाहुती स्तुत्वा हूयते, स चाद्धारूपो मन्त्रोऽपि देवताप्रकाशकत्वात् तथा ॥ २७ ॥

आत्मैवाद्येति । अद्येति वर्त्तमानकालः, श्व इत्यागामिकालः ॥ २८ ॥

सा या पूर्वाहुतिरिति । ' तां ' पूर्वाहुतिं मन्त्रेण जुहुयादित्यर्थः । उत्तराहुतिस्तु भविष्यज्जनिष्यमाणा अनागताद्यात्मकप्रजास्थानीया, सा चानद्धारूपा; अमन्त्रकत्वमपि तथेति, तूष्णीं तु भविष्यज्जनिष्यमाणानागताद्यात्मकप्रजास्थानीया, सा चानद्धारूपा; अमन्त्रकमपि तथेति तूष्णीमेव सा होतव्येत्यर्थः ॥ २९ ॥

---

१–तूष्णिं द्वितीयाम् । का. श्रौ. सू. । ४ ३३७ ।

स जुहोति । ( त्य ) अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेत्यथ प्रातः सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति तत्सत्येनैव हूयते यदा ह्येव सूर्योऽस्तमेत्यथाग्निर्ज्योतिर्यदा सूर्यऽउदेत्यथ सूर्यो ज्योतिर्यद्वै सत्येन हूयते तद्देवान्गच्छति ॥ ३० ॥

तदु हैतदेवारुणये ब्रह्मवर्चसकामाय तक्षानूवाचाग्निर्वर्चो ज्योतिर्वर्चः सूर्यो वर्चो ज्योतिर्वर्च ऽइति ब्रह्मवर्चसी हैव भवति य ऽएवं विद्वानग्निहोत्रं जुहोति ॥ ३१ ॥

तद्धस्त्येव प्रजननस्येव रूपम् । ( म ) अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति तदुभयतो ज्योती रेतो देवतया परिगृह्णात्युभयतः परिगृहीतं वै रेतः प्रजायते तदुभयत ऽएवैतत्परिगृह्य प्रजनयति ॥ ३२ ॥

---

स जुहोति–" अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा "–( वा० सं० अ० ३ मं १० ) इति । अथ प्रातः–" सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा "–( वा० सं० अ० ३ मं. ११ ) इति । तत् सत्येनैव हूयते । यदा ह्येव सूर्योऽस्तमेति–अथाग्निर्ज्योतिः । यदा सूर्य उदेति–अथ सूर्यो ज्योतिः । यद्वै सत्येन हूयते तद् देवान् गच्छति ॥ ३० ॥

तदु हैतदेवारुणये ब्रह्मवर्चसकामाय तक्षा–नूवाच–"अग्निर्वर्चो ज्योतिर्वर्चः सूर्यो वर्चो ज्योतिर्वर्चः"–(वा.सं.अ. ३।१२) इति । ब्रह्मवर्चसी हैव भवति, य एवं विद्वानग्निहोत्रं जुहोति ३१

तद्धस्त्येव प्रजननस्येव रूपम्–" अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा"–( वा. सं. अ. ३. मं. १३ ) इति । तदुभयतो ज्योती रेतो देवतया परिगृह्णाति । उभयतः परिगृहीतं वै रेतः प्रजायते, तद् उभयत एवैतत्परिगृह्य प्रजनयति ॥ ३२ ॥

---

कालद्वयेऽपि पूर्वस्या आहुतेः क्रमेण मन्त्रं दर्शयति–**स जुहोती**ति । मन्त्रयोः सत्यरूपत्वमुपपादयितुमर्थसद्भावमाह–**यदा ही**त्यादिना । अस्तङ्गतः सूर्योऽग्निमेवानुप्रविशतीति रात्रावग्निर्ज्योतीरूपो भवति, पुनरुद्यन्तं सूर्यमग्निरनुप्रविशतीत्यहनि सूर्यो ज्योतीरूपो भवति । अतश्च कालद्वये अग्निर्ज्योतिः सूर्यो ज्योतिरिति ( वा. सं. अ. ३।१०।११ ) यदेतन्मन्त्रवाक्यद्वयं तत् समवेतार्थत्वात् सत्यम्॥ ३०॥

अनयोः सायम्प्रातर्होमयोर्ब्रह्मवर्चसकामस्य कर्त्तव्यतोपन्यासपुरस्सरं मन्त्रविशेषौ दर्शयति–**तदु हैत**दिति । अग्निर्ज्योतिः सूर्यो ज्योतिरिति चत्वारो वर्चश्शब्दाभिधेयस्य तेजसः प्रतिपादकाः, अत एवाभ्यां मन्त्राभ्यां जुह्वतः पुरुषस्य ब्रह्मतेजः सम्पद्यत इत्यर्थः । तदुक्तं कात्यायनेन–" अग्निर्वर्च इति ब्रह्मवर्चसकामस्य "–इति ( का. श्रौ. सू. ४ । ३२९ ) ॥ ३१ ॥

**तद्धस्त्येवे**त्यादि । तस्मिन् होममन्त्रे प्रजननस्य रूपमिव 'रूपम्' विद्यते । ज्योतिश्शब्दाभिधेयं मध्येऽवस्थितं

---

१–प्रदीप्तामभिजुहोत्यग्निर्ज्योतिरिति सजूरिति वा । का. श्रौ. सू. । ४ । ३२८ ।

( त्य ) अ॒थ प्रा॒तः । सूर्यो॒ ज्योति॒र्ज्योतिः॒ सूर्यः॒ स्वाहे॒ति त॒दु॒भय॒तो ज्यो॒ती रेतो॑ देव॒तया॑ परिगृह्णा॒त्यु॒भय॑तः परि॑गृहीतं॒ वै रेतः॑ प्र॒जाय॑ते त॒दु॒भय॑त ए॒वैत॒त्परि॑गृह्य प्र॒जनय॑ति त॒त्प्रज॒नन॑स्य रू॒पम् ॥ ३३ ॥

त॒दु होवाच जीवलश्चैलकिः । ( गु॒ ) ग॒र्भमे॒वारु॑णिः करो॒ति न प्र॒जनय॑तीति स॒ऽए॒तेनै॒व सा॒यं जु॑हुयात् ॥ ३४ ॥

( ड॒ ) अ॒थ प्रा॒तः । ( ज्यो॒ ) ज्योतिः॒ सूर्यः॒ सूर्यो॒ ज्योतिः॒ स्वाहे॒ति त॒द्ब॒हि॒र्द्धा ज्यो॒ती रेतो॑ देव॒तया॑ करो॒ति ब॒हि॒र्द्धा वै रेतः॑ प्र॒जातं॒ भव॑ति त॒दे॒नत्प्र॒जनय॑ति ॥ ३५ ॥

त॒दा॒हुः । ( र ) अ॒ग्नावे॒वैत॒त्सा॒यꣳ सूर्यं॒ जु॒होति॒ सूर्ये॒ प्रा॒तर॒ग्निमि॒ति त॒द्वै त॒दु॒दि॒तहो॒मि॒नामे॒व य॒दा ह्ये॒व सूर्यो॒ऽस्तमे॒त्यथा॒ग्निर्ज्योति॒र्यदा

---

अथ प्रातः "सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा"-( वा.सं. अ. ३ । ९ । १ । २ ) इति । तदुभयतो ज्योती रेतो देवतया परिगृह्णाति । उभयतः परिगृहीतं वै रेतः प्रजायते, तद् उभयत एवै तत्परिगृह्य प्रजनयति । तत् प्रजननस्य रूपम् ॥ ३३ ॥

तदु होवाच जीवलश्चैलकिः । " गर्भमेवारुणिः करोति न प्रजनयति " इति । स एतेनैव सायं जुहुयात ॥ ३४ ॥

अथ प्रातः " ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहा "-( वा. सं. अ. ३ मं. ९ ) इति । तद् बहिर्द्धा ज्योती रेतो देवतया करोति । बहिर्द्धा वै रेतः प्रजातं भवति तदेनत् प्रजनयति ॥ ३५ ॥

तदाहुः-अग्नावेवैतत्सायं सूर्यं जुहोति, सूर्ये प्रातरग्निमिति । तद्वै तदुदितहोमिनामेव । यदा ह्येव

---

' रेतः ' ' उभयतः ' ' देवतया ' देवतावाचिपदाभ्यां ' परिगृह्णाति ' उभयतः परिगृहीतत्वं रेतसः प्रजननरूपम् । अतः "अग्निर्ज्योतिः "-"सूर्यो ज्योतिः"-( वा. सं. अ. ३ । ९ । १ । २ । ) इति मन्त्रयोः प्रजननरूपसद्भावात् ताभ्यां होमे प्रजासम्पत्तिर्भवतीत्यर्थः ॥ ३२ ॥ ३३ ॥

**तदु होवाचे**त्यादि । एलकस्य पुत्रः ' ऐलकिः, ' ' जीवलः ' इति तस्य नाम । **गर्भमेवे**ति । कालद्वयेऽपि ज्योतिश्शब्दस्य देवतावाचिपदगृहीतत्वात् रेतः परिगृहीतमन्तरवस्थितं गर्भावस्थमेव भवति; न तु प्रजारूपेणोत्पद्यत इत्यादिः तद्दोषोपन्यासः, स एतेनेत्यादिः तत्परिहारः ।

"अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा" (वा.सं.अ.३।९।४ ) इत्येतेनैव सायं जुहुयात् । तेन गर्भो धृतो भवति । प्रातःकाले तु " ज्योतिः सूर्यः सूर्य्यो ज्योतिः स्वाहा "-( वा. सं. अ. ३ । ९ । ९ ) इत्यनेन मन्त्रेण होमे सति रेतोरूपस्य ज्योतिश्शब्दस्य हिङ्करणात्[2] अन्तर्गतो गर्भो बहिः ' प्रजातं भवति[3] ' ॥ ३४ ॥

**अथ प्रातरि**ति । स्पष्टम् ॥ ३५ ॥

**तदाहुरि**ति । **अग्नावेवैतदि**ति । अग्निर्ज्योतिरिति मन्त्रेण जुह्वत् ' अग्नावेव ' सन्तं सूर्यं ' जुहोति '

---

१-ज्योतिः सूर्य इति वा प्रातः । का. श्रौ सू. । ४ । ३५५ । २-'बहिर्धाकरणात्' इ० पा० । ३-'प्रजायते भवति ' इ. पा.

सूर्य उदेत्यथ सूर्यो ज्योतिर्नास्य सा परिचक्षेयमेव परिचक्षा यत्तस्यै नाम्ना देवतायै हूयते याऽग्निहोत्रस्य देवताऽग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति तत्र नाग्नये स्वाहेत्यथ प्रातः सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति तत्र न सूर्याय स्वाहेति ॥ ३६ ॥

( त्य ) अनेनैव जुहुयात् । ( त्स ) सजूर्देवेन सवित्रेति तत्सवितृमत्प्रसवाय सजू रात्र्येन्द्रवत्येति तद्रात्र्या मिथुनं करोति सेन्द्रं करोतीन्द्रो हि यज्ञस्य देवता जुषाणोऽअग्निर्वेतु स्वाहेति तदग्नये प्रत्यक्षं जुहोति ॥३७॥

( त्यु ) अथ प्रातः । सजूर्देवेन सवित्रेति तत्सवितृमत्प्रसवाय सजूरुषसेन्द्रवत्येत्यह्नेति वा तदह्ना वोषसा वा मिथुनं करोति सेन्द्रं करोतीन्द्रो

---

सूर्योऽस्तमेति–अथाग्निर्ज्योतिः । यदा सूर्य उदेति–अथ सूर्यो ज्योतिः । नास्य सा परिचक्षा । इयमेव परिचक्षा–यत् तस्यै नाम्ना देवतायै हूयते याऽग्निहोत्रस्य देवता । "अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा "–इति, तत्र नाग्नये स्वाहेति । अथ प्रातः । "सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा"–इति, तत्र न सूर्याय स्वाहेति ॥ ३६ ॥

अनेनैव जुहुयात्–"सजूर्देवेन सवित्रा"–( वा.सं.अ.३ मं.१० ) इति, तत् सवितृमत्प्रसवाय। "सजू रात्र्येन्द्रवत्या"–इति । तद् रात्र्या मिथुनं करोति । सेन्द्रं करोति, इन्द्रो हि यज्ञस्य देवता। "जुषाणः सूर्यो वेतु स्वाहा"–( वा.सं.अ. ३मं.१० ) इति, तद् अग्नये प्रत्यक्षं जुहोति ॥३७॥

अथ प्रातः "सजूर्देवेन सवित्रा"–( वा. सं. अ. ३ मं. १० ) इति, तत् सवितृमत्प्रसवाय । " सजूरुषसेन्द्रवत्या "–( वा. सं. अ. ३ मं. १० ) इति, अह्ना–इति वा । तद् अह्ना वोषसा

---

तथा च ज्योतिश्शब्दः सूर्यवचनः । प्रातःकाले सूर्ये सन्तमग्निं जुहोति । अतः सूर्यो ज्योतिरिति ज्योतिश्शब्दोऽग्निवचनः । अतो यथापठिताभ्यामेव मन्त्राभ्यां होम इत्यभिप्रायः। **तदुदितहोमिनामित्यादि** । ' तत् ' उक्तविधानाम् ' उदितहोमिनामेव, ' नानुदितहोमिनां सम्भवति । कथमिति चेत्, उच्यते–सूर्ये ह्यस्तङ्गते ' अग्निः ज्योतिः ' प्रकाशमानो भवति, उदिते त्वाग्नेयतेजस्सङ्क्रमात् सूर्यश्च प्रकाशवान् भवति । तस्मात् " अग्निर्ज्योतिः सूर्यो ज्योतिः "–इति मन्त्रनिष्पाद्यस्याग्निहोत्रहोमस्य अग्नौ पूर्वोक्तरूपं ( श० प० २ कां० ३. प्र० १ब्रा०३४कं. ) गर्भमेव करोति, न प्रजनयतीति एवंरूपा निन्दा नास्तीत्यर्थः ।

तर्ह्युदितहोमपक्ष एवाश्रयणीय इत्याशङ्क्य तत्र दोषान्तरमाह–**इयमेव परिचक्षेति** । ' यद् ' यस्मात् 'अग्नये स्वाहा ', ' सूर्याय स्वाहा ' इति तस्यै देवतायै प्रत्यक्षं न हूयते, किन्तु " अग्निर्ज्योतिः–सूर्यो ज्योतिः "–इति प्रथमान्तत्वेन सम्प्रदानविभक्तेरभावाद् देवतात्वस्य परोक्षमेवास्य पक्षस्य निन्देत्यर्थः ॥ ३६ ॥

एवं निन्द्यनिन्दां प्रदर्श्य, अनिन्द्यं पक्षान्तरमाह–**अनेनैवेति** । तदुक्तम् सूत्रकृता–" प्रदीप्तामभिजुहोति अग्निर्ज्योतिरिति सजूरिति वा "–इति ( वा० सं० अ० ३ । ९ । १० ) ( का० श्रौ० सू० ४ । ३२८ )।

---

१–प्रातर्जुहोत्यनुदिते । का. श्रौ. सू. ४ । ३४६ ।

हि यज्ञस्य देवता जुषाणः सूर्य्यो व्वेतु स्वाहेति तत्सूर्य्याय प्रत्यक्षं जुहोति तस्मादेवमेव जुहुयात् ॥ ३८ ॥

(त्ते) ते होचुः । को न इदᳪं होष्यतीति ब्राह्मण ऽएवेति ब्राह्मणेदं नो जुहुधीति किं मे ततो भविष्यतीत्यग्निहोत्रोच्छिष्टमेवेति स यत्स्रुचि परिशिनष्टि तदग्निहोत्रोच्छिष्टमथ यत्स्थाल्यां यथा परीणहो निर्व्वपेदेवं तत्तस्मात्तद्य ऽएव कश्च पिबेत्तद्धै नाब्राह्मणः पिबेदग्नौ ह्यधिश्रयन्ति तस्मान्नाब्राह्मणः पिबेत् ॥ ३९ ॥

इति द्वितीयप्रपाठके तृतीयं ब्राह्मणम् २-३ । ( ३ । १ )

---

वा मिथुनं करोति । सेन्द्रं करोति । इन्द्रो हि यज्ञस्य देवता । "जुषाणः सूर्यो वेतु स्वाहा"–( वा. सं. अ. ३ मं. १० ) इति, तत् सूर्याय प्रत्यक्षं जुहोति । तस्मादेवमेव जुहुयात् ॥ ३८ ॥

ते होचुः–" को न इदं होष्यति "–इति । ब्राह्मण एवेति । ब्राह्मण ! " इदं नो जुहुधि " इति, " किं ? मे ततो भविष्यति " इति, " अग्निहोत्रोच्छिष्टमेव " इति । स यत् स्रुचि परिशिनष्टि तद्, अग्निहोत्रोच्छिष्टम् । अथ यत् स्थाल्याम्–यथा परीणहो निर्वपेद् एवं तत् । तस्मात्तद् य एव कश्च पिबेत् । तद्धै नाब्राह्मणः पिबेत् । अग्नौ ह्यधिश्रयन्ति । तस्मान्नाब्राह्मणः पिबेत् ॥ ३९ ॥

इति अग्निहोत्रे होमविधिः ।

---

**तत् सवितुमदि**त्यादि, सुगमम् । **प्रत्यक्षं जुहोती**ति । ' जुषाणः ' हविः सेवमानः ' अग्निः ' ' वेतु ' कामयतामिति प्रतिपादनात् अग्नेर्होमः प्रत्यक्ष इति प्रागुक्तात् पक्षाद् वैलक्षण्यमित्यर्थः । प्रातःकालीनमन्त्रेऽप्येवं द्रष्टव्यम् ॥ ३७ ॥ ३८ ॥

हुतशिष्टस्य स्थालीमध्यस्थपयसो ब्राह्मणानां पानं विधित्सुः ततोऽन्य एव ब्राह्मणोऽग्निहोत्रहोमस्याध्वर्युरिति प्रतिपादयति–**ते होचुरि**त्यादिना । **अथ यत् स्थाल्यामि**ति । अग्निहोत्रहोमसाधनभूतायां स्रुचि यत् हुतशिष्टम्, तस्यैव 'द्विः प्राश्नाति' इति प्राशनं विहितम्; यत्तु स्थाल्यामवशिष्यते, तत् नाग्निहोत्रोच्छिष्टम् । तत्र दृष्टान्तः–**यथा परीणह** इति । परितो नद्धं परिश्रितं धान्यपूर्णं शकटस्योपरि स्थापितम्; यथा तस्माद्धविषो निर्वापयितुं तद्गतं धान्यं न शेष्यते, किन्तु पुनरपि यागान्तरयोग्यमेव । ' एवं ' ' तत् ' स्थाल्यां पय इत्यर्थः । तथा चाध्वर्योरेव तत् पानमिति नियमाभावात् यः कोऽपि ब्राह्मणस्तत् पिबेदित्यर्थः ॥ ३९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये
द्वितीयकाण्डे तृतीयाध्यायस्य प्रथमं ब्राह्मणम् ॥ २–३–१ ॥

---

१–अनामिकया द्विः प्राश्नाति । का. श्रौ. सू. ४ । ३४० । २–'परिवीतम्' इति क. पा. । ३–स्थाल्यां परिशिनष्टि तद्ब्राह्मणः पिबेत् । का. श्रौ. सू. ४ । ३२५ ।

एता ह वै देवता योऽस्ति । तस्मिन्वसन्तीन्द्रो यमो राजा नडो नैषिधो-ऽनश्नन्त्साङ्गमनोऽसन्पाꣳसवः ॥ १ ॥

( स्त ) तद्वा ऽएष ऽएवेन्द्रः । ( न्द्रो ) यदाहवनीयोऽथैष ऽएव गार्हपत्यो यमो राजाऽथैष ऽएव नडो नैषिधो यदन्वाहार्यपचनस्तद्यदेतमहरहर्दक्षिणत ऽआहरन्ति तस्मादाहुरहरहर्वै नडो नैषिधो यमꣳ राजानं दक्षिणत ऽउपनयतीति ॥ २ ॥

( त्यु ) अथ य ऽएष सभायामग्निः । ( रे ) एष ऽएवानश्नन्त्साङ्गमनस्त-द्यदेतमनशित्वेवोपसङ्गच्छन्ते तस्मादेषोऽनश्नन्नथ यदेतद्भस्मोद्धृत्य परावपन्त्येष ऽएवासन्पाꣳसवः स यो हैवमेतद्वेदैवं मय्येता देवता वसन्तीति सर्व्वान्हैवैताँल्लोकाञ्जयति सर्व्वाँल्लोकाननुसञ्चरति ॥ ३ ॥

---

**उपस्थानम् ।**

एता ह वै देवता-योऽस्ति तस्मिन्वसन्ति-इन्द्रो, यमो, राजा नडो नैषिधः, अनश्नन्त्साङ्गमनः, असन् पांसवः ॥ १ ॥

तद्वा एष एवेन्द्रो-यदाहवनीयः । अथैष एव गार्हपत्यो यमो राजा । अथैष एव नडो नैषिधो-यदन्वाहार्यपचनः । तद्यदेतमहरहर्दक्षिणत आहरन्ति । तस्मादाहुः-अहरहर्वै नडो नैषिधो यमं राजानं दक्षिणत उपनयतीति ॥ २ ॥

अथ य एष सभायामग्निः-एष एवानश्नन्त्साङ्गमनः । तद् यदेतमनशित्वेवोपसङ्गच्छन्ते-

---

अथाग्न्युपस्थानं विधित्सुस्तेषामग्नीनाञ्च दैवतरूपतामाह-**एता ह वा** इति । ' योऽस्ति ' यो यजमानो विद्यते, तस्मिन् ' एताः ' वक्ष्यमाणा देवता निवसन्ति । ताश्च[1] "इन्द्रः, यमः, नडः, नैषिधः" इति। निषध-देशाधिपतिर्नलः प्रसिद्धो राजा । 'अनश्नन्त्सङ्गमनः'[2] इति सभ्योऽग्निरुच्यते 'असन् पांसवः'-इत्यावसथ्यः ॥१॥

एवं[3] तच्छिष्टानां स्वरूपप्रतिपादनं **तद्वा** इत्यादिना क्रियते । ' अन्वाहार्यपचनः ' अग्निः, ' एष एव ' ' नडः ' नलः, ' नैषिधः '- इति निर्दिष्टः । निषिधराजस्य च नलस्य, दक्षिणाग्नेश्च साम्यमाह-**तद्यदि**ति । अग्निहोत्रहोमकाले ' एतम् ' अन्वाहार्यपचनं ' यद् ' यस्मात् ' दक्षिणतः अहरहः आहरन्ति ' तस्मादेव ' नैषिधः ' नलोऽपि यमस्य राज्ञः ' दक्षिणतः ' उपगच्छतीति लोकप्रसिद्धिरित्यर्थः ॥ २ ॥

**अथ य एष सभायामग्निः, एष एवानश्नन्नि**[4]ति । ' एषः ' सभ्योऽग्निः, अनशित्वैव प्रातः सभ्यैः सङ्गम्यत इति व्युत्पत्त्या अनश्नन्त्सङ्गमनसंबन्धात्सङ्गमन इति च पदद्वयेन प्रतिपाद्यत इत्यर्थः । **भस्मोद्धृत्ये**[5]ति ।

---

१-' इन्द्रः यमः नलो नैषिधः ' इति । ' तांश्चेन्द्राद्यान्नलो नैषधः ' इति च क. पा. । २-अनश्नन् किमपि हविरगृह्णन् संगमयति प्रापयति यजमानमग्निहोत्रफलमिति अनश्नन्सङ्गमन इति प्रसिद्धिः ॥ ३ एवमुद्दिष्टानाम्-इ० क० पा० । ४-अनशित्वा प्रातर्मुहूर्त ॰ सभासन ॰ सभ्यस्य । का. श्रौ. सू. ४ । ३७७ । ५-भस्मोद्धृतमुपेयात् । का.श्रौ. सू. ४ । ३७८ ।

तेषामुपस्थानम् । युदेवु सायं प्रातुराह्वनीयमुप च तिष्ठत ऽउुप चास्ते तुदेव तुस्योपस्थानमुथ युदेवु प्रतिपरेत्य गार्हपत्यमास्ते वा शेते वा तुदेव तुस्योपस्थानमुथ युत्रैवु संव्रजन्नन्वाहार्यपुचनमुपस्मरेत्तुदेव तं मुनसोपतिष्ठेतु तदेव तुस्योपस्थानम् ॥ ४ ॥

( मु ) अुथ प्रातः । ( उ ) अुनशित्वा मुहूर्त्तुं सभायामासित्वापि कामं पुल्ययेतु तुदेव तस्योपस्थानमुथ युत्रैव भस्मोद्धृतमुपनिगुच्छेत्तुदेव तुस्योपस्थानमेवमु हास्यैता देवुता ऽउुपस्थिता भवन्ति ॥ ५ ॥

---

तस्मादेषोऽनश्नन् । अथ यदेतद् भस्मोद्धृत्य परावपन्ति, एष एवासन् पांसवः । स यो हैवमेतद्वेद– ' एवं मय्येता देवता वसन्तीति ' सर्वान् हैवैताँल्लोकान् जयति, सर्वांल्लोकाननुसञ्चरति ॥ ३ ॥

" तेषामुपस्थानम् " । यदेव सायं–प्रातराहवनीयमुप च तिष्ठते, उप चास्ते–तदेव तस्योपस्थानम् । अथ यदेव प्रतिपरेत्य गार्हपत्यम् आस्ते वा शेते वा–तदेव तस्योपस्थानम् । अथ यत्रैव संव्रजन्नन्वाहार्यपचनमुपस्मरेत्–तदेव तं मनसोपतिष्ठेत, तदेव तस्योपस्थानम् ॥ ४ ॥

अथ प्रातरनशित्वा मुहूर्तं सभायामासित्वापि कामं पल्ययेत–तदेव तस्योपस्थानम् । अथ यत्रैव भस्मोद्धृतमुपनिगच्छेत्–तदेव तस्योपस्थानम् । एवमु हास्यैता देवता उपस्थिता भवन्ति ॥५॥

---

गार्हपत्याहवनीयादिगतं भस्म उद्गृह्य यत्, प्रातरेव आवसथे ' परावपन्ति ' । एष एवासन्निति । भस्मनः पांसुतुल्यत्वात् ' पांसवः ' भस्मरूपाः पांसुसम्बन्धिनश्च । एवं पञ्चानामग्नीनामिन्द्रादिदेवतात्मकत्वं प्रतिपाद्य एतद्वेत्तुः फलमाह–स य इति ॥ ३ ॥

तेषामुपस्थानमिति । वक्ष्यत इति शेषः । आहवनीयस्य समीपेऽवस्थानमासनं वा क्रियते; ' तदेव तस्योपस्थानम् ' तस्याग्नेस्तदेवोपस्थानमित्यर्थः । प्रतिपरेत्य आवहनीयागारात् प्रतिनिवर्त्य गार्हपत्यसमीपे यदासनं वा शयनं वा क्रियते ' तदेव तस्योपस्थानम् ' । संव्रजन्निति । यत्र देशान्तरे प्रवसद्यजमानः अहरहः पाठकसमये तत्साधनभूतं स्वकीयान्वाहार्यपचनं स्यात्, तत्रैव ' तं मनसोपतिष्ठेत ' ' तदेव तस्योपस्थानम् ' अग्निहोत्रं स्वाङ्गस्यापि तस्य सम्पद्यत इत्यर्थः ॥ ४ ॥

अथ प्रातरिति । सभायामासित्वेति । भोजनात् प्रागेव ' मुहूर्तं ' ' सभायाम् ' उपविश्य, पश्चात् यथेच्छं ' पल्ययेत ' परिगमनं कुर्वीत ' तत् ' आसनं ' तस्य ' सम्याग्नेः ' उपस्थानम् ' । उद्धृतभस्मोपनिगमनमेव आवसथ्योपस्थापनम् ( का. श्रौ. सू. ४ । १७७ ) ॥ ५ ॥

---

१–सायं प्रातराहवनीयस्यासनोपस्थाने । का. श्रौ. सू. ४ । १७४ । शय्यासनं वा गार्हपत्ये । का. श्रौ. सू. ४ । १७५ । २–संव्रजन्मनसोपस्मृत्य दक्षिणाग्निम् । का. श्रौ. सू. ४ १७६ । ३–७६ पृष्ठे चतुर्थी टिप्पणी द्रष्टव्या ।

यजमानदेवत्यो वै गार्हपत्यः । ( त्यो ऽथै ) अथैष भ्रातृव्यदेवत्यो यदन्वाहार्यपचनस्तस्मादेतं नाहरहराहरेयुर्न ह वा ऽअस्य सपत्ना भवन्ति यस्यैवं विदुष ऽएतं नाहरहराहरन्त्यन्वाहार्यपचनो वा ऽएषः ॥ ६ ॥

( ऽ ) उपवसथ ऽएवैनमाहरेयुः । ( यु ) यत्रैवास्मिन्यक्ष्यन्तो भवन्ति तथो हास्यैषोऽमोघायाहृतो भवति ॥ ७ ॥

नवावसिते वैनमाहरेयुः । ( स्तु ) तस्मिन्पचेयुस्तद्ब्राह्मणा ऽअश्नीयुर्यद्यु तन्न विन्देद्यत्पचेदपि गोरेव दुग्धमधिश्रयितवै ब्रूयात्तस्मिन्ब्राह्मणान्पाययितवै ब्रूयात्पापीयाꣳसो ह वा ऽअस्य सपत्ना भवन्ति यस्यैवं विदुष एवं कुर्वन्ति तस्मादेवमेव चिकीर्षेत् ॥ ८ ॥

---

यजमानदेवत्यो वै गार्हपत्यः । अथैष भ्रातृव्यदेवत्यो यदन्वाहार्यपचनः । तस्मादेतं नाहरहराहरेयुः न ह वा अस्य सपत्ना भवन्ति । यस्यैवं–विदुष एतं नाहरहराहरन्ति–अन्वाहार्यपचनो वा एषः ॥ ६ ॥

उपवसथ एवैनमाहरेयुः । यत्रैवास्मिन्यक्ष्यन्तो भवन्ति । तथो हास्यैषोऽमोघायाहृतो भवति ॥ ७ ॥

नवावसथे वैनमाहरेयुः । तस्मिन् पचेयुः; तद् ब्राह्मणा अश्नीयुः । यद्यु तन्न विन्देद् यत् पचेद्, अपि गोरेव दुग्धमधिश्रयितवै ब्रूयात्, तस्मिन् ब्राह्मणान् पाययितवै ब्रूयात् । पापीयांसो ह वा अस्य सपत्ना भवन्ति, यस्यैवं–विदुष एवं कुर्वन्ति । तस्मादेवमेव चिकीर्षेत् ॥ ८ ॥

---

यदेतदन्वाहार्यस्याहरहर्दक्षिणत आहरणम्, तदुपवसथ एवाहनि कर्त्तव्यं नान्यत्रेति विधित्सुराह–**यजमानदेवत्यो वा** इति । अहरहराहरणे यजमानस्य शत्रुदेहसम्बन्धिता भवतीत्यर्थः । “ **अन्वाहार्यपचनः** ”–इति यौगिकी संज्ञा, तस्मात् सोऽन्वाहार्यः ॥ ६ ॥

**उपवसथ** इति ओदनो यस्मिन्नहनि अग्नौ पक्तव्यः । तत्रैवोपवसथेऽहनि तस्योद्धरणं कर्त्तव्यमित्यर्थः । **अमोघायेति** । सप्रयोजनायेत्यर्थः ॥ ७ ॥

पक्षान्तरमाह–**नवावसथेवेति** । नव आवसथो नवावसथः[६] नूतनं स्थानम् । प्राप्य ‘ एनम ’ अन्वाहार्यपचनम् ‘आहरेयुः’ । आहरणप्रयोजनमाह–**तस्मिन्निति** । **यद्यु तन्नविन्देदिति** । पक्तव्यालाभे गोर्दुग्ध्वा पय एव तस्मिन्नग्नौ ‘ अधिश्रयितवै ’ अधिश्रयितुं ‘ ब्रूयात् ’ तुमर्थे तवै प्रत्ययः । ( पा० सू० ३।४।९ ) एवञ्चान्वाहार्यपचनस्याहरहर्दक्षिणत आहरणमित्येकः पक्षः । यत्तु देशान्तरे प्रवसन् यजमानः अहरहः पाकसमये तत्साधनभूतं स्वकीयमन्वाहार्यपचनं स्मरेत् उपवसथ एवेति द्वितीयः; नवावसथे वेति तृतीयः । सूत्रकृताऽप्युक्तम्–“आहरणमेकेषामुपवसथे नवावसथे वा तस्मिन् पचेयुरमांसम्, पाक्याभावे गोः पयोऽधिश्रयितवै ब्रूयात् ‘ इति’ एवमन्वाहार्यपचनस्य न प्रतिदिवसमाहरणं किंतूपवसथे नवावसथे वेति यदुक्तम् तस्य फलमाह–**पापीयांस** इति । अन्वाहार्यपचनस्य भ्रातृव्यस्थानीयत्वात् तस्य प्रतिदिवसमाहरणाभावात् शत्रुक्षयो भवतीत्यर्थः ॥ ८ ॥

---

१–“ नवावसथे ”–इति सायणः । २–सदावाहरणम् । का. श्रौ सू. ४ । ३०१ । ३–एकेषामुपवसथे । का. श्रौ. सू. ४ । ३०२ । ४–तस्याहरणम्–इ. क. पा. । ५–अमोघ्याय–इ. क. पा. ६–नवावसिते वा । का. श्रौ. सू. ४ । ३०३ ॥ ७–तस्मिन्पचेयुरमांसम् । का. श्रौ. सू. ४ । ३०४ ॥ ८–पाक्याभावे गोः पयोऽधिश्रयितवै ब्रूयात् । का. श्रौ. सू. ४ । ३०५ ॥

( त्त ) तद्यत्रैतत्प्रथमꣳ समिद्धो भवति । धूप्यत ऽइव तर्हि हैष भवति रुद्रः स यः कामयेत यथेमा रुद्रः प्रजा ऽअश्रद्धयेव त्वत्सहसेव त्वन्निघातमिव त्वत्सचत ऽएवमन्नमद्यामिति तर्हि ह स जुहुयात्प्राप्नोति हैवैतदन्नाद्यं य ऽएवं विद्वांस्तर्हि जुहोति ॥ ९ ॥

( त्यु ) अथ यत्रैतत्प्रदीप्ततरो भवति । तर्हि हैष भवति वरुणः स यः कामयेत यथेमा वरुणः प्रजा गृह्णन्निव त्वत्सहसेव त्वन्निघातमिव त्वत्सचत ऽएवमन्नमद्यामिति तर्हि ह स जुहुयात्प्राप्नोति हैवैतदन्नाद्यं य ऽएवं विद्वांस्तर्हि जुहोति ॥ १० ॥

( त्यु ) अथ यत्रैतत्प्रदीप्तो भवति । ( त्यु ) उच्चैर्धूमः परमया जूत्या बल्बलीति तर्हि हैष भवतीन्द्रः स यः कामयेतेन्द्र ऽइव श्रिया यशसा स्यामिति तर्हि ह स जुहुयात्प्राप्नोति हैवैतदन्नाद्यं य एवं विद्वांस्तर्हि जुहोति ॥ ११ ॥

---

तद्यत्रैतत् प्रथमं समिद्धो भवति–धूप्यत इव तर्हि हैष भवति रुद्रः । 'स यः कामयेत '–यथेमा रुद्रः प्रजा अश्रद्धयेव त्वत्, सहसेव त्वत्, निघातमिव त्वत्, सचते–' एवमन्नमद्यामिति ' तर्हि ह स जुहुयात् । प्राप्नोति हैवैतदन्नाद्यं य एवं विद्वांस्तर्हि जुहोति ॥ ९ ॥

अथ यत्रैतत्प्रदीप्ततरो भवति–तर्हि हैष भवति वरुणः । ' स यः कामयेत–' यथेमा वरुणः प्रजा गृह्णन्निव त्वत्, सहसेव त्वत्, निघातमिव त्वत्, सचते–' एवमन्नमद्यामिति ' तर्हि ह स जुहुयात् । प्राप्नोति हैवैतदन्नाद्यं–य एवं–विद्वांस्तर्हि जुहोति ॥ १० ॥

अथ यत्रैतत् प्रदीप्तो भवति–उच्चैर्धूमः परमया जूत्या बल्बलीति–तर्हि हैष भवतीन्द्रः स यः

---

अथाहवनीयाग्नेरवस्था।विशेषमुपजीव्य रुद्रवरुणेन्द्रादिदेवतारूपतां ब्रुवंस्तत्फलाय काम्यान् होमकालानाह–**तद्यत्रैतदि**ति । काष्ठैः समिद्धोऽग्निर्यदा प्रथमं धूमायमानो भवति तस्मिन् समये एष रुद्रात्मको भवति । **यथेमा रुद्र** इति । ' यथा ' खलु ' रुद्रः ' ' इमाः ' सर्वाः ' प्रजाः ' ' अश्रद्धयेव त्वत् ' अप्रियेणेव एकवारम्, ' सहसेव त्वत् ' बलात्कारेणेव एकवारम्, तथा ' निघातमिव त्वत् ' प्रजानां हननमिव एकवारम्, ' सचते ' समवेति; ' एवम् ' एवाहं सर्वम् ' अन्नम् ' उपसंहृत्य ' अद्याम् ' भक्षयेयम् ' इति ' ' यः कामयेत ' ' सः ' यजमानः ' तर्हि ' तस्मिन् रुद्रावस्थेऽग्नौ ' जुहुयात् ' इत्यर्थः । एवमुत्तरत्रापि योज्यम् ॥ ९ ॥

**अथ यत्रैतत् प्रदीप्ततरो भवती**ति । प्रदीप्तास्वथ आहवनीयो वरुणात्मकः । **'गृह्णन्निव' त्वादि**ति । वरुणो हि पापीयसीः प्रजाः आत्मीयैः पाशैः ' गृह्णन्निव ' भवति, तद्वदयमपि सर्वमन्नाद्यमुत्पादयत इत्यर्थः ॥ १० ॥

**अथ यत्रैतत प्रदीप्तो भवतीति । उच्चैर्धूम** इति । यस्यामवस्थायामाहवनीयः प्रदीप्तः सन्नुद्धतधूमो भूत्वा महता वेगेन ' बल्बलि '–' इति ' एवं शब्दायते, तदवस्थोऽग्निरिन्द्रात्मक इत्यर्थः ॥ ११ ॥

---

१–' प्रथमसमिद्धे धूप्यमाने प्रजासु निहत्येव सहसान्नमत्स्यतः । काः श्रौ. सू. ४. ३६० । २–धूप्यत इव भवति । इ. क. पा. ॥ ३–भूयिष्ठार्चिषि गृहीत्वेव सहसा । का. श्रौ. सू. ४ । ३६१ ॥ ४–प्रदीप्ततमे श्रीयशस्कामस्य । का. श्रौ. सू. ४ । ३६२ ।

( त्यु ) अथ यत्रैतत्प्रतितरामिव । तिरश्चीवार्चिः सꣳशाम्यतो भवति तर्हि हैष भवति मित्रः स यः कामयेत मैत्रेणेदमन्नमद्यामिति यमाहुः सर्व्वस्य वा ऽअयं ब्राह्मणो मित्रं न वा ऽअयं कञ्चन हिनस्तीति तर्हि ह स जुहुयात्प्राप्नोति हैवैतदन्नाद्यं य ऽएवं विद्वांस्तर्हि जुहोति ॥ १२ ॥

( त्यु ) अथ यत्रैतदङ्गाराश्चाकश्यन्त ऽइव । तर्हि हैष भवति ब्रह्म स यः कामयेत ब्रह्मवर्च्चसी स्यामिति तर्हि ह स जुहुयात्प्राप्नोति हैवैतदन्नाद्यं य ऽएवं विद्वांस्तर्हि जुहोति ॥ १३ ॥

( त्ये ) एतेषामेकꣳ संव्वत्सरमुपेत्सेत् । ( त्स्व ) स्वयं जुह्वद्यदि वास्यान्यो जुहुयादथ योऽन्यथान्यथा जुहोति यथापो वाभिखनन्नन्यद्वान्नाद्यꣳ स सामि निवर्तेतैवं तदथ यः सार्धं जुहोति यथापो वाभिखनन्नन्यद्वान्नाद्यं तत्क्षिप्रेऽभितृन्द्यादेवं तत् ॥ १४ ॥

---

कामयेत–' इन्द्र इव श्रिया यशसा स्याम् ' इति । तर्हि ह स जुहुयात् । प्राप्नोति हैवैतदन्नाद्यं–य एवं विद्वांस्तर्हि जुहोति ॥ ११ ॥

अथ यत्रैतत् प्रतितरामिव तिरश्चीवार्चिः संशाम्यतो भवति, तर्हि हैष भवति मित्रः । स यः कामयेत–' मैत्रेणेदमन्नमद्यामिति ' यमाहुः–सर्वस्य वा अयं ब्राह्मणो मित्रम् । न वा अयं कंचन हिनस्तीति । तर्हि ह स जुहुयात् । प्राप्नोति हैवैतदन्नाद्यं–य एवं विद्वांस्तर्हि जुहोति ॥ १२ ॥

अथ यत्रैतदङ्गाराश्चाकश्यन्त इव–तर्हि हैष भवति ब्रह्म । स यः कामयेत–'ब्रह्मवर्चसी स्यामिति ' तर्हि ह स जुहुयात् । प्राप्नोति हैवैतदन्नाद्यं–य एवं विद्वांस्तर्हि जुहोति ॥ १३ ॥

एतेषामेकं संवत्सरमुपेत्सेत्–स्वयं जुह्वत्, यदि वाऽस्यान्यो जुहुयात् । अथ योऽन्यथान्यथा जुहोति–यथाऽपो वाऽभिखनन्, अन्यद्वान्नाद्यम् ,स सामि निवर्तेत–एवं तत् । अथ यः सार्द्धं जुहोति–यथाऽपो वाऽभिखनन्, अन्यद्वान्नाद्यम्–तत् क्षिप्रेऽभितृन्द्यात् एवं तत् ॥ १४ ॥

---

अथ यत्रैतत् प्रतितरामिवेति[1] । काष्ठेषु दग्धेषु ' संशाम्यतः ' अग्नेः अर्चिः ' ' प्रतितरां ' निकृष्टतराम् ' इव ' ऊर्ध्वाऽधोगमनाभवे[2] ' तिरश्चीव ' भवति तदवस्थापन्न आहवनीयो मित्र इत्यर्थः । एतदवस्थहोमे योग्यमधिकारिणमाह–**यमाहुरिति** । ब्राह्मणस्य यजमानस्य होमकाले इत्यर्थः ॥ १२ ॥

**अथ यत्रैतदङ्गाराश्चाकश्यन्त इवेति**[3] । सर्वासु ज्वालासु निवृत्तासु केवलमङ्गारा अत्यर्थं दीप्यन्ते; तस्यामवस्थायाम् ' एषः ' अग्निः ' ब्रह्म ' परब्रह्मात्मको ' भवति ' ॥ १३ ॥

**एतेषामेक**मित्यादि । ' एतेषां ' रुद्राद्यवस्थाविशेषाणां मध्ये ' एकं ' ' संवत्सरं ' संवत्सरपर्यन्तं निरन्तरमनुतिष्ठेत् । ' यदि ' यजमानः ' स्वयम् ' एवाग्निहोत्रं ' जुह्वत् ' भवति ' अन्यो वा ' ' अध्वर्युः

---

१–अर्चिः प्रत्यवाये मैत्रेणान्नमत्स्यतः । का. श्रौ. सू. ४ । ३६३ । २–ऊर्ध्वाध गमनेन रहित इव भवति । इति क. पाठः ३–अङ्गारेषु चाकश्यमानेषु ब्रह्मवर्चसकामस्य । का. श्रौ. सू. ४ । ३६४ ॥

( इ ) अग्नयो ह वा ऽएता ऽअन्नाद्यस्य यदाहुतयः । ( यो ) अभि हैवै-तदन्नाद्यं तृणत्ति यऽएवं विद्वानग्निहोत्रं जुहोति ॥ १५ ॥

सा या पूर्व्वाहुतिः । ( स्ते ) ते देवा ऽअथ योत्तरा ते मनुष्या ऽअथ यत्स्रुचि परिशिनष्टि ते पशवः ॥ १६ ॥

स वै कनीय ऽइव पूर्व्वामाहुतिं जुहोति भूय इवोत्तरां भूय इव स्रुचि परिशिनष्टि ॥ १७ ॥

स यत् कनीय ऽइव पूर्व्वामाहुतिं जुहोति कनीयाᳬसो हि देवा मनु-ष्येभ्यो ऽथ यद्भूयऽइवोत्तरां भूयाᳬसो हि मनुष्या देवेभ्योऽथ यद्भूय ऽइव स्रुचि परिशिनष्टि भूयाᳬसो हि पशवो मनुष्येभ्यः कनी-याᳬसो ह वाऽअस्य भार्या भवन्ति भूयाᳬसः पशवो य एवं विद्वा-नग्निहोत्रं जुहोति तद्वै समृद्धं यस्य कनीयाᳬसो भार्या ऽअसन्भ-याᳬसः पशवः ॥ १८ ॥

इति द्वितीयप्रपाठके चतुर्थं ब्राह्मणम् । (३।२) तृतीयाध्याये द्वितीयं ब्राह्मणम् ।

इति द्वितीयकाण्डे द्वितीयः प्रपाठकः ।

---

अग्नयो ह वा एता अन्नाद्यस्य यदाहुतयः । अभि हैवैतदन्नाद्यं तृणत्ति-य एवं विद्वानग्निहोत्रं जुहोति १५
सा या पूर्वाहुतिः-ते देवाः । अथ योत्तरा-ते मनुष्याः । अथ यत् स्रुचि परिशिनष्टि-ते पशवः १६
स वै कनीय इव पूर्वामाहुतिं जुहोति, भूय इवोत्तराम्, भूय इव स्रुचि परिशिनष्टि ॥ १७ ॥
स यत् कनीय इव पूर्वामाहुतिं जुहोति-कनीयांसो हि देवा मनुष्येभ्यः । अथ यद् भूय इवो-

---

जुहुयात् ', उभयोरप्येष संवत्सरनियमः[1] । यस्तु संवत्सरमध्ये उक्तनियमं परित्यज्य ' अन्यथा ' प्रतिदिवसे प्रकारान्तरेण 'जुहोति', तस्य दोषं दृष्टान्तपुरस्सरमाह-**यथेति** । ' अपः ' अभिलक्ष्य वापीकूपादिकं ' खनन् ' ' अन्यद् ' व्रीहियवादिकम् ' अन्नाद्यं वा ' सम्पादयन् ' सामि ' अर्द्धकृते ' यथा निवर्तेत ' ' एवम् ' एव ' तत् ' अन्यथाऽग्निहोत्रहवनमित्यर्थः ।

संवत्सरपर्यन्तं निरन्तरमेकं पक्षं कुर्वतो यजमानस्योद्दिष्टफलप्राप्तिमाह-**अथ य** इति । ' सार्द्धं ' सह, नैरन्तर्येण[2] ' यः ' संवत्सरं 'जुहोति', सिद्धमन्यत् । 'अन्नाद्यम्' 'अभितृणत्ति' स उत्पादयतीत्यर्थः ॥ १४ ॥ १५ ॥

पूर्वोत्तराहुतिद्रव्ययोरवशिष्टस्य चोत्तरोत्तरं भूयस्त्वं विधाय प्रतिपादयति-**सा** येत्यादिना ॥ १६ ॥ १७ ॥

**स यत् कनीय** इति । **भार्या भवन्ती**ति । भर्त्तव्याः प्रजा भवन्तीत्यर्थः । **तद्वै समृद्धमि**ति । यत्र खलु भोक्तृणामल्पीयस्त्वम् भोग्यसम्पत्तिर्भूयसी, तत् खलु समृद्धमित्यर्थः[3] ॥ १८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वितीये काण्डे तृतीयाध्याये द्वितीयं ब्राह्मणम् । ( २-३-२ ) ॥

---

१-संवत्सरं जुहुयादेतेषामेकैकेन कामसंयोगे । का. श्रौ. सू. ४ । ३७१ ॥ २-सायं प्रातर्वा । का. श्रौ. सू.-४ । ३७२ ।
१-स्वयं वा जुहुयात् । उपवसथे नियमः ॥ का. श्रौ. सू. ४ । ३७९-३८० ॥

# अथ तृतीयप्रपाठके च प्रथमं ब्राह्मणं ।
# तृतीयाध्याये तृतीयं ब्राह्मणम् ।

हरिः ॐ । यत्र वै प्रजापतिः प्रजाः ससृजे । स यत्राग्निᳬ᳭ससृजे स इदं जातः सर्व्वमेव दग्धुं दध्रऽइत्येवाविलमेव ता यास्तर्हि प्रजाऽआसुस्ता हैनᳬ᳭सम्पेष्टुं दध्रिरे सोऽतितिक्षमाणः पुरुषमेवाभ्येयाय ॥ १ ॥

स होवाच । न वा ऽअहमिदं तितिक्षे हन्त त्वा प्रविशानि तं मा जनयित्वा बिभृहि स यथैव मां त्वमस्मिँल्लोके जनयित्वा भरिष्यस्येवमेवाहं त्वाममुष्मिँल्लोके जनयित्वा भरिष्यामीति ॥ २ ॥

तथेति तं जनयित्वाऽबिभः । स यदग्नीऽआधत्ते तदेनं जनयति तं जनयित्वा बिभर्ति स यथा हैवैष एतमस्मिँल्लोके जनयित्वा बिभर्त्त्येवमु हैवैष ऽएतममुष्मिँल्लोके जनयित्वा बिभर्त्ति ॥ ३ ॥

---

त्तराम्–भूयांसो हि मनुष्या देवेभ्यः । अथ यद् भूय इव स्रुचि परिशिनाष्टि–भूयांसो हि पशवो मनुष्येभ्यः । कनीयांसो ह वा अस्य भार्या भवन्ति; भूयांसः पशवः । य एवं विद्वानग्निहोत्रं जुहोति । तद्वै समृद्धम् । यस्य कनीयांसो भार्या असन्, भूयांसः पशवः ॥ १८ ॥

---

यत्र वै प्रजापतिः प्रजाः ससृजे । स यत्राग्निं ससृजे स इदं जातः सर्वमेव दग्धुं दध्रे । इत्येवाविलमेव ताः–यास्तर्हि प्रजा आसुः । ता हैनं सम्पेष्टुं दध्रिरे । सोऽतितिक्षमाणः पुरुषमेवाभ्येयाय ॥ १ ॥

स होवाच–" न वा अहमिदं तितिक्षे, हन्त त्वा प्रविशानि, तं मा जनयित्वा बिभृहि स यथैव मां त्वमस्मिँल्लोके जनयित्वा भरिष्यसि एवमेवाहं त्वाममुष्मिँल्लोके जनयित्वा भरिष्यामीति ॥ २ ॥

तथेति तं जनयित्वाऽबिभः । स यदग्नी आधत्ते–तदेनं जनयति–तं जनयित्वा बिभर्ति । स यथा हैवैष एतमस्मिँल्लोके जनयित्वा बिभर्ति, एवमु हैवैष एतममुष्मिँल्लोके जनयित्वा बिभर्ति ॥ ३ ॥

---

अथैतयोर्गार्हपत्याहवनीययोरग्न्योरुपस्थानं विधित्सुः प्राग्विहिते आधानाग्निहोत्रे समुच्चित्य क्रमेण स्तौति–**यत्र वा** इत्यादिना । यदा खलु प्रजापतिः प्रजाः सृष्टवान्, तदा ' अग्निम् ' इममपि ससर्ज । ' सः ' च ' जातः ' अग्निः ' सर्वम् ' 'इदं' जगत् ' दग्धुम् ' ' दध्रे ' उद्युक्तो बभूव, 'इति' इदं सर्वं जगद् व्याकुलमभूदित्यर्थः । **ता हैन**मिति । ' एनम् ' अग्निम् । **सोऽतितिक्षमाण** इत्यादि । ' अतितिक्षमाणः ' प्रजाभिश्चिकीर्षितं पेषणमसहमानः कर्माधिकारिणं ' पुरुषम् ' अभिजगामेत्यर्थः ॥ १ ॥

**स होवा**चेति । अभिगम्य किमुक्तवानिति, तदाह–**न वा अहमि**ति । 'तितिक्षे' सोढुं शक्नोमि । निगदसिद्धमन्यत् ॥ २ ॥

एवमग्निना प्रार्थितः, 'तथा' 'इति' अङ्गीकृत्य पुरुषेण तथैवानुष्ठितमिति दर्शयति–**स यदग्नी** इत्यादिना ॥ ३ ॥

तन्न साम्युद्वासयेत । सामि हास्मै स ग्लायति स यथा हैवैष ऽएतस्मा ऽअस्मिँल्लोके सामि ग्लायत्येवमु हैवैष एतस्मा ऽअमुष्मिँल्लोके सामि ग्लायति तस्मान्न साम्युद्वासयेत ॥ ४ ॥

स यत्र म्रियते । यत्रैनमग्नावभ्यादधति. तदेषोऽग्नेरधिजायते स ऽएष पुत्रः सन्पिता भवति ॥ ५ ॥

तस्मादेतदृषिणाभ्यनूक्तम् । ( १ ) शतमिन्नु शरदोऽअन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् ॥ पुत्रासो यत्र पितरो भवन्ति मा नो मध्या- रीरिषतायुर्गन्तोरिति पुत्रो ह्येष सन्त्स पुनः पिता भवत्येतन्नु तद्यस्मा- दग्नीऽआदधीत ॥ ६ ॥

---

तन्न साम्युद्वासयेत । सामि हास्मै स ग्लायति । स यथा हैवैष एतस्मा अमुष्मिँल्लोके सामि ग्लायति-एवमु हैवैष एतस्मा अमुष्मिँल्लोके सामि ग्लायति । तस्मान्न साम्युद्वासयेत ॥ ४ ॥

स यत्र म्रियते-यत्रैनमग्नावभ्यादधति-तदेषोऽग्नेरधिजायते । स एष पुत्रः सन् पिता भवति ॥५॥

तस्मादेतदृषिणाभ्यनूक्तम्-" **शतमिन्नु शरदो अन्ति देवाः । यत्रा नश्चक्रा जरसं तनूनाम् । पुत्रासो यत्र पितरो भवन्ति । मा नो मध्या रीरिषतायुर्गन्तोः** "-इति । (वा.सं.अ. २९ मं. २२) पुत्रो ह्येष सन्त्सः पुनः पिता भवति । एतन्नु तद्-यस्मादग्नी आदधीत ॥ ६ ॥

---

एवमग्न्याधानेन जनितस्याग्नेर्भरणं विधाय, तस्य भरणात् प्राक् उद्वासनं निषेधति-**तन्ने**ति । ' सामि ' मध्ये यद्यग्निम् ' उद्वासयेत् ' विसृजेत, तर्हि ' अस्मै ' यजमानाय ' सः ' अग्निः ' सामि ' अर्द्धग्लानियुक्तो भवति । **स यथे**त्यादि । इह लोके येयमग्निग्लानिः, सा आमुष्मिकयजमानग्लानेर्हेतुर्भवतीत्यर्थः । तस्मादामरणान्तम् अग्निर्द्धार्य इति निगमयति-**तस्मा**दिति । ( का. श्रौ. सू. २ ॥ १०८ ) ॥ ४ ॥

**स यत्रेति । यत्रैनमग्नाविति** । ' एनं ' मृतं यजमानं पैतृमेधिकविधिना अग्नौ प्रक्षिपन्तीत्यर्थः । ' सः ' ' एषः ' अग्निः । **पुत्रः सन् पिता भवतीति** । यजमानस्य जीवनावस्थायामाधानेनोत्पादितत्वादग्निस्तस्य पुत्रः, मरणादूर्ध्वन्तु तस्मादग्नेर्यजमानस्य जननात् पुत्र एव तस्य पिता भवतीत्यर्थः ॥ ५ ॥

ननु पुत्रस्य सतः पितृत्वं विरुद्धमित्याशङ्क्य काञ्चिदृचं संवादयति-**तस्मादि**ति । ' ऋषिणा ' मन्त्रेण । स च " **शतमिन्नु शरदः** " इत्यादिकः ( ऋ. सं. १ । ७९ । ९ ) । तस्य चायमर्थः-हे ' देवाः ! ' ' अन्ति ' अन्तिके, मनुष्याणां समीपे आयुष्ट्वेन परिकल्पिताः ' शतं ' शतसङ्ख्याका एव ' शरदः ' संवत्सराः खलु ' यत्र ' यस्मिन् आयुषि शतसंवत्सरे ' तनूनां ' शरीराणां ' जरसं ' जरां ' चक्रा ' कृतवन्तः; ' यत्र ' च ' पुत्रासः ' सन्तोऽपि अपत्योत्पादनेन पितरो भवन्ति, ' नः ' अस्माकं तत् आयुः ' गन्तोः ' गमनात् पूर्वं ' मध्या ' मध्ये मा रीरिषत हिंसनं मा कृषत इति । **पुत्रो ह्येष सन्निति** । मानुषस्य यजमानस्य ' एषः ' अग्निः आधाना-

---

१-"धृष्टिरसीत्युपवेषमादायापाम इत्यंगारान् प्राचः करोति " इति सूत्रभाष्ये कर्कोद्धृता श्रुतिः । अपि च । अग्न्युत्सर्गे दोषो दृश्यते इत्युपक्रम्य " वीरहा वा स एष भवति योऽग्नीनुत्सृजति " इति । " वीरः अग्निः " । अग्निधारणं पुरुषधर्मः ।

तद्वा ऽएष एव मृत्युः । ( यं ) य ऽएष तपति तद्यदेष ऽएव मृत्युस्तस्माद्या ऽएतस्मादर्व्वाच्यः प्रजास्ता म्रियन्तेऽथ याः पराच्यस्ते देवास्तस्मादु तेऽमृतास्तस्येमाः सर्व्वाः प्रजा रश्मिभिः प्राणेष्वभिहिता यथाश्वोऽश्वाभिधान्या वाभीशुभिर्व्वैवमस्येमाः सर्व्वाः प्रजा रश्मिभिः प्राणेष्वभिहितास्तस्मादु रश्मयः प्राणानभ्यवतायन्ते ॥ ७ ॥

स यस्य कामयते । तस्य प्राणमादायोदेति स म्रियते स यो हैतं मृत्युमनतिमुच्याथामुं लोकमेति यथा हैवास्मिँल्लोके न संयतमाद्रियते यदा यदैव कामयतेऽथ मारयत्येवमु हैवामुष्मिँल्लोके पुनः पुनरेव प्रमारयति ॥८॥

स यत्सायमस्तमिते द्वे ऽआहुती जुहोति । तदेताभ्यां पूर्व्वाभ्यां पद्भ्यामेतस्मिन्मृत्यौ प्रतितिष्ठत्यथ यत्प्रातरनुदिते द्वे ऽआहुती जुहोति तदेताभ्यामपराभ्यां पद्भ्यामेतस्मिन्मृत्यौ प्रतितिष्ठति स ऽएनमेष ऽउद्यन्ने-

---

तद्वा एष एव मृत्युः—य एष तपति । तद् यदेष एव मृत्युः—तस्मादु, या एतस्मादर्वाच्यः प्रजास्ता म्रियन्ते । अथ याः पराच्यस्ते देवाः । तस्मादु तेऽमृताः । तस्येमाः सर्वाः प्रजा रश्मिभिः प्राणेष्वभिहिताः । यथाऽश्वोऽश्वाभिधान्या वाभीशुभिर्वा—एवमस्येमाः सर्वाः प्रजा रश्मिभिः प्राणेष्वभिहिताः । तस्मादु रश्मयः प्राणानभ्यवतायन्ते ॥ ७ ॥

स यस्य कामयते—तस्य प्राणमादायोदेति—स म्रियते । स यो हैतं मृत्युमनतिमुच्य, अथामुं लोकमेति—यथा हैवास्मिँल्लोके न संयतमाद्रियते—यदा यदैव कामयते—अथ मारयति—एवमु हैवामुष्मिँल्लोके पुनः पुनरेव प्रमारयति ॥ ८ ॥

स यत् सायमस्तमिते द्वे आहुती जुहोति—तदेताभ्यां पूर्वाभ्यां पद्भ्यामेतस्मिन् मृत्यौ प्रतितिष्ठति । अथ यत् प्रातरनुदिते द्वे आहुती जुहोति—तदेताभ्यामपराभ्यां पद्भ्यामेतस्मिन् मृत्यौ प्रतितिष्ठति ।

---

दुत्पन्नतया ' पुत्रः सन् ' देवशरीरमापन्नस्य तस्योत्पादनेन ' पुनः पिता भवति ' 'इति' ' एतत् ' खलु ' ऋषिणा' ' अभ्यनूक्तम् ' इत्यर्थः ॥ ६ ॥

अग्निहोत्रहोमस्यामृतत्वप्राप्तिसाधनत्वं वक्तुं सूर्यस्य मृत्युरूपतां प्रतिपादयति—**तद्वा एष एवेति** । **रश्मिभिरिति** । सूर्यस्य किरणैः प्राणेषु बद्धा इत्यर्थः । तत्र दृष्टान्तः—**यथेति** । अश्वोऽभिधीयते बध्यतेऽनयेत्यश्वाभिधानी, तया; अभीशवोऽन्या रज्जवस्ताभिर्वेत्यर्थः । **तस्मादु रश्मय** इति । यस्मात् सूर्यरश्मिभिः प्राणेषु प्रजा बद्धाः तस्मादेव कारणात् ते ' रश्मयः ' ' प्रजानां प्राणान् ' ' अभि '—लक्ष्य ' अवतायन्ते ' अवसार्य्यन्ते ॥ ७ ॥

**स यस्येत्यादि** । निगदसिद्धम् । **स यो हैतमिति** । ' एतं ' सूर्यात्मकं मृत्युम् ' अनतिमुच्य ' अनतिक्रम्य ' यः ' स्वर्गं प्राप्नोति, ' सः ' भूलोक इव तत्रापि ' पुनरेव ' मार्यते, न त्वमृतत्वप्राप्तिस्तस्येत्यर्थः ॥ ८ ॥

कथं तर्हि तस्य मृत्योरतिमोक इति, तत्राह—**स यदिति** । सायम्प्रातरग्निहोत्रहोमे द्वे द्वे आहुती हूयेते, अतस्ताभिश्चतसृभिराहुतिभिः तस्मिन् सूर्यात्मके ' मृत्यौ ' विषयभूते सति, यजमानः प्रतितिष्ठति । ' स एषः '

वादायोदेति तदेतं मृत्युमतिमुच्यते सैषाग्निहोत्रे मृत्योरतिमुक्तिरति ह वै पुनर्मृत्युं मुच्यते य एवमेतामग्निहोत्रे मृत्योरतिमुक्तिं वेद ॥ ९ ॥

यथा वा ऽइषोरनीकम्। ( मे ) एवं यज्ञानामग्निहोत्रं येन वाऽइषोरनीकमेति सर्वा वै तेनेषुरेत्येतेनो हास्य सर्वे यज्ञक्रतव एतं मृत्युमतिमुक्ताः ॥ १० ॥

( ऽ ) अहोरात्रे ह वा ऽअमुष्मिँल्लोके परिप्लवमाने । पुरुषस्य सुकृतं क्षिणुतोऽर्वाचीनं वाऽ अतोऽहोरात्रे तथो हास्याहोरात्रे सुकृतं न क्षिणुतः ॥ ११ ॥

स यथा रथोपस्थे तिष्ठन् ।(न्नु) उपरिष्टाद्रथचक्रे पल्यङ्गमाने ऽउपावेक्षेतैवं परस्तादर्वाचीनोऽहोरात्रे उपावेक्षते न ह वा ऽअस्याहोरात्रे सुकृतं क्षिणुतो यऽ एवमेतामहोरात्रयोरतिमुक्तिं वेद ॥ १२ ॥

---

स एनमेष उद्यन्नेवादायोदेति । तदेतं मृत्युमतिमुच्यते । सैषाग्निहोत्रे मृत्योरतिमुक्तिः । अति ह वै पुनर्मृत्युं मुच्यते—य एतामग्निहोत्रे मृत्योरतिमुक्तिं वेद ॥ ९ ॥

यथा वा इषोरनीकम्—एवं यज्ञानामग्निहोत्रम् । येन वा इषोरनीकमेति, सर्वा वै तेनेषुरेति । एतेनो हास्य सर्वे यज्ञक्रतवः—एतं मृत्युमतिमुक्ताः ॥ १० ॥

अहोरात्रे ह वा अमुष्मिँल्लोके परिप्लवमाने पुरुषस्य सुकृतं क्षिणुतः । अर्वाचीनं वा अतोऽहोरात्रे. तथो हास्याहोरात्रे सुकृतं न क्षिणुतः ॥ ११ ॥

स यथा रथोपस्थे तिष्ठन्नुपरिष्टाद् रथचक्रे पल्यङ्गमाने उपावेक्षेत, एवं परस्तादर्वाचीनोऽहोरात्रे उपावेक्षते, न ह वा अस्याहोरात्रे सुकृतं क्षिणुतः—य एवमेतामहोरात्रयोरतिमुक्तिं वेद ॥ १२ ॥

---

सूर्यः ' एनं ' यजमानं रश्मिभिः ' आदाय ' एव ' उदेति, ' स च ' एतं ' मृत्युम् अतीत्य ' मुच्यते ' इत्यर्थः । एवमग्निहोत्रे मृत्योरतिमुक्तिं प्रतिपाद्य, तद्वेदितुः फलमाह—**अति** हेति ॥ ९ ॥

एवमग्निहोत्रद्वारा इतरयज्ञेष्वतिमुक्तिः सिद्धेति दर्शयति—**यथा वा** इत्यादिना । ' यथा ' खलु ' इषोः ' बाणस्य ' अनीकम् ' मुखम् प्रधानम्, ' एवम्' एव ' यज्ञानामग्निहोत्रम् ' । ' येन ' खलु लक्षणेन 'इषोरनीकं' शल्यरूपम् ' एति ' प्राप्नोति ' तेन ' ' सर्वा इषुः ' प्राप्नोति एवम् अग्निहोत्रसम्बद्धाः सर्वे दर्शपूर्णमासादयः यज्ञक्रतवः तद्द्वारा सूर्यात्मकं ' मृत्युम् ' अतिक्रान्ता इत्यर्थः ॥ १० ॥

एवं मृत्योरतिमुक्तिरहोरात्राभ्यामपि यजमानेन ज्ञातव्येति प्रतिपादयति—**अहोरात्रे** हेति । ' परिप्लवमाने ' पर्य्यावर्त्तमाने ' अहोरात्रे ' आमुष्मिकं स्वर्गादिसुखहेतुभूतं ' सुकृतं ' कर्म्म ' क्षिणुतः ' क्षपयतः । यदा तु विद्वान् उदीरितरीत्या सूर्यमतिक्रम्य वर्त्तते, तदा ' अहोरात्रे ' एवाधीने भवतः; तथा चाहोरात्रानाक्रान्तत्वाद् विदुषः सुकृतं न क्षीयत इत्यर्थः ॥ ११ ॥

एतदेव दृष्टान्तेनोपपादयति—**स यथे**ति । ' रथोपस्थे ' रथस्योत्सङ्गे ' उपरिष्टात् ' ' तिष्ठन् ' पल्यङ्गमाने

पूर्वेणाहवनीयं परीत्य । ( त्या ) अन्तरेण गार्हपत्यं चैति न वै देवा मनुष्यं विदुस्त ऽएनमेतदन्तरेणातियन्तं विदुरयं वै नऽ इदं जुहोतीत्यग्निर्वै पाप्मनोऽपहन्ता । तावस्याहवनीयश्च गार्हपत्यश्चान्तरेणातियतः पाप्मानमपहतः सोऽपहतपाप्मा ज्योतिरेव श्रिया यशसा भवति ॥ १३ ॥

( त्यु ) उत्तरतो वा ऽअग्निहोत्रस्य द्वारम् । ( ९ँ ) स यथा द्वारा प्रपद्येतैवं तदथ यो दक्षिणत ऽएत्यास्ते यथा बहिर्धा चरेदेवं तत् ॥ १४ ॥

( न्नौ ) नौर्ह वा ऽएषा स्वर्ग्या । यदग्निहोत्रं तस्या ऽएतस्यै नावः स्वर्ग्याया ऽआहवनीयश्चैव गार्हपत्यश्च नौमण्डे ऽअथैष एव नावाजो यत्क्षीरहोता ॥ १५ ॥

---

पूर्वेणाहवनीयं परीत्यान्तरेण गार्हपत्यं चैति । न वै देवा मनुष्यं विदुः । त एनमेतदन्तरेणातियन्तं विदुः—' अयं वै न इदं जुहोति ' इति । अग्निर्वै पाप्मनोऽपहन्ता । तावस्याहवनीयश्च गार्हपत्यश्चान्तरेणातियतः पाप्मानमपहतः सोऽपहतपाप्मा ज्योतिरेव श्रिया यशसा भवति ॥ १३ ॥

उत्तरतो वा अग्निहोत्रस्य द्वारम् । स यथा द्वारा प्रपद्येत—एवं तत् । अथ यो दक्षिणत एत्यास्ते—यथा बहिर्धा चरेद् एवं तत् ॥ १४ ॥

नौर्ह वा एषा स्वर्ग्या—यदग्निहोत्रम् । तस्या एतस्यै नावः स्वर्ग्याया आहवनीयश्चैव गार्हपत्यश्च नौमण्डे । अथैष एव नावाजो यत्क्षीरहोता ॥ १५ ॥

---

पर्यावर्त्तमाने रथचक्रे ' अर्वाचीनः ' अवाङ्मुखः ' अवेक्षेत ' । एवं सूर्यमतिक्रम्य स्थितो विद्वानपि सूर्यमण्डलस्याधस्तात्पर्यावर्तमाने अहोरात्रे अवाङ्मुखोऽवेक्षत इत्यर्थः । **न ह** वेत्याद्युक्तार्थम् ॥ १२ ॥

होमार्थमन्तरागमनं विधाय प्रशंसति—**पूर्वेणेति** ( का० श्रौ० सू० ४ । ३७३ ) । दक्षिणेन प्रवेशनमग्निहोत्रेष्टिषु । अयं प्रवेशे द्वारनियमः । आहवनीयस्य पुरस्तात् परिक्रम्य गार्हपत्याहवनीययोर्मध्ये गच्छेदित्यर्थः । तथा च सूत्रितम्— " अन्तरेणापराग्नी गत्वा दक्षिणेन वा प्रदक्षिणमाहवनीयं परीत्योपविशति यजमानः " ( का० श्रौ० सू ४।३०७ ) इति । **न वै देवा** इत्यादि सुगमम् ॥ १३ ॥

**उत्तरतो वा** इति । यदेतद् ' दक्षिणेन वा' इति कात्यायनेन विकल्पेनोक्तम् तद् दूषयति—**अथ य** इति । अग्निहोत्रहोमार्थमुत्तरस्यां दिशि द्वारप्रवेशोपायः । तथा च उत्तरतः प्रवेशं विहाय गार्हपत्याहवनीययोर्मध्यमनतिक्रम्यैव ' यः ' यजमानः दक्षिणस्यां दिशि एवागत्य आहवनीयसमीपे ' आस्ते, ' सोऽग्निहोत्रं प्रवेष्टुमशक्तो बहिरेवावतिष्ठते; यथा प्राकारपरिवृतस्याश्रमादेर्द्वारदेशमप्राप्य प्रवेष्टुमशक्तो बहिरवस्थितो भवति तद्वदित्यर्थः॥ १४

अथैतदग्निहोत्रं नौरूपेण स्तुवन्नुत्तरतः प्रवेशं प्रतिपादयति—**नौर्हे**त्यादिना । **नौमण्डे** इति । ' स्वर्ग्यायाः ' स्वर्गप्राप्तिहेतुभूतायास्तस्या अग्निहोत्ररूपायाः ' नावः ' ' आहवनीयगार्हपत्यौ ' ' नौमण्डे ' उभे पार्श्वे, भित्ती इत्यर्थः । **नावाज** इति । नावमजति क्षिपति प्रेरयतीति नावाजः, ( कर्णधारः ) ॥ १५ ॥

स यत्प्राङुपोदैति । तदेनां प्राचीमभ्यजति । स्वर्गं लोकमभि तया स्वर्गं लोकꣳ समश्नुते तस्या ऽउत्तरतऽआरोहणꣳ सैनꣳ स्वर्गं लोकꣳ समापयत्यथ यो दक्षिणत ऽएत्यास्ते यथा प्रतीर्णायामागच्छेत्स विहीयेत स तत ऽएव बहिर्धा स्यादेवं तत् ॥ १६ ॥

( ड ) अथ यामेताꣳ समिधमभ्यादधाति सेष्टका येन मन्त्रेण जुहोति तद्यजुर्येनैतामिष्टकमुपदधाति यदा वा ऽइष्टकोपधीयतेऽथाहुतिर्हूयते तदस्योपहितास्वेवेष्टकास्वेता ऽआहुतयो हूयन्ते या ऽएताऽ अग्निहोत्राहुतयः ॥ १७ ॥

प्रजापतिर्व्वा ऽअग्निः । संव्वत्सरो वै प्रजापतिः संव्वत्सरे संव्वत्सरे ह वा ऽअस्याग्निहोत्रं चित्येनाग्निना सन्तिष्ठते संव्वत्सरे संव्वत्सरे चित्य-

---

स यत् प्राङुपोदैति—तदेनां प्राचीमभ्यजति—स्वर्गं लोकमभि । तया स्वर्गं लोकं समश्नुते । तस्या उत्तरत आरोहणम् । सैनं स्वर्गं लोकं समापयति । अथ यो दक्षिणत एत्यास्ते—यथा प्रतीर्णायामागच्छेत्, स विहीयेत, स तत एव बहिर्धा स्याद् एवं तत् ॥ १६ ॥

अथ यामेतां समिधमभ्यादधाति—सेष्टका । येन मन्त्रेण जुहोति—तद् यजुः । येनैतामिष्टकामुपदधाति—यदा वा इष्टकोपधीयते—अथाहुतिर्हूयते—तदस्योपहितास्वेवेष्टकास्वेता आहुतयो हूयन्ते—या एता अग्निहोत्राहुतयः ॥ १७ ॥

प्रजापतिर्वा अग्निः । संवत्सरो वै प्रजापतिः । संवत्सरे संवत्सरे ह वा अस्याग्निहोत्रं चित्येनाग्निना

---

**स यत् प्राङि**त्यादि । प्राङ्मुखः सन् गार्हपत्यादाहवनीयं प्रति होमायोपगच्छन् ताम् ' एनां ' नावं प्राच्यां दिशि अवस्थितं ' स्वर्गम् ' ' अभ्यजति ' अभिप्रेरयति । **उत्तरत आरोहणमिति** । आरुह्यतेऽनेनेत्यारोहणं प्रवेशद्वारम् । ततश्च उत्तरत आरुह्यमाणा सा अग्निहोत्ररूपा नौः एनं यजमानं ' स्वर्गं लोकं ' सम्यक् प्रापयति । दक्षिणतः प्रवेशने दोषमाह—**अथ य** इति । नावि ' प्रतीर्णायां ' सत्यां यस्तरीतुम् ' आगच्छेत् ' ' सः ' तत्रैव ' विहीयेत ' त्यज्येत, ततश्च ' बहिर्धा ' बाह्यो भवेत्; एवमेव ' तत् ' दक्षिणतः प्रवेशनमित्यर्थः ॥ १६ ॥

अथैतदग्निहोत्रं चित्याग्निसम्पत्त्या स्तौति—**अथ यामि**ति । होमार्थं या समिदग्नौ आधीयते, ' सा ' च ' इष्टका '; ' येन ' च मन्त्रेण अग्निहोत्रं ' जुहोति ' ' तद् ' एव इष्टकोपधानार्थं ' यजुः ' । **यदा वा** इत्यादि । सायम्प्रातःकालेषु समिदाधानमेवेष्टकोपधानम् । तथा चयनसंस्कृते एवाग्नौ सायम्प्रातराहुतयः कात्स्न्र्येन हुता भवन्तीत्यर्थः ॥ १७ ॥

अथ चित्यस्याग्नेः संवत्सररूपतां ब्रुवन् तावत्कालसाध्यस्याग्निहोत्रहोमस्य तत्सम्पत्तिमुपपादयति—**प्रजापतिर्वा** इति । चित्योऽग्निः प्रजापतिना सृष्टत्वात् तदात्मकः, प्रजापतिश्च संवत्सरकालात्मकः; अतः संवत्सरपर्यन्तमेभि-

---

१—मध्ये निगृह्योपविश्य समिधमादधात्यग्निज्योतिषं त्वा वायुमतीं प्राणवतीं २स्वर्ग्यां २स्वर्ग्यायोपदधामि भास्वतीम् इति । का. श्रौ. सू. ४ । ३२७ । २—' मनुतिष्ठन्तम् ' इति पा. ।

मग्निमाप्नोति य ऽएवं विद्वानग्निहोत्रं जुहोत्येतदु हास्याग्निहोत्रं चित्येनाग्निना सन्तिष्ठते चित्यमग्निमाप्नोति ॥ १८ ॥

सप्त च वै शतान्यशीतीनामृचः । (चो) विꣳशतिश्च स यत्सायं प्रातरग्निहोत्रं जुहोति ते द्वे ऽआहुती ताऽअस्य संवत्सर ऽआहुतयः सम्पद्यन्ते १९

सप्त चैव शतानि विꣳशतिश्च । संवत्सरे संवत्सरे ह वाऽअस्याग्निहोत्रं महतोक्थेन सम्पद्यते संवत्सरे संवत्सरे महदुक्थमाप्नोति यऽएवं विद्वानग्निहोत्रं जुहोत्येतदु हास्याग्निहोत्रं महतोक्थेन सम्पद्यते महदुक्थमाप्नोति॥२०॥

इति तृतीयप्रपाठके प्रथमं ब्राह्मणम् ॥ १ ॥ ३ ॥ ( ३–३ )

---

सन्तिष्ठते । संवत्सरे संवत्सरे चित्यमग्निमाप्नोति–य एवं विद्वानग्निहोत्रं जुहोति, एतदु हास्याग्निहोत्रं चित्येनाग्निना सन्तिष्ठते, चित्यमग्निमाप्नोति ॥ १८ ॥

सप्त च वै शतान्यशीतीनामृचो विंशतिश्च ७२० (५७६००) । स यत् सायंप्रातरग्निहोत्रं जुहोति–ते द्वे आहुती । ता अस्य संवत्सर आहुतयः सम्पद्यन्ते ॥ १९ ॥

सप्त चैव शतानि विंशतिश्च । संवत्सरे–संवत्सरे ह वा अस्याग्निहोत्रं महतोक्थेन सम्पद्यते । संवत्सरे–संवत्सरे महदुक्थमाप्नोति–य एवं विद्वानग्निहोत्रं जुहोति–एतदु हास्याग्निहोत्रं महतोक्थेन सम्पद्यते–महदुक्थमाप्नोति ॥ २० ॥

---

तिष्ठन्तमग्निहोत्रं चित्येनाग्निना समानं सत् ‘ संतिष्ठते ’ समाप्तं भवति । तथा च एकैकसंवत्सराग्निहोत्रानुष्ठानेन चित्याग्न्यनुष्ठानं कृतं भवतीत्यर्थः ॥ १८ ॥

अथैतदग्निहोत्रं महदुक्थसम्पादनेन स्तौति–सप्त चेति । चित्योऽग्निः, महाव्रतं साम, बृहतीसहस्रात्मकं महदुक्थं[1] चैतानि त्रीणि सहचराणि । तत्र चित्याग्निसम्पत्तिरुक्ता, महदुक्थ[2]सम्पत्तिस्त्वेवमवगन्तव्या;–तत्र हि गायत्री तृचाशीतिः; औष्णिही तृचाशीतिः, बार्हती तृचाशीतिरिति तिस्रस्तृचाशीतयो विहिताः, ( ऐ. आ. ५ अ.२।२ अ. ३–४–५ ) तासां तिसृणां तृचाशीतीनां सम्भूय परिगणिता ऋचो विंशत्युत्तरसप्तशतसङ्ख्याका भवन्ति ॥

प्रतिदिवसमग्निहोत्रे सायमाहुतिरेका, प्रातराहुतिश्चैकेति द्वे आहुती; संवत्सरस्य च षष्ट्युत्तरत्रिशतसङ्ख्याका अहोरात्राः, तेषु च क्रियमाणास्ता अग्निहोत्राहुतयो विंशत्युत्तरसप्तशतसङ्ख्याका भवन्ति । अतश्चैकस्मिन् ‘ संवत्सरे ’ ‘ अस्य ’ यजमानस्य ‘ अग्निहोत्रं ’ तृचाशीतित्रयात्मकमहदुक्थेन ‘सम्पद्यते’ सम्पन्नं भवतीत्यर्थः। एतज्ज्ञानपूर्वकानुष्ठानं प्रशंसति–संवत्सरे संवत्सर इति ॥ १९ ॥ २० ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे तृतीयाध्यायस्य तृतीयं ब्राह्मणम् ( २–३–३ ) ॥

---

१–‘ बृहदुक्थं ’ इति क. । २–‘ बृहदुक्थ ’ इति क. ।

अग्नौ ह वै देवाः । सर्वान्पशून्निदधिरे ये च ग्राम्या ये चारण्या विजयं व्वोपप्रैष्यन्तः कामचारस्य वा कामायायं नो गोपिष्ठो गोपायदिति वा ॥ १ ॥

तान्नु हाग्निर्निचकमे । तैः सङ्गृह्य रात्रिं प्रविवेश पुनरेम इति देवाऽए-दग्निं तिरोभूतं ते ह व्विदाञ्चक्रुरिह वै प्राविक्षद्रात्रिं वै प्राविक्षदिति तमेत-त्प्रत्यायत्यार्ठ्ठरात्रौ सायमुपातिष्ठन्त देहि नः पशून्पुनर्नः पशून्देहीति तेभ्योऽग्निः पशून्पुनरददात् ॥ २ ॥

( तु ) तस्मै कमग्नीऽउपतिष्ठेत । ( ता ) अग्नी वै दातारौ तावेवैतद्या-चते सायमुपतिष्ठेत सायर्ठ्ठं हि देवा ऽउपातिष्ठन्त दत्तो हैवास्माऽएतौ पशून्य ऽएवं व्विद्वानुपतिष्ठते ॥ ३ ॥

( तेऽथ ) अथ यस्मान्नोपतिष्ठेत । ( तो ) उभये ह वाऽइदमग्रे सहासु-र्देवाश्च मनुष्याश्च तद्यद्ध स्म मनुष्याणां न भवति तद्ध स्म देवान्याचन्त

---

अग्नौ ह वै देवाः सर्वान् पशून्निदधिरे-ये च ग्राम्याः, ये चारण्या विजयं वोपप्रैष्यन्तः, कामचा-रस्य वा कामाय-'अयं नो गोपिष्ठो गोपायद्' इति वा ॥ १ ॥

तान्नु हाग्निर्निचकमे । तैः सङ्गृह्य रात्रिं प्रविवेश । 'पुनरेम'-इति देवा एदग्निं तिरोभूतम् । ते ह विदाञ्चक्रुः-इह वै प्राविक्षद्, रात्रिं वै प्राविक्षदिति । तमेतत् प्रत्यायत्यां रात्रौ सायमुपातिष्ठन्त-'देहि नः पशून् पुनर्नः पशून् देहि' इति । तेभ्योऽग्निः पशून् पुनरददात् ॥ २ ॥

तस्मै कमग्नी उपतिष्ठेत । अग्नी वै दातारौ । तावेवैतद्याचते । सायमुपतिष्ठेत । सायं हि देवा उपातिष्ठन्त । दत्तो हैवास्मा एतौ पशून्-य एवं विद्वानुपतिष्ठते ॥ ३ ॥

अथ यस्मान्नोपतिष्ठेत । उभये ह वा इदमग्रे सहासुः-देवाश्च, मनुष्याश्च । तद्यद्ध स्म मनुष्याणां

---

अथ सायङ्कालीनमग्न्युपस्थानं विधित्सुस्तदर्थमाख्यायिकामाह-अग्नौ हेति । एतच्च पुनराधानब्राह्मणे (श. प. २ कां. २ अ. ३ ब्रा. २-३ कं.) व्याख्यातम् । तत्र हि 'ऋतून् प्रविवेश,' अत्र तु 'रात्रिं प्रविवेश' इत्येतावान् विशेषः । तमेतदित्यादि । 'प्रत्यायत्याम्' आगामिन्यां 'रात्रौ' 'सायं'-काले 'तम्' अग्निं देवाः 'उपातिष्ठन्त' । उपस्थानप्रकारमाह-देहि न इति ॥ १ ॥ २ ॥

यस्मादेवमग्न्युपस्थानात् पशवो देवैर्लब्धाः, तस्माद् यजमानोऽपि तदुपस्थानं कुर्यादिति विधत्ते-तस्मा इति । तस्मै पशुप्राप्तिलक्षणाय फलाय । 'कम्' इति वाक्यपूरणे । अन्यन्निगदसिद्धम् । दत्तो हैवेति । य एवं साय-मग्नी उपतिष्ठेतैव तस्मै यजमानाय तावग्नी अभिमतं फलं प्रयच्छत इत्यर्थः । एवमुपस्थानविधिः ॥ ३ ॥

एवँमुपस्थानं विधाय उपस्थानानुपस्थानपक्षौ पूर्वपक्षसिद्धान्तत्वेन प्रतिपादयति-अथ यस्मादिति । यस्मात्

---

१-सायमाहुत्याः २हुतायां यजमानोऽग्नी उपतिष्ठते व्यात्सप्रेण । इति का. श्रौ. सू. ४ । २७४ ।=उपप्रयंत=३=११= इत्यादि=परिते=३=३६ इत्यंतं=व्यात्सप्रोपस्थानं=बृहदुपस्थानं वा । २-'वाक्यप्रतिपूरणे' इति क. । ३-'अथोपस्थानदोषपरौ पूर्वपक्षौ सिद्धान्तत्वेन'-इति क. ।

ऽइदं वै नो नास्तीदं नोऽस्त्विति ते तस्याऽएव याच्ञायै द्वेषेण देवास्तिरोभूता नेद्धिनसानि नेद्द्वेष्योऽसानीति तस्मान्नोपतिष्ठेत ॥ ४ ॥

( ता ) अथ यस्माद्दुपैव तिष्ठेत । यज्ञो वै देवानामाशीर्य्यजमानस्य तद्वाऽएष ऽएव यज्ञो यदाहुतिराशीरेव यजमानस्य तद्यदेवास्यात्र तदेवैतदुपतिष्ठमानः कुरुते तस्माद्दुपैव तिष्ठेत ॥ ५ ॥

( ता ) अथ यस्मान्नोपतिष्ठेत । यो वै ब्राह्मणं वाशꣳसमानोऽनुचरति क्षत्रियं वाऽयं मे दास्यत्ययं मे गृहान्करिष्यतीति यो वै तं वाद्येन वा कर्म्मणा वाभिरिराधयिषति तस्मै वै स देयं मन्यतेऽथ य आह किं नु त्वं ममासि यो मे न ददासीतीश्वर ऽएनं द्वेष्टोरीश्वरो निर्व्वेदं गन्तोस्तस्मान्नोपतिष्ठेतैतदित्त्वेवैष ऽएतं याचते यदिन्धे यज्जुहोति तस्मान्नोपतिष्ठेत ॥ ६ ॥

---

न भवति—तद्ध स्म देवान् याचन्ते—' इदं वै नो नास्तीदं नोऽस्तु ' इति । ते तस्या एव याच्ञायै द्वेषेण देवास्तिरोभूताः—' नेद्धिनसानि, नेद्द्वेष्योऽसानि ' इति । तस्मान्नोपतिष्ठेत ॥ ४ ॥

अथ यस्माद्दुपैव तिष्ठेत । यज्ञो वै देवानामाशीर्यजमानस्य । तद्वा एष एव यज्ञो यदाहुतिः । आशीरेव यजमानस्य तद्—यदेवास्यात्र । तदेवैतदुपतिष्ठमानः कुरुते । तस्माद्दुपैव तिष्ठेत ॥ ५ ॥

अथ यस्मान्नोपतिष्ठेत। यो वै ब्राह्मणं वाशंसमानोऽनुचरति, क्षत्रियं वा—अयं मे दास्यति, अयं मे गृहान् करिष्यतीति । यो वै तं वाद्येन वा, कर्मणा वा अभिरिराधयिषति । तस्मै वै स देयं मन्यते। अथ य आह—किं नु त्वं ममासि, यो मे न ददासीति । ईश्वर एनं द्वेष्टोः, ईश्वरो निर्वेदं गन्तोः । तस्मान्नोपतिष्ठेत । एतदित्त्वेवैष एतं याचते—यदिन्धे, यज्जुहोति, तस्मान्नोपतिष्ठेत ॥ ६ ॥

---

अग्न्युपस्थानं न कर्त्तव्यम् , तत्कारणमुच्यते । देवाः खलु पुरा मनुष्यैः सार्द्धमिह लोके निवसन्तः तद्याचनेन पीडिताः सन्तस्तिरोभूताः, अतोऽग्निरपि उपस्थानेन याच्यमानस्तिरोभवति, याचितफलस्याप्रदानेन नैव यजमानं ' हिनसानि, ' अत एव द्वेष्योऽपि न भवानीत्यनेनाभिप्रायेणेत्यर्थः । यस्मादेवं तस्मान्नोपस्थेयोऽग्निरिति पूर्वपक्षः ॥ ४ ॥

**अथ यस्मादि**त्यादि । यस्मात् कारणादग्न्युपस्थानं कर्त्तव्यम् तदुच्यते—' देवानां ' सम्बन्धी यो ' यज्ञः, ' स हि यजमानस्य ' आशीः '—फलप्रार्थनरूपः; ' तत् ' तथा सति यैषाऽग्निहोत्राहुतिः ' एष एव यज्ञः ' सैव यजमानस्याशीः । **तद्यदे**वेत्यादि । यजमानस्य यत्, तदाशीरूपं फलम्; तदेवास्मिन्नग्निहोत्रेऽग्निमुपतिष्ठमानः कुरुत इत्यर्थः ॥ ५ ॥

पुनरप्यनुपस्थानपक्षं प्रकारान्तरेण प्रतिपादयति—**अथ यस्मादि**त्यादिना । **यो वै ब्राह्मणमि**त्यादि । ब्राह्मणक्षत्रिययोरन्यतरमाशंसमानः फलाभिलाषी पुरुषः ' अनुचरति ' अनुवर्त्तते । तस्याभिप्रायमाह—**अयं म**

---

१—न वा विहितप्रतिषिद्धत्वाद्विकल्पः । का. श्रौ. सू. ४ । २७५.

(ता) अथ यस्माद्दुपैव तिष्ठेत।(तो) उत वै याचन्दातारं लभतऽएवोतो भर्त्ता भार्य्यं नानुबुध्यते स यदैवाह भार्य्यो वै तेऽस्मि बिभृहि मेत्यथैनं व्वेदाथैनं भार्य्यं मन्यते तस्माद्दुपैव तिष्ठेतेदमित्तु समस्तं यस्मादुपतिष्ठेत ॥ ७ ॥

प्रजापतिर्व्वाऽ एष भूत्वा। यावत ऽईष्टे यावदेनमनु तस्य रेतः सिञ्चति यदग्निहोत्रं जुहोतीदमेवैतत्सर्व्वमुपतिष्ठमानोऽनुविकरोतीदᳫँ सर्व्वमनुप्रजनयति ॥ ८ ॥

---

अथ यस्माद्दुपैव तिष्ठेत। उत वै याचन्दातारं लभत एव, उतो भर्त्ता भार्य्यं नानुबुध्यते। स यदैवाह–'भार्य्यो वै तेऽस्मि, बिभृहि मा' इति। अथैनं वेद, अथैनं भार्य्यं मन्यते। तस्माद्दुपैव तिष्ठेत–इदमित्तु समस्तम्। यस्माद्दुपतिष्ठेत ॥ ७ ॥

प्रजापतिर्वा एष भूत्वा–यावत ईष्टे, यावदेनमनु तस्य रेतः सिञ्चति–यदग्निहोत्रं जुहोति–इदमेवैतत् सर्वमुपतिष्ठमानोऽनुविकरोति, इदं सर्वमनु प्रजनयति ॥ ८ ॥

---

इति। यश्चैवमनुचरति पुरुषः, तं ब्राह्मणादिं 'वाचेन' वदनीयेन स्तुतिशब्देन, 'कर्मणा वा' परिचरणलक्षणेन 'अभिरिराधयिषति' अभिराधयितुं सेवितुमिच्छति 'तस्मै' पुरुषायैव 'सः' ब्राह्मणादिः प्रभुः धनं देयं दातव्यं 'मन्यते'। यस्त्वेवं निष्ठुरं भाषते, सः 'एनं' ब्राह्मणादिं प्रभुं 'द्वेष्टोः' (पा. सू. ३। ४। १३) विद्वेषणं कर्त्तुम् 'ईश्वरः' समर्थः स्यात्, तथा 'निर्वेदं' मनस्तापं 'गन्तोः' गन्तुम् 'ईश्वरः' स्यात्। निष्ठुरभाषणप्रकारमाह–**किं न्विति**। हे देवदत्त! यस्त्वं मह्यं न ददासि, स त्वं मम किं चासि? न किञ्चिदपि भवसि, त्वया किं प्रयोजनमित्यर्थः। एवं समन्त्रकहोमेनाग्नेराराधनमेव कार्यं, तदुपस्थानन्तु फलप्रार्थनरूपत्वेन निष्ठुरभाषणवदपराधहेतुरिति न कर्त्तव्यमित्याह–**एतदिति**। होमसमिन्धनाभ्यामग्निं प्राप्य पुनरुपस्थानेनैव याचते, याचनं चायुक्तमित्यनुपस्थानपक्षो ज्यायानित्यर्थः (तै. सं. १ कां. ५ प्र. ९ अ. ६–७ खं.) ॥ ६ ॥

**अथ यस्मादित्यादि**। लोके हि 'यावत्' पुरुषो 'दातारं' प्राप्नोति, स च 'भर्त्ता' पोषकः प्रभुः 'भार्य्यं' पोष्यं याचकं स्वतो 'नानुबुध्यते', 'सः' चैव याचकः एवम् 'आह' विज्ञापयति–हे स्वामिन्! अहं 'ते' त्वया 'भार्यः' पोष्यः 'अस्मि', 'मा' मां 'बिभृहि' पोषय 'इति'। एवं विज्ञापनानन्तरमेव 'एनं' याचकं पुरुषं 'वेद' जानाति। अनन्तरञ्च 'एनं' 'भार्यं' पोष्यं 'मन्यते' तस्मात् ऋग्विधानरूपं स्वामिभूतस्याग्नेरुपस्थानं न दोषाय किञ्चित्। 'इदमित्' इदमेव 'समस्तं', सम्पूर्णमित्यर्थः ॥ ७ ॥

यस्माच्चान्यस्मात् कारणात् अग्न्युपस्थानमवश्यं कर्त्तव्यं तदुच्यते–**प्रजापतिर्वा** इति। अग्निहोत्रहोमो हि रेतःसेकस्थानीयः; गर्भाशये निषिक्तस्य रेतसः हस्तपादादिमत्त्वेन यद्विशिष्टरूपकरणम्, तदग्न्युपस्थानसाध्यम्। अतोऽग्निमुपतिष्ठमानो यजमानः सर्वमिदं निषिक्तं विशिष्टरूपं कुर्वन् 'अनुप्रजनयति'. अनुक्रमेणोत्पादयति। तस्मादवश्यमग्न्युपस्थानं कर्त्तव्यमित्यर्थः ॥ ८ ॥

---

१–एतदेवोपस्थानं वात्सप्रोपस्थानमुच्यते। उपप्रयन्तोऽध्वरमित्यारभ्य परि ते दूडभ इत्यन्तं वात्सप्रोपस्थानम्। इति याज्ञिकदेवोक्तेः। तत्र च वत्सप्रीनामार्षिणा दृष्टं सूक्तं वात्सप्रम्, तदीयत्वं एवास्योपस्थानस्य मन्त्रा इति बीजम्।

स वा ऽउपवत्या प्रतिपद्यते । (त॰) इयं वा ऽउप द्वयेनेयमुप यद्धीदं किञ्च जायतेऽस्यां तदुपजायतेऽथ यन्न्यृच्छत्यस्यामेव तदुपोप्यते तदह्ना रात्र्या भूयोभूय ऽएवाक्षय्यं भवति तदक्षय्येणैवैतद्भूम्ना प्रतिपद्यते ॥ ९ ॥

स ऽआह । (हो) उपप्रयन्तोऽअध्वरमित्यध्वरो वै यज्ञ ऽउपप्रयन्तो यज्ञमित्येवैतदाह मन्त्रं व्वोचेमाग्नयऽइति मन्त्रमु ह्यस्माऽएतद्वक्ष्यन्भवत्यारे ऽअस्मे च शृण्वतऽइति यद्यप्यस्मदारकादस्यथ नऽ एतच्छृण्वेवेवमेवैतन्मन्यस्वेत्येवैतदाह ॥ १० ॥

(हो) अग्निर्मूर्द्धा दिवः । ककुत्पतिः पृथिव्या ऽअयम् ॥ अपाᳬ रेताᳬसि जिन्वतीत्यन्वेव धावति तद्यथा ब्रुवन्कल्याणं व्वदेदामुष्यायणो वै त्वमस्यलं वै त्वमेतस्माऽअसीत्येवमेषा ॥ ११ ॥

---

स वा उपवत्या प्रतिपद्यते–इयं वा उप द्वयेनेयमुप । यद्धीदं किञ्च जायते–अस्यां तदुपजायते–अथ यत् न्यृच्छति–अस्यामेव तदुपोप्यते । तदह्ना रात्र्या भूयो–भूय एवाक्षय्यं भवति, तदक्षय्येणैवैतद् भूम्ना प्रतिपद्यते ॥ ९ ॥

अथ बृहदुपस्थानम् ।

स आह । ( १ ) " उपप्रयन्तो अध्वरम् "–इति ( वा. सं. ३ । ११ ) । अध्वरो वै यज्ञः । उपप्रयन्तो यज्ञमित्येवैतदाह । " मन्त्रं वोचेमाग्नये "–इति ( वा. सं. ३ । ११ ) । मन्त्रमु ह्यस्मा एतद्वक्ष्यन् भवति । " आरे अस्मे च शृण्वते "–इति ( वा. सं. ३ । ११ ) यद्यप्यस्मदारकादसि अथ न एतच्छृण्वेव–एवमेवैतन्मन्यस्वेत्येवैतदाह ॥ १० ॥

( २ ) " अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपां रेतांसि जिन्वति "–

---

तत्र प्रथमाया ऋचो लिङ्गविशेषमुपन्यस्य प्रशंसति–**स वा** इति । ' उपवत्या ' उपशब्दयुक्तया ऋचा ( वा. सं. ३ । ११ ) । **इयं वा** इत्यादि । ' इयं वा उप ' योऽयमुपेत्युपसर्गः, इयं भूमिरेव सः ' द्वयेन ' द्विप्रकारेण ' इयं ' भूमिः उपशब्दवाच्या । तत्प्रकारद्वयं दर्शयति–**यद्धीदमिति** । ' यत् ' किञ्च जायमानं, ' तत् ' सर्वम् ' अस्याम् ' ' उपजायते ' । ' यत् ' ' न्यृच्छति ' नितरामार्त्तिं प्राप्नोति, ' तत् ' अपि ' अस्याम् ' एव ' उपोप्यते ' निर्लीयते । अतो जायमानेन लीयमानेन चेयं भूमिरुपगम्यत इति उपशब्दवाच्या या इत्यर्थः । यत्रेदं जायमानं लीयमानं यत्तद्भूय एव अहोरात्राभ्याम् अक्षय्यं भवति तत्सम्बद्धोपशब्दयुक्तः प्रतिपद्यमानः क्षयरहितेनैव भूम्ना ' प्रतिपद्यते ' उपस्थानं प्रारभ्यत[1] इत्यर्थः ॥ ९ ॥

क्रमेणोपस्थानमन्त्रान् विविदिषुस्तावदुपवतीमृचं विधाय प्रशंसति–**स आहेति** । **अध्वरो वै यज्ञ** इत्यादि । सुगमम् । द्वितीयं पादमनूद्य तत्र मन्त्रशब्दो वक्ष्यमाणमन्त्रपर इति व्याचष्टे–**मन्त्रमु ह्यस्मा** इति । **आरे अस्मे** चेति । अस्मच्छब्दात् पञ्चम्यर्थे शेआदेश इति व्याचष्टे–**अस्मदारकादिति** ॥ १० ॥

अथ द्वितीयामृचमग्न्युपस्थाने वक्तव्यत्वेन सिद्धवदनूद्य तात्पर्यमाह–**अग्निर्मूर्द्धेति** । **अन्वेव धावतीति** । अनुधावति अनुसृत्य[2] प्रशंसतीति यावत् । एतत् सदृष्टान्तमुपपादयति–**तद्यथेति** ॥ ११ ॥

---

१–' प्रारभते ' इति क० । २– अनुसरति ' इति पाठः ।

(ग्राथै) अथैन्द्राग्नी । (ग्न्यु) उभा वामिन्द्राग्नीऽआहुवध्याऽउभा राधसः सह मादयध्यै॥ उभा दातारावि षाᳬ रयीणामुभा व्वाजस्य सातये हुवे वामि-त्येष वाऽइन्द्रो य एष तपति स यदस्तमेति तदाहवनीयं प्रविशति तदुभावे-वैतत्सह सन्ता ऽउपतिष्ठतऽउभौ मे सह सन्तौ दत्तमिति तस्मादैन्द्राग्नी १२

अयं ते योनिर्ऋत्वियः । (यो) यतो जातोऽअरोचथाः ॥ तं जानन्नग्नऽ-आरोहाथा नो व्वर्द्धया रयिमिति पुष्टं वै रयिर्भूयो भूयऽएव न इदं पुष्टं कुर्व्वित्येवैतदाह ॥ १३ ॥

(हा) अयमिह प्रथमः । (मो) धायि धातृभिर्होता यजिष्ठोऽअध्वरे-ष्वीड्यः ॥ यमप्नवानो भृगवो व्विरुरुचुर्व्वनेषु चित्रं व्विभ्वं व्विशेव्विशऽ-इत्यन्वेव धावति तद्यथा याचन्कल्याणं व्वदेदामुष्यायणो वै त्वमस्यलं वै त्वमेतस्माऽअसीत्येवमेषा यथोऽएवैष तथोऽएवैनमेतदाह यदाह व्विभ्वं व्विशेव्विशऽइति व्विभूर्ह्येष व्विशे व्विशे ॥ १४ ॥

---

इति ( वा. सं. ३ । १२ ) । अन्वेव धावति । तद्-यथा याचन् कल्याणं वदेद् 'आमुष्यायणो वै त्वमसि, अलं वै त्वमेतस्मा असि ' इत्येवमेषा ॥ ११ ॥

अथैन्द्राग्नी ( ३ ) "उभा वामिन्द्राग्नी आहुवध्या उभा राधसः सह मादयध्यै । उभा दातारावि षाᳬ रयीणाम् । उभा वाजस्य सातये हुवे वाम् "—इति (वा०सं०३ ।१३) । एष वा इन्द्रो य एष तपति । स यदस्तमेति तदाहवनीयं प्रविशति । तदुभावेवैतत् सह सन्ता उपतिष्ठते 'उभौ मे सह सन्तौ दत्ताम् ' इति । तस्मादैन्द्राग्नी ॥ १२ ॥

(४)"अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः। तं जानन्नग्न आरोहाथा नो वर्द्धया रयिम्"—इति (वा.सं.३।१४) । पुष्टं वै रयिः । भूयो—भूय एव न इदं पुष्टं कुरु—इत्येवैतदाह ॥१३॥

(५) " अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः । यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशे-विशे"—इति ( वा. सं. ३।१५ ) । अन्वेव धावति तद्-यथा याचन् कल्याणं वदेत्—आमुष्यायणो वै त्वमसि,अलं वै त्वमेतस्मा असि इति—एवमेषा । यथो एवैष तथो एवैनमेतदाह—यदाह—' विभ्वं विशेविशे ' इति । विभूर्ह्येष विशे—विशे ॥ १४ ॥

---

अथैन्द्राग्नीति । अग्निर्मूर्द्धेत्यनन्तरम उभा वाम्—इतीन्द्राग्निदेवताका ऋक् अग्न्युपस्थाने प्रयोक्तव्येत्यर्थः । अस्यामृचि 'इन्द्राग्नी'—शब्दस्य विवक्षितमर्थमाह—एष वा इन्द्र इति ॥ १२ ॥

चतुर्थीमृचं पठित्वा स्तौति—अयं त इति । पुष्टं वा इति । यदत्र रयिशब्दवाच्यम्, तत् पुष्टिहेतुभूतं धनम् । भूयो भूय एवेत्यादि, मन्त्रगत—' वर्द्धय '—पदाभिप्रायकथनम् ॥ १३ ॥

अथ तस्मिन्नुपस्थाने पञ्चमीमृचं विधाय तात्पर्यं कथयति—अयमिहेति । विभूर्ह्येष इति । 'विशे-विशे' सर्वस्यै प्रजायै ' एषः ' अग्निः ' विभूः ' तत्तदभीष्टप्रदाने समर्थ इत्यर्थः ॥ १४ ॥

(शे॒ऽअ) अस्य॒ प्रत्नाम् । (मु) अनु॒द्युत॒ꣳ शु॒क्रं दु॑दुह्रे॒ऽअह्र॑यः । पय॑: सह॒स्रसामृ॑षिमि॒ति परमा॒ वा॒ऽएषा॒ सनी॑नां॒ यत्सहस्रसनिस्त॒देत॒स्यैवा॒वरु॑द्ध्यै त॒स्मादा॑ह॒ पय॑: सहस्रसामृ॒षिमि॒ति ॥ १९ ॥

त॒देत॒त्समाहा॒र्य्यꣳ षड्ऋचम् । तस्योपवती प्रथमा॒ प्रत्न॒वत्यु॒त्तमा॒वोचाम त॒द्यस्मा॒दु॒पवत्य॒थाद॒ ए॒व प्रत्नꣳ या॒वन्तो॒ ह्येव सना॒ग्रे दे॒वास्ता॒वन्त ए॒व दे॒वास्त॒स्मादद॒: प्रत्नं त॒दिमे॒ऽए॒वा॒न्तरेण स॒र्व्वे का॒मास्ते॒ऽअस्मा॒ऽइमे॒ सञ्जानाने॒ स॒र्व्वान्का॒मान्त्स॒न्नमतः ॥ १६ ॥

स वै त्रि॒: प्रथमां॒ ज॒पति । त्रि॒रुत्त॒मां त्रि॒वृत्प्रायणा॒ हि॒ य॒ज्ञास्त्रि॒वृ॒दुद॒यनास्त॒स्मात्त्रि॒: प्रथमां॒ ज॒पति त्रि॒रुत्तमाम् ॥ १७ ॥

---

"अस्य प्रत्नामनुद्युतम्, शुक्रं दुदुहे अह्रयः। पयः सहस्रसामृषिम्"–इति (वा.सं.३।१६) परमा वा एषा सनीनां यत्–सहस्रसनिः। तदेतस्यैवावरुध्यै तस्मादाह पयः सहस्रसामृषिमिति ॥१९॥

तदेतत् समाहार्य्यं षड्ऋचम् । तस्योपवती प्रथमा, प्रत्नवत्युत्तमा । अवोचाम तद्–यस्मादुपवती । अथाद एव प्रत्नम् । यावन्तो ह्येव सनाग्रे देवाः–तावन्त एव देवाः । तस्माददः प्रत्नम् । तदिमे एवान्तरेण सर्वे कामाः–ते अस्मा इमे सञ्जानाने सर्वान् कामान्त्सन्नमतः ॥ १६ ॥

स वै त्रिः प्रथमां जपति, त्रिरुत्तमाम् । त्रिवृत्–प्रायणा हि यज्ञाः, त्रिवृदुदयनाः । तस्मात् त्रिः प्रथमां जपति, त्रिरुत्तमाम् ॥ १७ ॥

---

षष्ठीमृचं विधाय प्रशंसति–**अस्येति । परमा वा एषा** इति । 'सनीनां' दानानां मध्ये 'यत्' 'सहस्रसनिः' सहस्रसङ्ख्याकस्य धनस्य दानं 'एषा' 'परमा' सर्वोत्कृष्टा सनिः । एतांश्च षड्ऋचो मन्त्रकाण्डे एव व्याख्याता इति नात्र पुनर्व्याख्यायन्ते ॥ १९ ॥

अथैता ऋचः समूहीकृत्य प्रथमोत्तमयोर्लिङ्गविशेषोपजीवनेन स्तौति–**तदेतदि**ति । 'समाहार्यम्' एकैकामृचं प्रदेशान्तरे पठित्वा समाहृत्य समुदायीकृतमेतत् 'षड्ऋचं' सूक्तम् । 'तस्य' 'प्रथमा' 'उपवती' 'उत्तमा' तु 'प्रत्नवती' प्रत्नशब्दयुक्ता । तत्रोपवती भूम्यात्मिकेत्येतत् प्रागेव 'अवोचाम' नेतः परं तत् प्रतिपाद्यत इत्यर्थः । **अथाद एवे**ति । 'अदः' द्युलोक एव 'प्रत्नम्' । तस्य प्रत्नशब्दाभिधेयतामुपपादयति–**यावन्त** इति । 'सना' इति निपातः पुरेत्यस्यार्थे । 'यावन्त एव' हि 'अग्रे' 'सना' सनातनाः 'देवाः,' 'तावन्त एव देवाः' इदानीमपि; 'तस्मात्' तदाश्रयभूता द्यौः पुरातनत्ववाचिना प्रत्नशब्देनोच्यत इत्यर्थः । **तदिमे एवे**ति । 'इमे' द्यावापृथिव्यौ 'अन्तरेण' "**अग्निर्मूर्द्धा**"–इत्यादिमन्त्रप्रतिपाद्याः 'सर्वे कामाः' अवस्थिताः । **ते अस्मा** इत्यादि, स्पष्टम् ॥ १६ ॥

प्रथमोत्तमयोस्त्रिर्जपं विधाय प्रशंसति–**स वै त्रिः प्रथमां जपती**ति । अस्य षड्ऋचस्य सूक्तस्य 'उपप्रयन्त'–इतीयं प्रथमा, 'अस्य प्रत्नाम्'–इतीयमुत्तमा; उपस्थानकाले तयोस्त्रिर्जपः[3] कार्यः । यतः 'यज्ञाः' 'त्रिवृ-

---

१–कण्वसंहिताव्याख्यानावसर इति बोध्यम् । २–'प्रत्नशब्दनामधेयताम्' इति क. । ३–तिस्रस्त्रिरुपप्रयंतोऽस्य प्रत्नां परिते चित्रावसविति च । का. श्रौ. सू. ४ । २७६ । प्रक्रमादेव त्रित्वसिद्धेस्तिसृग्रहणात्स्वस्थानस्थितानामेव त्रिरावृत्तिः । चित्रावसविति यजुस्त्रिरेव जपेदिति कर्कः ।

यद्ध वाऽअत्राग्निहोत्रं जुह्वत् । ( द्वा ) व्वाचेन वा कर्मणा वा मिथ्या करोत्यात्मनस्तदवद्यत्यायुषो वा व्वर्चसो वा प्रजायै वा ॥ १८ ॥

तदु खलु तनूपा ऽअग्नेऽसि । तन्वं मे पाह्यायुर्दाऽअग्नेऽस्यायुर्मे देहि व्वर्चोदा ऽअग्नेऽसि व्वर्चो मे देहि ॥ अग्ने यन्मे तन्वा ऊनं तन्मऽआपृणेति ॥ १९ ॥

यद्ध वाऽअत्राग्निहोत्रं जुह्वत् । ( द्वा ) व्वाचेन वा कर्मणा वा मिथ्या करोत्यात्मनस्तदवद्यत्यायुषो वा व्वर्चसो वा प्रजायै वा तन्मे पुनराप्याययेत्येवैतदाह तथो हास्यैतत्पुनराप्यायते ॥ २० ॥

( तऽइ ) इन्धानास्त्वा । शतꣳ हिमा द्युमन्तꣳ समिधीमहीति शतं व्वर्षाणि जीव्यास्मेत्येवैतदाह तावत्त्वा महान्तꣳ समिधीमहीति यदाह

---

यद्ध वा अत्राग्निहोत्रं जुह्वत्—वाचेन वा कर्मणा वा मिथ्या करोति,—आत्मनस्तदवद्यति—आयुषो वा, वर्चसो वा, प्रजायै वा ॥ १८ ॥

तदु खलु—" तनूपा अग्नेऽसि—तन्वं मे पाहि, आयुर्दा अग्नेऽसि—आयुर्मे देहि, वर्चोदा अग्नेऽसि—वर्चो मे देहि । अग्ने यन्मे तन्वा ऊनं तन्म आपृण "— इति ( वा० सं० ३ । १७ ) इति ॥ १९ ॥

यद्ध वा अत्राग्निहोत्रं जुह्वत्—वाचेन वा कर्मणा वा मिथ्या करोति आत्मनस्तदवद्यति—आयुषो वा, वर्चसो वा, प्रजायै वा—तन्मे पुनराप्यायय—इत्येवैतदाह । तथो हास्यैतत् पुनराप्यायते ॥ २० ॥

" इन्धानास्त्वा शतं हिमा द्युमन्तं समिधीमहि "—इति ( वा० सं० ३ । १८ )। शतं वर्षाणि जीव्यास्म—इत्येवैतदाह । तावत् त्वा महान्तं समिधीमहीति । यदाह—द्युमन्तं समिधीमहीति ।

---

त्प्रायणाः ' त्रिवृत्प्रारम्भाः, निर्वापप्रोक्षणसामिधेन्यनुवचनादिषु तथा त्रिवृदुदयनास्त्रिवृत्समाप्ताया: आज्यप्रउगादि शस्त्रसमाप्तिषु परिधानीयाया: त्रिरावृत्तिदर्शनादित्यर्थः ॥ १७ ॥

" **तनूपा अग्नेऽसि** "—इत्यादिमन्त्रैराहवनीयोपस्थानं विधित्सुस्तन्निवर्तुं (?) दोषमुपन्यसति—**यद्ध वा** इति । अग्निहोत्रहोमं कुर्वन् ' वाचेन वा ' व्यवहारसाध्येन मन्त्रोच्चारणेन, शरीरसाध्येन ' कर्म्मणा वा, ' ' यत् ' ' मिथ्या करोति ' अन्यथाऽनुतिष्ठति, ' तत् ' तेन 'आत्मनः' यजमानस्य ' आयुषः ' जीवनस्य, ' वर्चसः ' तेजसः, ' प्रजायै ' प्रजायाश्च ' अवद्यति ' खण्डयति । ' वा '—शब्दश्चार्थे ॥ १८ ॥

अथैतद्दोषपरिहाराय तदुचितमन्त्रकरणकोपस्थानमाह—**तदु खल्विति** । ' तत् ' तत्र खलु दोषे सतीत्यर्थः ॥ १९ ॥

**यद्ध वा** इत्याद्युक्तार्थम् । **तन्म** इत्यादि । यदेतन्मिथ्याकरणेनायुरित्यादि खण्डितम्, हे अग्ने ! ' तत् ' तच्च मदीयम् ' पुनः ' ' आप्यायय ' वर्द्धयेति " तन्म आ पृण "—इति मन्त्रभागस्य व्याख्यानम् ॥ २० ॥

**इन्धानास्त्वे**त्यादि । " शतꣳ हिमाः "—इत्यस्य तात्पर्यमाह **शतं वर्षाणीति** । शतसंवत्सरजीवनवन्तो

---

१—' तन्निवर्तयितुम् ' इति पाठो युक्तः स्यात् ।

द्युमन्तꣳ समिधीमहीति वयस्वन्तो वयस्कृतꣳ सहस्वन्तः सहस्कृतमिति वयस्वन्तो वयं भूयास्म वयस्कृत्त्वं भूयाऽइत्येवैतदाह सहस्वन्तो वयं भूयास्म सहस्कृत्त्वं भूयाऽइत्येवैतदाहाग्ने सपत्नदम्भनमदब्धासोऽअदाभ्यमिति त्वया वयꣳ सपत्नान्पापीयसः क्रियास्मेत्येवैतदाह ॥ २१ ॥

चित्रावसो स्वस्ति ते पारमशीयेति । त्रिरेतज्जपति रात्रिर्वै चित्रावसुः सा हीयꣳ सङ्गृह्येव चित्राणि वसति तस्मान्नारकाञ्चित्रं ददृशे ॥ २२ ॥

( श ऽ ) एतेनो ह स्म वाऽऋषयः । (यो) रात्रेः स्वस्ति पारꣳ समश्नु-

---

" वयस्वन्तो वयस्कृतम्, सहस्वन्तः सहस्कृतम् "—इति ( वा० सं० ३ । १८ ) । वयस्वन्तो वयं भूयास्म, वयस्कृत् त्वं भूयाः—इत्येवैतदाह । सहस्वन्तो वयं भूयास्म, सहस्कृत् त्वं भूया इत्येवैतदाह । " अग्ने सपत्नदम्भनमदब्धासो अदाभ्यम् "—इति ( वा० सं० ३।१८ )। त्वया वयं सपत्नान् पापीयसः क्रियास्म—इत्येवैतदाह ॥ २१ ॥

" चित्रावसो स्वस्ति ते पारमशीय " इति ( वा. सं. ३।१८ ) । त्रिरेतज्जपति । रात्रिर्वै चित्रावसुः । सा हीयं सङ्गृह्येव चित्राणि वसति । तस्मान्नारकाञ्चित्रं ददृशे ॥ २२ ॥

एतेन ह स्म वा ऋषयो रात्रेः स्वस्ति पारं समश्नुवते, एतेनो ह स्मैनान् रात्रेर्नाष्ट्रा रक्षांसि न

---

भूयास्मेत्यर्थः । तैत्तिरीयकेऽप्येतद् विशदीकृतम्—" शतꣳहिमा इत्याह शतं त्वा हेमन्तानिन्धिषीयेति वावैतदाह" इति ( तै० सं० १।५।८।५। )। द्युमन्तमिति मन्त्रपरभागस्यार्थमाह—तावत्त्वेति । ' तावत् ' शतसंवत्सरजीवनावधि, हे अग्ने ! त्वां ' द्युमन्तं ' दीप्तिमन्तं ' महान्तं ' ' समिधीमहि ', सन्दीपयेमेत्यर्थः । **वयस्वन्तो वयस्कृत**मित्यादि । वय इत्यन्ननाम । ( निघ० २ । ७ । ७ ) प्रभूतान्नयुक्ता भूत्वा वयसोऽन्नस्य कर्तारं त्वामुपतिष्ठेमहि । एवं ' सहस्वन्तः '—इत्यत्रापि योजना । उभयत्र विशेषणद्वयमपि विधेयाभिप्रायमिति व्याचष्टे—**वयस्वन्तो वय**मिति । वयः अन्नं करोतीति वयस्कृत्, सहः शत्रूणामभिभवनं तद्वन्तः सहस्वन्तः, तादृशं सहः शत्रुविषयकमभिभवनं करोतीति सहस्कृत् । **अग्ने सपत्नदंभन**मित्यादि । सपत्नो दम्यते हिंस्यतेऽनेनेति सपत्नदम्भनोऽग्निः । तथा च ' त्वया ' ' वयं ' सपत्नान् ' शत्रून् ' पापीयसः ' अतिशयेन निकृष्टान् ' क्रियास्म ' करवामेति विशेषणतात्पर्यकथनम् ॥ २१ ॥

" **चित्रावसो** "—इत्यादिमन्त्रस्य त्रिर्जपं विधत्ते ( का. श्रौ. सू. ४ । २७६ )—**चित्रेति** । **रात्रिर्वा** इत्यादि । ' हि ' यस्मात् ' सा इयं रात्रिः ' ग्रहनक्षत्रादीनि ' चित्राणि ' ' संगृह्य इव वसति, ' ' तस्मात् ' ' चित्रावसुः ' रात्रेर्नामधेयम् । अत एव इदानीमपि रात्रौ नभसि ' तारकालक्षणं चित्रं ' ' ददृशे ' दृश्यते॥ २२॥

अस्य मन्त्रजपस्य प्रयोजनं वक्तुं पुरावृत्तमुदाहरति—**एतेनेति** । ' एतेन ' " चित्रावसो "—इति मन्त्रेण

---

१—मूले तु बहुषु पुस्तकेषु " तस्मान्नारकाञ्चित्रं ददृशे " इत्येव पाठोऽस्ति । भाष्ये तु " तारकालक्षणं चित्रं ददृशे, दृश्यते " इत्येव पाठोऽस्ति । तेन बहुमूलप्रतिपुस्तकस्थः " तस्मान्नारकाञ्चित्रं ददृशे " इत्येव मूले पाठस्तथैव स्थापितोऽस्ति । कस्मिन्नपि पुस्तकेऽन्यथा नैवास्ति पाठः ।

वत ऽएतेनो ह स्मैनाङ्गात्रेर्नाष्ट्रा रक्षाᳪंसि नु विन्दन्त्येतेनो ऽएवैष एतद्रात्रेः स्वस्ति पारᳪं समश्नुत ऽएतेनोऽएनᳪं रात्रेर्नाष्ट्रा रक्षाᳪंसि नु विन्दन्त्येतावन्नु तिष्ठञ्जपति ॥ २३ ॥

( त्य ) अथासीनः । सं त्वमग्ने सूर्य्यस्य वर्चसागथा ऽइति तद्यदस्तं यन्नादित्य ऽआहवनीयं प्रविशति तेनैतदाह समृषीणाᳪं स्तुतेनेति तद्य-दुपतिष्ठते तेनैतदाह संप्रियेण धाम्नेत्याहुतयो वाऽअस्य प्रियं धामाहुति-भिरेव तदाह समहमायुषा संवर्चसा संप्रजया सᳪं रायस्पोषेण ग्मिषी-येति यथा त्वमेतैः समगथा ऽएवमहमायुषा वर्चसा प्रजया रायस्पोषेणेति यद्भूम्नेति तदेवमहमेतैः सङ्गच्छा ऽइत्येवैतदाह ॥ २४ ॥

---

विन्दन्ति। एतेनो एवैष एतद् रात्रेः स्वस्ति पारं समश्नुते, एतेनो एनं रात्रेर्नाष्ट्रा रक्षांसि न विन्दन्ति। एतावन्नु तिष्ठन् जपति ॥ २३ ॥

अथासीनः । " सं त्वमग्ने सूर्य्यस्य वर्चसागथाः "-इति ( वा. सं. ३।१९ )। तद्यदस्तं यन्नादित्य आहवनीयं प्रविशति। तेनैतदाह " समृषीणां स्तुतेन "-( वा. सं. ३ । १९ ) इति । तद् यदुपतिष्ठते तेनैतदाह । "सं प्रियेण धाम्ना"-(वा. सं.३।१९)। आहुतयो वा अस्य प्रियं धाम । आहुतिभिरेव तदाह । " समहमायुषा सं वर्चसा सं प्रजया सं रायस्पोषेण ग्मिषीय "-( वा. सं. ३।१९ ) इति । यथा त्वमेतैः समगथाः-एवमहमायुषा वर्चसा प्रजया रायस्पोषेणेति । यद्भूम्नेति-तदेवमहमेतैः सङ्गच्छा-इत्येवैतदाह ॥ २४ ॥

---

' रात्रेः ' ' पारम् ' अवसानं ' स्वस्ति ' क्षेमेण ' समश्नुवते स्म ' सम्प्राप्नुवन् । तथा ' एनान्' ऋषीन् एतन्मन्त्रजपेनैव रात्रेः प्रीणनात् तत्सम्बन्धिनो राक्षसादयो ' न विन्दन्ति' 'नाविन्दन्'नालभन्त । इदानीन्तनस्यापि इमं मन्त्रमग्न्युपस्थाने जपतो यजमानस्य तत्फलमाह-**एतेनो एवेति** । **एतावन्निवति** । "उपप्रयन्त"-इत्यारभ्य " चित्रावसो"-इत्येतावत्पर्यन्तमाहवनीयस्य समीपे ' तिष्ठन् ' जपेत् ( का. श्रौ. सू. ४ । २७६ ) ॥ २३ ॥

**अथासीन** इति । ( का. श्रौ. सू. ४ । २७७ ) वक्ष्यमाणान् " **सं त्वमग्ने** "-इत्यादिकान् मन्त्रान् तत्रैवासीनो जपेदित्यर्थः । हे ' अग्ने ! त्वं सूर्यस्य ' ' वर्चसा ' तेजसा ' समगथाः ' सङ्गतवानसि ' इति ' प्रतीयमानमिमं मन्त्रार्थमुपपादयति-**तद् यदस्तं यन्निति** । 'अस्तं यन्' अस्तं गच्छन्नित्यर्थः। सूर्यस्य रात्रावाहवनीयप्रवेशः " **अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा** "-इति होममन्त्रार्थकथनप्रस्तावे प्रतिपादितः । **समृषीणा**-मित्यादि । ' ऋषीणां' सम्बन्धि यत् ' स्तुतं ' स्तोत्रं तेन सङ्गतवानसीति मन्त्रवाक्यार्थः ।

एतर्हि प्रकृताग्न्युपस्थानाभिप्रायमाह-**तद्यदिति** । **आहुतयो वा अस्येति** । ' अस्य ' अग्नेः आज्यदधिक्षीरादिद्रव्यसाध्याः ' आहुतयो वा ' आहुतय एव ' प्रियं धाम ' तेज्ज्योतिर्मयं शरीरम् । तथा चाहुतिभिरेव

---

१-' तेजोमयम् ' इति पाठः ।

(ह्वा) अथ गामभ्यैति । (त्यु) अन्ध स्थान्धो वो भक्षीय मह स्थ महो वो भक्षीयेति यानि वो वीर्य्याणि यानि वो महाᳫँसि तानि वो भक्षीयेत्येवैतदाहोर्ज स्थोर्जं वो भक्षीयेति रस स्थ रसं वो भक्षीयेत्येवैतदाह रायस्पोष स्थ रायस्पोषं वो भक्षीयेति भूमा स्थ भूमानं वो भक्षीयेत्येवैतदाह ॥ २९ ॥ [ शतम् ११०० ]

रेवती रमध्वमिति रेवन्तो हि पशवस्तस्मादाह रेवती रमध्वमित्यस्मिन्योनावस्मिन्गोष्ठेऽस्मिँल्लोकेऽस्मिन्क्षय ॥ इहैव स्त मापगातेत्यात्मनऽएवैतदाह मदेव मापगातेति ॥ २६ ॥

---

अथ गामभ्यैति–" अन्ध स्थान्धो वो भक्षीय मह स्थ महो वो भक्षीय "–इति (वा. सं. ३ । २० ) । यानि वो वीर्याणि, यानि वो महांसि, तानि वो भक्षीय–इत्येवैतदाह । " ऊर्जं स्थोर्जं वो भक्षीय"–इति ( वा. सं. ३ । २० ) । रस स्थ रसं वो भक्षीय–इत्येवैतदाह । "रायस्पोष स्थ रायस्पोषं वो भक्षीय "–इति ( वा० सं० ३ । २० ) । भूमा स्थ भूमानं वो भक्षीय–इत्येवैतदाह ॥ २९ ॥

" रेवती रमध्वम् "–इति (वा. सं. ३ । २१ ) । रेवन्तो हि पशवः । तस्मादाह रेवती रमध्वमिति । " अस्मिन्योनावस्मिन् गोष्ठेऽस्मिंल्लोकेऽस्मिन् क्षये । इहैव स्त मापगात "–इति ( वा. सं. ३ । २१ ) । आत्मन एवैतदाह–मदेव मापगातेति ॥ २६ ॥

---

सङ्गतवानसीत्यर्थः । समहमायुषेत्यादि । हे अग्ने ! यथा त्वमेतैरायुरादिभिः ' समगथाः ' सङ्गतवानसि । गमेर्लुङि " गातिस्था "–( पा. सू. २।४।७७ ) इति च्लेर्लुक् " अनुदात्तोपदेश "–( पा. सू. ६।४।३७ ) इत्यनुनासिकलोपः । एवम् 'अहम्' अपि एतैः सङ्गच्छेयेत्यर्थः । यद्भूम्नेति । 'रायस्पोषेण'–इत्यस्य व्याख्यानम् ' भूम्ना ' धनकनकादिबहुत्वेनेत्युक्ते यावानर्थो भवति, रायस्पोषेणेत्यनेन तावानर्थः प्रतिपाद्यत इत्यर्थः ॥ २४ ॥

अथ गामभ्यैतीति । अग्निहोत्रहोमार्थस्य पयसो दोग्ध्री या गौः, ताम् "अन्ध स्थान्धो वो भक्षीय"–इति मन्त्रेण अभिगच्छेदित्यर्थः । अन्धःशब्दोऽन्नवाची ( निरु. २ । ७ । १ । निरु. ९ । १ । १ ) तेन च तज्जनितं वीर्यं लक्ष्यत इति व्याचष्टे–यानि वो वीर्य्याणीति । हे गावः ! यूयम् 'अन्धः स्थ ' क्षीरान्नरूपा भवथ, अतस्तदुपभोगजनितानि 'वः' युष्मत्सम्बन्धीनि ' वीर्याणि ' ' महाᳫँसि ' तेजांसि, ' तानि ' ' भक्षीय ' सम्भजेयेत्यर्थः । रस स्थेति " ऊर्ज्ज बलप्राणनयोः "–( धा. पा. चु. प. १६ ) इत्यस्मात् धातोर्निष्पन्न ' ऊर्क् '–शब्दो बलकरं रसमाचष्ट इत्यभिप्रायः । भूमा स्थेति । ' रायस्पोष '–शब्दस्य भूमार्थत्वं प्रागाम्नातम्–" रायस्पोषेणेति यद् भूम्नेतीति "( श. प. ब्रा. २ कां. ३ अ. ४ ब्रा. २४ कं. ) ॥ २९ ॥

रेवती रमध्वमितीति । रेवन्तो हीत्यादि । ' रेवन्तः ' रयिमन्तः, पुत्रपौत्राद्यभिवृद्ध्या धनयुक्ताः पशवो

---

१–गां गच्छत्यंधस्थेति । इति का. श्रौ. सू. । ४ । २७८ । एतच्च सन्निधानात् कर्मांगभूतां गां प्रति गमनम् । सन्निहितप्रत्ययन्यायात् । एवं च सति गोपक्ष एवैतदुपस्थानं नान्यत्रेति कर्कः ।

( त्यु ) अथ गामभिमृशति। स ᳦ हितासि विश्वरूपीति विश्वरूपा ऽ इव हि पशवस्तस्मादाह विश्वरूपीत्यूर्जा माविश गौपत्येनेत्यूर्जेति यदाह रसेनेति तदाह गौपत्येनेति यदाह भूम्नेति तदाह ॥ २७ ॥

( द्वा ) अथ गार्हपत्यमभ्यैति। स गार्हपत्यमुपतिष्ठत उप त्वाग्ने दिवे दिवे दोषावस्तर्द्धिया वयम् ॥ नमो भरन्त ऽ एमसीति नम एवास्मा ऽ एतत्करोति यथैनं न हि ᳦ स्यात् ॥ २८ ॥

( द्रा ) राजन्तमध्वराणाम्। गोपामृतस्य दीदिविम् ॥ वर्द्धमान ᳦ स्वे दम ऽ इति स्वं वै त ऽ इदं यन्मम तन्नो भूयो-भूय ऽ एव कुर्वित्येवैतदाह ॥ २९ ॥

---

अथ गामभिमृशति-" संहितासि विश्वरूपी "-इति ( वा. सं. ३ । २२ )। विश्वरूपा इव हि पशवः। तस्मादाह-विश्वरूपीति। "ऊर्जा माविश गौपत्येन "-इति ( वा. सं. ३ । २२ ) ऊर्जेति यदाह-रसेनेति तदाह। गौपत्येनेति यदाह-भूम्नेति तदाह ॥ २७ ॥

अथ गार्हपत्यमभ्यैति। स गार्हपत्यमुपतिष्ठते-"उप त्वाग्ने दिवे दिवे दोषावस्तर्द्धिया वयम्। नमो भरन्त एमसि "-इति ( वा० सं० ३ । २२ )। नम एवास्मा एतत् करोति-यथैनं न हिंस्यात् ॥ २८ ॥

" राजन्तमध्वराणां गोपामृतस्य दीदिविम्। वर्द्धमानं स्वे दमे "-इति। ( वा० सं० ३ । २३ )। स्वं वै त इदं-यन्मम। तन्नो भूयो भूय एव कुर्वित्येवैतदाह ॥ २९ ॥

---

रयिमन्तः "रयेर्मतौ बहुलम्" ( पा. सू. ६।१।३४ वा. ) इति संप्रसारणम्। आत्मन एवेति। अस्मिन्निति मन्त्रगतेदंशब्देन सन्निहितवाचिना स्वसम्बद्धगृहगोष्ठानि विशेषेण ' आत्मनः ' एव ' स्वस्यैव एतत् फलमाशास्यत इत्यर्थः। हे गावः ! यूयम् ' इहैव ' मदीये गोष्ठादौ ' स्त ' भवत, ' मापगात ' मा अपगच्छतेति मन्त्रभागस्यार्थः। तत्रापगमनावधेरनुपादानात् तमुपन्यस्य योजयति-मदेवेति। मत्सकाशादेव मापगच्छतेत्यर्थः ॥२६॥

समन्त्रकं गोस्पर्शनं विधाय प्रशंसति-अथ गामिति। ' विश्वानि ' सर्वाणि, शुक्लकृष्णादीनि रूपाणि यस्याः सा विश्वरूपीति व्युत्पत्तिमभिप्रेत्य व्याचष्टे-विश्वरूपा इव हीति ॥ २७ ॥

एवमाहवनीयस्य समन्त्रकमुपस्थानं सप्रपञ्चं विधाय, गार्हपत्यस्य तद् विधत्ते-अथ गार्हपत्यमभ्यैतीत्यादिना। नम एवास्मा इति। " नमो भरन्तः "-इति नमस्कारस्य सम्पाद्यत्वावगमात् अतिक्रमजनितापराधनिवृत्तयेऽस्मै गार्हपत्याय नमस्कारमेव करोतीत्यर्थः। इतरथा हि प्रथमाग्निं गार्हपत्यमतिक्रम्य आहवनीयस्योपस्थानकरणात् स गार्हपत्यः क्रुद्धः सन् ' यथैनं ' यजमानं ' न हिंस्यात् ', तथा नमस्कारः क्रियत इत्यर्थः ॥ २८ ॥

एवं प्रथमाया ऋचस्तात्पर्यमभिधाय द्वितीयामृचं पठित्वा तात्पर्यविशेषमाह-राजन्तमध्वराणामिति। स्वं वा इत्यादि। दम इति गृहनाम। ( निघं. ३ । ४ । १२ ) यन्मदीयं गृहं हे अग्ने ! ' ते ' तव स्वभूतम्, अतस्तथाविधं गृहं 'नः' अस्माकं पुनः-पुनः कुर्वेति "स्वे दमे"-इति मन्त्रपदयोर्विवक्षितोऽर्थः इति भावः॥२९॥

---

१-स ᳦ हितेत्यालभते गामेव। का. श्रौ. सू. ४।२७९। २-' व्यक्तिम् ' इ० पा०। ३-'सप्रपञ्चं ' इति क०। ४-'गार्हपत्ये' इति क०। ५-गार्हपत्यं गत्वोपतिष्ठत उपत्वेति। कात्या०। ४। २८०।

स नः । पितेव सूनवेऽग्ने सूपायनो भव ॥ सचस्वा नः स्वस्तयऽइति यथा पिता पुत्राय सूपचरो नैवैनं केनचन हिनस्त्येवं नः सूपचर एधि मैव त्वा केनचन हिꣳसिष्मेत्येवैतदाह ॥ ३० ॥

( ह्रा ) अथ द्विपदाः । ( ऽ ) अग्ने त्वं नोऽअन्तम ऽउत त्राता शिवो भवा वरूथ्यः । वसुरग्निर्वसुश्रवाऽ अच्छानक्षि द्युमत्तमꣳ रयिं दाः ॥ तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः । स नो बोधि श्रुधी हवमुरुष्याणोऽअघायतः समस्मादिति ॥ ३१ ॥

यद्वा ऽआहवनीयमुपतिष्ठते । पशूँस्तद्याचते तस्मात्तमुच्चावचैश्छन्दोभिरुपतिष्ठतऽउच्चावचा ऽइव हि पशवोऽथ यद्गार्हपत्यं पुरुषांस्तद्याचते तद्गायत्रं प्रथमं त्रिचं गायत्रं वा ऽअग्नेश्छन्दः स्वेनैवैनमेतच्छन्दसोपपरैति ३२

---

" स नः पितेव सूनवेऽग्ने सूपायनो भव ॥ सचस्वा नः स्वस्तये "–इति । ( वा० सं० ३ । २४ ) । यथा पिता पुत्राय सूपचरो-नैवैनं केनचन हिनस्ति–एवं नः सूपचर एधि, मैव त्वा केनचन हिंसिष्म–इत्येवैतदाह ॥ ३० ॥

अथ द्विपदाः । " अग्ने त्वं नो अन्तम उत त्राता शिवो भवा वरूथ्यः । वसुरग्निर्वसुश्रवा अच्छानक्षि द्युमत्तमं रयिं दाः ॥ तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः । स नो बोधि श्रुधी हवमुरुष्याणो अघायतः समस्मात "–इति ( वा० सं० ३ । २५ । २६ ) ॥ ३१ ॥

यद्वा आहवनीयमुपतिष्ठते–पशूंस्तद्याचते । तस्मात्तमुच्चावचैश्छन्दोभिरुपतिष्ठते–उच्चावचा इव

---

स नः पितेवेति । गार्हपत्योपस्थाने तृतीया । तत्र " पितेव सूनवे "–इति दृष्टान्तसिद्धमर्थं निष्कृष्यानुवदति–यथा पितेति । ' सूपचरः ' सुष्ठु उपचरितुं नमस्कारादिभिरुपचारैः पुत्रस्य सेवितुं योग्य एव भवति । स च पुत्रः ' एनं ' पितरं केनचिदपि साधनेन ' नैव ' ' हिनस्ति ' बाधते । एवं गार्हपत्याग्ने ! त्वं ' नः ' अस्माकं ' सूपचरः एधि ' सुष्ठूपचरितुं योग्यो भव; वयमपि त्वां केनचिदपि साधनेन ' मैव हिꣳसिष्म ' इति योजना ॥

एते चोपत्वाग्ने इत्यादिका मन्त्राः, वक्ष्यमाणाश्चाग्ने त्वमित्यादिकाः; सर्व एव संहितायां व्याख्यातत्वाद् ग्रन्थविस्तरभयादत्र पुनर्न व्याख्यायन्ते ॥ ३० ॥

अथ चतसृभिर्द्विपदाभिर्गार्हपत्यस्योपस्थानमाह–अथ द्विपदा इत्यादि । अथ " उपत्वाग्ने " इत्यादि ( वा० सं० ३ । २२-२३-२४ ) गायत्रीणामनन्तरं गार्हपत्योपस्थाने ' द्विपदाः ' प्रयोक्तव्याः । तत्र, " अग्ने त्वम् "–इति प्रथमा, " वसुरग्निः "–इति द्वितीया, " तं त्वा शोचिष्ठ "–इति तृतीया, " स नो बोधि "–इति चतुर्थी ॥ ३१ ॥

द्विपदाभिर्गार्हपत्योपस्थानस्य पुरुषप्राप्तिहेतुतां वक्तुमाहवनीयोपस्थानस्य पशुप्राप्तिहेतुतामाह–यद्वा आहव-

---

१–कण्वसंहितायामिति बोध्यम् ।

( त्यु ) अथ द्विपदाः। पुरुषच्छन्दसं वै द्विपदा द्विपाद्वा ऽअयं पुरुषः पुरुषानेवैतद्याचते पुरुषान्हि याचते तस्माद्द्विपदाः पशुमान्ह वै पुरुषवान्भवति य ऽएवं विद्वानुपतिष्ठते ॥ ३३ ॥

( ते ऽथ ) अथ गामभ्यैति। ( त्री ) इड ऽएह्यदित ऽएहीतीडा हि गौरदितिर्हि गौस्तामभिमृशति काम्या ऽएतेति मनुष्याणाᳬं ह्येतासु कामाः प्रविष्टास्तस्मादाह काम्या ऽएतेति मयि वः कामधरणं भूयादित्यहं वः प्रियो भूयासमित्येवैतदाह ॥ ३४ ॥

---

हि पशवः। अथ यद् गार्हपत्यं–पुरुषांस्तद्याचते। तद् गायत्रं प्रथमं त्रिचम्। गायत्रं वा अग्नेश्छन्दः। स्वेनैवैनमेतच्छन्दसोपपरैति ॥ ३२ ॥

अथ द्विपदाः। पुरुषच्छन्दसं वै द्विपदाः। द्विपाद्वा अयं पुरुषः। पुरुषानेवैतद्याचते। पुरुषान् हि याचते–तस्माद् द्विपदाः। पशुमान् ह वै पुरुषवान् भवति–य एवं विद्वानुपतिष्ठते ॥ ३३ ॥

अथ गामभ्यैति। "इड एह्यदित एहि"–इति ( वा० सं ३। २७ )। इडा हि गौः, अदितिर्हि गौः–तामभिमृशति। "काम्या एत"–इति ( वा० सं० ३। २७ )। मनुष्याणां ह्येतासु कामाः प्रविष्टाः। तस्मादाह काम्या एतेति। "मयि वः कामधरणं भूयात"–इति ( वा० सं० ३। २७ )। अहं वः प्रियो भूयासमित्येवैतदाह ॥ ३४ ॥

---

नीयमिति। **उच्चावचैरिति**। न्यूनाधिकपरिमाणयुक्तैः **"उपप्रयन्त"** इत्यादिमन्त्रैर्गायत्र्यादिच्छन्दोभिरित्यर्थः। **अथ यद् गार्हपत्यमित्यादि**। "**उपत्वाग्ने**" इत्यादिभिः 'यद्' 'गार्हपत्यम्' उपतिष्ठते, तेनोपस्थानेन 'पुरुषान्' पुत्रपौत्रादीनेव 'याचते' प्रार्थयत इत्यर्थः। तच्च पुरुषप्रार्थनं द्विपदाभिरेवेति वक्तुमुपत्वाग्न इति गायत्रतृचस्य प्रयोजनमाह–**गायत्रं वा अग्नेश्छन्द** इति। प्रजापतिमुखात् सहोत्पन्नत्वादित्यर्थः ( तै० सं० ७ कां. १। १। ४। ) 'उपपरैति' उपप्राप्नोति ॥ ३२ ॥

**अथ द्विपदा** इति। **पुरुषच्छन्दसं वा** इति। पुरुषवत् पादद्वयोपेतत्वात् 'द्विपदाः पुरुषच्छन्दसम्' पुरुषसमानाकृतिकं छन्दः। छन्दश्शब्दादकारः समासान्तः ( पा० सू० ५। ४। १०३ )। **पशुमान् ह वै पुरुषवानिति**। आहवनीयगार्हपत्योपस्थानयोः समुच्चित्य प्रशंसा; गार्हपत्योपस्थानस्यापि पुरुषवत्पादद्वयोपेतत्वात् ॥ ३३ ॥

गोसमीपगमनं तदुपस्पर्शनञ्च समन्त्रकं विधत्ते–**अथ गामभ्यैतीति**। **इड एहीति**। इडाऽदितिशब्दौ गोनामत्वेन प्रसिद्धावित्यर्थः। **कामाः प्रविष्टा** इति। 'मनुष्याणां', क्षीरदध्यादिविषयाः 'कामाः' 'हि' यस्मात् 'एतासु' गोषु 'प्रविष्टाः' 'तस्मात्' एताः कामनाविषयत्वात् 'काम्याः' इत्यर्थः ॥ ३४ ॥

---

१–गां गच्छतीड एहीति। तामेव गां। का. श्रौ. सू. ४। २८१। २–काम्या एतेत्यालभते। का. श्रौ. सू. ४। २८२।

(३५) अथान्तरेणाहवनीयं च गार्हपत्यं च । प्राङ्तिष्ठन्नग्निमीक्षमाणो जपति सोमानꣳ स्वरणं कृणुहि ब्रह्मणस्पते ॥ कक्षीवन्तं यऽ औशिजः ॥ यो रेवान्यो ऽअमीवहा व्वसुवित्पुष्टिवर्द्धनः॥ स नः सिषक्तु यस्तुरः ॥ मानः शꣳसो ऽअररुषो धूर्त्तिः प्रणङ्मर्त्यस्य रक्षा णो ॥ ब्रह्मणस्पतऽइति ॥३५॥

यद्वाऽआहवनीयमुपतिष्ठते । दिवं तदुपतिष्ठतेऽथ यद् गार्हपत्यं पृथिवीं तदुथैतदन्तरिक्षमेषा हि दिग्बृहस्पतेरेताꣳ ह्येतद्दिशमुपतिष्ठते तस्माद्बार्हस्पत्यं जपति ॥ ३६ ॥

महि त्रीणामवोऽस्तु । द्युक्षं मित्रस्यार्य्यम्णः । दुराधर्षं व्वरुणस्य ॥ न हि तेषाममाचन नाध्वसु व्वारणेषु । ईशे रिपुरघशꣳसः ॥ ते हि पुत्रासोऽअदितेः प्र जीवसे मर्त्याय । ज्योतिर्यच्छन्त्यजस्रमिति तत्रास्ति नाध्वसु व्वारणेष्वित्येते ह वाऽअध्वानो व्वारणा यऽइमेऽन्तरेण द्यावापृथिवीऽएतान् ह्येतदुपतिष्ठते तस्मादाह नाध्वसु व्वारणेष्विति ॥ ३७ ॥

---

अथान्तरेणाहवनीयं च गार्हपत्यं च प्राङ् तिष्ठन्नग्निमीक्षमाणो जपति । "सोमानं स्वरणं कृणुहि ब्रह्मणस्पते ॥ कक्षीवन्तं य औशिजः"–(वा. सं. ३ । २८ ।)" यो रेवान् यो अमीवहा वसुवित्पुष्टिवर्द्धनः । स नः सिषक्तु यस्तुरः"–(वा. सं. ३।२९) " मानः शंसो अररुषो धूर्तिः प्रणङ् मर्त्यस्य रक्षा णो ब्रह्मणस्पते "–इति ( वा. सं. ३ । ३० ) ॥ ३५ ॥

यद्वा आहवनीयमुपतिष्ठते–दिवं तदुपतिष्ठते । अथ यद् गार्हपत्यम्–पृथिवीं तद् । अथैतदन्तरिक्षम्–एषा हि दिग् बृहस्पतेः । एतां ह्येतद्दिशमुपतिष्ठते । तस्माद् बार्हस्पत्यं जपति ॥ ३६ ॥

" महि त्रीणामवोऽस्तु द्युक्षं मित्रस्यार्य्यम्णः । दुराधर्षं वरुणस्य "–( वा. सं. ३।३१ )

---

अथान्तरेणेत्यादि, निगदसिद्धम् ॥ ३५ ॥

सोमानमित्यस्य जप्यस्य तृचस्य च प्रयोजनमाह–**यद्वा** इति । आहवनीयगार्हपत्योपस्थानाभ्यां द्यावापृथिव्योरुपस्थानं कृतं भवति । अनेन " सोमानम् " इति ( वा. सं. ३ । २८–३० ) तृचस्य जपेन द्यावापृथिव्योः मध्यवर्त्तिनोऽन्तरिक्षस्योपस्थानं कृतं भवतीत्यर्थः । तस्य देवताविशेषसम्बन्धं प्रशंसति–**एषा हीति** । द्यावापृथिव्योर्मध्ये वर्त्तमाना येयमूर्ध्वा ' दिक् ' 'एषा' " बृहस्पतेः ' स्वभूता । अत एव तैत्तिरीयके समाम्नातम्–" **ऊर्ध्वा दिग् बृहस्पतिर्देवता** "–( तै. ब्रा. ३ । ११।५–६ ) इति । नन्वेतत् तृचं ब्राह्मणस्पत्यम्, कथं बार्हस्पत्यम् ? इति । नैष दोषः; तयोर्भेदाभावात् । अत एव दाशतय्यां " **गणानां त्वा** "–( ऋ. सं.२।२३ ) इत्यादिषु ब्राह्मणस्पत्यसूक्तेषु तत्र बृहस्पतिः स्तूयते ॥ ३६ ॥

**महि त्रीणा**मित्यादि । एतदपि सूक्तमन्तराग्नी तिष्ठन् जपेदित्यनुषङ्गेण वाक्यसमाप्तिः । अस्य तृचस्य

---

१–सोमानमित्यनुदकं व्रतोपायनवत् । का. श्रौ. सू. ४–२८३ ।

( त्य ) अथैन्द्री । ( न्द्रीन्द्रो ) इन्द्रो वै यज्ञस्य देवता सेन्द्रमेवैतदग्न्युपस्थानं कुरुते कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुष ऽइति यजमानो वै दाश्वान्न यजमानाय द्रुह्यसीत्येवैतदाहोपोपेन्नु मघवन्भूय ऽइन्नु ते दानं देवस्य पृच्यतऽइति भूयो भूयऽएव न ऽइदं पुष्टं कुर्वित्येवैतदाह ॥ ३८ ॥

( ह्रा ) अथ सावित्री । सविता वै देवानां प्रसविता तथो हास्मा ऽएते सवितृप्रसूता एव सर्व्वे कामाः समृध्यन्ते तत्सवितुर्व्वरेण्यं भर्गो देवस्य धीमहि ॥ धियो यो नः प्रचोदयादिति ॥ ३९ ॥

---

"न हि तेषाममा चन नाध्वसु वारणेषु । ईशे रिपुरघशंसः"–( वा०सं०३।३२ ) "ते हि पुत्रासो अदितेः प्र जीवसे मर्त्याय । ज्योतिर्यच्छन्त्यजस्रम् "–इति ( वा. सं. ३ ।३३ ) तत्रास्ति नाध्वसु वारणेष्विति । एते ह वा अध्वानो वारणाः–य इमेऽन्तरेण द्यावापृथिवी । एतान् ह्येतदुपतिष्ठते । तस्मादाह नाध्वसु वारणेष्विति ॥ ३७ ॥

अथैन्द्री । इन्द्रो वै यज्ञस्य देवता । सेन्द्रमेवैतदग्न्युपस्थानं कुरुते । " कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे "–इति ( वा. सं. ३ । ३४ ) यजमानो वै दाश्वान्न यजमानाय द्रुह्यसि–इत्येवैतदाह । " उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यते "–इति ( वा. सं. ३ । ३४ ) । भूयो–भूय एव न इदं पुष्टं कुरु–इत्येवैतदाह ॥ ३८ ॥

अथ सावित्री । सविता वै देवानां प्रसविता । तथो हास्मा एते सवितृप्रसूता एव सर्वे कामाः समृध्यन्ते । " तत् सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् "–इति ( वा. सं. ३ । ३५ ) ॥ ३९ ॥

---

प्रयोजनमाह–**तत्रास्तीति** । ' तत्र ' तस्मिंस्तृचे ' न अध्वसु वारणेषु '–' इति ' ' अस्ति, ' तस्याभिप्रायो वर्ण्यत इति शेषः । **एते ह वा** इत्यादि । द्यावापृथिव्योर्मध्ये य ' इमे ' ' अध्वानः ' विततः ' एते ' खलु पुरुषस्य फलप्राप्तिवारणाय भवन्ति, अतो द्यावापृथिवीसंस्तुतयोर्गार्हपत्याहवनीययोर्मध्ये स्थित्वा इमं तृचं जपन् ' एतान् ' एव मार्गान् ' उपतिष्ठते ' इत्यर्थः । एवमध्वनामुपस्थितत्वात् तं वारयितुं न कोऽपि ईश्वर इति " **नाध्वसु वारणेषु** "–इति मन्त्रपादस्यार्थः ॥ ३७ ॥

**अथैन्द्रीत्यादि** । ' ऐन्द्री ' इन्द्रदेवताका " **कदाचन स्तरीरसि** "–इत्यादिका अग्न्युपस्थाने प्रयोक्तव्या । तथा च तदग्न्युपस्थानमिन्द्रसहितं सत् यज्ञात्मना निष्पद्यत इत्यर्थः । तत्र पूर्वार्द्धमनूद्य तात्पर्यमाह–**कदाचनेति** । **यजमानो वै दाश्वानिति** । " दाशृ दाने " ( धा. पा. भ्वा ९१९ ) इत्यस्मात् " दाश्वान् साह्वान् " ( पा. सू. ६ । १ । १२ ) इति निपातनात् हविषां दाता यजमानो दाश्वानित्युच्यते । तथा च ' दाशुषे ' यजमानाय कदाचिदपि ' स्तरीः ' हिंसकः ' न असि ' न भवसि न द्रुह्यसीति तात्पर्यार्थकथनम् । उत्तरार्द्धं व्याचष्टे–**उपोपेदिति** । ' हे मघवन् ' अस्मभ्यं दीयमानं त्वदीयं धनं ' भूयो भूय एव ' ' उपपृच्यते ' समीपं प्राप्नोति; तदिदमाम्नातम्–**भूयो–भूय एवेति** ॥ ३८ ॥

अथ सवितृदेवताकामृचं विधाय प्रशंसति– **अथ सावित्रीति** । का पुनरसौ सावित्री ? इति, तामाह–**तत्सवितुरिति** ॥ ३९ ॥

( त्यु ) अथाग्नेयी । तदग्नय ऽएवैतदात्मानमन्ततः परिददाति गुप्त्यै परि ते दूडभो रथोऽस्मा २ँ ॥ ऽअश्नोतु विश्वतः । येन रक्षसि दाशुष इति यजमाना वै दाश्वाꣳसो यो ह वाऽअस्यानाधृष्यतमो रथस्तेनैष यजमानानभिरक्षति स यस्तेऽनाधृष्यतमो रथो येन यजमानानभिरक्षसि तेन नः सर्व्वतोऽभिगोपायेत्येवैतदाह त्रिरेतज्जपति ॥ ४० ॥

( त्यु ) अथ पुत्रस्य नाम गृह्णाति । ( ती ) इदं मेऽयं व्वीर्य्यं पुत्रोऽनुसन्तनवदिति यदि पुत्रो न स्यादप्यात्मन एव नाम गृह्णीयात् ॥ ४१ ॥

इति तृतीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ ३ ॥ २ ॥ ( ३ । ४ )

---

अथाग्नेयी । तदग्नय एवैतदात्मानमन्ततः परिददाति गुप्त्यै । " परि ते दूडभो रथोऽस्मा२ँ ॥ अश्नोतु विश्वतः । येन रक्षसि दाशुषः "–इति ( वा. सं. ३ । ३६ ) । यजमाना वै दाश्वांसः । यो ह वा अस्यानाधृष्यतमो रथः–तेनैष यजमानानभिरक्षति । स यस्तेऽनाधृष्यतमो रथो येन यजमानानभिरक्षसि, तेन नः सर्वतोऽभिगोपाय–इत्येवैतदाह । त्रिरेतज्जपति ॥ ४० ॥

अथ पुत्रस्य नाम गृह्णाति । ' इदं मेऽयं वीर्यं पुत्रोऽनुसन्तनवद् ' इति । यदि पुत्रो न स्याद्–अप्यात्मन एव नाम गृह्णीयात् ॥ ४१ ॥ इति बृहदुपस्थानम् ।

---

अग्निदेवताकामृचं विधत्ते–**अथाग्नेयी**ति । 'परिददाति' परिदानं रक्षणार्थं दानम् । तादर्थ्यमेव विव्रियते–**गुप्त्या** इति । **यजमाना वा** इत्यादि । धर्षितुमशक्यः, परैरप्रधृष्यो यो रथो विद्यते, 'तेन' रथेन 'एषः' 'अग्निः' 'यजमानान् अभिरक्षति' ॥

एवमग्नेः स्वभावमभिधाय मन्त्रे योजयति–**स य** इति । हे अग्ने ! ' सः ' प्रसिद्धः ' यः ' ' रथः ' ' ते ' त्वदीयः, शत्रुभिरप्रधृष्यो विद्यते ' येन ' च ' यजमानान् ' ' अभितः ' सर्वतः ' रक्षसि ', 'तेन , 'रथेन' ' नः ' अस्मान् सर्वतः अपि ' अभिगोपाय ' इत्यर्थः । अस्या ऋचस्त्रिर्जपं विधत्ते–**त्रिरेत**दिति ॥ ४० ॥

दर्शपूर्णमासयोरिवात्रापि पुत्रनामग्रहणं विधत्ते--**अथ पुत्रस्ये**ति । ' अयं ' मदीयः ' पुत्रः ' ' इदं ' यज्ञानुष्ठानलक्षणं ' वीर्यम् ' ' अनुसन्तनवत् ' अनुक्रमेण सन्तनुयात्, सन्ततमनवच्छिन्नं कुर्यात्, ' इति ' अनेनाभिप्रायेण नामग्रहणम् । पुत्राभावे तु यजमानः स्वस्यैव ' नाम ' गृह्णीयात् ॥ ४१ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये
द्वितीयकाण्डे तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥ ( २–३–४ )

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं सप्ताब्धीन् पञ्चसीरीं त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुल्यः कार्पासीयं कृपावान् गुडकृतमजडो राजतं राजपूज्यः ॥
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजाः रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे तृतीयोऽध्यायः समाप्तः ॥ ३ ॥

---

१–पौर्णमासवत् पुत्रनामग्रहणं । इति का. श्रौ. सू. ४ । २८४ । वत्युपदेशाच्च तंतवेत्वेत्यादि सर्वं प्रवर्तते । इत्येतन्नामग्रहणान्तं वात्सप्रम् । २–' आज्यजन्मा '–इ० पा० । ३--' सायणापत्येन '–इ० पा० ।

# अथ द्वितीयकाण्डे चतुर्थाध्याये प्रथमं ब्राह्मणम् ।

अथ हुतेऽग्निहोत्र ऽउपतिष्ठते । भूर्भुवः स्वरिति तत्सत्येनैवैतद्वाचᳬं समर्धयति यदाह भूर्भुवः स्वरिति तया समृद्ध्याऽऽशिषमाशास्ते सुप्रजाः प्रजाभिः स्यामिति तत्प्रजामाशास्ते सुवीरो व्वीरैरिति तद्वीरानाशास्ते सुपोषः पोषैरिति तत्पुष्टिमाशास्ते ॥ १ ॥

यद्वाऽअदो दीर्घमग्न्युपस्थानम् । ( मा ) आशीरेव साशीरियं तदेतावतैवैतत्सर्व्वमाप्नोति तस्मादेतेनैवोपतिष्ठेतैतेन न्वेव व्वयमुपचराम इति ह स्माहासुरिः ॥ २ ॥

---

अथ क्षुल्लकोपस्थानमासुरिदृष्टम् ।

अथ हुतेऽग्निहोत्र उपतिष्ठते–" भूर्भुवः स्वः "–( वा॰ सं॰ ३ । ३७ ) इति । तत्सत्येनैवैतद्वाचं समर्धयति । यदाह–भूर्भुवः स्वरिति । तया समृद्ध्याऽऽशिषमाशास्ते । " सुप्रजाः प्रजाभिः स्याम् "–इति ( वा॰ सं॰ ३ । ३७ ) । तत्प्रजामाशास्ते । " सुवीरो वीरैः "– इति ( वा॰ सं॰ ३ । ३७ ) । तद्वीरानाशास्ते । " सुपोषः पोषैः "–इति ( वा॰ सं॰ ३ । ३७ ) । तत्पुष्टिमाशास्ते ॥ १ ॥

यद्वा अदो दीर्घमग्न्युपस्थानम्–आशीरेव सा । आशीरियम् । तदेतावतैवैतत्सर्वमाप्नोति । तस्मादेतेनैवोपतिष्ठेत । एतेन न्वेव वयमुपचराम इति ह स्माहासुरिः ॥ २ ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्म्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ ४ ॥

एवमग्निहोत्रहोमोपस्थानं विधाय लघूपस्थानमन्त्रानपि दर्शयति–**अथ हुत** इति । अग्निहोत्रहोमानन्तरं " भूर्भुवः स्वः, सुप्रजाः "–' इति ' अनेनैव मन्त्रेण आहवनीयम् ' उपतिष्ठते ' । पूर्वोक्तादुपस्थानमन्त्रजातादस्य मन्त्रस्यातिशयमाह–**तत् सत्येनेति** । सत्यरूपा ह्येता व्याहृतयः त्रयीसारत्वात् । तथा चाम्नातम्–" भूरित्यृग्वेदाद्, भुव इति यजुर्वेदात्, स्वरिति सामवेदात् "–इति ( ऐ. ब्रा. ५ । ५ । ७ । ) । एवं [3]व्याहृतिरूपेण ' सत्येनैव ' इमां मन्त्ररूपां ' वाचं ' ' समर्द्धयति ' । ' तया ' च ' समृद्धया ' वाचा प्रागुक्तां सर्वामपि ' आशिषम् ' ' आशास्ते ' प्रार्थयत इत्यर्थः । तदाशासनप्रकारं दर्शयति–**सुप्रजा** इति । ' प्रजाभिः ' पुत्रपौत्रादिरूपाभिः ' सुप्रजाः ' शोभनप्रजोपेतः ' स्याम् ' । एकः प्रजाशब्दोऽनुवादः । एवं **सुवीरो वीरैरिति** । वीर्यवन्तः पुत्राः वीराः; तेषां प्रजाशब्देन परिगृहीतत्वेऽपि पुनः प्राधान्यख्यापनार्थं पृथगाशासनमिति द्रष्टव्यम् ॥ १ ॥

प्रागुक्तोपस्थानेनास्य समानकार्यकारित्वात् विकल्पमाह–**यदिति** । ' अदः ' पूर्वोक्त ' दीर्घं ' बहुकर्त्तव्यो-

---

१–भूर्भुवः स्वरिति वोभौ । का. श्रौ. सू. ४ । २८५ । उभावप्यग्नी भूर्भुवः स्वरित्यनेनोपतिष्ठते । क्रमस्तु पूर्वोक्त एव । क्रमांतराविधानात् । अस्य च वात्सप्रेण सह विकल्पः । एतच्च अगोपक्षेऽपि भवति । अत्रोपस्थाने गां प्रति गमनस्य स्पर्शनस्य चाविधानात् । इति कार्कभाष्याशयः । २–' मन्त्रगणादस्य ' इति ' मन्त्रभावादस्य ' इति च क. पा. । ३–' एवं तद्व्याहृतिरूपेण ' इति क. ।

( ३ ) अथ प्रवत्स्यन् । ( न्गा ) गार्हपत्यमेवाग्रऽउपतिष्ठते ऽथाहवनीयम् ॥ ३ ॥

( ४ँ ) स गार्हपत्यमुपतिष्ठते । नर्य प्रजां मे पाहीति प्रजाया हैष ईष्टे तत्प्रजामेवास्माऽएतत्परिददाति गुप्त्यै ॥ ४ ॥

( प्त्याऽ ) अथाहवनीयमुपतिष्ठते । शꣳस्य पशून्मे पाहीति पशूनाꣳ हैष ईष्टे तत्पशूनेवास्मा ऽएतत्परिददाति गुप्त्यै ॥ ५ ॥

( प्त्याऽ ) अथ प्र वा व्रजति प्र वा धावयति । स यत्र वेलां मन्यते तत्स्यत्त्वा * वाचं विसृजतेऽथ प्रोष्य परेक्ष्य यत्र वेलां मन्यते तद्वाचं यच्छति स यद्यपि राजान्तरेण स्यान्नैव तमुपेयात् ॥ ६ ॥

प्रवत्स्यदुपस्थानम् ।

अथ प्रवत्स्यन् गार्हपत्यमेवाग्र उपतिष्ठते-अथाहवनीयम् ॥ ३ ॥

स गार्हपत्यमुपतिष्ठते । " नर्य प्रजां मे पाहि "-इति ( वा० सं० ३ । ३७ ) । प्रजाया हैष ईष्टे । तत् प्रजामेवास्मा एतत् परिददाति गुप्त्यै ॥ ४ ॥

अथाहवनीयमुपतिष्ठते-" शंस्य पशून्मे पाहि "-इति ( वा० सं० ३ । ३७ ) । पशूनां हैष ईष्टे । तत् पशूनेवास्मा एतत् परिददाति गुप्त्यै ॥ ५ ॥

अथ प्र वा व्रजति, प्र वा धावयति । स यत्र वेलां मन्यते तत्स्यत्त्वा वाचं विसृजते । अथ प्रोष्य परेक्ष्य यत्र वेलां मन्यते तद्वाचं यच्छति । स यद्यपि राजान्तरेण स्यात्-नैव तमुपेयात् ॥ ६ ॥

पेतं बहुमन्त्रसाध्यं यदग्न्युपस्थानम्, तत् ' आशीः ' फलप्रार्थनम् ' एव ' । तथा " भूर्भुवः स्वः "-इति मन्त्रसाध्यमुपस्थानमपि तादृगाशीर्युक्तम् । ' तत् ' ततः ' एतावतैव ' उपस्थानेन ' एतत् ' प्रागुक्तं ' सर्वं ' फलम् ' आप्नोति ' । अस्मिन्नुपस्थाने ऋषिवचनं संवादयति-**एतेन न्वेवेति** । ' एतेनैव ' लघूपस्थानेनैव ' वयम् ' अग्निम् ' उपचरामः ' ' इति ' । यस्मादेवम् ' आसुरिः ' महर्षिः ' आह स्म ' उक्तवान्, ' तस्मात् ' इदमेवोपस्थानं कर्त्तव्यमित्यर्थः । अत एव सूत्र्यते-" भूर्भुवः स्वरिति वोभौ " ( का. श्रौ. सू. ४।२८९)इति ॥ २ ॥

अथ प्रवासं करिष्यता यजमानेन कर्त्तव्यमुपस्थानं दर्शयति-**अथ प्रवत्स्यन्निति** । ' प्रवत्स्यन् ' प्रवासं करिष्यन् । विहिते गार्हपत्याहवनीयोपस्थाने ॥ ३ ॥

तत्र गार्हपत्योपस्थानमनूद्य मन्त्रं विधत्ते-**स गार्हपत्य**मिति । मन्त्रस्य तात्पर्यमाह-**प्रजाया** इति । एष हि गार्हपत्यः ' प्रजाया ईष्टे '; कृत्स्नाग्नियोनिभूतत्वात् । अतः ' अस्मै ' गार्हपत्याय प्रजाया रक्षणार्थं परिदानं क्रियत इत्यर्थः ॥ ४ ॥

प्रवत्स्यतो यदाहवनीयोपस्थानं विहितम्, तदनूद्य मन्त्रं विधत्ते-**अथाहवनीयमिति** । **पशूनां** हेत्यादि, निगदसिद्धम् ॥ ५ ॥

**अथ प्र वा व्रजतीति**[2] । एवं गार्हपत्याहवनीययोः समन्त्रकमुपस्थानं कृत्वा, वाहनरहितश्चेत् स्वयं ' प्रव्र-

* ' स्यन्त्वा ' इ. पा. । १-प्रवत्स्यन् सर्व्वान्नियेंति प्रतिमंत्रम् । का. श्रौ. सू. ४-२८६ । २-प्रवसन् याजमानं कुर्याद्यथाकालमात्मसंस्काराद्धर्ममात्रत्वाच्छ्रुतेश्च इति का. श्रौ. सू. ४-२८८ ।

(त्सु) स ऽआहवनीयमेवाग्रऽउपतिष्ठते । ( तेऽथ ) अथ गार्हपत्यं गृहा वै गार्हपत्यो गृहा वै प्रतिष्ठा तद्गृहेष्वेवैतत्प्रतिष्ठायां प्रतितिष्ठति ॥ ७॥

स ऽआहवनीयमुपतिष्ठते । ( तऽआ ) आगन्म विश्ववेदसमस्मभ्यं वसुवित्तमम् ॥ अग्ने सम्राडभि द्युम्नमभि सह आयच्छस्वेत्यथोपविश्य तृणान्युपलुम्पति ॥ ८ ॥

---

स आहवनीयमेवाग्र उपतिष्ठते-अथ गार्हपत्यम् । गृहा वै गार्हपत्यः, गृहा वै प्रतिष्ठा । तद् गृहेष्वेवैतत्प्रतिष्ठायां प्रतितिष्ठति ॥ ७ ॥

स आहवनीयमुपतिष्ठते-" **आगन्म विश्ववेदसमस्मभ्यं वसुवित्तमम् । अग्ने सम्राडभि द्युम्नमभि सह आयच्छस्व** "-इति ( वा. सं.३।३८ ) । अथोपविश्य तृणान्युपलुम्पति ॥ ८ ॥

---

जति ' गच्छति; वाहनसहितश्चेत् अश्वरथादीन् ' धावयति ' प्रगमयति । ' सः ' च गच्छन् ' यत्र ' यस्मिन् देशे ' वेलां ' स्वनिवासग्राममर्यादां ' मन्यते ', तत्स्थानप्राप्तिपर्यन्तं वाचंयमो गत्वा, तदनन्तरं ' वाचं विसृजेत् ' न तु ततः प्रागित्यर्थः । पुनरागमनसमयेऽपि तत्स्थानप्रभृति अग्निसमीपगमनपर्यन्तं वाग्यमनं विधत्ते-**अथ प्रोष्येति**[1] । ' प्रोष्य ' प्रवासं कृत्वा पुनरागत्य यत्र ग्राममर्यादां मन्यते, तत्र वाचंयमो भवेत् । एवं वाग्यतस्य यजमानस्य अग्न्यागारस्य च मध्ये यदि राजा आगच्छेत्, ' तम् ' अपि नैव ' उपेयात् ' उपगच्छेत् । वाग्यमनानन्तरं राजादिपूज्यजनसन्निधानेऽपि तदनादरेण अग्निगतमनस्क एव तत्समीपं गच्छेदित्यर्थः । तदेतद् विस्पष्टमापस्तम्बेन सूत्रितम्-" आराद‍ग्निभ्यो वाचं यच्छति, यद्येनं राजा पिताऽऽचार्यो वाऽन्तरेणाग्नीन् स्याच्छदिर्दर्शने नैनमाद्रियेत "-इति ( आप. श्रौ. सू. २९ । ९ । ६ । ) ॥ ६ ॥

प्रवत्स्यत्नुपस्थानवैपरीत्यमागतोपस्थानस्य विधत्ते-**स** इति । आहवनीयस्यैव प्रथममुपस्थानं पश्चाद् गार्हपत्यस्येत्यर्थः । गार्हपत्योपस्थानस्य पश्चाद्भावं प्रतिपादयति-**गृहा वा** इति । सर्वाग्नीनां योनित्वात् गृहपतिना संयुक्तत्वाच्च गार्हपत्यस्य गृहशब्दाभिधेयत्वम् ॥ ७ ॥

तत्र प्रथमकर्त्तव्यमाहवनीयोपस्थानं समन्त्रकं दर्शयति-**स आहवनीयम्** इति । मन्त्रस्य चायमर्थः-हे ' सम्राट् ' सम्यग्राजमान ' अग्ने ! ' ' विश्ववेदसं ' सर्वधनोपेतम्, ' अस्मभ्यं ' अस्मदर्थं 'वसुवित्तमं' वसुनः धनस्य लम्भयितृतमं त्वाम् ' आगन्म ' आगमाम । त्वं च ' द्युम्नं ' धनं, ' सहः ' पराभिभवहेतुभूतं बलं च ' अभ्यायच्छस्व ' अभिगमयेत्यर्थः ॥

समिदाधानं विधत्ते-**अथेति**[3] । उपस्थानानन्तरमाहवनीयसमीपे उपविश्य ' तृणानि ' तृणोपलक्षितानि समिदादीनि ' अपलुम्पति ' प्रच्छिद्य तस्मिन्नग्नौ प्रक्षिपेत् । "लुपॣ छेदने" ( धा. पा. तु. उ. १९० ) ॥८॥

---

१-एत्य च मत्या वाग्यमनम् । इति का. ४।२८९ । २-समित्पाणिरनुपेत्य कंचिदुपतिष्ठन्नमाहवनीयगार्हपत्यदक्षिणाग्नीनागन्मेति प्रतिमन्त्रम् । इति कात्या. ४-२९० ॥ ३-समित्परिसमूहनानि चोपविश्य । इति कात्या. ४-२९१ ॥

(त्यु) अथ गार्हपत्यमुपतिष्ठते । (तेऽयु) अयमग्निर्गृहपतिर्गार्हपत्यः प्रजाया व्वसुवित्तमः । अग्ने गृहपतेऽभि द्युम्नमभि सह आयच्छस्वेत्यथोपविश्य तृणान्युपलुम्पत्येतन्नु जपेनैतेनु न्वेव भूयिष्ठा ऽइवोपतिष्ठन्ते ॥ ९ ॥

स वै खलु तूष्णीमेवोपतिष्ठेत । (ते) इदं वै यस्मिन्वसति ब्राह्मणो वा राजा वा श्रेयान्मनुष्योऽन्वेव तमेव नार्हति व्वक्तुमिदं मे त्वं गोपाय प्राहं व्वत्स्यामीत्यथास्मिन्नेते श्रेयाꣳसो व्वसन्ति देवाऽअग्नयः क उ तानर्हति व्वक्तुमिदं मे यूयं गोपायत प्राहं व्वत्स्यामीति ॥ १० ॥

मनो ह वै देवा मनुष्यस्याजानन्ति । स वेद गार्हपत्यः परिदां मेदमुपागादिति तूष्णीमेवाहवनीयमुपतिष्ठते स व्वेदाहवनीयः परिदां मेदमुपागादिति ११

---

अथ गार्हपत्यमुपतिष्ठते । "अयमग्निर्गृहपतिर्गार्हपत्यः प्रजाया वसुवित्तमः । अग्ने गृहपतेऽभिद्युम्नमभि सह आयच्छस्व"—इति (वा० सं. ३। ३९)। अथोपविश्य तृणान्युपलुम्पति। एतन्नु जपेनैतेन न्वेव भूयिष्ठा इवोपतिष्ठन्ते ॥ ९ ॥

स वै खलु तूष्णीमेवोपतिष्ठेत। इदं वै यस्मिन् वसति ब्राह्मणो वा राजा वा श्रेयान्मनुष्यः अन्वेव—तमेव नार्हति वक्तुम् 'इदं मे त्वं गोपाय, प्राहं वत्स्यामि' इति। अथास्मिन्नेते श्रेयांसो वसंति—देवा अग्नयः। क उ तानर्हति वक्तुम्—'इदं मे यूयं गोपायत प्राहं वत्स्यामि' इति ॥ १० ॥

मनो ह वै देवा मनुष्यस्याजानन्ति। स वेद गार्हपत्यः—'परिदां मेदमुपागाद्' इति। तूष्णीमेवाहवनीयमुपतिष्ठते। स वेदाहवनीयः—'परिदां मेदमुपागाद्' इति ॥ ११ ॥

---

आगतस्य यजमानस्य गार्हपत्योपस्थानं समन्त्रकं विधत्ते—**अथेति** । मन्त्रार्थस्तु,—'गृहपतिः' गृहाणां पालयिता, गृहपतिना संयुक्तः 'अयमग्निः' अस्मदीयायाः प्रजायाः 'वसुवित्तमः' वसुनो धनस्य लम्भयितृतम इति परोक्षकृतः पूर्वोऽर्द्धर्चः। उत्तरस्तु प्रत्यक्षकृतः। हे 'अग्ने गृहपते!'। **अभि द्युम्नमित्यादि**। पूर्ववद् योज्यम् ॥ ९ ॥

इत्थं प्रवत्स्यदुपस्थानमागतोपस्थानं च समन्त्रकं विधाय, तयोरमन्त्रकपक्षमप्याह—**स वा** इति। **इदं वा** इत्यादि। इदं खलु लोके दृश्यते,—ब्राह्मणादीनामन्यतमः 'श्रेयान्' श्रेष्ठः पुरुषो 'यस्मिन्' एव जने 'वसति' सः 'मनुष्यः' 'तं' श्रेयांसम् अनुसृत्य वर्त्तमानः, मदीयम् 'इदं' गृहादिकं 'त्वं गोपाय', 'अहं' प्रवासं करिष्यामीति एवं नियोगतो 'वक्तुं' 'नार्हति'; यथैवं लोके, तथा 'अस्मिन्' यजमाने 'एते श्रेयांसो वसन्ति'; के पुनस्ते? इति, उच्यते—यजमाने निवसन्तस्ते श्रेयांसः 'अग्नयः' गार्हपत्याद्याः। 'क उ' नाम 'तान्' 'इदं मे यूयं गोपायत' इत्येवं नियोगेन 'वक्तुमर्हति'। अतः 'नर्य प्रजां मे शंस्य पशून् मे पाहि' त्येवं नियोगरूपतया मन्त्रो न प्रयोक्तव्य इत्यर्थः ॥ १० ॥

मन्त्रप्रयोगाभावेऽपि प्रजापालनादिविषया बुद्धिस्तेषां स्वयमेव भवतीत्याह—**मनो ह वै देवा** इति। 'मनु-

---

१–तूष्णीं वोपस्थानं पूर्ववत्। इति कात्या० श्रौ. सू. ४–२९२।

( त्य ) अथ प्र वा व्व्रजति प्र वा धावयति । स यत्र वेलां मन्यते तत्स्यत्त्वा व्वाचं व्विसृजतेऽथ प्रोष्य परेक्ष्य यत्र व्वेलां मन्यते तद्वाचं यच्छति स यद्यपि राजान्तरेण स्यान्नैव तमुपेयात् ॥ १२ ॥

(त्स) स आहवनीयमेवाग्रऽउपतिष्ठते । (तेऽथ) अथ गार्हपत्यं तूष्णीमेवाहवनीयमुपतिष्ठते तूष्णीमुपविश्य तृणान्युपलुम्पति तूष्णीमेव गार्हपत्यमुपतिष्ठते तूष्णीमुपविश्य तृणान्युपलुम्पति ॥ १३ ॥

( त्य ) अथातो गृहाणामेवोपचारः । (ऽ) एतद्ध वै गृहपतेः प्रोषुषऽआगताद् गृहाः समुत्रस्ता ऽइव भवन्ति किमयमिह व्वदिष्यति किं वा करिष्यतीति स यो ह तत्र किं चिद्वदति वा करोति वा तस्माद्गृहाः प्रत्रसन्ति तस्येश्वरः कुलं व्विक्षोब्धोरथ यो ह तत्र न व्वदति न किं चन करोति तं गृहा उपसꣳश्रयन्ते न वाऽअयमिहावादीन्न किं चनाकरदिति स यदि-ह्यापि सुक्रुद्ध इव स्याच्छ्र एव ततस्तत्कुर्याद्यद्वदिष्यन्वा करिष्यन्वा स्यादेष उ गृहाणामुपचारः ॥ १४ ॥

इति तृतीयप्रपाठके तृतीयं ब्राह्मणम् ॥ ३ ॥ ३ ॥ ( ४ ॥ १ )

---

अथ प्र वा व्रजति, प्र वा धावयाति । स यत्र वेलां मन्यते तत् स्यत्त्वा वाचं विसृजते । अथ प्रोष्य परेक्ष्य यत्र वेलां मन्यते तद्वाचं यच्छति । स यद्यपि राजान्तरेण स्यात्, नैव तमुपेयात् ॥ १२॥

स आहवनीयमेवाग्र उपतिष्ठते—अथ गार्हपत्यम् । तूष्णीमेवाहवनीयमुपतिष्ठते, तूष्णीमुपविश्य तृणान्युपलुम्पति । तूष्णीमेव गार्हपत्यमुपतिष्ठते, तूष्णीमुपविश्य तृणान्युपलुम्पति ॥ १३ ॥

अथातो गृहाणामेवोपचारः । एतद्ध वै गृहपतेः प्रोषुषः आगताद् गृहाः समुत्रस्ता इव भवन्ति—किमयमिह वदिष्यति, किं वा करिष्यतीति । स यो ह तत्र किञ्चिद्वदति वा करोति वा—तस्माद् गृहाः प्रत्रसन्ति । तस्येश्वरः कुलं विक्षोब्धोः । अथ यो ह तत्र न वदति, न किं चन करोति—

---

ष्यस्य ' ' मनः ' यद्विषयं तत् सर्वं ' देवाः ' स्वयमेव सर्वतो ' जानन्ति '; अतः ' सः ' ' गार्हपत्यः ' अपि यजमानस्य मनोगतं स्वयमेव ' वेद ' जानाति । किमिति, ' परिदां ' परिदानं रक्षणम् उद्दिश्य ' मा ' माम् ' इदम् ' इदानीम् ' उपागात् ' उपगतोऽयं यजमान ' इति '। यस्मादेवं जानाति, तस्मात् स गार्हपत्योऽपि तूष्णीमेवोपस्थेयः । आहवनीयोपस्थानस्यापि तूष्णीं कर्त्तव्यतामाह—**तूष्णीमेवाहवनीयमि**त्यादिना । योजना तु पूर्ववत् ॥ ११–१३ ॥

एवं प्रवासादागतस्य यजमानस्याग्निविषयं कर्त्तव्यमुपदिश्य गृहविषयमपि तद् वक्तुं प्रतिजानीते—**अथात** इति[२] । उपचरणमुपचारः समाश्वासनं वक्ष्यत इति शेषः । "**गृहा मा बिभीत**" इति (वा. सं. ३।४१) मन्त्रेणोपस्थानं

---

१–' एवं प्रवत्स्यदुपस्थानस्यामन्त्रकपक्षमुक्त्वाऽऽगतोपस्थानस्यापि तमाह–' इति पाठः । २–गृहा मा बिभीतेत्येतत्य च। का. श्रौ. सू. ४–२९३ ।

प्रजापतिं वै भूतान्युपासीदन् । (न्प्र) प्रजा वै भूतानि व्विं नो धेहि यथा जीवामेति ततो देवा यज्ञोपवीतिनो भूत्वा दक्षिणं जान्वाच्योपासीदंस्तानब्रवीद्यज्ञो वोऽन्नममृतत्वं वऽऊर्ग्वः सूर्यो वो ज्योतिरिति ॥ १ ॥

---

तं गृहा उपसंश्रयन्ते—न वा अयमिहावादीत्, न किञ्चनाकरदिति । स यदिहापि सुक्रुद्ध इव स्यात्—श्व एव ततस्तत्कुर्यात्—यद् वदिष्यन्वा करिष्यन् वा स्याद् । एष उ गृहाणामुपचारः ।

इति अग्निहोत्रविधिः सम्पूर्णः ।

## अथ पिण्डपितृयज्ञः ।

प्रजापतिं वै भूतान्युपासीदन् । प्रजा वै भूतानि । 'वि नो धेहि यथा जीवाम' इति । ततो देवा

---

विधित्सुस्तेषां भयसम्भावनामाह—**एतद्ध वा** इति । 'प्रोषुषः' प्रवासं कृतवतो यजमानात् 'गृहाः' 'समुत्रस्ताः' भीताः 'इव' 'भवन्ति । भीतिकारणमाह—**किमय**मिति । 'अयं' यजमानोऽस्मद्विषयं 'किं वदिष्यति' 'किं वा करिष्यति' ' इति ' अनेनाभिप्रायेण तेषां भयशङ्का । **स यो** हेत्यदि । 'सः' खलु यजमान आगत्य तत्र 'गृहा मा बिभीत' इत्येतन्मन्त्रेण उपस्थानं विना यत् किञ्चिद् वदन् कुर्वन् वा भवति, अस्मद्विषये क्रुद्ध एवासौ वर्तत इति 'तस्मात्' यजमानाद् 'गृहाः' 'प्रत्रसन्ति' प्रकर्षेणोद्विजन्ते ॥

अस्तु गृहाणां प्रत्रासः; को दोषः इत्यत आह-**तस्येश्वर** इति । 'तस्य' यजमानस्य 'कुलं' वंशं 'विक्षोब्धोः' विनष्टं कर्तुम् 'ईश्वरः' । ईश्वर इति व्यत्ययेनैकवचनम् ( पा. सू. ३ । १ । ८५ । श्लो. वा. ) । ईश्वराः, गृहाः समर्था भवन्ति । **अथ यो** हेत्यादि । यस्तु गृहानुपगत्य किमपि न वदति, न करोति च, मौनमेव केवलं भजते, 'गृहा मा बिभीत'—इति मन्त्रेणोपस्थानं वा करोति, 'तं' यजमानं गृहाः 'उपसंश्रयन्ते' उपगच्छन्ति । उपसंश्रयतां तेषामभिप्रायमाह—**न वा** इति । 'न' खल्वयं यजमानः 'इह' अस्मिन् समये 'किम्' अपि 'न' 'अवादीत्', 'किम्' अपि च 'न' 'अकरत्' अकार्षीत्; यदि अस्मदपराधः स्यात्, तदा तद्विषयं वदिष्यति, यत् किञ्च करिष्यति च; तस्मात् अस्य यजमानस्य अस्मद्विषयः क्रोधो नास्तीत्यनेनाभिप्रायेण तमुपसंश्रयन्त इत्यर्थः ।

**स यदिहापी**त्यादि । 'इह' अस्मिन् गृहविषये यद्यपि 'सः' आगतो यजमानोऽपराधश्रवणात् 'क्रुद्धः' 'इव' एव 'स्यात्' 'ततः' तस्मादागमनदिवसात् 'श्वः' अनन्तरदिवसे 'एव' 'तत्' वक्तव्यं कर्तव्यं वोपचारनिवृत्तये प्रयुञ्जीत; न त्वागमनदिवसे इत्यर्थः । तदुक्तं सूत्रकृता—"गृहा मा बिभीतेति गृहानुपतिष्ठते, क्षेमाय व इति प्रविशति, न हिंस्यात् गृह्यान् कामं श्वः" ॥ १४ ॥ [ ४. १. ]

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे चतुर्थाध्यायस्य प्रथमं ब्राह्मणम् ।

अथामावास्यायां पिण्डपितृयज्ञस्य मासि मासि कर्त्तव्यतां विधित्सुस्तदर्थमाख्यायिकामाह—**प्रजापतिं वा**

---

१–'गृहानुपैति' इति का. श्रौ. सू. ४ । २९५ । २–का. श्रौ. सू. ४ । २९६ ॥

३–'श्रुत्यर्थमनुविधित्सुनाऽऽचार्येण पौर्णमासमनुविहितमिदानीमवसरप्राप्तं दर्शस्यानुविधानं कर्त्तव्यम्, तत्र च प्राक्कालीनः पिण्डपितृयज्ञः सोऽनुविधेय इति ( का. श्रौ. सू. ४ । १ ) भाष्ये कर्कः ।

( त्यु ) अथैनं पितरः। प्राचीनावीतिनः सव्यं जान्वाच्योपासीदंस्तानब्रवीन्मासि मासि वोऽशनᳬ स्वधा वो मनोजवो वश्चन्द्रमा वो ज्योतिरिति ॥ २ ॥

( न्यु ) अथैनं मनुष्याः। प्रावृता उपस्थं कृत्वोपासीदंस्तानब्रवीत्सायंप्रातर्वोऽशनं प्रजा वो मृत्युर्वोऽग्निर्वो ज्योतिरिति ॥ ३ ॥

---

यज्ञोपवीतिनो भूत्वा दक्षिणं जान्वाच्योपासीदन्। तानब्रवीत्–'यज्ञो वोऽन्नम्, अमृतत्वं वः, ऊर्ग्वः, सूर्यो वो ज्योतिः' इति ॥ १ ॥

अथैनं पितरः प्राचीनावीतिनः सव्यं जान्वाच्योपासीदन्। तानब्रवीत्–'मासि–मासि वोऽशनम्, स्वधा वः, मनोजवो वः, चन्द्रमा वो ज्योतिः' इति ॥ २ ॥

अथैनं मनुष्याः प्रावृता उपस्थं कृत्वोपासीदन्। तानब्रवीत्–'सायंप्रातर्वोऽशनम्। प्रजा वः, मृत्युर्वः, अग्निर्वो ज्योतिः' इति ॥ ३ ॥

---

इति। भवन्ति सद्भावं प्रतिपद्यन्त इति 'भूतानि'। 'प्रजाः' देवपितृमनुष्याद्या वक्ष्यमाणाः। तासामभिप्रायमाह–**वि न** इति। 'नः' अस्मान् 'विधेहि' त्वमित्थं कुरु–त्वमित्थं कुरु इत्याज्ञापय। 'यथा' येन प्रकारेण वयं 'जीवाम' जीवनवन्तो भवेम 'इति' अनेनाभिप्रायेणेत्यर्थः।

**ततो देवा** इत्यादि। प्रजापतेरुपासनहेतुत्वेनोपसदनसमये देवादिभिर्यद्यल्लिङ्गं धृतम्, तत्तल्लिङ्गानुसारेण तेषां देवादीनां यज्ञादिविशेषभाक्त्वं प्रजापतिर्जीवनहेतुत्वेनोपदिष्टवानिति प्रघट्टकार्थः। **यज्ञो वोऽन्नमिति**। हे देवाः! 'वः' युष्माकं 'यज्ञः' 'अन्नम्,' अतो युष्माकमेव 'अमृतत्वम्'; 'ऊर्क् बलं' च 'वः' युष्माकमेव; 'सूर्यः' एव 'वः' युष्माकं 'ज्योतिः' 'इति'।

एवं यज्ञोपवीतित्वादिलिङ्गयुक्तान् देवान् प्रेक्ष्य, यज्ञादिचतुष्टयं प्रजापतिः तेषां जीवनहेतुत्वेनोपदिष्टवान् ॥ १ ॥

**अथैनं पितर** इत्यादि। अत्राप्येवं योज्यम्। **मासि मासी**ति। प्रतिमासं दर्शेऽनुष्ठीयमानं यत् पिण्डपितृयज्ञाख्यं हविः, तद् 'वः' युष्माकम् 'अशनम्'; 'स्वधा'–कारोऽपि 'वः' युष्माकमसाधारणम्; मनस इव जवः 'मनोजवः' सोऽपि युष्माकमेव। सोमलोकवर्त्तिनां युष्माकं 'चन्द्रमाः' एव ज्योतिः भवत्विति ॥ २ ॥

**अथैनं मनुष्या** इत्यादि। प्रावृताः उत्तरवाससा संवृताः कण्ठलम्बितवाससः[1], निवीतिन इत्यर्थः। अत एव तैत्तिरीयकम्–"निवीतं मनुष्याणाम्, प्राचीनावीतं पितृणाम्, उपवीतं देवानाम्" ( तै. सं. २।५।११।१ ) इति। **उपस्थं कृत्वेति**। यतः प्रजापतेरुपसदनसमये मनुष्यैरुपस्थप्रावरणमनुष्ठितम्, अत एवेदानीं भुक्त्यादिसमये उपस्थप्रावरणेनोपसीदन्ति। **प्रजा व** इति। प्रजायन्त इति 'प्रजाः' पुत्रपौत्रादिरूपाः। "उपसर्गे च संज्ञायाम्"–( पा. सू. ३।२।९९ ) इति डप्रत्ययः। **मृत्युर्व** इति। देहारम्भकर्म्मोपजनितं मरणं 'वः' युष्माकमसाधारणो धर्म इत्यर्थः ॥ ३ ॥

---

१–'केवलवीतवासस' इति क. पाठः।

( त्यु ) अथैनं पशव उपासीदन् । ( दंस्ते ) तेभ्यः स्वैषमेव चकार यदैव यूयं कदा च लभाध्वै यदि काले यद्यनाकालेऽथैवाश्नाथेति तस्मादेते यदैव कदा च लभन्ते यदि काले यद्यनाकालेऽथैवाश्नन्ति ॥ ४ ॥

( न्त्यु ) अथ हैनथ्ँ शश्वदप्यसुराऽउपसेदुरित्याहुः । ( स्ते ) तेभ्यस्तमश्च मायां च प्रददावस्त्यहैवासुरमायेतीव पराभूता ह त्वेव ताः प्रजास्ता इमाः प्रजास्तथैवोपजीवन्ति यथैवाभ्यः प्रजापतिर्व्यदधात् ॥ ५ ॥

---

अथैनं पशव उपासीदन् । तेभ्यः स्वैषमेव चकार–' यदैव यूयं कदा च लभाध्वै–यदि काले, यद्यनाकाले–अथैवाश्नाथ ' इति । तस्मादेते यदैव कदा च लभन्ते–यदि काले, यद्यनाकाले–अथैवाश्नन्ति ॥ ४ ॥

अथ हैनं शश्वदप्यसुरा उपसेदुरित्याहुः । तेभ्यः तमश्च, मायां च प्रददौ । अस्त्यहैवासुरमायेतीव पराभूता ह त्वेव ताः प्रजाः । ता इमाः प्रजास्तथैवोपजीवन्ति–यथैवाभ्यः प्रजापतिर्व्यदधात् ५

---

गवादिपशूनामपि प्रजापत्युपसदनं, तत्कृतजीवनक्षयजनितं मरणं तदशनक्लृप्तिश्चाह–**अथैनं पशव** इत्यादिना । **स्वैषमेवेति** । यथा देवपितृमनुष्याणां यज्ञादिरूपां तत्क्लृप्तिं चकार, तथैव गवादिपशूनामपि तदुचिताहारक्लृप्तिं कृतवानित्यर्थः । तत्प्रकारं दर्शयति–**यदैवेति** । गवाद्याः पशवो यूयं 'यदा कदा च' काले अकाले वा तृणादि-रूपमाहारजातं ' लभाध्वै ', ' अथ ' अनन्तरमेव तत् लब्धं तृणाद्याहारजातम् ' अश्नाथ ' । 'इति'–शब्दः प्रजापतिवाक्यपरिसमाप्तौ । **तस्मादेत** इत्यादि । यस्मादेवं प्रजापतेः सकाशात् लब्धवराः, ' तस्मात् ' ' एते ' गवाद्याः पशवः तृणाद्याहारं ' यदा एव कदा च लभन्ते', ' काले ' वा ' अकाले ' वा, ' अथ ' अनन्तरमेव तद् भक्षयन्ति; न त्वस्मदादिवत् सायम्प्रातरादिकालविशेषमपेक्षन्त इत्यर्थः ॥ ४ ॥

अथासुरकृतं प्रजापतावुपसदनं परोक्षेण निर्दिशति–**अथ हैनमिति** । ' शश्वद् ' बहुकृत्वः ' असुरा अपि ' ' उपसेदुः ' उपसदनञ्चक्रुरित्यभिज्ञाः कथयन्ति । एवं देवपितृमनुष्यादीनामुपसदनमिव असुरकृतमुपसदनं जिज्ञासिष्यन्नाह–**तेभ्यस्तमश्च मायाश्चेति** । परेषां दृष्ट्याच्छादकं[1] तमः, अघटनघटनशक्तिर्माया[2] । तदुभयं यस्मात् प्रजापतिरसुरेभ्यो दत्तवान्, तस्मात् इदानीमपि ' असुरमाया ' असुरस्य स्वभूता मायेत्यस्ति व्यवहारः । अत एव ते मायाविन इत्याख्यायन्ते । **पराभूता ह त्वेवेति** । ' ताः ' असुर्याः ' प्रजाः ' देवादिवदन्नादीनां जीवनहेतूनां प्रजापतिसकाशादलाभात् केवलं तमोमायाभ्यां ग्रस्ताः सत्यः पराभवं प्राप्ता इत्यर्थः । इत्थं प्रजा-पतिना देवादिभ्यः कल्पितां वृत्तिं प्रदर्श्य, तदनतिक्रमेण तेषां जीवनं प्रतिपादयति–**ता इमा** इति । प्रजायन्त इति ' प्रजाः ' प्रागनुक्रान्ताः ' इमाः ' देवपितृमनुष्याद्याः, ' यथा ' येन प्रकारेण " यज्ञो वोऽन्नम् " इत्यादिना वृत्तिं प्रजापतिः कल्पितवान्, ' तथैव ' व्यवस्थितां वृत्तिं नियमेन देवाद्या उपजीवन्ति ॥ ५ ॥

---

१–' दृष्ट्याच्छादकसामर्थ्यं ' इति ' दृष्ट्याच्छादनं सामर्थ्यं ' इति च पा० । २–' अघटितघटनशक्तिर्माया ' इति पा. ।

( न्नै ) नैव देवा ऽअतिक्रामन्ति । न पितरो न पशवो मनुष्या ऽएवैकेऽति-क्रामन्ति तस्माद्यो मनुष्याणां मेद्यत्यशुभे मेद्यति विहूर्च्छति हि न ह्ययनाय चन भवत्यनृतꣳ हि कृत्वा मेद्यति तस्मादु सायंप्रातराश्येव स्यात्स यो हैवं विद्वान्त्सायंप्रातराशी भवति सर्वꣳ हैवायुरेति यदु ह किंच वाचा व्याहरति तदु हैव भवत्येतद्धि देवसत्यं गोपायति तद्धैतत्तेजो नाम ब्राह्मणं य एतस्य व्रतꣳ शक्नोति चरितुम् ॥ ६ ॥

---

नैव देवा अतिक्रामन्ति, न पितरो, न पशवः, मनुष्या एवैकेऽतिक्रामन्ति । तस्माद्यो मनुष्याणां मेद्यति–अशुभे मेद्यति विहूर्च्छति हि न हि अयनाय चन भवति । अनृतं हि कृत्वा मेद्यति । तस्मादु सायंप्रातराश्येव स्यात् । स यो हैवं विद्वान् सायंप्रातराशी भवति–सर्वं हैवायुरेति । यदु ह किञ्च वाचा व्याहरति–तदु हैव भवति । एतद्धि देवसत्यं गोपायति । तद्धैतत् । तेजो नाम ब्राह्म-णम्–य एतस्य व्रतं शक्नोति चरितुम् ॥ ६ ॥

---

**नैव देवा** इति । न तु ते प्रजापतेराज्ञामतिक्रामन्ति । अथ मनुष्याणामशने नियमं विधित्सुरनियमप्रसक्तिं दर्शयितुं प्रजापतिक्लृप्तेरतिक्रममुपन्यस्यति–**मनुष्या ऐवे**ति । 'एके' च नाम 'मनुष्याः' अज्ञानवशात् प्रजा-पतिना कल्पितां प्रागुदाहृतां वृत्तिम् 'अतिक्रामन्ति' यस्मादेवं 'तस्मात्' मनुष्याणां मध्ये 'यः' 'मेद्यति', स्निह्यति पुष्यतीति यावत् । "ञिमिदा स्नेहने"–( धा. पा. भ्वा. आ. ७४४ ) इति धातुः । स च मेद्य-न्मनुष्योऽदनादिजनितमदवशेन 'अशुभे' नरकपाताद्यनर्थहेतुभूते पापे 'मेद्यति' स्निह्यति, तात्पर्येण वर्त्तते । तस्मात् पापात् सः 'विहूर्च्छति' अधः पतति । 'हुर्च्छा कौटिल्ये'–( धा. पा. भ्वा.प.२११ ) इति धातुः । **अयनाय चने**ति । 'चन'–शब्दोऽप्यर्थे । 'अयनाय' पुण्यलोकगमनायापि 'न हि भवति' । कुत इत्यत आह–**अनृतं ही**ति । यस्मात् 'अनृतम्' असत्यम्, प्रतिषिद्धं 'कृत्वा' 'मेद्यति' प्रमत्तो भवति । इत्थं प्रजापत्याज्ञातिक्रमेणानियमदर्शनात् मनुष्येषु नियमापेक्षा विद्यत इति तात्पर्यार्थः । औपोद्घातिकं नियमविधिं दर्शयति–**तस्मा**दिति । सायम्प्रातरशितुं शीलमस्येति 'सायम्प्रातराशी' "सुप्यजातौ णिनिस्ताच्छील्ये"–( पा. सू. ३ । २ । ७८ ) इति णिनिः । 'एव'–कारेण अन्तरा भोजनं निवार्यते । विहितमनूद्य प्रशंसति–**स यो हैव**मिति । **यदु ह किञ्चे**ति । उक्तभोजनकालनियमवान् यदपि किञ्चिद् 'वाचं' 'व्याहरति' भाषते, तथैव यथार्थं भवति । 'हि' यस्माद्, असौ 'एतत्' 'देवसत्यं' देवेन प्रजापतिना कल्पितं सत्यं 'गोपा-यति' रक्षति । "गुपू रक्षणे"–( धा. पा. भ्वा ३९९ ) इति धातुः । "गुपूधूपविच्छि"–( पा. सू. ३ । १ । २८ ) इत्यायप्रत्ययः । 'तद्ध' तदेव सत्यं 'तेजो नाम' 'तेजः'–शब्दवाच्यतया प्रसिद्धं 'ब्राह्मणम्' ब्राह्मणसम्बन्धि रूपम् । कः पुनरसावीदृग्विधं देवसत्यं गोपायतीति तमाह–**य एतस्ये**ति । 'एतस्य' प्रजापतेरुच्चारितरूपं 'व्रतं' 'चरितुं' 'यः' यजमानः 'शक्नोति', स देवसत्यं गोपा-यतीति सम्बन्धः ॥ ६ ॥

---

१–'पुरुषो' इ. पा. । २–'प्रसन्नो–' इ. पा. ।

तद्वाऽएतत् । ( न्मा ) मासि मास्येव पितृभ्यो ददतो यदैवैष न पुरस्तान्न पश्चाद्दृशेऽथैभ्यो ददात्येष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः स एताᳪं रात्रिं क्षीयते तस्मिन्क्षीणे ददाति तथैभ्योऽसमदं करोत्यथ यदक्षीणे दद्यात्समदᳪं ह कुर्याद्देवेभ्यश्च पितृभ्यश्च तस्माद्यदैवैष न पुरस्तान्न पश्चाद्दृशेऽथैभ्यो ददाति ॥ ७ ॥

स वाऽअपराह्णे ददाति । पूर्वाह्णो वै देवानां मध्यन्दिनो मनुष्याणामपराह्णः पितॄणां तस्मादपराह्णे ददाति ॥ ८ ॥

---

तद्वा एतन्मासि मास्येव पितृभ्यो ददतो—यदैवैष न पुरस्तात् न पश्चात् ददृशे—अथैभ्यो ददाति । एष वै सोमो राजा देवानामन्नं—यच्चन्द्रमाः—स एतां रात्रिं क्षीयते । तस्मिन्क्षीणे ददाति । तथैभ्योऽसमदं करोति । अथ यदक्षीणे दद्यात्—समदं ह कुर्याद्, देवेभ्यश्च पितृभ्यश्च । तस्माद्यदैवैष न पुरस्तात् न पश्चाद् ददृशेऽथैभ्यो ददाति ॥ ७ ॥

स वा अपराह्णे ददाति । पूर्वाह्णो वै देवानाम्, मध्यन्दिनो मनुष्याणाम्, अपराह्णः पितॄणाम् । तस्मादपराह्णे ददाति ॥ ८ ॥

---

इत्थं पिण्डपितृयज्ञस्य मासि मासि कर्त्तव्यतां " मासि मासि वोऽशनं स्वधा वः "– ( श. प. २ का० १ ब्रा०२ कं. ) इत्यादिना प्रजापतिवाक्येन प्रतिपाद्येदानीं तं विधत्ते—**तद्वा एतदिति** । 'मासि मासि' प्रतिमासम् " नित्यवीप्सयोः "–( पा० सू० ८ । १ । ४) इति द्विर्वचनम् । जीवतां हि मनुष्याणां सायम्प्रातरशनं विहितम्, मरणादूर्ध्वं वस्वादिरूपेभ्यः पितृभावं प्राप्तेभ्यस्तेभ्यो मासि मास्येव पितृयज्ञरूपमशनं दातव्यमित्यभिप्रायः । स च पितृयज्ञोऽमावास्यायामेव कर्त्तव्यो नान्यस्यां तिथाविति प्रतिपादयति– **यदैवैष** इति । ' यदा ' यस्मिन्नेव काले 'एषः' चन्द्रः 'न' ' पुरस्तात् ' पूर्वस्यां दिशि, ' पश्चात् ' पश्चिमायामपि ' न ' ' ददृशे ' दृश्यते ' अथ ' अनन्तरमेव ' एभ्यः ' पितृभ्यः पिण्डान् दद्यात् । पुरस्तात् पश्चात् न ददृशे, इत्येतदुपपादयति—**एष वा** इति । ' यत् ' यः ' चन्द्रमाः ' नभसि दृश्यते, ' एषः ' खलु ' राजा' राजमानः ' सोमः' 'देवानामन्नम् ' इति; " यमादित्या अंशुमाप्याययन्ति "–( तै० सं० २ । ४ । १४ । २ । ) इति मन्त्रवर्णात् । ' सः ' (वरुणः)' एताम् ' अमावास्यादिवससम्बन्धिनीं ' रात्रिं ' प्राप्य ' क्षीयते ' क्षीणो भवति । तस्मिन् क्षीणे सति यः पितृभ्यो हविर्दद्यात्, तथा च सति एभ्यः पितृभ्यो देवैः साकम् ' असमदं' कलहं न ' करोति ' ' अथ ' 'यद्' यदि ' अक्षीणे ' दृश्यमाने तस्मिन् सोमे चतुर्दश्यां प्रतिपदि वा पितृभ्यो हविर्दद्यात्, तदा देवेभ्यः पितृभ्यश्च कलहं कुर्यात्; सोमस्य देवानामन्नत्वेन भोक्तुं देवैरपि सन्निधानात् दीयमानहविर्विषयः कलहो भवेदित्यर्थः । तस्मादिति, निगमनम् ॥ ७ ॥

अपराह्णकालं विधायोपपादयति– **स वा** इति । अह्नः पञ्चधा विभक्तस्य चतुर्थो भागोऽपराह्णः, तस्मिन् पिण्डपितृयज्ञोऽनुष्ठेयः । अत एव सूत्र्यते कात्यायनेन–"अपराह्णे पिण्डपितृयज्ञः, चन्द्रादर्शनेऽमावास्यायामिति"[३] ॥ ८ ॥

---

१–' वस्वादिरूपपितृभावं ' इति क० पा० । २–" वसून्वदन्ति वै पितॄन्रुद्रांश्चैव पितामहान् । प्रपितामहांस्त्वादित्यान्छ्रुतिरेषा सनातनी ॥ १ ॥ ३–(का. श्रौ. सू. ४ । १ ) ।

स जघनेन गार्हपत्यं। प्राचीनावीती भूत्वा दक्षिणासीन ऽएतं गृह्णाति स तत एवोपोत्थायोत्तरेणान्वाहार्यपचनं दक्षिणा तिष्ठन्नवहन्ति सकृत्फली-करोति सकृदु ह्येव पराञ्चः पितरस्तस्मात्सकृत्फलीकरोति॥ ९॥

तꣳ श्रपयति। तस्मिन्नधिश्रित ऽआज्यं प्रत्यानयत्यग्नौ वै देवेभ्यो जुह्व-त्युद्धरन्ति मनुष्येभ्योऽथैव पितृणां तस्मादधिश्रित ऽआज्यं प्रत्यानयति॥१०

स जघनेन गार्हपत्यं प्राचीनावीती भूत्वा दक्षिणासीन एतं गृह्णाति। स तत एवोपोत्थायोत्तरेणा-न्वाहार्यपचनं दक्षिणा तिष्ठन्नवहन्ति। सकृत्फलीकरोति। सकृदु ह्येव पराञ्चः पितरस्तस्मात्स-कृत्फलीकरोति॥ ९॥

तं श्रपयति–तस्मिन्नधिश्रित आज्यं प्रत्यानयति। अग्नौ वै देवेभ्यो जुह्वति, उद्धरन्ति मनुष्येभ्यः, अथैव पितृणाम्। तस्मादधिश्रित आज्यं प्रत्यानयति॥ १०॥

तत्र हविर्ग्रहणप्रकारमाह–**स जघनेन गार्हपत्यमि**ति। गार्हपत्यस्य पश्चिमदेशे व्रीहिपूर्णस्य निर्वापार्थस्य शकटस्य दक्षिणतः आसीनः प्राचीनावीती ऐवं पितृयज्ञार्थं हविर्गृह्णीयात्। मन्त्रस्याविहितत्वात् तूष्णीमेवैतद् ग्रहणम्। अत एव सूत्रितञ्च–"अपरेण गार्हपत्यं चरुमपूर्णं स्रुवं स्रुचं वा तूष्णीं गृहीत्वा"–इति। चर्वर्थं गृहीतानां व्रीहीणामवहननं विधाय प्रशंसति–**स तत एवे**त्यादिना। 'ततः' तस्मात् हविर्ग्रहणस्थानात्। **उत्तरेणे**ति। दक्षिणाग्नेरदूरेण उत्तरत इत्यर्थः। "एनबन्यतरस्याम्–" (पा. सू. ९। ३। ३९) इत्येनप्। "एनपा द्वितीया"– (पा. सू. २। ३। ३१) इति द्वितीया। **दक्षिणा तिष्ठन्नि**ति। दक्षिणतस्तिष्ठन् "दक्षिणादाच्"– (पा. सू. ९। ३। ३६) इति आच् प्रत्ययः।

ऐष्टिकहविष इव फलीकरणस्य त्रित्वं प्रसक्तमपवदितुं सकृत्त्वं विधत्ते–**सकृदि**ति। एकवारमेव फलीकुर्यात्, न तु त्रिः। तत्र हेतुमाह–**सकृदु ह्येवे**ति। 'हि' यस्मादु 'सकृत्' एकवारमेव 'पराञ्चः' पराञ्चो गताः प्रेताः 'पितरः' अभवन्, न तेषां पुनरावृत्तिरस्ति, अतस्तेषां सकृत्त्वमसाधारणो धर्मः॥ ९॥

श्रपणं विधत्ते–**तमि**ति। सकृत्फलीकृतांस्तण्डुलान् स्थाल्यां प्रक्षिप्य, तं चरुं दक्षिणाग्नौ श्रपयेदित्यर्थः। उद्वासनात् प्रागेव तस्मिंश्चरौ अभिघारणं विधत्ते–**तस्मिन्नि**ति। 'अधिश्रिते' अग्नेरुपरि स्थापिते 'तस्मिन्' चरौ पक्वे सति 'आज्यं' 'प्रत्यानयति' प्रतिक्षिपति। तदेतदुपपादयति–**अग्नौ वा** इति। देवार्थं यदाज्यम्, तत् 'अग्नौ' 'जुह्वति' यजमानाः। देवेभ्यो यदाज्यं देयं तत् होमेनैव दीयत इत्यर्थः। **उद्धरन्ती**ति। 'मनुष्येभ्यः' देयं यत् (आज्यम्), तत् तेषां पुरस्तात् भोजनपात्रेषु 'उद्धरन्ति' उद्धृत्य पुरतः स्थापय-न्तीत्यर्थः। **अथैवमि**ति। 'अथ'–शब्द उक्तवैलक्षण्ये। पितृणां तु एवमधिश्रितावस्थायामेव चरावाज्यमव-नेयमिति यथोक्तम्, एवमेव पितृभ्य आज्यं देयम्, न त्वग्नौ होमेनापि पुरस्तादुद्धरणेनापि। 'तस्मादिति' प्रतिज्ञातनिगमनम्॥ १०॥

१–'एतं' इति पा.। २–का. श्रौ. सू. ४। ४। ३–अपरेण गार्हपत्यं चरुमपूर्णं स्रुचं वा तूष्णीं गृहीत्वोत्तरेण दक्षिणाग्निमवहंति तिष्ठन्। का. श्रौ. सू. ४। ४॥ ४–सकृत्फलीकरोति। का. श्रौ. सू. ४।५। ५–दक्षिणाग्नौ श्रपणं होमश्च। का. श्रौ. सू.४। २।

स उद्वास्याग्नौ द्वेऽआहुती जुहोति देवेभ्यः । (भ्यो) देवान्वाऽएष ऽउपावर्तते यऽआहिताग्निर्भवति यो दर्शपूर्णमासाभ्यां यजतेऽथैतत्पितृयज्ञेनेवाचारीत्तदु देवेभ्यो निह्नुते स देवैः प्रसूतोऽथैतत्पितृभ्यो ददाति तस्मादुद्वास्याग्नौ द्वे आहुती जुहोति देवेभ्यः ॥ ११ ॥

स वाऽअग्नये च सोमाय च जुहोति । स यदग्नये जुहोति सर्वत्र ह्येवाग्निरन्वाभक्तोऽथ यत्सोमाय जुहोति पितृदेवत्यो वै सोमस्तस्मादग्नये च सोमाय च जुहोति ॥ १२ ॥

---

स उद्वास्याग्नौ द्वे आहुती जुहोति देवेभ्यः । देवान्वा एष उपावर्तते—य आहिताग्निर्भवति, यो दर्शपूर्णमासाभ्यां यजते। अथैतत् पितृयज्ञेनेवाचारीत्। तत् उ देवेभ्यो निह्नुते। स देवैः प्रसूतः—अथैतत्पितृभ्यो ददाति । तस्मादुद्वास्याग्नौ द्वे आहुती जुहोति देवेभ्यः ॥ ११ ॥

स वा अग्नये च सोमाय च जुहोति । स यदग्नये जुहोति—सर्वत्र ह्येवाग्निरन्वाभक्तः । अथ यत् सोमाय जुहोति । पितृदेवत्यो वै सोमः तस्मादग्नये च सोमाय च जुहोति ॥ १२ ॥

---

अथ तस्य चरोरुद्वासनपूर्वकं होमं विधत्ते—**स उद्वास्येति** । उद्वासनानन्तरं ' देवेभ्यः ' देवार्थम् ' अग्नौ ' ' द्वे आहुती ' जुहुयात् । यद्यपि ' अग्नये, ' 'सोमाय ' इति द्वयोरेवात्र होमः, तथापि देवेभ्य इति सामान्याभिप्रायेण बहुवचनम् । अत एव सूत्र्यते—" श्रपयित्वाऽभिघार्योद्वास्य मेक्षणेन जुहोति अग्नय इति सोमायेति च "—इति ॥

ननु पित्रर्थेन हविषा देवेभ्यो होमोऽनुपपन्न इत्याशङ्क्योपपादयति—**देवान् वा** इत्यादिना । ' यः आहिताग्निः ', ' यः ' च दर्शपूर्णमासयाजी ' एषः ' यजमानो ' देवान् ' ' उपावर्त्तते ' उपाहृतः, अतस्तेभ्यो देवेभ्यो हविरवश्यं देयमिति भावः । **अथैतदिति** । ' अथ '—शब्दोऽत्र वैपरीत्यद्योतकः । ' एतत् ' एतर्हि दैविकं कर्म परित्यज्य पित्र्येण कर्मणा ' अचारीत् ' पित्र्यं कर्म कृतवानित्यर्थः । तथा सत्यन्यदीयकर्मानुष्ठानेन देवानां कोपः स्यात् अतस्तन्निवृत्तये पित्र्येऽपि कर्मणि 'देवेभ्यः' होमेन तदपराधं 'निह्नुते' अपनयति, प्रीणयति वा । एवं होमेन तोषितैः 'देवैः' ' प्रसूतः ' अनुज्ञातः ' सः ' यजमानः ' अथ ' अनन्तरमेव ' एतत् ' हविः ' पितृभ्यः ' दद्यात् । उक्तमर्थं निगमयति—**तस्मादिति** ॥ ११ ॥

देवेभ्य इति साधारण्येनोक्तं विशिनष्टि—**स वा** इति । इतरान् देवान् परित्यज्य अग्नेः सोमस्य च हवने कारणमाह—**स यदग्नय** इति । ' सर्वत्र ' देवेषु च सर्वेषु कर्मसु ' अग्निः ' ' अन्वाभक्तः अनुप्रविष्टो भवति, न ह्यग्निमन्तरेण दैविकं पित्र्यं वा किञ्चित् कर्म निष्पद्यते, अतोऽत्राग्नेर्होमो युक्त इत्यर्थः । **पितृदेवत्यो वा** इत्यादि । यतः " चन्द्रमा वो ज्योतिः "—इति प्रजापतिः पितॄणां ज्योतिष्ट्वेन चन्द्रमसं कल्पितवान्, अतः स 'सोमः' पितृदेवत्यः । अत एव धूमादिमार्गेण पितॄणां चन्द्रलोकप्राप्तिराम्नाता—'चन्द्रमसमेव ते सर्वे गच्छन्ति '—( छां० उप० ५।१०।५ ) इति । यत एवम्, अतः पित्र्ये कर्मणि सोमाय हवनं युक्तमित्यर्थः ॥ १२ ॥

---

१–का. श्रौ. सू. ४।६।

स जुहोति । ( त्य ) अग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहेत्यग्नौ मेक्षणमभ्यादधाति तत्स्विष्टकृद्भाजनमथ दक्षिणेनान्वाहार्यपचनꣳ सकृदुल्लिखति तद्वेदिभाजनꣳसकृदु ह्येव पराञ्चः पितरस्तस्मात्सकृदुल्लिखति ॥ १३ ॥

( त्य ) अथ परस्तादुल्मुकं निदधाति । स यदनिधायोल्मुकमथैतत्पितृभ्यो दद्यादसुररक्षसानि हैषामेतद्विमथ्नीरंस्तथो हैतत्पितॄणामसुररक्षसानि न विमथ्नते तस्मात्परस्तादुल्मुकं निदधाति ॥ १४ ॥

---

स जुहोति–" अग्नये कव्यवाहनाय स्वाहा, सोमाय पितृमते स्वाहा "–( वा. सं. २।२९ ) इति । अग्नौ मेक्षणमभ्यादधाति–तत् स्विष्टकृद्भाजनम् । अथ दक्षिणेनान्वाहार्यपचनं सकृदुल्लिखति–तद् वेदिभाजनम् । सकृदु ह्येव पराञ्चः पितरः । तस्मात्सकृदुल्लिखति ॥ १३ ॥

अथ परस्तादुल्मुकं निदधाति । स यदनिधायोल्मुकमथैतत् पितृभ्यो दद्यात्–असुररक्षसानि हैषामेतद्विमथ्नीरन् । तथो हैतत् पितॄणामसुररक्षसानि न विमथ्नते । तस्मादुल्मुकं निदधाति ॥ १४ ॥

---

उक्तदेवतयोर्होममन्त्रौ विधत्ते–**स जुहोती**ति । ' कव्यं ' पित्र्यं हविः, तद् वहति पितॄन् प्रापयतीति ' कव्यवाहनः ' । " कव्यपुरीषपुरीष्येषु–" ( पा० सू० ३ । २ । ६९ ) इति ञ्युट् । एतच्च पितॄणामग्नेरसाधारणं नामधेयम् । अत एवाम्नायते–" त्रयो वा अग्नयो हव्यवाहनो देवानां, कव्यवाहनः पितॄणां, सहरक्षा असुराणाम्–" ( तै० सं० २ । ५ । ८ । ६ ) इति । ' कव्यवाहनाय अग्नये ' इदं हविः ' स्वाहा ' सुहुतमस्तु । पितृगणैर्युक्ताय ' सोमाय ' इदं हविः ' स्वाहा ' सुहुतमस्तु ।

मेक्षणस्याग्नौ प्रक्षेपं विधत्ते–**अग्नावि**ति । चरुमालोडय येन काष्ठेन गृहीत्वा हूयते, तत् ' मेक्षणम् ' । ' तत् ' अभ्याधानं ' स्विष्टकृद्भाजनम् ' अस्य होमस्य स्विष्टकृत्स्थानीयम् ॥

अथ पिण्डप्रदानाय स्थानविशेषं तत्संस्कारञ्च विधाय प्रशंसति–**अथ दक्षिणेने**ति । ' अथ '–शब्दोऽत्रान्यप्रतिषेधार्थः । दक्षिणाग्नेरदूरेण स्फ्येन ' सकृदुल्लिखति ' एकयत्नेन दक्षिणप्राचीं लेखां कुर्यात् । ' तत् ' उल्लिखितं स्थलं ' वेदिभाजनं ' वेदिस्थानीयम्, तत्कार्यकरमित्यर्थः । **सकृदु ह्येवे**त्यादि, उक्तार्थम् ॥ १३ ॥

उल्लिखितप्रदेशस्यान्ते अग्नेर्निधानं विधत्ते–**अथ परस्ता**दिति । ' परस्तात् ' परस्मिन् विप्रकृष्टे, पर्यन्ते इत्यर्थः । विपक्षे बाधविधानपुरस्सरमेतदुल्मुकनिधानमुपपादयति–**स यदि**ति । सुरविरोधीनि रक्षांसि ' असुररक्षसानि ', ' एषां ' पितॄणां स्वभूतम् ' एतत् ' पिण्डरूपं हविः ' विमथ्नीरन् ' अपहरेयुः । **तथो हे**ति । तथा चोल्मुकनिधाने सतीत्यर्थः । ' न विमथ्नते ' नापहरन्ति । " मन्थ विलोडने–" ( धा० पा० भ्वा० प० ४२ ) इति धातुः ॥ १४ ॥

---

१–प्रास्य तद्दक्षिणेनोल्लिखत्यपहता इत्यपरेण वा । ( का. श्रौ. सू. ४ । ७ ) अग्नौ मेक्षणं प्रास्य । अग्नेरेव दक्षिणेनापरेण वा स्फ्येनोल्लेखनमित्यर्थः । २–' उल्मुकं परस्तात् करोति ये रूपाणीति । ( का. श्रौ. सू. ४ । ८ ) लेखायाः परस्तादग्नै ।

१ निद॒धाति । ये॒ रूपाणि प्रतिमु॒ञ्चमाना॒ऽअसु॑राः स॒न्तः स्व॒धया॒ चर॒न्ति॥ प॒रा॒पुरो॒ निपुरो॒ ये भर॑न्त्य॒ग्निष्टाँल्लोका॒त्प्रणु॑दात्य॒स्मादित्य॒ग्निर्हि र॒क्षसाम॒पह॒न्ता त॒स्मादे॒वं नि॒दधाति ॥ १९ ॥

( त्यु ) अ॒थोदपात्र॒माद॒ायावनेजयति । ( त्यु ) अ॒सावव॒नेनिक्ष्वेत्येव य॒जमान॒स्य पितर॒मसाव॒वनेनिक्ष्वेति पितामह॒मसाव॒वनेनिक्ष्वेति प्र॒पितामहं त॒द्यथाऽशिष्य॒तेऽभिषि॒ञ्चेदे॒वं तत् ॥ १६ ॥

---

स निदधाति "ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति । परापुरो निपुरो ये भरन्त्यग्निष्टान् लोकात्प्रणुदात्यस्मात्"–( वा. सं. २ । ३० ) इति । अग्निर्हि रक्षसामपहन्ता तस्मादेवं निदधाति ॥ १९ ॥

अथोदपात्रमादायावनेजयति–"असाववनेनिक्ष्व" इत्येव यजमानस्य पितरम् । असाववनेनिक्ष्वेति पितामहम् । असाववनेनिक्ष्वेति प्रपितामहम् । तद् यथाऽशिष्यते अभिषिञ्चेदेवं तत् ॥ १६ ॥

---

विहिते उल्मुकनिधाने मन्त्रं विधत्ते–**स निदधातीति** । यदेतदुल्मुकनिधानं विहितम्, तत् "ये रूपाणि–" इत्यनेन मन्त्रेण कर्त्तव्यमित्यर्थः । मन्त्रार्थस्तु,–'ये' 'असुराः' मायावशात् पितॄणां रूपाणि 'प्रतिमुञ्चमानाः' धारयन्तः सन्तः पित्रर्थं दीयमानया 'स्वधया' सह 'चरन्ति' वर्त्तन्ते । 'ये' च पूर्वं 'परापुरः निपुरः' पूरणपिण्डदानेन युक्ताः संतो 'भरन्ति' हविर्हरन्ति । परापुरो निपुर इति, परा–नि–पूर्वात् पृणोतेः सम्पदादिलक्षणे भावे क्विपि बहुव्रीहिः; स च धातुरत्र पिण्डविषये दाने वर्त्तते । अत एवोक्तमाश्वलायनेन– "तस्यां पिण्डान् निपृणीयात् पराचीनपाणिः"–( आ० श्रौ० सू० २ । ६ । १९ ) इति । पुत्रपदनिर्वचनप्रसङ्गे यास्केनाप्युक्तम्–"पुत्रः, पुरु त्रायते; निपरणाद्वा, पुं नरकं ततस्त्रायत इति वा" ( निरु० २।३।२। ) इति । यद्वा 'पराः' प्रभूताः 'पुरः' शरीराणि येषां ते 'परापुरः'; 'नि' निकृष्टा अल्पाः 'पुरः' शरीराणि येषां ते 'निपुरः'; माहाकाया अल्पकायाश्चेत्यर्थः । एवं प्रच्छन्नवेषा असुरा ये सन्ति, 'तान्' 'अस्मात्' 'लोकात्' पिण्डपितृयज्ञस्थानात् 'अग्निः' 'प्रणुदाति' । लेटयाडागमः, ( पा० सू० ३।४।९४ ) प्रणुदत्वित्यर्थः । रक्षोनिहन्तृत्वमग्नेः प्रसिद्धमिति व्याचष्टे–**अग्निर्हीति** । 'एवं निदधाति' अग्निशब्दोपेतेन मन्त्रेण निदध्यादित्यर्थः ॥ १९ ॥

पिण्डदानस्य प्राच्याङ्गत्वेनावनेजनं विधत्ते–**अथोदपात्रमिति** । 'उदपात्रम्' उदकपूर्णं पात्रम् । "एकहलादौ पूरयितव्येऽन्यतरस्याम्"–( पा. सू. ६ । ३ । ५९ ) इत्युदकशब्दस्योदभावः । "असाववनेनिक्ष्व"– इत्यवनेजनमन्त्रः । तत्रादश्शब्दस्थाने सम्बुद्ध्यन्तं पित्रादीनां यथाक्रमं नाम निर्देष्टव्यम्,–हे यज्ञशर्म्मन् मम पितः ! 'अवनेनिक्ष्व' दास्यमानं पिण्डं भोक्तुम् आत्मीयौ पाणी शोधयेति मन्त्रार्थः । "णिजिर् शौचपोषणयोः" ( धा. पा. जु. उ. ११ )–इति धातुः । एवं पितामहप्रपितामहविषयौ मन्त्रौ योज्यौ ।

---

१–उदपात्रेणावनेजयत्यपसव्य॰ सव्येन वोद्धरणसामर्थ्यात् । ( का० श्रौ० सू० ४ । ९ । ) २–असाववनेनिक्ष्वेति यजमानस्य पितृप्रभृति त्रीन् । ( का० श्रौ० सू० ४ । १० ) यजमानस्येति अध्वर्युकर्तृकत्वे ।

( ङु ) अुथ सकृदाच्छिन्नान्युपमूलं दिनानि भवन्ति । ( न्त्यु ) अुग्रमिव वै देवानां मुध्यमिव मनुष्याणां मूलमिव पितृणां तुस्मादुपमूलं दिनानि भवन्ति सकृदाच्छिन्नानि भवन्ति सकृदु ह्येव पुराञ्चः पितुरस्तुस्मात्सकृदाच्छिन्नानि भवन्ति ॥ १७ ॥

तानि दक्षिणोपस्तृणाति । तुत्र ददाति स वाऽ इति ददातीतीव वै देवेभ्यो जुह्वत्युद्धरन्ति मनुष्येभ्योऽथैवं पितृणां तुस्मादिति ददाति ॥ १८ ॥

---

अथ सकृदाच्छिन्नान्युपमूलं दिनानि भवन्ति । अग्रमिव देवानाम्, मध्यमिव मनुष्याणाम्, मूलमिव पितृणाम् । तस्मादुपमूलं दिनानि भवन्ति । सकृदाच्छिन्नानि भवन्ति । सकृदु ह्येव पराञ्चः पितरः । तस्मात् सकृदाच्छिन्नानि भवन्ति ॥ १७ ॥

तानि दक्षिणोपस्तृणाति । तत्र ददाति । स वा इति ददाति । इतीव वै देवेभ्यो जुह्वति, उद्धरन्ति मनुष्येभ्यः, अथैवं पितृणाम् । तस्मादिति ददाति ॥ १८ ॥

---

अस्यावनेजनस्य पिण्डदानात् प्राक्कर्त्तव्यतां दृष्टान्तेनोपपादयति–**तद्यथेति** । 'अशिष्यते' भोक्ष्यमाणाय पुरुषाय यथा 'अभिषिञ्चेत्' उदकं हस्ते ददाति, 'एवम्' एव तत् पितृणामवनेजनमित्यर्थः ॥ १६ ॥

अथ तस्मिन्नुल्लिखिते स्थाने बर्हिः स्तरितुं तत्सम्पादनं विधत्ते–**अथ सकृदाच्छिन्नानी**ति । एकयत्नेन च्छिन्नानि । 'उपमूलं' मूलसमीपे । 'दिनानि' खण्डितानि बर्हींषि पितृयज्ञार्थानि 'भवन्ति', एवंगुणविशिष्टानि बर्हींष्याहर्त्तव्यानीत्यर्थः । मूलसमीपे छेदनमुपपादयति–**अग्रमिवे**त्यादिना । अत एव तैत्तिरीयकेऽप्याम्नायते–"यत् परुषि दिनं तद् देवानां, यदन्तरा तन्मनुष्याणां, यत् समूलं तत् पितृणाम्"–इति । छेदनगतं सकृत्त्वमनूद्य स्तौति–**सकृदाच्छिन्नानी**ति ॥ १७ ॥

बर्हिषः स्तरणं विधत्ते–**तानी**ति । 'दक्षिणा' दक्षिणतः, उल्लिखितप्रदेशे 'तानि' बर्हींषि 'उपस्तृणाति' । तथैव कात्यायनेन सूत्रितम्–" उपमूलं सकृदाच्छिन्नानि लेखायां कृत्वा "–( का. श्रौ. सू. ४।११ ) इति । पिण्डदानं विधत्ते–**तत्रे**ति । 'तत्र' तस्मिन् बर्हिषाऽऽस्तीर्णे देशे पिण्डान् दद्यादित्यर्थः । तत्र प्रकारविशेषमभिनयेन विधत्ते–**स वा इती**ति । 'इति' अनेन प्रकारेण अंगुष्ठतर्जन्योर्मध्येन पित्र्येण तीर्थेनेत्यर्थः । देवमनुष्यसम्प्रदानके दाने तद्वैपरीत्यकथनेनोपपादयति–**इतीव वै देवेभ्य** इति । अनेन खलु प्रकारेण अंगुल्यग्रेण देवतीर्थेन 'देवेभ्यः' हवींषि 'जुह्वति' 'मनुष्येभ्यः' तु यथायोगं भोक्तव्यमन्नम् 'उद्धरन्ति' उद्धृत्य पात्रान्तरे स्थापयन्ति । न तु तत्र देवपित्रादितीर्थविशेषोऽपेक्षितः । **अथैव**मिति । 'अथ'–शब्द उक्तवैलक्षण्यद्योतनार्थः । देवमनुष्यवैलक्षण्येन एवमुक्तेन पित्र्येण तीर्थेन पितृणां सम्बन्धि हविर्देयमित्यर्थः । **तस्मादि**ति । प्रतिपादितार्थनिगमनम् ॥ १८ ॥

---

१–उपमूल॰सकृदाच्छिन्नानि लेखायां कृत्वा यथाऽवनिक्तं पिंडान् ददात्यसावेतत्त इति । का० श्रौ० सू० ४।११। उपमूलमिति अन्यपदविग्रहो नित्यसमासः । मूलसमीपे यानि सकृदाच्छिन्नानि तानि उपमूलं दिनानि बर्हिस्तृणानि ; अन्यत्रापि तृणार्थे इत्युक्तत्वादिति कर्कः ।

स ददाति । ( त्यु ) असावेतत्त ऽइत्येव यजमानस्य पित्रे ये च त्वामन्वित्यु हैक ऽआहुस्तदु तथा न ब्रूयात्स्वयं वै तेषाᳪ सह येषाᳪ सह तस्मादु ब्रूयादसावेतत्त ऽइत्येव यजमानस्य पित्रेऽसावेतत्त ऽइति पितामहायासावेतत्त ऽइति प्रपितामहाय तद्यदितः पराग्ददाति सकृदु ह्येव पराञ्चः पितरः ॥ १९ ॥

तत्र जपति । ( त्यु ) अत्र पितरो मादयध्वं यथाभागमावृषायध्वमिति यथाभागमश्नीतेत्येवैतदाह ॥ २० ॥

---

स ददाति–असावेतत्ते इत्येव यजमानस्य पित्रे, ये च त्वामन्वित्यु हैक आहुः । तदु तथा न ब्रूयात् । स्वयं वै तेषां सह येषां सह । तस्मादु ब्रूयाद्–असावेतत्त इत्येव यजमानस्य पित्रे । असावेतत्त इति पितामहाय, असावेतत्त इति प्रपितामहाय । तद् यदितः पराग्ददाति–सकृदु ह्येव पराञ्चः पितरः ॥ १९ ॥

तत्र जपति–"अत्र पितरो मादयध्वं यथाभागमावृषायध्वम्"–( वा. सं. २।३१ ) इति । यथाभागमश्नीतेत्येवैतदाह ॥ २० ॥

---

पितृपितामहप्रपितामहानां विहिते पिण्डदाने मन्त्रान् विधत्ते–**स ददातीत्यादिना** । "**असावेतत्ते**"–( का० श्रौ० सू० ४ । ११ ) इति पिण्डदानमन्त्रः । तत्र 'असौ'–इत्यस्य स्थाने पित्रादीनां नाम सम्बुद्ध्यन्तं निर्देष्टव्यम् । हे यज्ञशर्म्मन् ! 'एतत्' पिण्डरूपं हविः 'ते' तुभ्यं मया दीयत इति मन्त्रार्थः । "**ये च त्वामनु**"–इति वक्ष्यमाणशाखान्तराभिमतमन्त्रशेषनिरासार्थः 'एव'–कारः । अनेन च मन्त्रेण प्रथमं यजमानस्य पित्रे पिंडं दद्यात्; अनेनैव पितामहप्रपितामहयोरपि पिण्डदानम् । तत्रैकीयं मतमुपन्यस्य दूषयति–**ये च त्वेति** । तस्य च मन्त्रशेषस्यायमर्थः,–हे पितः ! 'त्वाम्' 'अनु'–सृत्य 'ये वर्त्तन्ते तेभ्यश्चायं पिण्डः तृप्तिं करोत्विति । **स्वयं वा** इत्यादि । पित्रनन्तरभाविनां यच्छब्दनिर्दिष्टानां तेषां 'स्वयं' पिण्डदाता सहभावी भवति । तथा य एव एषां स्वयं सहभावी, तेभ्यः पिण्डदाने स्वात्मन पिण्डं दत्तवान् भवति । अतस्तत्प्रतिपादको "**ये च त्वामनु**"–इति मन्त्रभागो न वक्तव्य इत्यर्थः । प्रथमं पक्षं निगमयति–**तस्मादिति** । **तद्यदित** इत्यादि । अनेन हि क्रमेण ते पितृत्वं प्राप्ताः–प्रथमं प्रपितामहः, पश्चात् पितामहः, ततः पितेति; इमं क्रमं परित्यज्य पिण्डदाने 'इतः' पितृत आरभ्य प्रपितामहान्तं 'पराक्' पराचीनं पिण्डान् दद्यात्; यतस्ते पितरः सकृत्त्वपराक्त्वधर्मयुक्ता इत्यर्थः ॥ १९ ॥

पिण्डदानानन्तरं मन्त्रजपं विधत्ते–**तत्र जपतीति**[२] । तद्गतं किञ्चित् पदं व्याचष्टे–**अत्रेति** । मन्त्रार्थस्तु,–'अत्र' अस्मिन् देशे हे 'पितरः !' 'मादयध्वम्' तृप्ता भवत, तदर्थं च 'यथाभागं' स्वं स्वं भागमनतिक्रम्य मया दत्तान् पिण्डान् 'आवृषायध्वम्' अश्नीतेति । वृषायध्वमित्यस्यैतदर्थपरतां श्रुतिः स्वयं व्याचष्टे–**यथाभागमश्नीतेत्येवैतदाहेति** ॥ २० ॥

---

१–'ये च त्वामन्विति चैके' । का. श्रौ. सू. ४ । १२ । २–अत्र पितर इत्युक्त्वोदङ्ङास्त आतमनात् का. श्रौ. सू. ४ । १३ ।

( ह्रा ) अथ पुराङ्पर्य्यावर्तते । तिर इव वै पितुरो मनुष्येभ्यस्तिर इवैतुद्भवति स वाऽआतुमितोरासीतेत्याहुरेतावान्ह्यसुरिति स वै मुहूर्तमेवाासित्वा ॥ २१ ॥

( त्वाऽथो ) अुथोपपल्युय्य जपति । ( त्यु ) अुमीमदन्त पितुरो यथाभागमावृषायिषतेति यथाभागमाशिषुरित्येवैतदाह ॥ २२ ॥

( ह्रा ) अुथोदपात्रमादायावनेजयति । ( त्यु ) अुसावुवनेनिक्ष्वेत्येव युज-

---

अथ पराङ् पर्यावर्त्तते । तिर इव वै पितरो मनुष्येभ्यः । तिर इवैतद्भवति । स वा आतमितोरासीतेत्याहुः । एतावान्ह्यसुरिति । स वै मुहूर्तमेवासित्वा ॥ २१ ॥

अथोपपल्यय्य जपति । "अमीमदन्त पितरो यथाभागमावृषायिषत"-(वा० सं० २ । ३१) इति । यथाभागमाशिषुरित्येवैतदाह ॥ २२ ॥

अथोदपात्रमादायावनेजयति-" असाववनेनिक्ष्व " इत्येव यजमानस्य पितरम् । असाववनेनिक्ष्वेति पितामहम् । असाववनेनिक्ष्वेति प्रपितामहम्, तद् यथा जक्षुषेऽभिषिञ्चेदेवं तत् ॥ २३ ॥

---

जपानन्तरं परागावर्त्तनं विधत्ते-**अथ पराङ् पर्यावर्त्तत** इति । पराङ्मुखः सन् पिण्डाभिमुख्यं विहाय पर्यावर्तेतेत्यर्थः । एतदुपपादयति-**तिर इवेति** । पितरो हि मनुष्येभ्यः तिरोभूताः; अन्तर्द्धानशक्तियोगात् । अतः पितॄणां तिरोधानेन भवितव्यम् । एतर्हि पिण्डदातरि पर्यावर्त्तमाने सति तेषां ' तिर इव ' तिरोधानमिव भवति । पर्यावर्त्तनकालस्य परिमाणं विधत्ते-**स वा** इति । स खलु पर्यावर्तमानः ' आतमितोः ' निरुद्धश्वासगतेरात्मनो यावत् तमनं ग्लानिः भवति, तावत् आसीत ' इति ' केचित् ' आहुः ' प्रतिपादयन्ति । " तमु ग्लानौ " ( धा० पा० दि० प० ९६ ) इत्यस्मात् " भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन् "-( पा० सू० ३ । १६ ) इति तोसुन् प्रत्ययः । तत्रोपपत्तिमाह-**एतावानिति** । एतावत्परिमाणो भवति । तस्मादेतावन्तं कालमासीतेति । पक्षान्तरमाह-**स वा** इति । ' सः ' खलु ' मुहूर्त्तं ' द्वादशक्षणात्मको यो मुहूर्त्तसंज्ञकः कालः, तावत्पर्यन्तम् ' एव ' आसीतेत्यर्थः । एवकारः पूर्वोक्तपक्षव्यवच्छेदार्थः । ' आसित्वा '-इति ' क्त्वा '-प्रत्ययः वक्ष्यमाणक्रियापेक्षः ॥ २१ ॥

उक्तकालानन्तरं पर्यावर्त्तमानस्य मन्त्रज विधत्ते-**अथेति** । ' उपपल्यय्य ' पिण्डसमीपं परिप्राप्य । परिपूर्वादयतेर्ल्यपि " उपसर्गस्यायतौ "-( पा. सू. ८ । २ । १९। ) इति लत्वम् । अमीमदन्तेति मन्त्रं जपेत् । अर्थस्तु-' पितरः ' पिण्डपितृदेवताः ' अमीमदन्त ' तृप्ता अभूवन् । तृप्त्यर्थान्मादयतेर्ण्यन्ताल्लुङि चङि रूपम् । ते च ' यथाभागं ' स्वं स्वं भागमनतिक्रम्य ' आवृषायिषत ' अभुक्षत ' इति ' तत्र ' आवृषायिषत '-इति पदस्य विवक्षितमथमाह-**यथेति** । आङ्पूर्वो वृषयतिरभ्यवहारे वर्त्तते, तस्माल्लुङि बहुवचनान्तमेतत् पदम्, अतः ' आशिषुः ' ' इति ' तस्य व्याख्यानम् । " अश् भोजने "-( धा. पा. क्र्या. प. ९१ ) इत्यस्माल्लुङि बहुवचने आशिषुरिति रूपम् ॥ २२ ॥

पिण्डदानात् प्रागिवेदानीमपि पित्रादीनामुदकावनेजनं विधत्ते-**अथोदपात्रमिति** । "असाववनेनिक्ष्व" इति

---

१-' विच्छाय ' इति क. । २-इदानींतनधातुपाठे तु ' तमु कांक्षायां ' इति पाठो लभ्यते । ३-" आवृत्यामीमदंतेति जपति । श्रौ० सू० ४ । १४ । ४-अवनेज्य पूर्ववत् । ४ । १५ ।

मानस्य पि॒तर॑मु॒सावु॑वने॒निक्ष्वे॒ति पि॒ताम॑हमु॒सावु॑वने॒निक्ष्वे॒ति प्रपिता॑महं तद्यथा जक्षुषेऽभिषिञ्चेदेवं तत् ॥ २३ ॥

( ड ) अ॒थ नी॒विमु॒द्वृह्य॒ नम॒स्क॑रोति । पि॒तृदे॑व॒त्या वै नी॒विस्तस्मा॑न्नी॒विमु॒द्वृह्य॒ नम॒स्क॑रोति य॒ज्ञो वै नमो॑ य॒ज्ञिया॑नेवै॒नाने॒तत्क॑रोति षट् कृत्वो॒ नम॒स्क॑रोति ष॒ड्वा ऽऋ॒तव॑ ऋ॒तव॑: पि॒तर॒स्तस्मा॒त्षट्कृ॑त्वो॒ नम॒स्क॑रोति गृ॒हान्न॑: पितरो दत्ते॒ति गृ॒हाणा॑᳚ ह पि॒तर॑ ऽईशत॒ ऽए॒षो ऽए॒तस्या॒शीः कर्म॑णोऽथाव॑जिघ्रति प्रत्य॑वधाय॒ पि॒ण्डान्त्स य॑जमानभा॒गोऽग्नौ स॒कृदा॑च्छिन्ना॒न्यभ्या॑दधाति पुनरुल्मु॒कम॒पिसृ॑जति ॥ २४ ॥

इति तृतीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ ३ ॥ ४ ॥ ( ४ । २ )

---

अथ नीविमुद्वृह्य नमस्करोति । पितृदेवत्या वै नीविः । तस्मान्नीविमुद्वृह्य नमस्करोति । यज्ञो वै नमो यज्ञियानेवैनानेतत्करोति । षट् कृत्वो नमस्करोति । षड्वा ऋतवः । ऋतवः पितरः । तस्मात् षट्कृत्वो नमस्करोति । " गृहान्नः पितरो दत्त "–( वा. सं. २ । ३२ ) इति । गृहाणां ह पितर ईशते । एषो एतस्याशीः कर्मणः । अथावजिघ्रति प्रत्यवधाय पिण्डान् । स यजमानभागः । अग्नौ सकृदाच्छिन्नान्यभ्यादधाति । पुनरुल्मुकमापिसृजति ॥ २४ ॥ इति पिण्डपितृयज्ञाधिकारः ॥

---

तन्मन्त्रः । तत्र तत्र त्रिष्वपि मन्त्रेषु ' असौ ' इत्यस्य स्थाने पित्रादीनां नामानि क्रमेण निर्दिशेत् । अर्थस्तु प्रागेव दर्शितः । एतदवनेजनं लोकव्यवहारेणोपपादयति–**तद्यथे**ति । ' तत् ' तत्र विषये निदर्शनमभिधीयते । यथा ' जक्षुषे ' भुक्तवते पुरुषाय मुखप्रक्षालनार्थं हस्ते उदकम् ' अभिषिञ्चेत् ' ' एवम् ' एव ' तत् ' पिण्डदानानन्तरभावि जलावसेचनमित्यर्थः । ' जक्षुषे ' इति अदेर्लिटः क्वसौ " लिट्यन्यतरस्याम् "–( पा. सू. २ । ४ । ४० ) इति घसादेशः, पुनश्चतुर्थ्येकवचने सम्प्रसारणे च रूपम् ॥ २३ ॥

नमस्कारं विधत्ते–**अथ नीविमि**ति । ' नीविः ' परिधानीयस्य वाससो दशा, ताम् ' उद्वृह्य ' विस्रंस्य पितॄन् ' नमस्करोति ' । तत्र विस्रंसने कारणमाह–**पितृदेवत्ये**ति । यतो ' नीविः ' ' पितृदेवत्या ' पितृदेवतार्था, पितॄणां तृप्तिकरीति यावत् । " देवतान्तात् तादर्थ्ये यत् " ( पा. सू. ५ । ४ । २६ ) । 'तस्मात्' तां ' नीविम् '–' उद्वृह्य ' विस्रंस्य प्रदर्श्य ते नमस्कर्त्तव्या इत्यर्थः । नीवेः पितृदेवत्यत्वं तैत्तिरीयकेऽप्याम्नातम्–" अग्नेस्तूषाधानं, वायोर्वातपानं पितॄणां नीविः "–( तै. सं. ६ । १ । १ । ३ ) इत्यादि । नमस्कारस्य प्रयोजनमाह–**यज्ञो वा** इति । नमस्कारेण हि पूजा गम्यते, ' यज्ञः ' पूजात्मकः; " यज देवपूजा "–( धा. पा. भ्वा.उ.१०२७) इति यजतेस्तदर्थत्वात् । अतो नमश्शब्दो यज्ञात्मकः । तेन नमस्कारेण ' एनान् ' पितॄन् ' यज्ञियान् ' यागार्हान् ' एव ' ' करोति ' । " यज्ञर्त्विग्भ्यां घखञौ "–( पा. सू. ५ । १ । ७१ ) इति अर्हार्थे घप्रत्ययः । विहितश्च नमस्कारो " नमो वः "–इति मन्त्रेण कर्त्तव्यः । उक्तं हि कात्यायनेन–

---

१–इह सूत्रदाने पिण्डप्राशने ऊर्जधारादाने च मन्त्राः संहितायां पठ्यन्ते त इह न सन्ति ।

" नीविं विस्रंस्य नमो व इत्यञ्जलिं करोति "–( का. श्रौ. सू. ६ । १९ ) इति । तस्मिंश्च मन्त्रे षड्भ्यो " नमः "–इति प्रयुज्यते, तत्सङ्ख्यामनूद्य स्तौति–**षट्कृत्वः** इति । " नमो वः पितरो रसाय " " नमो वः पितरः शोषाय "–इत्येवं षड्वारं नमस्कुर्यादित्यर्थः । **ऋतवः पितर** इति । वसन्ताद्यृतुषु प्रमीतस्य तत्तदनुरूपत्वप्राप्तेस्तादात्म्यव्यपदेशः । तथा चान्यत्र श्रूयते–" यस्मिन्नृतौ पुरुषः प्रमीयते, सोऽस्यामुष्मिल्लोके भवति–यदि वसन्ते प्रमीयते, वसन्तो भवति "–इत्यादि । तस्मात् तेषामृतूनां षट्सङ्ख्यात्वयोगात् तादात्म्यापन्नानां पितॄणां नमस्कारोऽपि षड्वारः कर्त्तव्य इति युक्तमुक्तम्–" नमो वः पितरः " इति ।

नमस्कारमन्त्रो निगदव्याख्यात इत्यभिप्रेत्य तच्छेषमुपादाय व्याचष्टे–**"गृहान्नः पितरो दत्त इति"**–इति । शेषसहितस्य तस्य मन्त्रस्यायमर्थः–हे पितरः ! युष्मत्सम्बन्धिने ' रसाय ' वसन्तर्त्तुजाताय नमोऽस्तु । हे पितरः ! युष्मत्सम्बन्धिने ग्रीष्मजन्याय 'शोषाय' शोषणाय नमोऽस्तु । एवमुत्तरत्रापि योज्यम् । ' जीवः' वर्षर्तौ वृष्ट्यर्थं क्रियमाणो वेगः । ' स्वधा '–इति अन्ननाम, ( निघं. २ । ७ । १७ ) व्रीह्यादिरूपमन्नञ्च शरदादिषु पच्यते; अतः शरदृतुसम्बन्धिने अन्नायेत्यर्थः । हेमन्तशिशिरयोर्हिमेन सर्वेषां पीडनात् तद्रूपौ पितृधर्मौ ' घोरमन्यू ' । " नमो वः पितरः पितरो नमो वः "–इति व्यतिहारोक्तिरादरातिशयद्योतनार्था । एवं नमस्कृतान् पितॄन् प्रार्थयते–हे ' पितरः ' ! ' नः ' अस्मभ्यम् ' गृहान् ' पुत्रपौत्रादिरूपान् ' दत्त ' प्रयच्छत । पितॄणां दानसामर्थ्यं मन्त्रशेषस्य चाशीःपरत्वं स्पष्टमिति व्याचष्टे–**गृहाणामिति** । ' पितरः ' खलु ' गृहाणाम् ' ' ईशते ' ईश्वरा भवन्ति । " अधीगर्थदयेशाम् "–( पा. सू. २ । ३ । ५२ ) इति कर्मणि षष्ठी । ' एतस्य ' पिण्डपितृयज्ञाख्यस्य ' कर्मणः ' ' एषा ' ' आशीः ' फलप्रार्थना ' उ ' एवेत्यर्थः ।

पिण्डशेषस्यावघ्राणं विधत्ते–**अथावजिघ्रतीति** । " घ्रा गन्धोपादाने "–( धा. पा. भ्वा. प. ९१ ) इत्यस्माल्लटि " पाघ्राध्मा "–( पा. सू. ७ । ३ । ७८ ) इति जिघ्रादेशः । तथा च अवघ्राणं ' पिण्डान् ' पिण्डपात्रे ' प्रत्यवधाय ' प्रतिक्षिप्य कर्त्तव्यम् । तच्चावघ्राणं ' यजमानभागः ' यजमानस्य स्वकीयोंऽश इति विधेयभागापेक्षया पुंल्लिङ्गनिर्देशः । स्तीर्णस्य वर्हिषः प्रतिपत्तिं विधत्ते–**अग्नाविति** । ' अभ्यादधाति ' प्रक्षिपतीत्यर्थः । उल्मुकस्यापि संसर्जनं विधत्ते–**पुनरिति** । **" ये रूपाणि"**–इति मन्त्रेण यदुल्मुकं पुरस्तात् पृथक्कृतम्, तदिदानीं पुनः संसृजेदित्यर्थः ॥ २४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे चतुर्थाध्यायस्य द्वितीयं ब्राह्मणम् ॥ ( २–४–२ )

---

१–एतद्व इत्युपास्यति सूत्राणं प्रतिपिंडम् । का. श्रौ. सू. ४ । १६ । सूत्राणीति–बहुवचनोपदेशात्–त्रीणि त्रीणीति कर्कः । ऊर्णादशा वा । का. श्रौ. सू. ४ । १७ । वयस्युत्तरे यजमानलोमानि वा ४ । १८ । उत्तरे वयसि पंचाशताद्धूर्ध्वमिति कर्कः । ऊर्ज्जमित्यपो निषिंचति का. श्रौ सू. ४–१९ ॥ पिंडमूलेषु–तर्पयत मे पितॄन् इति लिंगादिति कर्कः । अवधायावजिघ्रति यजमानः । का. श्रौ. सू. ४–२० । उल्मुकसकृदाच्छिन्नान्यग्नौ का. श्रौ. सू. ४ । २१ । अभ्यादधातीति वाक्यशेषः । पूर्वं सकृदाच्छिन्नानि–तत उल्मुकम् । अग्नौ, सकृदाच्छिन्नान्यग्नावभ्यादधाति पुनरुल्मुकमपिसृजतीति वचनात् । अजादिवादल्पाक्षरत्वाच्च पूर्वनिपात इति कर्कः ।

तदु होवाच कहोडः कौषीतकिः । ( र ) अनयोर्वा ऽअयं द्यावापृथिव्यो रसोऽस्य रसस्य हुत्वा देवेभ्योऽथेममश्नामेति तस्माद्वाऽआग्रयणेष्ट्या यजत ऽइति ॥ १ ॥

तदु होवाच याज्ञवल्क्यः । ( ल्क्यो ) देवाश्च वा ऽअसुराश्चोभये प्राजापत्याः पस्पृधिरे ततोऽसुरा ऽउभयीरोषधीर्याश्च मनुष्या उपजीवन्ति याश्च पशवः कृत्ययेव त्वद्विषेणेव त्वत्प्रलिलिपुरुतैवं चिद्देवानभिभवेमेति ततो न मनुष्याऽआशुर्न पशव ऽआलिलिशिरे ता हेमाः प्रजा ऽअनाशकेन नोत्पराबभूवुः ॥ २ ॥

---

तदु होवाच कहोडः कौषीतकिः । अनयोर्वा अयं द्यावापृथिव्यो रसः । ' अस्य रसस्य हुत्वा देवेभ्यः, अथेममश्नाम ' इति । तस्माद्वा आग्रयणेष्ट्या यजत इति ॥ १ ॥

तदु होवाच याज्ञवल्क्यः । देवाश्च वा असुराश्चोभये प्राजापत्याः पस्पृधिरे । ततोऽसुरा उभयीरोषधीः याश्च मनुष्या उपजीवन्ति, याश्च पशवः—कृत्ययेव त्वद्, विषेणेव त्वत्, प्रलिलिपुः उतैवं चिद्देवानभिभवेमेति । ततो न मनुष्या आशुः । न पशव आलिलिशिरे । ता हेमाः प्रजा अनाशकेन नोत्पराबभूवः ॥ २ ॥

---

अथ विवित्सिताया आग्रयणेष्टेर्मतभेदेन प्रयोजनं दर्शयंस्तावद् कहोलस्य मतमुपन्यस्यति—**तदु होवाचेति** । 'तत्' तत्र, वक्ष्यमाणे आग्रयणेष्टिविषये 'उवाच' उक्तवान् 'कौषीतकिः' कुषीतकस्य पुत्रः । तामुक्तिं दर्शयति—**अनयोरिति** । योऽयं व्रीहियवाद्योषध्यात्मको रसः, सः 'अयम्' अनयोः द्यावापृथिव्योः, 'रसः' द्युसम्बन्धिन्या वृष्ट्या भूमेरुत्पन्नत्वात् । ' अस्य रसस्य ' । कर्मणि षष्ठी ( पा. सू. २।३।६६ ) । इमं रसं देवेभ्यः प्रथमं हुत्वा ' ' अथ ' अनन्तरं हुतशिष्टम् ' इमम् ' ' अश्नाम ' भुञ्जामहे इत्यर्थः । **तस्मादिति**, आग्रयणेष्टिविधिः । यस्मादेवं कहोलेनोक्तम्, ' तस्मात् ' नवान्नस्य हुतशिष्टत्वसिद्धये ' आग्रयणेष्ट्या ' यष्टव्यमित्यर्थः ॥ १ ॥

अथ याज्ञवल्क्याभिमतं प्रयोजनं दर्शयितुं प्रस्तौति—**तदु होवाचेति** । तत्रेतिहासमाचष्टे—**देवाश्चेति** । 'प्राजापत्याः ' प्रजापतेः पुत्राः ' पस्पृधिरे ' स्पर्द्धां कृतवन्तः । "अपस्पृधेथामानृचुः"—( पा. सू. ६।१।३६ ) इति क्वचित् सम्प्रसारणेन निपातनस्योपलक्षणार्थत्वात् लिट्यपि स्पृधेः सम्प्रसारणम् । **उभयीरोषधीरिति** । उभयविधा ह्योषधयः—मनुष्यान्नभूता व्रीहियवाद्याः पश्वन्नभूतास्तृणाद्याश्च, ताः सर्वाः ' कृत्ययेव त्वत् ' त्वच्छब्द एकशब्दपर्यायोऽविभक्तिकः । ' त्वत् ' एकत्र ' कृत्यया ' व्यापादयन् ' इव ' ' त्वत् ' अन्यत्र ' विषेण' च ' प्रलिलिपुः ' प्रकर्षेण लिप्ता अकुर्वन् । लेपनाभिप्रायमाह—**उतैवमिति** । ' एवम् ' अपि ' देवान् ' ' अभिभवेम इति ' तिरस्कुर्यामेति । ' ततः ' अनन्तरम् असुरकृतं विषलेपं ज्ञात्वा ' मनुष्याः ' ' न आशुः ' न बुभुजिरे, ' पशवश्च ' ' न ' भक्षयाञ्चक्रुः । केवलम् ' अनाशकेन ' अनशनेन ' ता इमाः' सर्वाः ' प्रजाः ' 'पराबभूवुः ' पराभूता अभवन् ॥ २ ॥

---

१—आग्रयणमैन्द्राग्नमग्रपाकस्य का. श्रौ. सू. ४ । १५६ । अग्रपाकशब्देन शरद्वसंतौ लक्ष्येते इति कर्कः । व्रीहीणां यवानां च । का. श्रौ. सू. ४ । १५७ । व्रीहिकाले व्रीहीणां यवकाले यवानां इति व्यवस्था ।

( स्त ) तद्धै देवाः शुश्रुवुः । ( इ ) अनाशकेन ह वाऽइमाः प्रजाः पराभवन्तीति ते होचुर्हन्तेदमासामपजिघाᳪसामेति केनेति यज्ञेनैवेति यज्ञेन ह स्म वै तद्देवाः कल्पयन्ते यदेषां कल्प्यमासऽर्षयश्च ॥ ३ ॥

ते होचुः । कस्य नऽ इदं भविष्यतीति ते मम ममेत्येव न सम्पादयाञ्चक्रुस्ते हासम्पाद्योचुराजिमेवास्मिन्नजामहै स यो नऽउज्जेष्यति तस्य नऽइदं भविष्यतीति तथेति तस्मिन्नाजिमाजन्त ॥ ४ ॥

ताविन्द्राग्नी ऽउदजयतां तस्मादैन्द्राग्नो द्वादशकपालः पुरोडाशो भवतीन्द्राग्नी ह्यस्य भागधेयमुदजयतां तौ यत्रेन्द्राग्नी ऽउज्जिगीवाᳪसौ तस्थतुस्तद्विश्वे देवा ऽअन्वाजग्मुः ॥ ५ ॥

---

तद्वै देवाः शुश्रुवुः—अनाशकेन ह वा इमाः प्रजाः पराभवन्ति इति । ते होचुः 'हन्तेदमासामपजिघांसाम' इति । केनेति ? यज्ञेनैवेति । यज्ञेन ह स्म वै तद्देवाः कल्पयन्ते यदेषां कल्प्यमास,ऋषयश्च ३॥

ते होचुः—कस्य न इदं भविष्यतीति । ते—'मम मम' इत्येव न सम्पादयाञ्चक्रुः। ते हासम्पाद्योचुः—आजिमेव अस्मिन्नजामहै, स यो न उज्जेष्यति—तस्य न इदं भविष्यतीति । तथेति । तस्मिन्नाजिमाजन्त ॥ ४ ॥

ताविन्द्राग्नी उदजयताम् । तस्मादैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति । इन्द्राग्नी ह्यस्य भागधेयमुदजयताम् । तौ यत्रेन्द्राग्नी उज्जिगीवांसौ तस्थतुः—तद् विश्वेदेवा अन्वाजग्मुः ॥ ५ ॥

---

तद्धै देवाः शुश्रुवुरिति । देवाश्च तत्सर्वमाकर्ण्य केनोपायेन असुरकृतमुपद्रवं परिहरामेति विचार्य, यज्ञेनैवेति निश्चित्य, 'एषां' मनुष्यादीनां 'यत्' 'कल्प्यं' कल्पनीयं सम्पाद्यम् 'आस' तत् अकल्पयन् । न केवलं देवा एव, 'ऋषयः' अप्येवमेव अकल्पयन् ॥ ३ ॥

ते होचुरित्यादि । प्रजानामशनक्लृप्तिसाधनम् । 'इदं' हविः 'नः' अस्माकं मध्ये 'कस्य भविष्यति ?' 'इति' विचारिते 'ते' सर्वे देवाः 'मम' इदं—'मम' इदम् 'इति' एवं 'न सम्पादयाञ्चक्रुः' सम्पादनं संमतिं नासादितवन्तः । 'ते' च देवाः इत्थं परस्परं विप्रतिपत्तिं प्राप्य 'आजिम्' आजिधावनम्, तत्प्राप्त्युपायमेवाकल्पयन् । आजिर्नाम गन्तव्यावधिभूतः पदार्थः, तम् अस्मिन् पदार्थे निष्पन्ने सति 'अजामहै' धावाम । "अज गतिक्षेपणयोः" ( धा. पा. भ्वा. प. २३० ) इति । तथा च 'नः' अस्माकं मध्ये 'यः' उज्जेष्यति, 'तस्य' 'इदं' 'हविः' 'भविष्यति' इति एवं विचार्य, 'तथा' इति 'अङ्गीकृत्य, 'तस्मिन्'[1] विषये त आजिधावनं कृतवन्तः ॥ ४ ॥

ताविन्द्राग्नी इति । 'तौ' प्रसिद्धौ 'इन्द्राग्नी' आजिधावनेन तद्धविः 'उदजयताम्' यस्मादेवं तस्मादेव कारणात् 'अन्यान्' देवान् परित्यज्य आग्रयणेष्टौ प्रथमं हविः इन्द्राग्निदेवताकम्, द्वादशसु कपालेषु संस्कृतं पुरोडाशात्मकं भवति । अनेनाभिप्रायेण ऐन्द्राग्नयागः प्रथमः कर्तव्य इति विधिरुन्नीतो भवति ॥

---

१–'अस्मिन् हविषि निमित्ते सति' इति पा. ।

क्षत्रं वा ऽइन्द्राग्नी । विशो विश्वे देवा यत्र वै क्षत्रमुज्जयत्यन्वाभक्ता वै तत्र विट्तद्विश्वान्देवानन्वाभजतां तस्मादेष वैश्वदेवश्चरुर्भवति ॥ ६ ॥

तं वै पुराणानां कुर्यादित्याहुः । क्षत्रं वाऽइन्द्राग्नी नेत्क्षत्रमभ्यारोहयाणीति तौ वा ऽउभावेव नवानाᳩं स्यातां यद्धि पुरोडाश ऽइतरश्चरुरितरस्तेनैव क्षत्रमनभ्यारूढं तस्मादुभावेव नवानाᳩं स्याताम् ॥ ७ ॥

तऽउ ह विश्वेदेवा ऽऊचुः । ( २ ) अनयोर्वा ऽअयं द्यावापृथिव्यो रसो

---

क्षत्रं वा इन्द्राग्नी, विशो विश्वेदेवाः । यत्र वै क्षत्रमुज्जयति अन्वाभक्ता वै तत्र विट् । तद् विश्वान्देवानन्वाभजताम् । तस्मादेष वैश्वदेवश्चरुर्भवति ॥ ६ ॥

तं वै पुराणानां कुर्यादित्याहुः । क्षत्रं वा इन्द्राग्नी नेत्क्षत्रमभ्यारोहयाणि इति । तौ वा उभावेव नवानां स्याताम्—यद्धि पुरोडाश इतरः, चरुरितरः । तेनैव क्षत्रमनभ्यारूढम् । तस्मादुभावेव नवानां स्याताम् ॥ ७ ॥

त उ ह विश्वेदेवा ऊचुः—अनयोर्वा अयं द्यावापृथिव्यो रसः—हन्तेमे अस्मिन्नाभजामेति । ताभ्या-

---

वैश्वदेवचरुरूपं द्वितीयं हविर्विधातुं विश्वेषां देवानामाजिसम्बन्धमाह—**यत्रेति** । ' यत्र ' यस्मिन् समये 'उज्जिगीवांसौ उज्जितवन्तौ 'इन्द्राग्नी, तस्थतुः ' । जयतेर्लिटः क्वसौ " सन्लिटोर्जेः " ( पा. सू. ७ । ३ । ५७ ) इति अभ्यासादुत्तरस्य जकारस्य कुत्वम्, ' तत् ' तस्मिन् समये विश्वेदेवानाम गणरूपा देवाः इन्द्राग्नी ' अन्वाजग्मुः ' आगतवन्तः । प्रथममिन्द्राग्नी आजिं प्राप्तवन्तौ तदनन्तरं विश्वेदेवाः प्राप्नुवन्नित्यर्थः ॥ ५ ॥

वैश्वदेवस्य हविषः ऐन्द्राग्नानन्तर्य्ये कारणान्तरमाह—**क्षत्रं वा इति** । देवेषु मध्ये ' इन्द्राग्नी ' ' क्षत्रं क्षत्रियजातिः, ' विश्वे देवाः ' ' विशः ' वैश्यजातिः । ' यत्र ' खलु 'क्षत्रं' क्षत्रियो राष्ट्रादिकम् ' उज्जयति, ' ' तत्र ' ' विट् ' वैश्यजातिरपि ' अन्वाभक्ता ' भवति; यस्मादेवं लोके, ' तत् ' तस्मात् ताविन्द्राग्नी स्वाविशः ' विश्वान् देवान् ' ' अन्वाभजताम् ' अन्वाभक्तान् कुरुताम् । **तस्मादि**त्यादि वैश्वदेवयागविधिः ॥ ६ ॥

तस्य यागस्य पुराणव्रीहिनिष्पाद्यत्वं पूर्वपक्षत्वेन प्रतिपादयति—**तं वा** इति । ' पुराणानां ' पुरातनानां व्रीहीणां सम्बन्धिनं ' तं ' वैश्वदेवं चरुं ' कुर्यात् ' ' इति आहुः ' अभिज्ञाः कथयन्ति । **क्षत्रं वा** इति । तदुपपादनम्—**नेत् क्षत्रमि**ति । नैव क्षत्रियजातेरुपरि वैश्यजातिं तत्समत्वेन, आरोहयाणि ' आरूढां करवाणीति; सर्वथा हि क्षत्रियवैश्ययोर्वैषम्येन भवितव्यमित्यर्थः । प्रकारान्तरेण वैषम्यं दर्शयन्नुभयोरपि हविषोर्नवधान्यप्रकृतित्वमाह—**तौ वा उभावेव नवानामि**ति । **यद्धी**ति । 'यत् ' यतः तयोरन्यतरः पुरोडाशः, अन्यतरश्चरुः; ' तेनैव ' वैलक्षण्येन विशा ' क्षत्रम् अनभ्यारूढम् ' क्षत्रियजातिरनभ्यारूढा भवति । **तस्मादि**त्यादि, प्रतिज्ञापूरणार्थं निगमनम् ॥ ७ ॥

अथ तस्यामेवाग्रयणेष्टौ तृतीयं द्यावापृथिव्यं हविर्विधातुमाह—**त उ हेति** । तेऽपि ' विश्वेदेवाः ' ' ऊचुः '

---

१—वैश्वदेवश्चरुः का. श्रौ. सू. ४ । १५८ । स च व्रीहिकाले व्रैहेयः । यवकाले यावः । स च पयसि कर्तव्य इत्याह विकल्पेन कात्यायनः ' पयसि वा ' इति ४ । १५९ । पयःपक्षे प्राणीता धर्माः कार्या इति तत्रैव कर्कः । इदमेवाग्रयणं यद्यारण्येन क्रियते तदा सौम्यः श्यामाकश्चरुः कर्तव्य इत्याह सूत्रकारः ' सौम्यः श्यामाकश्चरुरारण्यस्य ' इति । ४ । १७२ । स च कालनिर्देशात् शरद्येव भवतीति तत्र कर्कः । आरण्येनापि इदमाग्रयणं यदि ग्रीष्मर्तौ क्रियते तदा स च चरुर्वैणवः कर्तव्य इत्याह सूत्रकारः ' वैणवो ग्रीष्मे ' ४ । १७३ । सोऽपि सौम्य एव भवतीति तत्रैव कर्काशयः । तथा श्यामाकवैणवाग्रयणे च दक्षिणाभेदमप्याह सूत्रकारः ' पुनः संस्कृतो रथो दक्षिणा क्षौमं मधुपर्को वर्षाधृतं वा वासः ' ४ । १७४ ॥ २—राज्यादिकम्—इ० पा० ।
३—पुराणानां वा चरुः । का. श्रौ. सू. ४ । १६३ ।

हन्तेमे ऽअस्मिन्नाभजामेति ताभ्यामेतं भागमकल्पयन्नेतं द्यावापृथिव्यमेककपालं पुरोडाशं तस्माद्द्यावापृथिव्य ऽएककपालः पुरोडाशो भवति तस्येयमेव कपालमेकेव हीयं तस्मादेककपालो भवति ॥ ८ ॥

तस्य परिचक्षा। यस्यै वै कस्यै च देवतायै हविर्गृह्यते सर्वत्रैव स्विष्टकृदन्वाभक्तोऽथैतं[१] सर्वमेव जुहोति न स्विष्टकृतेऽवद्यति सा परिचक्षोतो हुतः पर्य्यावर्तते ॥ ९ ॥

तदाहुः। पर्य्याभूद्वाऽअयमेककपालो मोहिष्यति राष्ट्रमिति नास्य सा परिचक्षाऽऽहवनीयो वाऽआहुतीनां प्रतिष्ठा स यदाहवनीयं प्राप्यापि दश-

---

मेतं भागमकल्पयन्—एतं द्यावापृथिव्यमेककपालं पुरोडाशम्। तस्माद् द्यावापृथिव्य एककपालः पुरोडाशो भवति। तस्येयमेव कपालम्, एकेव हीयम्। तस्मादेककपालो भवति ॥ ८ ॥

तस्य परिचक्षा। यस्यै वै कस्यै च देवतायै हविर्गृह्यते सर्वत्रैव स्विष्टकृदन्वाभक्तः। अथैतं सर्वमेव जुहोति—न स्विष्टकृतेऽवद्यति। सा परिचक्षा। उतो हुतः। पर्यावर्तते ॥ ९ ॥

तदाहुः—पर्याभूद्वा अयमेककपालो, मोहिष्यति राष्ट्रमिति—नास्य सा परिचक्षा। आहवनीयो वा

---

उक्तवन्तः। कथमिति, नवधान्यरूपं हविः अनयोः द्यावापृथिव्योः अयं रसः, इति प्रागुपपादितम्। 'हन्त'—इत्यनुकम्पायाम्। 'अस्मिन्' नवहविषि 'इमे' द्यावापृथिव्यौ वयम् 'आभजाम' प्रापयामेत्यर्थः। ते च 'ताभ्यां' द्यावापृथिवीभ्याम् 'एतं' हविर्भागम् 'अकल्पयन्' य एष द्यावापृथिव्य एककपालः पुरोडाशः, तम्। तस्मादिति, द्यावापृथिव्ययागविधिः। तस्य द्यावापृथिव्यस्य हविषः एकस्मिन्नेव कपाले संस्कारमुपपादयति—तस्येयमेवेति। 'तस्य' 'इयं' भूमिः 'एव' कपालम्' पुरोडाशश्रपणाधिष्ठानम्; 'हि' यस्मात् 'इयम्' 'एकेव' एकाकारेव भवति, 'तस्मात्' तद्देवत्यः पुरोडाशोऽपि 'एककपालः' इति कर्तव्य इत्यर्थः ॥ ८ ॥

आज्येनैव द्यावापृथिव्योर्यागं विधित्सुः पुरोडाशपक्षे दोषमुपन्यस्यति—तस्य परिचक्षेति। 'तस्य' एककपालस्य पुरोडाशस्य काचित् 'परिचक्षा' निन्दा विद्यते। तामेव दर्शयति—यस्या इति। सर्वेषु हि यागेषु 'स्विष्टकृद्' यागः 'अन्वाभक्तः' अनुप्राप्तोऽस्ति; "शेषात् स्विष्टकृते समवद्यति"—इतीष्टशिष्टप्रतिपत्तित्वेन तस्य विहितत्वात्। अथैवं सति अत्रैककपालं पुरोडाशं 'सर्वमेव जुहोति' हविरन्तरवत् स्विष्टकृन्नाम्नेऽग्नये 'न अवद्यति' अतोऽस्यैककपालस्य स्विष्टकृद्यागाभावात् 'सा' एव 'परिचक्षा' निन्दा। दोषान्तरमप्याह—उतो हुत इति। 'उत उ' अपि च अग्नौ 'हुतः' सन् एककपालः पुरोडाशः यदि 'पर्य्यावर्त्तते' पर्य्यावर्त्तेत ॥ ९ ॥

तदाहुरिति। 'तत्' तत्र विषये 'आहुः' ब्रह्मवादिनः कथयन्ति। किमिति—'अयम्' 'एककपालः'

---

१—द्यावापृथिवीय एककपालः। का. श्रौ. सू. ४। १६०। अस्य वैश्वदेविकैककपालप्रकृतित्वम्। तेन सर्वहुतं। अपरिवर्तनं च प्राप्तम्। तदुभयमप्यनिष्टम्। अतः आज्यस्य वा यजेत—इत्यग्रिमसिद्धांतसूत्रेण द्यावापृथिवीययाग आज्येनैव—नैककपालेन वैश्वदेविकैककपालप्रकृतित्वात्। त्रेधा बर्हिः अहतवासःपरिधानं चेहापि भवति। न नवप्रयाजादि ऐंद्राग्नवैश्वदेवविरोधात्। आज्येन यागे नाहतवासःपरिधानादि भवति। पुरोडाशधर्मत्वेनाज्यधर्मत्वाभावात्। इति कर्काशयः। २—'सर्वहुतमेव जुहोति' इति पा.।

कृत्वः पर्यावर्तेत न तदाद्रियेत यदि त्वन्ये वदन्ति कस्तत्सन्धमुपेयात्तस्मा-दाज्यस्यैव यजेदाज्यꣳ ह वाऽअनयोर्द्यावापृथिव्योः प्रत्यक्षꣳ रसस्त-त्प्रत्यक्षमेवैने ऽएतत्स्वेन रसेन मेधेन प्रीणाति तस्मादाज्यस्यैव यजेत् १०॥

( दे ) एतेन वै देवाः । ( ० ) यज्ञेनेष्ट्वोभयीनामोषधीनां याश्च मनुष्या ऽउपजीवन्ति याश्च पशवः कृत्यामिव त्वाद्विषमिव त्वदुपजघ्नुस्ततऽ आश्न-न्मनुष्याऽआलिशन्त पशवः ॥ ११ ॥

---

आहुतीनां प्रतिष्ठा । स यदाहवनीयं प्राप्य अपि दशकृत्वः पर्यावर्तेत न तदाद्रियेत । यदि त्वन्ये वदन्ति, कस्तत्सन्धमुपेयात् । तस्मादाज्यस्यैव यजेत् । आज्यं ह वा अनयोर्द्यावापृथिव्योः प्रत्यक्षं रसः । तत् प्रत्यक्षमेवैने एतत्स्वेन रसेन मेधेन प्रीणाति । तस्मादाज्यस्यैव यजेत् ॥ १० ॥

एतेन वै देवाः । यज्ञेनेष्ट्वा, उभयीनामोषधीनां–याश्च मनुष्या उपजीवन्ति, याश्च पशवः–कृत्या-मिव त्वत्, विषमिव त्वद्–अपजघ्नुः । तत–आश्नन् मनुष्याः, आलिशन्त पशवः ॥ ११ ॥

---

‘ पर्यभूत् ’ पर्यावृत्तोऽभूत्, तेन पर्यावर्त्तनेन ‘ राष्ट्रम् ’ एव पर्यावृत्तं सत् ‘ मोहिष्यति ’ मूढं भविष्यतीति । नायं दोषः । परिहरति–**नास्येति** । अस्यैककपालस्य । पर्यावृत्तिरूपा ‘ परिचक्षा ’ निन्दा न भवतीत्यत आह–**आहवनीय** इति । स वा आहवनीयो हि सर्वाहुतीनामाधारभूतः । तत्प्राप्तेः पूर्वं पर्यावर्तने दोषः, तदुत्तरकालन्तु ‘ अपि ’ ‘ दशकृत्वः दशवारं ’ ‘पर्यावर्तेत ’ । ‘ तत् ’ तत्र आदरो नैव कर्त्तव्यः । देवतोद्देशेन हविषः[1] प्रक्षिप्तत्वादित्यभिप्रायः । तस्मात् स्विष्टकृद्यागाभावकृता एव निन्दा परिशिष्यते, तत्परिहाराय पक्षा-न्तरमाह–**यदीति** । ‘ यदि तु ’ ‘ अन्ये ’ शाखिनः ‘ वदन्ति ’ ‘ कः ’ नाम ‘ तत् ’ उक्तदोषसन्धानं कर्तुम् ‘ उपेयात् ’ उपगच्छेत् । अतो दोषसहित एककपालपक्षः परित्याज्यः । किन्तर्हि द्यावापृथिव्यस्य यागस्य द्रव्यम् तदाह–**तस्मादिति** । यदेतत् ध्रुवास्थमाज्यं सर्वयज्ञसाधारणम् तस्य ‘ आज्यस्य एव ’ सकाशात् चतु-रवत्तमवदाय द्यावापृथिव्योर्यजेतेत्यर्थः । इममर्थं प्रशंसति–**आज्यं हेति** । **प्रत्यक्षं रस** इति । आज्यस्य द्रवत्वगुणयोगात् प्रत्यक्षरसत्वम्; व्रीहियवादेस्तु धान्यस्य काठिन्यात् परोक्षत्वम्[2] । **मेधेनेति** । सारभूतेनेत्यर्थः ।

निन्दाया उत्तरस्य प्रशंसार्थमभिप्रेत्य कात्यायनेन तत् पक्षद्वयमपि सूत्रितम्–“ द्यावापृथिवीय एककपालः । आज्यस्य वा ” इति ( का. श्रौ. सू० ४ । १६०–१६१ ) । आपस्तम्बोऽपि–“अपि वैककपालेन कुर्वीत, आज्येनं द्यावापृथिवी यजेत ”–इत्युक्तवान् ॥ १० ॥

अस्या आग्रयणेष्टेरनाश्रितदोषनिर्हरणहेतुत्वं प्रतिपादयितुं पुरावृत्तमुदाहरति–**एतेनेति** । ‘ याश्च ’ व्रीहि-यवाद्या ओषधीः ‘ मनुष्याः ’ ‘ उपजीवन्ति ’ ‘ याश्च ’ तृणाद्याः ‘ पशवः ’ ‘ उपजीवन्ति ’ तासाम् ‘उभ-यीनाम् ओषधीनाम्, इति सम्बन्धः । **कृत्यामिव त्वदिति** । ओषधीषु कृत्या–विषादिकं यत् असुरैः प्रलि-प्तम्, तदनेन यागेन देवा अपहतवन्त इत्यर्थः । **तत इत्यादि** । ततो देवैरन्नस्य निर्दोषकरणात् ‘ मनुष्याः

---

१–‘ हविषश्चोदितद्वारे ’ इ. ‘ हविषश्चोदनाधारे ’ इ. च क. पा. । २–‘ धान्यस्य काठिन्यपरोक्षत्वमिति ’ क. पा. ।

(वोऽथ) अथ यदेष ऽएतेन यजते । तन्नाह न्वेवैतस्य तथा कश्चन कृत्ययेव त्वद्विषेणेव त्वत्प्रलिम्पतीति देवाऽअकुर्वन्निति त्वेवैष ऽएतत्करोति यमु चैव देवा भागमकल्पयन्त तमु चैवैभ्य ऽएषऽएतद्भागं करोतीमाऽ उ चैवैतदुभयीरोषधीर्याश्च मनुष्या उपजीवन्ति याश्च पशवस्ता ऽअनमीवा अकिल्बिषाः कुरुते ता ऽअस्यानमीवा ऽअकिल्बिषा ऽइमाः प्रजाऽ उपजीवन्ति तस्माद्वा ऽएष ऽएतेन यजते ॥ १२ ॥

तस्य प्रथमजो गौर्दक्षिणा । ( णाऽग्र्य ) अग्र्यमिव हीदꣳ स यदीजानः स्याद्दर्शपूर्णमासाभ्यां वा यजेताथैतेन यजेत यद्युऽअनीजानः स्याच्चातुष्प्राश्यमेवैतमोदनमन्वाहार्यपचने पचेयुस्तं ब्राह्मणा ऽअश्नीयुः ॥ १३ ॥

---

अथ यदेष एतेन यजते—तन्नाह न्वेवैतस्य तथा कश्चन—कृत्ययेव त्वद्, विषेणेव त्वत्, प्रलिम्पतीति देवा अकुर्वन् । इति त्वेवैष एतत्करोति । यमु चैव देवा भागमकल्पयन्त—तमु चैवैभ्य एष एतद्भागं करोति । इम उ चैवैतदुभयीरोषधीः—याश्च मनुष्या उपजीवन्ति याश्च पशवः—ता अनमीवा अकिल्बिषाः कुरुते । ता अस्यानमीवा अकिल्बिषा इमाः प्रजा उपजीवन्ति । तस्माद्वा एष एतेन यजते ॥ १२ ॥

तस्य प्रथमजो गौर्दक्षिणा । अग्र्यमिव हीदम् । स यदीजानः स्यात्—दर्शपूर्णमासाभ्यां वा यजेत—अथैतेन यजेत । यद्यु अनीजानः स्यात्—चातुष्प्राश्यमेवैतमोदनमन्वाहार्यपचने पचेयुः, तं ब्राह्मणा अश्नीयुः ॥ १३ ॥

---

'आश्नन्' अभुञ्जत, 'पशवश्च' तृणादिकम् 'आलिशन्त' अभक्षयन् । "लिश अल्पीभावे"—( धा. पा. दि. आ. ७३ ) इत्ययं धातुः, अत्र तृणादेरल्पीभवनहेतौ भक्षणे वर्त्तते ॥ ११ ॥

एवं पुरावृत्तमुदाहृत्य दृष्टान्तेनेदानीन्तनानुष्ठानेऽपि नवान्नाश्रितदोषनिर्हरणहेतुत्वं प्रतिपादयति—**अथेति** । 'अथ' इदानीं 'यत्' यस्मात् कारणात् 'एषः' यजमानः 'एतेन' आग्रयणेन 'यजते' 'अह' 'नु' 'एव' इति त्रयो निपाता अवधारणार्थाः । 'तत्' तस्मादेव कारणात् 'एतस्य' यजमानस्य 'तथा' तथैव ओषधीषु कृत्यया विषेण च न कोऽपि द्वेष्टा 'प्रलिम्पति' प्रश्लेषयति । "लिप उपदेहे"—( धा. पा. तु. प. १९२ ) इति धातुः । "शे मुचादीनाम्" ( पा. सू. ७ । १ । ५९ )—इति नुम् । **देवा** इत्यादि । 'देवाः' खलु पुरा 'इति' एवम् 'अकुर्वन्' 'एषः' यजमानोऽपि 'इति त्वेव' एवमेव तु 'करोति' । एतदेव विवृणोति—**यमु चैवेति** । **अनमीवा अकिल्बिषा** इति । अमीवा रोगाः, तद्रहिताः; अकिल्बिषाः, किल्बिषं रोगनिदानं पापं, तद्रहिताश्च 'कुरुते' । ता अस्येति, प्रयोजनान्वाख्यानम् ॥ १२ ॥

दक्षिणां विधत्ते—**तस्य प्रथमज** इति । 'तस्य' आग्रयणस्य 'प्रथमजः' तस्मिन् संवत्सरे यजमानस्य

( ६ ) द्वया वै देवा देवाः । ( ऽ ) अहैव देवा ऽअथ ये ब्राह्मणाः शुश्रुवाᳫँसोऽनूचानास्ते मनुष्यदेवास्तद्यथा व्वषट्कृतᳫँ हुतमेवमस्यैतद्भवति तत्रो यच्छक्नुयात्तद्दद्यान्नादक्षिणᳫँ हविः स्यादिति ह्याहुर्नाग्निहोत्रे जुहुयात्समदᳫँ ह कुर्याद्यदग्निहोत्रे जुहुयादन्यद्वा ऽआग्रयणमन्यदग्निहोत्रं तस्मान्नाग्निहोत्रे जुहुयात् ॥ १४ ॥

इति तृतीयप्र० पञ्चमं ब्राह्मणम् ३-५॥ तृतीयः प्रपाठकः समाप्तः ॥ (४।३)

---

द्वया वै देवाः—देवा अहैव देवाः, अथ ये ब्राह्मणाः शुश्रुवांसोऽनूचानास्ते मनुष्यदेवाः । तद् यथा वषट्कृतं हुतम्, एवमस्यैतद्भवति । तत्रो यच्छक्नुयात्—तद् दद्यात्—नादक्षिणं हविः स्यादिति ह्याहुः । नाग्निहोत्रे जुहुयात् । समदं ह कुर्याद्—यदग्निहोत्रे जुहुयात् । अन्यद्वा आग्रयणम्, अन्यदग्निहोत्रम् । तस्मान्नाग्निहोत्रे जुहुयात् ॥ १४ ॥

---

गोष्ठे यो वत्सो जायते, सः ' गौः ' अस्य यागस्य दक्षिणात्वेन देय इत्यर्थः । कुत इत्यत आह—**अग्र्यमिवेति** । अग्रे भवम् अग्र्यम् । " अग्राद् यत् । घच्छौ च "–( पा. सू. ४ । ४ । ११६–११७ ) इति । ' इदम् ' आग्रयणाख्यं ' हि ' हविः ' अग्र्यम् ', प्रथमजो वत्सश्चाग्र्यः; अतस्तस्याग्रयणदक्षिणात्वमुचितमिति भावः ।

ईजानानीजानयोराग्रयणविषयां व्यवस्थां दर्शयति—**स यदि**ति । ' यद् ' यदि ' सः ' यजमानः ' ईजानः ' सोमयागेनेष्टवान् ' स्यात् ' । यजेर्लिटः कानच् ( पा. सू. ३ । ६ । १०६ ) केवलं हविर्यज्ञयाजी सन् ' दर्शपूर्णमासाभ्याम् ' एव ' यजेत ', ' अथ ' अनन्तरमेव ' एतेन ' आग्रयणेन ' यजेत ', न प्रागित्यर्थः । किन्तर्हि तदा कुर्यादिति, तत्राह—**यद्यु** इति । यदि तु दर्शपूर्णमासादिभिः ' अनीजानः ' अनिष्टवान् ' स्यात् ' तदा स यजमानः ' चातुष्प्राश्यं ' चतुर्भिः ब्राह्मणैः प्राशितव्यं ' तम् ' ' ओदनम् ' अन्नं दक्षिणाग्नौ पक्त्वा, ब्राह्मणेभ्यो दद्यात्; ' ब्राह्मणाः ' च ' तम् ' ' अश्नीयुः ' भुञ्जीरन् ॥ १३ ॥

ब्राह्मणभोजनस्यापि यागात्मकत्वमुपपादयति—**द्वया वा** इति । अहैवेति, द्वावपि निपातावधारणार्थौ । शुश्रुवांसः ' श्रुतवन्तः, बहुश्रुतार्था इत्यर्थः; ' अनूचानाः ' अनुगतानुष्ठानपराः, य एवंगुणाः, ' ते ' मनुष्यदेवाः ' मनुष्यरूपा देवाः । ' तत् ' तथा सति ' यथा ' वषट्कारेण देवेभ्यो दत्तम्, स्वाहाकारेण ' हुतं ' च भवति, एवमेव ' अस्य ' अनीजानस्य यजमानस्य ' एतत् ' ब्राह्मणभोजनं भवतीत्यर्थः ।

यागे इव भोजनेऽपि दक्षिणादानं विधत्ते—**तत्रो** इति । ' तत्र ' ब्राह्मणभोजनकालेऽपि ' यत् ' किञ्चित् अपि दातुं ' शक्नुयात् ', ' तत् दद्यात् '; ब्राह्मणेभ्यो दत्तं ' हविः ' ' अदक्षिणं ' दक्षिणारहितं " न स्यात् ' ' इति ' अनेनाभिप्रायेणेत्यर्थः ॥

---

१–प्रथमजो गौर्दक्षिणा ( का० श्रौ० सू० ४ । १६४ ) । प्रथमजः । प्रथमजन्मा । २–दर्शपूर्णमासानीजानो दक्षिणाग्निपक्वं चातुष्प्राश्यं ब्राह्मणान् भोजयेत्किंचिद्दद्यात् (का.श्रौ.सू.४।१६६) आहिताग्निः सन् यावद्दर्शपौर्णमासौ न करोति । अथ चाग्रयणकालाति पत्तिर्भवति । तत्राग्रयणे विशेषोऽयं कथ्यते । अस्य चातुष्प्राश्यकर्मण आग्रयणत्वात् पौर्णमास्यमावास्या वा कालः । इति कर्कः

# अथ चतुर्थप्रपाठके प्रथमं ब्राह्मणं, चतुर्थाध्याये च चतुर्थं ब्राह्मणम् ।

प्र॒जाप॑तिर्ह॒ वा ऽए॒तेना॑ग्रे य॒ज्ञेने॑जे । प्र॒जाका॑मो ब॒हुः प्र॒जया॑ प॒शुभि॑: स्या॒ᳪ᳭ श्रियं॑ गच्छेयं य॒शः स्या॑मन्ना॒दः स्या॑मि॒ति ॥ १ ॥

---

**अथ दाक्षायणयज्ञो वसिष्ठयज्ञः ।**

प्रजापतिर्ह वा एतेनाग्रे यज्ञेनेजे प्रजाकामः—बहुः प्रजया पशुभिः स्याम्, श्रियं गच्छेयम्, यशः स्याम्, अन्नादः स्यामिति ॥ १ ॥

---

केचित्त्वाग्रयणेष्टावधिकृतस्यानीजानस्य नवधान्येनाग्निहोत्रहोममभिदधते । अत एव सूत्रितं कात्यायनेन—"नवैः सायम्प्रातरग्निहोत्रहोमः"—इति[1]। आपस्तम्बेनाप्युक्तम्—"अपि वा नवानां यवानां सायम्प्रातर्जुहुयात्"—इति। तदत्र निराकरोति—**नाग्निहोत्र** इति । अग्निहोत्रकर्मणि नवं हविर्न जुहुयात् ।'यद्' 'यदि' 'जुहुयात्', तदा इन्द्राग्न्यादीनामाग्रयणदेवतानामग्निहोत्रदेवगणैः सह 'समदं' कलहं 'कुर्यात्'। असमुच्चयहेतुभूतं पृथक्त्वं दर्शयति—**अन्यद्वा** इति । 'आग्रयणम्' आग्रयणाख्यं कर्म, अग्निहोत्रात् 'अन्यत्'; 'अग्निहोत्रं' त्वाग्रयणात् 'अन्यत्'; इति एतत्प्रकरणभेदात् नामधेयभेदाच्चावसितम् । शब्दान्तराभ्याससंख्यागुणप्रकरणनामधेयानि इह कर्मभेदे प्रमाणत्वेन जैमिनिनोपन्यस्तानि ॥ १४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे चतुर्थाध्यायस्य तृतीयं ब्राह्मणम् ॥ (२–४–३) ॥

आवृत्तिगुणविकृतो दर्शपूर्णमासयागप्रयोग एव दाक्षायणयज्ञः, तं विधित्सुराख्यायिकामाह—**प्रजापतिरिति** । 'एतेन' वक्ष्यमाणेन दाक्षायणनामकेन यज्ञेन[2], 'प्रजापतिः' अहम् अविकृत एव सन् देवमनुष्यादिरूपया 'प्रजया', गवादिभिः 'पशुभिः' च 'बहुः' बहुविधः 'स्याम्' भवेयम् , उत्पन्नानां प्रजादीनामशनार्थं 'श्रियं' सम्पदं गच्छेयं प्राप्नुयाम्, ततोऽहं 'यशः' यशस्वी 'स्याम्' 'अन्नादः' भवेयम् 'इति'। एवमेते दाक्षायणयज्ञं कृतवतः प्रजापतेः कामाः तत इदानीमपि तादृग्विधकामनायुक्त एव दाक्षायणयज्ञेऽधिक्रियत इत्यर्थः[3] ॥ १ ॥

---

१—अग्निहोत्रायणिनो नवैः सायम्प्रातरग्निहोत्रहोमः का. श्रौ. सू. ४ । १६७ । अग्निहोत्रायणिनः अग्निहोत्रेणैवाग्रयणं कर्तुमिच्छतः । अयं नवैः सायम्प्रातरग्निहोत्रहोमो नाग्रयणशब्दवाच्यः सायंप्रातर्ग्रहणादेव । अतश्च न यजनीयकालनियमः । यजनीयकालः पौर्णमास्यमावास्या वा इति कर्काशयः ।

२—नामफलगुणयोगात् कर्मांतरम् । पूर्वपक्षसूत्रमिदम् । गुणविधानं वा सन्निधिसंपद्वचनाभ्याम् । सिद्धांतसूत्रमिदम् । दर्शपूर्णमासावेव दाक्षायणधर्मकौ । न कर्मांतरं । प्रयोजनम् । दर्शपूर्णमासयोरक्रिया । का. श्रौ. सू. ४ । १०५ । १०६ ।

२—दाक्षायणयज्ञः प्रजापश्वन्नयशस्कामस्य । का. श्रौ. सू. ४।१०४ । दाक्षायणयज्ञे कामनानानधिकारी । पर्यायेण च योगसिद्धिः । कामानां युगपदुत्पत्तेरसंभवात् ।

स वै दक्षो नाम। तद्यदेनेन सोऽग्रेऽयजत तस्माद्दाक्षायणयज्ञो नामो-तैनमेके व्वसिष्ठयज्ञ ऽइत्याचक्षत ऽएष वै व्वसिष्ठ ऽएतमेव तदन्वाचक्षते स ऽएतेन यज्ञेनेजे स एतेन यज्ञेनेष्ट्वा येयं प्रजापतेः प्रजातिर्या श्रीरेतद्ब-भूवैताᳬं ह वै प्रजातिं प्रजायत ऽएताᳬं श्रियं गच्छति य ऽएवं विद्वानेतेन यज्ञेन यजते तस्माद्वा ऽएतेन यजेत ॥ २ ॥

तेनो ह तत ऽईजे। प्रतीदर्शः श्वैक्नः स ये तं प्रत्यासुस्तेषां विवचनमि-वास विवचनमिव ह वै भवति य एवं विद्वानेतेन यज्ञेन यजते तस्माद्वा ऽएतेन यजेत ॥ ३ ॥

---

स वै दक्षो नाम तद् यदेनेन सोऽग्रेऽयजत, तस्माद्दाक्षायणयज्ञो नाम। उतैनमेके वसिष्ठयज्ञ इत्या-चक्षते। एष वै वसिष्ठः। एतमेव तदन्वाचक्षते। स एतेन यज्ञेनेजे। स एतेन यज्ञेनेष्ट्वा—येयं प्रजापतेः प्रजातिः, या श्रीः एतद्बभूव। एतां ह वै प्रजातिं प्रजायते, एतां श्रियं गच्छति—य एवं विद्वानेतेन यज्ञेन यजते। तस्माद्वा एतेन यजेत ॥ २ ॥

तेनोह तत ईजे प्रतीदर्शः श्वैक्नः। स ये तं प्रत्यासुस्तेषां विवचनमिवास। विवचनमिव ह वै भवति—य एवं विद्वानेतेन यज्ञेन यजते। तस्माद्वा एतेन यजेत ॥ ३ ॥

---

तन्नाम निर्ब्रूते—स वा इति। 'सः' खलु प्रजापतिः 'दक्षो नाम' अभवत्, तेन प्रथममिष्टवान् 'तस्मात्' 'दाक्षायणयज्ञः' इत्युच्यते। नामान्तरमपि कथयति—उतैनमिति। 'उत' अपि च 'एनम्' 'एके' शाखिनः 'वसिष्ठयज्ञ इति' व्यवहरन्ति। 'एषः' एव खलु प्रजापतिः 'वसिष्ठः' नान्यः; सर्वश्रेष्ठत्वात्। 'एत-मेव' दाक्षायणयज्ञं 'तत्' तत्र वसिष्ठयज्ञ इति 'अन्वाचक्षते'। स एतेनेति। 'सः' दक्षशब्दवसिष्ठशब्द-वाच्यः प्रजापतिः तच्छब्देन परामृश्यते। एतद्बभूवेति। 'एतत्' एतर्हि 'येयं' 'प्रजापतेः' सकाशात् 'प्रजातिः' प्रजानामुत्पत्तिः 'बभूव', 'या' च 'श्रीः' निरतिशया प्राजापत्यपदरूपा सम्पत् 'बभूव'। एतामित्यादि। 'यः' 'विद्वान्' एतदनुष्ठानस्य फलं जानानः। 'तस्मात्' दाक्षायणयज्ञफलकामः 'एतेन' 'यजेत' ॥ २ ॥

विहितस्य यागस्य फलान्तरहेतुत्वमपि परकृत्युपन्यासेन दर्शयति—तेनो हेति। 'श्वैक्नः' श्विक्नस्य पुत्रः नाम्ना 'प्रतीदर्शः'। "उपसर्गस्य घञ्यमनुष्ये बहुलम्"—(पा. सू. ६। ३। १२२) इति बहुलग्रह-णात् मनुष्यवाचित्वेऽपि घञन्त उत्तरपदे उपसर्गस्य दीर्घः। स एतमिति। 'एतम्' एनम् प्रतीदर्शम्। 'सः' इति व्यत्ययेनैकवचनम्। ये तत्रत्या जनाः 'प्रत्यासुः' केनचित्कारणेन प्रतिचिक्षिपुः "असु क्षेपणे"—(धा. पा. दि. प. १०३) इत्यस्माल्लिट्। तेन च दाक्षायणयज्ञेनेष्टे सति 'तेषां' जनानां 'विवचनं' विशिष्टवचनं पक्षपातवचनम् 'इव' एव 'आस' बभूव, अस्मिन् बहुमानं कृतवन्त इत्यर्थः। तद्दृष्टान्तेने-दानींतनविद्वदनुष्ठानस्यापि तत्फलमाह—विवचनमिव ह वा इति ॥ ३ ॥

तमाजगाम । सुप्ला सार्ञ्जयो ब्रह्मचर्यं तस्मादेतं च यज्ञमनूचेऽन्यमु च सोऽनूच्य पुनः सृञ्जयाञ्जगाम ते ह सृञ्जया विदांचक्रुर्यज्ञं वै नोऽनूच्यागन्निति ते होचुः सह वै नस्तद्देवैरागन्यो वो यज्ञमनूच्यागन्निति स वै सहदेवः सार्ञ्जयस्तदप्येतन्निर्वचनमिवास्त्यन्यद्वा ऽअरे सुप्ला नाम दध ऽइति स ऽएतेन यज्ञेनेजे स ऽएतेन यज्ञेनेष्ट्वा येयꣳ सृञ्जयानां प्रजातिर्या श्रीरेतद्बभूवैताꣳ ह वै प्रजातिं प्रजायत ऽएताꣳ श्रियं गच्छति य एवं विद्वानेतेन यज्ञेन यजते तस्माद्वा ऽएतेन यजेत ॥ ४ ॥

---

तमाजगाम सुप्ला सार्ञ्जयो ब्रह्मचर्यम् । तस्मादेतं च यज्ञमनूचे, अन्यमु च । सोऽनूच्य पुनः सृञ्जयान् जगाम । ते ह सृञ्जया विदाञ्चक्रुः—यज्ञं वै नोऽनूच्यागन्निति । ते होचुः—सह वै नस्तद्देवैरागन्—यो नो यज्ञमनूच्यागन् इति । स वै सहदेवः सार्ञ्जयः । तदप्येतन्निर्वचनमिवास्ति—अन्यद्वा अरे सुप्ला नाम दध इति । स एतेन यज्ञेनेजे । स एतेन यज्ञेनेष्ट्वा येयं सृञ्जयानां प्रजातिः, या श्रीः—एतद्बभूव । एतां ह वै प्रजातिं प्रजायते, एतां श्रियं गच्छति—य एवं विद्वानेतेन यज्ञेन यजते । तस्माद्वा एतेन यजेत ॥ ४ ॥

---

पुनरप्यस्य यज्ञस्य विशिष्टफलान्तरहेतुत्वं प्रतिपादयितुमाख्यायिकया परकृतिमुदाहरति—**तमाजगामेति** । 'तं' प्रतीदर्शमुपदेष्टृत्वेनोपासीदत्, सृञ्जयपुत्रः 'सुप्ला' नाम 'ब्रह्मचर्यम्' 'आजगाम' प्राप्तवान् । 'तस्मात्' तदुपदेष्टुः प्रतीदर्शात् 'एतं' दाक्षायणयज्ञम् 'अन्यमु' अन्यमपि च 'यज्ञम्' 'अनूचे' अनूचिवान् अधीतवान् । अनूच इति अनुपूर्वाद् ब्रुवो लिटि वच्यादेशे आत्मनेपदे रूपम् । तस्मादिति "आख्यातोपयोगे"—(पा. सू. १ । ४ । २९) इत्यपादानसंज्ञा । 'स' च सार्ञ्जयः 'एतम् अनूच्य' 'पुनः' 'सृञ्जयान्' तदाख्यान् जनपदान् 'जगाम'; 'ते' च 'एनं' 'विदाञ्चक्रुः' ज्ञातवन्तः । "उषविदजागृभ्योऽन्यतरस्याम्"—(पा. सू. ३ । १ । ३८) इति लिट्याम् प्रत्ययः । कथमिति, तदाह—**यज्ञमिति** । 'नः' अस्मदर्थं 'यज्ञम्' अनूच्य अधीत्य 'आगन्' आगतोऽभूत् । गमेर्लुङि "मन्त्रे घस०"—(पा.सू.२।४।८०) इति च्लेर्लुक्, "हल्ङ्याब्भ्यः"—(पा. सू. ६ । १ । ६८) इति तिलोपः, "मो नो धातोः" (पा. सू. ८ । २ । ६४) इति नत्वम् । 'इति' ज्ञात्वा ते सृञ्जया अब्रुवन्, 'नः' अस्मदर्थं यः 'यज्ञम्' अधीत्यागमत्, 'सः' तत्सम्बन्धिभिः देवैः सह आगमदिति । ततः प्रभृति 'सः' 'सार्ञ्जयः' 'सहदेवः' इति संज्ञया प्रसिद्धोऽभवत् ॥

तामेव प्रसिद्धिं दर्शयति—**तदेतदिति** । 'तत्' तस्मात् कारणात् 'एतत्' एतर्हि, इदानीमपि 'निर्वचनं' निर्वचनं निरन्तरं वचनम् 'अस्ति' व्यवहारो लोके[1] विद्यते । वचनस्य स्वरूपं दर्शयति—**अन्यद्वा** इति । पूर्वं हि सार्ञ्जयः 'सुप्ला नाम' अभवत्, अधुना तु देवैः सहागमनात् 'सहदेवः' 'इति' 'अन्यत्' नाम 'दधे' धारितवान् 'इति' 'स च' सार्ञ्जयः । स्वजनपदेषु एतेन दाक्षायणयज्ञेन ईजे इष्टवान् । **स एतेन यज्ञेनेष्ट्वा** इत्यादि, एतस्य सार्ञ्जयफलप्राप्तिकथनम् ॥

---

१—'व्यवहारलोके' इति क. पा. ।

तेनो ह तत ऽईजे । देवभागः श्रौतर्षः स ऽउभयेषां कुरूणां च सृञ्जयानां च पुरोहित ऽआस परमता वै सा यो न्वेवैकस्य राष्ट्रस्य पुरोहितोऽसत्सा न्वेव परमता किमु यो द्वयोः परमतामिव ह वै गच्छति य एवं विद्वानेतेन यज्ञेन यजते तस्माद्वा ऽ एतेन यजेत ॥ ५ ॥

तेनो ह तत ऽईजे । दक्षः पार्वतिस्त ऽइमेऽप्येतर्हि दाक्षायणा राज्यमिवैव प्राप्ता राज्यमिव ह वै प्राप्नोति य ऽ एवं विद्वानेतेन यज्ञेन यजते तस्माद्वा ऽएतेन यजेत स वाऽएकैक ऽएवानूचीनाहं पुरोडाशो भवत्येतेनो हास्यासपत्नानुपबाधा श्रीर्भवति स वै द्वे पौर्णमास्यौ यजते द्वे ऽअमावास्ये द्वे वै मिथुनं मिथुनमेवैतत्प्रजननं क्रियते ॥ ६ ॥

---

तेनो ह तत ईजे देवभागः श्रौतर्षः । स उभयेषां कुरूणां च सृञ्जयानां च पुरोहित आस । परमता वै सा—यो न्वेवैकस्य राष्ट्रस्य पुरुहितोऽसत्, सा न्वेव परमता—किमु यो द्वयोः । परमतामिव ह वै गच्छति य एवं विद्वानेतेन यज्ञेन यजते। तस्माद्वा एतेन यजेत ॥ ५ ॥

तेनो ह तत ईजे दक्षः पार्वतिः । त इमेऽप्येतर्हि दाक्षायणा राज्यमिवैव प्राप्ताः । राज्यमिवह वै प्राप्नोति—य एवं विद्वानेतेन यजते । तस्माद्वा एतेन यजेत । स वा एकैक एवानूचीनाहं पुरोडाशो भवति । एतेनो हास्यासपत्नानुपबाधा श्रीर्भवति । स वै द्वे पौर्णमास्यौ यजते, द्वे अमावास्ये द्वे वै मिथुनम् । मिथुनमेवैतत्प्रजननं क्रियते ॥ ६ ॥

---

**एताᳫँ ह वै प्रजातिमिति**, इदानीन्तनस्य विदुषोऽनुष्ठातुः फलम् । **तस्माद्वा एतेनेति** । यस्मात् सृञ्जयसम्बन्धिप्रजात्यादिकमपि दाक्षायणयज्ञफलम्, तस्मादपि कारणादित्यर्थः ॥ ४ ॥

इतोऽपि दाक्षायणयज्ञोऽनुष्ठेय इत्यभिप्रेत्यान्यां परकृतिमुपन्यस्यति—**तेनो** हेति । ‘ ततः ’ सार्ञ्जयानुष्ठानानन्तरं ‘ तेन ’ दाक्षायणयज्ञेन ‘ श्रौतर्षः ’ श्रुतर्षेः पुत्रो ‘ देवभागः ’ नाम महर्षिः ‘ ईजे ’ इष्टवान् । ‘ सः ’ च तेन यागेन ‘ कुरूणां च सृञ्जयानां च ’ राज्ञामुभयविधानामपि ‘ पुरोहितः ’ बभूव । पौरोहित्यस्य फलरूपताभाह—**परमता वा** इति । ‘ या ’ खलु ‘ एकस्य ’ अपि ‘ राष्ट्रस्य ’ ‘ पुरोहितः ’ ‘ असत् ’ भवति ‘ सा ’ खलु ‘ परमता ’ उत्कृष्टता, तस्य सर्वश्रैष्ठ्यं भवतीति यावत्; ‘ यः ’ तु ‘ द्वयोः ’ राष्ट्रयोः पुरोहितो भवति, सैव खल्व[illegible] परमतेति किमु वक्तव्यमित्यर्थः । इदानीन्तनविद्वदनुष्ठानस्यापि तत्फलमाह—**परमतामिवेति** ॥ ५ ॥

फलान्तरप्रतिपादनायान्यां परकृतिमुपन्यस्यति—**तेनो ह तत ईज** इति । पर्वतो नाम कश्चित्, तस्य पुत्रः ‘पार्वतिः’ दक्षः, स एतेनेष्ट्वा राज्यं प्राप्नोत् । ततः ‘ एतर्हि’ इदानीमपि ‘ दाक्षायणाः ’ तत्सन्तानभूता राजानः ‘ राज्यं प्राप्ता ’ एव भवन्ति । **राज्यमिव ह वा** इति, अनुष्ठातुः फलम् ॥

अत्र हि दाक्षायणयज्ञसम्पद्भूते द्वे पौर्णमास्यौ द्वे अमावास्ये यजेतेति दर्शपूर्णमासयोरावृत्तिं वक्ष्यति ( श. प. ११ । १ । २ । १३ ) । तत्र पौर्णमास्यां द्वौ पुरोडाशौ,—आग्नेयोऽग्नीषोमीयश्च; अमावास्यायामपि द्वौ—

(तेऽथ) अथ यत्पूर्वेद्युः । (र) अग्नीषोमीयेण यजते पौर्णमास्यां ते द्वे देवते द्वे वै मिथुनं मिथुनमेवैतत्प्रजननं क्रियते ॥ ७ ॥

(तेऽथ) अथ प्रातः । (रा) आग्नेयः पुरोडाशो भवत्यैन्द्रᳪं सांनाय्यं ते द्वे देवते द्वे वै मिथुनं मिथुनमेवैतत्प्रजननं क्रियते ॥ ८ ॥

(तेऽथ) अथ यत्पूर्वेद्युः । (रै) ऐन्द्राग्नेन यजतेऽमावास्यायां ते द्वे देवते द्वे वै मिथुनं मिथुनमेवैतत्प्रजननं क्रियते ॥ ९ ॥

(तेऽथ) अथ प्रातः । (रा) आग्नेयः पुरोडाशो भवति मैत्रावरुणी पयस्या नेद्यज्ञादयानीति न्वेवाग्नेयः पुरोडाशोऽथैतावेव मित्रावरुणौ द्वे

---

अथ यत्पूर्वेद्युः अग्नीषोमीयेण यजते—पौर्णमास्यां ते द्वे देवते । द्वे वै मिथुनम् । मिथुनमेवैतत्प्रजननं क्रियते ॥ ७ ॥

अथ प्रातराग्नेयः पुरोडाशो भवति, ऐन्द्रं सान्नाय्यम्—ते द्वे देवते । द्वे वै मिथुनम् । मिथुनमेवैतत्प्रजननं क्रियते ॥ ८ ॥

अथ यत्पूर्वेद्युरैन्द्राग्नेन यजते—अमावास्यायां ते द्वे देवते । द्वे वै मिथुनम् । मिथुनमेवैतत्प्रजननं क्रियते ॥ ९ ॥

अथ प्रातराग्नेयः पुरोडाशो भवति । मैत्रावरुणी पयस्या । नेद्यज्ञादयानीति । न्वेवाग्नेयः पुरोडाशः ।

---

आग्नेय ऐन्द्राग्नश्च । तयोः प्रत्यहमेकैकशोऽनुष्ठानमाह—स वा इति । 'अनूचीनाहं' प्रत्यहम् 'एकैक' एव 'पुरोडाशो भवति' पूर्वस्मिन् पूर्णमासप्रयोगे एक एव पुरोडाशः कर्त्तव्यः उत्तरस्मिन् दिनेऽप्येकः पुरोडाशः प्रयोक्तव्यः तत्राग्नीषोमीयौ द्वावप्येकस्मिन्नित्यर्थः । एवं दर्शप्रयोगेऽपि द्रष्टव्यम् । एकैकशोऽनुष्ठानस्य फलमाह—एतेनो हास्येति । 'असपत्नानुपबाधा' सपत्नैः शत्रुभिरबाधिता । प्रकृतयोरेव दर्शपूर्णमासयोर्योऽयमावृत्तिलक्षणो गुणः फलायाभिधीयत इत्यवादिष्म, तमिदानीं विधत्ते—स वा इति । द्वित्वसङ्ख्यां प्रशंसति—द्वे वै मिथुनमिति ॥ ६ ॥

तत्र पूर्वस्यां पौर्णमास्यामनुष्ठेयं यागं विधाय प्रशंसति—अथ यत् पूर्वेद्युरिति । ते द्वे देवते इति । अग्नीषोमयोर्व्यासक्तयोरेव देवतात्वात् अधिष्ठानद्वित्वापेक्षया देवतयोर्द्वित्वं मन्तव्यम् ॥ ७ ॥

परस्मिन्नहनि यागद्वयं विधत्ते—अथ प्रातरिति । पूर्वेद्युरग्नीषोमीयेणेष्ट्वा परेद्युः प्रातःकाले आग्नेयपुरोडाशकयागः प्रथमं कर्त्तव्यः, तत इन्द्रदेवताकं सान्नाय्यं दधि प्रयोक्तव्यम् । एतद्—यागद्वयं सम्भूय प्रशंसति—ते द्वे इति ॥ ८ ॥

अमावास्याप्रयोगेऽपि पूर्वेद्युः कर्त्तव्यमाह—अथ यत् पूर्वेद्युरिति । प्रशंसति—ते इति । अग्नीषोमीयवदत्रापि देवताद्वित्वमवसेयम् ॥ ९ ॥

परेद्युरनुष्ठेयं यागद्वयं विधाय प्रशंसति—अथ प्रातरिति । 'मैत्रावरुणी' मित्रावरुणदेवताका, पयसो

---

१-अग्नीषोमीयः पौर्णमास्यामैन्द्राग्नोऽमावास्यायाम् । सान्नाय्यवत्प्रातः । का० श्रौ० सू० ४ । १०७-१०८ ।

द्वे॒ दे॑व॒ते द्वे वै मि॑थु॒नं मि॑थु॒नमे॒वैत॒त्प्रज॑ननं क्रियत॒ऽएत॒दु हा॑स्य त॒द्रूपं॒ येन॑ ब॒हुर्भ॑वति॒ येन॑ प्र॒जाय॑ते ॥ १० ॥

( त॒ऽथ ) अ॒थ य॒त्पूर्वे॑द्युः । (र) अ॒ग्नीषो॒मीये॑ण य॒जते॑ पौर्णमा॒स्यां य॒मे॒वा-मु॒मुप॒वस॒थेऽग्नीषो॒मीयं॑ प॒शुमा॒लभ॑ते॒ स॒ ए॒वास्य॒ सः ॥ ११ ॥

( सो॒ऽथ ) अ॒थ प्रा॒तः । ( रा ) आ॒ग्नेयः॑ पुरो॒डाशो॒ भवत्यैन्द्र॒ꣳ सां॑ना॒य्यं॒ प्रा॒तःसव॒नमे॒वास्या॒ग्नेयः॑ पुरो॒डाश॒ आ॒ग्नेय॒ꣳ हि प्रा॒तःसव॒नम॒थैन्द्र॒ꣳ सां॑ना॒य्यं मा॒ध्यन्दि॑नमे॒वास्य॒ त॒त्स॒वनमैन्द्र॒ꣳ हि मा॒ध्यन्दि॑न॒ꣳ सव॑नम् ॥ १२ ॥

---

अथैतावेव मित्रावरुणौ–द्वे देवते । द्वे वै मिथुनम् । मिथुनमेवैतत्प्रजननं क्रियते । एतदु हास्य तद्रूपम्–येन बहुर्भवति, येन प्रजायते ॥ १० ॥

अथ यत्पूर्वेद्युरग्नीषोमीयेण यजते पौर्णमास्याम्–यमेवामुमुपवसथेऽग्नीषोमीयं पशुमालभते–स एवास्य सः ॥ ११ ॥

अथ प्रातराग्नेयः पुरोडाशो भवति, ऐन्द्रं सान्नाय्यं–प्रातःसवनमेवास्याग्नेयः पुरोडाशः । आग्नेयं हि प्रातःसवनम्, अथैन्द्रं सान्नाय्यम् । माध्यन्दिनमेवास्य तत्सवनम् । ऐन्द्रं हि माध्यन्दिनं सवनम्॥ १२

---

विकृतिः ' पयस्या ' ततं हि पयो दध्ना संस्कृतं सत् पयस्या भवति । नेद्यज्ञादित्यादि । ' यज्ञाद् ' प्रकृताद् यागात् ' नेत् ' नैव ' अयानि ' वियुक्तो गच्छानि ' इति ' अनेनैवाभिप्रायेण आग्नेयः ' पुरोडाशः ' क्रियते; न तु पूर्णमासप्रयोगवत् देवतयोर्द्वित्वसम्पादनाय । यतः पयस्याभाजौ ' मित्रावरुणौ ' स्वत एव ' द्वे देवते ' अत इत्यर्थः । गतमन्यत् । एतदु हास्येति । येन रूपेणानुष्ठाता प्रजया पशुभिश्च ' बहुः ' बहुविधो भवति । ' एतत् ' एव मिथुनात्मक द्वित्वम् ' अस्य ' यज्ञस्य ' तद्रूपम् ' इत्यर्थः ॥ १० ॥

अस्य दाक्षायणयज्ञस्य सोमयागरूपतां प्रतिपादयति–अथ यदित्यादिना । अमुमुपवसथ इति । सुत्यादिवसात् पूर्वमहरुपवसथः । प्रकरणान्तरे विहितत्वेन विप्रकर्षादमुमिति विप्रकृष्टवाचिना अदश्शब्देनाग्नीषोमीयस्य पशोः परामर्शः । स एवास्येति । ' अस्य ' यज्ञस्य पूर्वेद्युरनुष्ठेयो योऽग्नीषोमीयः पुरोडाशः, ' स एव सः ' अग्नीषोमीयः पशुरित्यर्थः ॥ ११ ॥

प्रातरनुष्ठेययोराग्नेयैन्द्राग्नयोर्यागयोः प्रातर्माध्यन्दिनसवनरूपतामुपपादयति–अथ प्रातरिति । आग्नेयपुरोडाशस्य प्रातःसवनस्य चैकदेवताधिष्ठितत्वात् तादात्म्यम्, सान्नाय्यमाध्यन्दिनसवनस्य चेन्द्रदेवत्वसाम्यात् तथात्वम् ॥ १२ ॥

---

१–अमावास्यायां पयस्या मैत्रावरुणी । का० श्रौ० सू० ४–१०१ । २.–तत्रैव दोहनश्रृतं वा दध्यानयति । ( का० श्रौ० सू० ४–१११ ) । दधनि वा दोहनमिति कर्कः ।

( मु ) अथ युत्पूर्वेद्युः । ( रै ) ऐन्द्राग्नेन यजतेऽमावास्यायां तृतीयसवनमेवास्य तद्वैश्वदेवं वै तृतीयसवनमिन्द्राग्नी वै विश्वेदेवाः ॥ १३ ॥
( ऽ ) अथ प्रातः । ( रा ) आग्नेयः पुरोडाशो भवति मैत्रावरुणी पयस्या नेद्यज्ञादयानीति न्वेवाग्नेयः पुरोडाशोऽथ यामेवामूं मैत्रावरुणीं वशामनूबन्ध्यामालभते सैवास्य मैत्रावरुणी पयस्या स पौर्णमासेन चामावास्येन चेष्ट्वा यावत्सौम्येनाध्वरेणेष्ट्वा जयति तावज्जयति तदु खलु महायज्ञो भवति॥ १४
( त्यु ) अथ यत्पूर्वेद्युः । ( र ) अग्नीषोमीयेण यजते पौर्णमास्यामेतेन वाऽइन्द्रो वृत्रमहन्नेतेनोऽएव व्यजयत याऽस्येयं विजितिस्तां तथोऽएवैष एतेन पाप्मानं द्विषन्तं भ्रातृव्यꣳ हन्ति तथो ऽएव विजयतेऽथ यत्संनयत्यामावास्यं वै सांनाय्यं दूरे ह्यदमावास्येति क्षिप्रं ऽएवैतद्वृत्रं जघ्नुषे तमेतेन रसेनाप्रीणन्क्षिप्रे ह वै पाप्मानमपहते य एवं विद्वान्पौर्णमास्याꣳ संनय-

---

अथ यत्पूर्वेद्युरैन्द्राग्नेन यजतेऽमावास्यायाम्—तृतीयसवनमेवास्य तत् । वैश्वदेवं वै तृतीयसवनम् । इन्द्राग्नी वै विश्वेदेवाः ॥ १३ ॥

अथ प्रातराग्नेयः पुरोडाशो भवति, मैत्रावरुणी पयस्या । नेद्यज्ञादयानीति न्वेवाग्नेयः पुरोडाशः । अथ यामेवामूं मैत्रावरुणीं वशामनूबन्ध्यामालभते-सैवास्य मैत्रावरुणी पयस्या । स पौर्णमासेन चामावास्येन चेष्ट्वा—यावत् सौम्येनाध्वरेणेष्ट्वा जयति—तावज्जयति । तदु खलु महायज्ञो भवति ॥ १४॥

अथ यत्पूर्वेद्युरग्नीषोमीयेण यजते पौर्णमास्याम्—एतेन वा इन्द्रो वृत्रमहन्, एतेनो एव व्यजयत—याऽस्येयं विजितिः—ताम् । तथो एवैष एतेन पाप्मानं द्विषन्तं भ्रातृव्यं हन्ति, तथो एव विजयते । अथ

---

दर्शे पूर्वेद्युरनुष्ठेयस्यैन्द्राग्नपुरोडाशस्य तृतीयसवनरूपतामाह—अथ यदिति । इन्द्राग्नी वै विश्वेदेवाः इति । इन्द्राग्न्योर्विश्वेषु देवेष्वन्तर्भावात् ऐन्द्राग्नपुरोडाशतृतीयसवनयोरनेकदेवत्यत्वसाम्याच्च तादात्म्यम् ॥ १३ ॥

दर्शे परेद्युः प्रातरनुष्ठेयस्य पयस्यायागस्यानूबन्ध्यारूपतामाह—अथ प्रातरिति । नेद्यज्ञादिति । आग्नेयपुरोडाशयागस्यानुष्ठानविहितायज्ञान्नैव गच्छति; प्रभ्रंशो मा भूदित्यनेनैवाभिप्रायेण; न तु तेन किञ्चिदपि सोमयागसाम्यं सम्पाद्यते । अमूं मैत्रावरुणीमिति । सोमप्रकरणे विहितत्वेन विप्रकृष्टाया अनूबन्ध्याया अदश्शब्देन परामर्शः । सैवास्येति । ' अस्य ' दाक्षायणयज्ञस्य या ' मैत्रावरुणी पयस्या ' सोमेऽनुष्ठीयमाना अनूबन्ध्या एव सेत्यर्थः । इत्थं दाक्षायणयज्ञस्य सोमयागसाम्यं सम्पाद्य, तत एव हेतोः फलसाम्यमाह—स पौर्णमासेन चेति । ' सौम्येन ' सोमद्रव्यसाध्येन यागेनेत्यर्थः । तदु खल्विति । ' तत् ' तस्मादेव ' खलु ' कारणात् दाक्षायणयागो ' महायज्ञः ' सोमयागो ' भवति '; स हि महायज्ञ इत्याख्यायते । अत एव तैत्तिरीयके सोमयागप्रकरणे समाम्नायते—" ते देवा एतं महायज्ञमपश्यन् "—इति ( तै. सं. ३ । २ । २ । २ )॥१४॥

अथैतं दाक्षायणं यज्ञं प्रकारान्तरेण प्रशंसन् पौर्णमासप्रयोगे पूर्वेद्युरनुष्ठेयमग्नीषोमीययागमनूद्य स्तौति—अथ यत् पूर्वेद्युरिति । एतेन वा इत्यादि । ' एतेन ' खलु अग्नीषोमीययागेन पुरा ' इन्द्रो वृत्रम् अहन् '

त्येष वै सोमो राजा देवानामन्नं यच्चन्द्रमास्तमेतत्पूर्वेद्युरभिषुण्वन्ति प्रातर्भक्षयिष्यन्तस्तमेतद्भक्षयन्ति यदपक्षीयते ॥ १५ ॥

(तेऽथ) अथ यत्पूर्वेद्युः । (२) अग्नीषोमीयेण यजते पौर्णमास्यामभिषुणोत्येवैनमेतत्तस्मिन्नभिषुत ऽएतᳬ रसं दधात्येतेन रसेन तीव्रीकरोति स्वदयति ह वै देवेभ्यो हव्यᳬ स्वदते हास्य देवेभ्यो हव्यं यऽएवं विद्वान् पौर्णमास्याᳬ संनयति ॥ १६ ॥

---

यत्सन्नयति । आमावास्यं वै सान्नाय्यम् । दूरे तद्—यदमावास्येति, क्षिप्र एवैतद्वृत्रं जघ्नुषे, तमेतेन रसेनाप्रीणन् । क्षिप्रे ह वै पाप्मानमपहते—य एवं विद्वान्पौर्णमास्यां सन्नयति, एष वै सोमो राजा देवानामन्नम्—यच्चन्द्रमाः । तमेतत्पूर्वेद्युरभिषुण्वन्ति—प्रातर्भक्षयिष्यन्तः । तमेतद्भक्षयन्ति—यदपक्षीयते ॥१५॥

अथ यत्पूर्वेद्युरग्नीषोमीयेण यजते पौर्णमास्याम्—अभिषुणोत्येवैनमेतत् । तस्मिन्नभिषुत एतं रसं दधाति । एतेन रसेन तीव्रीकरोति । स्वदयति ह वै देवेभ्यो हव्यम् । स्वदते हास्य देवेभ्यो हव्यं—य एवं विद्वान्पौर्णमास्यां सन्नयति ॥ १६ ॥

---

प्राणापानरूपयोरग्नीषोमयोर्हविषा तृप्तयोर्निष्क्रमणाद्धि वृत्रो मृतः । तथा चाम्नायते—"तस्माज्जञ्जभ्यमानादग्नीषोमौ निरक्रामताम्, प्राणापानौ वा एनं तदजहिताम्" इति (तै. सं. २ । ५ । २ । ४) । 'अस्य' इन्द्रस्य 'इयं या विजितिः' प्रसिद्धा, 'तां' 'व्यजयत' इति सम्बन्धः । "विपराभ्यां जेः"—(पा. सू. १ । ३ । १९) इत्यात्मनेपदम् । **तथो एवेति** । इन्द्रो यथा, 'तथा' एव 'एषः' यजमानोऽपि 'एतेन' अग्नीषोमीययागेन 'पाप्मानं पापभूतं 'द्विषन्तं' द्वेष्टारं भ्रातृव्यं शत्रुं 'हन्ति' हिनस्ति ।

ऐन्द्रं सांनाय्यमिति पौर्णमास्यां यः सान्नाय्ययागो विहितः, तमनूद्य स्तौति—**अथ यदित्यादिना** । **आमावास्यं वा** इति । इन्द्रवीर्यस्य सन्नयनसाधनं दधिपयोरूपं हविः 'आमावास्यं वै' अमावास्यासम्बद्धमेव । 'अमावास्या' तिथिः 'इति' 'यत्' 'तद्' 'दूरे'; प्रतिपदादिभिश्चतुर्दशीभिर्व्यवधानात् । पुरा खलु देवाः 'क्षिप्रे एव' अल्पकाले एव शीघ्रम् 'एतत्' इत्थं 'वृत्रं' 'जघ्नुषे' हन्तवे इन्द्राय । "क्रियाग्रहणं कर्त्तव्यम्"—(पा. सू. १ । ४ । ३२ वा. १) इति कर्मणः सम्प्रदानत्वात् चतुर्थी । 'तं' पौर्णमास्यां वृत्रं हतवन्तमिन्द्रम् 'एतेन' सान्नाय्यरूपेण 'रसेन' 'अप्रीणन्' अतर्पयन् । 'यः' यजमानः 'एवं विद्वान्' पौर्णमास्यामिन्द्रमुद्दिश्य सान्नाय्ययागं करोति स इन्द्रवत् क्षिप्रमेव स्वकीयं पापरूपं शत्रुम् 'अपहते' हिनस्ति । तदेव सन्नयनं प्रकारान्तरेण स्तौति—**एष वा** इति । योऽयं पौर्णमास्यां सम्पूर्णः 'चन्द्रमाः', 'एषः' खलु 'राजा' राजमानः 'सोमः' 'देवानामन्नम्'; 'तं' सोमरूपम् 'एतत्' अन्नम् 'प्रातः भक्षयिष्यन्तः' पूर्वदिवसे 'अभिषुण्वन्ति' रसभावं प्रापयन्ति । 'तम् एतत्' अपरपक्षे 'भक्षयन्ति' । 'यत्' यस्माद् असौ प्रत्यहं तत्र 'अपक्षीयते' अतो भक्षयन्तीति सम्बन्धः ॥ १५ ॥

तथाविधमेवैतदनुष्ठानमित्याह—**अथ यत् पूर्वेद्युरग्नीषोमीयेणेति । अभिषुणोत्येवैनमिति** । पूर्वेद्युः कर्त्तव्याभिषवस्थानीयोऽयमग्नीषोमीययाग इत्यर्थः । 'अभिषुते तस्मिन्' सोमे 'एतं' सान्नाय्यरूपं 'रसं' परेद्युः 'दधाति' स्थापयति । 'एतेन' च सान्नाय्यरसेन तं सोमं 'तीव्रीकरोति' तीव्रमतिशयेन मदकरं करोति तथा

( त्यु ) अथ यत्पूर्वेद्युः । ( रे ) ऐन्द्राग्नेन यजतेऽमावास्यायां दर्शपूर्णमासयोर्वै देवते स्त इन्द्राग्नी ऽएव ते ऽएवैतदञ्जसा प्रत्यक्षं यजत्यञ्जसा ह वा ऽअस्य दर्शपूर्णमासाभ्यामिष्टं भवति य एवमेतद्वेद ॥ १७ ॥

( द्रा ) अथ प्रातः । ( रा ) आग्नेयः पुरोडाशो भवति मैत्रावरुणी पयस्या नेद्यज्ञादयानीति न्वेवाग्नेयः पुरोडाशोऽथैतावेवार्धमासौ मित्रावरुणौ य एवापूर्यते स वरुणो योऽपक्षीयते स मित्रस्तावेताᳪं रात्रिमुभौ समागच्छतस्तदुभावेवैतत्सह सन्तौ प्रीणाति सर्वᳪं ह वा ऽअस्य प्रीतं भवति सर्व्वमाप्तं य एवमेतद्वेद ॥ १८ ॥

तद्वा ऽएताᳪं रात्रिम् । मित्रो वरुणे रेतः सिञ्चति तदेतेन रेतसा प्रजायते यदापूर्यते तद्यदेषाऽत्र मैत्रावरुणी पयस्याऽवक्लृप्ततमा भवति ॥ १९ ॥

---

अथ यत्पूर्वेद्युरैन्द्राग्नेन यजतेऽमावास्यायाम्—दर्शपूर्णमासयोर्वै देवते स्त इन्द्राग्नी एव । ते एवैतदञ्जसा प्रत्यक्षं यजति । अञ्जसा ह वा अस्य दर्शपूर्णमासाभ्यामिष्टं भवति—य एवमेतद्वेद ॥ १७ ॥

अथ प्रातराग्नेयः पुरोडाशो भवति, मैत्रावरुणी पयस्या । नेद्यज्ञादयानीति । न्वेवाग्नेयः पुरोडाशः । अथैतावेवार्धमासौ मित्रावरुणौ । य एवापूर्यते—स वरुणः । योऽपक्षीयते—स मित्रः । तावेतां रात्रिमुभौ समागच्छतः तदुभावेवैतत्सह सन्तौ प्रीणाति । सर्वं ह वा अस्य प्रीतं भवति, सर्वमाप्तं—य एवमेतद्वेद ॥ १८ ॥

तद्वा एतां रात्रिं मित्रो वरुणे रेतः सिञ्चति । तदेतेन रेतसा प्रजायते—यदापूर्यते । तद् यदेषाऽत्र मैत्रावरुणी पयस्याऽवक्लृप्ततमा भवति ॥ १९ ॥

---

तेन सांनाय्यरसेन 'देवेभ्यः' देवार्थं 'हव्यं' हविः 'स्वदयति' स्वादूकरोति । 'अस्य' यजमानस्य तत् 'हव्यं' हविः 'देवेभ्यः' 'स्वदते' रोचते । "रुच्यर्थानां प्रीयमाणः"—(पा. सू. १ । ४ । ३३) इति सम्प्रदानत्वात् देवेभ्य इति चतुर्थी ॥ १६ ॥

दर्शयागे पूर्वदिवसमनुष्ठेयमैन्द्राग्नयागमनूद्य स्तौति—**अथ यदिति** । 'इन्द्राग्नी एव' खलु 'दर्शपूर्णमासयोर्देवते; तत्रत्यप्रथमपुरोडाशस्याग्निदेवत्यत्वात्, सान्नाय्यस्य चैन्द्रत्वात् । **ते एवैत**दित्यादि निगदसिद्धम् ॥ १७ ॥

दर्शप्रयोगे परेद्युरनुष्ठेयावपि यागावनूद्य स्तौति—**अथ प्रातरिति** । **अथैतावेवे**त्यादि । पयस्याया देवते यौ 'मित्रावरुणौ', 'एतावेवार्द्धमासौ' । एतदेव विवृणोति—**य एवेति** । 'य एव' अर्द्धमासः 'आ' समन्तात् 'पूर्यते' वर्द्धमानया चन्द्रकलया पूर्णो भवति, 'सः' अमृतरससम्बन्धाद् 'वरुणः', स हि रसाभिमानी देवः; 'यः' अर्द्धमासः 'अपक्षीयते' क्षीयमाणचन्द्रकलायुक्तो भवति, 'सः' अपरपक्षः 'मित्रः' 'तौ' चन्द्रसूर्यात्मकौ मित्रावरुणौ 'उभौ' 'एतां रात्रिं' दर्शरात्रिं 'समागच्छतः' सह समाप्नुतः । 'तत्' तस्मात् कारणात् 'एतत्' एतेन मैत्रावरुणयागेन 'उभावेव' तौ 'सह सन्तौ' सह भवन्तौ युगपत् 'प्रीणाति' तर्पयति । **सर्वं ह वा अस्ये**ति, वेदितुः फलम् ॥ १८ ॥

मित्रावरुण[1]देवत्यत्वं प्रकारान्तरेण स्तौति—**तद्वा एतामिति** । 'एतां रात्रिम्' । अत्यन्तसंयोगे द्वितीया

---

१—' मित्रावरुणदेवद्वयम्—' इ. पा. क. ।

साँनाय्युभाजना व्वा ऽअमावास्या । तुददस्तुत्पौर्णमास्यां क्रियते स यद्वात्रापि संनुयेज्जामि कुर्यात्समुदं कुर्यात्तुदेनमद्भ्य ओषधिभ्यः सम्भृत्या-हुतिभ्योऽधिजनयति स ऽएष आहुतिभ्यो जातः पश्चाद्ददृशे ॥ २० ॥

मिथुनादिद्वाऽएनमेतत्प्रजनयति । योषा पयुस्या रेतो व्वाजिनं तद्वाऽ-अनुष्ठ्या युन्मिथुनाज्जायते तदेनमेतस्मान्मिथुनात्प्रजुननात्प्रजनयति तुस्मादेषाऽत्र पयुस्या भवति ॥ २१ ॥

---

सान्नाय्यभाजना वा अमावास्या । तददस्तत्पौर्णमास्यां क्रियते । स यद्वात्रापि संनयेत्-जामि कुर्यात् । समदं कुर्यात् । तदेनमद्भ्य ओषधिभ्यः सम्भृत्याहुतिभ्योऽधिजनयति । स एष आहुतिभ्यो जातः पश्चाद्ददृशे ॥ २० ॥

मिथुनादिद्वा एनमेतत्प्रजनयति । योषा पयस्या, रेतो वाजिनम् । तद्वा अनुष्ठ्या—यन्मिथुनात्प्र-जननात्प्रजनयति । तस्मादेषाऽत्र पयस्या भवति ॥ २१ ॥

---

( पा. सू. २।३।९ ) । 'मित्रः' अपरपक्षाभिमानी देवः, 'वरुणे' शुक्लपक्षाभिमानिनि देवे 'रेतः सिञ्चति' । 'तत्' तथा सति 'एतेन रेतसा' स शुक्लपक्षः 'प्रजायते' उत्पद्यते; 'यत्' यतः कारणात् अस्मिन् चन्द्रः 'आपूर्यते' 'यत्' यस्मात् एवम्, 'तत्' तस्मात् 'एषा' मित्रावरुणदेवताका 'पयस्या' 'अवक्लृप्ततमा' अतिशयेनावक्लृप्ता, क्लृप्तसामर्थ्या भवति ॥ १९ ॥

इतोऽपि पयस्यायागो दर्शे युक्ततर इत्याह—**सान्नाय्यभाजना वा** इति । 'सान्नाय्यभाजना' सान्नाय्य-यागस्य स्थानभूता ह्यमावास्या; ऐन्द्रं दध्यमावास्यायामिति दधिपयसोर्यागस्य प्रकृतौ तत्र विहितत्वात् । 'तत्' तथा सति ते द्वे ऐन्द्रसान्नाय्ये 'अदः' विप्रकृष्टे 'पौर्णमास्याम्' एव 'क्रियते' । यद्यपि 'सः' पौर्ण-मास्यां सान्नाय्यं यजमानः 'अत्र' दर्शे 'अपि' सन्नयेत् तदा कृतस्यैव पुनः करणात् 'जामिता' दोषः स्यात्; अपि च दर्शपूर्णमासदेवतयोः परस्परं 'समदं' कलहं 'कुर्यात्' पूर्णमासे कृतमैन्द्रं सान्नाय्यं परि-त्यज्य दर्शे मित्रावरुणदेवताका पयस्यैव कार्या । तस्या अपि दधिपयसोर्विकारत्वात् अमावास्यायाः सान्नाय्यभाज-नत्वमपि न व्याहन्यत इत्यर्थः । **तदेनमद्भ्य** इत्यादि । 'तत्' तेन दर्शेऽनुष्ठितेन सान्नाय्ययागेन अप्सु ओषधिषु च प्रविष्टम् 'एनम्' सोमं ततः 'सम्भृत्य' दधिपयोरूपेण सम्पाद्य, अग्नौ हुत्वा, तानि 'आहुतिभ्यः' सकाशात् 'अधिजनयति' । 'स एषः' चन्द्रः सान्नाय्याहुतिभ्यः सकाशात् जातः प्रतिपदि 'पश्चाद् ददृशे' कलारूपेण दृश्यते ॥ २० ॥

पयस्योत्पत्त्यनुनिष्पादिनो वाजिनस्यापि होमं विधित्सुः पयस्यावाजिने सम्भूय स्तौति—**मिथुनादिति** । 'एनं' चन्द्रं 'मिथुनात्' एव हि खलु 'एतत्' 'प्रजनयति' उत्पादयति । किन्तर्हि मिथुनम् ? पयस्या हि स्त्री-लिङ्गत्वात् 'योषा' स्त्री, 'वाजिनं' हि 'रेतः' पुरुषस्य वीर्यस्थानीयम्, 'तत्' खलु 'अनुष्ठया' अनु-ष्ठानात् सम्यक् 'यत्' यत्र खलु स्त्रीपुंसलक्षणात् 'मिथुनात्' 'जायते' ॥ २१ ॥

( त्यु ) अथ व्वाजिभ्यो व्वाजिनं जुहोति । ( त्यृ ) ऋतवो वै व्वाजिनो रेतो व्वाजिनं तदृतुष्वेवैतद्रेतः सिच्यते तदृतवो रेतः सिक्तमिमाः प्रजाः प्रजनयन्ति तस्माद्वाजिभ्यो व्वाजिनं जुहोति ॥ २२ ॥

स वै पश्चादिव यज्ञस्य जुहोति । पश्चाद्धि परीत्य व्वृषा योषामधिद्रवति तस्याᳬं रेतः सिञ्चति स वै प्रागेवाग्रे जुहोत्यग्ने व्वीहीत्यनुव्वषट्करोति तत्स्विष्टकृद्भाजनᳬं स वै प्रागेव जुहोति ॥ २३ ॥

( त्यु ) अथ दिशो व्याघारयति । दिशः प्रदिश ऽआदिशो व्विदिशऽ-उद्दिशो दिग्भ्यः स्वाहेति पञ्च दिशः पञ्चऽर्तवस्तदृतुभिरेवैतद्दिशो मिथुनीकरोति ॥ २४ ॥

---

अथ वाजिभ्यो वाजिनं जुहोति । ऋतवो वै वाजिनः, रेतो वाजिनम् । तदृतुष्वेवैतद्रेतः सिच्यते । तदृतवो रेतः सिक्तमिमाः प्रजाः प्रजनयन्ति । तस्माद्वाजिभ्यो वाजिनं जुहोति ॥ २२ ॥

स वै पश्चादिव यज्ञस्य जुहोति । पश्चाद्धि परीत्य वृषा योषामधिद्रवति–तस्यां रेतः सिञ्चति । स वै प्रागेवाग्रे जुहोति । " अग्ने वीहि " इति । अनुवषट्करोति । तत् स्विष्टकृद्भाजनम् । स वै प्रागेव जुहोति ॥ २३ ॥

अथ दिशो व्याघारयति। "दिशः प्रदिश आदिशो विदिश उद्दिशो दिग्भ्यः स्वाहा"–इति । पञ्च दिशः । पञ्चर्तवः । तदृतुभिरेवैतद्दिशो मिथुनीकरोति ॥ २४ ॥

---

इत्थं वाजिनस्य मिथुनसम्पत्त्यर्थत्वमुक्त्वा तस्य होमं विधत्ते–**अथ वाजिभ्य** इति । विहितं वाजिनहोमं प्रजोत्पत्तिहेतुत्वेन स्तौति–**ऋतवो वा** इति । ' ऋतवः ' खलु वाजिशब्दाभिधेयाः । तेभ्यः वाजिनहोमात् ऋतुष्वेव सर्वप्रजोत्पत्तिकारणं ' रेतः ' ' सिक्तं ' भवति; तस्माच्च रेतसः सकाशात् ते ' ऋतवः ' सर्वाः 'प्रजाः' उत्पादयन्तीत्यर्थः ॥ २२ ॥

तस्य वाजिनहोमस्य कालं विधातुं स्तौति–**स वा** इति । ' यज्ञस्य पश्चात्' भागे प्रस्तरपरिधिप्रहरणोत्तरकालं वाजिनहोमः कर्त्तव्यः । अत एवोक्तं कात्यायनेन–"वाजिनं निषिच्योत्करे करोति,०–०प्रहृत्य तृणं तेन चरति, विमुच्य वा स्रुचौ "–( का. श्रौ. सू. ४ । १११–११३ ) इति । आपस्तम्बोऽप्याह स्म–" परीधीन् प्रहृत्य, संस्रवान्तं कृत्वा, वाजिनपात्रमुपस्तीर्य " इत्यादि । शिष्टं स्पष्टम् । होमे विशेषं विधत्ते–**स वा** इति । 'सः' खलु अध्वर्युः ' अग्ने ' प्रथमं ' प्रागेव ' प्रागपवर्गमल्पं वाजिनं ' जुहोति ' " अग्ने वीहि"—' इति ' ( ऐ. ब्रा. १ । ४ । ९ ) यदा होता ' अनुवषट् करोति ' तदा स्विष्टकृत्स्थानीयं वाजिनशेषमुत्तरपूर्वस्यां दिशि जुहोति । **स वै प्रागेवेति**, प्रधानहोमस्य निगमनम् ॥ २३ ॥

हुतशिष्टेन वाजिनेन दिग्व्याघारणं विधत्ते–**अथ दिशो व्याघारयतीति** । दीर्घधारयाऽग्नौ प्राच्यादिदिक्षु पातनम्, व्याघारणम् । तन्मन्त्राः–" दिशः प्रदिशः " इत्यादयः । अनेन वाजिनेन ' दिशः ' तृप्ता भवन्तु । एवमुत्तरत्रापि योज्यम् । प्रधानभूताः 'दिशः', दिङ्मध्यवर्तिन्यः ' प्रदिशः ', ईषद्दिशः ' आदिशः ', 'विदिशः'

**तद्वै पञ्चैव भक्षयन्ति । होता चाध्वर्युश्च ब्रह्मा चाग्नीच्च यजमानः पञ्च वाऽऋतवस्तदृतूनामेवैतद्रूपं क्रियते तदृतुष्वेवैतद्रेतः सिक्तं प्रतिष्ठापयति प्रथमो यजमानो भक्षयति प्रथमो रेतः परिगृह्णानीत्यथो ऽअप्युत्तमो मय्युत्तमे रेतः प्रतितिष्ठादित्युपहूत उपह्वयस्वेति सोममेवैतत्कुर्वन्ति॥२९॥**

**इति चतुर्थप्रपाठके प्रथमं ब्राह्मणम् ॥ चतुर्थोऽध्यायः समाप्तः ( ४ । ४ )॥**

---

**तद्वै पञ्चैव** भक्षयन्ति–होता च, अध्वर्युश्च, ब्रह्मा च, अग्नीच्च, यजमानः । पञ्च वा ऋतवः । तदृतूनामेवैतद्रूपं क्रियते । तदृतुष्वेवैतद्रेतः सिक्तं प्रतिष्ठापयति । प्रथमो यजमानो भक्षयति । प्रथमो रेतः परिगृह्णानीति । अथो अप्युत्तमः । मय्युत्तमे रेतः प्रतितिष्ठादिति । उपहूतः । उपह्वयस्व इति । सोममेवैतत्कुर्वन्ति ॥ २९ ॥ इति दाक्षायणेष्टिः ।

---

आग्नेयादिकोणदिशः, ' उद्दिशः ' ऊर्ध्वा दिशः । एवं पञ्चभिर्मन्त्रैः स्वाहाकारान्तैः प्राच्यादिक्रमेण पञ्चसु दिक्षु व्याघारार्थं " दिग्भ्यः स्वाहा "–इति षष्ठेन पूर्वार्द्धे जुहुयात् । तदुक्तं सूत्रकृता–" वाजिनशेषेण दिशो व्याघारयति, दिश इति प्रतिमन्त्रम्; प्रदक्षिणं पुरस्तात् प्रथममुत्तमाभ्यां मध्ये पूर्वार्द्धे च "–( का. श्रौ. सू. ४ । ११६–११७ ) तदेतद् व्याघारणं प्रशंसति–**पञ्च दिशः, पञ्च ऋतव** इति ॥ २४ ॥

यजमानपञ्चमानामृत्विजां भक्षणं विधत्ते–**तद्वै पञ्चैवे**ति । तद्भक्षणं प्रशंसति–**पञ्च वा ऋतव** इति । " हेमन्तशिशिरयोः समासेन "–( ऐ. ब्रा. १ । १ । १ ) इति ऋतूनां पञ्चत्वम् । यदेव पञ्चानामृत्विजां भक्षणम्, एतत् पञ्चसङ्ख्यानामृतूनामेव रूपं क्रियते । ' तत् ' तस्मात् ' ऋतुषु ' प्राक् ' सिक्तं रेतः ' ' प्रतिष्ठापयति ' प्रतिष्ठितं करोति ॥

यजमानस्य प्राथम्यं विधत्ते–**प्रथमो यजमान** इति । ऋत्विग्भ्यः ' प्रथमः ' पूर्वभावी सन् अहं 'रेतः' ' परिगृह्णानि ' स्वीकरवाणि ' इति ' अनेनाभिप्रायेण यजमानस्य प्रथमभक्षणमित्यर्थः ॥

पक्षान्तरमाह–**अथो अप्युत्तम** इति । पक्षान्तरद्योतकः ' अथो '–शब्दः । ऋत्विजाम् ' उत्तमः ' चरमभावी सन् यजमानो भक्षयेत् । एवमपि विरोधो नास्तीति ' अपि'–शब्दस्यार्थः । ' उत्तमे ' चरमभाविनि यजमाने कृत्स्नं ' रेतः ' ' प्रतितिष्ठात् ' प्रतितिष्ठेत्, न मामतिवर्त्तेत, इत्यनेनाभिप्रायेण यजमानस्य चरमभक्षणमित्यर्थः ॥

अथ मन्त्रानुज्ञापनपूर्वकं तद्भक्षणं कर्त्तव्यमिति विधत्ते–**उपहूत** इति । " उपहूतः "–इत्यनुज्ञामन्त्रः, " उपह्वयस्व "–इत्यनुज्ञापनमन्त्रः । एतच्च द्वादशलक्षण्यां तृतीये निर्णीतम् । कात्यायनेनाप्युक्तम्–" उपह्वयस्वेत्यामन्त्र्यामन्त्र्य भक्षणमुपहूत इति प्रसूतः "–ईति । एवञ्च सति ' एतद् ' वाजिनम् ऋत्विजः ' सोममेव '

---

१–होत्रध्वर्युब्रह्माग्नीध्यजमानाः, का. श्रौ. सू. ४ । १२६ । २–प्रथमो वोभयतस्तु यजमानः, का. श्रौ. सू. ४ । १२७ । ३–ऋतूनां त्वा व्वाजिनां व्वाजिनं भक्षयामि व्वाज्यहं व्वाजिनस्योपहूतो भक्षयामीति वा । व्वाजे व्वाजी भूयासमिति वा, का. श्रौ. सू. ४ । १२३–१२५ । ४–का. श्रौ. सू. ४ । ११९ ।

# अथ पञ्चमाध्याये प्रथमं ब्राह्मणम् ।

प्रजापतिर्ह वा ऽइदमग्र एक ऽएवास । स ऽऐक्षत कथं नु प्रजायेयेति सोऽश्राम्यत्स तपोऽतप्यत स प्रजा ऽअसृजत ता ऽअस्य प्रजाः सृष्टाः पराबभूवुस्तानीमानि व्वयाᳬंसि पुरुषो वै प्रजापतेर्नेदिष्ठं द्विपाद्वा ऽअयं पुरुषस्तस्माद्द्विपादो व्वयाᳬंसि ॥ १ ॥

---

प्रजापतिर्ह वा इदमग्र एक एवास । स ऐक्षत–कथं नु प्रजायेयेति। सोऽश्राम्यत्, स तपोऽतप्यत, स प्रजा असृजत । ता अस्य प्रजाः सृष्टाः पराबभूवुः । तानीमानि वयांसि । पुरुषो वै प्रजापतेर्नेदिष्ठम् । द्विपाद्वा अयं पुरुषः । तस्माद् द्विपादो वयांसि ॥ १ ॥

---

सोमसदृशमेव ' कुर्वन्ति ' उपहवसाधनं हि सोमधर्म्मः ॥ २९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये
द्वितीयकाण्डे चतुर्थाध्यायस्य चतुर्थं ब्राह्मणम् ॥ ४ ॥ ४ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥ २ ॥

धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः
कार्पासीयं कृपावान् गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥ ३ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण
विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे
चतुर्थोऽध्यायः समाप्तः ॥ २ ॥ ४ ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अथ चातुर्मास्यानि विधित्सुस्तत्र वैश्वदेवस्य प्रजासृष्टिहेतुतामाख्यायिकया प्रतिपादयति–**प्रजापतिर्ह वा** इति । इदं दृश्यमानं चराचरात्मकं यज्जगत् तत्समग्रसृष्टेः प्राक्काले प्रजापतिरेक एवासीत्; कार्यस्य जगतः कारणभूते प्रजापतौ लीनत्वात् । सः असहाय एक एव आसीदित्यर्थः ।

ततः सकाशात् प्रजासृष्टिं दर्शयति–**स ऐक्षतेत्यादिना** । **अश्राम्यदिति** । प्रजोत्पत्तिकारणपर्यालोचनया श्रान्तः खिन्नोऽभवदित्यर्थः । "श्रमु तपसि खेदे च" (धा.पा.दि. प. ९८) । "शमामष्टानाम्" ( पा. सू.७ । ३ । ७४ ) इति दीर्घः । स च श्रान्तः सन् प्रजोत्पत्तिकारणं तपस्तप्तवान् । **स प्रजा** इत्यादि निगदसिद्धम् ।

---

१–साधारणेषु वा सामर्थ्यात् । का. श्रौ. सू. ४ । १२२ । २–' सायण मात्येन '–इ० पा० ।

स ऽऐक्षत प्रजापतिः । (सं) यथा न्वेव पुरैकोऽभूवमेवमु न्वेवाप्येतर्ह्येक ऽएवास्मीति स द्वितीयाः ससृजे ता ऽअस्य परेव बभूवुस्तदिदं क्षुद्रꣳ सरीसृपं यदन्यत्सर्पेभ्यस्तृतीयाः ससृज ऽइत्याहुस्ता ऽअस्य परैव बभूवुस्त ऽइमे सर्पा ऽएता ह न्वेव द्वयीर्याज्ञवल्क्य ऽउवाच त्रयीरु तु पुनर्ऋचा ॥ २ ॥

सोऽर्चञ्छ्राम्यन्प्रजापतिरीक्षांचक्रे । कथं नु मे प्रजाः सृष्टाः पराभवन्तीति स हैतदेव ददर्शानशनतया वै मे प्रजाः पराभवन्तीति स ऽआत्मन एवाग्रे स्तनयोः पय ऽआप्याययांचक्रे स प्रजा ऽअसृजत ता ऽअस्य प्रजाः सृष्टा स्तनावेवाभिपद्य तास्ततः सम्बभूवुस्ता ऽइमाऽअपराभूताः ॥ ३ ॥

---

स ऐक्षत प्रजापतिः—यथा न्वेव पुरैकोऽभूवम्—एवमु न्वेवाप्येतर्ह्येक एवास्मीति । स द्वितीयाः ससृजे । ता अस्य परैव बभूवुः । तदिदं क्षुद्रं सरीसृपम्—यदन्यत्सर्पेभ्यः । तृतीयाः ससृज इत्याहुः । ता अस्य परैव बभूवुः । त इमे सर्पाः । एता ह न्वेव द्वयीर्याज्ञवल्क्य उवाच । त्रयीरु तु पुनर्ऋचा ॥ २ ॥

सोऽर्चञ्छ्राम्यन्प्रजापतिरीक्षाञ्चक्रे—कथं नु मे प्रजाः सृष्टाः पराभवन्तीति । स हैतदेव ददर्श—

---

तानीमानीति । याः खलु सृष्टेः पराभूताः, ' तानि इमानि ' ' वयांसि ' जातानि, पक्षिरूपेणाभवन्नित्यर्थः । एतदुपपादयति—पुरुषो वा इति । पुरुषः ' मनुष्यः खलु सृष्टानां प्रजानां मध्ये ' प्रजापतेः ' नेदिष्ठम् ' अन्तिकतमं कार्यम् । स च पादद्वयोपेतः, तत्परिणामरूपत्वात् पक्षिणोऽपि पादद्वयोपेता दृश्यन्ते । तस्माद्वयसां पुरुषसाधर्म्यात् तेषां तत्परिणामरूपत्वमवसेयमित्यर्थः ॥ १ ॥

पुनरन्यथा प्रजासृष्टिमाह—स ऐक्षतेति । यथा न्वेवेति । ' यथा ' खलु ' पुरा ' प्रजासृष्टेः पूर्वम् ' एकः ' ' असहायः अभूवम् ', ' अप्येतर्हि ' इदानीं प्रजासृष्ट्युत्तरकालमपि तथैव ' एक एव अस्मि इति '। एवमीक्षित्वा ' सः ' पुनः अन्याः प्रजाः ' ससृजे ' पूर्वसृष्टप्रजापेक्षया आसां द्वितीयत्वम् । परैवेति । ' अस्य ' ' ताः ' अपि प्रजाः पराभूताः ' एव ' अभवन् । ' तत् '—इति विधेयापेक्षं नपुंसकत्वम्; ताः पराभूताः द्वितीयसृष्ट्युत्पन्नाः प्रजाः, यत् ' इदं ' ' क्षुद्रम् ' अल्पशरीरं ' सरीसृपं ' सर्पणशीलं सर्पव्यतिरिक्तं प्राणिजातं दृश्यते, तदात्मना परिणता इत्यर्थः । तृतीयाः ससृज इत्याहुरिति । पुनरपि स प्रजापतिः सृष्टिद्वयापेक्षया ' तृतीयाः ' अन्याः प्रजाः ' ससृजे ' सृष्टवान् ' इति ' ' आहुः ' अभिज्ञाः कथयन्ति । ' ताः ' अपि ' अस्य ' पराभूताः ' एव ' अभवन् । ' ते इमे ' सर्परूपेण दृश्यन्ते ॥

तृतीयसृष्टावाहुरिति यः परोक्षनिर्देशः तदभिप्रायमाह—एता हेति । ' एताः ' पूर्वोक्ताः ' द्वयीः ' द्विविधाः ' एव ' प्रजाः प्रजापतिना सृष्टाः इति ' याज्ञवल्क्यः ' महर्षिः ' उवाच ' उक्तवान्, न तृतीयानां प्रजानां सृष्टिः; 'ऋचा' ऋङ्मन्त्रेण ( ऋ. सं. ८ । १०१ । १४ । ) ' पुनः ' ' त्रयीः ' त्रिविधाः 'अपि' ' प्रजाः ' सृष्टा इति प्रतिपाद्यते ॥ २ ॥

स चोदाहरिष्यते—सोऽर्चन्नित्यादि । त्रिवारं सृष्टानां प्रजानां पराभवकारणं किमिति विचार्य ' सः ' खलु

( स्त ) तस्मादेतदृषिणाऽभ्युनूक्तं प्रजा ह तिस्रो ऽअत्यायमीयुरिति तद्याः पुराभूतास्ता ऽएवैतदभ्यनूक्तं न्यन्या ऽअर्कमभितो विविश्र ऽइत्यग्निर्वा ऽअर्कस्तद्या ऽइमाः प्रजा ऽअपराभूतास्ता ऽअग्निमभितो निविष्टास्ता ऽएवैतदभ्यनूक्तम् ॥ ४ ॥

---

अनश्नतया वै मे प्रजाः पराभवन्तीति । स आत्मन एवाग्रे स्तनयोः पय आप्याययाञ्चक्रे । स प्रजा असृजत । ता अस्य प्रजाः सृष्टाः स्तनावेवाभिपद्य, तास्ततः सम्बभूवुः । ता इमा अपराभूताः ॥ ३ ॥

तस्मादेतदृषिणाऽभ्यनूक्तम्–" प्रजा ह तिस्रो अत्यायमीयुः "–इति । तद् याः पराभूतास्ता एवैतदभ्यनूक्तम् । " न्यन्या अर्कमभितो विविश्रे "–इति । अग्निर्वा अर्कः । तद् या इमाः प्रजा अपराभूताः, ता अग्निमभितो निविष्टाः । ता एवैतदभ्यनूक्तम् ॥ ४ ॥

---

' एतत् ' ' एव ' कारणं ' ददर्श ' एतच्छब्दनिर्दिष्टं दर्शयति–**अनशनतयेति** । उत्पन्नानां प्रजानामशनराहित्यं पराभवकारणमित्यर्थः । उत्पत्स्यमानानां प्रजानामप्यनशनत्वं मा भूदिति प्रजापतिना कल्पितमशनमाह–**स आत्मन एवेति** । ' अग्रे ' सृष्टेः प्रागेव प्रजापतिः ' आत्मनः ' स्वशरीरस्य एव सम्बन्धिनोः ' स्तनयोः ' ' पयः ' ' आप्याययाञ्चक्रे ' आप्यायितं पूरितं कृतवान् । एवमशनं प्रकल्प्य अनन्तरं याः प्रजाः असृजत, ' अस्य ' प्रजापतेः ' ताः ' सृष्टाः प्रजाः पयसा पूर्णौ ' स्तनौ ' ' अभिपद्य ' जीवनवत्योऽभवन् ' ततः ' अनन्तरं ' ताः ' प्रजाः ' सम्बभूवुः ' सम्यगुत्पन्नाः सम्यगात्मानोऽभवन् । पूर्वोत्पन्नप्रजावत् पराभवं न प्राप्ता इत्यर्थः ॥ ३ ॥

उक्तेऽर्थे ऋङ्मन्त्रं संवादयति–**तस्मादिति** । यस्मादग्र एवमासीत्, तस्मात् कारणात् तदुक्तमर्थजातम् ' ऋषिणा ' मन्त्रेण ' अभ्यनूक्तम् ' ( ऋ. सं. ८ । १०१ । १४ ) प्रतिपादितम् । तत्र प्रथमपादमनूद्योक्तार्थपरतामाह–**प्रजा हेति** । ' तिस्रः ' त्रिविधाः ' प्रजाः ' ' अत्यायम ' अत्ययं विनाशम् ' ईयुः ' जग्मुः । ' ह '–शब्द एतद्ब्राह्मणप्रसिद्धिं द्योतयति–**तद्या** इति । ' याः ' खलु प्रजाः त्रिवारं सृष्टा अन्नाभावेन हेतुना ' पराभूताः ' ' एतत् ' एतेन मन्त्रपादेन ता एवाभिलक्ष्य ' अभ्यनूक्तम् ' प्रतिपादितम् ॥

द्वितीयं पादमनूद्य व्याचष्टे–**न्यन्या** इति । पयोरूपमशनं प्राप्य ' अन्याः ' प्रजाः 'अर्कम्' अर्चनीयमग्निम् ' अभितः ' सर्वतः ' निविविश्रे ' निविविशिरे । " नेर्विशः " ( पा. सू. १ । ३ । १७ ) इति आत्मनेपदम् । " इरयो रे "–( पा. सू. ६ । ४ । ७६ ) इति रे-आदेशः । **तद्या** इत्यादि । ' तत् ' तत्र ' या इमाः ' परिदृश्यमानाः मनुष्यादिरूपाः 'प्रजाः' पयोलक्षणान्नसद्भावात् 'अपराभूताः' पराभवं नाशमप्राप्ताः । ' ता ' एव,

---

१–' लब्धात्मानः–' इ. पा. । २–ऐतरेयारण्यके चेयमृगित्थं व्याख्याता " प्रजा ह तिस्रो अत्यायमीयुर्न्यन्या अर्कमभितो विविश्रे । बृहद्ध तस्थौ भुवनेष्वन्तः पवमानो हरित आविवेश" इति । " प्रजा ह तिस्रः अत्यायमीयुरिति या वै ता इमाः प्रजास्तिस्रो अत्यायमायंस्तानीमानि वयांसि वङ्गावगधाश्चेरपादाः, इति । " ताः पूर्वोक्ता इमाः अस्माभिर्दृश्यमानाः श्रद्धारहिताः त्रिविधाः प्रजाः याः काश्चिद्वैदिकस्यातिक्रमं प्राप्ताः तानि तथाविधप्रजानां शरीराणि तद्दोषफलं भोक्तुं प्रवृत्तानीमान्यस्माभिर्दृश्यन्ते । सामान्यतः प्रोक्तानां पुनर्वयांसीत्यादिना विशेषनिर्देशः । वयांसि पक्षिणः काकगृध्रादय आकाशे दृश्यन्ते । सोऽयं पक्षिसङ्घस्त्रिविधानां प्रजानामेको भागः । वङ्गा वनगता वृक्षाः, अवगधा अवन्ति मनुष्यादीन्रक्षन्ति तैर्गृध्यन्तेऽभिकाङ्क्ष्यन्त इति व्रीहियवाद्या ओषधयोऽवगधाः । " गृधु अभिकाङ्क्षायाम् " इति धातोर्गधशब्दनिष्पत्तिः । सोऽयमोषधिवनस्पतिरूपः प्रजानां द्वितीयो राशिर्भूमौ वर्तते । इरपादा उर ( रः ) पादाः सर्पा भूबिलवासिनः सोऽयं तृतीयो राशिः । तदेतत्प्रजात्रयं वैदिकातिक्रमदोषजन्यं नरकमनुभवति ।–चतुर्थभागवर्तिन्यश्च श्रद्धायुक्ताः सत्यः उत्तमलोकप्राप्त्यर्थमग्निवाय्वादिदेवता उपासत इत्येवं हानिवृद्ध्योर्मन्त्रेणोक्तत्वाद्वैदिकमेतं पन्थानं सर्वथा नातिक्रामेदित्यर्थः ॥

महद्ध तस्थौ भुवनेष्वन्तारिति । प्रजापतिमेवैतदभ्युनूक्तं पवमानो हरित ऽआविवेशेति दिशो वै हरितस्ता अयं वायुः पवमान ऽआविष्टस्ता एवैषु ऽर्गभ्युनूक्ता ता ऽइमाः प्रजास्तथैव प्रजायन्ते यथैव प्रजापतिः प्रजाऽ असृजतेदं हि यदैव स्त्रियै स्तनावाप्यायेते ऽऊधः पशूनामथैव यज्जायते तज्जायते तास्तत स्तनावेवाभिपद्य सम्भवन्ति ॥ ५ ॥

तद्वै पय ऽएवान्नम् । ( मे ) एतद्ध्यग्रे प्रजापतिरन्नमजनयत तद्वा ऽअन्नमेव प्रजा ऽअन्नाद्धि सम्भवन्तीदं हि यासां पयो भवति स्तनावेवाभिपद्य तास्ततः सम्भवन्त्यथ यासां पयो न भवति जातमेव ता ऽअप्यादयन्ति तदु ता ऽअन्नादेव सम्भवन्ति तस्मादन्नमेव प्रजाः ॥ ६ ॥

---

" महद्ध तस्थौ भुवनेष्वन्तः "–इति । प्रजापतिमेवैतदभ्यनूक्तम् । " पवमानो हरित आविवेश "–इति । दिशो वै हरितः । ता अयं वायुः पवमान आविष्टः । ता एवैषर्गभ्यनूक्ता । ता इमाः प्रजास्तथैव प्रजायन्ते–यथैव प्रजापतिः प्रजा असृजत । इदं हि यदैव स्त्रियै स्तनावाप्यायेते, ऊधः पशूनाम् । अथैव यज्जायते तज्जायते । तास्ततः स्तनावेवाभिपद्य सम्भवन्ति ॥ ५ ॥

तद्वै पय एवान्नम् । एतद्ध्यग्रे प्रजापतिरन्नमजनयत । तद्वा अन्नमेव प्रजाः । अन्नाद्धि सम्भवन्ति । इदं हि यासां पयो भवति–स्तनावेवाभिपद्य, तास्ततः सम्भवन्ति । अथ यासां पयो न भवति–जातमेव ता अप्यादयन्ति । तदु ता अन्नादेव सम्भवन्ति । तस्मादन्नमेव प्रजाः ॥ ६ ॥

---

जाठररूपेण लौकिकवैदिकभेदेन वाऽवस्थितम् ' अग्निं ' स्वस्वव्यापाराय पर्युपविष्टा वर्त्तन्ते । एतदेतेन पादेन प्रतिपादितम् । समानमन्यत् ॥ ४ ॥

तृतीयं पादमनूद्य व्याचष्टे–महद्ध तस्थाविति । इत्थं देवमनुष्यादिरूपासु प्रजासु सतीषु तत्स्रष्टा प्रजापतिः ' भुवनेषु ' लोकेषु ' अन्तः ' मध्ये ' महत् ' अधिकं ' तस्थौ ' सर्वोत्कर्षेणावस्थित इत्यर्थः । गतमन्यत् ॥

चतुर्थपादमनूद्य व्याचष्टे–पवमान इति । ' दिशो वै हरितः ' दिशो हि हरिच्छब्दवाच्याः, अतः ' ताः ' 'अयं' पुरोवर्त्ती 'पवमानः वायुः आविष्टः ' दृश्यते । अतस्तुरीयपादेन अयमर्थः प्रतिपाद्यत इति । ता एवेति, उक्तार्थनिगमनम् । ' ताः ' उक्ताः प्रजाः ' एव ' अभिलक्ष्येत्यर्थः ॥

प्रजापतिकृतायाः सृष्टेरविच्छेदेनानुवृत्तिं दर्शयति– ता इमा इति । 'यथैव' येन हि प्रकारेण पुरा 'प्रजापतिः प्रजा असृजत' ' तथैव ' तेनैव प्रकारेण ' ता इमाः ' मनुष्याद्याः ' प्रजाः ' प्रजायन्ते उत्पद्यन्ते । एतदेवोपपादयति–इदं हीति । इदानीं स हि 'यदैव' खलु लोके 'स्त्रियै' स्त्रियाः । षष्ठ्यर्थे चतुर्थी ( पा. सू. २।३।६२ । वा. १ ) ' स्तनौ ' ' आप्यायेते ' पयसा पूरितौ भवतः । व्यत्ययेनैकवचनम् ( पा. सू. ३. । १ । ८९ ) । गवादिपशूनाम् ' ऊधः ' च पयसा पूर्णं भवति । ' अथ ' अनन्तरम् ' एव ' ' यत् जायते ' ' तत् ' एव ' जायते ', अन्यदजायमानं विपद्यत इत्यर्थः । तास्तत इति ' ताः ' उत्पन्नाः प्रजाः ' ततः ' जननानन्तरं पयोधरौ ' स्तनौ एव ' ' अभिपद्य ' अभिप्राप्य स्तन्यपानेन ' सम्भवन्ति ' प्रवर्द्धन्ते, न विपद्यन्ते ॥ ५ ॥

पयसोऽन्नरूपतामाह–तद्वै पय इति । ' तत् ' तत्र खलु जन्मानन्तरकाले ' पय एव ' प्रजानाम् ' अन्नम् '

स य॒ः प्र॒जाका॑म ए॒तेन॑ ह॒विषा॑ य॒जत॒ ऽआ॒त्मान॑मे॒वैत॒द्य॒ज्ञं वि॒धत्ते॑ प्र॒जाप॑तिं भू॒तम् ॥ ७ ॥ [ शतम् १२०० ॥ ]

( ५ँ ) स वा॒ऽआ॒ग्ने॒यो॑ऽष्टाकपाल॒ः पु॒रो॒डा॒शो भ॑वति । ( त्य ) अ॒ग्निर्वै॒ दे॒वता॑नां मु॒खं प्र॑जनयि॒ता स॑ प्र॒जाप॑तिस्त॒स्मादा॑ग्ने॒यो भ॑वति ॥ ८ ॥

( त्यु ) अ॒थ सौ॒म्यश्च॒रुर्भ॑वति । रे॒तो वै सो॒मस्त॒दग्नौ॑ प्रजनयि॒तरि॑ सो॒मꣳ रे॒तः सि॑ञ्चति त॒त्पु॒रस्ता॒न्मिथु॒नं प्र॒ज॒नन॑म् ॥ ९ ॥

---

स यः प्रजाकाम एतेन हविषा यजते–आत्मानमेवैतद्यज्ञं विधत्ते–प्रजापतिं भूतम् ॥ ७ ॥

स वा आग्नेयोऽष्टाकपालः पुरोडाशो भवति । अग्निर्वै देवतानां मुखम् । प्रजनयिता स प्रजापतिः। तस्मादाग्नेयो भवति ॥ ८ ॥

अथ सौम्यश्चरुर्भवति । रेतो वै सोमः । तदग्नौ प्रजनयितरि सोमं रेतः सिञ्चति । तत्पुरस्तान्मिथुनं प्रजननम् ॥ ९ ॥

---

भवति । ' हि ' यस्मात् ' अग्रे ' इतरान्नसृष्टेः प्राक् ' एतत् ' एव ' अन्नम् ' ' प्रजापतिः ' ' अजनयत उत्पादितवान्, तस्मादिदमेव मुख्यमन्नमित्यर्थः । तस्य चान्नस्य कार्यकारणयोरभेदोपचारेण प्रजारूपतामुपपादयति–अन्नमेवेति । ' हि ' यस्मात् ' प्रजाः ' ' अन्नात् ' 'सम्भवन्ति' प्रवर्द्धन्ते, तस्मात् तदात्मिका इत्यर्थः । ' इदं हि ' इदानीं हीत्यर्थः । जातमेवेति । स्तन्याभावे जातस्य शिशोर्जीवनासम्भवात् तज्जीवनार्थं जननानन्तरमेव ' ताः ' प्रजाः स्तन्यमेव 'आदयन्ति' भोजयन्ति । स्पष्टमन्यत् । इत्थमन्नहेतुकं प्रजापतेः प्रजासर्जनमुपोद्घातत्वेनोपन्यस्तम् ॥ ६ ॥

अथौपोद्घातिकेषु वैश्वदेवहविरुत्पादयंस्तद् दर्शयिष्यंस्तावद् वैश्वदेवयागं विधत्ते–स यः प्रजाकाम इति । सः खलु ' यः ' यजमानः प्रजाकामः, ' सः ' ' एतेन ' वैश्वदेवाख्यपर्वरूपेण ' हविषा ' यजेत, तस्य प्रजाफलसाधनत्वमुपपादयति–आत्मानमेवेति । स यजमानः ' आत्मानमेव ' प्रजापतिरूपमापन्नम् ' एतद् ' वैश्वदेवाख्यं ' यज्ञं विधत्ते ' वैश्वदेवयज्ञमात्मना करोतीत्यर्थः । अतो वैश्वदेवेनेष्टवतः प्रजापतेः प्रजोत्पत्तिसाधनत्वमुन्नीतमित्यर्थः ॥ ७ ॥

तत्र प्रथमं हविर्विधाय प्रशंसति–स वा इति । ' आग्नेयः ' अग्निर्देवता अस्य । " साऽस्य देवता "–( पा. सू. ४ । २ । २४ ) इत्यर्थे " अग्नेर्ढक् " ( पा. सू. ४ । २ । ३३ ) इति ढक्, अष्टसु कपालेषु संस्कृतः ' अष्टाकपालः ' ' अग्निः–प्रजनयिता ' उत्पादयिता मातापितृभ्यां भुक्तस्यान्नस्य जाठराग्निपरिपाकवशेन शुक्रशोणितात्मना परिणामादग्नेः प्रजनयितृत्वम्; अत एव सोऽग्निः प्रजापतिरित्यर्थः ॥ ८ ॥

द्वितीयं हविर्विधाय प्रशंसति–अथ सौम्यः इति । ( का. श्रौ. सू. ५ । ४ । ) सोमो देवता अस्य ' सौम्यः ' " सोमाट्ट्यण् "–( पा. सू. ४ । २ । ३० ) इति ट्यण् । " रेतो वै " इत्यनेन सौम्ययाग-

---

१–प्रजाकामस्यापि वैश्वदेवम् का. श्रौ. सू. ।५।४५। २–आग्नेयः सौम्यश्चरुः सावित्रो द्वादशकपालोऽष्टाकपालो वा सारस्वतश्चरुः पौष्णश्चरुः प्रपिष्टानाम् । का. श्रौ. सू. ५ । ४ ।

( मु ) अथ सावित्रः । ( त्रो ) द्वादशकपालो वाऽष्टाकपालो वा पुरोडाशो भवति सविता वै देवानां प्रसविता प्रजापतिर्मध्यतः प्रजनयिता तस्मात्सावित्रो भवति ॥ १० ॥

( त्यु ) अथ सारस्वतश्चरुर्भवति । पौष्णश्चरुर्योषा वै सरस्वती वृषा पूषा तत्पुनर्मिथुनं प्रजननमेतस्माद्वाऽउभयतो मिथुनात्प्रजननात्प्रजापतिः प्रजाः ससृजऽइतश्चोर्ध्वाऽइतश्चावाचीस्तथोऽएवैष एतस्मादुभयत एव मिथुनात्प्रजननात्प्रजाः सृजत ऽइतश्चोर्ध्वाऽइतश्चावाचीस्तस्माद्वाऽएतानि पञ्च हवीꣳषि भवन्ति ॥ ११ ॥

---

अथ सावित्रो द्वादशकपालो वाऽष्टाकपालो वा पुरोडाशो भवति । सविता वै देवानां प्रसविता, प्रजापतिर्मध्यतः प्रजनयिता । तस्मात्सावित्रो भवति ॥ १० ॥

अथ सारस्वतश्चरुर्भवति । पौष्णश्चरुः । योषा वै सरस्वती, वृषा पूषा । तत्पुनर्मिथुनं प्रजननम् । एतस्माद्वा उभयतो मिथुनात्प्रजननात्प्रजापतिः प्रजाः ससृजे–इतश्चोर्ध्वा इतश्चावाचीः । तथो एवैष एतस्मादुभयत एव मिथुनात्प्रजननात्प्रजाः सृजते–इतश्चोर्ध्वा इतश्चावाचीः । तस्माद्वा एतानि पञ्च हवींषि भवन्ति ॥ ११ ॥

---

स्याग्नेययागानन्तर्यमपि प्रतिपाद्यते । सोमो ह्यमृतमयत्वाद्रेतोरूपः । आग्नेययागानन्तरं तद्यागस्यानुष्ठानात् । ‘ प्रजनयितारि ’ उत्पादयितारि ‘ अग्नौ ’ सोमात्मकं ‘ रेतः ’ ‘ सिञ्चति ’, तदेव ‘तत्’ प्रजोत्पत्तिसाधनं ‘ पुरस्तात् ’ क्रियमाणमेकं ‘ मिथुनं ’ सम्पन्नं भवतीत्यर्थः ॥ ९ ॥

अथ तृतीयं हविर्विधाय प्रशंसति–**अथ सावित्र** इति । ( का. श्रौ. सू. ५ । ४ । ) । सौम्ययागानन्तर्यम् ‘ अथ ’–शब्दार्थः । सविता देवता अस्य ‘ सावित्रः ’ । ‘ प्रसविता ’ प्रेरयिता । स एव ‘ प्रजापतिः ’ वैश्वदेवादिपर्वचतुष्टयसंचारिणामाग्नेयादीनां पञ्चानां यागानां मध्ये इज्यमानः सन् ‘ सविता ’ ‘ मध्यतः ’ एव प्रजानां ‘ प्रजनयिता ’ उत्पादयिता भवति ॥ १० ॥

चतुर्थपञ्चमे हविषी विधाय सम्भूय प्रशंसति–**अथ सारस्वत** इति । ( का. श्रौ. सू. ५ । ४ ) । सरस्वती देवता अस्य ‘ सारस्वतः ’ । **तत् पुनर्मिथुन**मित्यादि । आदावनुष्ठिताग्नेयसौम्यलक्षणान्मिथुनादन्ततः क्रियमाणमेतदन्यदित्यर्थः । **इतश्चोर्ध्वा** इत्यादि । प्रजननं तत्साधनं मिथुनम् । **उभयत** इति । आद्यन्तयोः क्रियमाणादित्यर्थः । ‘ इतः ’ अस्मात् भूलोकादारभ्योपरितनलोकवर्तिनीः ‘ प्रजाः ’ ‘ इतश्च ’ अस्मादेव भूलोकादर्वाचीनलोकवर्तिनीश्च प्रजाः ‘ उभयतः ’ अवस्थितात् ‘ मिथुनात् ’ प्रजापतिः सृष्टवानित्यर्थः । इदानीन्तनयजमानोऽपि एवमेव मिथुनद्वयानुष्ठानेन द्विविधाः प्रजाः सृजतीत्याह–**तथो एवेति** । **तस्मा**दित्यादि, विहितानां हविषां निगमनम् ॥ ११ ॥

---

१–‘ ततः पुनर्मिथुनम् ’ इ० पा० क० । २–एतानि सर्वत्र ( का. श्रौ. सू. ५ । १० । )

(न्त्य) अथातः पयुस्याया ऽएवायुतनम् । मारुतस्तु सप्तुकपालो विुशो वै मुरुतो देवविुशस्ता हेडमनिषेद्ध्रा ऽइव चेरुस्ताः प्रजापतिं युजमानमुपेत्योचुर्वि वै ते मथिष्यामह ऽइमाः प्रजा या ऽएतेन हविुषा स्रक्ष्युस ऽ इति॥१२॥

सु ऐक्षत प्रजापतिः । पुरा मे पूर्वाः प्रजा ऽअभूवन्निमा ऽउ चेदिमे विमथ्नते न तुतः किं चन परिशेक्ष्यत ऽइति तेभ्य एतं भागमकल्पयदेतं मारुतꣳ सप्तुकपालं पुरोडाशꣳ सु ऽएषु मारुतः सप्तुकपालस्तद्युत्सप्तुकपालो भवति सप्तुसप्त हि मारुतो गणस्तुस्मान्मारुतः सप्तुकपालः पुरोडाशो भवति ॥ १३ ॥

---

अथातः पयस्याया एवायतनम् । मारुतस्तु सप्तकपालः । विशो वै मरुतो देवविशः । ता हेदमनिषेद्ध्रा–इव चेरुः । ताः प्रजापतिं यजमानमुपेत्योचुः–वि वै ते मथिष्यामहे–इमाः प्रजाः–या एतेन हविषा स्रक्ष्यस इति ॥ १२ ॥

स ऐक्षत प्रजापतिः–परा मे पूर्वाः प्रजा अभूवन्–इमा उ चेदिमे विमथ्नते–न ततः किं चन परिशेक्ष्यत इति । तेभ्य एतं भागमकल्पयत्–एतं मारुतं सप्तकपालं पुरोडाशम् । स एष मारुतः सप्तकपालः । तद्यत्सप्तकपालो भवति–सप्तसप्त हि मारुतो गणः । तस्मान्मारुतः सप्तकपालः पुरोडाशो भवति ॥ १३ ॥

---

एवं पञ्चभिर्हविर्भिरुत्पादितानां प्रजानां स्थित्यर्थं प्रजापतिना कल्पितं पयस्यारूपमन्नं दर्शयितव्यमिति पयस्यायागस्य स्थानं प्रतिजानीते–**अथात** इति । ‘ अथ ’ एवं प्रजासृष्टेरनन्तरं यतः सृष्टानां प्रजानामन्नमपेक्षितम्, ‘ अतः ’ ‘ पयस्याया एव ’ पयोविकारद्रव्यसाध्यस्य यागस्य एतत् ‘ आयतनं ’ स्थानमित्यर्थः । अथैवं पयस्यायाग एव षष्ठोऽनुष्ठेय इति, नेत्याह–**मारुतस्तु** इति । ‘ तु ’–शब्दः पयस्यायागस्य न्यायप्राप्तं षष्ठस्थानत्वं व्यावर्त्तयति; ‘ मारुतः सप्तकपालः ’ एव षष्ठोऽनुष्ठेय इत्यर्थः ॥

एतदाख्यायिकयोपपादयति–**विशो वै मरुत** इत्यादिना । वैश्यजातयो हि मरुतः; ते च देवतारूपत्वाद् ‘ देवविशः ’ खलु ‘ अनिषेद्ध्रा इव ’ अनिषेधुकाः, नियन्तृरहिता इव स्वतन्त्राः इदं ‘ चेरुः ’ । ‘ ताः ’ स्वातन्त्र्येण वर्त्तमानाः आद्यैः पञ्चभिर्हविर्भिः प्रजा उत्पादितवन्तं ‘ प्रजापतिं ’ ‘ यजमानम् ’ ‘ उपेत्य ’ उपगत्य ‘ ऊचुः ’–‘ ते ’ त्वदीयाः ‘ इमाः ’ उत्पन्नाः ‘ प्रजाः ’ वयं ‘ विमथिष्यामहे ’ हिंसयिष्यामः, ‘ याः ’ प्रजाः ‘ एतेन ’ वैश्वदेवपर्वात्मना ‘ हविषा ’ त्वं ‘ स्रक्ष्यसे ’ सृष्टाः करिष्यसि ॥ १२ ॥

एवं मरुद्भिरुक्ते सति ‘ सः ’ ‘ प्रजापतिः ’ ‘ ऐक्षत ’ पर्यालोचितवान्–‘ मे ’ मदीयाः ‘ पूर्वाः ’ पूर्वसृष्टाः ‘ प्रजाः ‘ पराभूवन् ’ ‘ इमाः ’ अपि प्रजाः ‘ इमे ’ मरुतः ‘ विमथ्नन्ते ’ बाधन्ते चेत् ‘ ततः ’ अनन्तरं ‘ किम् ’ अपि सृष्टं ‘ न परिशेक्ष्यते ’ परिशेषितं न भविष्यति । ‘ इति ’ ‘ एवं ’ मरुद्भ्यो भीतः सन्, ‘ तेभ्यः ’ ‘ एतं ’ सप्तकपालरूपं ‘ भागं ’ कल्पितवान् । अतः प्राप्तस्थानमपि पयस्यायागं परि-

---

१–मरुद्भ्यः स्वतवद्भ्यः सप्तकपालः । मारुतो वा । का. श्रौ. सू. ५ । ११–१२ ।

तं वै स्वतवोभ्य ऽइति कुर्यात् । स्वयꣳ हि तऽएतं भागमकुर्वतातो स्वतवोभ्यो याज्यानुवाक्ये न विन्दन्ति स ऽउ खलु मारुत एव स्यात्स वा एष प्रजाभ्य ऽएवाहिꣳसायै क्रियते तस्मान्मारुतः ॥ १४ ॥

( तोऽ ) अथातः पयस्यैव । पयसो वै प्रजाः सम्भवन्ति पयसः सम्भूता-स्तद्यतऽएव सम्भूता यतः सम्भवन्ति तदेवाभ्यऽएतत्करोति तद्याः पूर्वै-र्हविर्भिः प्रजाः सृजते ताऽएतस्मात्पयस ऽएतस्यै पयस्यायै सम्भवन्ति १९

---

तं वै स्वतवोभ्य इति कुर्यात् स्वयं हि त एतं भागमकुर्वत–अतः ? । स्वतवोभ्यो याज्यानुवाक्ये न विन्दन्ति । स उ खलु मारुत एव स्यात् । स वा एष प्रजाभ्य एवाहिंसायै क्रियते । तस्मान्मारुतः ॥ १४ ॥

अथातः पयस्यैव । पयसो वै प्रजाः सम्भवन्ति–पयसः सम्भूताः । तद्यत एव सम्भूता यतः सम्भवन्ति–तदेवाभ्य एतत्करोति । तद्याः पूर्वैर्हविर्भिः प्रजाः सृजते–ता एतस्मात्पयस एतस्यै पयस्यायै सम्भवन्ति ॥ १९ ॥

---

त्यज्य 'स एष मारुतः' याग इदानीमपि षष्ठत्वेनानुष्ठीयते । सप्तसंख्यामनूद्य प्रशंसति–तद्यादिति । मरुतो हि सप्तगणाः तेष्वेकैकस्मिन् गणेषु सप्तसप्त मरुतः, ते चैकोनपञ्चाशत्सङ्ख्याकाः अग्निस्थापनप्रकरणे "ईदङ्चान्यादङ् च" ( तै. सं. ४ । ६ । ५–६ ) ( तै. ब्रा. २ । ७ । २ ) इत्यादिभिर्मंत्रैस्तत्त-न्नाम्ना प्रतिपादिताः ॥ १३ ॥

तेषां किञ्चिद् विशेषणमुपक्षिपति–**तं वै स्वतवोभ्य इती**ति । 'तं' खलु सप्तकपालं पुरोडाशं 'स्वत-वोभ्यः' 'इति' विशेषणविशिष्टेभ्यो मरुद्भ्यः 'कुर्यात्' । 'तवः' इति बलनाम ( निघ. २ । ९ । ५ ) स्वायत्तं तवो बलं येषां ते स्वतवसः । अस्य विशेषणस्यान्वर्थतामाह–**स्वयं ही**ति । 'ते' मरुतः स्वयं हि स्वपौरुषेणैव हिं 'एतं भागं अकुर्वन्' स्वीकृतवन्तः, अतस्ते स्वतवसः संपन्ना इत्यर्थः ।

प्रागुक्तमेव पक्षं निगमयितुं कारणमुपकल्पयति–**अत** इति । यदि तु 'स्वतवोभ्यः' प्रतिपादिके 'याज्या-नुवाक्ये' 'न' एव लभते, तदा 'सः' एव प्रागुक्तः केवलः 'मारुत एव' यागो भवति । एतच्च पक्ष-द्वयं कात्यायनोऽप्यसूत्रयत्–"मरुद्भ्यः स्वतवद्भ्यः सप्तकपालो, मारुतो वेति ( का. श्रौ. सू. ५।११–१२ ) ।

**स वा एष** इति । 'सः' खलु 'एषः' मारुतो यागः 'प्रजाभ्यः' प्रजानाम् । षष्ठ्यर्थे चतुर्थी ( पा. सू. २ । ३ । ६२ । वा. १ । ) प्रजानाम् 'अहिंसायै' मरुत्कृतबाधाराहित्याय 'एव' 'क्रियते' **तस्मादि**ति । मारुतयागस्य निगमनम् ॥ १४ ॥

पयस्यायागं विधत्ते–**अथात** इति । 'अथ'–शब्दो मारुतयागानन्तर्ये । यतः सृष्टाः प्रजा मारुतयागेन तत्कृतहिंसायाः परिहृतत्वात् सुखेनावस्थिताः अन्नमाकांक्षन्ते, अतः पयोरूपमन्नं तेभ्यो जनयितुं पयस्यायागः कर्त्तव्य इत्यर्थः । तस्य प्रजावृद्धिहेतुत्वमाह–**पयसो वा** इत्यादिना । सृष्ट्यादौ प्रजापतिना सृज्यमानास्ताः 'प्रजाः'

---

१–'स्वाधीनं कृतवन्तः'–इति पा० । २–वैश्वदेवी पयस्या । का. श्रौ. सू. ५ । १३ ।

तस्यां मिथुनमस्ति । योषा पयस्या रेतो वाजिनं तस्मान्मिथुनाद्विश्वमसंमितमनु प्राजायत तद्यदेतस्मान्मिथुनाद्विश्वमसंमितमनु प्राजायत तस्माद्वैश्वदेवी भवति ॥ १६ ॥

( त्यु ) अथ द्यावापृथिव्य ऽएककपालः पुरोडाशो भवति । (त्ये) एतैर्वै हविर्भिः प्रजापतिः प्रजाः सृष्ट्वा ता द्यावापृथिवीभ्यां पर्यगृह्णात्ताऽइमा द्यावापृथिवीभ्यां परिगृहीतास्तथोऽएवैष एतद्य एतैर्हविर्भिः प्रजाः सृजते ता द्यावापृथिवीभ्यां परिगृह्णाति तस्माद्द्यावापृथिव्य एककपालः पुरोडाशो भवति ॥ १७ ॥

---

तस्यां मिथुनमस्ति–योषा पयस्या, रेतो वाजिनम् । तस्मान्मिथुनाद्विश्वमसंमितमनु प्राजायत । तद्यदेतस्मान्मिथुनाद्विश्वमसंमितमनु प्राजायत तस्माद्वैश्वदेवी भवति ॥ १६ ॥

अथ द्यावापृथिव्य एककपालः पुरोडाशो भवति । एतैर्वै हविर्भिः प्रजापतिः प्रजाः सृष्ट्वा ता द्यावापृथिवीभ्यां पर्यगृह्णात् । ता इमा द्यावापृथिवीभ्यां परिगृहीताः । तथो एवैष एतद्–य एतैर्हविर्भिः प्रजाः सृजते–ता द्यावापृथिवीभ्यां परिगृह्णाति । तस्माद् द्यावापृथिव्य एककपालः पुरोडाशो भवति १७

---

तदीयस्तन्यरूपात् ' पयसः ' सकाशात् ' सम्भूताः ' प्रवर्द्धिताः यतः, एवमिदानीमपि सर्वाः प्रजाः पयस एव सम्भवन्ति, जन्मानन्तरं तत्क्षणे एव पयोलक्षणमन्नं प्राप्य वर्द्धन्ते पयोरूपस्य तस्यान्नस्य सम्पत्तिमत्र दर्शयितु-मुक्तमर्थमनुवदति–तद्यत एवेति । ' तत् ' तथा सतीत्यर्थः । ' एतत् ' एतेन पयस्यायागेन ' तदेव ' प्रजा-वृद्धिहेतुभूतं पयः ' आभ्यः ' प्रजाभ्यः ' करोति ' सम्पादयति । अत एवेदानीं पूर्वसृष्टानां प्रजानामभिवृद्धिर्दृश्यत इत्याह–**तद्या** इति । 'पूर्वैः' प्रागुक्तैराग्नेयादिभिः पञ्चभिः ' हविर्भिः ' । **एतस्मात् पयस** इति । दध्ना संस्कृतः पयोविकारः पयस्या, असौ चामिक्षाशब्देनान्यत्राम्नायते–"तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम् " ( का. श्रौ. सू. ४ । ८८ )–इति । कात्यायनोऽपि पयस्यां प्रकृत्य सूत्रयामास–" शृते वा दध्यानयति, वाजिनं निषिच्योत्करे करोति "–( का. श्रौ. सू. ४ । ११०–१११ ) इति । पयस्याया इति षष्ठ्यर्थे चतुर्थी ( पा. सू. २ । ३ । ६२ वा. १ ) एतस्याः पयस्यायाः प्रकृतिभूतं यत् पयः ( श. प. ३ । ३ । ३ । २ भा. ) एतस्मादुत्पन्नाः प्रजा वर्द्धन्त इत्यर्थः ॥ १५ ॥

एवं यागोपयुक्तं द्रव्यं प्रशस्य तस्य वैश्वदेवत्वं प्रतिपादयति–**तस्या**मित्यादिना । ' तस्यां ' पयस्यायां प्रजननसाधनं ' मिथुनं ' विद्यते ' पयस्या '–शब्दस्य स्त्रीलिङ्गत्वात् ' योषा ' तदनुनिष्पादि ' वाजिनं ' 'रेतः' पुंसो वीर्य्यम्; ' तस्मात् मिथुनात् ' ' असम्मितम् ' अपरिमितम् इदं ' विश्वं ' देवमनुष्याद्यात्मकम् ' अनु-प्राजायत ' अनुक्रमेण प्रजापतेः, प्रजातमभूत् । **तद्यदेतस्मा**दिति, प्रतिपादितार्थस्य हेतुत्वाभिधानम् । **तस्मा**-दिति । यस्माद् विश्वोत्पत्तिहेतुः पयस्या, तस्माद् विश्वदेवदेवत्या कार्येत्यर्थः ॥ १६ ॥

अन्तिमं हविर्विधत्ते–**अथे**ति । द्यावापृथिव्यौ देवते अस्येति द्यावापृथिव्यः "द्यावापृथिवीशुनासीरमरुत्वत् "–

---

१–' प्रतिष्ठापयति '–इति पाठः । २–द्यावापृथिवीय एककपालः । का. श्रौ. सू. ५ । १४ ।

( त्य ) अथातऽ आवृदेव । नोपकिरन्त्युत्तरवेदिं विसृष्टमसत्सुर्वमसद्वै-श्वदेवमसदिति त्रेधा बर्हिः संनद्धं भवति तत्पुनरेकधैतद्धि प्रजननस्य रूपं प्रजननमु हीदं पिता माता यज्जायते तत्तृतीयं तस्मात्त्रेधा सत्पुनरेकधा प्रस्वऽउपसन्नद्धा भवन्ति तं प्रस्तरं गृह्णाति प्रजननमु हीदं प्रजननमु हि प्रस्वंस्तस्मात्प्रसूः प्रस्तरं गृह्णाति ॥ १८ ॥

---

अथात आवृदेव नोपकिरन्त्युत्तरवेदिम् । विसृष्टमसत्, सर्वमसत्, वैश्वदेवमसादिति । त्रेधा बर्हिः सन्नद्धं भवति । तत्पुनरेकधा । एतद्धि प्रजननस्य रूपम् । प्रजननमु हीदम्-पिता, माता, यज्जायते तत्तृतीयम् । तस्मात्त्रेधा सत्पुनरेकधा । प्रस्व उपसंनद्धा भवन्ति । तं प्रस्तरं गृह्णाति । प्रजननमु हीदम् प्रजननमु हि प्रस्वः । तस्मात् प्रसूः प्रस्तरं गृह्णाति ॥ १८ ॥

---

( पा. सू. ४ । २ । ३२ ) इति–सूत्रेण यत् । तत्र हि चकारेण यदित्यनुकृष्यते । तदेतत्पुराकृतिमुदाहृतदृष्टान्तेन उपपादयति–**एतैर्वा** इत्यादिना । **द्यावापृथिवीभ्यां पर्यगृह्णादि**ति । अधस्तात् पृथिव्या, उपरिष्टाद् द्युलोकेन तदुभयलोकवर्तिनीः सृष्टाः प्रजाः ' पर्यगृह्णात् ' परितो वेष्टितवान् याश्च ' इमाः ' प्रजाः आभ्यां ' द्यावापृथि-वीभ्यां ' ' परिगृहीताः ' परिवेष्टिता एव वर्त्तन्ते, न पुनः स्वतो निर्गच्छन्ति । **तथो एवे**ति । यथा प्रजापतिः ' तथो ' तथैव ' एषः ' इदानीन्तनो यजमानोऽपि ' यः एतैः हविर्भिः प्रजाः सृजते ' सृष्ट्वा च पयस्यायागेन तासां पयोरूपमन्नं परिकल्प्य, द्यावापृथिव्ययागेन ' द्यावापृथिवीभ्यां ' ' ताः ' ' परिगृह्णाति ' परिवेष्टयती-त्यर्थः । एवं वैश्वदेवपर्वणि अष्टौ प्रधानयागा विहिताः, तद्धितनिर्देशौषधिद्रव्यकत्वाल्लिङ्गसामान्याद् दर्शपूर्ण-मासविधयस्तत्रातिदिष्टाः; " प्रकृतिवद् विकृतिः कर्त्तव्या " इति ॥ १७ ॥

तत्र यानि वैशेष्यकाण्यङ्गानि तानीदानीं विधातुं प्रतिजानीते–**अथात आवृदेवे**ति । ' अथ '–इति आन-न्तर्ये । यतः प्रधानानामङ्गापेक्षा, अतः प्रकरणात् । 'आवृत्' शब्दः प्रकारवाची । चोदकप्राप्तायामितिकर्त्तव्य-तायां प्रकारविशेषः कथ्यते; न त्वन्यत् किञ्चिन्नूतनमत्र प्रतिपाद्यत इति ' एव '–कारार्थः । अग्निमन्थनादे-र्वैशेष्यकस्याङ्गस्य विधास्यमानत्वात् सहचरितमुत्तरवेद्यावपनमपि प्रसक्तम्, तन्निषेधति–**नोपकिरन्ती**ति । ' उत्तरवेदिं ' 'नोपकिरन्ति' उत्तरवेदीं नोपक्षिपन्ति, नोपवपन्तीत्यर्थः । ऋत्विजां बहुत्वाद् बहुवचनम् " कॄ विक्षेपे " इति धातुः ( धा. पा. तु. प. १२८ ) । तत्र हेतुमाह–**विसृष्टमि**ति । सत्यां ह्युत्तरवेदौ तत्रा-नुष्ठीयमानमेतत् कर्म तया निरुद्धगति स्यात्; तदभावे तत्कृतनिरोधाभावात् क्रियमाणं कर्म ' विसृष्टं ' व्यापन-शीलम् ' असत् ' भवेत्; अत एव परिच्छेदाभावात् ' सर्वं ' कृत्स्नं सम्पूर्णम् ' असत् ' भवेत्; कार्त्स्न्यादेव तद् ' वैश्वदेवम् ' विश्वदेवसम्बन्धयोग्यम् ' असद् ' भवेत् ; न ह्यसर्वस्य सर्वदेवसम्बन्धो घटते; अतो विसृष्ट-त्वादिसिद्धये उत्तरवेदिर्न कार्येत्यभिप्रायः ॥

बर्हिराहरणे विशेषं विधत्ते–**त्रेधा बर्हिरि**ति । ' त्रेधा ' त्रिविधं ' बर्हिः ' प्रथमं सन्नह्य, ' तत् ' एव 'पुनः' 'एकधा' एकविधं सन्नयति । त्रिशब्दात् एकशब्दाच्च "सङ्ख्याया विधार्थे धा" ( पा. सू. ५।३।४२।)

---

१–एतद्वैश्वदेवम् । एतद्धविरष्टकं का. श्रौ. सू. ५ । १५ । २–' सहवाचि ' इति पाठः । ३–त्रेधाबर्हिः सन्नह्य पुनरेकधा । का. श्रौ. सू. ५ । १९ ।

( त्या ) आसाद्य हवी७ंष्यग्निं मन्थति । ( त्य ) अग्नि७ँ ह वै जायमानमनु प्रजापतेः प्रजा जज्ञिरे तथो ऽएवैतस्याग्निमेव जायमानमनु प्रजा जायन्ते तस्मादासाद्य हवी७ंष्यग्निं मन्थति ॥ १९ ॥

नवप्रयाजं भवति । नवानुयाजं दशाक्षरा वै विराडथैतामुभयतो न्यूनां व्विराजं करोति प्रजननायैतस्माद्वा ऽउभयतो न्यूनात्प्रजननात्प्रजापतिः प्रजाः ससृज ऽइतश्चोर्ध्वा ऽइतश्चावाचीस्तथो ऽएवैष ऽएतस्मादुभयत ऽएव न्यूनात्प्रजननात्प्रजाः सृजत ऽइतश्चोर्ध्वा ऽइतश्चावाचीस्तस्मान्नव प्रयाजं भवति नवानुयाजम् ॥ २० ॥

---

आसाद्य हवींष्यग्निं मन्थति । अग्निं ह वै जायमानमनु प्रजापतेः प्रजा जज्ञिरे । तथो एवैतस्याग्निमेव जायमानमनु प्रजा जायन्ते । तस्मादासाद्य हवींष्यग्निं मन्थति ॥ १९ ॥

नवप्रयाजं भवति, नवानुयाजम् । दशाक्षरा वै विराट् । अथैतामुभयतो न्यूनां विराजं करोति—प्रजननाय । एतस्माद्वा उभयतो न्यूनात्प्रजननात्प्रजापतिः प्रजाः ससृजे—इतश्चोर्ध्वाः, इतश्चावाचीः ।

---

इति—धाप्रत्ययः । प्रजोत्पत्त्यनुकूलत्वेनैतत् स्तौति—**एतद्धीति** । यदेतत् त्रिधाबद्धस्य बर्हिषः पुनरेकधा संहतम्, 'एतत् खलु' 'प्रजननस्य' प्रजोत्पत्तेः स्वरूपम् । तदेतत् त्रैविध्यं प्रजननगतं दर्शयति—**प्रजननमु हीति** । ' पिता, माता ' ' यत् जायते ' यज्जायमानमपत्यम् ' तत् ' एतत् ' तृतीयं ' तृतीयम्; इदमेव हि ' प्रजननं ' ( तै. ब्रा. १ । ६ । ३ ) प्रजातिः ; अस्य हि मातापित्रादिरूपेण त्रिवृत्त्वात्, प्रजननरूपेण चैकत्वात्, तत्साधनभूतस्य बर्हिषस्तद्धर्मभाक्त्वं सूचितमित्यर्थः । तस्मिन्नेव बर्हिषि धर्मविशेषं विधत्ते—**प्रस्वं** इति । प्रसुवते फलानीति ' प्रस्वः ' पुष्पितांकुराः, ते ' उपसन्नद्धाः ' भवेयुः " षूङ् प्राणिगर्भविमोचने " ( धा. पा. दि. आ. २१ ) प्रपूर्वादस्मात् " सत्–सू–द्विष "–इति ( पा. सू. ३ । २ । ६१ ) क्विप् " ओः सुपि " ( पा. सू. ६ । ४ । ८३ ) इति यण् । प्रसूतयुक्तानां कुशानां प्रस्तरत्वेन ग्रहणं विधत्ते—**तं प्रस्तरमिति** । ' तम् ' इति प्रस्तरापेक्षयैकवचनम् । तैः प्रसूभिः कुशैः प्रस्तराख्यं मुष्टिं सम्भरेदित्यर्थः ॥

एतस्य प्रकृतिकर्मानुकल्पनामाह—**प्रजननमु हीदमिति** । ' इदं हि ' वैश्वदेवाख्यं कर्म ' प्रजननं ' प्रजोत्पत्तिसाधनं 'प्रस्वः' प्रसूतयुक्ताः कुशाश्च फलोत्पत्तिहेतवः, अतः साधर्म्यात् प्रसूतकुशमयं प्रस्तरं कुर्यादित्यर्थः ॥ १८ ॥

प्रकृतितोऽप्राप्तत्वात् तत्कालविशिष्टमग्निमन्थनं विधत्ते—**आसाद्य हवींषीति** प्रकृतिवद्धविरासादनान्तं कृत्वा अग्निमन्थनं कुर्यादित्यर्थः । तदेतत् प्रशंसति—**अग्नि७ँहेति** । प्रथमसृष्टौ प्रजापतिरग्निं जनयित्वा तदनन्तरमेव अन्याः प्रजाः सृष्टवान्; अत इहाग्नेर्जननं प्रजोत्पत्तिकारणं भवतीत्यर्थः । अत एव प्रागाम्नातम्–" तद् या इमाः प्रजा अपराभूतास्ता अग्निमभितो निविष्टाः "–इति ( श. प. २ । ५ । १ । ४ । ) ॥ १९ ॥

चोदकप्राप्तानां प्रजानां सङ्ख्यान्तरं विधत्ते—**नवप्रयाजं भवतीति** । नव प्रयाजाः अनुयाजाश्च यस्मिन् तत्

---

२–कुशप्रस्वः प्रस्तर उपसन्नद्धः । का. श्रौ. सू. ५ । २० । २–' पुष्पिताः कुशाः ' इति पाठः ।

त्रीणि समिष्टयजूᳬंषि भवन्ति । ज्याय इव हीदᳬंहविर्यज्ञाद्यत्र नवप्रयाजं नवानुयाजमथो ऽअप्येकमेव स्याद्धविर्यज्ञो हि तस्य प्रथमजो गौर्दक्षिणा२१ ( णै ) एतेन वै प्रजापतिः । ( र्य ) यज्ञेनेष्ट्वा येयं प्रजापतेः प्रजातिर्या श्रीरेतद्बभूवैताᳬं ह वै प्रजातिं प्रजायतऽएताᳬंश्रियं गच्छति य ऽएवं विद्वानेतेन यज्ञेन यजते तस्माद्वा ऽएतेन यजेत ॥ २२ ॥

इति चतुर्थप्रपाठके द्वितीयं ब्राह्मणम् ॥ ४ ॥ २ ॥ ( ५ । १ )

---

तथो एवैष एतस्मादुभयत एव न्यूनात्प्रजननात्प्रजाः सृजते । इतश्चोर्ध्वाः, इतश्चावाचीः तस्मान्नव प्रयाजं भवति, नवानुयाजम् ॥ २० ॥

त्रीणि समिष्टयजूंषि भवन्ति । ज्याय इव हीदं हविर्यज्ञात्—यत्र नवप्रयाजम्, नवानुयाजम् । अथो अप्येकमेव स्यात् हविर्यज्ञो हि तस्य प्रथमजो गौर्दक्षिणा ॥ २१ ॥

एतेन वै प्रजापतिर्यज्ञेनेष्ट्वा—येयं प्रजापतेः प्रजातिः, या श्रीः—एतद्बभूव । एतां ह वै प्रजातिं प्रजायते—एतां श्रियं गच्छति—य एवं विद्वानेतेन यज्ञेन यजते । तस्माद्वा एतेन यजेत ॥ २२ ॥

इति वैश्वदेवयागश्चातुर्मास्ये प्रथमं पर्व ।

---

' नव प्रयाजं नवानुयाजं '; ( का. श्रौ. सू, ५ । ३२ ) तथा कर्त्तव्यमित्यर्थः । नवसंख्यां प्रशंसति—**दशाक्षरेति** । **उभयत** इति । प्रधानयागात् पुरस्तादुपरिष्टाच्च **न्यूनादि**ति । एकाक्षरेण ' न्यूनात् ' । **एतस्माद्वा** इत्यादि । ' एतस्मात् ' उभयतोऽनुष्ठीयमानात् प्रजायानुयाजरूपात् एकाक्षरन्यूनात् विराड्द्वयरूपात् 'प्रजननात्' प्रजननसाधनादित्यर्थः । **इतश्चोर्ध्वा** इति । प्रयाजरूपात् प्रथमाद् विराजो भूलोकादारभ्योर्द्ध्ववर्तिनीः प्रजाः सृष्टवान् । उपरिष्टात् क्रियमाणादनुयाजरूपाद् विराजो भूलोकात्, अवाचीनाः प्रजाः सृष्टवान् । स्पष्टमन्यत् ॥ २०

चोदकप्राप्तस्य समिष्टयजुषोऽपि संख्यान्तरं विधाय प्रशंसति—**त्रीणी**ति । तानि च सूत्रकृता दर्शितानि—" त्रीणि समिष्टयजूंषि जुहोति, देवा गातुविदो यज्ञ यज्ञ मेष त इति " ( का. श्रौ. सू. ५ । ३४ । )—इति । **ज्याय इव हीद**मिति अन्यस्माद्धविर्यज्ञाद् दर्शपूर्णमासाद् ' इदं ' वैश्वदेवपर्वरूपं हविः ' ज्याय इव ' प्रवृद्धमिव हि । ज्यायस्त्वे कारणमाह—**यत्रे**ति । ' यत्र ' यस्मिन् कर्मणि ' नवप्रयाजं नवानुयाजं ' भवति, तद्धि प्रकृतेर्ज्यायो भवति; प्रकृतौ प्रयाजानां पञ्चत्वात् अनुयाजानां त्रित्वाच्च ॥

पक्षान्तरमाह—**अथो** इति । ' एकमेव ' समिष्टयजुर्भवति, न तु त्रीणि[1] । तत्र कारणमाह—**हविर्यज्ञ** इति । ' हि '—शब्दो हेतौ । दक्षिणां विधत्ते—**तस्ये**ति । यजमानस्य गोष्ठे प्रथमं जातः प्रथमजः ', तादृशो ' गौः ' ' तस्य ' वैश्वदेवपर्वणो दक्षिणात्वेन देय इत्यर्थः ॥ २१ ॥

विहितस्य वैश्वदेवयागस्य प्रजाश्रीफलसाधनत्वं सदृष्टान्तमुपसंहरति—**एतेने**त्यादिना[2] । **एतद् बभूवे**ति । ' एतत् ' एतर्हि ' प्रजापतेः ' ' या श्रीः ' वभूवेत्यर्थः । **तस्मादि**ति । उपसंहृतस्य यागविधेर्निगमनम् ( तै. सं. १ । ८ । १ । १ तै. ब्रा. १ । ६ । १ । ३ ) ॥ २२ ॥ २ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे पञ्चमाध्यायस्य प्रथमं ब्राह्मणम् ॥ ( ५।१ )

---

१-एकं वा समिष्टयजुः । का. श्रौ. सू. ५ । ३७ । २-प्रजाकामस्यापि वैश्वदेवम् । का. श्रौ. सू. ५ । ४५ ।

वैश्वदेवेन वै प्रजापतिः । प्रजाः ससृजे ता अस्य प्रजाः सृष्टा वरुणस्य यवाञ्जक्षुर्वरुण्यो ह वा ऽअग्रे यवस्तद्यन्न्वेव वरुणस्य यवान्प्रादंस्तस्माद्वरुणप्रघासा नाम ॥ १ ॥

ता वरुणो जग्राह । ता वरुणगृहीताः परिदीर्णाऽअनत्यश्च प्राणत्यश्च शिश्यिरे च निषेदुश्च प्राणोदानौ हैवाभ्यो नापचक्रमतुरथान्याः सर्वा देवता ऽअपचक्रमुस्तयोर्हैवास्य हेतोः प्रजा न परा बभूवुः ॥ २ ॥

## अथ वरुणप्रघासपर्व ।

वैश्वदेवेन वै प्रजापतिः प्रजाः ससृजे । ता अस्य प्रजाः सृष्टा वरुणस्य यवान् जक्षुः । वरुण्यो ह वा अग्रे यवः । तद्यन्न्वेव वरुणस्य यवान् प्रादन्—तस्माद् वरुणप्रघासा नाम ॥ १ ॥

ता वरुणो जग्राह । ता वरुणगृहीताः परिदीर्णा अनत्यश्च, प्राणत्यश्च—शिश्यिरे च, निषेदुश्च । प्राणोदानौ हैवाभ्यो नापचक्रमतुः, अथान्याः सर्वा देवता अपचक्रमुः । तयोर्हैवास्य हेतोः प्रजा न पराबभूवुः ॥ २ ॥

विधित्सितस्य वरुणप्रघासाख्यस्य द्वितीयस्य पर्वणो वरुणपाशविमोचनहेतुत्वमाख्यायिकया प्रतिपादयंस्तद्विधिमुन्नयति—**वैश्वदेवेन वा** इत्यादिना । पुरा वैश्वदेवयागेन प्रजापतिना सृष्टाः 'प्रजाः' वरुणसम्बन्धिनो 'यवान्' 'जक्षुः' भक्षयामासुः । यवस्य वरुणदेवत्यत्वमाह—**वरुण्यो** हेति । 'अग्रे' सृष्टिसमये सृज्यमानः 'यवः' वरुणसम्बन्धी 'एव' अभवत् । अतो यवो वरुणस्य स्वभूतः तत्प्रसङ्गाद् वरुणप्रघासोऽस्य नाम निर्वृत्तम् । विधित्सितयागस्य प्रसङ्गाद्वरुणप्रघासाख्यं नाम निर्व्रूते—**तद्यदि**ति । 'तत्' तथा सति 'यत्' यस्मात् 'एव' खलु कारणात् 'वरुणस्य' स्वभूतान् 'यवान्' 'प्रादन्' प्रकर्षेणाभक्षयन्, 'तस्माद्' वरुणसम्बन्धियवप्रघासनात् 'प्रजाः' 'वरुणप्रघासाः' तत्पाशगृहीतानां तासां पाशविमोचनाय क्रियमाणा यागा अप्युपचारेण वरुणप्रघासाख्याः सञ्जाता इत्यर्थः । 'जक्षुः'—इति अदेर्लिटि "लुङ्सनोर्घस्लृ"—( पा. सू. २ । ४ । ३७ ) "लिट्यन्यतरस्याम्"—( पा. सू. २ । ४ । ४० ) इति घस्लादेशे रूपम् ॥ १ ॥

यवादनानन्तरं वरुणकृत्यमाह—**ता** इति । 'परिदीर्णाः' परितो दीर्णाः, परितो दीर्यमाणावयवाः "दॄ विदारणे"—( धा. पा. क्र्या. प. २१ ) इति अस्मात् निष्ठायां "श्र्युकः किति"—( पा.सू. ७।२।११ ) इति इट्—प्रतिषेधः, "ॠत इद्धातोः"—( पा. सू. ७ । १ । १०० ) इतीत्वम् "रदाभ्यां निष्ठातो नः"—( पा. सू. ८ । २ । ४२ ) इति निष्ठातकारस्य नकारः । **अनत्यश्चे**त्यादि । वरुणपाशग्रहणादेव हेतोः 'अनत्यः' चेष्टमानाः, हस्तपादादिधूननं कुर्वाणाः, 'प्राणत्यश्च' प्राणनव्यापारं श्वासोच्छ्वासादिलक्षणं कुर्वत्यः, 'शिश्यिरे च, निषेदुश्च' शयनासनाभ्यामेव कालं नीतवत्यः, न पुनर्व्यापारान्तरक्षमा बभूवुरित्यर्थः । **प्राणोदानौ** हेत्यादि । 'आभ्यः' प्रजाभ्यः सकाशात् केवलं प्राणोदानावेव 'नापचक्रमतुः'; 'अन्याः' 'तु सर्वाः' वाक्चक्षुरादीन्द्रियाधिष्ठातृदेवता अग्न्याद्याः 'आभ्यः' प्रजाभ्योऽपक्रान्ताः, आसामिन्द्रियपाटवमपि प्रभ्रष्टमित्यर्थः । **तयोर्हैवे**ति । 'तयोः' प्राणापानयोरेवानपक्रमणाद्धेतोः 'अस्य' प्रजापतेः 'प्रजाः' 'न पराबभूवुः' न विनष्टाः ॥ २ ॥

( स्ता ) ता ऽएतेन हविषा प्रजापतिरभिषज्यत् । ( त्त ) तद्याश्चैवास्य प्रजा जाता आसन्याश्चाजातास्ता ऽउभयीर्व्वरुणपाशात्प्रामुञ्चत्ता ऽअस्यानमीवा ऽअकिल्बिषाः प्रजाः प्राजायन्त ॥ ३ ॥

( न्ता ) अथ यदेष ऽएतैश्चतुर्थे मासि यजते । तन्नाह न्वेवैतस्य तथा प्रजा व्वरुणो गृह्णातीति देवा ऽअकुर्व्वन्निति त्वेवैष एतत्करोति याश्च त्वेवास्य प्रजा जाता याश्चाजातास्ता ऽउभयीर्व्वरुणपाशात्प्रमुञ्चति ता ऽअस्यानमीवा ऽअकिल्बिषाः प्रजाः प्रजायन्ते तस्माद्वाऽएष ऽएतैश्चतुर्थे मासि यजते ॥ ४ ॥

---

ता एतेन हविषा प्रजापतिरभिषज्यत् । तद्–याश्चैवास्य प्रजा जाता आसन्, याश्चाजाताः–ता उभयीर्वरुणपाशात्प्रामुञ्चत् । ता अस्यानमीवा अकिल्बिषाः प्रजाः प्राजायन्त ॥ ३ ॥

अथ यदेष एतैश्चतुर्थे मासि यजते, तन्नाह न्वेवैतस्य तथा प्रजा वरुणो गृह्णाति इति । देवा अकुर्वन्–इति त्वेवैष एतत्करोति–याश्च त्वेवास्य प्रजा जाताः, याश्चाजाताः–ता उभयीर्वरुणपाशात्प्रमुञ्चति । ता अस्यानमीवा अकिल्बिषाः प्रजाः प्रजायन्ते । तस्माद्वा एष एतैश्चतुर्थे मासि यजते ॥ ४ ॥

---

**ता एतेनेत्यादि** । वरुणपाशग्रहणजनितमुक्तविधं प्रकारमालोक्य 'प्रजापतिः' 'एतेन' वरुणप्रघासाख्येन 'हविषा' 'ताः' प्रजाः 'अभिषज्यत्' अचिकित्सत् "भिषज् चिकित्सायाम्"–( कण्ड्वा २२ । ) इति धातुः । तेन च भेषजेन 'जाताः' 'अजाताः' जनिष्यमाणाश्चोभयविधाः 'प्रजाः' 'वरुणपाशात्' 'प्रामुञ्चत्' । तस्य विमोचने सति 'अस्य' प्रजापतेः प्रजाः 'अनमीवाः' रोगरहिताः 'अकिल्बिषाः' रोगनिदानभूतपापरहिताश्च अभवन्नित्यर्थः ॥ ३ ॥

विधत्ते–**अथ यदिति** । 'अथ'–शब्दो वैश्वदेवानन्तर्ये । 'एषः' यजमानः वैश्वदेवानन्तरं 'चतुर्थे मासि' संपूर्णे सति 'एतैः' वक्ष्यमाणैर्हविर्भिः 'यजते' अप्राप्तार्थत्वाद् वर्त्तमाननिर्देशोऽपि विधिरुन्नेतव्यः । यच्छब्दो हेतौ; यस्माद्वरुणप्रघासैर्यजते, 'तत्' तस्मात् 'अह' 'नु' 'एव'–इति निपाताः 'नैव' खलु 'एतस्य' यजमानस्य 'प्रजाः' तथा 'वरुणो गृह्णाति' । **इति देवा** इत्यादि । पुरा खलु 'देवाः' एवमेव वरुणप्रघासम् अकुर्वन्, 'तु'–शब्दोऽप्यर्थः । 'एषः' अपि यजमानः 'इति' एवम् 'एव' एतत् 'एतर्हि' 'करोति' ।

इत्थं मनुष्यकर्त्तृकयागस्य देवकर्त्तृकेन यागेन साम्यात् तादृक्फलसाधनत्वमाह–**याश्चेति** । उक्तार्थमेतत् । **तस्माद्वा** इति । वरुणप्रघासविधेर्निगमनम् ॥ ४ ॥

---

१–'विविधाकारम्'–इति पा. । २–"अथ यश्चतुर्षु चतुर्षु मासेषु स चातुर्मास्ययाजी । वसन्ते वैश्वदेवेन यजेत, प्रावृषि वरुणप्रघासैः, शरदि साकमेधैः"–इति आ. श्रौ. सू. । ८ । ४ । १३ का. श्रौ. सू. ५ । ४४–४५ ।

तद्वै द्वे वेदी द्वावग्नी भवतः । ( स्त ) तद्यद्द्वे वेदी द्वावग्नी भवतस्तदुभयत एवैतद्वरुणपाशात्प्रजाः प्रमुञ्चतीतश्चोर्ध्वा इतश्चावाचीस्तस्माद्द्वे वेदी द्वावग्नी भवतः ॥ ५ ॥

सऽउत्तरस्यामेव वेदौ । ( दाऽउ ) उत्तरवेदिमुपकिरति न दक्षिणस्यां क्षत्रं वै वरुणो विशो मरुतः क्षत्रमेवैतद्विशऽउत्तरं करोति तस्मादुपर्यासीनं क्षत्रियमधस्तादिमाः प्रजाऽउपासते तस्मादुत्तरस्यामेव वेदाऽउत्तरवेदिमुपकिरति न दक्षिणस्याम् ॥ ६ ॥

---

तद्वै द्वे वेदी, द्वावग्नी भवतः । तद् यद् द्वे वेदी द्वावग्नी भवतः–तदुभयत एवैतद्वरुणपाशात् प्रजाः प्रमुञ्चति–इतश्चोर्ध्वाः, इतश्चावाचीः । तस्माद् द्वे वेदी, द्वावग्नी भवतः ॥ ५ ॥

स उत्तरस्यामेव वेदावुत्तरवेदिमुपकिरति, न दक्षिणस्याम् । क्षत्रं वै वरुणो, विशो मरुतः । क्षत्रमेवैतद् विश उत्तरं करोति । तस्मादुपर्यासीनं क्षत्रियमधस्तादिमाः प्रजा उपासते । तस्मादुत्तरस्यामेव वेदा उत्तरवेदिमुपकिरति, न दक्षिणस्याम् ॥ ६ ॥

---

तेषु वरुणप्रघासेषु चोदकतो वेदेराहवनीयस्य चैकत्वे प्राप्ते द्वित्वं विधत्ते–तद्वै द्वे इति[1] । 'तत्' तत्र वरुणप्रघासेषु वेद्याहवनीययोर्द्वित्वमनूद्य प्रयोजनकथनेन स्तौति–तद्यदिति । दक्षिणत उत्तरतश्च स्थिताभ्यां वेदिभ्यामग्निभ्याम्, 'तदुभयतः' दक्षिणत उत्तरतश्च पार्श्वद्वयादेव 'वरुणपाशात्' 'प्रजाः' 'प्रमुञ्चति' । इतश्चोर्ध्वा इति । प्रागुक्तार्थम् ( श. प. द्वि. कां. ९ । १ । २० । भा. ) ॥ ५ ॥

उत्तरवेदिनिवपनं विधत्ते–स इति । द्वयोर्वेद्योर्या 'उत्तरा' उत्तरदिगवस्थिता तस्यामेव वेद्यामाहवनीयायतने 'उत्तरवेदिम्' 'उपकिरति' उपक्षिपति । एवकारयोग्यावर्त्यं दर्शयति–न दक्षिणस्यामिति । 'दक्षिणस्यां' वेदौ उत्तरवेदिः 'न' कार्येत्यर्थः । तच्चोत्तरवेदिनिर्माणं सूत्रकृतापि दर्शितम्–"उत्तरवेदिं निवपति उत्तरस्यां, शम्यामादाय चात्वालं मिमीते" इति ( का. श्रौ. सू. ९ । ६४ । ६९ ) ॥

तदेतत् स्तौति–क्षत्रं वा इति । "यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः"–( श. प. ब्रा. १४।४।२।२३ ) इति अग्रे समाम्नास्यते; अतो वरुणो देवेषु मध्ये क्षत्रियः, मरुतो देवविशः तत्रोत्तरस्यामादौ वरुण इज्यते दक्षिणस्यां मरुतः । तत्रोत्तरस्यामेवोत्तरवेदेर्निवपनात्क्षत्रियजातिमेव वैश्यजातेरुत्तर उपस्थितां करोति । अत एवेदानीं लोके तथा दृश्यत इति प्रसिद्धिमुदाहरति–तस्मादिति ॥ ६ ॥

---

१–आहवनीयस्य पुरस्ताद्वेदीं करोति । आहवनीयस्य पुरस्तादिति । यावदाहवनीयो न भवति । गार्हपत्याच्च पृथग्भूतस्याहवनीयस्य व्यपदेशः । तस्मादाहवनीयोद्धरणस्य पुरस्तादिति सूत्रार्थः । इति ( कर्कः । ) प्रादेशोत्तरापथो वा । प्रसृतांगुलिपाणिरानणिबंधात् पृथुरुच्यते इति कर्कः । रथमात्र्युत्तरा । रथमानं शुल्बे । अंगुलैरथसम्मितायाः प्रमाणं, तत्राष्टाशीतिशतमीषा चतुःशतमक्षः षडशीतिर्युगम् । चतुररत्निर्वापश्चात् सप्त प्राची षड् वा त्रयः पुरस्तात् । तेषां मध्ये शंकुः । अपरिमिता वा । उक्तप्रमाणयोर्बहुतरा वा कार्येति कर्कः । स्फ्याद्यालंमर्शनात् करोति । उभयोरेक उत्करः । अपरेण वेदिं प्रतिप्रस्थातुः संचरः । इति का. श्रौ. सू. ५ । ५५-६३

( म ) अथैतान्येव पञ्च हवीꣳषि भवन्ति । एतैर्वै हविर्भिः प्रजापतिः प्रजाऽअसृजतैतैरुभयतो वरुणपाशात्प्रजाः प्रामुञ्चदितश्चोर्ध्वा इतश्चावाचीस्तस्माद्वाऽएतानि पञ्च हवीꣳषि भवन्ति ॥ ७ ॥

( न्त्य )अथैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति । प्राणोदानौ वाऽइन्द्राग्नी तद्यथा पुण्यं चक्रुषे पुण्यं कुर्यादेवं तत्तयोर्हैवास्य हेतोः प्रजा न पराबभूवुस्तत्प्राणोदानाभ्यामेवैतत्प्रजा भिषज्यति प्राणोदानौ प्रजासु दधाति तस्मादैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति ॥ ८ ॥

( त्य ) उभयत्र पयस्ये भवतः । पयसो वै प्रजाः सम्भवन्ति पयसः सम्भूतास्तद्यत ऽएव सम्भूता यतः सम्भवन्ति तत ऽएवैतदुभयतो वरुणपाशात्प्रजाः प्रमुञ्चतीतश्चोर्ध्वा ऽइतश्चावाचीस्तस्मादुभयत्र पयस्ये भवतः ९॥

---

अथैतान्येव पञ्च हवींषि भवन्ति । एतैर्वै हविर्भिः प्रजापतिः प्रजा असृजत, एतैरुभयतो वरुणपाशात्प्रजाः प्रामुञ्चत्–इतश्चोर्ध्वाः इतश्चावाचीः । तस्माद्वा एतानि पञ्च हवींषि भवन्ति ॥ ७ ॥

अथैन्द्राग्नौ ( १ । २ ) द्वादशकपालः पुरोडाशो भवति । प्राणोदानौ वा इन्द्राग्नी । तद्यथा–पुण्यं चक्रुषे पुण्यं कुर्यात्–एवं तत् । तयोर्हैवास्य हेतोः प्रजा न पराबभूवुः । तत् प्राणोदानाभ्यामेवैतत् प्रजा भिषज्यति । प्राणोदानौ प्रजासु दधाति । तस्मादैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति ॥ ८ ॥

उभयत्र पयस्ये ( ३ । ४ ) भवतः । पयसो वै प्रजाः सम्भवन्ति, पयसः सम्भूताः । तद्यत एव

---

वैश्वदेवे पर्वणि आदितो यान्याग्नेयादीनि पञ्च हवींषि, ( श. प. २ । १ । ८–११ ) तान्यत्रापि विधत्ते–**अथैतानी**ति । अन्ययोगव्यवच्छेदार्थ एवकारः । तदेतत्[1] स्तौति–**एतैर्वा** इति । एतानि वरुणपाशविमोचने विहितानि हवींषि प्रजापतिः साधनत्वेन यतः प्रायुंक्त[2], अतोऽत्रापि तेषामनुष्ठानमुपपन्नमित्यर्थः । **इतश्चोर्द्ध्वा** इति, व्याख्यातम् ( श. प. द्वि. कां २ । ५ । १ । २० । भा० ) ॥ ७ ॥

षष्ठं भागं[3] विधत्ते–**अथैन्द्राग्न** इति[4] । तत् प्रशंसति–**प्राणोदानावि**त्यादिना । **तद्यथे**ति । ' तत् ' तत्र लोके यथा ' पुण्यं ' शोभनमुपकारं कृतवते प्रत्युपकाररूपं ' पुण्यं ' शोभनं ' कुर्यात् ', ' एवम् ' एव तदिन्द्राग्न्योर्हविर्निर्वपणम् । ताभ्यां कृतमुपकारं दर्शयति–**तयोरि**ति । प्राणोदानात्मकयोस्तयोरवस्थानादेव कारणात् ' अस्य ' प्रजापतेः ' प्रजा न पराबभूवुः ' प्रागाम्नातम् " प्राणोदानौ हैवाभ्यो नापचक्रमतुः "–( श. प. २ । ५ । २ । २ ) इति । **तत् प्राणोदानाभ्यामि**त्यादि । ' तत् ' तस्मात् प्राणोदानरूपयोरिन्द्राग्न्योर्याभ्याम् ' एव ' ' एतत् ' ' प्रजाः ' वरुणपाशगृहीताः चिकित्सति, तौ ' प्राणोदानौ ' एव तासु ' प्रजासु ' स्थापयति । **तस्मा**दिति । प्रतिपादितार्थनिगमनम् ॥ ८ ॥

वेदिद्वयेऽपि पयस्यां विधत्ते–**उभयत्रे**ति । ( का. श्रौ. १ । २४८ । का. सू. ५ । १०२ ) ' उभ-

---

१–' तदेव–' इति पा. । २–' प्रायुनक् '–इति, ' प्रागुक्तवान् '–इति च पा. । ३–' हविः '–इ० पा० । ४–नित्येभ्योऽधिकान्यैन्द्राग्नः पयस्ये व्वारुणी मारुती काय एककपालः । का. श्रौ. सू. ५ । १०० ।

( तो ) व्वारुण्युत्तरा भवति । व्वरुणो ह वा ऽअस्य प्रजा अगृह्णात्तत्प्रत्यक्षं व्वरुणपाशात्प्रजाः प्रमुञ्चति मारुती दक्षिणाऽजामितायै न्वेव मारुती भवति जामि ह कुर्य्याद्यदुभे व्वारुण्यौ स्यातामतो ह वा ऽअस्य दक्षिणतो मरुतः प्रजा अजिघाꣳसंस्तानेतेन भागेनाशमयंस्तस्मान्मारुती दक्षिणा ॥ १० ॥

---

सम्भूताः, यतः सम्भवन्ति–तत एवैतदुभयतो वरुणपाशात्–प्रजाः प्रमुञ्चति–इतश्चोर्ध्वाः, इतश्चावाचीः । तस्मादुभयत्र पयस्ये भवतः ॥ ९ ॥

वारुण्युत्तरा भवति । वरुणो ह वा अस्य प्रजा अगृह्णात्–तत्प्रत्यक्षं वरुणपाशात्प्रजाः प्रमुञ्चति । मारुती दक्षिणा । अजामितायै, न्वेव मारुती भवति । जामि ह कुर्यात्–यदुभे वारुण्यौ स्याताम् । अतो ह वा अस्य दक्षिणतो मरुतः प्रजा अजिघांसन्, तानेतेन भागेनाशमयत् । तस्मान्मारुती दक्षिणा ॥ १० ॥

---

यत्र ' अध्वर्युकर्तृकायामुत्तरस्यां वेद्यां प्रतिप्रस्थातृकर्तृकायां दक्षिणस्यां च द्वे ' पयस्ये ' हविषी ' भवतः ' वरुणपाशविमोचनानुकूल्यं पयस्यायाः प्रतिपादयति–**पयसो वा** इति । पुरा प्रजापतिना सृष्टाः ' प्रजाः ' तदीयस्तन्यरूपात् ' पयसः ' ' सम्भूताः ' वर्द्धिताः, इदानीमपि मानुषाः स्तन्यरूपात् पयस एव ' सम्भवन्ति ' वर्द्धन्ते । **तद्यत एवेति** । अस्यार्थस्यानुवादः । ' तत एव ' सम्भूतिहेतोः ' पयसः ' कारणात् ' उभयतः ' दक्षिणत उत्तरतश्च पार्श्वद्वयात्, प्रजानां वरुणपाशविमोचनं कृतवान् भवति ॥ ९ ॥

अध्वर्युकर्तृकायाः पयस्याया देवतां विधाय स्तौति–**वारुणीति** । उत्तरस्यां वेद्यां या पयस्या, सा वरुणदेवताका कार्या । **तत्प्रत्यक्षमिति** । देवतान्तरयागेन वरुणपाशविमोचनं परोक्षम्, वरुणदेवताकेन तु यागेन ' तत् ' पाशविमोचनं ' प्रत्यक्षम् ' एवेति वरुणदेवताकत्वं युक्ततरमित्यर्थः ॥

प्रतिप्रस्थातृकर्तृकायाः पयस्याया देवतां विधाय स्तौति–**मारुती दक्षिणेति** । ' दक्षिणा ' दक्षिणस्यां वेदौ क्रियमाणा पयस्या मरुद्देवताका भवेत् । **अजामिताया** इति । वरुणदेवतां परित्यज्य ' अस्याः ' पयस्याया यत् मरुल्लक्षणदेवतान्तरकरणम्, तत् जामितादोषराहित्याय भवति । व्यतिरेकेण तदेवाह–**जामीति** । ' यद् ' यदि ' उभे ' अपि दक्षिणोत्तरपयस्ये वरुणदेवताके स्याताम्, तदा प्रयुक्ताया एव देवतायाः पुनः प्रयोगो नवीकरणाभावादलसतारूपजामितादोषः स्यादित्यर्थः ॥

मारुतत्वे कारणान्तरमाह–**अतो ह वा** इति । ' अतः ' अस्माद्वक्ष्यमाणादपि हेतोः दक्षिणा पयस्या मारुती कार्या । अस्य हि प्रजापतेः सम्बन्धिनीः प्रजाः पुरा दक्षिणतो दक्षिणदिग्भागेन मरुतः ' अजिघांसन् ' हन्तुमैच्छन्; तान् मरुतः प्रजापतिरेतेन पयस्यारूपेण भागेनाशमयत् शान्तिमनयत् । तस्माद् दक्षिणतः स्थितानां मरुतामुपशमनाय दक्षिणतः क्रियमाणैषा पयस्या मारुती कार्येत्यर्थः ॥ १० ॥

तयोरुभयोरेव करीराण्यावपति । कं वै प्रजापतिः प्रजाभ्यः करीरैरकुरुत कम्वेवैष ऽएतत्प्रजाभ्यः कुरुते ॥ ११ ॥

तयोरुभयोरेव शमीपलाशान्यावपति । शं वै प्रजापतिः प्रजाभ्यः शमीपलाशैरकुरुत शम्वेवैष ऽएतत्प्रजाभ्यः कुरुते ॥ १२ ॥

( तेऽथ ) अथ काय ऽएककपालः पुरोडाशो भवति । कं वै प्रजापतिः प्रजाभ्यः कायेनैककपालेन पुरोडाशेनाकुरुत कम्वेवैषऽएतत्प्रजाभ्यः कायेनैककपालेन पुरोडाशेन कुरुते तस्मात्काय एककपालः पुरोडाशो भवति १३

( त्यु ) अथ पूर्वेद्युः । ( २ ) अन्वाहार्यपचनेऽतुषानिव यवान्कृत्वा

---

तयोरुभयोरेव करीराण्यावपति । कं वै प्रजापतिः प्रजाभ्यः करीरैरकुरुत । कम्वेवैष एतत् प्रजाभ्यः कुरुते ॥ ११ ॥

तयोरुभयोरेव शमीपलाशान्यावपति । कं वै प्रजापतिः प्रजाभ्यः शमीपलाशैरकुरुत । शम्वेवैष एतत् प्रजाभ्यः कुरुते ॥ १२ ॥

अथ काय ( ९ ) एककपालः पुरोडाशो भवति । कं वै प्रजापतिः प्रजाभ्यः कायेनैककपालेन पुरोडाशेनाकुरुत । कम्वेवैष एतत् प्रजाभ्यः कायेनैककपालेन पुरोडाशेन कुरुते । तस्मात् काय एककपालः पुरोडाशो भवति ॥ १३ ॥

अथ पूर्वेद्युरन्वाहार्यपचनेऽतुषानिव यवान् कृत्वा, तानीषदिवोपतप्य, तेषां करम्भपात्राणि कुर्वन्ति, यावन्तो गृह्याः स्युः तावन्ति, एकेनातिरिक्तानि ॥ १४ ॥

---

करीराणामावपनं विधाय स्तौति—**तयोरिति** । तयोरुभयोः पयस्ययोः करीराणि प्रक्षिपेत् ( तै. सं. २ । ४ । ९ । ४ ) मधुराः फलविशेषाः करीराणि; तानि चोत्तरापथे प्रसिद्धानि । **कं वा** इत्यादि । 'करीरैः' एतैः करीरफलैः 'प्रजापतिः' 'प्रजाभ्यः' अस्माकं यस्मात् 'कं' सुखम् 'अकुरुत' तस्मादिदानीमप्येष यजमानस्तदावपनेन सुखमेव प्रजाभ्यः कुरुते ॥ ११ ॥

शमीपर्णानामावपनं विधत्ते—**तयोरिति** । 'शमीपलाशानि' शम्याः पर्णानीत्यर्थः । **शं वा** इत्यादि । 'शम्' उपद्रवाणां शमनमित्यर्थः । स्पष्टमन्यत् ।—अत एवोक्तं कात्यायनेन—"उभयोः करीराण्यावपति शमीपलाशमिश्राणि"—इति ( का. श्रौ. सू. ९ । ११२ ) ॥ १२ ॥

अथान्तिमं हविर्विधत्ते—**अथ काय** इति । कः प्रजापतिर्देवता अस्य, "साऽस्य देवता"—इत्यणि "कस्येत्"—( पा. सू. ४ । २ । २४, २९ ) इति 'क'—शब्दस्येकारान्तादेशः । एतस्य हविषः प्रयोजनमाह—**कं वा** इति । सुखात्मको हि प्रजापतिः 'क'—शब्दवाच्यः । अतस्तद्देवताकेन यागेन सुखकरणमुपपन्नमिति भावः ॥ १३ ॥

करम्भपात्राणां निर्माणं विधत्ते—**अथ पूर्वेद्युरिति** । यस्मिन् दिवसे वरुणप्रघासयागः ततः पूर्वेद्युः पूर्वे दिवसे ।

---

१—आषाढ्यामयं ते योनिरिति समारोह्योदवसाय निर्मथ्य वरुणप्रघासाः । पूर्व्वेद्युर्दक्षिणाग्नौ निस्तुषापभृष्टयवानां करंभपात्रकरणं निस्तुषग्रहणं फलीकरणव्युदासार्थमिति कर्कः । यावंतो यजमानगृह्या एकाधिकानि । प्रजायां जातश्रुतेः । त्रीणि नित्यत्वात् । द्विप्रजैकप्रजाऽप्रजानां त्रीण्येकाधिकानि करंभपात्राणि कर्तव्यानि । इतरेषां प्रजासंख्यान्येकाधिकानि इत्यर्थः । इति का. श्रौ. सू. ५।४७–५१।

तानीषदिवोपतप्य तेषां करम्भपात्राणि कुर्वन्ति यावन्तो गृह्याः स्युस्तावन्त्येकेनातिरिक्तानि ॥ १४ ॥

तत्रापि मेषं च मेषीं च कुर्वन्ति । तयोर्मेषे च मेष्यां च यद्यनैडकीरूर्णा विन्देत्ताः प्रणिज्य निश्लेषयेद्यद्यु ऽअनैडकीर्न विन्देदथो ऽ अपि कुशोर्णा ऽएव स्युः ॥ १५ ॥

(स्त) तद्यन्मेषश्च मेषी च भवतः । (ऽ) एष वै प्रत्यक्षं वरुणस्य पशुर्यन्मेषस्तत्प्रत्यक्षं वरुणपाशात्प्रजाः प्रमुञ्चति यवमयौ भवतो यवान् हि जक्षुषी र्वरुणोऽगृह्णान्मिथुनौ भवतो मिथुनादेवैतद्वरुणपाशात्प्रजाः प्रमुञ्चति॥१६॥

---

तत्रापि मेषं च मेषीं च कुर्वन्ति । तयोर्मेषे च मेष्यां च यद्यनैडकीरूर्णा विन्देत्—ताः प्रणिज्य निश्लेषयेत् । यद्यु अनैडकीर्न विन्देत्—अथोऽअपि कुशोर्णा एव स्युः ॥ १५ ॥

तद् यन्मेषश्च मेषी च भवतः । एष वै प्रत्यक्षं वरुणस्य पशुः—यन्मेषः । तत्प्रत्यक्षं वरुणपाशात् प्रजाः प्रमुञ्चति । यवमयौ भवतः । यवान् हि जक्षुषीर्वरुणोऽगृह्णात् । मिथुनौ भवतः—मिथुनादेवैतद् वरुणपाशात् प्रजाः प्रमुञ्चति ॥ १६ ॥

---

अन्वाहार्यपचने इति । अन्वाहार्य्यो नामेष्टिः । दक्षिणदिग्भागे मरुतः 'अजिघांसन्' हन्तुमैच्छन् तान् प्रजापतिरेतेन पयस्यारूपेण भागेन 'अशमयत्' शमितवानिति यावत्, तस्माद्दक्षिणात्वेन देय ओदनो यस्मिन् पच्यते स तथोक्तः । तस्मिन् दक्षिणाग्नौ ' अतुषान्' तुषरहितान् 'कृत्वा' सम्भृय्य 'तान्' 'ईषदिव' अत्यल्पमिव 'उपतप्य' श्रपयित्वोदकेनालोडय, तैः 'करम्भपात्राणि' भृष्टयवचूर्णाः करम्भाः, तन्मयानि पात्राणि 'कुर्वन्ति' अध्वर्य्युयजमानादयः । कियन्ति तानि पात्राणीत्यपेक्षायामाह—यावन्त इति । यावत्सङ्ख्याका यजमानस्य 'गृह्याः' स्वगृहे वर्त्तमानाः पुत्रपौत्रादिरूपा ज्ञातयो भवेयुः, ' तावन्ति ' तावत्सङ्ख्याकानि करम्भपात्राणि कार्य्याणि तानि च जनिष्यमाणापत्यार्थम्, एकेन' 'अतिरिक्तानि' अधिकानि कार्य्याणि ॥ १४ ॥

करम्भपात्रावशिष्टाद् यवपिष्टादेव मेषमेषीलक्षणमिथुनस्य निर्माणं विधत्ते—तत्रापीति । ' अपि '–शब्द एवकारार्थः । 'तत्र' करम्भपात्रनिर्माणसमये एव, तेनैव पिष्टेन मेषमेष्यौ कर्त्तव्ये । तयोरिति । सम्भूयानूदितयोः मेषे च मेष्याञ्च इति पृथगुपादानं विस्पष्टार्थम् । यद्यनैडकीरिति । एडको मेषः, तत्सम्बन्धरहिता अनैडक्यः, 'ऊर्णाः' कम्बलोपादानभूतानि तज्जातीयानि रोममयानि सूत्राणि यदि तास्तथाविधा ऊर्णाः 'विन्देत्' लभेत तदा ' ताः ' 'प्रणिज्य' प्रक्षाल्य, तयोः मेषमेष्योः ' निश्लेषयेत् ' संश्लेषयेत् 'यद्यु' यदि खलु 'अनैडकीः' ऊर्णाः 'न विन्देत्' न लभेत, तर्हि ' कुशोर्णा एव स्युः ' कुशमय्य एवोर्णाः, तयोः मेषमेष्योः संश्लेषणीयाः स्युः भवेयुः ॥ १५ ॥

मेषमेष्योः करणमनूद्य स्तौति—तद्यदिति । वरुणस्य पशुर्यन्मेष इति । 'यद्' ' एषः ' खलु ' प्रत्यक्षं '

---

१–'पिष्टचूर्णाः' इति पा. । २–'करम्भो दध्ना संयुताः सक्तवः' तन्मयानि पात्राणि करम्भपात्राणीति का. श्रौ.सू. ५।५।२ सू.वा. दे. । ३–मेषमिथुनं च । का. श्रौ. सू. ५।५२ । ४–' नैलकी ' इति पा. । ५–' एलको ' इति पा. । ६–' तज्जातीयरोममयानि ' इति पा. । ७–अनैडकीरूर्णाः प्रक्षाल्याश्लेषवेत्तयोः । का. श्रौ. सू. ५ । । ५३ । ८–कुशोर्णा वाऽभावे । का. श्रौ. सू . ५ । ५४ ।

स उत्तरस्यामेव पयस्यायां मेषीमवदधाति । दक्षिणस्यां मेषमेवमिव हि मिथुनं क्लृप्तमुत्तरतो हि स्त्री पुमाꣳसमुपशेते ॥ १७ ॥

स सर्व्वाण्येव हवीꣳष्यध्वर्युः । ( कु ) उत्तरस्यां वेदावासादयत्यथैतामेव पयस्यां प्रतिप्रस्थाता दक्षिणस्यां वेदावासादयति ॥ १८ ॥

( त्या ) आसाद्य हवीꣳष्यग्निं मन्थति । ( त्य ) अग्निं मन्थित्वानु प्रहृत्याभिजुहोत्यथाध्वर्युरेवाहाग्नये समिध्यमानायानुब्रूहीति ता ऽउभावेवे-

---

स उत्तरस्यामेव पयस्यायां मेषीमवदधाति, दक्षिणस्यां मेषम् । एवमिव हि मिथुनं क्लृप्तम् । उत्तरतो हि स्त्री पुमांसमुपशेते ॥ १७ ॥

स सर्वाण्येव हवींष्यध्वर्युरुत्तरस्यां वेदावासादयति–अथैतामेव पयस्यां प्रतिप्रस्थाता दक्षिणस्यां वेदावासादयति ॥ १८ ॥

आसाद्य हवींष्यग्निं मन्थति । अग्निं मन्थित्वाऽनुप्रहृत्याभिजुहोति । अथाध्वर्युरेवाह–" अग्नये

---

'वरुणस्य' हविर्भूतः 'पशुः' अत एव पश्वेकादशिन्याम्–'अधोरामः सावित्रो वारुणः कृष्ण एकशितिपात् पेत्वः' इत्याम्नायते ( वा. सं. २९।५८ ) । पेत्वो विगतपुंस्को मेष इति हि तदर्थः । **यवमयाविति** । यत्र पयश्च मेषो यवमयी च मेषी । " पुमान्स्त्रिया " ( पा. सू. १-२-६७ ) इति पुंसः शेषः । यवविकारौ भवत इत्यर्थः । **यवान् हीति** । ' हि ' यस्माद् ' यवान् ' ' जक्षुषीः ' भक्षितवतीः प्रजाः ' वरुणः ' पाशेन ' अगृह्णात् ' अतस्तद्यवप्रत्यर्पणाय मेषमेष्योर्यवमयत्वं सम्पद्यत इत्यर्थः । तयोः स्त्रीपुंसरूपतामनूद्य स्तौति–**मिथुनौ भवत इति** । 'मिथुनाद्'–इत्येतद् 'वरुणपाशाद्'–इत्यस्य विशेषणम् । द्वैरूप्याधिकरणाधिकरणात् दक्षिणस्यां मेषो न अपि तु वैयधिकरण्येन तत्प्रमोचने हेतुः ॥ १६ ॥

अथ[2] तयोः प्रक्षेपं विधत्ते–**स इति** । अध्वर्युकर्तृकायाम् ' उत्तरस्याम् ' पयस्यायाम् एव ' मेषीम् ' ' अवदधाति ' प्रक्षिपति । प्रतिप्रस्थातृकर्तृकायां ' दक्षिणस्यां ' मेषं ' प्रक्षिपति । अनयोर्दक्षिणोत्तरभावं लोकन्यायेनोपपादयति–**एवमिवेति** ॥ १७ ॥

हविषामासादनं विधत्ते–**स सर्वाण्येवेति** । आग्नेयादीनि ' सर्वाण्येव हवींषि ' ' उत्तरस्यां ' ' वेदौ ' वेद्यां ' सः अध्वर्य्युः ' ' आसादयेत् ', ' प्रतिप्रस्थाता ' तु ' एताम् ' मारुतीं ' पयस्यामेव ' ' दक्षिणस्यां ' वेद्यामासादयेदित्यर्थः[3] ॥ १८ ॥

हविरासादनोत्तरकालमग्निमन्थनं विधत्ते–**आसाद्येति** । **अग्निं मथित्वेत्यादि** । अग्निमन्थनानन्तरं जातम्

---

१–मेषमिथुनं च मारुत्यां मेषम् । का. श्रौ. सू. २२.५ । ११३ । ११४ । २–' अतः '–इ. पा. । ३–' सर्व्वाणि हवीꣳष्युत्तरस्यामासादयति मारुतीꣳ सहाज्यां प्रतिप्रस्थाता दक्षिणस्याम् । ( का.श्रौ.सू. ५।११५ ) ४–आसाद्याग्निमंथनं । का. श्रौ. सू. ५।२१ अग्नेर्जनित्रमिति शकलमादाय वेद्यां करोति २२ वृषणाविति कुशवरुणे तास्मिन् २३ उर्व्वश्यसीत्यधरारणिं तयोः २४ आयुरसीत्युत्तरयाऽज्यस्थालीꣳ संस्पृश्य पुरूरवा इत्यधिनिधानं २५ अग्नये मथ्यमानायानुवाचयति २६ मंथति गायत्रेणेति प्रतिमंत्रं त्रिः प्रदक्षिणम् २७ जाते जातायेति, २८ प्रहियमाणायेति प्रास्यन् । २९ भवतन्न इति प्रास्यति ३० अग्नावग्निरिति जुहोति स्थाल्याः स्रुवेण । इत्याग्निमंथनं का० श्रौ० सू० ५ । २१–३१ ।

ध्मावभ्याधत्त ऽउभौ समिधौ परिशिᳪंष्ट ऽउभौ पूर्व्वावाघारावाघारयतोऽथाध्वर्युरेवाहाग्निमग्नीत्सम्मृड्ढीत्यसम्मृष्टमेव भवति सम्प्रेषितम् ॥ १९ ॥

( मु ) अथ प्रतिप्रस्थाता प्रतिपरैति । स पत्नीमुदानेष्यन्पृच्छति केन चरसीति व्वरुण्यं व्वाऽएतत्स्वीकरोति यदन्यस्य सत्यन्येन चरत्यथो नेन्मेऽन्तःशल्या जुहवदिति तस्मात्पृच्छति निरुक्तं व्वा एनः कनीयो भवति सत्यᳪंहि भवति तस्माद्धेव पृच्छति सा यन्न प्रतिजानीत ज्ञातिभ्यो हास्यैतदहितᳪं स्यात् ॥ २० ॥

---

समिध्यमानायानुब्रूहि" इति । ता उभावेवेध्मावभ्याधत्तः, उभौ समिधौ परिशिंष्टः । उभौ पूर्वावाघारावाघारयतः । अथाध्वर्युरेवाह–'अग्निमग्नीत् सम्मृड्ढि' इति । असम्मृष्टमेव भवति संप्रेषितम् ॥ १९

अथ प्रतिप्रस्थाता प्रतिपरैति । स पत्नीमुदानेष्यन् पृच्छति–' केन चरसि ' इति । वरुण्यं वा एतत् स्वीकरोति–यदन्यस्य सती–अन्येन चरति, ' अथो नेन्मेऽन्तःशल्या जुहवदिति ' तस्माद् पृच्छति । निरुक्तं वा एनः कनीयो भवति । सत्यं भवति तस्माद्धेव पृच्छति । सा यन्न प्रतिजानीत–ज्ञातिभ्यो हास्यैतदहितं स्यात् ॥ २० ॥

---

' अग्निम् ' आहवनीये " भवतन्न "–( वा. सं. ९।३ ) इति मन्त्रेण ' अनुप्रहृत्य ' प्रक्षिप्य, "अग्नावग्निः "–( वा. सं. ९ । ४ ) इति मन्त्रेणाभिजुहुयात् । एतच्चाग्निमन्थनादिकम् ' अध्वर्युः ' एकः ' एव ' कुर्यात्; न प्रतिप्रस्थातेत्यभिप्रायः । दक्षिणोत्तरयोरुभयोरप्याहवनीययोराहुत्यधिकरणत्वेनेध्माधानेन समिन्धनीयत्वात् तद्धेतुभूतः सामिधेनीप्रैषोऽपि अध्वर्य्युप्रतिप्रस्थातृभ्यामुभाभ्यां प्रयोक्तव्य इत्याशङ्क्याह–अथाध्वर्य्युरेवेति । ' एव '–कारः प्रतिप्रस्थातृ–व्यावृत्त्यर्थः । एकस्याहवनीयस्य देशभेदेन द्विधाऽवस्थानात्, प्रतिप्रस्थातुरग्नेराहवनीयान्तरत्वाभावात्, प्रेष्यस्य च होतुरुभयत्रैकत्वाद्, अध्वर्य्युणोच्यमान एव प्रैष उभयत्रोपकरोति, तावुभौ समिधावित्यभिप्रायः । इध्माधानादिकन्तु ताभ्यां समनुष्ठेयमित्याह–ता उभाविति । ' तौ ' अध्वर्य्युप्रतिप्रस्थातारौ ' उभौ ' ' समिधौ ' इति व्यधिकरणे पदे । ' उभौ ' अध्वर्युप्रतिप्रस्थातारौ अनुयाजार्थं ' समिधौ ' परिशेषयत इत्यर्थः । ' अथाध्वर्य्योरेव कर्त्तव्यमाह–अथाध्वर्य्युरेवेति । हे ' अग्नीत् '; सामिधेनीप्रैषवत् ' अग्निम् ' आहवनीयं ' सम्मृड्ढि ' सम्मार्जनेन संस्कुरु । असंमृष्टमेवेति । करम्भपात्राणां होमस्य कालविधिः । अग्निमग्नीदिति सम्प्रैषे कृते तदर्थत्वात् आग्नीध्रेणानुष्ठिते इत्यर्थः ॥ १९ ॥

तस्य च करम्भपात्राणां होमस्य पत्नीकर्तृकत्वं विधित्सुस्तस्यां सम्भावितस्य पुरुषान्तरसङ्गतिजनितस्यैनसः प्रश्नं दर्शयति–अथ प्रतिप्रस्थातेति । अग्निमग्नीदिति सम्प्रैषानन्तरं ' प्रतिपरैति ' निवर्तते, पत्नी यत्रास्ते तं देशं प्रतिगच्छेदित्यर्थः । ' सः ' च प्रतिप्रस्थाता ' पत्नीम् ' ' उदानेष्यन् ' उदागमिष्यन् तां पत्नीं ' पृच्छति '–हे पत्नि ! त्वं ' केन ' जारेण ' चरसि ' वर्त्तसे ' इति ' । पुरुषान्तरसङ्गतेर्दोषान्तरतामाह–वरुण्यमिति । तेन पापेन हेतुना वरुणपाशबन्धो भवति, तत् पापं ' वरुण्यम् ' । ' अन्यस्य ' पुरुषस्य पत्नी ' सती ', ' अन्येन ' पुरुषान्तरेण सह ' चरति ' वर्त्तते इति । यत्, एतत् वरुण्यमेव ' स्वीकरोति ' ।

---

१–' व्यवच्छेदार्थ इत्यर्थः '–इ. पा. । २–सम्मार्जनायप्रेषितेऽसंमृष्टे प्रतिप्रस्थाता पत्नीमानेष्यन्नाह केन चरसीति । का० श्रौ० सू० ५ । ११६ ।

( त्तां ) त्तां व्वाचयति । प्रघासिनो हवामहे मरुतश्च रिशादसः । करम्भेण सजोषस ऽइति यथा पुरोऽनुवाक्यैवमेषैतयैवैनानेतेभ्यः पात्रेभ्यो ह्वयति २१॥ तानि वै प्रतिपुरुषम् । यावन्तो गृह्याः स्युस्तावन्त्येकेनातिरिक्तानि भवन्ति तत्प्रतिपुरुषमेवैतदेकैकेन या अस्य प्रजा जातास्ता व्वरुणपाशात्प्रमुञ्चत्येकेनातिरिक्तानि भवन्ति तद्या एवास्य प्रजा अजातास्ता व्वरुणपाशात्प्रमुञ्चति तस्मादेकेनातिरिक्तानि भवन्ति ॥ ❀ २२ ॥

---

तां वाचयति " प्रघासिनो हवामहे मरुतश्च रिशादसः । करम्भेण सजोषसः"–( वा. सं.३ । ४४ ) इति । यथा पुरोऽनुवाक्या, एवमेवैषा । एतयैवैनानेतेभ्यः पात्रेभ्यो ह्वयति ॥ २१ ॥ )

तानि वै प्रतिपुरुषं, यावन्तो गृह्याः स्युः, तावन्ति, एकेनातिरिक्तानि भवन्ति । तत् प्रतिपुरुषमेवै-

---

प्रष्टुः प्रतिप्रस्थातुरभिप्रायमाह–अथो इति । ' अथो ' अपि च एषा पत्नी ' अन्तःशल्या ' शरीरमध्ये दुश्चरितजनितेन पापरूपेण शल्येन युक्ता सती ' न इत् ' नैव ' मे ' मदीयेऽग्नौ 'जुहवत्' जुहुयात् इति । 'तस्मात्' कृतस्य पापस्य कनीयस्त्वम् । तस्माद्धेवेति । ' उ '–शब्दोऽपीत्यर्थे, ' एव '–कारो भिन्नक्रमः । तस्मादपि कारणात् ' पृच्छत्येवेत्यर्थः । विपक्षे बाधोपन्यासेन पत्न्या अपि यथार्थभाषणं कर्त्तव्यमिति विधत्ते–सेति । ' यत् ' यदि ' सा ' पत्नी पृष्टमर्थं ' न प्रतिजानीत ' न प्रतिब्रूयात् ' तत् ' तदा, ' असौ ' षष्ठ्यर्थे चतुर्थी, अस्याः पत्न्याः ' ज्ञातिभ्यः ' ' अहितम् ' अनिष्टं स्यात्, तस्माद् वस्तुतो विद्यमानं वृत्तान्तमाचक्षीतेत्यर्थः । तैत्तिरीयकेऽप्याम्नायते–"यज्जारं सन्तं न प्रब्रूयात्, प्रियं ज्ञाति ९ रुन्ध्यात्, असौ मे जार इति निर्दिशेत् " इति–( तै. ब्रा. १।६।५।२ ) तदुक्तं कात्यायनेन–" प्रतिप्रस्थाता पत्नीमानेष्यन्नाह केन चरसीति, संस्तुतानाचष्टे "–इति । संस्तुताः परिचिता जारा इत्यर्थः ॥ २० ॥

तस्या वाचनं विधत्ते–तां वाचयतीति । " प्रघासिनः " इत्यादिर्वाचनीयो मन्त्रः । तस्यायमर्थः–'प्रघासिनः प्रघासः प्रघसनीयं भोज्यं हविः, तद्वतो ' मरुतः ' "शुक्रज्योतिश्च चित्रज्योतिश्च"–( वा० सं० १७ । ८० । ८६ ) इत्यादिना प्रतिपादितनामधेयान् एकोनपञ्चाशत्सङ्ख्यान् देवान् ' हवामहे ' आह्वयामः । मरुतो ' रिशादसः ' रिशाः हिंसकाः शत्रवः, तेषां निरसितारः ' करम्भेण ' करम्भपात्ररूपेण हविषा सजोषसः समानप्रीतयश्च भवन्ति, तान् मरुत इति ॥

एतन्मन्त्रं पुरोऽनुवाक्यानुवचनसादृश्येन स्तौति–यथेति ' पुरोनुवाक्या ' हि यक्ष्यमाणदेवताह्वानार्था, ' एवम् एव ' ' एषा प्रघासिन इत्यृक्' अतः ' एतया एव ' ' एनान् ' मरुतः ' एतेभ्यः' पात्रेभ्यः' करम्भपात्रेभ्यः 'ह्वयति ' होष्यमाणं करम्भपात्रलक्षणं हविर्भोक्तुमाह्वयतीत्यर्थः ॥ २१ ॥

करम्भपात्राणि कुर्वन्ति यावन्तो गृह्याः स्युस्तावन्ति–इति वाक्येन प्राग्विहितम् ( श. प. २।५।२।१४ )

---

२२ इयंश्रुतिः=जातश्रुतिरित्युच्यते । तदाह कात्यायनः । प्रजायां वा जातश्रुतेरिति=श्रौ. सू. अ. ५ कं. ३ सू. ४ ।

१–" पत्नी एतावन्तो मे जारा इति नामग्राहं कथयति, अमुना अमुना जारेण सह चरामीति वा; नो चेन्नान्येनेति । यदि लज्जादिवशात् न कथयति, प्रतिजारं तृणानि उद्गृह्णाति " । का० श्रौ० सू० ५ । ११७ तृणानि वोद्गृह्णाति प्रतिसंस्तुतं । अनाख्यातमहितं ज्ञातिभ्य इति श्रुतेः । का० श्रौ० सू० ५ । ११९ । २–' परिजाताः '–इ. पा. ।

३–" आख्याते प्रघासिन इत्येनां वाचयति नयन् का. ५ । १२० ।

पात्राणि भवन्ति । पात्रेषु ह्यशनमश्यते यवमयानि भवन्ति यवाद्धि जक्षुषीर्व्वरुणोऽगृह्णाच्छूर्पेण जुहोति शूर्पेण ह्यशनं क्रियते पत्नी जुहोति मिथुनादेवैतद्वरुणपाशात्प्रजाः प्रमुञ्चति ॥ २३ ॥

पुरा यज्ञात्पुराहुतिभ्यो जुहोति । अहुतादो वै विशो विशो वै मरुतो यत्र वै प्रजापतेः प्रजा व्वरुणगृहीताः परिदीर्णा अनत्यश्च प्राणत्यश्च शिश्यिरे च निषेदुश्च तद्धासां मरुतः पाप्मानं व्विमेथिरे तथो ऽएवैतस्य प्रजानां मरुतः पाप्मानं व्विमश्नते तस्मात्पुरा यज्ञात्पुराहुतिभ्यो जुहोति॥२४

---

तदेकैकेन—या अस्य प्रजा जाताः ता वरुणपाशात् प्रमुञ्चति । एकेनातिरिक्तानि भवन्ति । तथा एवास्य प्रजा अजाताः, ता वरुणपाशात् प्रमुञ्चति । तस्मादेकेनातिरिक्तानि भवन्ति ॥ २२ ॥

पात्राणि भवन्ति । पात्रेषु ह्यशनमश्यते । यवमयानि भवन्ति । यवान् हि जक्षुषीर्वरुणोऽगृह्णात् । शूर्पेण जुहोति । शूर्पेण ह्यशनं क्रियते । पत्नी जुहोति । मिथुनादेवैतद्वरुणपाशात् प्रजाः प्रमुञ्चति २३

पुरा यज्ञात्पुराहुतिभ्यो जुहोति । अहुतादो वै विशः । विशो वै मरुतः । यत्र वै प्रजापतेः प्रजा वरुणगृहीताः परिदीर्णा अनत्यश्च, प्राणत्यश्च;—शिश्यिरे च, निषेदुश्च—तद्धासां मरुतः पाप्मानं विमेथिरे । तथो एवैतस्य प्रजानां मरुतः पाप्मानं विमश्नते । तस्मात् पुरा यज्ञात् पुराहुतिभ्यो जुहोति ॥ २४

---

तदनूद्य स्तौति—तानि वा इति । 'प्रतिपुरुषं' पुरुषं पुरुषं प्रत्येकैकं करम्भपात्रं भवति । यावन्त इत्याद्युक्तार्थम् । पुरुषसङ्ख्यया पात्रनिर्माणस्य प्रयोजनमाह—तत् प्रतिपुरुषमिति । 'अस्य' यजमानस्य 'याः प्रजाः जाताः' 'ताः' प्रतिपुरुषं' प्रत्येकम् 'एकैकेन' पात्रेण 'वरुणपाशात्' 'प्रमुञ्चति' ऐकातिरिक्ततामेषामनूद्य स्तौति—एकेनेति । जनिष्यमाणानां प्रजानां वरुणपाशविमोचनार्थमेकमतिरिक्तं कर्त्तव्यमित्यर्थः ॥ २२ ॥

पुरोडाशादिरूपतां विहाय पात्ररूपेण निर्माणमुपपादयति—पात्राणीति । 'हि' यस्मात् 'पात्रेषु' कांस्यादिनिर्मितेषु 'अशनम्' अन्नम् 'अश्यते' भुज्यते, अतो मरुतां पयस्यारूपस्यान्नस्य भोजनीयपात्ररूपेणैवैतानि निर्मातव्यानीत्यर्थः । यवमयत्वमनूद्य स्तौति—यवमयानीति । 'जक्षुषीः' भक्षितवतीरित्यर्थः । अथ तेषां करम्भपात्राणां होमं विधत्ते—शूर्पेणेति । जुह्वादिपात्रं विहाय शूर्पेणैवैतानि जुहुयात् । तेन हि 'शूर्पेण' तुषनिर्वपनद्वारा 'अशनम्' अन्नं 'क्रियते' अतः शूर्पहवनं प्रशस्तम् । न चात्र शूर्पो हेत्वर्थः शङ्कनीयः; "हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम्, स्तुतिस्तु शब्दपूर्वत्वात्" (जै. सू. मी. १ । २ । २६—३० अधि० ३) इत्यधिकरणे स्तुतित्वेनान्वयस्य प्रतिपादितत्वात् 'पत्नी जुहोति' इति कर्तृविधिः । 'मिथुनादेव' इत्यादि तत्प्रशंसा । स्त्रिया अपि कर्तृत्वेन होमेऽन्वयात् मिथुनं सम्पद्यते । तथा च यजमानपत्नीरूपान्मिथुनादेवेत्ययमर्थः सिध्यति ॥ २३ ॥

स्रुवाघारहोमादेः पूर्वभावित्वं करम्भपात्रहोमस्य विधत्ते—पुरेति । यज्ञो वषट्कारप्रदानो यजतिचोदित आग्नेयः,

---

१—'एतदतिरिक्तताम्—' इ० पा० । २—करंभपात्राणि जुहोति शूर्पेण मूर्द्धनि कृत्वा दक्षिणेऽग्नेः प्रत्यङ्मुखी जायापती वा दक्षिणेनाहृत्य पूर्व्वेण वेदिमपरेण यथाम इति (का. श्रौ. सू. ५ । २१)। पत्नी शूर्पं मूर्द्धनि कृत्वाऽऽगच्छति । शूर्पं मस्तकादधोऽवतार्य शूर्पेणैव करंभपात्राणि जुहोति । न तु शीर्षाधिष्ठितशूर्पेण । जायापतीहोमपक्षे यजमानः पत्नीमन्वारभते । इति कर्काशयः । ३—'परावपबद्धाः'—इ. पा. । ४—"तिष्ठद्धोमा वषट्कारप्रदाना याज्यापुरोनुवाक्यावन्तो यजतयः—" (का.श्रौ.सू. अ. १ सू.२७)!

स वै दक्षिणेऽग्नौ जुहोति । यद् ग्रामे यदरण्यऽइति ग्रामे वा ह्यरण्ये वैनः क्रियते यत्सभायां यदिन्द्रिय ऽइति यत्सभायामिति यन्मानुष ऽइति तदाह यदिन्द्रिय ऽइति यद्देवत्रेति तदाह यदेनश्चकृमा व्वयमिदं तदवयजामहे स्वाहेति यत्किञ्च व्वयमेनश्चकृमेदं व्वयं तस्मात्सर्व्वस्मात्प्रमुच्यामह ऽइत्येवैतदाह ॥ २९ ॥

---

सा वै दक्षिणेऽग्नौ जुहोति–"यद्ग्रामे यदरण्ये" (वा. सं. ३।४५) इति । ग्रामे वा ह्यरण्ये वैनः क्रियते । 'यत्सभायां यदिन्द्रिये' (वा. सं. ३।४५) इति । यत्सभायामिति–यन्मानुष इति । तदाह–यदिन्द्रिय इति–यद्देवत्रेति तदाह । यदेनश्चकृमा वयमिदं तदवयजामहे स्वाहेति । यत् किञ्च वयमेनश्चकृम–इदं वयं तस्मात् सर्वस्मात्–प्रमुच्यामहे–इत्येवैतदाह ॥ २९ ॥

---

आहुतयः स्वाहाकारप्रदाना जुहोतिचोदिताः; एतत्पूर्वभावित्वमुपपादयति–अहुतादो वा इति । अहुतं होम-संस्काररहितम् अदन्ति भक्षयन्त्यहुतादः । मरुतां वैश्यजातित्वेन अहुतादानधर्मवत्त्वात् सर्वहोमात् पूर्वं तेभ्यो हविःप्रदानं युक्तमिति भावः । इतोऽपि करम्भपात्राणां पूर्वं होम इत्याह–यत्रेति । 'परिदीर्णाः' इत्यादिकं व्याख्यातम् (श. प. २ । ५ । २ । २ भा.) । 'यत्र' यदा खलु 'प्रजापतेः प्रजाः' 'वरुणगृहीताः' परि-दीर्णत्वादिरोगग्रस्ता अभवन्, 'तत्' तदा 'आसां' प्रजानां 'पाप्मानं' 'मरुतः' 'विमेथिरे' विलो-पयन्ति स्म, संश्लेषितवन्त इत्यर्थः । 'तथो एव' एवमेव 'एतस्य' यजमानस्य 'प्रजानां' वरुणपाशगृही-तानां 'पाप्मानं' पाशविमोचनात् प्रागेव मरुतः 'विमश्नते' संविश्लेषयन्ति । 'तस्माद्' वरुणपाशग्रहविमो-चनार्थाद् यज्ञात्, 'आहुतिभ्यः' च पूर्वमेव करम्भपात्राणां होमेन मरुतां शमनं युक्तमित्यर्थः ॥ २४ ॥

अग्निविशेषं विधत्ते–सा वा इति । 'सा' खलु पत्नी 'दक्षिणे' दक्षिणस्यां वेद्यामवस्थिते आहवनीये 'अग्नौ' 'जुहोति' । यद् ग्राम इति । तत्र करणमन्त्रः । तं पदशोऽनूद्य व्याचष्टे–यद् ग्रामे इत्यादिना । 'यत् एनः क्रियते'' 'तत्' ग्रामे वा अरण्ये वा भवति । "यत् सभायाम्" इति द्वितीयपादस्य कार्त्स्न्ये-नानुवादः । तत्र प्रथमार्द्धमनूद्य सभाशब्दं व्याचष्टे–यत्सभायामिति । यन्मनुष्यसङ्घैः एनः क्रियत इति योऽर्थः। तदाहेति । अयमेव यत्सभायामिति मन्त्रभागः प्रतिपादयतीत्यर्थः । यदिन्द्रिय इतीन्द्रियपदस्य देवसङ्घपरत्वमाह–यदिन्द्रिय इति । 'इन्द्रिये' इन्द्रियसम्बन्धिनि देवसमूहे निमित्तभूते सति यदेनः क्रियत इति मन्त्रभाग-स्यार्थः । देवत्रेति । 'देवत्रा' देवेषु "देवमनुष्य–(पा. सू. ५।४।५६)" इत्यादिना सप्तम्यर्थे त्राप्रत्ययः । तदुत्तरभागमनूद्य व्याचष्टे–यदेन इति । ग्रामादिस्थानेषु यत् पापं वयं 'चकृम' कृतवन्तः, 'तत्' पापम् 'इदम्' इदानीं करम्भपात्रलक्षणेन हविषा 'अवयजामहे' समर्पयामः 'स्वाहा'–इति निपातो दानार्थे, सुहुतमिदमस्त्विति मन्त्रभागस्यार्थः । तस्मात् सर्वस्मादित्यादि । कृतस्यैनसोऽवयजनं नाम 'तस्मात् सर्व-स्मात्' 'प्रमोचनं' विश्लेषः । ग्रामारण्यादिस्थानभेदेन बहुविधस्यैनसः सङ्ग्रहाय सर्वस्मादिति विशेषणम् ॥२९॥

---

१–"वषविष्टहोमाः स्वाहाकारप्रदाना जुहोतयः–" (का. श्रौ. अ. १ सू. २८) २–'विलोलयन्ति' इति पा० । ३–'शयनं' इति 'शंसनं' इति च. पा. ।

( ह्रा ) अथैन्द्रीं मरुत्वतीं जपति । यत्र वै प्रजापतेः प्रजानां मरुतः पाप्मानं विमेथिरे तद्धेक्षाञ्चक्रऽइमे ह मे प्रजा न विमथ्नीरन्निति ॥ २६ ॥

स एतामैन्द्रीं मरुत्वतीमजपत्क्षत्रं वाऽइन्द्रो विशो मरुतः क्षत्रं वै विशो निषेद्धा निषिद्धा असन्निति तस्मादैन्द्री ॥ २७ ॥

मो षू णः । ( ऽ ) इन्द्रात्र पृत्सु देवैरस्ति हि ष्माते शुष्मिन्नवयाः । महश्चिद्यस्य मीढुषो यव्या हविष्मतो मरुतो वन्दते गीरिति ॥ २८ ॥

---

अथैन्द्रीं मरुत्वतीं जपति । यत्र वै प्रजापतेः प्रजानां मरुतः पाप्मानं विमेथिरे–तद्धेक्षाञ्चक्रे–' इमे ह मे प्रजा न विमथ्नीरन् ' इति ॥ २६ ॥

स एतामैन्द्रीं मरुत्वतीमजपत् । क्षत्रं वा इन्द्रः, विशो मरुतः । क्षत्रं वै विशो निषेद्धा । ' निषिद्धा असन् ' इति तस्मादैन्द्री ॥ २७ ॥

"मो षू ण इन्द्रात्र पृत्सु देवैरस्ति हि ष्मात्ते शुष्मिन्नवयाः । महश्चिद्यस्य मीढुषो यव्या हविष्मतो मरुतो वन्दते गीः"–इति ॥ २८ ॥

---

यजमानस्य मन्त्रजपं विधत्ते–**अथेति** । ' अथ '–शब्दो होमानन्तर्ये, ' ऐन्द्रीम् ' इन्द्रदेवताकाम्, ' मरुत्वतीं ' मरुत्वच्छब्दयुक्ताम्, " मो षूण इन्द्र "–इत्यादिकामृचं यजमानो जपेदित्यर्थः । उक्तं हि सूत्रकृता–" मो षू ण इति यजमानो जपति "–( का. श्रौ. सू. ९ । १३२ ) इति मरुत्वदिन्द्रदेवताकामृचं प्रशंसति–**यत्रेति । मरुतः पाप्मानमित्यादि** । यदा खलु वरुणपाशेन बद्धाः प्रजाः, तदा तासां यद् बन्धनकारणं पापं मरुतः, ' विमेथिरे ' विलोपितवन्तः, ' तत् ' तदानीं प्रजापतिः खलु ' ईक्षाञ्चक्रे' पर्यालोचितवान्–' इमे ' खलु ' मरुतः ' मदीयाः ' प्रजाः ' न विमथ्नीरन् न विबाधेरन् इति ॥ २६ ॥

**स एतामिति** । ' सः ' प्रजापतिः पूर्वोक्तरूपं पर्यालोच्य ' एताम् ऐन्द्रीं मरुत्वतीम् ' ऋचम् ' अजपत् ' अत्रेन्द्रस्य प्रसङ्गमाह–क्षत्रं वा इति । ' इन्द्रः ' खलु क्षत्रियजातिः, तस्येन्द्रस्य ' विशो मरुतः', क्षत्रियो हि प्रजानां ' निषेद्धा ' निरोधकः, तेनेन्द्रेण ' निषिद्धाः ' निवारिता भवेयुः । ' इति ' अनेनाभिप्रायेणेन्द्रदेवताकाया ऋचो जप इत्यर्थः ॥ २७ ॥

तामृचं पठति–**मो ष ण** इति । अस्याश्चायमर्थः हे–'इन्द्र' ! 'अत्र ' एषु ' पृत्सु ' संग्रामनामैतत् । 'नः ' अस्मदीयाः प्रजाः 'मा उ सु' हिंसीः । हे 'शुष्मिन्' बलवन्निन्द्र ! ' देवैः ' मरुद्भिः सहितस्य ' ते ' तव 'अवयाः' अवपूर्वाद् यजेः " अवयाः–श्वेतवाः "–( पा. सू. ८ । २ । ६७ ) इति निपात्यते । अवयजनरूपकरम्भपात्रहोमः " अस्ति ' खलु ' महश्चित् ' महतोऽपि ' मीढुषः ' सेक्तुः यव्याः " सुपां सुलुक् "–( पा. सू. ७ । १ । ३९ ) इति भिस आडादेशः । यवमयैर्हविर्भिः ' हविष्मतः ' ' यस्य ' इन्द्रस्य ' मरुतः ' देवान्

---

१–महीधरस्तु–' अवयाः ' अनयुतो यागः ' अस्ति हि स्म ' विद्यते खलु । अवपूर्वस्य यजतेरेतद्रूपम् ' इत्याह । ' किंच गीरस्मदीया स्तुतिरूपा वाक् मरुतो भवतः सखीन् वन्दते नमस्करोति, " नमो मरुद्भ्यः " इत्येवमाकारायाः स्तुतेर्नमस्काररूपत्वात्–' इति व्याचख्यौ ।

( त्यु ) अथैनां वाचयति । ( त्यु ) अक्रन्कर्म कर्मकृतऽइत्यक्रन् हि कर्म कर्मकृतः सह वाचा मयोभुवेति सह हि वाचाऽक्रन्देवेभ्यः कर्म कृत्वेति देवेभ्यो हि कर्म कृत्वाऽस्तं प्रेत सचाभुव इत्यन्यतो ह्योढया सह भवन्ति तस्मादाह सचाभुव इत्यस्तं प्रेतेति जघनार्धो वाऽएष यज्ञस्य यत्पत्नी तामेतत्प्राचीं यज्ञं प्रासीषदद्गृहा वाऽअस्तं गृहाः प्रतिष्ठा तद्गृहेष्वेवैना-मेतत्प्रतिष्ठायां प्रतिष्ठापयति ॥ २९ ॥

---

अथैनां वाचयति-"अक्रन् कर्म कर्मकृतः"-( वा० ३ । ४७ । ) इति । अक्रन् हि कर्म कर्म्मकृतः । " सह वाचा मयोभुवा "-( वा० ३ । ४७ ) इति । सह हि वाचाऽक्रन् । " देवेभ्यः कर्म कृत्वा "-( वा ३-४७ ) इति । देवेभ्यो हि कर्म कृत्वा । " अस्तं प्रेत सचाभुवः " ( वा० ३ । ४७ ) इति । अन्यतो ह्योढया सह भवन्ति । तस्मादाह-सचाभुव इति । अस्तं प्रेतेति । जघनार्द्धो वा एष यज्ञस्य-यत्पत्नी । तामेतत् प्राचीं यज्ञं प्रासीषदत् । गृहा वा अस्तम्, गृहाः प्रतिष्ठा । तद्गृहेष्वेवैनामेतत् प्रतिष्ठायां प्रतिष्ठापयति ॥ २९ ॥

---

अनुचरान् ' गीः ' स्तुतिरूपा वाक् ' वन्दते ' स्तौति " वदि अभिवादनस्तुत्योः "-इति धातुः ( धा. पा. भ्वा. प. ११ ) ' इति ' इत्यस्य पूर्वत्रान्वयः ॥ २८ ॥

पत्न्या वाचनं विधत्ते--**अथैनामिति** । तं वाचनीयं मन्त्रं पदशोऽनूद्य व्याचष्टे--**अक्रन् कर्मेति** । कर्म कुर्वन्तीति ' कर्मकृतः ' ये यजमानस्यामात्याः, ते हि इदानीं करम्भपात्रहोमरूपं ' कर्म ' ' अक्रन् ' अकार्षुः अतोऽक्रन् कर्म्मेति मन्त्रभागवाचनं युक्तम् । द्वितीयपादस्यार्थः प्रसिद्ध इत्याह-**सह हीति** । ' मयोभुवः ' मयसः सुखस्य भावयित्र्या मन्त्ररूपया वाचा सह एतत् कर्म ' अक्रन् ' अकार्षुः । **देवेभ्य इत्यादि** । हे यजमानस्यामात्या ऋत्विजश्च ! यूयं वरुणप्रघासाख्यकरम्भपात्रहोमरूपं च कर्म देवार्थं ' कृत्वा ' ' अस्तं ' गृहनामैतत्; यजमानस्य गृहान् ' सचाभुवः ' पत्न्या सह भवन्तः, सह वर्त्तमानाः ' प्रेत ' आगच्छतेति मन्त्रभागस्यार्थः । सचाभुव इत्येतद् व्याचष्टे--**अन्यत इति** । अन्यस्माद् देशाद् पत्न्यासन-लक्षणात् ' ऊढया ' आहवनीयसमीपं प्रापितया पत्न्या सह खल्विदानीं वर्तन्ते, तस्मात् सचाभुव इत्येतद् यथार्थम् । अस्तं प्रेतेत्यस्याभिप्रायमाह-**जघनार्द्धो वा इति** । तामेतत् प्राचीमिति यज्ञस्यापरभागेऽवस्थितां 'ताम्' ' एतत् ' एतर्हि ' प्राचीं ' प्राग् गच्छन्तीम् पूर्वभागसम्बन्धिनीं ' यज्ञं ' 'प्रासीषदत्' प्रापीपत् प्रतिप्रस्थाता । सदेर्ण्यन्तात् लुङि चङि रूपम् । **गृहा वा अस्तमिति** । अस्यते क्षिप्यते सर्वं वस्तुजातमस्मिन्निति 'अस्तं गृहाः' " क्तोऽधिकरणे च "-इति ( पा. सू. ३ । ४ । ७६ ) क्तप्रत्ययः । एतत् ' एतेन ' अस्तं प्रेत '-इति मन्त्रभागवचनेन गृहरूपायामेव ' प्रतिष्ठायां ' पुनः ' एनां ' स्थापितवान् भवति[१] ॥ २९ ॥

---

१-अक्रन्कर्मेत्येनां वाचयति प्रतिनयत् ( कर्कः ) । का. श्रौ. सू. । ५ । १२३ । प्रतिशब्दप्रयोगात्तेनैव मार्गेण प्रतिनयनमिति ।

प्रतिपराणीयोदैति प्रतिप्रस्थाता । सुम्मृजन्त्यग्निᳬंसुम्मृष्टेऽग्नौ ताऽउभा-वेवोत्तरावाघारावाघारयतोऽथाध्वर्युरेवाश्राव्य होतारं प्रवृणीते प्रवृतो होतो-त्तरस्यै वेदेर्होतृषदन ऽउपविशत्युपविश्य प्रसौति ता ऽउभावेव प्रसूतौ स्रुचऽ आदायातिक्रामतोऽतिक्रम्याश्राव्याध्वर्युरेवाह समिधो यजेति यज यजेति चतुर्थे चतुर्थे प्रयाजे समानयमानौ नवभिः प्रयाजैश्चरतः ॥ ३० ॥

(तोऽ) अथाध्वर्युरेवाहाग्नयेऽनुब्रूहीति । (त्या) आग्नेयमाज्यभागं ताऽउभावेव

---

प्रतिपराणीयोदैति प्रतिप्रस्थाता । सम्मृजन्त्यग्निम् । सम्मृष्टेऽग्नौ ता उभावेवोत्तरावाघारावाघारयतः । अथाध्वर्युरेवाश्राव्य होतारं प्रवृणीते । प्रवृतो होतोत्तरस्यै वेदेर्होतृषदन उपविशति । उपविश्य प्रसौति । ता उभावेव प्रसूतौ स्रुच आदायातिक्रामतः । अतिक्रम्याश्राव्याध्वर्युरेवाह–समिधो यज इति । 'यज यज' इति चतुर्थे चतुर्थे प्रयाजे समानयमानौ नवभिः प्रयाजैश्चरतः ॥ ३० ॥

अथाध्वर्युरेवाह–'अग्नयेऽनुब्रूहि' इति–आग्नेयमाज्यभागम् । ता उभावेव चतुराज्यस्यावदा-

---

अक्रन् कर्मेति मन्त्रवाचनानन्तरं कर्त्तव्यमुपदिशति–**प्रतिपराणीयोदैतीति**। पत्नीं प्रतिनिवर्त्य स्वस्थानं प्रापयितुं 'प्रतिप्रस्थाता' 'उदैति' उद्गच्छेत् । इत्थम् "अग्निमग्नीत्"–इति प्रैषसम्मार्जनयोर्मध्ये कर्त्तव्य-मुक्त्वा, तत्सम्मार्जनप्रभृति प्रकृतिवदेवानुष्ठेयमिति दर्शयति–**सम्मृजन्तीत्यादिना** । एकस्मिन्नप्याग्नीध्रे पूजार्थं बहुवचनम् । एवमाहवनीये 'अग्नौ' 'सम्मृष्टे' 'उभावेव' एवकारोऽप्यर्थे । उभावपि अध्वर्युप्रतिप्रस्थातारौ 'उत्तरौ आघारौ आघारयतः' दीर्घधारया जुहुतः हविर्वेद्यग्नीनां भेदः प्रतिप्रस्थातुरपि दक्षिणेऽग्नौ आघारा-दिकं सर्वं प्रयोगजातमध्वर्युवदनुष्ठेयम् । अत एव तैत्तिरीयकम्–"यदेवाध्वर्युः करोति तत् प्रतिप्रस्थाता करोति" इति । **अध्वर्युरेवाश्रावयेदित्यादि** । प्रवरप्रयाजाज्यभागादिसम्प्रैषस्य प्रेष्यस्य होतुरेकत्वात् काल-भेदाभावाच्चाध्वर्युणैव कृतः प्रैष उभयत्रापि तन्त्रेणोपकरोतीत्येवकाराभिप्रायः । प्रवरादीनां चोदकप्राप्तानामनु-वादः । तेषां स्वरूपं प्रथमकाण्डे ( श. प. १।५।१ ) व्याख्यातमिति नेह पठ्यते । प्रतिप्रस्थातुरपि कर्त्तव्यं प्रतिपादयति–**उत्तरस्यै वेदेरित्यादि** । होता सीदत्यस्मिन्निति होतृषदनम् । उत्तरस्या वेद्याः सम्बन्धिनि 'होतृष-दने' स्थाने; न दक्षिणस्या इत्यर्थः । 'प्रसौति' अध्वर्युप्रतिप्रस्थातारौ; प्रयाजान् कर्तुं स्रुगादाने प्रेरयति "षु प्रसवैश्वर्ययोः"–( धा. पा. अ. प. ३१ ) इति धातुः । 'प्रसूतौ' प्रेरितौ, अनुज्ञातावित्यर्थः । **स्रुच आदायेति** । अध्वर्युप्रतिप्रस्थात्रोरुभयोरपि प्रत्येकं जुह्वूपभृतौ स्तः, तदभिप्रायेण स्रुच इति बहुवचनम् । "समिधो यज"–इति प्रथमप्रयाजसम्प्रैषः । द्वितीयादिषु "यज" इत्येव सम्प्रैषः । वीप्सा द्वितीयादिषु सर्वत्र सम्बन्धार्था । "चतुर्थे चतुर्थे" इति वीप्सा कर्तृद्वित्वापेक्षया । उभावपि 'चतुर्थे चतुर्थे प्रयाजे' अपि हुतमाज्यं जुह्वां 'समानयमानौ' प्रतिनयन्तौ 'नवभिः' नवसङ्ख्याकैः 'प्रयाजैः चरतः' ॥ ३० ॥

आज्यभागयोरपि प्रतिप्रस्थातृसाहित्यं विधातुमाह–**अथाध्वर्युरिति** । **उभावेवेति** । उभावपि अध्वर्यु-

---

१–आगते सम्मार्जनाद्याज्यभागाभ्याम् । का. श्रौ. सू. ५ । १२४ ॥ २–स्रुक्पाणिरास्ते प्रतिप्रस्थाता । का. श्रौ. सू. ५ । १२५ । ३–घृतवतीमित्युक्ते स्रुचावादायातिक्रम्याश्राव्याह समिधो यजेति पंचप्रयाजान्त्समिद्वतमे । यजयजेति शेषम् । का. श्रौ. सू. २ । ३५ । ३६ । ४–नवप्रयाजं नवानुयाजं । वैश्वदेवं पर्व । वरुणप्रघासा महाहविश्च । का. श्रौ. सू. ५ । ३२ । ३३ ।

चतुराज्यस्यावदायातिक्रामतोऽतिक्रम्याश्राव्याध्वर्युरेवाहाग्निं यजेति ताऽउभावेव वषट्कृते जुहुतः ॥ ३१ ॥

( तोऽ ) अथाध्वर्युरेवाह सोमायानुब्रूहीति । सौम्यमाज्यभागं ताऽउभावेव चतुराज्यस्यावदायातिक्रामतोऽतिक्रम्याश्राव्याध्वर्युरेवाह सोमं यजेति ताऽउभावेव वषट्कृते जुहुतः ॥ ३२ ॥

( स्त ) तद्यत्किञ्च वाचा कर्तव्यम् । ( म ) अध्वर्युरेव तत्करोति न प्रतिप्रस्थाता तद्यदध्वर्युरेवाश्रावयतीहैव यत्र वषट् क्रियते ॥ ३३ ॥

कृतानुकर ऽएव प्रतिप्रस्थाता । क्षत्रं वै वरुणो विशो मरुतस्तत्क्षत्रायैवैतद्विशं कृतानुकरामनुवर्त्मानं करोति प्रत्युद्यामिनीꣳ ह क्षत्राय विशं कुर्याद्यदपि प्रतिप्रस्थाताऽऽश्रावयेत्तस्मान्न प्रतिप्रस्थाताऽऽश्रावयति॥३४॥

---

यातिक्रामतः । अतिक्रम्याश्राव्याध्वर्युरेवाह–' अग्निं यज ' इति । ता उभावेव वषट्कृते जुहुतः ॥ ३१ ॥

अथाध्वर्युरेवाह–' सोमायानुब्रूहि ' इति–सौम्यमाज्यभागम् । ता उभावेव चतुराज्यस्यावदायातिक्रामतः । अतिक्रम्याश्राव्याध्वर्युरेवाह–' सोमं यज ' इति । ता उभावेव वषट्कृते जुहुतः॥३२॥

तद्यत् किञ्च वाचा कर्त्तव्यम्–अध्वर्युरेव तत् करोति, न प्रतिप्रस्थाता । तद्यदध्वर्युरेवाश्रावयति इहैव यत्र वषट् क्रियते ॥ ३३ ॥

कृतानुकर एव प्रतिप्रस्थाता । क्षत्रं वै वरुणो, विशो मरुतः। तत् क्षत्रायैवैतद्विशं कृतानुकरामनुवर्त्मानं करोति प्रत्युद्यामिनीं ह क्षत्राय विशं कुर्यात् । यदपि प्रतिप्रस्थाताऽऽश्रावयेत् । तस्मान्न प्रतिप्रस्थाताऽऽश्रावयति ॥ ३४ ॥

---

प्रतिप्रस्थातारौ ध्रौवस्य 'आज्यस्य ' सकाशात् ' चतुरवदाय ' जुह्वां चतुर्गृहीत्वेत्यर्थः । वषट्कृते जुहुत इति । एकस्मिन्नेव वषट्कारे उभावपि स्वस्वाहवनीये जुहुत इत्यर्थः ॥ ३१ ॥

**अथाध्वर्युरेवाह सोमायेत्यादि** । एतेन द्वितीयाज्यभागस्यानुष्ठानप्रकारः प्रतिपादितः ॥ ३२ ॥

सामिधेनीप्रैषादौ 'आश्राव्य' आश्रावणे चाध्वर्युरेवेति तत्र तत्र यत् प्रसङ्गत उक्तम्, तदिदानीं विधत्ते–**तद्यदिति** । 'यत्' किमपि आश्रावणादिकं 'वाचा कर्त्तव्यं' वागिन्द्रियसाध्यमिति, 'तत्' 'अध्वर्युरेव' कुर्यात् । 'प्रतिप्रस्थाता' तूष्णीं क्रियमाणमनुतिष्ठेत्, आश्रावणादिकं वाचा न प्रयुञ्जीत । इमामेव श्रुतिमभिप्रेत्य सूत्रितमापस्तम्बेन–"यत् किञ्च वाचा कर्माणि अध्वर्युरेव तत् कुर्यात्" ( आप. श्रौ. सू.८।९ । १७ )इति । अस्य नियमस्य प्रयोजनमाह–**तद्यदिति** ।'यत्र' उत्तरस्यां वेद्यां 'वषट् क्रियते' होत्रा वषट्कारः प्रयुज्यते । 'इहैव' अस्मिन्नेव स्थाने 'अध्वर्युरेक एव आश्रावयति' ॥ ३३ ॥

**कृतानुकर एवेति** । ' प्रतिप्रस्थाता ' अध्वर्युणा प्रथमं कृतस्य केवलमनुकर्मैव भवति न त्वासां पृथगा-

---

१–प्रणीतापत्नीसन्नहनाग्निमन्थनाश्रुतप्रत्याश्रुतप्रैषयजमानवाचनहोतृषदनवरणप्राशित्रांगुलिपर्व्वांजनावांतरेडाभागापराग्न्यवभृथान्न प्रतिप्रस्थाता । । का. श्रौ. सू.५ । ११० । न करोतीत्यर्थः ।

पाणावेव प्रतिप्रस्थाता । स्रुचौ कृत्वोपास्तेऽथाध्वर्युरेवैतैर्हविर्भिः प्रचरन्त्याग्नेयेनाष्टाकपालेन पुरोडाशेन सौम्येन चरुणा सावित्रेण द्वादशकपालेन वाऽष्टाकपालेन वा पुरोडाशेन सारस्वतेन चरुणा पौष्णेन चरुणैन्द्राग्नेन द्वादशकपालेन पुरोडाशेन ॥ ३५ ॥

( ना ) अथैताभ्यां पयस्याभ्यां प्रचरिष्यन्तौ विपरिहरतः । स यो मेषो भवति मारुत्यां तं वारुण्यामवदधाति या मेषी भवति वारुण्यां तां मारुत्यामवदधाति तद्यदेवं विपरिहरतः क्षत्रं वै वरुणो वीर्यं पुमान्वीर्यमेवैतत्क्षत्रे धत्तोऽवीर्या वै स्त्री विशो मरुतस्तदवीर्यामेवैतद्विशं कुरुतस्तस्मादेवं विपरिहरतः ॥ ३६ ॥

---

पाणावेव प्रतिप्रस्थाता स्रुचौ कृत्वोपास्ते । अथाध्वर्युरेवैतैर्हविर्भिः प्रचरति-आग्नेयेनाष्टाकपालेन पुरोडाशेन, सौम्येन चरुणा, सावित्रेण द्वादशकपालेन वाऽष्टाकपालेन वा पुरोडाशेन, सारस्वतेन चरुणा, पौष्णेन चरुणा, ऐन्द्राग्नेन द्वादशकपालेन पुरोडाशेन ॥ ३५ ॥

अथैताभ्यां पयस्याभ्यां प्रचरिष्यन्तौ विपरिहरतः । स यो मेषो भवति मारुत्यां-तं वारुण्यामवदधाति । या मेषी भवति-वारुण्यां-तां मारुत्यामवदधाति । तद् यदेवं विपरिहरतः । क्षत्रं वै वरुणो वीर्यं पुमान्, वीर्यमेवैतत् क्षत्रे धत्तः । अवीर्या वै स्त्री, विशो मरुतः, तदवीर्यामेवैतद्विशं कुरुतः । तस्मादेवं विपरिहरतः ॥ ३६ ॥

---

श्रावणं कुर्यात् । तथा क्षत्राय क्षत्रियाय 'विशं' वैश्यजातिं 'कृतानुकरां' कृतानुकुर्वाणाम् 'अनुवर्त्मानम्' अनुगमनशीलां 'करोति' । विपक्षे बाधमाह-प्रत्युद्यामिनीमिति । 'यद्' यदि हि अध्वर्युवत् प्रतिप्रस्थातापि पृथगाश्रावणं कुर्यात्, तदा 'क्षत्राय' वैश्यजातिं प्रत्युद्यामिनीं' प्रत्युद्यमनशीलां 'कुर्यात्' । तस्मादिति, उक्तार्थानुगमनम् ॥ ३४ ॥

पाणावेवेति । एवमुभौ अध्वर्युप्रतिप्रस्थातारौ आज्यभागाभ्यां प्रचर्य, 'प्रतिप्रस्थाता' हस्ते एव जुहूपभृतौ धारयन् 'उपास्ते' उपविशति, आ पयस्याप्रचरणकालात् । 'अध्वर्युः' तु 'एतैः' आग्नेयादिभिः स्ववेद्यामासादितैः 'हविर्भिः' 'प्रचरति' । तानि हवींषि परिगणयति-आग्नेयेनेत्यादिना ॥ ३५ ॥

अथैताभ्यामित्यादि । एवमैन्द्राग्नपर्यन्तैः षड्भिर्हविर्भिरिष्ट्वा 'अथैताभ्यां' वारुणीमारुतीभ्यां 'पयस्याभ्यां' 'प्रचरिष्यन्तौ' यज्ञं तावध्वर्युप्रतिप्रस्थातारौ मेषमेष्यौ 'विपरिहरतः' । तदेव विपरिहरणं दर्शयति-स य इति । "सः उत्तरस्यामेव पयस्यायां मेषीम्"-( श. ५. २ । ९ । १७ । ) इत्यादिना विधानात् 'वारुण्यां मेषी' स्यात् 'मारुत्यां मेषः' । तत्र यो मारुत्यां मेषो भवति, तं तत आहृत्य वारुण्यां स्थापयेत् ।

---

१-कृतानुकरोऽन्यत्र दक्षिणस्याम् । का. श्रौ. सू. ५ । १११ । २-स्रुक्पाणिरास्ते प्रतिप्रस्थाता । का. श्रौ. सू. ५ । १२५ । ३-हविर्भिश्चरति । अध्वर्युः । का. श्रौ. सू. ५ । १२६ ।

( तृ०८ ) अथाध्वर्युरेवाह वरुणायानुब्रूहीति । स ऽउपस्तृणीतऽआज्यमथास्यै वारुण्यै पयस्यायै द्विरवद्यति सोऽन्यतरेणावदानेन सह मेषमवदधात्यथोपरिष्टादाज्यस्याभिघारयति प्रत्यनक्त्यवदाने ऽअतिक्रामत्यतिक्रम्याश्राव्याह वरुणं यजेति वषट्कृते जुहोति ॥ ३७ ॥

सव्ये पाणावध्वर्युः स्रुचौ कृत्वा । दक्षिणेन प्रतिप्रस्थातुर्वासोऽन्वारभ्याह मरुद्भ्योऽनुब्रूहीत्युपस्तृणीतऽआज्यं प्रतिप्रस्थाताऽथास्यै मारुत्यै पयस्यायै द्विरवद्यति सोऽन्यतरेणावदानेन सह मेषीमवदधात्यथोपरिष्टादाज्यस्याभिघारयति प्रत्यनक्त्यवदाने ऽअतिक्रामत्यथाध्वर्युरेवाश्राव्याह मरुतो यजेति वषट्कृते जुहोति ॥ ३८ ॥

---

अथाध्वर्युरेवाह–'वरुणायानुब्रूहि' इति । स उपस्तृणीत आज्यम् । अथास्यै वारुण्यै पयस्यायै द्विरवद्यति । सोऽन्यतरेणावदानेन सह मेषमवदधाति । अथोपरिष्टादाज्यस्याभिघारयति, प्रत्यनक्त्यवदाने, अतिक्रामति । अतिक्रम्याश्राव्याह 'वरुणं यज' इति, वषट्कृते जुहोति ॥ ३७ ॥

सव्ये पाणावध्वर्युः स्रुचौ कृत्वा दक्षिणेन प्रतिप्रस्थातुर्वासोऽन्वारभ्याह–'मरुद्भ्योऽनुब्रूहि' इति । उपस्तृणीत आज्यं प्रतिप्रस्थाता । अथास्यै मारुत्यै पयस्यायै द्विरवद्यति । सोऽन्यतरेणावदानेन सह मेषीमवदधाति । अथोपरिष्टादाज्यस्याभिघारयति, प्रत्यनक्त्यवदाने, अतिक्रामति । अथाध्वर्युरेवाश्राव्याह–'मरुतो यज' इति, वषट्कृते जुहोति ॥ ३८ ॥

---

या च मेषी वारुण्यां, तां तत आहृत्य मारुत्यां स्थापयेत् । तदेतद् विपरिहरणमनूद्य स्तौति–तद्यदेवमिति । मेषो हि पुंरूपत्वाद् वीर्यरूपः; वरुणश्च क्षत्रियजातिः; तस्मिन् क्षत्रियमेषस्य निधानात् 'वीर्यमेव एतत् धत्तः' 'अवीर्या' वीर्यं सामर्थ्यम्, तद्रहिता खलु 'स्त्री;' मरुतश्च वैश्यजातिः । मारुते हविषि स्त्रीपशोर्मेष्या निधानात् तां वैश्यजातिम् 'अवीर्यां' वीर्यरहितामेव कुरुतः ॥ ३६ ॥

विपरिहरणानन्तरं वारुण्याः पयस्यायाः प्रचरणं विधत्ते–अथाध्वर्युरिति । वरुणायानुब्रूहीति । होतारं प्रत्यनुवाक्यार्थं सम्प्रैषमुक्त्वा, जुह्वामुपस्तीर्य, 'अस्यै वारुण्यै' षष्ठ्यर्थे चतुर्थी, वारुण्याः पयस्यायाः 'द्विरवद्यति' । 'सः' अवद्यन्नध्वर्युः 'अन्यतरेण' पूर्वेण उत्तरेण वा 'अवदानेन' 'सह' कृत्स्नं 'मेषं' स्रुचि 'अवदधाति' पुनरभिघार्य अवत्तप्रदेशे हविःप्रत्यञ्जनं कुर्यात् । स ततोऽतिक्रमणादीनि प्रकृतिवत् कुर्यादित्यर्थः ॥ ३७ ॥

प्रतिप्रस्थातुर्मारुत्याः पयस्यायाः प्रचरणे विशेषमाह–सव्ये पाणाविति । स्वकीये 'स्रुचौ' जुहूपभृतौ अध्वर्युः आत्मीये 'सव्ये पाणौ' कृत्वा, 'दक्षिणेन प्रतिप्रस्थातुः' 'वासोऽन्वारभ्य,' 'मरुद्भ्योऽनुब्रूहि'–इति होतारं प्रतिप्रेष्य, उपस्तरणादिकं प्रतिप्रस्थाता कुर्यात् । सोऽन्यतरेणेति । सः प्रतिप्रस्थाता पूर्वेणोत्तरेण

---

१–पयस्याप्रचरणकाले मेषौ व्यतिहरतः । का. श्रौ. सू. ५ । १२७ । २–अन्यतरेणावदानेन सह मेषम् । का. श्रौ. सू. ५।१२८ ।

( त्यु ) अथाध्वर्युरेव कायेन । ( नै ) एककपालेन पुरोडाशेन प्रचरति काये-नैककपालेन पुरोडाशेन प्रचर्याध्वर्युरेवाहाग्नये स्विष्टकृतेऽनुब्रूहीति स सर्वे-षामेव हविषामध्वर्युः सकृत्सकृदवद्यत्यथैतस्या एव पयस्यायै प्रति-प्रस्थाता सकृदवद्यत्यथोपरिष्टाद् द्विराज्यस्याभिघारयतस्ताऽउभावेवाति-क्रामतोऽतिक्रम्याश्राव्याध्वर्युरेवाहाग्निॅं स्विष्टकृतं यजेति ताऽउभावेव वषट्कृते जुहुतः ॥ ३९ ॥

( तोऽ ) अथाध्वर्युरेव प्राशित्रमवद्यति । ( त्री ) इडाॅं समवदाय प्रति-प्रस्थात्रेऽतिप्रजिहीते तत्रापि प्रतिप्रस्थाता मारुत्यै पयस्यायै द्विरभ्यवद्य-त्यथोपरिष्टाद् द्विराज्यस्याभिघारयत्युपहूय मार्जयन्ते ॥ ४० ॥

---

अथाध्वर्युरेव कायेनैककपालेन पुरोडाशेन प्रचरति । कायेनैककपालेन पुरोडाशेन प्रचर्याध्वर्यु-रेवाह—' अग्नये स्विष्टकृतेऽनुब्रूहि ' इति । स सर्वेषामेव हविषामध्वर्युः सकृत्सकृदवद्यति । अथैतस्या एव पयस्यायै प्रतिप्रस्थाता सकृदवद्यति । अथोपरिष्टाद् द्विराज्यस्याभिघारयतः । ता उभावेवाति-क्रामतः । अतिक्रम्याश्राव्याध्वर्युरेवाह—'अग्निं स्विष्टकृतं यज' इति । ता उभावेव वषट्कृते जुहुतः ३९

अथाध्वर्युरेव प्राशित्रमवद्यति । इडां समवदाय प्रतिप्रस्थात्रेऽतिप्रजिहीते । तत्रापि प्रतिप्रस्थाता मारुत्यै पयस्यायै द्विरभ्यवद्यति । अथोपरिष्टाद् द्विराज्यस्याऽभिघारयति । उपहूय मार्जयन्ते ॥४०॥

---

वाऽवदानेन सह कृत्स्नं मेषं स्रुचि अवदध्यात् । ततो मेषीं वारुण्या प्रत्यञ्जनेनेति । ततः प्रतिप्रस्थाता वेदिमति-क्रामति । अनन्तरमध्वर्युरेव तदीयं वासोऽन्वारभ्य " मरुतो यज " इति ब्रूयात् । होत्रायाज्यान्ते वषट्कृते सति केवलं प्रतिप्रस्थाता दक्षिणे आहवनीये हविर्जुहोति, तमनु किञ्चिद् वाचाप्याहरेत् । एतत् सर्वं सङ्गृह्य कात्या-यनेन सूत्रितम्—" पयस्याप्रचरणकाले मेषौ व्यतिहरतः, अन्यतरेणावदानेन सहमेषं,सव्येन स्रुचौ गृहीत्वा प्रति-प्रस्थातुर्वासो दक्षिणेन मरुद्भ्योऽनुवाचयति, वारुणीवदवदानम्—इति ( का. श्रौ. सू.५ ।१२७–१३० ) ॥३८॥

कायेन हविषा प्रचरणं विधत्ते—अथेति । प्रधानयागानन्तरमनुष्ठेयं स्विष्टकृदादिप्रयोगजातं सर्वमनुक्रामति—अध्वर्युरेवाहाग्नये स्विष्टकृत इत्यादिना । " अनुब्रूहि–" इति । स्विष्टकृद्यागस्य पुरोऽनुवाक्याप्रैषः । अनुष्ठितं प्रधानयागं न्यूनातिरेकदोषपरिहारेण स्विष्टं शोभनं यज्ञं करोतीति स्विष्टकृत् ॥

स सर्वेषामेवेति । आग्नेयादि–कायान्तानाम्[२] । सकृत्सकृदिति । प्रधानयागस्य । द्विरवदानप्रसक्तिं वारयति—एतस्या एवेति । ' एतस्याः ' मारुत्याः पयस्यायाः ' एव ' हविषः सकाशात् स्विष्टकृदर्थं ' सकृत् ' एव अवद्येत्, नान्यस्मादित्येवकारार्थः । चतुरवदानसम्पत्तये अभिघारणस्य द्वित्वं विधत्ते—अथोपरिष्टादिति । 'द्विः' क्रियाभ्यावृत्तिगणनेऽर्थे, "द्वित्रिचतुर्भ्यः सुच्" ( पा. सू. ५ । ४ । ८१ )–इति द्विशब्दात् सुच् ॥३९॥

अथाध्वर्युरेव प्राशित्रमिति । प्रतिप्रस्थातुः प्राशित्रावदानं नास्तीत्येवकारार्थः । तस्य पयस्यारूपहविषः सान्नाय्यविकृतित्वात् प्रकृतौ सान्नाय्यात् प्राशित्रावदानस्यादर्शनादित्यभिप्रायः । इडां समवदायेति । सर्वेभ्यो

---

१–हविर्भिश्चरेत उभौ स्विष्टकृत्प्रभृति । का. श्रौ. सू । ५ । १३१ । २–कण्डिकासु ३५–३९ द्रष्टव्यम् ।

( न्तेऽथा ) अथाध्वर्युरेवाह ब्रह्मन्प्रस्थास्यामि । समिधमाधायाग्निमग्नीत्संमृड्ढीति स स्रुचोरेवाध्वर्युः पृषदाज्यं व्यानयतेऽथ यदि प्रतिप्रस्थातुः पृषदाज्यं भवति तत्स द्वेधा व्यानयत ऽउतो तत्र पृषदाज्यं न भवति स यदेवोपभृत्याज्यं तत्स द्वेधा व्यानयते ताऽउभावेवातिक्रामतोऽतिक्रम्याश्राव्याध्वर्युरेवाह देवान्यजेति यजयजेति चतुर्थे चतुर्थेऽनुयाजे समानयमानौ नवभिरनुयाजैश्चरतस्तद्यन्नवप्रयाजं भवति नवानुयाजं तदुभयत ऽएवैतद्वरुणपाशात्प्रजाः प्रमुञ्चतीतश्चोर्ध्वा इतश्चावाचीस्तस्मान्नवप्रयाजं भवति नवानुयाजम् ॥ ४१ ॥

---

अथाध्वर्युरेवाह–' ब्रह्मन् प्रस्थास्यामि ','समिधमाधाय अग्निमग्नीत् संमृड्ढि ' इति । स स्रुचोरेवाध्वर्युः पृषदाज्यं व्यानयते । अथ यदि प्रतिप्रस्थातुः पृषदाज्यं भवति–तत् स द्वेधा व्यानयते । उतो तत्र पृषदाज्यं न भवति–स यदेवोपभृत्याज्यं तत् स द्वेधा व्यानयते। ता उभावेवातिक्रामतः । अतिक्रम्याश्राव्याध्वर्युरेवाह–' देवान्यज ' इति । ' यज–यज ' इति चतुर्थे-चतुर्थेऽनुयाजे समानयमानौ नवभिरनुयाजैश्चरतः । तद्यन्नवप्रयाजं भवति, नवानुयाजम् । तदुभयत एवैतद्वरुणपाशात् प्रजाः प्रमुञ्चति–इतश्चोर्ध्वाः, इतश्चावाचीः । तस्मान्नवप्रयाजं भवति, नवानुयाजम् ॥ ४१ ॥

---

हविर्भ्यः सम्भूय एकस्मिन्निडापात्रे अवद्यादित्यर्थः । **अतिप्राजिहीत** इति । उत्तरां वेदिमतिक्रमय्य तदिडापात्रं अगमयेदित्यर्थः । " ओहाङ् गतौ " ( धा. पा. जु. प. ७ ) इत्यस्मात् अन्तर्णीतण्यर्थाल्लिटि रूपम्,– " भृञामित् "–( पा. सू. ७ । ४ । ७६ ) इति अभ्यासस्येत्वम् । **मारुत्यै पयस्याया** इति, षष्ठ्यर्थे चतुर्थी । **द्विराज्यस्याभिघारयतीति** । अध्वर्युरेव, न प्रतिप्रस्थाता ॥ ४० ॥

**अथाध्वर्युरेवाह ब्रह्मन् प्रस्थास्यामी**त्यादि । इडोपह्वानादिकं प्रकृतिवदेव कृत्वा , अनुयाजार्थमभ्यनुज्ञापकमिमं प्रैषमप्यध्वर्युरेव ब्रूयात् । यत् किञ्च वाचा कर्त्तव्यमध्वर्युरेव तत् करोति "–( श. प. २।५।२।३३ ) इति प्राक् प्रतिपादितस्यैवायं प्रपञ्चः, प्रैषार्थः प्रकृतावेव वर्णितः । **स स्रुचोरेवे**त्यादि । ' सः ' अध्वर्युः ' स्रुचोः ' जुहूपभृतोः ' एव ' ' पृषदाज्यं ' दधिमिश्रमाज्यं ' व्यानयते ' विविधमासिञ्चति । पृषदाज्यधानीगतं पृषदाज्यं जुह्वामर्द्धमासिच्य, शिष्टमाज्यमुपभृति आनयेदित्यर्थः । प्रतिप्रस्थातुः पक्षद्वयमाह–**अथ यदी**ति । आज्यग्रहणकाले यदि प्रतिप्रस्थाता पृषदाज्यं गृह्णीयात् तदा तत् पृषदाज्यम्, इदानीं स प्रतिप्रस्थाता अध्वर्युवत् जुहूपभृतोः द्विधा व्यासिञ्चेत् । उतो इति पक्षान्तरद्योतने । यदि तु तत्र ग्रहणसमये पृषदाज्यं न गृहीतं भवति, तदा स प्रतिप्रस्थाता उपभृति स्थितं यदेवाज्यं विद्यते, तस्यौपभृतस्याज्यस्य अर्द्धं प्रथमं जुह्वामासिच्य, शिष्टमाज्यं चतुर्थे प्रयाजे आसिञ्चेदित्यर्थः ॥

आसेचनानन्तरं कर्त्तव्यमतिक्रमणादिकमुपदिशति–**ता उभावेवे**त्यादिना । ' देवान् यज '–इति प्रथमोऽ-

---

१–इडामवदाय प्रतिप्रस्थात्रे प्रयच्छति । का. श्रौ. सू. ५ । १३२ । तत्र प्रतिप्रस्थाता मारुत्याः । का. श्रौ. सू. ५ । ३३ । द्विरवद्यतीत्यर्थः । २–प्रतिप्रस्थाता च । का. श्रौ. सू. ५ । १०८ । पृषदाज्यं गृह्णातीत्यर्थः । नवा । का. श्रौ. सू. ५ । १०९ । इति विकल्पः पृषदाज्यग्रहणे ।

ताऽउभावेव सादयित्वा स्रुचो व्यूहतः । स्रुचो व्युह्य परिधीन्त्समुज्य परिधिमभिपद्याश्राव्याध्वर्युरेवाहेषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकायेति सूक्तवाकᳪ होता प्रतिपद्यतेऽथैता ऽउभावेव प्रस्तरौ समुल्लुम्पत ऽउभावनुप्रहरत उभौ तृणेऽअपगृह्योपासाते यदा होता सूक्तवाकमाह ॥ ४२ ॥

( ब्रा ) अथाग्नीदाहानुप्रहरेति । ता ऽउभावेवानुप्रहरत ऽउभावात्माना ऽउपस्पृशेते ॥ ४३ ॥

---

ता उभावेव सादयित्वा स्रुचो व्यूहतः । स्रुचो व्युह्य, परिधीन् समज्य परिधिमभिपद्य, आश्राव्याध्वर्युरेवाह—" इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय " इति । सूक्तवाकं होता प्रतिपद्यते । अथैता उभावेव प्रस्तरौ समुल्लुम्पतः, उभावनुप्रहरतः, उभौ तृणे अपगृह्योपासाते—यदा होता सूक्तवाकमाह ॥ ४२ ॥

अथाग्नीदाह 'अनुप्रहर' इति । ता उभावेवानुप्रहरतः, उभावात्माना उपस्पृशेते ॥ ४३ ॥

---

नुयाजप्रैषः । यजयजेत्यादिसर्वत्र "नित्यवीप्सयोः" इति ( पा० सू० ८।१।४ ) यजेत्यस्य द्विर्वचनम् । जौहवेन पृषदाज्येन त्रिरिष्ट्वा चतुर्थे चतुर्थे अनुयाजे औपभृतम् 'समानयमानौ' उभावपि अध्वर्युप्रतिप्रस्थातारौ ' नवभिः अनुयाजैः ' ' चरतः ' प्रचरत इत्यर्थः । उभयापेक्षया ' चतुर्थे—चतुर्थे ' इति वीप्सा । प्रयाजानुयाजानां तत्सङ्ख्याकत्वं सम्भूय प्रशंसति—**तद्यदिति** । प्रधानयागात्प्रथममिज्यन्त इति प्रयाजाः, अनु पश्चादिज्यन्त इत्यनुयाजाः । कर्मणि घञि, तावेतौ " प्रयजानुयाजौ यज्ञाङ्गे " इति ( पा. सू. ७ । ३ । ६२ ) निपातनात् कुत्वाभावः । नव प्रयाजा अनुयाजाश्च यस्मिन् इत्युभयत्र बहुव्रीहिः, शिष्टमुक्तार्थम् ॥ ४१ ॥

अनुयाजानन्तरभावि स्रुग्व्यूहनादिकमपि चोदकप्राप्तमुभाभ्यां कर्तव्यमित्यनुक्रामति—**ता उभावेवे**त्यादिना । **परिधिमभिपद्ये**ति । मध्यमं परिधिमन्वारभ्येत्यर्थः । उक्तं हि कात्यायनेन—"प्रथमं परिधिं गृहीत्वाऽऽश्राव्याहेषिता दैव्या इति ( का. श्रौ सू. ३ । १२१ ) " इषिता दैव्या " ( श. प. १।८।३।१० भा. ) इति सूक्तवाकप्रैषः प्रकृतावेव व्याख्यातः । **समुल्लुम्पत** इति । "लुम्प्ल छेदने" ( धा. पा.तु. उ. १६१ ) समुच्छिन्तः समुद्गृह्णीत इति यावत् । **उभावनु प्रहरत** इति । सूक्तवाकेऽनूच्यमाने 'उभौ' अध्वर्युप्रतिप्रस्थातारौ ' अनुप्रहरतः ' स्वं स्वं प्रस्तरमग्नौ प्रक्षिपत इत्यर्थः । **यदा होते**ति । ' यदा ' खलु होता सूक्तवाकं परिसमापयति ॥ ४२ ॥

' अथ ' अनन्तरम् ' अग्नीत् ' आग्नीध्रः ' अनुप्रहर '—' इति ' अध्वर्युं प्रति ' आह ' **उभावेवे**ति । यद्यप्यनुप्रहरेत्येकवचनेनाध्वर्युरेव प्रेर्यते तथापि कृतानुकरत्वात् प्रतिप्रस्थातुरपि तृणानुप्रहरणं विद्यते इत्यर्थः । **आत्मानाँ उपस्पृशेते** इति । "चक्षुष्पा" ( वा. सं २ । १६ ) इति मन्त्रेण । तथा च सूत्रितम्—"चक्षुष्पा इत्यात्मानमालभते " इति ( का. श्रौ. सू. ३ । १३३ ) ॥ ४३ ॥

---

१–स्रुचौ व्यूहतोऽध्वर्यू । का. श्रौ. सू. ५ । १३४. अध्वर्युग्रहणं यजमानव्युदासार्थम् । तस्य हि व्यूहनं प्रकृतौ वैकल्पिकं विहितमस्ति । २–" कृताऽनुकरोऽन्यत्र दक्षिणस्याम् " इति ( का. श्रौ. सू. ५ । १११ ) श. प. ब्रा. २ । ५ । २ । ३४ । कं. भाष्ये च द्रष्टव्यम् । ३–' आत्मानमुपस्पृशेते ' इति क. ।

( ते ३ ) अथाह संवदस्वेति । ( त्यु ) अगानग्नीदगन्श्रावय श्रौषट् स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंय्योर्ब्रूहीत्यध्वर्युरेवैतदाह ता ऽउभावेव परिधीननुप्रहरत ऽउभौ स्रुचः सम्प्रगृह्य स्फ्ये सादयतः ॥ ४४॥

( तो ) अथाध्वर्युरेव प्रतिपरेत्य । पत्नीः संयाजयत्युपास्त ऽएव प्रतिप्रस्थाता पत्नीः संयाज्योदेत्यध्वर्युः ॥ ४५ ॥

( स्त्री ) त्रीणि समिष्टयजूꣳषि जुहोति । तूष्णीमेव प्रतिप्रस्थाता स्रुचं प्रगृह्णाति तद्ये वैश्वदेवेन यजमानयोर्व्वाससी परिहिते स्यातां ते ऽएवात्रापि स्यातामथास्यै व्वारुण्यै पयस्यायै क्षामकर्षमिश्रमादायावभृथं यन्ति व्वरुण्यं व्वा एतन्निर्व्वरुणतायै तत्र न साम गीयते न ह्यत्र साम्ना किञ्चन क्रियते तूष्णीमेवेत्याभ्यवेत्योपमारयति ॥ ४६ ॥

---

अथाह–' संवदस्व ' इति । अगानग्नीद्–अगन् श्रावय श्रौषट्, " स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहि"–इति अध्वर्युरेवैतदाह । ता उभावेव परिधीननुप्रहरतः, उभौ स्रुचः सम्प्रगृह्य स्फ्ये सादयतः ॥ ४४ ॥

अथाध्वर्युरेव प्रतिपरेत्य पत्नीः संयाजयति । उपास्त एव प्रतिप्रस्थाता । पत्नीः संयाज्योदेत्यध्वर्युः॥४५

त्रीणि समिष्टयजूंषि जुहोति । तूष्णीमेव प्रतिप्रस्थाता स्रुचं प्रगृह्णाति । तद् ये वैश्वदेवेन यजमानयोर्वाससी परिहिते स्याताम्–ते एवात्रापि स्याताम् । अथास्य वारुण्यै पयस्यायै क्षामकर्षमिश्रमादायावभृथं यन्ति वरुण्यं वा एतत्–निर्वरुणतायै । तत्र न साम गीयते, नह्यत्र साम्ना किञ्चन क्रियते । तूष्णीमेवेत्याभ्यवेत्योपमारयति ॥ ४६ ॥

---

संवदस्वागानग्नीदित्यादीनामुक्तिप्रत्युक्तिरूपं यदस्ति तदप्याग्नीध्रस्य अध्वर्युणोक्तेनैवेत्यभिप्रेत्याह–अथाहेति । 'अथ' अनन्तरं "संवदस्व" 'इत्याह' आग्नीध्रः । तच्च संवदनमुक्तिप्रत्युक्तिरूपमनुक्रामति–अगानिति । ते च मन्त्राः प्रकृतौ व्याख्याताः । तेषु च विभागः सूत्रकृता दर्शितः–(श.प.१।८।३।२०।भा.) एतेषां "संवदस्वागाञ्छ्रौषडित्यग्नीच्छेषमितरो व्यत्यासं ब्रूतः" (का. श्रौ. सू. ३।१३४)। इति "स्वगा दैव्या" इति शंयुवाकप्रैषमध्वर्युरेव ब्रूयात् । परिधिप्रहरणादिकं तूभाभ्यामेवानुष्ठेयम् । उभौ स्रुच इत्यादि। 'सम्प्रगृह्य' सम्यग् गृहीत्वा विमोचनार्थं स्फ्ये ' सादयतः ' ॥ ४४ ॥

अथाध्वर्युरेवेति । प्रतिपरेत्येति । आहवनीयदेशात् प्रतिनिवृत्य गार्हपत्यसमीपं गत्वेत्यर्थः । उपास्त इति। पत्नीसंयाजसमये तूष्णीमुपविशेत् प्रतिप्रस्थाता, न तु तस्य तदानीं कृतानुकरत्वमपेक्षितमित्यर्थः । पत्नीः संयाज्योदेत्यध्वर्युरिति । पत्नीसंयाजानन्तरमाहवनीयदेशं गत्वेत्यर्थः ॥ ४५ ॥

त्रीणि समिष्टयजूंषीति । तानि च पूर्वस्मिन् वैश्वदेवब्राह्मणे व्याख्यातानि (श.प.२।५।१।२१भा.) तूष्णीमेवेति । प्रतिप्रस्थातुः समिष्टयजुर्होमसमये आत्मीयां स्रुचं तूष्णीमेव दक्षिणाग्नौ प्रगृह्णीयात् स्रुगात्तमाज्यं धारयेत् ।

( त्यु ) अवभृथ निचुम्पुण । निचेरुरसि निचुम्पुणः । अव देवैर्देवकृतमेनोऽयासिषमव मर्त्यैर्मर्त्यकृतं पुरुराव्णो देव रिषस्पाहीति क्षामᳬ हैते यस्मै कामयेत तस्मै दद्यान्न हि दीक्षितवसने भवतः स यथाऽहिस्त्वचो निर्मुच्येतैवᳬ सर्वस्मात्पाप्मनो निर्मुच्यते ॥ ४७ ॥

---

"अवभृथ ! निचुम्पुण, निचेरुरसि निचुम्पुणः । अव देवैर्देवकृतमेनोऽयासिषमव मर्त्यैर्मर्त्यकृतम् । पुरुराव्णो देव रिषस्पाहि"–( वा. ३. ४८ ) इति । क्षामं हैते यस्मै कामयेत तस्मै दद्यात् । न हि दीक्षितवसने भवतः । स यथाऽहिस्त्वचो निर्मुच्येतैवं सर्वस्मात् पाप्मनो निर्मुच्यते ॥ ४७ ॥

---

तन्मन्त्रः स्वाहाकारोऽपि वा न विद्यत इत्यर्थः । तद्ये वैश्वदेवेनेत्यादि । वैश्वदेवयाजमाने समाप्ते 'यजमानयोः' यजमानपत्न्योर्ये 'वाससी' ते परिहिते भवतः ॥

वरुणप्रधासाङ्गत्वेनावभृथगमनं विधत्ते–अथास्या इत्यादि । या वरुणदेवताका पयस्या तस्याः 'क्षामकर्षमिश्रम्' क्षामोऽतिपाकेन दग्धः पात्रे संसक्तः, "कृष विलेखने" (धा. पा. भ्वा. प. १०१९) कृष्यते विलिख्यते इति कर्षः, क्षामश्चासौ कर्षश्चेति क्षामकर्षः, तेन मिश्रं हविः 'आदाय' 'अवभृथम्' उदकं प्रति 'यन्ति' ऋत्विग्यजमानाः, उदकसमीपं गच्छेयुरित्यर्थः । गमनस्य प्रयोजनमाह–वरुण्यं वेति । 'एतत्' क्षामकर्षमिश्रं हविः 'वरुण्यम्' वरुणसम्बन्धि, पापदेवतया सम्बद्धमित्यर्थः, "यो विदग्धः स नैर्ऋतः" ( तै. सं. २।६।३।४ ) इति श्रुतेः । यद्वा पयस्याया वरुणदेवताकत्वात् तद्यागशिष्टं सर्वमपि वरुण्यम् । अतः निर्वरुणतायै वरुणसम्बन्धराहित्याय अवभृथगमनं युक्तमित्यर्थः ॥

सौमिकावभृथवत् प्रसक्तं सामगानं निषेधति–तत्र न सामेति । अवभृथगमनसमये हि "अग्निष्टपति" इति साम (श. प. ४।४।५।८।) प्रस्तोत्रा गेयम् । 'तत्र' तस्मिन् वरुणप्रधासाङ्गावभृथगमने तन्न गातव्यम् । तदुपपादयति–न हीति । सोमयागे हि स्तोत्रादिरूपेण साम्नां प्रयोगात् तदङ्गावभृथगमनेऽपि सामगानमयुक्तम् । 'न' खलु 'अत्र' वरुणप्रधासे 'साम्ना' 'किम्' अपि प्रयोजनं 'क्रियते' अतोऽप्रयुज्यमानस्य साम्नोऽवभृथे अप्रयोग एव युक्त इत्यर्थः । अतः 'तूष्णीम्' अमन्त्रकम् 'एव' अवभृथसमीपम् 'अभ्यवेत्य' "अवभृथ निचुम्पुण" ( वा. सं. ३।४८ ) इति मन्त्रेण क्षामकर्षमिश्रं हविः 'उपमज्जयति' अप्सु प्रक्षिपति । सूत्रितञ्चेह–"वारुणीनिष्काषेणावभृथं, तूष्णीमेत्याभ्यवेत्य मज्जयत्यवभृथेति" इति का. श्रौ. सू. ५।१३९।१४० ॥ ४६ ॥

अवभृथेति मन्त्रस्यायमर्थः–सोमलिप्तानि पात्राणि अवाचीनान्यस्मिन् भ्रियन्त इत्यवभृथः । अवपूर्वात् भृञ औणादिकः थक् प्रत्ययः । हे 'अवभृथ' ! 'निचुम्पुण' नितरां पुण्यहेतुर्भव "पुण कर्मणि शुभे"–( धा. पा. तु. आ. ५२ ) इत्यस्माल्लोटि व्यत्ययेन द्विर्वचनमभ्यासस्य मुगागमश्चकारादेशश्च । यद्वा, "चुप मन्दायां गतौ"–( धा. पा. भ्वा. प. ४०४ ) इत्यस्माल्लोटि वर्णव्यत्यये रूपं ज्ञेयम् । नीचीनं गच्छेत्यर्थः । यतश्च 'निचेरुः' नितरां चरणशीलः 'असि' अतो 'निचुम्पुण' नीचीनं गच्छ । 'देवैः' इन्द्रियैः, तदधिष्ठातृदेवैः 'देवकृतम् एनः' देवविषयं यदेनः कृतमस्ति, अहं तत् 'अवायासिषम्' अवाचीनं प्रापयामि

( तेऽथ ) अथ केशश्मश्रूप्त्वा । समारोह्याग्नी ऽउदवसायेव ह्येतेन यजते न हि तदवकल्पते यदुत्तरवेदावग्निहोत्रं जुहुयात्तस्मादुदवस्यति गृहानित्वा निर्मथ्याग्नी पौर्णमासेन यजत ऽउत्सन्नयज्ञ ऽइव वा ऽएष यच्चातुर्मास्यान्यथैष क्लृप्तः प्रतिष्ठितो यज्ञो यत्पौर्णमासं तत्क्लृप्तेनैवैतद्यज्ञेनान्ततः प्रतितिष्ठति तस्मादुदवस्यति ॥ ४८ ॥

इति चतुर्थप्रपाठके तृतीयं ब्राह्मणम् ॥४॥३॥(५।२)॥

---

अथ केशश्मश्रूप्त्वा समारोह्याग्नी उदवसायेव ह्येतेन यजते । न हि तदवकल्पते–यदुत्तरवेदावग्निहोत्रं जुहुयात् । तस्मादुदवस्यति, गृहानित्वा, निर्मथ्याग्नी पौर्णमासेन यजते । उत्सन्नयज्ञ इव वा एषः–यच्चातुर्मास्यानि । अथैष क्लृप्तः प्रतिष्ठितो यज्ञो यत् पौर्णमासम् । तत् क्लृप्तेनैवैतद्यज्ञेनान्ततः प्रतितिष्ठति–तस्मादुदवस्यति ॥ ४८ ॥ इति वरुणप्रघासयागश्चातुर्मास्ये द्वितीयं पर्व ॥

---

अप्सु प्रक्षिपामीत्यर्थः । "या प्रापणे"–( धा. पा. अ. प. ३९ ) इत्यस्माल्लुङि "यमरमनमाताम्"–( पा. सू. ७ । २ । ७३ ) इति सगिटौ । तथा मर्त्यैः मनुष्यैः ऋत्विग्भिः 'मर्त्यकृतं' मनुष्य विषये यत् कृतमेनः, तदपि 'अवायासिषम्' हे 'देव' स्वामिन् ! अवभृथ ! 'पुरुराव्णः' पुरुरावणशीलान् बहुविधाक्रोशकारणान् । रौतेरौणादिकोऽनिण्प्रत्ययः–( उ. ४ पा. २४२ सू. ) । यद्वा, "रा दाने"–( धा. पा. अ. प. ४७ ) इत्यस्मात् "आतो मनिन्–क्वनिप्–वनिपश्च"–( पा. सू. ३ । २ । ७४ ) इति क्वनिप् । पुरु बहुलं संसारदुःखं राति ददातीति पुरुरावा, तस्मात् इन्द्रियहिंसकात् वरुणपाशग्रहलक्षणात् पापात् अस्मान् पाहीति । एवमनेन मन्त्रेण क्षामकर्षमिश्रं हविःशेषं जायापती जुहुतः । तदुक्तं सूत्रकारेण–" जायापती स्नातोऽमज्जन्तावन्योन्यस्य पृष्ठे धावतः"–(का. श्रौ. सू. ५।१४१–१४२) इति । पूर्वयोर्वाससोर्दानं विधत्ते–कामेमिति । स्नानानन्तरमन्ये वाससी परिधाय । पूर्वपरिधानं निषिद्धम्, "न दीक्षितवसनं परिदधीत[3]"–इति श्रुतेः । एतद्दानं प्रशंसति–स यथेति । 'यथा' खलु 'अहिस्त्वचो निर्मुच्येत,' 'एवम्' पूर्वपरिहितवासो दत्त्वा सर्वस्मात् पापादेव यजमानो निर्मुच्यते ॥ ४७ ॥

अवभृथस्नानानन्तरं केशश्मश्रुवपनं विधत्ते[3]–अथेति । केशाश्च श्मश्रूणि च 'केशश्मश्रू' प्राण्यङ्गत्वादेकवद्भावः । 'उप्त्वा' वापयित्वेत्यर्थः । समारोहणपुरस्सरं गृहे प्रत्यागमनं विधत्ते–समारोह्येति । 'अग्नी' गार्हपत्याहवनीयौ । एतेन यजत इति । वरुणप्रघासाख्येन यागेनेत्यर्थः । न हि तदिति । वरुणप्रघासनिमित्तायामुत्तरवेद्यां 'यत्' अग्निहोत्रहवनम्, न तद् युज्यत इत्यर्थः । यस्मादेवं तस्मात् कारणाद् वरुणप्रवासस्थानादुदवसानं कर्त्तव्यमिति निगमयति–तस्मादिति । समारोपणानन्तरं तस्मात्स्थानान्निष्क्रम्य 'गृहान्' 'इत्वा' गत्वा, 'निर्मथ्य' तत्र 'पौर्णमासेन' यागेन 'यजेत' । एतत्प्रतिष्ठाहेतुना स्तौति–उत्सन्नयज्ञ इत्यादिना ।

---

१–पूर्वे दद्यादधिकृतेभ्यो यस्मा इच्छेत् का. श्रौ. सू. ५।१४४। अधिकृतेभ्यः ऋत्विग्भ्य इत्यर्थः । २–अन्ये वाससी परिदधाते । का. श्रौ. सू. ५ । १४३ । द्विवचनात् जायापती । ३–पर्वसंस्थासु वपनं वा प्रागंत्यात् । का. श्रौ. सू. ५।३८ । ४–गृहेषु पौर्णमास[illegible] समारूढनिर्मथितयोस्तथा चेत् । का. श्रौ. सू. ५ । ४४ ।

व्वरुणप्रघासैर्व्वै प्रजापतिः । प्रजा व्वरुणपाशात्प्रामुञ्चत्ताऽअस्यानमीवाऽअकिल्विषाः प्रजाः प्राजायन्ताथैतैः साकमेधैरेतैर्व्वै देवा व्वृत्रमघ्नन्नेतैरेव व्यजयन्त येयमेषां विजितिस्तां तथोऽएवैष ऽएतैः पाप्मानं द्विषन्तं भ्रातृव्यꣳहन्ति तथोऽएव व्विजयते तस्माद्वाऽएष एतैश्चतुर्थे मासि यजते स वै द्व्यहमनूचीनाहं यजते ॥ १ ॥

---

### अथ साकमेधपर्व ।

वरुणप्रघासैर्वै प्रजापतिः प्रजा वरुणपाशात् प्रामुञ्चत् । ता अस्यानमीवा अकिल्विषाः प्रजाः प्राजायन्त । अथैतैः साकमेधैः । एतैर्वै देवा वृत्रमघ्नन् । एतैरेव व्यजयन्त । येयमेषां विजितिः ताम् । तथो एवैष एतैः पाप्मानं द्विषन्तं भ्रातृव्यं हन्ति, तथो एव विजयते—तस्माद्वा एष एतैश्चतुर्थे मासि यजते । स वै द्व्यहमनूचीनाहं यजते ॥ १ ॥

---

दर्शपूर्णमासवच्चातुर्मास्यानामनुष्ठानबाहुल्याभावादुत्सन्नयज्ञत्वम् । अतस्तेषामप्रतिष्ठाहेतुत्वेन तदनुष्ठाने यजमानस्यापि अप्रतिष्ठा सम्भाव्येत; अतः तस्य प्रतिष्ठार्थं स्वयं प्रतिष्ठितः पौर्णमासयागः सम्पद्यत इत्यर्थः । **तस्माद्दुद्वस्यतीति** । वरुणप्रघासदेशान्निष्क्रमणविधेर्निगमनम् ॥ ४८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वितीयकाण्डे पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ ( २–५–२ )

अथ साकमेधाख्यस्य विधित्सितस्य तृतीयस्य पर्वणः पापरूपशत्रुजयहेतुत्वं वक्तुं वृत्तान्तं सङ्कीर्तयति—**वरुणप्रघासैरिति** । 'अनमीवाः' रोगरहिताः 'अकिल्विषाः' तन्निदानभूतपापपरिहीनाः । **अथैतैरिति** । वरुणप्रघासानन्तरमनुष्ठेयैः 'एतैः' विधित्सितैः 'साकमेधैः' प्रजापतिः ता एव प्रजा विजितपापा अकरोत् । एतेषां विजयहेतुत्वमाख्यायिकया प्रतिपादयति—**एतैर्वा** इति । 'वृत्रम्' आवरणशीलम्, एतन्नामानमसुरमित्यर्थः । **येयमेषामिति** । 'एषां' देवानां वृत्रहननकर्मणा 'येयं' 'विजितिः' विजयो विद्यते व्यजयन्तेति सम्बन्धः । अथान्येषां तत्फलसाधनत्वमाह—**तथो एवैष** इति । 'द्विषन्तं' द्वेषणशीलमनर्थकारणं पापरूपं 'भ्रातृव्यं' शत्रुमिति सामानाधिकरण्येन सम्बन्धः । **तथो एव विजयत** इति । तथा हतः पापशत्रुः, तत्सजातीयस्यापि निवृत्त्या सर्वत्र साकमेधयाजिनो विजय एव, न कुत्रचित् प्रतिहतिरित्यर्थः । उक्तमर्थं हेतुतया इदानीं विधत्ते—**तस्मादिति** । यस्मात् उक्तफलहेतवः साकमेधाः ' 'तस्मात्' 'एषः' वरुणप्रघासैरिष्टवान् पुनः 'चतुर्थे मासि' 'एतैः' साकमेधैर्यजेत । अनीकवत्यादीनां साकमेधगतानामिष्टीनां बहुत्वादेतैरिति बहुवचनम् । अहर्द्वयसाध्यत्वं विधत्ते—**स वा** इति । द्वयोरह्नोः समाहारो द्व्यहः "तद्धितार्थ"—( पा. सू. २ । १ । ५१ ) इति समासे "न सङ्ख्यादेः समाहारे"—( पा. सू. ५ । ४ । ८९ ) इति अह्नादेशस्य प्रतिषेधः—**अनूची-**

---

१–'मप्रतिष्ठत्वेन' इति पा. । २–आषाढ्यामयं ते योनिरिति समारोह्योदवसाय निर्मथ्य व्वरुणप्रघासाः । का. श्रौ. सू. ५ । १४७ । आ. श्रौ. सू. ८ । ५-८ कं. १२६ सूत्राणि चेह द्रष्टव्यानि । ३–'निःक्षत्रप्रायत्वात्'–इ० पा० ।

स पूर्वेद्युः । ( २ ) अग्नयेऽनीकवतेऽष्टाकपालं पुरोडाशं निर्व्वपत्यग्निᳬंह वै देवा ऽअनीकं कृत्वोपप्रेयुर्वृत्रᳬंहनिष्यन्तः स तेजोऽग्निर्नाव्यथत तथो ऽएवैष ऽएतत्पाप्मानं द्विषन्तं भ्रातृव्यᳬं हनिष्यन्नग्निमेवानीकं कृत्वोपप्रैति स तेजोऽग्निर्न व्यथते तस्मादग्नयेऽनीकवते ॥ २ ॥

( तेऽथ ) अथ मरुद्भ्यः सान्तपनेभ्यः । ( भ्यो ) मध्यन्दिने चरुं निर्व्वपति मरुतो ह वै सान्तपना मध्यन्दिने वृत्रᳬं सन्तेपुः स सन्तप्तोऽनन्नेव प्राणन्परिदीर्णः शिश्ये तथोऽएवैतस्य पाप्मानं द्विषन्तं भ्रातृव्यं मरुतः सान्तपनाः सन्तपन्ति तस्मान्मरुद्भ्यः सान्तपनेभ्यः ॥ ३ ॥

---

( १ ) स पूर्वेद्युः अग्नयेऽनीकवतेऽष्टाकपालं पुरोडाशं निर्वपति । अग्निं ह वै देवा अनीकं कृत्वोपप्रेयुर्वृत्रं हनिष्यन्तः । स तेजोऽग्निर्नाव्यथत । तथो एवैष एतत्पाप्मानं द्विषन्तं भ्रातृव्यं हनिष्यन्नग्निमेवानीकं कृत्वोपप्रैति । स तेजोऽग्निर्न व्यथते । तस्मादग्नयेऽनीकवते ॥ २ ॥

( २ ) अथ मरुद्भ्यः सान्तपनेभ्यो मध्यन्दिने चरुं निर्वपति । मरुतो ह वै सान्तपना मध्यन्दिने वृत्रं सन्तेपुः । स सन्तप्तोऽनन्नेव प्राणन् परिदीर्णः शिश्ये । तथो एवैतस्य पाप्मानं द्विषन्तं भ्रातृव्यं मरुतः सान्तपनाः सन्तपन्ति । तस्मान्मरुद्भ्यः सान्तपनेभ्यः ॥ ३ ॥

---

नाहमिति । अनु सम्यगच्छतीत्यन्वक् अन्वगेवानूचीनम्; " विभाषाऽञ्चेरदिक्स्त्रियाम् "-( पा. सू. ५ । ४ । ८ ) इति स्वार्थिकः खच्-प्रत्ययः । अनूचीनं नैरन्तर्येण वर्त्तमानमहः अनूचीनाहम् " राजाहःसखिभ्यः "-( पा. सू. ५ । ४ । ९१ ) इति टच् समासान्तः ॥ १ ॥

तत्र पूर्वदिवसे प्रातर्मध्याह्नसायाह्नेषु तिस्र इष्टयोऽनुष्ठेयाः, तत्र प्रथमं विधाय स्तौति-स पूर्वेद्युरित्यादिना । "सद्यःपरुत्-"( पा. सू. ५ । ३ । २२ )इत्यादिसूत्रेण पूर्वदिनशब्दस्य पूर्वेद्युरिति निपातः । साकमेधेषु प्रधानभूता महाहविराख्या इष्टिर्यस्मिन् दिवसेऽनुष्ठीयते, ततः पूर्वदिवसे चतुर्दश्यां प्रातरनीकवद्गुणविशिष्टायाग्नयेऽष्टकपालेषु संस्कृतं पुरोडाशं निर्वपेदित्यर्थः । अनीकं कृत्वेति । प्रमुखं कृत्वेत्यर्थः । स तेज इति । स च तेजोरूपोऽग्निः वृत्रकृतादुपद्रवान्न ' अव्यथत ' व्यथां न प्राप्तवान् । दार्ष्टान्तिकेन योजयति-तथो एवैष इति । उक्तहेतोरनीकवद्गुणवैशिष्ट्यं पुरोडाशदेवताया अग्नेर्युक्तमिति निगमयति-तस्मादिति ॥ २ ॥

मध्यन्दिनेऽनुष्ठेयामिष्टिं विधाय प्रशंसति-अथेति । देवताविशेषणमुपपादयति-मरुतो ह वा इति । ' मरुतो ' हि सन्तपनकारिणः ' सान्तपनाः ' तथाविधा मरुतो मध्यन्दिनसमये ' वृत्रम् ' असुरं ' सन्तेपुः ' सन्तप्तं कृतवन्तः । स च सन्तप्तः सन् श्वासप्रश्वासौ कुर्वन् ' परिदीर्णः ' विदारितसर्वावयवः ' शिश्ये ' शयनं कृतवान् । तथो एवेति, दार्ष्टान्तिकफलकथनम् ॥ ३ ॥

---

१-पूर्वेद्युः पूर्वाह्णेऽग्नयेऽनीकवते पुरोडाशः । का. श्रौ. सू. ५।१४९।२-मरुद्भ्यः सांतपनेभ्यो मध्यंदिने चरुः । का. श्रौ. सू. ५।१५०।

( भ्योऽ ) अथ मरुद्भ्यो गृहमेधिभ्यः शाखया वत्सानपाकृत्य पवित्रवति सन्दोह्य तं चरुꣳ श्रपयति चरुरुह्येव स यत्र क्व च तण्डुलानावपन्ति तन्मेधो देवा दधिरे प्रातर्वृत्रꣳहनिष्यन्तस्तथोऽएवैष ऽएतत्पाप्मानं द्विषन्तं भ्रातृव्यꣳ हनिष्यन्मेधो धत्ते तद्यत्क्षीरौदनो भवति मेधो वै पयो मेधस्तण्डुलास्तमुभयं मेधमात्मन्धत्ते तस्मात्क्षीरौदनो भवति ॥ ४ ॥

तस्यावृत् । ( त्सै ) सैव स्तीर्णा वेदिर्भवति या मरुद्भ्यः सान्तपनेभ्य-स्तस्यामेव स्तीर्णायां वेदौ परिधींश्च शकलांश्चोपनिदधति तथा सन्दोह्य चरुꣳ श्रपयति श्रपयित्वाऽभिघार्योद्वासयति ॥ ५ ॥

---

( ३ ) अथ मरुद्भ्यो गृहमेधिभ्यः शाखया वत्सानपाकृत्य पवित्रवति सन्दोह्य तं चरुं श्रपयति । चरुरु ह्येव सः—यत्र क्वचन तण्डुलानावपन्ति । तन्मेधो देवा दधिरे—प्रातर्वृत्रं हनिष्यन्तः । तथो एवैष एतत्पाप्मानं द्विषन्तं भ्रातृव्यं हनिष्यन्मेधो धत्ते । तद्यत्क्षीरौदनो भवति । मेधो वै पयः, मेधस्तण्डुलाः । तमुभयं मेधमात्मन्धत्ते । तस्मात् क्षीरौदनो भवति ॥ ४ ॥

तस्यावृत् सैव स्तीर्णा वेदिर्भवति—या मरुद्भ्यः सान्तपनेभ्यः । तस्यामेव स्तीर्णायां वेदौ परिधींश्च शकलांश्चोपनिदधाति । तथा सन्दोह्य, चरुं श्रपयति । श्रपायित्वाऽभिघार्योद्वासयति ॥ ५ ॥

---

सायाह्ने कर्त्तव्यामिष्टिं विधत्ते—**अथेति** । गृहमेधित्वगुणविशिष्टेभ्यो ‘ मरुद्भ्यः ’ ‘ चरुं श्रपयन्ति ’—इत्युपरितनेन सम्बन्धः । श्रपणप्रकारमाह—**शाखयेति** । दर्शयागवत् शाखाहरणवत्सापाकरणे कृत्वा, शाखापवित्रं निर्माय, तद्वति पात्रे गाः ‘ सन्दोह्य ’ दुग्ध्वा, ‘ तम् ’ इति ( विधेयापेक्षया ) निर्देशः । ‘ तं ’ दुग्धं पयः चरुं ’ ‘ श्रपयति ’ **चरुरु ह्येवेति** । ‘ सः ’ वै मरुद्भ्यो गृहमेधिभ्यः कृतः ‘ चरुः एव हि ’ ओदनः खलु, अत इदानीमपि तदर्थं चरुरेव श्रपयितव्य इत्यर्थः ॥

**यत्र क्वचेति** । यत्र कुत्रचिदवस्थितान् तण्डुलान् आहृत्य, तस्मिन् पयसि प्रक्षिप्ते तत् तथैव हि देवाः पुरुषादिभ्योऽपक्रम्य व्रीहिषु सङ्क्रान्ताः ‘ मेधः ’ सारं ‘ दधिरे ’ अधारयन् । तत्र कारणमाह—**प्रातरिति** । **हनिष्यन्त** इति । हेतौ शतृप्रत्ययः । प्रातः करिष्यमाणाद् वृत्रहननाद्धेतोरित्यर्थः । **तथो एवेति** । इदानीन्तन-यजमानस्यापि तथैव प्रतिपादनम् । **क्षीरौदन** इति । पयसि तण्डुलान् प्रक्षिप्य श्रपणे सति क्षीरेण संस्कृत ओदनो निष्पद्यते “ अन्नेन व्यञ्जनम् ”–( पा. सू. २ । १ । ३४ ) इति तृतीयासमासः । द्रव्यद्वयं सम्भूय प्रशंसति—**मेधो वा** इति । बलकरः सारांशो मेधशब्दार्थः । स्पष्टमन्यत् ॥

एष च गृहमेधीययागः सान्नाय्यविकृतिरिति सप्तभिः पक्षैः पूर्ववत् स्वीकृत्य ततो वैकचोदनादिति राद्धान्तितं दशमे । कात्यायनोऽप्याह स्म—“मरुद्भ्यो गृहमेधिभ्यः सायं चरुः पयसि, सान्नाय्यवत्, तूष्णीं वैकचोदनात् ”–( का. श्रौ. सू. ५ । १५३–१५५ ) इति ॥ ४ ॥

अतोऽत्र कर्तव्यान्यङ्गान्यनुक्रामति—**तस्यावृदिति** । ‘ तस्य ’ गृहमेधीययागस्य ‘ आवृत् ’ क्रिया, प्रयोगः,

---

१–इध्मस्थाने शकलपरिधिं निधाय मरुद्भ्यो गृहमेधिभ्यः सायं चरुः पयसि । का. श्रौ. सू. ५।१५३ । तत्र सायंशब्दोऽपराह्णवाची । इति कर्कः ।

( त्र ) अथ द्वे पिशीले वा पात्र्यौ वा निर्णेनिजति । तयोरेनं द्वेधोद्धरन्ति तयोर्मध्ये सर्पिरासेचने कृत्वा सर्पिरासिञ्चति स्रुवं च स्रुचं च सम्मार्ष्ट्यथै-ता ऽओदनावादायोदैति स्रुवं च स्रुचं चादायोदैति स ऽइमामेव स्तीर्णां वेदिमभिमृश्य परिधीन्परिधाय यावतः शकलान्कामयते तावतो ऽभ्या-दधात्यथैता ऽओदनावासादयति स्रुवं च स्रुचं चासादयत्युपविशति होता होतृषदने स्रुवं च स्रुचं चाददान ऽआह ॥ ६ ॥

---

अथ द्वे पिशीले वा पात्र्यौ वा निर्णेनिजति । तयोरेनं द्वेधोद्धरन्ति । तयोर्मध्ये सर्पिरासेचने कृत्वा सर्पिरासिञ्चति । स्रुवं च स्रुचं च सम्मार्ष्टि । अथैता ओदनावादायोदैति । स्रुवं च स्रुचं चादाय-दैति । स इमामेव स्तीर्णां वेदिमभिमृश्य, परिधीन्परिधाय, यावतः शकलान् कामयते तावतो-ऽभ्यादधाति । अथैता ओदनावासादयति स्रुवं च स्रुचं चासादयति । उपविशति होता होतृषदने स्रुवं च स्रुचं चाददान आह ॥ ६ ॥

---

क्रमः, अभिधीयत इति शेषः । सान्तपनेष्टौ 'या वेदिः' बर्हिषा 'स्तीर्णा' अभूत्, गृहमेधीयस्यापि 'सैव' उपकरोति । तस्यामेवेत्यादि, निगदसिद्धम् ; अतः सन्दिग्धपदविवरणमात्रमेव क्रियते—**शकलांश्चेति** । इध्मस्य स्थाने शकलानेव सम्मृज्य परिधिभिः सह तान् सादयेदित्यर्थः। **सन्दोह्य चरुमिति** । विहितानुवादः क्रमार्थः॥५

**अथ द्वे** इति । **पिशीले** वेति । पिशीलशब्दः शराववाची । अत एवोक्तं सूत्रकृता—"श्रपयित्वाऽभिघार्यो-द्वास्य शरावयोरुद्धरति" ( का. श्रौ. सू. ५।१५७ ) । **पात्र्यौ** वेति । **निर्णेनिजती** ति । प्रक्षालयतीत्यर्थः । "णिजिर् शौचपोषणयोः"—इति धातुः ( धा. पा. जु. उ. ११ ) । **द्वेधोद्धरन्ती**ति । 'एनं' चरुं द्वेधा विभज्य तयोः शरावयोः पात्र्योर्वा निदध्यादित्यर्थः । **सर्पिरासेचने** इति । सर्पिः सर्पणशील-माज्यम्, आसिच्यते आनीयतेऽस्मिन्निति सर्पिरासेचनम् । अधिकरणे ल्युट् । पात्रस्थयोस्तयोरोदनयोर्मध्ये सर्पिःपूरणायावटौ कृत्वेत्यर्थः । **स्रुवं चे**ति । एकत्वमविवक्षितम् । प्रयाजानुयाजाभावेनोपभृतः प्रयोगा-भावात् तामेव संमृज्यादित्यर्थः । **ओदनावासादयती**ति । पात्रद्वये स्थापितौ तावेवौदनौ गृहीत्वा वेद्यामासादयितुं गच्छेदित्यर्थः । ओदनमध्यस्थितेनैवाज्येन कृत्स्नाज्यकार्यनिष्पत्तेः ध्रुवाया अप्रयोग इति जुहूम इत्यर्थः । **इमामेवे**ति । सान्तपन्यामिष्टौ या वेदिः बर्हिषाऽऽस्तीर्णाऽस्ति, तामेव वेदिम् गृहमेधीयाङ्गत्वेना-स्तरणमन्त्रेण तूष्णीमेवावमृशेत । यदाह कात्यायनः—"स्तरणयजुषा वेदिमभिमृश्य तूष्णीं वा कृतत्वात्"—( का. श्रौ. सू. ५।१।६० ) इति । न पुनर्बर्हिषाऽऽस्तरणं कर्त्तव्यमित्यर्थः । इध्मवत्तत्कार्यशकलानां सङ्ख्या नियमप्रसक्तावाह—**यावत** इति । यावद्भिः शकलैराहवनीयस्य प्राबल्यं भवति तानयं कामयेत; 'तावतः' शकलांस्तत्राभ्यादध्यादित्यर्थः । तस्यां वेद्यां हविरासादनं विधत्ते—**अथैतावि**ति । **उपविशति होते**ति । सामिधेन्य-नुवचनादेरभावात् होतृषदने तूष्णीमेवोपविशेत् । होतुरुपवेशनानन्तरमाज्यभागमित्येव कर्त्तव्यम्, न पुन-राघारादिकमित्यभिप्रेत्याह—**स्रुवश्च स्रुचश्चे**त्यादिना ॥ ६ ॥

---

१–इध्मस्थाने शकलपरिधिं निधाय । का. श्रौ. सू. ५।१५३। २–आसेचने मध्ये कृत्वा सर्पिरासिचत्याज्यार्थम् । का. श्रौ. सू. ५।१५८।

( हा ) अग्नयेऽनुब्रूहीति । ( त्या ) आग्नेयमाज्यभागᳬं᳭ स दक्षिणस्यौदनस्य सर्पिरासेचनाच्चतुराज्यस्यावदायातिक्रामत्यतिक्रम्याश्राव्याहाग्निं यजेति व्वषट्कृते जुहोति ॥ ७ ॥

( त्यु ) अथाह सोमायानुब्रूहीति । सौम्यमाज्यभागᳬं᳭ सऽउत्तरस्यौदनस्य सर्पिरासेचनाच्चतुराज्यस्यावदायातिक्रामत्यतिक्रम्याश्राव्याह सोमं यजेति व्वषट्कृते जुहोति ॥ ८ ॥

( त्यु ) अथाह मरुद्भ्यो गृहमेधिभ्योऽनुब्रूहीति । स दक्षिणस्यौदनस्य सर्पिरासेचनात्तत ऽआज्यमुपस्तृणीते तस्य द्विरवद्यत्यथोपरिष्टादाज्यस्याभिघारयत्यतिक्रामत्यतिक्रम्याश्राव्याह मरुतो गृहमेधिनो यजेति व्वषट्कृते जुहोति ॥ ९ ॥

( त्यु ) अथाहाग्नये स्विष्टकृतेऽनुब्रूहीति । सऽउत्तरस्यौदनस्य सर्पिरासेचनात्तत ऽआज्यमुपस्तृणीते तस्य द्विरवद्यत्यथोपरिष्टादाज्यस्याभिघार-

---

'अग्नयेऽनुब्रूहि' इति आग्नेयमाज्यभागम् । स दक्षिणस्यौदनस्य सर्पिरासेचनाच्चतुराज्यस्यावदायातिक्रामति । अतिक्रम्याश्राव्याह ' अग्निं यज ' इति । वषट्कृते जुहोति ॥ ७ ॥

अथाह–'सोमायानुब्रूहि' इति सौम्यमाज्यभागम् । स उत्तरस्यौदनस्य सर्पिरासेचनाच्चतुराज्यस्यावदायातिक्रामति । अतिक्रम्याश्राव्याह–'सोमं यज' इति । वषट्कृते जुहोति ॥ ८ ॥

अथाह–'मरुद्भ्यो गृहमेधिभ्योऽनुब्रूहि' इति । स दक्षिणस्यौदनस्य सर्पिरासेचनात्तत आज्यमुपस्तृणीते । तस्य द्विरवद्यति । अथोपरिष्टादाज्यस्याभिघारयति । अतिक्रामति । अतिक्रम्याश्राव्याह –'मरुतो गृहमेधिनो यज' इति । वषट्कृते जुहोति ॥ ९ ॥

अथाह–'अग्नये स्विष्टकृतेऽनुब्रूहि ' इति । स उत्तरस्यौदनस्य सर्पिरासेचनात्तत आज्यमुपस्तृणीते । तस्य द्विरवद्यति । अथोपरिष्टादाज्यस्याभिघारयति । अतिक्रामति । अतिक्रम्याश्राव्याह–

---

अग्नयेऽनुब्रूहीति । दक्षिणस्यौदनस्येति । दक्षिणोत्तरभागेन वेद्यामासादितयोरोदनयोः यो दक्षिणस्थित ओदनः, तस्य 'सर्पिरासेचनात्' सर्पिषा पूर्णात् पात्रात् पूर्वाज्यभागार्थं चतुरवदानम्, उत्तरस्यौदनस्य सर्पिरासेचनात् द्वितीयस्याज्यभागस्यावदानम् । तथा प्रधानयागस्य गृहमेधीयस्य दक्षिणौदनस्य सर्पिरासेचनात् उपस्तरणाभिघारणे उत्तरौदनस्य सर्पिरासेचनात् स्विष्टकृद्यागस्योपस्तरणाभिघारणे । अत एव सूत्रितं कात्यायनेन– "आज्यभागाभ्यां चरति, आग्नेयं दक्षिणात्, सौम्यमुत्तरात्, गृहमेधीयस्विष्टकृतौ चाज्यभागवत् समवदानौ ( ५ । १६३–१६४ ) इति । निगदसिद्धमन्यत् ॥ ७ ॥ ८ ॥ ९ ॥

अथाहाग्नय इति । न प्राशित्रमिति । प्रशित्रावदानं न कर्त्तव्यम्; पयसि संस्कृतत्वेन सान्नाय्यविकृतित्वात्,

---

१–न प्राशित्रमिडांतं भवति । का. श्रौ. सू. ५ । १६८ ।

यत्यतिक्रामत्यतिक्रम्याश्राव्याहाग्निᳫं स्विष्टकृतं यजेति वषट्कृते जुहोत्यथेडामेवावद्यति न प्राशित्रमुपहूय मार्जयन्त ऽएतन्न्वेकमयनम् ॥ १० ॥

( म ) अथेदं द्वितीयᳫं सैव स्तीर्णा वेदिर्भवति या मरुद्भ्यः सान्तपनेभ्यस्तस्यामेव स्तीर्णायां वेदौ परिधींश्च शकलांश्चोपनिदधाति तथा सन्दोह्य चरुᳫं श्रपयति तदेव प्रतिवेशमाज्यमधिश्रयति श्रपयित्वाऽभिघार्योद्वास्यानक्ति स्थाल्यामाज्यमुद्वासयति स्रुवं च स्रुचं च सम्मार्ष्ट्यथैतᳫं सोखमेव चरुमादायोदैति स्थाल्यामाज्यमादायोदैति स्रुवं च स्रुचं चादायोदैति सऽइमामेव स्तीर्णां वेदिमभिमृश्य परिधीन्परिधाय यावतः शकलान्कामयते तावतोऽभ्यादधात्यथैतᳫं सोखमेव चरुमासादयति स्थाल्यामाज्यमासादयति स्रुवं च स्रुचं चासादयत्युपविशति होता होतृषदने स्रुवं च स्रुचं चाददान ऽआह ॥ ११ ॥

---

'अग्निं स्विष्टकृतं यज' इति । वषट्कृते जुहोति । अथेडामेवावद्यति, न प्राशित्रम् । उपहूय, मार्जयन्ते । एतन्न्वेकमयनम् ॥ १० ॥

अथेदं द्वितीयम् । सैव स्तीर्णा वेदिर्भवति—या मरुद्भ्यः सान्तपनेभ्यः । तस्यामेव स्तीर्णायां वेदौ परिधींश्च शकलांश्चोपनिदधाति । तथा सन्दोह्य चरुं श्रपयति नेदेव प्रतिवेशमाज्यमधिश्रयति । श्रपयित्वाऽभिघार्योद्वास्यानक्ति स्थाल्यामाज्यमुद्वासयति स्रुवं च स्रुचं च सम्मार्ष्टि । अथैतं सोखमेव चरुमादायोदैति । स्थाल्यामाज्यमादायोदैति । स्रुवं च स्रुचं चादायोदैति । स इमामेव स्तीर्णां वेदिमभिमृश्य, परिधीन्परिधाय, यावतः शकलान् कामयते तावतोऽभ्यादधाति । अथैतं सोखमेव चरुमासादयति । स्थाल्यामाज्यमासादयति । स्रुवं च स्रुचं चासादयति । उपविशति होता होतृषदने । स्रुवं च स्रुचं चाददान आह ॥ ११ ॥

---

न हि प्रकृतौ सान्नाय्यात् प्राशित्रमवदीयते । उक्तमुपयोमक्रमं निगमयति—एतादिति । 'एतत्' खलु 'एकमयनं' गृहमेधीयस्यानुष्ठानमार्गः ॥ १० ॥

अन्यदप्ययनं दर्शयति—अथेदमिति । अस्मिन् पक्षेऽपि पूर्ववदेव **सैव स्तीर्णा वेदिर्भवती**त्यादेरर्थः । एतावांस्तु विशेषः—श्रपितस्य चरोर्द्वयोरुद्धरणम्, तत्र सार्पिरासेचनकरणम्, तदासेचनञ्चोत्पत्त्यैव न भवति, किन्तु यदा चरुं श्रपयति 'तत्' तदानीमेव 'प्रतिवेशं' समापनार्थं प्रतिनिधित्वेन निवेशनस्थानं प्रतिवेशः, तत्स्थानीयमाज्यम्; दक्षिणाग्नावाज्यस्थाल्यामधिश्रयेदित्यर्थः । **उद्वास्यानक्ती**ति । उद्वासनात् पूर्वमभिघार्य तदुत्तरकालमपि हविरञ्ज्यादित्यर्थः ॥

**सोखमेवे**ति । यस्यां स्थाल्यां चरुः श्रप्यते, तत्सहितमेव; न पुनः पात्रान्तरे धारणं कर्त्तव्यमित्यर्थः । **स्थाल्या-**

( ह्या ) अग्नयेऽनुब्रूहीति । ( त्या ) आग्नेयमाज्यभागꣳ स स्थाल्यै चतुरुज्यस्यावदायातिक्रामत्यतिक्रम्याश्राव्याहाग्निं यजेति वषट्कृते जुहोति १२

( त्यु ) अथाह सोमायानुब्रूहीति । सौम्यमाज्यभागꣳ स स्थाल्या एव चतुराज्यस्यावदायातिक्रामत्यतिक्रम्याश्राव्याह सोमं यजेति वषट्कृते जुहोति ॥ १३ ॥

( त्यु ) अथाह मरुद्भ्यो गृहमेधिभ्योऽनुब्रूहीति । स उपस्तृणीत आज्यमथास्य चरोर्द्विरवद्यत्यथोपरिष्टादाज्यस्याभिघारयति प्रत्यनक्त्यवदानेऽअतिक्रामत्यतिक्रम्याश्राव्याह मरुतो गृहमेधिनो यजेति वषट्कृते जुहोति १४

( त्यु ) अथाहाग्नये स्विष्टकृतेऽनुब्रूहीति । स उपस्तृणीत आज्यमथास्य चरोः सकृदवद्यत्यथोपरिष्टाद्द्विराज्यस्याभिघारयति न प्रत्यनक्त्यवदानमतिक्रामत्यतिक्रम्याश्राव्याहाग्निꣳ स्विष्टकृतं यजेति वषट्कृते जुहोति १५

( त्यु ) अथेडामेवावद्यति न प्राशित्रम् । ( मु ) उपहूय प्राश्नन्ति यावन्तो गृह्या हविरुच्छिष्टाशाः स्युस्तावन्तः प्राश्नीयुरथो अप्यृत्विजः प्राश्नीयु-

---

'अग्नयेऽनुब्रूहि' इति आग्नेयमाज्यभागम् । स स्थाल्यै चतुराज्यस्यावदायातिक्रामति । अतिक्रम्याश्राव्याह–'अग्निं यज' इति । वषट्कृते जुहोति ॥ १२ ॥

अथाह–'सोमायानुब्रूहि' इति । सौम्यमाज्यभागम् । स स्थाल्या एव चतुराज्यस्यावदायातिक्रामति । अतिक्रम्याश्राव्याह–'सोमं यज' इति । वषट्कृते जुहोति ॥ १३ ॥

अथाह–'मरुद्भ्यो गृहमेधिभ्योऽनुब्रूहि' इति । स उपस्तृणीत आज्यम् । अथास्य चरोर्द्विरवद्यति । अथोपरिष्टादाज्यस्याभिघारयति । प्रत्यनक्त्यवदाने अतिक्रामति । अतिक्रम्याश्राव्याह–'मरुतो गृहमेधिनो यज' इति । वषट्कृते जुहोति ॥ १४ ॥

अथाह–'अग्नये स्विष्टकृतेऽनुब्रूहि' इति । स उपस्तृणीत आज्यम् । अथास्य चरोः सकृदवद्यति । अथोपरिष्टाद् द्विराज्यस्याभिघारयति । न प्रत्यनक्त्यवदानम् । अतिक्रामति । अतिक्रम्याश्राव्याह–'अग्निं स्विष्टकृतं यज' इति । वषट्कृते जुहोति ॥ १५ ॥

अथेडामेवावद्यति, न प्राशित्रम् । उपहूय प्राश्नन्ति । यावन्तो गृह्या हविरुच्छिष्टाशाः स्युः–तावन्तः प्राश्नीयुः–अथो अप्यृत्विजः प्राश्नीयुः । अथो अप्यन्ये ब्राह्मणाः प्राश्नीयुः–यदि बहुरोदनः

---

माज्यमिति । स्थालीसहितमेव चरुं वेद्यामासाद्य, आज्यस्थालीतलगतमाज्यमप्यासादयेदित्यर्थः । आज्यभागादिषु यदाज्यकार्यं तत् सर्वं स्थालीगताज्यादेव कर्त्तव्यमिति । अयमेव पूर्वस्मात्पक्षादस्य पक्षस्य विशेषः, शिष्टं समानं पूर्वेण ॥ ११–१५ ॥

अथेडामेवावद्यतीति । इडोपह्वानानन्तरं यत् प्राशनम, तत्र विशेषमाह–यावन्त इति । गृहे भवा 'गृह्याः'

थो ऽअप्यन्ये ब्राह्मणाः प्राश्नीयुर्यदि बहुरोदनः स्यादथैतामनिराशितां कुम्भीमपिधाय निदधति पूर्णदर्व्याय मातृभिर्वत्सान्त्समवार्जन्ति तद्‌ पशवो मेधमात्मन्दधते यवाग्वैताꣳ रात्रिमग्निहोत्रं जुहोति निवान्यां प्रातर्दुहन्ति पितृयज्ञाय ॥ १६ ॥

( ग ) अथ प्रातर्हुते वाऽहुते वा । यतरथा कामयेत सोऽस्या ऽअनिरशितायै कुम्भ्यै दर्व्योपहन्ति पूर्णा दर्वि परापत सुपूर्णा पुनरापत । वस्नेव विक्रीणावहा ऽइषमूर्जꣳ शतक्रताविति यथा पुरोऽनुवाक्यैवमेषैतयैवैनमेतस्मै भागाय ह्वयति ॥ १७ ॥

---

स्यात् । अथैतामनिराशितां कुम्भीमपिधाय निदधति पूर्णदर्वाय । मातृभिर्वत्सान्त्समवार्जन्ति । तद्‌ पशवो मेधमात्मन्दधते । यवाग्वैतां रात्रिमग्निहोत्रं जुहोति। निवान्यां प्रातर्दुहन्ति पितृयज्ञाय॥१६॥

अथ प्रातर्हुते वाऽहुते वा—यतरथा कामयेत—सोऽस्या अनिराशितायै कुम्भ्यै दर्व्योपहन्ति ।"पूर्णा दर्वि परापत सुपूर्णा पुनरापत । वस्नेव विक्रीणावहा इषमूर्जं शतक्रतो"—( वा. सं. ३।४९ ) इति । यथा पुरोऽनुवाक्या—एवमेषा । एतयैवैनमेतस्मै भागाय ह्वयति ॥ १७ ॥

---

यजमानगृहे वर्त्तमानाः पुत्रपौत्रभ्रात्रादिरूपाः 'यावन्तः' सन्ति, 'तावन्तः' 'हविरुच्छिष्टाशाः' भवेयुः; अस्यैव विवरणं 'प्राश्नीयुः'—इति, हविःशेषं सर्वं प्राश्नीयुरित्यर्थः । 'अथो' अपि च 'ऋत्विजः अपि' 'प्राश्नीयुः' । 'अपि च' 'अन्ये' 'ये ब्राह्मणाः' आगताः, तेऽपि 'प्राश्नीयुः' । 'यदि' 'ओदनः' 'बहुः' अधिकः 'स्यात्' तदा अन्येषां प्राशनमित्यर्थः ।कुम्भीनिधानं विधत्ते—**अथैतामि**ति । निःशेषेण अशिता निरशिता, तद्विपरीता अनिरशिता ताम्, शेषसहितामित्यर्थः । तादृशीं कुम्भीं पात्रान्तरेण अपिधाय, 'पूर्णदर्वाय' हविषा पूर्णा दर्वी यस्मिन् कर्मणि, तत् पूर्णदर्वम्, तस्मै पूर्णदर्वाय कर्मणे, तदर्थं स्थापयेत् । अस्यां रात्रौ वत्सानां मातृभिः सह वासं विधत्ते—**मातृभिरि**ति । 'समवार्जन्ति' "अर्ज गतिस्थानार्जनेषु"—( धा. पा. भ्वा. प. २२४ ) संसृष्टान्कुर्युरित्यर्थः । **तद्‌ पशव** इति । 'तत्' तेन वत्ससङ्गमेन पशवोऽपि 'मेधम्' आत्मीयं सारम् 'आत्मन्' स्वात्मनि अस्यां रात्रौ 'दधते' धारयन्ति । अग्निहोत्रार्थमपि तस्यां रात्रौ पयो न दोग्धव्यमिति द्रव्यान्तरं विधत्ते—**यवाग्वैतामि**ति । एवं यजमानगृहवर्त्तिनां सर्वेषां वत्सानां मातृसमवार्जनप्रसक्तौ प्रातः पितृयज्ञार्थं दोह्याया निवान्याया गोर्वत्सस्य बन्धनं कर्त्तव्यमित्यभिप्रेत्याह—**निवान्यामि**ति । स्वयं नष्टवत्सा अन्यदीयेन वत्सेन या गौर्दुह्यते सा निवान्या, ताम् 'प्रातः' पितृयज्ञार्थं यतो दुहन्ति, अतस्तस्य वत्सस्य बन्धनं कर्त्तव्यमित्यध्याहृत्य योजनीयम् । अत एव कात्यायन आह—"मातृभिर्वत्सान्संसृज्य निवान्यावत्सं बध्नाति" इति ( का. श्रौ. सू. ५ । १७५ ) ॥ १६ ॥

पूर्णदर्वाख्यस्य कर्मणः कालं विधत्ते—**अथे**ति । 'प्रातः'—अग्निहोत्रे 'हुते वा अहुते वा' अनयोः पक्षयोः 'यतरथा' येन प्रकारेण 'कामयेत' तथैवानुष्ठेयमित्यर्थः। होमाय समन्त्रकं हविर्ग्रहणं विधत्ते—**सोऽस्या** इति।

---

१—प्राश्नन्ति युक्ताः । यजमानगृह्या हविरुच्छिष्टाशा ऋत्विजो ब्राह्मणाश्चान्ये बहुश्चेत् । का. श्रौ. सू. ५ । १७० । १७१ ।
२—आरिक्ताꣳ स्थालीं निदधाति । का. श्रौ. सू. ५।१७२।३—प्रातर्हुत्वाऽहुत्वा स्थाल्या दर्व्यादत्ते पूर्णा दर्व्यीति । का. श्रौ.सू. ५।१७७।

( त्य ) अथर्षभमाह्वयितवै ब्रूयात् । ( त्स ) स यदि रुयात्स वषट्कार ऽइत्यु हैक ऽआहुस्तस्मिन्वषट्कारे जुहुयादित्यथो ऽइन्द्रमेवैतत्स्वेन रूपेण ह्वयति वृत्रस्य वधायैतद्वा ऽइन्द्रस्य रूपं यदृषभस्तत्स्वेनैवैनमेतद्रूपेण ह्वयति वृत्रस्य वधाय स यदि रुयाद्वा मऽइन्द्रो यज्ञमगन्त्सेन्द्रो मे यज्ञ ऽइति ह विद्याद्यद्यु न रुयाद्ब्राह्मण एव दक्षिणत ऽआसीनो ब्रूयाज्जुहुधीति सैवैन्द्री वाक् ॥ १८ ॥

अथर्षभमाह्वयितवै ब्रूयात् । स यदि रुयात्—स वषट्कारः—इत्युहैक आहुः । तस्मिन् वषट्कारे जुहुयादिति । अथो इन्द्रमेवैतत् स्वेन रूपेण ह्वयति—वृत्रस्य वधाय । एतद्वा इन्द्रस्य रूपं यदृषभः । तत्स्वेनैव रूपेण ह्वयति—वृत्रस्य वधाय । स यदि रुयात्,—आ म इन्द्रो यज्ञमगन्, सेन्द्रो मे यज्ञः—इति ह विद्यात् । यद्यु न रुयाद्—ब्राह्मण एव दक्षिणत आसीनो ब्रूयात्—'जुहुधि' इति । सैवैन्द्री वाक् ॥१८॥

षष्ठ्यर्थे चतुर्थी । सोखायाः गृहमेधीयकुम्भ्याः सकाशात् "पूर्णा दर्वि"—इति मंत्रेण दर्व्या आघातेन 'उपहन्ति' गृह्णीयात् । मन्त्रस्यायमर्थः—हे 'दर्वि'! प्रथमं हविषा 'पूर्णा' सती अस्याः सकाशात् 'परापत' परागच्छ, देवान् प्राप्नुहि, पुनः कर्मफलेन 'सुपूर्णा'—सती अमुतः सकाशात् अस्मान् पुनरागच्छ, हे 'शतक्रतो' इन्द्र! 'वस्ना' वसुना मूल्येन 'इव' आवाम् 'इषम्' इष्यमाणम् अन्नम् 'ऊर्जम्' बलकरं रसं च 'विक्रीणावहै' त्वया दत्तं फलं स्वीकृत्य हविर्दास्यामि त्वयि; मया दत्तं हविर्गृहीत्वा मह्यं फलं दास्यसि त्वम्; एवं व्यतिहारेण कर्म क्रीणावहा इत्यर्थः । एतन्मन्त्रोच्चारणं प्रशंसति—**यथेति** । 'एनम्' इन्द्रम् 'एतस्मै' पूर्णदर्वाख्याय 'भागाय' पुरोनुवाक्यास्थानीयया पुरोवक्तव्यया एतया 'आ-ह्वयति' आकारयति ॥ १७ ॥

ऋषभध्वनौ होतव्यमिति विधित्सुराह—**अथेति** । 'आह्वयितवै' आह्वातुम् "तुमर्थे सेसेनसे"—( पा. सू. ३ । ४ । ९ ) इति तवै-प्रत्ययः । **स यदी**त्यादि । 'सः' आहूतः ऋषभः, 'यदि' 'रुयात्' शब्दं कुर्यात् । "रु शब्दे"—( धा. पा. अ. प. २४) इति धातुः । तद्ध्वनिर्वषट्कारात्मक इति केचिदाहुः । तथा च तैत्तिरीयकम्—"ऋषभमाह्वयति, वषट्कार एवास्य स इति कथयन्ति" इति । अतः तस्मिन् वषट्कारे हविर्जुहुयादित्येकं मतम् ॥

पक्षान्तरमाह—**अथो** इति । योऽयमृषभस्य ध्वनिः, नासौ वषट्कारः, किन्तु इन्द्रस्य स्वभूतेन ऋषभाख्येन रूपेण तमेव 'इन्द्रम्' एतेन शब्देन 'ह्वयति' किमर्थम् 'वृत्रस्य वधाय' वृत्रमसुरं हन्तुमित्यर्थः । वृत्रस्येति कर्मणि षष्ठी । "तुमर्थाच्च भाववचनात्"—( पा. सू. २ । ३ । १५ ) इति वधशब्दाच्चतुर्थी । एतदेव विवृणोति—**एतद्वा** इति । अभिभवनशीलवृषभ 'इन्द्रस्य रूपम्' । नहीन्द्रादन्यस्याभिभवनसामर्थ्यमस्तीत्यभिप्रायः । **स यदी**त्यादि । 'यदि' 'सः' ऋषभः शब्दं कुर्यात् तदा "आ म इन्द्रो यज्ञमगन्" आगमत्, तथा च मदीयो यज्ञः इन्द्रसहितोऽभवदिति 'विद्यात्' जानीयात् । यज्ञे ऋषभस्य शब्दाकरणेऽनुष्ठानप्रकारमाह—**यद्यु नेति** । 'यदि'

१–ऋषभमाह्वयितवै ब्रूयात् । का. श्रौ. सू ५ । १७८ । २–रुते जुहोति । का. श्रौ. सू. ५ । १७९ ।

( क्ष ) स जुहोति । देहि मे ददामि ते नि मे धेहि नि ते दधे ॥ निहारं च हरासि मे निहारं निहराणि ते स्वाहेति ॥ १९ ॥

( त्र ) अथ मरुद्भ्यः क्रीडिभ्यः सप्तकपालं पुरोडाशं निर्वपति । मरुतो ह वै क्रीडिनो वृत्रꣳ हनिष्यन्तमिन्द्रमागतं तमभितः परिचिक्रीडुर्महयन्तस्तथो एवैतं पाप्मानं द्विषन्तं भ्रातृव्यꣳ हनिष्यन्तमभितः परिक्रीडन्ते महयन्तस्तस्मान्मरुद्भ्यः क्रीडिभ्योऽथातो महाहविष एव तद्यथा महाहविषस्तथो तस्य ॥ २० ॥

इति चतुर्थप्र० चतुर्थं ब्राह्मणम् ॥४॥४॥ (९–३) समाप्तोऽयं चतुर्थप्र० ॥

---

स जुहोति " देहि मे—ददामि ते, नि मे धेहि—नि ते दधे । निहारं च हरासि मे—निहारं निहराणि ते—स्वाहा " ( वा. सं. ३ । ५० ) इति ॥ १९ ॥

अथ महाहविर्यागः ।

अथ मरुद्भ्यः क्रीडिभ्यः सप्तकपालं पुरोडाशं निर्वपति । मरुतो ह वै क्रीडिनो वृत्रं हनिष्यन्तमिन्द्रमागतं तमभितः परिचिक्रीडुः महयन्तः । तथो एवैतं पाप्मानं द्विषन्तं भ्रातृव्यं हनिष्यन्तमभितः परिक्रीडन्ते महयन्तः । तस्मान्मरुद्भ्यः क्रीडिभ्यः । अथातो महाहविष एव तद् यथा महाहविषः—तथो तस्य ॥ २० ॥

---

तु 'म' 'रुयात्' शब्दं कुर्यात्, तदा 'दक्षिणतः' उपविष्टः 'ब्राह्मणः' ब्रह्मैव, 'जुहुधीति' अध्वर्युं प्रति 'ब्रूयात्' शंसेद् 'सैव' 'ऐन्द्री' इन्द्राह्वानार्था वाक् ॥ १८ ॥

अथ समन्त्रकं होमं विधत्ते—स जुहोतीति । दर्व्यां गृहीतं हविः " देहि मे "—इति मन्त्रेण तथैव दर्व्या आहवनीये जुहुयात् । मन्त्रस्यायमर्थः । इन्द्रो ब्रवीति—हे यजमान ! त्वं 'मे' मह्यं प्रथमं हविः 'देहि', अहमपि 'ते' तुभ्यम् इष्टं फलं 'ददामि' तथा त्वं 'मे' मह्यं 'हविः' 'निधेहि' नियमेन हि ह्रियत इति निहारो मूल्यद्रव्यम् 'निहारं' हविषो मूल्यभूतम् फलस्य मूल्यभूतं अहमपि तुभ्यं फलं 'निदधे', निदधामि, नियच्छामि नितरां धारय, हविः; 'च'—शब्दश्चेदर्थे, त्वं चेत् प्रथमं 'हरासि' हरेः, दद्या इत्यर्थः । हरतेर्लेट्याडागमः; अनन्तरमेव 'ते' तुभ्यम् अहमपि 'निहारं' हविषो मूल्यभूतं फलं 'निहराणि' नितरां प्रापयामि 'स्वाहा' इदं हविः स्वाहुतमस्तु इति । एतत् सर्वं कात्यायनेन सूत्रितम्—" प्रातर्हुत्वाऽहुत्वा वा स्थाल्या दर्व्यादत्ते पूर्णा दर्वीति, ऋषभमाह्वयितवै ब्रूयाद्, रुते जुहोति, अव्याहरति ब्रह्मा जुहुधीत्याह, देहि म इति जुहोति "—इति ( का. श्रौ. सू. १७७–१८१ ) ॥ १९ ॥

एतदनन्तरकर्त्तव्यामिष्टिं विधत्ते—अथेति । क्रीडन्तीति क्रीडिनः एतद्गुणविशिष्टेभ्यः 'मरुद्भ्यः' सप्तसु कपालेषु संस्कृतं पुरोडाशं निर्वपेदित्यर्थः । क्रीडिन इति मरुतां यथार्थं विशेषणमिति प्रतिपादयति—मरुतो ह वा

---

१–अव्याहरति ब्रह्मा जुहुधीत्याह । का. श्रौ. सू. ५ । १८० । २–तथैव इति पा. । ३–मरुद्भ्यः क्रीडिभ्यः सप्तकपालः । का. श्रौ. सू. ५ । १८२ ।

# अथ पञ्चम प्रपाठके प्रथमं ब्राह्मणम् ।

महाहविषा ह वै देवा वृत्रं जघ्नुः । ( स्ते ) तेनो ऽएव व्यजयन्त येयमेषां विजितिस्तां तथो ऽएवैष एतेन पाप्मानं द्विषन्तं भ्रातृव्यꣳ हन्ति तथो एव विजयते तस्माद्वा ऽएष ऽएतेन यजते ॥ १ ॥

तस्यावृत् । ( ड ) उपकिरन्त्युत्तरवेदिं गृह्णन्ति पृषदाज्यं मन्थन्त्यग्निं नवप्रयाजं भवति नवानुयाजं त्रीणि समिष्टयजूꣳषि भवन्त्यथैतान्येव पञ्च हवीꣳषि भवन्ति ॥ २ ॥

---

महाहविषा ह वै देवा वृत्रं जघ्नुः । तेनो एव व्यजयन्त येयमेषां विजितिः—ताम् । तथो एवैष एतेन पाप्मानं द्विषन्तं भ्रातृव्यं हन्ति—तथो एव विजयते । तस्माद् वा एष एतेन यजते ॥ १ ॥

तस्यावृत् । उपकिरन्त्युत्तरवेदिम्, गृह्णन्ति पृषदाज्यम्, मन्थन्त्यग्निम् । नवप्रयाजं भवति, नवानुयाजम्, त्रीणि समिष्टयजूंषि भवन्ति । अथैतान्येव पञ्च हवींषि भवन्ति ॥ २ ॥

---

इत्यादिना । वृत्रं हन्तुमुद्युक्तमिन्द्रमभितो यस्माद् 'परिचिक्रीडुः' क्रीडितवन्तः, तस्मादेतेषां 'क्रीडिन' इति नाम संपन्नम् । इदानीं कृतस्य साकमेधेन हविषा वक्ष्यमाणस्य समीपे मरुतां क्रीडनं प्रतिपाद्यते—तथो एवेत्यादिना । तस्मादिन्द्रवद्यजमानस्य समीपे क्रीडनशीलेभ्यो मरुद्भ्यो यागः कर्त्तव्यः । साकमेधेषु प्रधानभूताया महाहविराख्याया इष्टेरारम्भं प्रतिजानीते—अथातं इति । यतोऽनुष्ठानकालः प्राप्तः, अतः प्राप्तावसरत्वात् महाहविषः प्रयोगोऽधिकरिष्यत इत्यर्थः । वरुणप्रवासतन्त्रं तत्रातिदिशति—तद्यथेति । तत्र 'महाहविषः महान्ति बहूनि हवींषि यत्र, महाहविर्वरुणप्रवासाख्यो यागः, 'तस्य' वक्ष्यमाणस्य महाहविराख्यस्य यागस्य 'यथा' एवमिति सम्बन्धः । तस्य पूर्वोक्तस्य वरुणप्रवासस्य हविषो यथाऽनुष्ठानम्, तथैव महाहविषो वक्ष्यमाणस्यापीति ॥ २० ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये
द्वितीयकाण्डे पञ्चमेऽध्याये तृतीयं ब्राह्मणम् ॥ २—५—३ ॥

अथ तस्य महाहविषः प्रयोगक्रमं विधित्सुः प्राग् "एतैर्वै देवा वृत्रमघ्नन्"—इत्यादिना यत् साकमेधानां फलं प्रतिपादितम्, तत्फलं महाहविष एव साक्षात् साधनत्वमिति प्रतिपादयति—महाहविषा ह वा इत्यादिना । महत्त्वगुणविशिष्ट इन्द्रो देवता यस्मिन् यागे तत्साधनं हविः महाहविः । अन्यद् व्याख्यातम् ॥ १ ॥

तस्य प्रयोगमनुक्रामति—तस्यावृदित्यादिना । आवृच्छब्दः क्रियावाची । उत्तरवेदीनिवपनपृषदाज्यग्रहणाग्निमन्थनादीनि वरुणप्रवासवदेवात्रापि कार्याणीत्याह—उपकिरन्तीत्यादिना । अत एव सूत्रकृतोक्तम्—"उत्तरवेद्यग्निप्रणयनमन्थनपृषदाज्यञ्च वरुणप्रवासवत्"—( का.श्रौ. सू. ५ । १८८ ) इति । अथैतान्येवेति । यानि वैश्वदेवेऽनुक्रान्तानि आग्नेयादीनि पञ्च सञ्चराणि हवींषि 'एतानि एव' अत्रापि कर्त्तव्यानि भवन्तीत्यर्थः ॥ २ ॥

---

१—अदित्यै चरुरन्यत्रापि । का. श्रौ. सू. ५ । १८३ ।

स यदाग्नेयोऽष्टाकपालः पुरोडाशो भवति । ( त्य ) अग्निना ह वा ऽएनं तेजसाऽघ्नन्त्स तेजोऽग्निर्नाव्यथत तस्मादाग्नेयो भवति ॥ ३ ॥

( त्य ) अथ यत्सौम्यश्चरुर्भवति । सोमेन ह वाऽएनꣳ राज्ञाऽघ्नन्त्सोमराजान एव तस्मात्सौम्यश्चरुर्भवति ॥ ४ ॥

( त्य ) अथ यत्सावित्रः । ( त्रो ) द्वादशकपालो वाऽष्टाकपालो वा पुरोडाशो भवति सविता वै देवानां प्रसविता सवितृप्रसूता हैवैनमघ्नंस्तस्मात्सावित्रो भवति ॥ ५ ॥

( त्य ) अथ यत्सारस्वतश्चरुर्भवति । वाग्वै सरस्वती वाग्घ हैवानुममाद प्रहर जहीति तस्मात्सारस्वतश्चरुर्भवति ॥ ६ ॥

---

स यदाग्नेयो ( १ ) ऽष्टाकपालः पुरोडाशो भवति । अग्निना ह वा एनं तेजसाऽघ्नन् । स तेजोऽग्निर्नाव्यथत । तस्मादाग्नेयो भवति ॥ ३ ॥

अथ यत्सौम्यश्चरुर्भवति ( २ ) । सोमेन ह वा एनं राज्ञाऽघ्नन् । सोमराजान एव । तस्मात्सौम्यश्चरुर्भवति ॥ ४ ॥

अथ यत्सावित्रो ( ३ ) द्वादशकपालो वाऽष्टाकपालो वा पुरोडाशो भवति । सविता वै देवानां प्रसविता । सवितृप्रसूता हैवैनमघ्नन् । तस्मात्सावित्रो भवति ॥ ५ ॥

अथ यत्सारस्वतश्चरुर्भवति ( ४ ) । वाग्वै सरस्वती । वाग्घ हैवानुममाद–' प्रहर, जहि ' इति । तस्मात्सारस्वतश्चरुर्भवति ॥ ६ ॥

---

तत्राग्नेयमनूद्य स्तौति–**स यदि**ति । **एनं तेजसाऽघ्नन्नि**ति । पुरा खलु देवाः ' अग्निना ' अग्निलक्षणेन ' तेजसा ' ' एनं ' वृत्रम् 'अघ्नन्' अहिंसन् ' सः ' च तेजोरूपः ' अग्निः ' ' न अव्यथत ' व्यथितः पीडितो नाभवत् । तस्मादाग्नेययागस्य प्राथम्यं युक्तम् ॥ ३ ॥

सौम्यं हविरनूद्य स्तौति–**अथ यदि**ति । **सोमराजान एवे**ति । सोमो राजा येषां ते तथोक्ताः " राजाहःसखिभ्यष्टच् "–( पा. सू. ५ । ४ । ९१ ) । इति टच्–समासान्तो न भवति; तत्पुरुषाधिकारात् । सोमराजेनाधिष्ठिता देवाः, तेनैव ' राज्ञा सोमेन ' ' एनं ' वृत्रम् ' अघ्नन् ' अहिंसन्नित्यर्थः ॥ ४ ॥

तृतीयं हविरनूद्य स्तौति–**अथ यत् सावित्र** इति । **द्वादशकपालोऽष्टाकपालो वे**ति । कपालसङ्ख्याया विकल्पः । **सवितृप्रसूता** इति । यतः सवित्रा देवेन प्रेरिता एव देवाः ' एनं ' वृत्रम् ' अघ्नन् ' तस्मात्सावित्रयागः कर्त्तव्यः ॥ ५ ॥

चतुर्थं हविरनूद्य स्तौति–**अथ यत् सारस्वत** इति । **वाग्घ हैवे**ति । वागात्मिका हि सरस्वती सैव खलु वाक् वृत्रं हनिष्यन्तमिन्द्रम् ' अनुममाद ' हृष्टा बभूव । अनुमदनप्रकारमाह–हे इन्द्र ! ' प्रहर ' वज्रेण वृत्रं

---

१–' सावित्रोऽष्टाकपालो द्वादशकपालो वा । का० श्रौ० सू० ५ । ४ ।

( त्यु ) अथ यत्पौष्णश्चरुर्भवति । ( ती ) इयं वै पृथिवी पूषेयꣳ हैवैनं व्वधाय प्रति प्रददावनया हैवैनं प्रतिप्रत्तं जघ्नुस्तस्मात्पौष्णश्चरुर्भवति ॥७॥

( त्यु ) अथैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति । ( त्ये ) एतेन हैवैनमघ्नंस्तेजो वा अग्निरिन्द्रियं व्वीर्यमिन्द्र एताभ्यामेनमुभाभ्यां व्वीर्याभ्यामघ्नन्ब्रह्म वाऽअग्निः क्षत्रमिन्द्रस्तेऽउभे सꣳरभ्य ब्रह्म च क्षत्रं च सयुजौ कृत्वा ताभ्यामेनमुभाभ्यां व्वीर्याभ्यामघ्नंस्तस्मादैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति ॥ ८ ॥

---

अथ यत् पौष्णश्चरुर्भवति ( ९ ) । इयं वै पृथिवी पूषा, इयं हैवैनं वधाय प्रतिप्रददौ । अनया हैवैनं प्रतिप्रत्तं जघ्नुः । तस्मात् पौष्णश्चरुर्भवति ॥ ७ ॥

अथैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति ( ६ ) । एतेन हैवैनमघ्नन् । तेजो वा अग्निः, इन्द्रियं वीर्यमिन्द्रः । एताभ्यामेनमुभाभ्यां वीर्याभ्यामघ्नन् । ब्रह्म वा अग्निः, क्षत्रमिन्द्रः, ते उभे संरभ्य, ब्रह्म च क्षत्रं च सयुजौ कृत्वा ताभ्यामेनमुभाभ्यां वीर्याभ्यामघ्नन् । तस्मादैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति ॥ ८ ॥

---

ताडय, ततस्तं ' जहि ' मारयेति । जहीति हन्तेर्लोटि मध्यमैकवचने " हन्तेर्जः "–( पा. सू. ६ । ४ । ३६ ) इति जादेशः तस्य " असिद्धवदत्राभात् "–( पा. सू. ६ । ४ । २२ ) इति असिद्धत्वात् हेर्लुग् न भवति ॥ ६ ॥

पञ्चमं हविरनूद्य स्तौति–**अथ यत् पौष्णश्चरुर्भवतीति** । **इयं वै पृथिवीत्यादि** । इयमेव हि पृथिवी पोषयति भूतजातानीति पूषा, इयमेव खलु ' एनं ' वृत्रं ' वधाय ' हननाय ' प्रतिप्रददौ ' प्रत्यर्पयामास, अतः ' अनयैव ' पृथिव्या साधनेन ' एनं ' वृत्रं देवाः ' प्रतिजघ्नुः ' प्रत्येकं हतवन्त इत्यर्थः ॥ ७ ॥

षष्ठं हविर्विधत्ते–**अथैन्द्राग्न** इति । **एतेन** हेत्यादि । 'एतेन' इन्द्राग्निदेवताकेन यागेन । इन्द्राग्न्योर्वृत्रहनन-हेतुत्वमुपपादयति–**तेजो वा अग्निरित्यादिना** । योऽयम् ' अग्निः ' स दहनसमर्थः ' तेजः ' यदिदं पुरुषे प्रविष्टम् ' इन्द्रियम् ' इन्द्रलिङ्गम्, इन्द्रेण दत्तं 'वीर्यम, ' तदात्मक इन्द्रः; तथा च ' एताभ्याम् उभाभ्याम् ' इन्द्राग्निसम्बन्धिभ्याम् ' एनं ' वृत्रम् देवाः ' अघ्नन् ' तस्मादैन्द्राग्नो यागो युक्त इत्यर्थः ॥

प्रकारान्तरेण स्तौति–**ब्रह्म वा अग्निरिति** । ' अग्निः, ' ' ब्रह्म ' ब्राह्मणजातिः; ब्राह्मणेन सह प्रजापति-मुखादुत्पन्नत्वात् । ' इन्द्रः, ' 'क्षत्रम्' क्षत्रियजातिः; प्रजापतेरुरसो बाहुभ्यां च सकाशात् क्षत्रियेण सहोत्पत्तेः । ' ते उभे ' ब्रह्मक्षत्रे ' संरभ्य ' अवलम्ब्य ' सयुजौ ' परस्परं सहायभूते ' कृत्वा ' ' ताभ्यामुभाभ्यां ' ब्रह्म-क्षत्रसम्बन्धिभ्यां वीर्याभ्याम् ' एनं ' वृत्रम् ' अघ्नन् ' ॥ ८ ॥

---

१–नित्येभ्योऽधिकान्यैन्द्राग्नो माहेन्द्रश्चरुर्वैश्वकर्म्मण एककपालः । का. श्रौ. सू. ५ । १८७ ।

( त्यु ) अथ माहेन्द्रश्चरुर्भवति । ( त्री ) इन्द्रो वा ऽएष पुरा वृत्रस्य वधादथ वृत्रᳫंहत्वा यथा महाराजो विजिग्यानऽएवं महेन्द्रोऽभवत्तस्मान्माहेन्द्रश्चरुर्भवति महान्तमु चैवैनमेतत्खलु करोति वृत्रस्य वधाय तस्माद्वेव माहेन्द्रश्चरुर्भवति ॥ ९ ॥

( त्यु ) अथ वैश्वकर्मण ऽएककपालः पुरोडाशो भवति । विश्वं वा ऽएतत्कर्म कृतᳫं सर्व्वं जितं देवानामासीत्साकमेधैरीजानानां विजिग्यानानां विश्वम्वेवैतस्यैतत्कर्म कृतᳫं सर्व्वं जितं भवति साकमेधैरीजानस्य विजिग्यानस्य तस्माद्वैश्वकर्मण ऽएककपालः पुरोडाशो भवति ॥ १० ॥

---

अथ माहेन्द्रश्चरुर्भवति ( ७ ) । इन्द्रो वा एष पुरा वृत्रस्य वधात् । अथ वृत्रं हत्वा—यथा महाराजो विजिग्यानः—एवं महेन्द्रोऽभवत् । तस्मान्माहेन्द्रश्चरुर्भवति । महान्तमु चैवैनमेतत् खलु करोति—वृत्रस्य वधाय । तस्माद्वेव माहेन्द्रश्चरुर्भवति ॥ ९ ॥

अथ वैश्वकर्मण एककपालः पुरोडाशो भवति (८) । विश्वं वा एतत् कर्म कृतम्, सर्वं जितं देवानामासीत् साकमेधैरीजानानां विजिग्यानानाम् । विश्वम्वेवैतस्यैतत् कर्म कृतम्, सर्वं जितं भवति—साकमेधैरीजानस्य विजिग्यानस्य । तस्माद्वैश्वकर्मण एककपालः पुरोडाशो भवति ॥ १० ॥

---

सप्तमं हविर्विधत्ते—**अथ माहेन्द्रश्चरुर्भवतीति** । ( का. श्रौ. सू. ५ । १८७ ) । महांश्चासाविन्द्रो महेन्द्रः "आन्महतः"—( पा. सू. ६ । ३ । ४६ ) इत्यात्त्वम् । महेन्द्रो देवता अस्य माहेन्द्रः "महेन्द्राद्घाणौ च" ( पा. सू. ४ । २ । २९ ) इत्यण् । अस्येन्द्रस्य महत्त्वमुपपादयति—**इन्द्रो वा एष** इति । वृत्रवधात् पूर्वं केवल इन्द्र एवासीत्, स च तं हत्वा 'महेन्द्रोऽभवत्' 'यथा' शत्रुं 'विजिग्यानः' विजितवान् राजा 'महाराजः' इत्याख्यायते, तद्वत् 'विजिग्यानः' विपूर्वाज्जयतेः "विपराभ्यां जेः" ( पा. सू. १।३।१९ ) इत्यात्मनेपदम्, लिटः कानच्, "सन् लिटोर्जेः" ( पा. सू. ७ । ३ । ५७ ) इत्यभ्यासादुत्तरस्य कुत्वम् ॥

**महान्तमु चैवैनमिति** । प्रकारान्तरेण स्तुतिः । महत्त्वेनेन्द्रस्य विशेषणान्महान्तमेवैनं कृतवान् भवतीत्यर्थः । **तस्मद्वु एवेति** । 'उ'—शब्दोऽप्यर्थे । तस्मादपि महत्कर्मकरणाद्धेतोरित्यर्थः ॥ ९ ॥

अष्टमं हविर्विधत्ते—**अथ वैश्वकर्मण** इति ( का. श्रौ. सू. ५ । १८७ ) । विश्वं सर्वं जगत् कर्म कार्यं यस्य स विश्वकर्मा देवता अस्यासौ 'वैश्वकर्मणः' । 'साऽस्य देवता'—( पा. सू. ४ । २ । २४ ) इत्यणि "अन्"—( पा. सू. ६ । ४ । १६७ ) इति प्रकृतिवद्भावः । एतस्य हविषो विश्वकर्म्मदेवताकत्वं प्रशंसति—**विश्वं वा एतदित्यादिना** । साकमेधैः यागैः 'ईजानानाम्' इष्टवतां 'विजिग्यानानां' वृत्रं विजितवतां 'देवानाम्' 'एतत्' 'विश्वं' सकलं 'कर्म' निरवशेषं 'कृतम्' अनुष्ठितम्, 'जितम्' प्राप्तफलं च 'आसीत्' । दार्ष्टान्तिके योजयति—**विश्वम्वेवेति** । 'उ'—शब्दोऽप्यर्थः, शिष्टमुक्तार्थम् ॥ १० ॥

( त्ये ) एतेन वै देवाः । ( ० ) यज्ञेनेष्ट्वा येयं देवानां प्रजातिर्या श्रीरेतद्बभूवुरेताᳬं ह वै प्रजातिं प्रजायत एताᳬं श्रियं गच्छति य ऽएवं विद्वानेतेन यज्ञेन यजते तस्माद्वाऽएतेन यजेत ॥ ११ ॥

इति पञ्चमप्रपाठके प्रथमं ब्राह्मणम् ॥५॥ १ ॥(५।४)

---

एतेन वै देवा यज्ञेनेष्ट्वा येयं देवानां प्रजातिः, या श्रीः—एतद्बभूवुः । एतां ह वै प्रजातिं प्रजायते, एतां श्रियं गच्छति—य एवं विद्वानेतेन यज्ञेन यजते । तस्माद्वा एतेन यजेत ॥ ११ ॥

इति साकमेधपर्वणि महाहविर्यागः ।

---

उपक्रमावसरायोदीरितफलसाधनत्वमस्य निगमयति—**एतेन वा** इति । येयं[1] देवानां 'प्रजातिः' 'श्रीः' च दृश्यते, 'एतेन' अनेनैव हि महाहविषा 'यज्ञेन' 'इष्ट्वा' तया प्रजात्या श्रिया च 'बभूवुः' प्रवृद्धा अभवन् । यद्वा, 'भू प्राप्तावात्मनेपदी' ( धा. पा. चु. आ. २११ ) अत्र व्यत्ययेन परस्मैपदी; एतदुभयं प्रापुरित्यर्थः । **एतां ह वा** इत्यादि, निगदसिद्धम् ॥ ११ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये
द्वितीयकाण्डे पञ्चमाध्यायस्य चतुर्थं ब्राह्मणम् ॥ ( २–५–४ )

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन्[2] पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपसहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥ १ ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान् गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजाः,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥

---

१–'येषाम्' इ. पा. । २–'सप्ताद्रीन्'–इ० क. पुस्तके ।

# षष्ठाध्याये प्रथमं ब्राह्मणम् ।

महाहविषा ह वै देवा वृत्रं जघ्नुः । ( स्ते ) तेनोऽएव व्यजयन्त येयमेषां विजितिस्तामथ यानेवैषां तस्मिन्त्सङ्ग्रामेऽघ्नंस्तान्पितृयज्ञेन समैरयन्त पितरो वै त ऽआसंस्तस्मात्पितृयज्ञो नाम ॥ १ ॥

तद्वसन्तो ग्रीष्मो वर्षाः । ( ऽ ) एते ते ये व्यजयन्त शरद्धेमन्तः शिशिरस्त ऽउ ते यान्पुनः समैरयन्त ॥ २ ॥

( न्ता ) अथ यदेष ऽएतेन यजते । तन्नाह न्वेवैतस्य तथा कंचन घ्नन्तीति देवा ऽअकुर्वन्निति न्वेवैष ऽएतत्करोति यमु चैवैभ्यो देवा भागमकल्पयंस्तमु चैवैभ्य ऽएष ऽएतद्भागं करोति यानु चैव देवाः समैरयन्त तानु चैवैतदवति स्वानु चैवैतत्पितॄञ्छ्रेयाꣳसं लोकमुपोन्नयति यद्व चैवा-

---

अथ पितृयज्ञः ।

महाहविषा ह वै देवा वृत्रं जघ्नुः । तेनो एव व्यजयन्त—येयमेषां विजितिः—ताम् । अथ यानेवैषां तस्मिन् सङ्ग्रामेऽघ्नन्, तान् पितृयज्ञेन समैरयन्त । पितरो वै त आसन्—तस्मात् पितृयज्ञो नाम ॥ १ ॥

तद्वसन्तो, ग्रीष्मो, वर्षाः । एते ते—ये व्यजयन्त । शरद्धेमन्तः शिशिरः । त उ ते—यान्पुनः समैरयन्त ॥ २ ॥

अथ यदेष एतेन यजते । तन्नाह न्वेवैतस्य तथा कंचन घ्नन्तीति देवा अकुर्वन् । इति न्वेवैष एतत् करोति—यमु चैवैभ्यो देवा भागमकल्पयन् । तमु चैवैभ्य एष एतद्भागं करोति । यानु चैव देवाः

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अथ पिण्डपितृयज्ञं विधित्सुः पितॄणामुत्पत्तिमाह—**महाहविषा ह वा** इत्यादि । **येयमेषां विजितिरिति** । व्यजयन्तेति सम्बन्धः । **अथ यानित्यादि** । ‘ तस्मिन् ’ वृत्रासुरयुद्धे ‘एषां’ देवानां मध्ये ‘ यान् ’ ‘ एव ’ असुराः ‘ अघ्नन् ’ अमारयन्, ‘ तान् ’ हतान् देवान् पितृयज्ञाख्येन वक्ष्यमाणेन कर्मणा ‘ समैरयन्त ’ समागच्छन्त । ते मृताः पितृदेवता एव अभवन् । पितॄनुद्दिश्य क्रियमाणत्वात्‘ पितृयज्ञः ’ इति अन्वर्थेयं संज्ञेत्याह—**तस्मादिति** ॥ १ ॥

**तद्वसन्त** इत्यादि । ‘ तत् ’ तत्र ‘ ये ’ देवाः ‘ व्यजयन्त ’ विजयमेव प्राप्ताः, न पुनरसुरेण हताः ‘ ते ’ वसन्ताद्यृतुत्रयात्मकाः ‘ यान् ’ हतवन्तः, ‘ ते ’ पितृयज्ञेन ‘ समैरयन्त ’ समगच्छन्, ‘ ते ’ एव शरदाद्यास्त्रय ऋतवः एतेषामनुरूपत्वप्रतिपादनम् उपरिष्टात् “ ऋतवः पितरः ”—इति करिष्यमाणस्तुत्योपोद्घातत्वेन ॥ २ ॥

इदानीन्तनानुष्ठानस्यापि उक्तफलसाधनत्वमाह—**अथ यदिति** । ‘ अथ ’ इदानीमपि ‘ एष ’ यजमानः

स्यात्रात्मनोऽनुचरणेन हन्यते वा मीयते वा तदु चैवास्यैतेन पुनराप्यायते तस्माद्वा ऽएष ऽएतेन यजते ॥ ३ ॥

स पितृभ्यः सोमवद्भ्यः । षट्कपालं पुरोडाशं निर्व्वपति सोमाय वा पितृमते षड्वा ऽऋतव ऽऋतवः पितरस्तस्मात्षट्कपालो भवति ॥ ४ ॥

---

समैरयन्त—तानु चैवैतदवति । स्वानु चैवैतत् पितॄञ्छ्रेयांसं लोकमुपोन्नयति । यदु चैवास्यात्रात्मनोऽनुचरणेन हन्यते वा मीयते वा, तदु चैवास्यैतेन पुनराप्यायते । तस्माद्वा एष एतेन यजते ॥ ३ ॥

स पितृभ्यः सोमवद्भ्यः ( १ ) षट्कपालं पुरोडाशं ( १ ) निर्वपति, सोमाय ( १ ) वा पितृमते । षड् वा ऋतवः, ऋतवः पितरः—तस्मात् षट्कपालो भवति ॥ ४ ॥

---

'एतेन' पितृयज्ञेन 'यजते' इति 'यत्' 'तत्' तस्मात् । 'अह' 'नु' 'एव' इति त्रयो निपाताः । 'एतस्य' यजमानस्य सम्बन्धिनं 'कञ्चन' 'चन'—शब्दोऽप्यर्थे, कमपि पुरुषं 'न' एव 'घ्नन्ति' असुरादयो न मारयन्ति । तत्र कृतानुकरत्वे हेतुमाह—**इति देवा** इति । इत्थं 'देवाः' पुरा 'अकुर्वन्' पितृयज्ञाख्यं कर्म । 'नु' शब्दोप्यर्थे । एष यजमानोऽपि इत्येवमेव एतत्पितृयज्ञाख्यं कर्म करोति । देवैर्येन प्रकारेणानुष्ठितम्, तेनैव प्रकारेणानुतिष्ठति, न स्वातन्त्र्येण किञ्चित् करोतीत्यर्थः । तदेव द्रव्यदेवतासाम्यं प्रतिपादयन्विवृणोति—**यमु चैवैभ्य** इत्यादिना । 'एभ्यः' पितृभ्यो 'यम्' एव पुरोडाशधानादिरूपम् 'भागं' 'देवाः' 'अकल्पयन्', 'एतत्' एतर्हि 'एषः' यजमानोऽपि 'तम्' एव भागम् 'एभ्यः' 'करोति' । तथा देवाः पुरा असुरहतान् पितृभावं प्राप्तान् 'यान्' एव 'समैरयन्त' समागच्छन्, 'तान्' एव पितृत्वं प्राप्तान् देवान् 'एतद्' यजमानः 'अवति' हविषा तर्पयति । अवतिरत्र तृप्त्यर्थः ( धा. पा. भ्वा. प. ६०१ ) । तेन च पितृदेवतातर्पणेन 'स्वान्' स्वकीयानेव 'पितॄन्' पितृपितामहाद्यान् 'श्रेयांसम्' प्रशस्यतमं 'लोकम्' 'उपोन्नयति' उपप्रापयति अपिच 'अत्र' अस्मिन् कर्म्मणि 'अस्य यजमानस्य 'आत्मनः' स्वस्य 'अनुचरणेन' अनुगमनेन च यदेव प्राणिजातं 'हन्यते', 'मीयते' ताड्यते । यद्वा 'मीयते' "मीङ् हिंसायाम्"—इति धातुः ( धा. पा. दि. आ. ३१ ) । 'एतेन' पितृयज्ञेन अस्य तदेव पुनराप्यायते, पुनः प्रवृद्धं भवतीति । **तस्मादिति** । पितृयज्ञस्य विधिः । यस्मात् उदीरितफलहेतुः पितृयज्ञः, तस्मादेनेन यष्टव्यमित्यर्थः । 'यजते'—इति पञ्चमलकारो न वर्त्तमानोपदेशः ॥ ३ ॥

तत्र प्रथमं हविर्विधत्ते—**स पितृभ्य** इति । सोम एषामस्तीति सोमवन्तः कृतसोमयागाः । एतद्विशेषयागविशिष्टेभ्यः 'पितृभ्यः' षट्सु कपालेषु संस्कृतं 'पुरोडाशं' 'सः' यजमानः निर्वपेत् । देवताविकल्पमाह—**सोमाय वेति** । सोमाय पितृमते वा निर्वापः कर्त्तव्यः । तदुक्तं कात्यायनेनापि—" पितृभ्यः सोमवद्भ्यः षट्कपालः, सोमाय वा पितृमते "—( का. श्रौ. सू. ५ अ. १९७–१९८ ) इति । इमं देवताविकल्पमाश्वलायनोऽप्याह स्म—"पितरः सोमवन्तः सोमो वा पितृमान् "—इति ( आ. श्रौ. सू. २ । १९–२१ ) । कपालसङ्ख्यां प्रशंसति—**षड्वा** इति । **ऋतवः पितर** इति । शरद्धेमन्तशिशिराः, त एते यत् पुनः समैरयन्तेत्याम्नातत्वात् तत् पितॄणामृतुतादात्म्यम् । यद्वा " यस्मिन् वा ऋतौ पुरुषः प्रमीयते, सोऽस्यामुष्मिँल्लोके भवति "—इति श्रुत्यन्तरेण प्रसिद्धेः ( तै. ब्रा. १ । ६ । ८ । ३ ) वसन्ताद्यृत्वात्मकाः पितरः ॥ ४ ॥

---

१–' यद्वा मियते मिद् हिंसायाम् ' इति क. । २–' पितृयज्ञ उपा ऽनुचरणम् ( का. श्रौ. सू. ५ । १९० । ३–श्रुत्यन्तरे प्रसिद्धेः ' इति क. ।

( त्यु ) अथ पितृभ्यो बर्हिषद्भ्यः । ( द्भ्योऽन्वा ) अन्वाहार्यपचने धानाः कुर्व्वन्ति ततोऽर्धाः पिꣳषन्त्यर्धा ऽइत्येव धाना ऽअपिष्टा भवन्ति ता धानाः पितृभ्यो बर्हिषद्भ्यः ॥ ५ ॥

( द्भ्योऽ ) अथ पितृभ्योऽग्निष्वात्तेभ्यः । ( भ्यो ) निवान्यायै दुग्धे सकृदुपमथितु ऽएकशलाकया मन्थो भवति सकृदु ह्येव पराञ्चः पितरस्तस्मात्सकृदुपमथितो भवत्येतानि हवीꣳषि भवन्ति ॥६॥ [श० १३००]

---

अथ पितृभ्यो बर्हिषद्भ्यः ( १ ) अन्वाहार्यपचने धानाः कुर्वन्ति । ततोऽर्धाः पिंषन्ति, अर्धा इत्येव धाना अपिष्टा भवन्ति । ता धानाः ( २ ) पितृभ्यो बर्हिषद्भ्यः ॥ ५ ॥

अथ पितृभ्योऽग्निष्वात्तेभ्यः ( ३ ) निवान्यायै दुग्धे सकृदुपमथित एकशलाकया मन्थो ( ३ ) भवति । सकृदु ह्येव । पराञ्चः पितरः । तस्मात् सकृदुपमथितो भवति। एतानि हवींषि भवन्ति ॥६॥

---

द्वितीयं हविर्विधत्ते—अथ पितृभ्यो बर्हिषद्भ्य इति । बर्हिषि सीदन्तीति बर्हिषदोऽकृतसोमयागाः, केवलहविर्यज्ञयाजिनः पितरः । पृषोदरादित्वात् वर्णलोपः ( पा. सू. ६. ३. १०९ ) । एतद्गुणविशिष्टेभ्यः पितृभ्यो धानारूपं हविः कर्त्तव्यमिति शेषः । तत्करणप्रकारमाह—अन्वाहार्यपचन इति । भृष्टयवतण्डुला धानाः, तदर्थं दक्षिणाग्नौ भर्जनकपालमधिश्रित्य, तत्र तत्तण्डुलानोप्य भर्जनं कुर्यादित्यर्थः । ततो भर्जनानन्तरं ता धाना द्वेधा विभज्य, अर्द्धाः प्रकृतिवत् समन्त्रक 'पिंषन्ति' चूर्णयन्ति । "पिषॢ सञ्चूर्णने"—( धा. पा. रु. प. १९ ) इति धातुः । 'अर्द्धा इत्येव' एवमेवापरा अर्द्धा 'धानाः' 'अपिष्टाः' पेषणरहिता अविकृता भवन्ति । 'ताः' अपिष्टा धानाः 'पितृभ्यो बर्हिषद्भ्यः' देयाः ॥ ५ ॥

अथ तृतीयं यागं विधत्ते—अथ पितृभ्योऽग्निष्वात्तेभ्य इति । आधानसंस्काराभावेन त्रेताग्न्यभावात् केवलमौपासनाग्निनैवास्वाद्यमानाः पितरोऽग्निष्वात्ताः । एतद्गुणविशिष्टेभ्यः पितृभ्यः । 'निवान्यायै' स्वयं नष्टवत्सा अन्यदीयेन 'वत्सेन दुह्यमाना गौः 'निवान्या' । षष्ठ्यर्थे चतुर्थी । तस्याः पयसि प्रक्षिप्तो मथितो धानाचूर्णः 'एकशलाकया' एका चासौ शलाका च, "पूर्वकालैकसर्व०" ( पा. सू. २. १. ४९ । ) इत्यादिना समासः । एकयैव शलाकया 'सकृत्' एकवारम् 'उपमथितः' आलोडितो हविः 'मन्थो भवति' इत्यर्थः । उपमथनस्य सकृत्त्वं प्रशंसति—सकृदु ह्येवेति । एकवारमेव हि अध्वर्युस्तस्माद् गार्हपत्यापरदेशादुत्थाय अन्वाहार्यपचनस्यादूरेणोत्तरप्रदेशे मन्थमुपमथ्नाति । पराञ्च इति । परागता अपुनरावृत्ताः सन्तः पितरो भवन्ति, अतस्तेषां सकृत्त्वमसाधारणधर्म इति तद्धविःसंस्कारस्यापि सकृत्त्वमुचितमिति भावः । विहितानि त्रीणि हवींषि सम्भूय निगमयति—एतानीति ॥ ६ ॥

---

१–पितृभ्यो बर्हिषद्भ्यो धानाः । का. श्रौ.सू.५।१९९। २–अभिमृश्यार्द्धाः पिष्ट्वा निवान्या दुग्धे सकृन्मथित एकशलाकया मंथः । अग्रहणं मंथस्य ततोऽर्द्धाः पि२ शतीति श्रुतेः । का. श्रौ. सू. ५।२०६–२०७। ३–पितृभ्योऽग्निष्वात्तेभ्यो मंथः । का.श्रौ.सू.५।२०८

तद्ये सोमेनेजानाः। (स्तै) ते पितरः सोमवन्तोऽथ ये दत्तेन पक्वेन लोकं जयन्ति ते पितरो बर्हिषदोऽथ ये ततो नान्यतरच्चन यानग्निरेव दहन्त्स्वदयति ते पितरोऽग्निष्वात्ता एत उ एव ते ये पितरः॥ ७॥

स जघनेन गार्हपत्यम्। प्राचीनावीती भूत्वा दक्षिणाऽऽसीन एतᳯं षट्कपालं पुरोडाशं गृह्णाति स तत एवोपोत्थायोत्तरेणान्वाहार्यपचनं दक्षिणा तिष्ठन्नवहन्ति सकृत्फलीकरोति सकृदु ह्येव पराञ्चः पितरस्तस्मात्सकृत्फलीकरोति॥ ८॥

स दक्षिणैव दृषदुपलेऽउपदधाति। दक्षिणार्धे गार्हपत्यस्य षट्कपाला-

तद्ये सोमेनेजानाः—ते पितरः सोमवन्तः। अथ ये दत्तेन पक्वेन लोकं जयन्ति—ते पितरो बर्हिषदः। अथ ये ततो नान्यतरच्चन, यानग्निरेव दहन्त्स्वदयति ते पितरोऽग्निष्वात्ताः एत उ ते ये पितरः॥७॥

स जघनेन गार्हपत्यं प्राचीनावीती भूत्वा दक्षिणाऽऽसीन एतं षट्कपालं पुरोडाशं गृह्णाति। स तत एवोपोत्थायोत्तरेणान्वाहार्यपचनं दक्षिणा तिष्ठन्नवहन्ति। सकृत्फलीकरोति। सकृदु ह्येव पराञ्चः पितरः। तस्मात्सकृत्फलीकरोति॥ ८॥

स दक्षिणैव दृषदुपले उपदधाति। दक्षिणार्धे गार्हपत्यस्य षट् कपालान्युपदधाति। तद्यदेतां दक्षिणां दिशं सचन्ते—एषा हि दिक् पितॄणाम्—तस्मादेतां दक्षिणां दिशं सचन्ते॥ ९॥

एतेषां हविषां या देवताः "पितृभ्यः सोमवद्भ्यः"—इत्यादिना निर्दिष्टाः तासां स्वरूपं परस्परासङ्कीर्णमिति निर्ब्रूते—तद्य इति 'तत्' तत्र 'सोमेनेजानाः' सोमेनेष्टवन्तः पञ्चत्वं प्राप्ताः 'ते पितरः' 'सोमवन्तः' इत्युच्यन्ते। 'अथ' शब्दस्त्वर्थः 'ये' तु 'पक्वेन' पाकसंस्कारसंस्कृतेन, चरुपुरोडाशादिहविषा देवेभ्यो दत्तेन केवलं हविर्यज्ञयाजिन एव सन्तो 'लोकं जयन्ति', 'ते पितरः' 'बर्हिषदः' इत्याख्यायन्ते। 'ये' पुनः 'ततः' तयोर्मध्ये 'अन्यतरत्' अपि 'न' प्राप्नुवन्ति, केवलमौपासनाग्निरेव 'दहन्' शरीरान्ते 'स्वदयति' आस्वादयति, भक्षयतीत्यर्थः। ते पितरः 'अग्निष्वात्ताः' इत्युच्यन्ते। **एत उ** इति। **ये पितर** इति। पितृदेवतात्वेन प्रसिद्धाः एते सोमवदादय एव ते। नान्य इत्यर्थः। तैत्तिरीयकेऽप्याम्नातम्—"ये वै यज्वानः, ते पितरो बर्हिषदः०—० ये वा अयज्वानो गृहमेधिनः ते पितरोऽग्निष्वात्ताः"—इति (तै.ब्रा.१.६.९।६)॥७॥

पितृयज्ञप्रयुक्तं विशेषं वक्तुं चोदकप्राप्तमङ्गकलापमनुक्रामति—**स जघनेने**त्यादिना। दक्षिणामुखत्वं प्राचीनावीतित्वं च हविर्ग्रहणे विशेष इत्यर्थः। **स तत एवे**त्यादि। 'सः' अध्वर्युः तस्माद् गार्हपत्यापरदेशादुत्थाय अन्वाहार्यपचनस्यादूरेणोत्तरदेशे दक्षिणामुखस्तिष्ठन् अवहन्यात्। चोदकप्राप्तं फलीकरणस्य त्रिष्करणमपास्य सकृत्त्वं विधत्ते—**सकृत्फलीकरोती**ति॥ ८॥

**स दक्षिणैवे**ति। 'सः' अध्वर्युः दक्षिणामुख एव सन् अवहननदेशे पेषणार्थं 'दृषदुपले' उपदध्यात्।

१—यग्निन इति पा.। २—गार्हपत्यस्य पुरस्तादवहननपेषणे। का० श्रौ० सू० ५।२०२।

न्यु दधाति तद्यदेतां दक्षिणां दिशꣳ सचन्तऽएषा हि दिक्पितॄणां तस्मा-
देत दक्षिणां दिशꣳ सचन्ते ॥ ९ ॥

( न्तेऽथ ) अथ दक्षिणेनान्वाहार्यपचनम् । चतुःस्रक्तिं वेदिं करोत्यवान्तर-
दिशोऽनु स्रक्तीः करोति चतस्रो वा ऽअवान्तरदिशोऽवान्तरदिशो वै
पितरस्तस्मादवान्तरदिशोऽनु स्रक्तीः करोति ॥ १० ॥

तन्मध्येऽग्निꣳ समादधाति । पुरस्ताद्धै देवाः प्रत्यञ्चो मनुष्यानभ्युपावृत्ता-
स्तस्मात्तेभ्यः प्राङ् तिष्ठञ्जुहोति सर्वतः पितरोऽवान्तरदिशो वै पितरः
सर्वत ऽइव हीमा अवान्तरदिशस्तस्मान्मध्येऽग्निꣳ समादधाति ॥ ११ ॥

---

अथ दक्षिणेनान्वाहार्यपचनं चतुःस्रक्तिं वेदिं करोति । अवान्तरदिशोऽनु स्रक्तीः करोति । चतस्रो वा अवान्तरदिशः । अवान्तरदिशो वै पितरः । तस्मादवान्तरदिशोऽनु स्रक्तीः करोति ॥ १० ॥

तन्मध्येऽग्निं समादधाति । पुरस्ताद्धै देवाः प्रत्यञ्चो मनुष्यानभ्युपावृत्ताः । तस्मात्तेभ्यः प्राङ् तिष्ठन् जुहोति । सर्वतः पितरः । अवान्तरदिशो वै पितरः । सर्वत इव हीमा अवान्तरदिशः । तस्मान्मध्येऽग्निं समादधाति ॥ ११ ॥

---

षट्कपालस्य पुरोडाशस्य गार्हपत्यदक्षिणायां श्रपणं विधाय स्तौति—**दक्षिणार्द्धे गार्हपत्यस्येत्यादिना** । **तद् यदेतामिति** । 'तत्' तत्र पितृयज्ञसम्बन्धित्वेनानुष्ठेयपदार्थेषु 'यद्' यस्मात् कारणाद् 'एतां दक्षिणां दिशं सचन्ते' ऋत्विग्यजमानाः समवयन्ति । "षच् समवाये" ( धा. पा. भ्वा. उ. १०२२ ) इति धातुः । **एषा हीति** । 'हि'—शब्दो दक्षिणस्या दिश इह श्रुत्यन्तरप्रसिद्धं पितृसम्बन्धं द्योतयति । तथाच तैत्तिरीयकम् "देवमनुष्या दिशो व्यभजन्त, प्राचीं देवा दक्षिणा पितरः" इति ( तै. सं. ६।१।१।१। ) ॥ ९ ॥

पित्र्याया वेदेर्निर्माणं विधत्ते—**अथ दक्षिणेनेति** । **चतुःस्रक्तिमिति** । चतस्रः स्रक्तयः कोणा यस्याः सा तथोक्ता । तासां चतुःस्रक्तीनामाग्नेयाद्यवान्तरदिक्सम्बन्धं विधत्ते—**अवान्तरदिशोऽन्विति** । लक्षणे अनोः कर्मप्रवचनीयत्वम् ( पा. सू. १।४।८४ ) "कर्मप्रवचनीययुक्ते"—( पा. सू. २।३।८) इति द्वितीया । अवान्तरदिक्स्थाः स्रक्तीः कुर्यादित्यर्थः । स्रक्तीनां चतुष्ट्वमुपपादयति—**चतस्रो वा इति** । पितृणामवान्तर-दिक्स्थता श्रुत्यन्तरप्रसिद्धया अवगन्तव्या ॥ १० ॥

अथाग्निस्थापनं विधत्ते—**तन्मध्य इति** । दक्षिणाग्निमाहृत्य तस्या वेदेर्मध्ये स्थापयेदित्यर्थः । तथा च कात्यायनः—"अवान्तरदिक्स्रक्तिमाह्यान्ते, दक्षिणाग्निं मध्येऽस्याः करोति"—( का. श्रौ. सू. २०९।२१० ) इति एतन्मध्ये स्थापनमुपपादयति—**पुरस्ताद्वा** इत्यादि । 'पुरस्तात्' पूर्वस्यां दिशि आहवनीयसमीपे 'प्रत्यञ्चः' प्रत्यङ्मुखाः सन्तो देवाः 'मनुष्यान्' ऋत्विग्यजमानान् 'अभि' लक्ष्य 'उपावृत्ताः' उपगता भवन्ति 'तस्मात्' कारणात् 'तेभ्यः' देवेभ्यः 'प्राङ्' मुखः 'तिष्ठन्' अध्वर्युः जुहोति । पितरस्तु सर्वतो व्याप्यावस्थिताः । तेषां

---

१–दक्षिणार्द्धे कपालोपधानम् । धानाभर्जनं दक्षिणाग्नौ । का० श्रौ० सू० ५।२०३।२०४। २–दक्षिणेन दक्षिणाग्निं परिश्रुत-मुदग्द्वारं तन्मध्ये वेदिं करोत्यवांतरादिक्स्रक्तिमाह्यांते । का० श्रौ० सू० ५।२१।

स तत एव प्राक्स्तम्बयजुर्हरति । स्तम्बयजुर्हृत्वाऽथेत्येवाग्रे परिगृह्णात्यथेत्यथेति पूर्वेण परिग्रहेण परिगृह्य लिखति हरति यद्धार्यं भवति स तथैवोत्तरेण परिग्रहेण परिगृह्णात्युत्तरेण परिग्रहेण परिगृह्य प्रतिमृज्याह प्रोक्षणीरासादयेत्यासादयन्ति प्रोक्षणीरिध्मं बर्हिरुपसादयन्ति स्रुचः सम्मार्ष्ट्याज्येनोदेति स यज्ञोपवीती भूत्वाऽऽज्यानि गृह्णाति ॥ १२ ॥

---

स तत एव प्राक् स्तम्बयजुर्हरति । स्तम्बयजुर्हृत्वा–अथेत्येवाग्रे परिगृह्णाति, अथेति, अथेति–पूर्वेण परिग्रहेण परिगृह्य लिखति । हरति–यद्धार्यं भवति । स तथैवोत्तरेण परिग्रहेण परिगृह्णाति । उत्तरेण परिग्रहेण परिगृह्य, प्रतिमृज्याह–' प्रोक्षणीरासादय ' इति । आसादयन्ति प्रोक्षणीः । इध्मं बर्हिरुपसादयन्ति । स्रुचः सम्मार्ष्टि । आज्येनोदैति । स यज्ञोपवीती भूत्वाऽऽज्यानि गृह्णाति ॥ १२ ॥

---

सर्वतोमुखत्वमुपपादयति–**सर्वतः पितर** इति । अवान्तरदिशां व्यापित्वेन तद्रूपाणां पितॄणामपि व्यापित्वात् । प्राच्याद्यन्यतमदिङ्मुखत्वं दुर्ज्ञानमिति सर्वतः परीत्य हवनार्थं मध्येऽग्नेः स्थापनमिति निगमनवाक्यस्यार्थः ॥ ११ ॥

**स तत एवे**त्यादि । अस्मिन् हि पितृयज्ञे दक्षिणा दिक् प्राची जाता, ततः प्राक्प्रतीच्यौ तु दक्षिणोत्तरदिशौ सम्पन्ने; तत्र वामभागेऽवस्थिता प्राची दिक् उत्तरा, दक्षिणभागावस्थिता प्रतीची दिक् दक्षिणा; तथाच प्रकृतौ उदीच्यां दिशि क्रियमाणं स्तम्बयजुर्हरणमत्र प्राच्यां सम्पद्यते । अयमर्थः,–तस्या वेदेः सकाशादेव सोऽध्वर्युः प्राक् प्राच्यां दिशि स्तम्बयजुर्हरेत् । तस्या वेदेः परिग्रहमभिनयेन दर्शयति–**अथेत्येवाग्रे** इति । ' अग्रे ' प्रथमम् ' इत्येव ' एवमेव पश्चाद्भागे दक्षिणापवर्गं रेखया परिगृह्णीयात् । ' अथ ' अनन्तरम् ' इति ' एवम् उत्तरतः प्रागपवर्गं परिगृह्णीयात् । एवं पुरस्ताद् दक्षिणापवर्गं परिगृह्णीयात् । अत्र प्रतीच्युदीचीप्राचीत्यनेन क्रमेण पूर्वोक्तरीत्या दक्षिणाप्रतीच्युदग्दिशो भवन्ति । तासु दिक्षु परिग्रहणं प्रकृतौ व्याख्यातम् ( श. प. कां. १. ४. ८-२१ ) सूत्रितश्च कात्यायनेन–"पूर्वं परिग्रहं परिगृह्णाति दक्षिणतः पश्चादुत्तरतश्च"–इति ( का. श्रौ. सू. २। १६७ )॥

लेखनादीनि यानि वेदिसम्बन्धीनि कर्माणि, एतानि सर्वाणि अत्रापि तथैव कर्त्तव्यानि इत्यभिप्रेत्य सिद्धवदनुक्रामति–**लिखति हरति यद्धार्यमि**त्यादिना । ' यत् ' ' हार्यं ' हरणीयं भवति, तत् हरेत् इति सम्बन्धः । **स तथैवे**ति । येन प्रकारेण पूर्वपरिग्रहः कृतः, तेनैव प्रकारेणोत्तरं परिग्रहं कुर्यात् ।

ननु " परौ यज्ञे "–( पा. सू. ३. ३. ४७ ) इति परिपूर्वाद् ग्रहेर्यज्ञविषये घञा भवितव्यम्, कथमच्-पूर्वे–पूर्वपरिग्रहेणेति, उत्तरपरिग्रहेणेति च रूपसिद्धिः ? नैष दोषः,–"व्यत्ययो बहुलम्"–( पा. सू. ३. १. ८५ ) इति " ग्रह-वृ-दृ-नि-श्चि-गमश्च" ( पा. सू. ३. ३. ५८ ) इत्यप् भवति ।

**प्रतिमृज्येति** । "पुरा क्रूरस्य "–इति प्रकृतौ यदनुमार्जनम् तत् कृत्वेत्यर्थः । प्रकृतिवदेव "प्रोक्षणीरासादय–" इति प्रैषमग्नीध्रप्रेषितार्थमनुष्ठानञ्चाह–**प्रोक्षणी**रित्यादिना । **स यज्ञोपवीती**ति । एतावत् कर्म प्राचीनावीतिनैवाध्वर्युणा कर्त्तव्यम्; ' सः ' अध्वर्युः इदानीं ' यज्ञोपवीती ' ' भूत्वा ' प्रकृतिवदेव ' आज्यानि ' गृह्णीयात् ॥ १२ ॥

---

१–पितृयज्ञाग्निचित्ययोर्वा तत्र दर्शनात् । का. श्रौ. सू. ९ । १७० । २– यज्ञोपवीत्याज्यग्रहणे । का. श्रौ. सू. ५ । २१२ ।

तदाहुः । ( द्विः ) द्विरुपभृति गृह्णीयाद्द्वौ ह्यत्रानुयाजौ भवत इति तद्ध-ष्टावेव कृत्व उपभृति गृह्णीयान्नेद्यज्ञस्य विधाया अयानीति तस्मादष्टा-वेव कृत्व ऽउपभृति गृह्णीयादाज्यानि गृहीत्वा स पुनः प्राचीनावीती भूत्वा ॥ १३

प्रोक्षणीरध्वर्युरादत्ते । स इध्ममेवाग्रे प्रोक्षत्यथ वेदिमथास्मै बर्हिः प्रय-च्छन्ति तत्पुरस्ताद्ग्रन्थ्यासादयति तत्प्रोक्ष्योपनिनीय विस्रंस्य ग्रन्थिन्न प्रस्तरं गृह्णाति सकृदु ह्येव पराञ्चः पितरस्तस्मान्न प्रस्तरं गृह्णाति ॥ १४ ॥

---

तदाहुः—द्विरुपभृति गृह्णीयात् । द्वौ ह्यत्रानुयाजौ भवत इति । तद्धष्टावेव कृत्व उपाभृति गृह्णी-यात् । नेद्यज्ञस्य विधाया अयानीति तस्मादष्टावेव कृत्व उपभृति गृह्णीयात् । आज्यानि गृहीत्वा स पुनः प्राचीनावीती भूत्वा ॥ १३ ॥

प्रोक्षणीरध्वर्युरादत्ते । स इध्ममेवाग्रे प्रोक्षति । अथ वेदिम् । अथास्मै बर्हिः प्रयच्छन्ति । तत् पुरस्ताद्ग्रन्थ्यासादयति । तत् प्रोक्ष्य, उपनिनीय, विस्रंस्य ग्रन्थिम् । न प्रस्तरं गृह्णाति । सकृदु ह्येव पराञ्चः पितरः । तस्मान्न प्रस्तरं गृह्णाति ॥ १४ ॥

---

तत्रोपभृतिग्रहणे केषाञ्चिन्मतमुपन्यस्यति—**तदाहुरिति** । 'द्वौ ह्यत्र'—इति तत्र कारणाभिधानम् । 'अत्र' खलु पितृयज्ञे 'हि' यस्माद् 'द्वौ' एव 'अनुयाजौ' प्रयाजानुयाजानामपि बर्हिष्कस्य विधास्यमानत्वात् प्रथमस्यानुयाजस्य बर्हिषोऽननुष्ठाने सति द्वावेवानुयाजौ 'भवतः', अतस्तदर्थं 'द्विरुपभृति गृह्णीयात्'। ननु प्रयाजेषु समानयनार्थमपि ग्रहीतुमाज्येन भवितव्यमिति चेत्, न; प्रयाजेष्वपि बर्हिर्युक्तस्य चतुर्थयागस्य प्रतिषेधेन तत्प्रयुक्तस्य समानयनस्याप्यभावात् । अत एवोक्तं सूत्रकृता—"असमानयनं वा बर्हिःसंयोगात्" ( का. श्रौ. सू.९ । २२४ )—इति । इदानीं पक्षान्तरमाह—**तद्धष्टावेवेति** । प्रकृतिवद् अष्टकृत्व एव 'उपभृति गृह्णीयात्'। गृह्णतोऽभिप्रायमाह—**नेदिति** । यज्ञसम्बन्धिन्याः विधायाः विधा प्रकारः संस्था; तस्मात् 'न एव अयानि' गच्छानि ' इति ' अनेनाभिप्रायेणेत्यर्थः । आज्यग्रहणानन्तरमिध्मप्रोक्षणादिकर्मे-स्वध्वर्योः पुनः प्राचीनावीतित्वञ्च विधत्ते—**आज्यानि गृहीत्वेति** ॥ १३ ॥

इध्मप्रोक्षणादिकं प्रकृतिवदेव कर्त्तव्यमित्यनुक्रामति—**प्रोक्षणीरित्यादिना** । **अथास्मा** इति । 'अथ' वेदि-प्रोक्षणानन्तरम् 'अस्मै' अध्वर्यवे 'बर्हिः प्रयच्छन्ति' आदाय अध्वर्युहस्ते परिकर्मिणो दद्युरित्यर्थः । **तत्पु-रस्ताद्ग्रन्थीति** । 'तद्' बर्हिः 'पुरस्ताद्ग्रन्थि' पूर्वस्यां दिशि यथा भवति तथा वेद्यामध्वर्युरासादये-दित्यर्थः । तत् प्रकृतिवदेव प्रोक्षणीशेषम् 'उपनीय' बर्हिषः सन्नहनस्य, ग्रन्थि विस्रंस्य, ततः सकाशात् प्रस्तर-मुष्टिं पृथङ् न गृह्णीयात् । तत्र कारणमाह—**सकृदु ह्येवेति** । बर्हिषः सकाशात् प्रस्तरस्य पृथक्करणे बर्हिषः सकृत्त्वं व्याहन्येत, न चैतत् पितृयज्ञे युक्तमिति भावः ॥ १४ ॥

---

१—'मेव' इति पा० । २—प्राग्ग्रन्थि बर्हिः । का. श्रौ. सू.५।२१५ । ३—विस्रंस्य शुल्बं चाग्रे गृहीत्वा । का. श्रौ. सू.५।२१६। शुल्बं सन्नहनमिति याज्ञिकदेवः ।

( त्यु ) अ॒थ स॒न्नह॑नमनुवि॒स्र॒ꣳस्य । ( स्या ) अपसलवि त्रिः परिस्तृ॒णन्पर्य्ये॑ति सोऽपसलवि त्रिः परिस्तीर्य्य॒ यावत्प्रस्तरभाजनं ता॒वत्परि॑शिनष्ट्य॒थ पु॒नः प्रसलवि त्रिः प॒र्य्येति त॒द्यत्पु॒नः प्रसलवि त्रिः पर्य्ये॑ति त॒द्या॒नेवा॒मू॒न्त्रया॒न्पितॄ॒नन्ववा॒गा॒त्ते॒भ्य ए॒वैतत्पु॒नरपो॒देतीमꣳ स्वं लो॒कमभि त॒स्मात्पु॒नः प्र॒सलवि त्रिः प॒र्य्येति ॥ १५ ॥

स॒ दक्षि॒णैव॒ परिधीन्परि॒दधाति । दक्षि॒णा प्र॒स्त॒रꣳ स्तृ॒णाति नान्त॒र्द्द॒धाति वि॒धृती सकृ॒दु॒ ह्येव॒ परा॑ञ्चः पितरस्त॒स्मान्नान्त॒र्दधाति वि॒धृती ॥ १६ ॥

स त॒त्र जु॒हूमा॒सादयति । (त्यु) अ॒थ पू॒र्वा॑मुपभृ॒तम॒थ ध्रु॒वाम॒थ पुरो॒डाश॒म॒थ धाना॒ऽअ॒थ मन्थ॒मासा॒द्य ह॒वीꣳषि॒ सं॒मृशति ॥ १७ ॥

अथ सन्नहनमनुविस्रंस्य, अपसलवि त्रिः परिस्तृणन् पर्येति । सोऽपसलवि त्रिः परिस्तीर्य यावत् प्रस्तरभाजनं तावत् परिशिनष्टि । अथ पुनः प्रसलवि त्रिः पर्येति । तद्यत्पुनः प्रसलवि त्रिः पर्येति । तद् यानेवामूंस्त्रयान् पितॄनन्ववागात्—तेभ्य एवैतत् पुनरपोदेति—इमं स्वं लोकमभि । तस्मात् पुनः प्रसलवि त्रिः पर्येति ॥ १५ ॥

स दक्षिणैव परिधीन् परिदधाति । दक्षिणा प्रस्तरं स्तृणाति । नान्तर्दधाति विधृती । सकृदु ह्येव पराञ्चः पितरः । तस्मान्नान्तर्दधाति विधृती ॥ १६ ॥

स तत्र जुहूमासादयति । अथ पूर्वामुपभृतम्, अथ ध्रुवाम्, अथ पुरोडाशम्, अथ धानाः, अथ मन्थमासाद्य हवींषि संमृशति ॥ १७ ॥

बर्हिषः स्तरणप्रकारमाह—**अथ सन्नहनमि**ति । सन्नह्यतेऽनेनेति सन्नहनं रज्जुः । 'अपसलवि' अप्रदक्षिणम्, अग्निं परितो वेद्यां 'त्रिः परिस्तृणन्' पर्येतीत्यर्थः । एवं परितः स्तरणानन्तरं 'यावद्' बर्हिः 'प्रस्तरभाजनं' प्रस्तरस्य योग्यं पर्य्याप्तं भवति, 'तावत्' 'परिशिनष्टि' अवशेषयेत् । **अथ पुनरि**त्यादि । 'अथ' अप्रदक्षिणपरिगमनानन्तरम् 'पुनः' 'प्रसलवि' प्रदक्षिणं 'त्रिः पर्येति' । अत एव सूत्रकृतोक्तम्—" बर्हिः—विस्रंस्य यूनश्चाग्रे गृहीत्वा त्रिस्तृणन्नग्निं पर्येति, प्रस्तरमात्रं शिष्ट्वा तावत् प्रतिपर्येति "—इति ( का. श्रौ. सू. ५ । २१६–२१७ ) ।

एतत् प्रतिपरिगमनमनूद्य स्तौति—**तद्यानेवे**ति । 'तत्' तत्र स्तरणसमये त्रिरप्रदक्षिणगमनेन 'यान्' एव 'अमून्' विप्रकर्षेण पितृलोकेऽवस्थितान् त्रिविधान् " पितृभ्यः सोमवद्भ्यः "—इत्यादिना हविर्देवतात्वेन प्राग्दर्शितान् 'अन्ववागात्' अनुप्राप्नोत् 'एतत्' एतेन पुनस्त्रिः प्रदक्षिणकरणेन 'तेभ्य एव' पितृभ्यः सकाशात् 'पुनः' 'अपोदेति' अपगच्छति, 'स्वं' स्वकीयम् 'इमं लोकम्' 'अभि' प्राप्तुम् । **तस्मादि**ति, प्रतिपादितार्थनिगमनम् ॥ १५ ॥

**स दक्षिणैव परिधीनि**ति । 'सः' स्वयं 'दक्षिणा' दक्षिणाग्रान् 'एव' 'परिधीन्' परिदध्यात् । ततः पश्चात् पुरस्ताच्च तत्र दक्षिणाग्रौ परिधीन्, उत्तरप्रागग्रं प्रस्तरं, सर्वमवशेषितं बर्हिश्च दक्षिणाग्रं स्तृणीयात् । प्रकृतितः प्राप्तं विधृत्यन्तर्द्धानं निषेधति—**नान्तर्दधाती**ति । अन्तर्द्धाने हि प्रस्तरबर्हिषी विभज्येयाताम् । तथा च सकृत्त्वं हीयेतेत्यभिप्रेत्याह—**सकृदु ह्येवे**ति ॥ १६ ॥

तस्मिन् प्रस्तरे जुह्वादीनामासादनस्य प्रकारविशेषं विधत्ते—**स तत्रे**ति । प्रस्तरस्योपरि पश्चाद्भागे प्रथमं

ते सुर्वेऽएव यज्ञोपवीतिनो भूत्वा । (त्वे) इत्थाद्युजमानश्च ब्रह्मा च पश्चात्परीतः पुरस्तादग्नीत् ॥ १८ ॥

(त्ते) तेनोपाᳫंशु चरन्ति । तिर इव वै पितरस्तिर इवैतद्यदुपाᳫंशु तस्मादुपाᳫंशु चरन्ति ॥ १९ ॥

परिवृते चरन्ति । तिर इव वै पितरस्तिर इवैतद्यत्परिवृतं तस्मात्परिवृते चरन्ति ॥ २० ॥

(न्त्यु) अथेध्ममभ्यादधदाह । (हा) अग्नये समिध्यमानायानुब्रूहीति स एकामेव होता सामिधेनीं त्रिरन्वाह सकृदु ह्येव पराञ्चः पितरस्तस्मादेकाᳫंहोता सामिधेनीं त्रिरन्वाह ॥ २१ ॥

---

ते सर्वे एव यज्ञोपवीतिनो भूत्वा, इत्थाद्यजमानश्च ब्रह्मा च पश्चात् परीतः । पुरस्तादग्नीत् ॥ १८ ॥
तेनोपांशु चरन्ति । तिर इव वै पितरः । तिर इवैतद्—यदुपांशु । तस्मादुपांशु चरन्ति ॥ १९ ॥
परिवृते चरन्ति । तिर इव वै पितरः । तिर इवैतत्—परिवृतम् । तस्मात् परिवृते चरन्ति ॥ २० ॥
अथेध्ममभ्यादधदाह—'अग्नये समिध्यमानायानुब्रूहि' इति । स एकामेव होता सामिधेनीं त्रिरन्वाह । सकृदु ह्येव पराञ्चः पितरः । तस्मादेकां होता सामिधेनीं त्रिरन्वाह ॥ २१ ॥

---

'जुहूम्' आसाद्य, ततः पूर्वभागे 'उपभृतम्', ततः पुरस्तात् 'ध्रुवाम्' अन्ततो 'हवींषि' 'संमृशति' इत्यनेन क्रमेणासादयन्नासादितहविषामभिमर्शनं कुर्यादित्यर्थः ॥ १७ ॥

**ते सर्वे एवेति** । न केवलमध्वर्युरेव, ऋत्विग्यजमानाः सर्वे एव ते अस्मिन् समये 'यज्ञोपवीतिनः' भवेयुः 'इत्थात्' इत्यभिनयदर्शने; अनेन प्रकारेण ब्रह्मयजमानौ आहवनीयस्य पुरतो गत्वा, अप्रदक्षिणं पर्यावृत्य, पितृयज्ञवेदेः पश्चाद्देशं 'परीतः' परिक्रामत इत्यर्थः । आग्नीध्रस्तु तस्या वेदेः 'पुरस्तात्' पूर्वदेशं गच्छेत् । तत्र हि स्तम्बयजुर्हरणं कृतम् ॥ १८ ॥

पितृयज्ञेनोपांशुप्रचरणं विधत्ते—**तेनोपांशु चरन्तीति** । **तिर इव वा** इति । तिरोहिता एव पितरोऽभवन्, तेभ्यः 'यद्' 'उपांशु' करणम्, 'तत्' अपि 'तिरः' तिरोहितमेव भवति तथा चान्तर्हितान्पितॄनुद्दिश्योपांशुप्रचरणं युक्तमिति भावः ॥ १९ ॥

पितृयज्ञस्थानस्य परिश्रयणं विधाय स्तौति—**परिवृत** इति । 'परिवृते' परिवेष्टिते स्थाने; सिद्धमन्यत् ॥ २० ॥

**स एकामेवेति** । 'सः' होता 'अग्नये समिध्यमानाय' इति अध्वर्युणा प्रेषितः सन् 'एकामेव' 'सामिधेनीं' 'त्रिः' ब्रूयात् । न तु प्रकृतिवत् "प्र वो वाजाः" इत्याद्याः सामिधेन्यः पञ्चदश ( ऋ. सं. ३. २७.१–१५ ) तत्र सामिधेन्येकत्वे कारणमाह—**सकृदु ह्येवेति** ॥ २१ ॥

---

१–प्राक्सᳫंस्थᳫंहविरासादनम् । का० श्रौ० सू० ५ । २१९ । २–सामिधेनीप्रैषाद्याज्यभागाभ्यां यज्ञोपवीतिनः सर्व्वे । पश्चात्परीतो ब्रह्मयजमानौ पुरस्तादग्नीत् । का० श्रौ० सू० ५ । २२० । २२१ । ३–पितृयज्ञ उपाᳫंशुचरणम् । पूर्व्वेणाहवनीयं प्रणीताः परिहरत्यर्थवच्च । का० श्रौ० सू० ५ । १९०–१९६ ।

सोऽन्वाह । ( हो ) उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि । उशन्नु शत आवह पितॄन्हविषेऽअत्तवऽइत्यथाग्निमावह सोममावह पितॄन्त्सोमवत आवह पितॄन्बर्हिषद आवह पितॄनग्निष्वात्तानावह देवा ३ ऽआज्यपाँ ऽआवहाग्निँ होत्रायावह स्वं महिमानमावहेत्यावाह्योपविशति ॥ २२ ॥

( त्यु )अथाश्राव्य न होतारं प्रवृणीते । पितृयज्ञो वा अयं नेद्धोतारं पितृषु दधानीति तस्मान्न होतारं प्रवृणीते सीद होतरित्येवाहोपविशति होता होतृषदन ऽउपविश्य प्रसौति प्रसूतोऽध्वर्युः स्रुचावादाय प्रत्यङ्ङतिक्रामन्त्यतिक्रम्याश्राव्याह समिधो यजेति सोऽपबर्हिषश्चतुरः प्रयाजान्यजति प्रजा

---

सोऽन्वाह–" उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि । उशन्नुशत आवह पितॄन् हविषे अत्तवे "–इति (वा. सं. १९।७०)। अथ–' अग्निमावह, सोममावह, पितॄन् सोमवत आवह, पितॄन् बार्हिषद आवह, पितॄनग्निष्वात्तानावह, देवान् ३ आज्यपान् ३ आवह, अग्निं होत्रायावह, स्वं महिमानमावह–इत्यावाह्योपविशति ॥ २२ ॥

अथाश्राव्य न होतारं प्रवृणीते । पितृयज्ञो वा अयम्, नेद्धोतरि पितृषु दधानीति । तस्मान्न होतारं प्रवृणीते । ' सीद होतः '–इत्येवाह । उपविशति होता होतृषदने । उपविश्य प्रसौति ।

---

अनुवक्तव्यां तामेकां सामिधेनीं दर्शयति–**सोऽन्वाहे**ति । ' सः ' होता " उशन्तस्त्वा–" ' इति ' एतां सामिधेनीं त्रिः अनुब्रूयात् । अस्यायमर्थः–हे अग्ने ! ' उशन्तः ' कामयमानाः वयं त्वां ' निधीमहि ' वेद्यां स्थापयामः । तथा ' उशन्तः ' त्वत्साध्यं यागं कामयमाना एव सन्तः ' समिधीमहि ' त्वां समिद्धं करवामहै । अग्ने ! त्वमपि अस्मदुक्तमर्थम् ' उशन् ' कामयमानः सन् ' उशतः ' अस्मदीयं यज्ञं कामयमानान् ' पितॄन् ' ' आवह' आगमय, किमर्थम् ' हविषे अत्तवे ' अस्माभिर्दत्तं हविर्भोक्तुम् " क्रियाग्रहणमपि कर्त्तव्यम् "–( पा. सू. १। ४। ३२ सू. वा. १ ) इति कर्मणः सम्प्रदानत्वाच्चतुर्थी । " अद भक्षणे "–( धा. पा. अदा. प. १ ) इति अस्मात् " तुमर्थे सेसेन् "–( पा. सू. ३। ४। ९ ) इति तवेन् प्रत्ययः ॥

**अथाग्निमा**हवेत्यादि । सामिधेन्यनुवचनानन्तरम् " अग्निमावह "–इत्याद्यावाहननिगदं ब्रूयात् । तत्राग्नीषोमावाज्यभागदेवते, पितरः सोमवन्त इत्याद्याः प्रधानदेवताः, ' देवा आज्यपाः ' प्रयाजानुयाजदेवताः । तेषां सर्वेषामावाहनं कर्त्तुमग्निः प्रेष्यते–" **अग्निं होत्राय**"–इत्यादिना । शेषेण स्विष्टकृद्देवताया आवाहनप्रतिपादनम् । ' होत्राय ' होमाय होतृकर्मणे वा 'अग्निम् आवह ' । अग्निष्वात्तनाम्नस्तव स्वभूतो महिमा, तम्, तद्रूप[1]स्वीकारिणमग्निमावहेत्यर्थः । **इत्यावाह्ये**ति । अनेन निगदेनावाह्य तत्रोपविशेदित्यर्थः ॥ २२ ॥

प्रकृतिवत् प्राप्तं होतृवरणं निषेधति–**अथाश्राव्य न होतारमि**ति[2] । आवाहनानन्तरमाश्रावणप्रत्याश्रावणे कृत्वा, ' सीद होतः ! ' इत्येवाध्वर्युर्ब्रूयात्; न तु " अग्निर्देवो दैव्यो होता "–इति निगदेन होतारं प्रवृणीते-

---

१–' तद्रूपं स्विष्टकारिणम्– ' इति पा. । २–आश्राव्य सीद होतरित्येव ब्रूयात् । का. श्रौ. सू. ५। २२२।

**वै बर्हिर्नेत्प्रजाः पितृषु दधानीति तस्मादपबर्हिषश्चतुरः प्रयाजान्यजत्यथाज्यभागाभ्यां चरन्त्याज्यभागाभ्यां चरित्वा ॥ २३ ॥**

**ते सर्व्वऽएव प्राचीनावीतिनो भूत्वा । (त्वै) एतैर्वै[1] हविर्भिः प्रचरिष्यन्त इत्थाद्यजमानश्च ब्रह्मा च पुरस्तात्परीतः पश्चादग्नीत्तदुताश्रावयन्त्यो३ँ स्वधेत्यस्तु स्वधेति प्रत्याश्रावणꣳस्वधा नम इति व्वषट्कारः ॥ २४ ॥**

---

प्रसूतोऽध्वर्युः स्रुचावादाय प्रत्यङ्ङतिक्रामति । अतिक्रम्याश्राव्याह–' समिधो यज ' इति । सोऽपबर्हिषश्चतुरः प्रयाजान्यजति । प्रजा वै बर्हिः, नेत्प्रजाः पितृषु दधानीति । तस्मादपबर्हिषश्चतुरः प्रयाजान् यजति । अथाज्यभागाभ्यां चरन्ति । आज्यभागाभ्यां चरित्वा ॥ २३ ॥

ते सर्व एव प्राचीनावीतिनो भूत्वा, एतैर्वै हविर्भिः प्रचरिष्यन्तः–इत्थाद् यजमानश्च ब्रह्मा च पुरस्तात्परीतः । पश्चादग्नीत् । तदुताश्रावयन्ति । 'ओँ ३ स्वधा'–इति । ' अस्तु स्वधा '–इति प्रत्याश्रावणम् । ' स्वधा नमः '–इति वषट्कारः ॥ २४ ॥

---

त्यर्थः । एतदुपपादयति–**पितृयज्ञो वा अयमिति** । यतोऽयं पितृयज्ञः, अतोऽत्र पितरः सन्निहिताः; तत्र यदि होतुर्वरणं कुर्यात्, तदा ' न ' ' होतारं ' तेषु पितृषु ' दधाति ' स्थापयति, न चैतद् युक्तम्, ' इति ' अनेनाभिप्रायेण होतारं ' न ' प्रवृणीयात् । किन्तर्हि आश्रावणानन्तरं ब्रूयात् इति, तदाह–**सीदेति** । हे ' होतः ! ' त्वं ' सीद ' उपविश ' इति ' एतद्वाक्यम् अध्वर्युर्ब्रूयात्; न होतुर्वरणम् । होता ' चैवं कृत्वा ' होतृषदने ' ' उपविशति ' उपविशेत् ॥

स्रुगादाननिगदेनाध्वर्युः ' प्रसौति ' अनुजानाति । " षु प्रसवैश्वर्ययोः "–( धा. पा. अदा. प. ३१ ) इति धातुः । स च ' प्रसूतः ' होत्रा प्रेरितः ' अध्वर्युः ' ' स्रुचौ ' जुहूपभृतौ ' आदाय ' ' प्रत्यङ् ' मुखः अतिक्रामति । ' अतिक्रम्य ' वेदेः पश्चिमभागे स्थित्वा, आश्रावणप्रभृति ' अपबर्हिषः ' बर्हिश्चतुर्थः प्रयाजः । तद्वर्जं ' चतुरः प्रयाजान् ' यजेत । बर्हिर्वर्जनस्याभिप्रायमाह–**प्रजा वा** इति । शिष्टं निगदसिद्धम्[2] ॥ २३ ॥

हविर्भिः प्रचरणार्थं प्राचीनावीतित्वं पुनर्विधत्ते–**ते सर्व एवेति** । ' ते ' ऋत्विग्यजमानाः 'सर्व एव' 'प्राचीनावीतिनः' भवेयुः । ब्रह्मयजमानाग्नीध्राणां पूर्वं परिक्रान्तानां प्रधानयागार्थमन्यथा परिक्रमणं विधत्ते[3]–**इत्थादिति** । ' इत्थात् ' अनेन प्रकारेण ब्रह्मयजमानौ चतुःसक्तेर्वेदेः ' पुरस्तात् ' प्रतिगच्छतः, आग्नीध्रः ' पश्चात् ' प्रतिगच्छेत् । प्रधानहविषो याज्यानामाश्रावणवषट्कारानाचष्टे–**तदिति** । ' तत् ' तत्र पित्र्येषु प्रधानहविष्षु ' ओँ स्वधा '–इति अध्वर्युराश्रावयेत्, ' अस्तु स्वधा ' इति आग्नीध्रः प्रत्याश्रावणं कुर्यात्, होता ' स्वधा नमः '–इति वषट्कुर्यात् । अस्यायमर्थः–" ओँ श्रावय "–" अस्तु श्रौषट् " " वौषट् " शब्दानां स्थाने एते प्रयोक्तव्या इत्यर्थः ॥

---

१–' एतैर्हविर्भिः '–इति नासिकस्थवैदिकपाठपुस्तकस्थः पाठः । २–अपबर्हिषः प्रयाजा अनुयाजाश्च । का. श्रौ. सू. ५–२२३। ३–हविर्भिश्चरिष्यंतः प्रतिविपर्यंति । का. श्रौ. सू. ५ । २२६ ।

( स्तु ) तद्ध होवाचासुरिः । ( रा ) आश्रावयेयुरेव प्रत्याश्रावयेयु-र्वषट्कुर्युर्नेद्यज्ञस्य विधाया अयामेति ॥ २५ ॥

( त्यु ) अथाह पितृभ्यः सोमवद्भ्योऽनुब्रूहीति । सोमाय वा पितृमते स द्वे पुरोऽनुवाक्ये ऽअन्वाहैकया वै देवान्प्रच्यावयन्ति द्वाभ्यां पितॄन्त्स-कृद्ध ह्येव पराञ्चः पितरस्तस्माद्द्वे पुरोऽनुवाक्ये ऽअन्वाह ॥ २६ ॥

स उपस्तृणीत ऽआज्यम् । ( मु ) अथास्य पुरोडाशस्यावद्यति स तेनैव सह धानानां तेन सह मन्थस्य तत्सकृदवदधात्यथोपरिष्टाद्द्विराज्य-

---

तद्ध होवाचासुरिः । आश्रावयेयुरेव, प्रत्याश्रावयेयुः, वषट् कुर्युः—नेद्यज्ञस्य विधाया अयामेति ॥ २५ ॥

अथाह—'पितृभ्यः सोमवद्भ्योऽनुब्रूहि' इति । 'सोमाय वा पितृमते'। स द्वे पुरोऽनुवाक्ये अन्वाह । एकया वै देवान् प्रच्यावयन्ति, द्वाभ्यां पितॄन् । सकृद्ध ह्येव पराञ्चः पितरः । तस्माद् द्वे पुरोऽनुवाक्ये अन्वाह ॥ २६ ॥

स उपस्तृणीत आज्यम् । अथास्य पुरोडाशस्यावद्यति । स तेनैव सह धानानाम् । तेन सह

---

तत्राध्वर्युप्रैषस्यायमर्थः—ॐकारोऽङ्गीकारार्थः, स्वधेति पित्र्यं हविर्नाम । हे अग्नीत् ! पितृभ्यो दीयमान-मिदं हविः तवाभिमतं किमिति । तत्तथाऽस्त्विति अग्नीत्प्रैषस्यार्थः । नमःशब्दस्त्यागार्थः । पितॄनुद्दिश्य दीयमानैषा 'स्वधा' तदीयं हविः 'नमः' त्यक्तमस्तु, इति वषट्कारप्रतिनिधिभूतस्य वाक्यस्यार्थः ॥ २४ ॥

प्रकृतिवदेवाश्रावणादिकं कर्त्तव्यमिति पक्षान्तरमाह—तद्ध होवाचेति । 'आश्रावयेयुः'—इत्यादिना आश्रा-वणादिकर्तॄणामध्वर्य्वादीनामेकत्वेऽपि पूजार्थं बहुवचनम् । 'यज्ञस्य' प्रकृतिभूतस्य दर्शपूर्णमासयागस्य 'विधायाः' विधा प्रकारः संस्थानम्, तस्मात् 'न' एव 'अयाम' प्रच्यवामहै' इति' प्रागुदीरितस्यापेक्षा; अन्यथा हि आश्रावणादीनां प्रकृतिवदप्रयोगात् यज्ञविधायाः प्रच्युतिः स्यादित्यभिप्रायः । अत एव सूत्रकृत् स्वधाकरणयज्ञस्य विकल्पमाह स्म—" ॐस्वधेत्यस्तु स्वधेति वा—ऽऽश्रुतप्रत्याश्रुते "—इति ( का. श्रौ. सू. ५ । २३३ ) ॥ २५ ॥

अनुवाक्यार्थं प्रैषवचनं प्रथमयागस्य विधत्ते—अथाहेति । पितृप्रधानसोमप्रधानयोरुभयोरपि युक्तत्वात् तद-पेक्षया पितरः सोमवन्तः पितृमन्तो वेति विकल्पः प्रागुपन्यस्तः; तदभिप्रायेणात्रापि सम्प्रैषस्य द्वैविध्यम् । होतुरनुवाक्यावचने प्रकृतितो विशेषमाह—स द्वे इति । अनुवाक्याद्वित्वमुपपादयति—एकया वा इत्यादि । 'एकया' एव अनुवाक्यया 'देवान्' स्वस्थानात् 'प्रच्यावयन्ति' देवयजनदेशमागन्तुम् पितरस्तु परागमना-दपुनरावृत्तिङ्गताः, अतो न ते एकया पुरोनुवाक्यया प्रच्यावयितुं शक्याः; ततः प्रयत्नविशेषे कर्त्तव्ये 'द्वाभ्यां' पुरोनुवाक्याभ्यां होता तान् 'पितॄन्' आगमयतीत्यर्थः ॥ २६ ॥

प्रधानयागप्रचरणे हि त्रीणि हवींषि समवदाय एकैका देवता यष्टव्या, तत्र पितॄणां सोमवतां यजनप्रकार-माह—स उपस्तृणीत आज्यमिति । द्विराज्यस्येति । आज्येनोपस्तरणमेकमवदानम्, पुरोडाशादिहविस्त्रयात्

---

१—ॐ २स्वधेत्यस्तु स्वधेति वाऽऽश्रुतप्रत्याश्रुते स्वधा नम इति वषट्कारः । का. श्रौ. सू. ५ । २३३ ।

स्याभिघारयति. प्रत्यनक्त्यवदानानि नातिक्रामतीत एवोपोत्थायाश्राव्याह पितॄन्त्सोमवतो यजेति व्वषट्कृते जुहोति ॥ २७ ॥

( त्यु ) अथाह पितृभ्यो बर्हिषद्भ्योऽनुब्रूहीति । स उपस्तृणीतऽआज्यमथासां धानानामवद्यति स तेनैव सह मन्थस्य तेन सह पुरोडाशस्य तत्सकृदवदधात्यथोपरिष्टाद्द्विराज्यस्याभिघारयति प्रत्यनक्त्यवदानानि नातिक्रामतीत एवोपोत्थायाश्राव्याह पितॄन्बर्हिषदो यजेति व्वषट्कृते जुहोति ॥ २८ ॥

( त्यु ) अथाह पितृभ्योऽग्निष्वात्तेभ्योऽनुब्रूहीति । स ऽउपस्तृणीत ऽआज्यमथास्य मन्थस्यावद्यति स तेनैव सह पुरोडाशस्य तेन सह धानानां तत्सकृदवदधात्यथोपरिष्टाद्द्विराज्यस्याभिघारयति प्रत्यनक्त्यवदानानि नातिक्रामतीत ऽएवोपोत्थायाश्राव्याह पितॄनग्निष्वात्तान्यजेति व्वषट्कृते जुहोति ॥ २९ ॥

---

मन्थस्य । सकृदवदधाति । अथोपरिष्टाद् द्विराज्यस्याभिघारयति । प्रत्यनक्त्यवदानानि । नातिक्रामति । इत एवोपोत्थाय, आश्राव्याह–' पितॄन् सोमवतो यज ' इति । वषट्कृते जुहोति ॥ २७ ॥

अथाह–'पितृभ्यो बर्हिषद्भ्योऽनुब्रूहि' इति । स उपस्तृणीत आज्यम् । अथासां धानानामवद्यति । स तेनैव सह मन्थस्य तेन सह पुरोडाशस्य तत् सकृदवदधाति । अथोपरिष्टाद् द्विराज्यस्याभिघारयति । प्रत्यनक्त्यवदानानि । नातिक्रामति । इत एवोपोत्थाय, आश्राव्याह–' पितॄन् बर्हिषदो यज ' इति । वषट्कृते जुहोति ॥ २८ ॥

अथाह–'पितृभ्योऽग्निष्वात्तेभ्योऽनुब्रूहि' इति । स उपस्तृणीत आज्यम् । अथास्य मन्थस्यावद्यति । स तेनैव सह पुरोडाशस्य तेन सह धानानाम् । तत् सकृदवदधाति । अथोपरिष्टाद्–द्विराज्यस्याभि-

---

सकृत्सकृदवदानम्, तत् सकृदिति यदवदानं सम्पद्यते, एतेन सकृदवदधातीति वाक्यमुक्तार्थं भवति । ( का. श्रौ. सू. ५ । २२७) । यदि अभिघारणमुपस्तरणं च सकृदेव स्यात्, तदा चतुरवत्तसम्पत्तिर्न स्यात्; चतुरवत्तं हि यागयोग्यं द्रव्यम्, तस्माद् द्विरभिघारणं कर्त्तव्यमित्यर्थः । **प्रत्यनक्त्यवदानानीति** । अवद्यत्यस्मादित्यवदानम्, अवत्तशिष्टं हविः । " कृत्यल्युटो बहुलम् "–( पा. सू. ३ । ३ । ११३ ) इति अपादाने ल्युट् । अवत्तशिष्टानि हवींषि प्रत्यज्यादित्यर्थः । प्रकृतिवत् प्राप्तमतिक्रमणं निषेधति–**नातिक्रामतीति** । कथं तर्हि कर्त्तव्यमिति तत्राह–**इत एवेति** । यत्रोपविश्यावद्यति, ' इत एव ' स्थानात् ' उपोत्थाय ' तत्रैव तिष्ठन्नाश्रावणादिकं कुर्यादित्यर्थः ॥ २७ ॥

द्वितीयतृतीययागयोरेवमेवानुप्राणनप्रकारं दर्शयति–**अथाहेति** । अत्रापि पूर्ववदेव पुरोऽनुवाक्याद्वित्वमनुक्रम्यावगन्तव्यम् । **उपस्तृणीत** इत्यादि, पूर्ववत्; एतावांस्तु विशेषः–द्वितीययागस्य हविरादाने धानानां

---

१–द्विरभिघारणमनतिक्रमणं च । ( का० श्रौ० सू० ५ । २२८ । )

(त्यु) अथाहाग्नये कव्यवाहनायानुब्रूहीति । तत्स्विष्टकृतं हव्यवाहनो वै देवानां कव्यवाहनः पितॄणां तस्मादाहाग्नये कव्यवाहनायानुब्रूहीति ॥ ३० ॥

स उपस्तृणीत ऽआज्यम् । (मु) अथास्य पुरोडाशस्यावद्यति स तेनैव सह धानानां तेन सह मन्थस्य तत्सकृदवदधात्यथोपरिष्टाद्विराज्यस्याभिघारयति न प्रत्यनक्त्यवदानानि नातिक्रामतीत एवोपोत्थायाश्राव्याहाग्निं कव्यवाहनं यजेति व्वषट्कृते जुहोति ॥ ३१ ॥

---

घारयति । प्रत्यनक्त्यवदानानि । नातिक्रामति इत एवोपोत्थाय, आश्राव्याह–' पितॄनग्निष्वात्तान् यज ' इति । वषट्कृते जुहोति ॥ २९ ॥

अथाह–' अग्नये कव्यवाहनायानुब्रूहि ' इति । तत् स्विष्टकृते । हव्यवाहनो वै देवानाम्, कव्यवाहनः पितॄणाम् । तस्मादाह–'अग्नये कव्यवाहनायानुब्रूहि ' इति ॥ ३० ॥

स उपस्तृणीत आज्यम् । अथास्य पुरोडाशस्यावद्यति । स तेनैव सह धानानाम्, तेन सह मन्थस्य । तत् सकृदवदधाति । अथोपरिष्टाद् द्विराज्यस्याभिघारयति । न प्रत्यनक्त्यवदानानि । नातिक्रामति । इत एवोपोत्थाय, आश्राव्याह–' अग्निं कव्यवाहनं यज ' इति । वषट्कृते जुहोति ॥ ३१ ॥

---

प्राथम्यम्, तृतीयस्य हविरादाने मन्थस्य प्राथम्यम् । अस्मादेव प्राथम्यात्सोमवदादियागत्रयस्य हविषां त्रयस्य धारणेऽपि निर्वापकाले सपितृभ्यः सोमवद्भ्यः षट्कपालं पुरोडाशमित्यादिना विशेषाभिधानम् ॥ २८ ॥ २९ ॥

इत्थं प्रधानयागं कृत्वा स्विष्टकृत्स्थानेऽग्निः कव्यवाहनो यष्टव्य इत्यभिप्रेत्य तदनुवाक्याप्रैषस्य वचनं विधत्ते–**अथाहाग्नय** इति । **तत् स्विष्टकृत** इति । यदेतत् " अग्नये कव्यवाहनायानुब्रूहि "–इति सम्प्रैषवचनम्, ' तत् ' ' स्विष्टकृते ' स्विष्टकृद्यागार्थम् । पितॄणां कव्यवाहनसम्बन्धप्रतिपादनेनैवैतदुपपादयति–**कव्यवाहनो वा** इति । देवेभ्यो दीयमानं हविः ' हव्यम् ', पितृभ्यस्तु दीयमानं तत् ' कव्यम् ' । तदुभयं वहतीति हव्यवाहनकव्यवाहननामानौ द्वावेवाग्नी क्रमेण देवपितृसम्बन्धिनौ । " कव्यपुरीषपुरीष्येषु ञ्युट् "–"हव्येऽनन्तःपादम् "–( पा. सू. ३ । २ । ६५ । ६६ ) इति सूत्राभ्यां वहतेर्ञ्युट् । एष चाग्नेरवान्तरभेदः प्रागप्याम्नातः; तैत्तिरीयकेऽप्याम्नायते–"त्रयो वा अग्नयः; हव्यवाहनः देवानाम्, कव्यवाहनः पितॄणाम्, सहरक्षाः असुराणाम्"–( तै. सं. २।५।८।११ ) इति । यस्मादेवं कव्यवाहनः पितॄणां सम्बन्धी, तस्मात् " अग्नये कव्यवाहनाय "–इत्येव वक्तव्यमिति निगमयति–**तस्मादाहेति** ॥ ३० ॥

तस्य स्विष्टकृत्स्थानीयस्यकव्यवाहनयागस्य पूर्ववदुपस्तरणादिहोमान्तानुष्ठानप्रकारमाह–**स उपस्तृणीत** इत्यादिना । स्विष्टकृद्यागस्य शेषद्रव्यसाध्यत्वाद्धविरुत्पत्तिक्रमेणैवात्रावदानमित्यभिप्रेत्याह–**अथास्य पुरोडाशस्येति** । **न प्रत्यनक्तीति** । हविः प्रत्यभिघारणस्य स्विष्टकृदर्थत्वात् तस्य च हविषो ग्रहणात् पुनः प्रत्यभिघारणं न कर्त्तव्यमित्यर्थः । अन्यदुक्तार्थम् ॥ ३१ ॥

---

१–सोमाय वा पितृमत इति । एवं बर्हिषद्भ्यो उत्तरतो धानामंथपुरोडाशानाम् । अग्निष्वात्तेभ्यो दक्षिणतो मंथपुरोडाशधानानाम् । का० श्रौ० सू० १२९–१३०–१३१ । २–पुरस्तादग्नये कव्यवाहनाय यथापूर्वं स्विष्टकृत् । का० श्रौ० सू० ५ । २३२ ।

स युन्नातिक्रामति ।(ती) इत एवोपोत्थाय जुहोति सकृदु ह्येव पुराञ्चः पितरोऽथ युत्सकृत्सकृत्सर्व्वेषाᳪं हविषाᳪं समवद्यति सकृदु ह्येव पुराञ्चः पितरोऽथ युद्व्यतिषुङ्गमवदानान्यवद्युत्यृतुवो वै पितर ऋतूनेवैतद्व्यु-तिषजत्यृतून्त्सन्दधाति तुस्माद्यतिषुङ्गमवदानान्यवद्यति ॥ ३२ ॥

तद्धैके ।(क२) एतुमेव होत्रे मन्थमादधति तᳪं होतोपहूयावैव जिघ्रति तं ब्रह्मणे प्रयच्छति तं ब्रह्मावैव जिघ्रति तुमग्नीधे प्रयच्छति तुमग्नीदवैव जिघ्र त्येतन्न्वेवोत कुर्व्वन्ति युथा त्वेवेतरस्य यज्ञस्येडाप्राशित्रᳪंसमवद्यन्त्येव मेवैतस्यापि समवद्येयुस्तामुपहूयावैव जिघ्रन्ति न प्राश्नन्ति प्राशितव्यं त्वेव वयं मन्यामहऽइति ह स्माहासुरिर्यस्य कस्य चाग्नौ जुह्वतीति ॥ ३३ ॥

---

स यन्नातिक्रामति । इत एवोपोत्थाय जुहोति । सकृदु ह्येव पराञ्चः पितरः । अथ यत् सकृत सकृत् सर्वेषां हविषां समवद्यति । सकृदु ह्येव पराञ्चः पितरः ।अथ यद् व्यतिषङ्गमवदानान्यवद्यति । ऋतवो वै पितरः—ऋतूनेवैतद् व्यतिषजति, ऋतून्त्सन्दधाति । तस्माद् व्यतिषङ्गमवदानान्यवद्यति॥ ३२

तद्धैके एतमेव होत्रे मन्थमादधति । तं होतोपहूयावैव जिघ्रति तं ब्रह्मणे प्रयच्छति । तं ब्रह्मा-वैव जिघ्रति । तमग्नीधे प्रयच्छति । तमग्नीदवैव जिघ्रति । एतन्न्वेवैतत् कुर्वन्ति । यथा त्वेवेतरस्य यज्ञस्येडाप्राशित्रं समवद्यन्ति—एवमेवैतस्यापि समवद्येयुः । तामुपहूयावैव जिघ्रन्ति न प्राश्नन्ति । प्राशितव्यं त्वेव वयं मन्यामहे—इति ह स्माहासुरिर्यस्य कस्य चाग्नौ जुह्वतीति ॥ ३३ ॥

---

स्विष्टकृच्चतुर्थेषूक्तेषु यागेषु नातिक्रामतीति योऽतिक्रमनिषेध उक्तः, तमनूद्य स्तौति—**स यन्नातिक्रामतीति** । सकृदवदानं प्रशंसति—**अथ यदिति** । सोमवदादियागत्रयेऽपि यद्धविषो व्यतिषञ्जनमुक्तम् 'अथास्य पुरोडाशस्यावद्यती' त्यादिना, तदनूद्य स्तौति—**अथ यद् व्यतिषङ्गमिति** । व्यतिषङ्गमिति क्रियाविशेषणम्; परस्परं संसृष्टं यथा भवति तथेत्यर्थः । **ऋतवो वै पितर** इति । पितॄणामृतुरूपत्वं प्रागेव दर्शितम् "त उ ते यान् पुनः समैरयत" इति । तथा च 'एतत्' एतेन, पितृदेवत्यहविषा व्यतिषञ्जनेन 'ऋतूनेव व्यतिषजति' परस्परं संसर्जयति, तेन व्यतिषञ्जनेन तान् 'ऋतून्' 'सन्दधाति' परस्परमविनाभूतान् करोति ॥ ३२ ॥

अथेडाप्रत्याम्नायत्वेन मन्थस्याधानमेकीयमतेनोपन्यस्यति—**तद्धैक** इति । 'तत्' तत्र खलु 'एके' शाखिन यागशिष्टम् 'एतमेव मन्थं होत्रे आदधति' होतुर्हस्ते प्रक्षिपन्तीत्यर्थः । एतस्मिन् पक्षे होतुः कर्तव्य-मुपदिशति—**तं होतेति** । **उपहूयेति** । वेदिसमीपे इडानिगदेनोपहवं कृत्वा, तदनन्तरमवघ्राय अग्नीधे दद्यात् । सोमवज्जिघ्रत्येव न तु कस्यचिदप्यत्र भक्षणमस्तीत्येवकारार्थः । प्राशित्रेडावदानपक्षमप्याह—**एतन्न्वेवेति** । 'नु' इति प्रसिद्धौ, 'एव' कारोऽवधारणार्थः, 'उत' शब्दोऽप्यर्थः । अपि खल्वेतद् वक्ष्यमाणमेकं पक्षं केचिदनु-तिष्ठन्ति । तदेव दर्शयति—**यथा त्वेवेति** । 'तु'—शब्द एकीयमतव्यावृत्त्यर्थः । 'इतरस्य' दर्शपौर्णमासादेः 'यज्ञस्य' 'यथा' इडां प्राशित्रं च 'समवद्यन्ति' सर्वेभ्यो हविर्भ्यः सम्भूयावद्यन्ति, 'एवमेव' 'एतस्यापि' पितृयज्ञस्य समवद्येयुः । **अवैव जिघ्रन्तीति** । अस्मिन्नपि पक्षे इडाप्राशित्रयोरवघ्राणमेव कर्त्तव्यम्, न तु प्राशन-

( त्यु ) अथ यतरो दास्यन्भवति । यद्यध्वर्युर्वा यजमानो वा स उदपात्रमादायापसलवि त्रिः परिषिञ्चन्पर्येति स यजमानस्य पितरमवनेजयत्यसाववनेनिक्ष्वेत्यसाववनेनिक्ष्वेति पितामहमसाववनेनिक्ष्वेति प्रपितामहं तद्यथाऽशिष्यतेऽभिषिञ्चेदेवं तत् ॥ ३४ ॥

( द्दु ) अथास्य पुरोडाशस्यावदाय सव्ये पाणौ कुरुते । धानानामवदाय सव्ये पाणौ कुरुते मन्थस्यावदाय सव्ये पाणौ कुरुते ॥ ३५ ॥

---

अथ यतरो दास्यन् भवति—यद्यध्वर्युर्वा, यजमानो वा, स उदपात्रमादाय अपसलवि त्रिः परिषिञ्चन्पर्येति । स यजमानस्य पितरमवनेजयति—" असाववनेनिक्ष्व " इति । " असाववनेनिक्ष्व " इति पितामहम् । " असाववनेनिक्ष्व "—इति प्रपितामहम् । तद् यथाऽशिष्यतेऽभिषिञ्चेद्-एवं तत् ॥ ३४ ॥

अथास्य पुरोडाशस्यावदाय सव्ये पाणौ कुरुते धानानामवदाय सव्ये पाणौ कुरुते । मन्थस्यावदाय सव्ये पाणौ कुरुते ॥ ३५ ॥

---

मित्यर्थः । प्राशनपक्षमप्याह—**प्राशितव्यं त्वेवेति** । इडावदानं प्राशित्रावदानं च यज्ञान्तरवदत्रापि ' प्राशितव्यमेव ' वयं मन्यामहे ' ' इति ' ' आसुरिः ' महर्षिः प्रतिपादयतीत्यर्थः । एवं प्रतिपादयत आसुरेरभिप्रायमाह—**यस्य कस्येति** । इडां प्राश्नन्तः ऋत्विजः ' यस्यकस्यचित् ' आत्मनः सम्बन्धिनि ' अग्नौ ' वैश्वानरे तद्धविः ' जुहति ' अतः प्राशने न दोष[1] इत्यनेनाभिप्रायेणे[2]त्यर्थः ॥ ३३ ॥

यजमानपितॄनुद्दिश्य पिण्डप्रदानमध्वर्युयजमानयोरन्यतरस्य कर्त्तव्यत्वं सिद्धवदनुवदंस्तत्प्राच्याङ्गमवनेजनं विधत्ते—**अथ यतर** इति । अध्वर्युयजमानयोर्मध्ये यतर इत्यर्थः । " किंयत्तदो निर्द्धारणे द्वयोरेकस्य डतरच् " ( पा. सू. ५ । ३ । ९२ ) इति डतरजन्तः । ' यदि अध्वर्युर्वा यजमानो वा ' ' दास्यन् ' पिण्डदाता ' भवति ', ' सः ' स्वयं यजमानः अध्वर्युर्वा ' उदपात्रम् ' उदकपूर्णं पात्रम् ' आदाय ' ' अपसलवि ' अप्रदक्षिणं ' त्रिः परिषिञ्चन् ' पित्र्यां वेदिम् ' पर्येति[3] ' । **स यजमानस्येति** । ' सः ' अध्वर्युः ' यजमानस्य पितरम् ' " असाववनेनिक्ष्व "—( श. प. कां २ प्र. ४ । २ । २३ ) इति मन्त्रेण ' अव-नेनिक्ष्वेति ' अवनेजति । यजमानस्तु यदि स्वयं पिंडदाता भवति, तदा स्वकीयमेव पितरमवनेजयेत् " असाववनेनिक्ष्व "—इत्यादिकं पिण्डपितृयज्ञप्रकरणे व्याख्यातम् ॥ ३४ ॥

**अथास्य पुरोडाशस्येत्यादि** । पुरोडाशादिहविःशेषान् ' सव्ये पाणौ ' ' अवदाय ' आलोड्य, त्रीन् पिण्डान् कृत्वा, तस्मिन्नेव हस्ते धारयेत् ( का. श्रौ. सू. ५।२३८ ) ॥ ३५ ॥

---

१–' शेषः '–इ० पा० । २–' मंथमुपहूय होताऽध्वर्युर्ब्रह्माऽग्नीदवघ्राय निदधाति । का० श्रौ० सू० ५ । २३४ । २–'प्राशित्रमवदायेडां वा सर्व्वे प्राश्नंति वा । का. श्रौ. सू. ५ । २३५ । ३–' व्वेदिं 'त्रिः परिषिंचत्युदपात्रेणाध्वर्युर्यजमानो वा ' । का. श्रौ. सू. ५ । २३६ ।

स ये॒माम॑वान्तरदि॒शम॒नु स्र॒क्तिः । ( स्तु ) त॒स्यां य॒जमानस्य पि॒त्रे द॑दा॒त्यसा॒वेतत्त॒ऽइत्य॒थ ये॒माम॑वान्तरदि॒शम॒नु स्र॒क्तिस्त॒स्यां य॒जमानस्य पिता॒म॒हाय द॒दात्य॒सा॒वेतत्त॒ऽइत्य॒थ ये॒माम॑वान्तरदि॒शम॒नु स्र॒क्तिस्त॒स्यां य॒जमा॒नस्य प्रपिता॒महाय द॒दात्य॒सा॒वेतत्त ऽइत्य॒थ ये॒माम॑वान्तरदि॒शम॒नु स्र॒क्ति॒स्त॒स्यां नि॒मृष्टे॒ऽत्र पि॒तरो मादयध्वं यथाभाग॒मावृ॑षायध्व॒मिति यथा॒भाग॒मश्नी॒तेत्ये॒वैत॒दाह॑ त॒द्यदे॒वं पि॒तृभ्यो द॒दाति ते॒नो स्वा॒न्पितॄ॒नेत॒स्मा॒द्य॒ज्ञान्ना॒न्त॒रेति ॥ ३६ ॥

ते स॒र्वे ऽए॒व य॒ज्ञोपवीति॒नो भू॒त्वा । ( त्वो ) उ॒दञ्च उ॒पनिष्क्र॒म्याह॒-

स येमामवान्तरदिशमनुस्रक्तिः—तस्यां यजमानस्य पित्रे ददाति—असावेतत्ते—इति । अथ येमामवान्तरदिशमनुस्रक्तिः—तस्यां यजमानस्य पितामहाय ददाति—असावेतत्ते—इति । अथ येमामवान्तरदिशमनुस्रक्तिः—तस्यां यजमानस्य प्रपितामहाय ददाति—असावेतत्ते—इति । अथ येमामवान्तरदिशमनुस्रक्तिः—तस्यां निमृष्टे—"अत्र पितरो मादयध्वं, यथाभागमावृषायध्वम्"—इति ( वा. सं. २ ३१ ) यथाभागमश्नीतेत्येवैतदाह । तद्यदेवं पितृभ्यो ददाति—तेनो स्वान्पितॄनेतस्माद्यज्ञान्नान्तरेति ॥ ३६ ॥

ते सर्वे एव यज्ञोपवीतिनो भूत्वा, उदञ्च उपनिष्क्रम्य, आहवनीयमुपतिष्ठन्ते । देवान्वा एष

स येमामवान्तरदिशमिति । 'इदं'—शब्देनोत्तरापरां दिशमभिनयेन निर्दिशति । "अनुर्लक्षणे"—( पा. सू. १ । ४ । ८४ ) इति लक्षणे अनुशब्दस्य कर्मप्रवचनीयत्वम् । उत्तरापरस्यां दिशि येयं वेदेः स्रक्तिः, 'तस्यां' 'यजमानस्य पित्रे' "असावेतत् ते"—( श. प. कां २ प्र. ४. ब्रा. २ कं. १९ ) इति मन्त्रेण पिण्डं दद्यात् । पितामहस्य पिण्डदानं विधत्ते—अथ येमामिति । 'इदं' शब्देन दक्षिणापरा अवान्तरा दिग् गम्यते । अन्यत् समानं पूर्वेण । प्रपितामहस्य पिण्डदानं विधत्ते—अथ येमामिति । अत्रेदमा दक्षिणपूर्वा दिगभिनयेन निर्दिश्यते । अत्र या वेदेः स्रक्तिः, तस्यां प्रपितामहार्थं पिण्डं दद्यात्[१] । इत्थं तिसृषु स्रक्तिषु पिण्डदानं विधाय, अवशिष्टायां स्रक्तौ समन्त्रके लेपमार्जने विधत्ते—अथ येमामवान्तरदिशमिति । इमामुत्तरपूर्वामवान्तरदिशमनु या वेदेः स्रक्तिः, तस्याम् "अत्र पितरः"—' इति ' मन्त्रेण हस्तगतं लेपं 'निमृष्टे' निमृजीत । तथा चोक्तं सूत्रकृता—"उत्तरापरस्यां प्रथमम्, सव्ये समवदाय सर्वेभ्यो यथामनिक्तं पिण्डान् ददात्यसावेतत्त इति, उत्तरपूर्वस्यां पाणी निमृष्टेऽत्र पितर इति"—( का. श्रौ. सू. ५।२३७–२३९ )[२] इति । "असावेतत्ते"—इत्यादिमन्त्रार्थः पिण्डपितृयज्ञे एव वर्णितः ( श. प. कां २ । ४ । २ । १९ ) विहितपिण्डदानमनूद्य तस्य प्रयोजनमाविष्करोति—तद्यदेवं पितृभ्य इति । पितृपितामहप्रपितामहादिभ्यः उक्तरीत्या पिण्डान् ददातीत्यर्थः । 'तेनो' तथा चैवं सति 'स्वान्' स्वकीयान् 'पितॄन्' 'एतस्मात्' पितृयज्ञात् 'नान्तरेति' अन्तरितान् न करोति, अपि तु भागिनः कृतवान् भवति ॥ ३६ ॥

आहवनीयोपस्थानं विधत्ते—ते सर्वे एवेति[३] । उदञ्च उपनिष्क्रम्येति । उदङ्मुखाः सन्तः परिवृतात्

१–'दर्शयति' इति क. पा. । २–स्रक्तिषु पित्र्यवनेजनं परिषिच्य परिषिच्य पूर्ववदुत्तरापरस्यां प्रथमम् । का. श्रौ. सू. ५।२३७
३–यज्ञोपवीतिनः सर्वे निष्क्रम्योदंचोऽक्षन्नमीमदंतेत्याहवनीयमुपतिष्ठंते द्वाभ्याम् । का. श्रौ. सू. ५ । २४० ॥

वनीयमुपतिष्ठन्ते देवान्वा ऽएष उपावर्तते य आहिताग्निर्भवति यो दर्शपूर्णमासाभ्यां यजतेऽथैतत्पितृयज्ञेनेवाचारिषुस्तदु देवेभ्यो निह्नुवते ॥३७॥

( त८ ) ऐन्द्रीभ्यामाहवनीयमुपतिष्ठन्ते । ( न्त८ ) इन्द्रो ह्याहवनीयोऽक्षन्नमीमदन्त ह्यव प्रिया अधूषत ॥ अस्तोषत स्वभानवो विप्रा नविष्ठया मती । योजा न्विन्द्र ते हरी ॥ सुसन्दृशं त्वा वयं मघवन्वन्दिषीमहि ॥ प्रनूनं पूर्णबन्धुरः स्तुतो यासि वशाँ२ँ॥ अनु योजान्विन्द्र ते हरीऽइति ॥ ३८ ॥

---

उपावर्तते—य आहिताग्निर्भवति, यो दर्शपूर्णमासाभ्यां यजते । अथैतत् पितृयज्ञेनेवाचारिषुः—तदु देवेभ्यो निह्नुवते ३७ ॥

ऐन्द्रीभ्यामाहवनीयमुपतिष्ठन्ते । इन्द्रो ह्याहवनीयः । " **अक्षन्नमीमदन्त ह्यव प्रिया अधूषत । अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजान्विन्द्र ते हरी ॥ १ ॥ सुसन्दृशं त्वा वयं मघवन्वन्दिषीमहि । प्रनूनं पूर्णबन्धुरः स्तुतो यासि वशाँ२ँ॥ अनु योजान्विन्द्र ते हरी ॥ २ ॥** "—इति ( वा० सं० ३ । ५१ । ५२ ॥ ३८ ॥

---

पिण्डपितृयज्ञस्थानात् निर्गत्येत्यर्थः । **देवान् वा** इत्यादि । 'यः' खलु 'आहिताग्निर्भवति' 'दर्शपूर्णमासाभ्यां' च 'यो यजते' 'एषः' 'देवान्' 'उपावर्त्तते' उपगतो भवति, देवसम्बन्धगतस्य यजमानस्य देवान् परित्यज्य यत् पितृयज्ञाचरणम्, तेन देवानां मनसि क्रोधोऽभूत्; पुनरावृत्याहवनीयोपस्थानेनातीवोदासीनताजनितमपराधं 'देवेभ्यः' 'निह्नुवते' शमयन्ति ॥ ३७ ॥

**ऐन्द्रीभ्यामिति**, मन्त्रविधिः । ऐन्द्र्या ऋचः कथमग्न्युपस्थाने सङ्गतिः, लिङ्गविरोधात् ? इत्यत आह—**इन्द्रो हीति**। परमैश्वर्ययोगादाहवनीय एवेन्द्रः,अतस्तदीयोपस्थाने ऐन्द्र्याः करणत्वं न विरुद्ध्यत इत्यर्थः । त एवैन्द्र्यौ पठति—**अक्षन्नमीमदन्तेति** । 'अक्षन्' अस्माभिर्दत्तं हविः पितरः अक्षन् अभुक्षत । अदेर्लुङि "लुङ्सनोर्घस्लृ"—( पा. सू. २ । ४ । ३७ ) इति घस्लादेशे, " मन्त्रे घसह्वरणश०"—( पा. सू. २ । ४ । ८० ) इति च्लेर्लुकि, " गमहन०"—( पा. सू. ६ । ४ । ९८ ) इति उपधालोपे, अक्षन्निति रूपम् । 'हि' यस्मात् एवम्, अतस्ते पितरो हविःस्वीकारेण 'अमीमदन्त' तृप्ता अभवन् । " मद तृप्तियोगे—"( धा. पा. चु. आ. १७२ ) इत्यस्माण्ण्यन्ताल्लुङि चङि रूपम् । तृप्तिरपि कुतोऽवगम्यते इति तत्राह—**अवप्रिया** इति । 'प्रियाः' आत्मीयाः तनूः ते पितरः 'अव अधूषत' भुक्तस्य हविषो रसातिशयस्याभिव्यक्त्यर्थम् अवाकम्पयन् । " धूञ् कम्पने "—( धा. पा. चु. उ. ३०१ ) इति धातुः । तदनन्तरं 'स्वभानवः' स्वायत्तदीप्तयः, 'विप्राः' मेधाविनः ते पितरः हविषः प्रदातारं यजमानं 'नविष्ठया' नवतरया 'मती' मत्या स्तुत्या 'अस्तोषत' उपभुक्तं हविः प्राशंसन्, सम्यगेतत् सञ्जातमिति । आहवनीयावस्थित हे इन्द्र ! त्वमपि 'ते' त्वदीयौ 'हरी' अश्वौ गमनार्थं 'नु' क्षिप्रं 'योजान्' योजयेति प्रथमाया ऋचोऽर्थः ।

**सुसन्दृशं त्वेति** । हे 'मघवन् धनवन्' ! आहवनीयरूपेन्द्र ! सुष्ठु-सम्यग्दर्शनीयं 'त्वा' त्वां 'वन्दिषीमहि'

( त्यु ) अथ प्रतिपरेत्य गार्हपत्यमुपतिष्ठन्ते । मनो न्वाह्वामहे नाराशꣳसेन स्तोमेन । पितॄणां च मन्मभिः ॥ आ न एतु मनः पुनः क्रत्वे दक्षाय जीवसे ॥ ज्योक्च सूर्यं दृशे ॥ पुनर्नः पितरो मनो ददातु दैव्यो जनः । जीवं व्रातꣳसचेमहीति पितृयज्ञेनेव वा एतदचारिषुस्तदु खलु पुनर्जीवानपिपद्यन्ते तस्मादाह जीवं व्रातꣳसचेमहीति ॥ ३९ ॥

( त्यु ) अथ यतरो ददाति । स पुनः प्राचीनावीती भूत्वाऽभिप्रपद्य जप-

---

अथ प्रतिपरेत्य गार्हपत्यमुपतिष्ठन्ते । "मनो न्वाह्वामहे नाराशंसेन स्तोमेन । पितॄणां च मन्मभिः ॥ आ न एतु मनः पुनः क्रत्वे दक्षाय जीवसे । ज्योक् च सूर्यं दृशे ॥ पुनर्नः पितरो मनो ददातु दैव्यो जनः । जीवं व्रातं सचेमहि"—इति (वा. सं. ४।९३–९९ ) । पितृयज्ञेनेव वा एतदचारिषुः—तदु खलु पुनर्जीवानपिपद्यन्ते । तस्मादाह—जीवं व्रातं सचेमहीति ॥३९॥

अथ यतरो ददाति स पुनः प्राचीनावीती भूत्वा, अभिप्रपद्य जपति—" अमी मदन्त पितरो यथाभागमावृषायिषत "—इति ( वा. सं. २।३१ ) । यथाभागमाशिषुरित्येवैतदाह ॥ ४० ॥

---

नुमः, अभिवादयामो वा । " वदि अभिवादनस्तुत्योः "—( धा. पा. भ्वा. आ. ११ ) इति धातुः । अस्माभिः—वन्दितस्त्वं ' पूर्णबन्धुरः ' दत्तेन हविषा पूर्णेन रथनीडेन युक्तः, ' स्तुतः ' च सन् अस्माभिः कृतं स्तोत्रं हविश्च स्वीकृत्य ' वशान् अनु ' कामान् अनु यथाकामं यथेष्टं ' प्रयासि ' । योजानित्यादि, पूर्ववत् ॥ ३८ ॥

गार्हपत्योपस्थानं विधत्ते—अथ प्रतिपरेत्येति । ' प्रति–परेत्य ' आहवनीयसमीपात् प्रतिनिवृत्य इत्यर्थः । तस्मिन् गार्हपत्योपस्थाने " मनो न्वाह्वामहे—" इत्याद्यास्त्रयो मन्त्राः पठिताः । तेषामयमर्थः—तत्र प्रथमा मनो न्विति । अस्मदीयं ' मनः ' ' नु ' क्षिप्रम् ' आह्वामहे ' । केन साधनेन ? ' नाराशंसेन स्तोमेन ' नरैः शंसनीयेन स्तोत्रेण, ' पितॄणां ' सम्बन्धिभिः ' मन्मभिः ' मननैश्च ॥

आ न एत्विति द्वितीया । पितृयज्ञकरणादपक्रान्तमस्मदीयं ' मनः ' ' पुनः ' अस्मान् ' एतु ' आगच्छतु । किमर्थम् ? ' क्रत्वे ' क्रतुकर्मणे, ' दक्षाय ' बलाय, ' जीवसे ' जीवनाय, ' ज्योक् ' चिरकालं ' सूर्यं च ' ' दृशे ' द्रष्टुम् । " दृशे विख्ये च "– ( पा. सू. ३ । ४ । ११ ) इति तुमर्थे निपात्यते ॥

पुनर्न इति तृतीया । हे ' पितरः ! ' ' दैव्यः ' देवसम्बन्धी ' जनः ' ' नः ' अस्मभ्यं ' मनः पुनः ददातु ' । ' जीवं ' जीवनवन्तं ' व्रातं ' गणम् पुत्रपौत्रादिसमूहम् ' सचेमहि ' प्राप्नुयामेति । अन्तिमपादे जीवशब्दप्रयोगस्याभिप्रायमाह—पितृयज्ञेनेवेति । ' पितृयज्ञेन ' खलु ' एतत् ' इदानीम् ' अचारिषुः, ' अतः पितृयज्ञस्य कर्त्तार ऋत्विग्यजमानाः पितृसम्भक्ताः सन्तः प्रजायुक्ता भवेयुः । ' तत् ' तथा सति " जीवं व्रातम्–" इति अनेन मन्त्रभागेन ' जीवान् ' एव पुत्रपौत्रादीन् स्वयं जीवन्तः ' अपिपद्यन्ते ' पुनरपि गच्छन्ति । तस्मादिति, उक्तार्थनिगमनम् ॥ ३९ ॥

पिण्डदातृजपं विधत्ते—अथ यतर इति । 'अथ' उपस्थानानन्तरम्, अध्वर्युयजमानयोर्मध्ये 'यतरः' पिण्डं

---

१–मनो न्वाह्वामह इति गार्हपत्यं तिसृभिः । का. श्रौ. सू. ५ । २४१ । २–प्राचीनावीती प्रविश्यामीमदंतेति दाता जपति ॥ का. श्रौ. सू. ५ । २४२ ।

त्यमीमदन्त पितरो यथाभागमावृषायिषतेति यथाभागमाशिषुरित्ये-वैतदाह ॥ ४० ॥

(ह्रा) अथोदपात्रमादाय। पुनः प्रसलवि त्रिः परिषिञ्चन् पर्यैति स यजमानस्य पितरमवनेजयत्यसाववनेनिक्ष्वेत्यसाववनेनिक्ष्वेति पितामहमसाववने-निक्ष्वेति प्रपितामहं तद्यथा जक्षुषेऽभिषिञ्चेदेवं तत्तद्यत्पुनः प्रसलवि त्रिः परिषिञ्चन्पर्यैति प्रसलवि न इदं कर्मानु सन्तिष्ठाताऽइति तस्मात्पुनः प्रसलवि त्रिः परिषिञ्चन्पर्यैति ॥ ४१ ॥

(त्यु) अथ नीविमुद्वृह्य नमस्करोति। पितृदेवत्या वै नीविस्तस्मान्नीवि-मुद्वृह्य नमस्करोति यज्ञो वै नमो यज्ञियानेवैनानेतत्करोति षट्कृत्वो नमस्करोति षड्वाऽऋतव ऋतवः पितरस्तदृतुष्वेवैतद्यज्ञं प्रतिष्ठापयति तस्मात्षट्कृत्वो नमस्करोति गृहान्नः पितरो दत्तेति गृहाणाᳬ ह पितर ईशत ऽएषो ऽएतस्याशीः कर्मणः ॥ ४२ ॥

---

अथोदपात्रमादाय, पुनः प्रसलवि त्रिः परिषिञ्चन् पर्यैति। स यजमानस्य पितरमवनेजयति—"असाववनेनिक्ष्व" इति। "असाववनेनिक्ष्व" इति पितामहम्। "असाववनेनिक्ष्व" इति प्रपितामहम्। तद् यथा जक्षुषेऽभिषिञ्चेद्—एवं तत्। तद्यद् पुनः प्रसलवि त्रिः परिषिञ्चन् पर्यैति। 'प्रसलवि न इदं कर्मानुसन्तिष्ठातै' इति। तस्मात्—पुनः प्रसलवि त्रिः परिषिञ्चन् पर्यैति ॥४१॥

अथ नीविमुद्वृह्य नमस्करोति। पितृदेवत्या वै नीविः। तस्मान्नीविमुद्वृह्य नमस्करोति। यज्ञो वै नमः। यज्ञियानेवैनानेतत् करोति। षट्कृत्वो नमस्करोति। षड्वा ऋतवः। ऋतवः पितरः—तदृतुष्वे-

---

'ददाति,' 'स पुनः' 'प्राचीनावीती' 'भूत्वा,' पित्र्यं देशम् 'अभिपद्य' प्रविश्य "अमीमदन्त"—इति मन्त्रं जपेत्। स च मन्त्रः, तद् ब्राह्मणं च पिण्डपितृयज्ञे व्याख्यातम् ॥ ४० ॥

पिण्डदानस्योदीच्याङ्गमुदकावनेजनं पूर्ववद् विधत्ते—**अथोदपात्र**मिति। 'तद्यथा जक्षुषे' इति, अवनेजनस्य प्रयोजनकथनम्। एतत् सर्वं पिण्डपितृयज्ञ एव व्याख्यातम् ( श. प. कां. २ । ४ । २ । २३ )। विहितं परिषेचनं पुनः श्रुतम्, तस्य यत् प्रादक्षिण्यम्, तत् स्तौति-**यत् पुन**रित्यादिना। **प्रसलवि न** इति। अप-सलमप्रादक्षिण्यम् तद्विपरीतं प्रसलं प्रादक्षिण्यम्; मत्वर्थीयो विनिः। प्रादक्षिण्यवतो मम 'इदं' पित्र्यमपि 'कर्म' 'अनुसन्तिष्ठातै' संस्थितं भवेत्। 'इति' अनेनाभिप्रायेण अवसाने 'प्रसलवि' अपसव्येन परिषे-चनं क्रियत इत्यर्थः ॥ ४१ ॥

**अथ नीविमि**त्यादि। पिण्डपितृयज्ञप्रकरणे व्याख्यातम् (श. प. का. २ प्र. ४. ब्रा. २ कं. २४)॥४२॥

---

१—अवनेज्य पूर्ववत्प्रदक्षिणम्। नीवीं विस्रस्य नमो व इत्यंजलिं करोति षड्वा नमस्कारान्। गृहान्नः पितरो दत्तेति च। का. श्रौ. सू. ५। २४३–२४५।

(टं) ते सर्व्वऽएव यज्ञोपवीतिनो भूत्वा । (त्वाऽनु) अनुयाजाभ्यां प्रचरिष्यन्त इत्थाद्यजमानश्च ब्रह्मा च पश्चात्परीतः पुरस्तादग्नीदुपविशति होता होतृषदने ॥ ४३ ॥

(नेऽथा) अथाह ब्रह्मन् प्रस्थास्यामि । समिधमाधायाग्निमग्नीत्सम्मृड्ढीति स्रुचावादाय प्रत्यङ्ङतिक्रामत्यातिक्रम्याश्राव्याह देवान्यजेति सोऽपबर्हिषौ द्वावनुयाजौ यजति प्रजा वै बर्हिर्नेत्प्रजाः पितृषु दधानीति तस्मादपबर्हिषौ द्वावनुयाजौ यजति ॥ ४४ ॥

(त्यु) अथ सादयित्वा स्रुचौ व्यूहति। स्रुचौ व्युह्य परिधीन्त्समज्य परिधिमभिपद्याश्राव्याहेषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकायेति सूक्तवाकꣳ होता प्रतिपद्यते नाध्वर्युः प्रस्तरꣳसमुल्लुम्पतीत्येवोपास्ते यदा होता सूक्तवाकमाह ॥ ४५ ॥

---

वैतद्यज्ञं प्रतिष्ठापयति । तस्मात् षट्कृत्वो नमस्करोति । " गृहान्नः पितरो दत्त "–इति । गृहाणां ह पितर ईशते । एषो एतस्याशीः कर्मणः ॥ ४२ ॥

ते सर्व एव यज्ञोपवीतिनो भूत्वा, अनुयाजाभ्यां प्रचरिष्यन्तः इत्थाद्यजमानश्च ब्रह्मा च पश्चात् परीतः । पुरस्तादग्नीत् । उपविशति होता होतृषदने ॥ ४३ ॥

अथाह–'ब्रह्मन् प्रस्थास्यामि ' ' समिधमाधायाग्निमग्नीत् सम्मृड्ढि ' इति । स्रुचावादाय प्रत्यङ्ङतिक्रामति । अतिक्रम्य आश्राव्याह–'देवान् यज ' इति । सोऽपबर्हिषौ द्वावनुयाजौ यजति । प्रजा वै बर्हिः–नेत् प्रजाः पितृषु दधानीति । तस्मादपबर्हिषौ द्वावनुयाजौ यजति ॥ ४४ ॥

अथ सादयित्वा स्रुचौ व्यूहति । स्रुचौ व्युह्य, परिधीन्त्समज्य, परिधिमभिपद्य आश्राव्याह–"इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय"–इति । सूक्तवाकं होता प्रतिपद्यते । नाध्वर्युः । प्रस्तरं समुल्लुम्पामि इत्येवोपास्ते–यदा होता सूक्तवाकमाह ॥ ४५ ॥

---

चोदकप्राप्तमनुयाजाद्युदीच्याङ्गकलापं सविशेषमतः परमनुक्रामति–**ते सर्व एवेति** । **इत्थाद्यजमानश्चेति** । प्रयाजाद्युदीच्याङ्गानुष्ठानसमये एव ब्रह्मयजमानाद्यास्तत्र तत्र स्थाने परीत्योप[1]विशेयुः ॥ ४३ ॥

**अथाहेति** । **प्रत्यङ्ङतिक्रामतीति** । प्राचो दक्षिणदिक्त्वस्य प्रागुपपादितत्वाद्दक्षिणातिक्रमणस्थाने प्रत्यङ्मुखोऽध्वर्युरतिक्रामेदित्यर्थः । ' अपबर्हिषौ ' बर्हिः प्रथमोनुयाजः, तद्वर्जितौ ' द्वावनुयाजौ ' यज यजेति । बर्हिर्वर्जने कारणमाह–**प्रजा वा इति** ॥ ४४ ॥

स्रुग्व्यूहनादिकं प्रकृतिवदेव कर्त्तव्यमित्यनुक्रामति–**अथ सादयित्वेत्यादिना** । सूक्तवाकानुवचनं प्रकृति-

---

१–ब्रह्मामंत्रणादि प्राक्स्रुग्व्यूहनात् प्रयाजवत् । यज्ञोपवीतिविपर्ययम् । का. श्रौ. सू. ५ । २४६ । २४७ ।

( ह्रा ) अथाग्नीदाहानुप्रहरेति । स न किञ्चनानुप्रहरति तूष्णीमेवात्मान-मुपस्पृशति ॥ ४६ ॥

( त्यु ) अथाह संवदस्वेति । ( त्यु ) अगानग्नीदगञ्छ्रावय श्रौषट् स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहीत्युपस्पृशत्येव परिधी-न्नानुप्रहरत्यथैतद्बर्हिरनुसमस्यति परधींश्च ॥ ४७ ॥

तद्धैके । हविरुच्छिष्टमनुसमस्यन्ति तदु तथा न कुर्याद्धुतोच्छिष्टं वा ऽएतन्नेद्धुतोच्छिष्टमग्नौ जुहवामेति तस्मादपो वैवाभ्यवहरेयुः प्राश्नीयुर्वा ॥ ४८ ॥

इति पञ्चमप्रपाठके द्वितीयं ब्राह्मणम् ॥ ५ ॥ २ ॥ ( ६ । १ )

---

अथाग्नीदाह–' अनुप्रहर ' इति । स न किञ्चनानुप्रहरति, तूष्णीमेवात्मानमुपस्पृशति ॥ ४६ ॥

अथाह–' संवदस्व ' इति । ' अगानग्नीत् ' । ' अगन् ' । ' श्रावय ' । ' श्रौषट् ' । ' स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहि ' इति । उपस्पृशत्येव परिधीन्, नानुप्रहरति । अथैतद्बर्हिरनुसमस्यति, परिधींश्च ॥ ४७ ॥

तद्धैके हविरुच्छिष्टमनुसमस्यन्ति । तदु तथा न कुर्यात् । हुतोच्छिष्टं वा एतत्–नेद्धुतोच्छिष्टमग्नौ जुहवामेति । तस्मादपो वैवाभ्यवहरेयुः–प्राश्नीयुर्वा ॥ ४८ ॥ इति साकमेधपर्वणि पितृयज्ञः ॥

---

वत् प्राप्तम् । प्रस्तरप्रहरणं निषेधति–**नाध्वर्युरि**ति । ' न समुल्लुम्पति ' न गृह्णाति, न प्रहरेत् तूष्णीमेवो-पासीत प्रस्तरमाप्रहरणेन्[३] ॥ ४५ ॥ ४६ ॥

अग्नीत्प्रैषस्यानिवृत्तिमाह–**अथाहे**ति । ' **स्वगा दैव्या होतृभ्यः** '–इति सम्प्रैषेऽध्वर्युणोक्ते होता शंयुवाकं ब्रूयात्; न च तदानीमध्वर्युः परिधीननुप्रहरेत्, केवलमुपस्पृशेदेव[३] । बर्हिषः परिधीनाञ्च तूष्णीमग्नौ प्रहरणं विधत्ते–**अथैतदि**ति । ' एतत् ' चतुःस्रक्त्यां वेद्यां स्तीर्णं ' बर्हिः ' ' परिधींश्च ' आदाय युगपदग्नौ ' अनुसमस्यति ' प्रक्षिपति[४] ॥ ४७ ॥

अथ हविःशेषस्याप्यग्नौ प्रक्षेपमेकीयमतेनोपन्यस्यति–**तद्धैक** इति । तदेतन्निषिध्योपपादयति–**तदु तथे**ति । हुतशेषस्य पुनर्होमयोग्यत्वाभावान्नैष पक्षो युक्त इत्यर्थः । का तर्हि हविःशेषस्य प्रतिपत्तिरिति, तामाह–**तस्मादि**ति । ' हुतोच्छिष्टम् अपोऽभ्यवहरेयुः ' । अग्नौ प्रासनपक्षस्य व्युदासार्थ ' एव ' कारः । ऋत्विजो ' वा प्राश्नीयुः ' इति पक्षान्तरम् । सूत्रकारोऽप्येतत् सर्वमाह स्म–" न प्रस्तरमादत्ते " इत्यादिना[५] ॥ ४८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे षष्ठाध्यायस्य प्रथमं ब्राह्मगम ( २-६-१ ) ॥

---

१–" न प्रस्तरमादत्ते " । का. श्रौ. सू. । ५।२४८। २–" अनुप्रहरेत्युक्ते न किंचनानुप्रहरति । तूष्णीमात्मान् ँ सँ स्पृशति " का. श्रौ. सू. ५ । २४९ । २५० । ३–" उपस्पृश्य परिधीन्नानुप्रहरति । " का. श्रौ. सू. ५ । २५१ । ४–" शंय्वंतं भवति । बर्हिः परिध्यग्नौ प्रास्यति ॥" का०श्रौ०सू० ५।२५२।२५३ । ५––"हविरुच्छिष्टं च" । "अप्सु प्रास्यं वा ।" का.श्रौ.सू.५।२५४।२५५।

महाहविषा ह वै देवा वृत्रं जघ्नुः । ( स्ते ) तेनो ऽएव व्यजयन्त येयु-मेषां विजितिस्तामथ यानेवैषां तस्मिन्त्सङ्ग्राम ऽइषव आर्च्छंस्तानेतैरेव शल्यान्निरहरन्त तान् व्यवृहन्त यत्त्र्यम्बकैरयजन्त ॥ १ ॥

( न्ताथ ) अथ यदेष ऽएतैर्यजते । तन्नाह न्वेवैतस्य तथा कं च नेषुर्ऋच्छतीति देवा अकुर्वन्निति त्वेवैष ऽएतत्करोति याश्च त्वेवास्य प्रजा जाता याश्चाजातास्ता ऽउभयी रुद्रियात्प्रमुञ्चति ता ऽअस्यानमीवा ऽअकिल्बिषाः प्रजाः प्रजायन्ते तस्माद्वा ऽएष ऽएतैर्यजते ॥ २ ॥

ते वै रौद्रा भवन्ति । रुद्रस्य हीषुस्तस्माद्रौद्रा भवन्त्येककपाला भव-न्त्येकदेवत्या असन्निति तस्मादेककपाला भवन्ति ॥ ३ ॥

अथ त्र्यम्बकहविर्योगः ।

महाहविषा ह वै देवा वृत्रं जघ्नुः । तेनो एव व्यजयन्त—येयमेषां विजितिः—ताम् । अथ यानेवैषां तस्मिन्त्सङ्ग्राम इषव आर्च्छंस्तान्—एतैरेव शल्यान्निरहरन्त । तान् व्यवृहन्त—यत् त्र्यम्बकैरयजन्त ॥ १ ॥

अथ यदेष एतैर्यजते । तन्नाह न्वेवैतस्य तथा कं च नेषुर्ऋच्छतीति देवा अकुर्वन् । इति त्वेवैष एतत करोति । याश्च त्वेवास्य प्रजा जाताः, याश्चाजाताः—उभयी रुद्रियात्प्रमुञ्चति । ता अस्यान-मीवा अकिल्बिषाः प्रजाः प्रजायन्ते । तस्माद्वा एष एतैर्यजते ॥ २ ॥

ते वै रौद्रा भवन्ति । रुद्रस्य हीषुः । तस्माद्रौद्रा भवन्ति । एककपाला भवन्ति । एकदेवत्या अस-न्निति । तस्मादेककपाला भवन्ति ॥ ३ ॥

अथ विधित्सितानां त्र्यम्बकहविषां शल्यनिर्हरणहेतुत्वमितिहासेनोपपादयति—**महाहविषेति** । **अथ यानेवे-त्यादि** । ‘ तस्मिन् सङ्ग्रामे ’ ‘ एषां ’ देवानां मध्ये ‘ यानेव ’ इन्द्रप्रभृतीन् ‘ इषवः ’ वृत्रमुक्ताः शराः ‘ आर्च्छन् ’ प्राप्नुवन्, ‘ तान् ’ देवान् ‘ एतैरेव ’ त्रैयम्बकैर्हविर्भिस्तस्मात् ‘ शल्यात् ’ ‘ निरहरन्त ’ वियो-जितवन्तः । निर्हरणप्रकारमाह—**तान् व्यवृहन्तेति** । “ वृहू उद्यमने ” ( धा. पा. तु. प. ६६ ) । शल्य-प्रोतांस्तानस्माच्छल्यादुद्धरन्त[2] इत्यर्थः । **एतैरेवेति** । प्रतिनिर्देशस्य सव्यपेक्षत्वात्तन्निर्दिशति—**यत् त्र्यम्बकै-रिति** । अम्बिका नाम स्त्री अस्य स्वसा अतस्त्र्यम्बको रुद्रः । देवतावाचिना लक्षणयाऽत्र हवींष्युच्यन्ते ॥ १ ॥

आख्यायिकया प्रतिपादितमर्थं प्रकृते योजयति—**अथ यदेष** इति । ‘ एषः ’ इदानीन्तनो यजमानः । **तन्नाहेति** । ‘ न, अह, नु, एव ’ इति चत्वारो निपाताः । ‘ तत् ’ तेन त्रैयम्बकहविर्योगेन अद्यापि ‘ एतस्य ’ यजमानस्य सम्बन्धिनमेव ‘ कञ्च ’ कमपि पुरुषम् ‘ इषुः ’ ‘ तथा ’ ‘ नैव ’ ‘ ऋच्छति ’ प्राप्नोति । देवानु-कारित्वस्य हेतुमाह—**इति देवा** इति । **याश्च त्वेवास्येति** । ‘ अस्य ’ यजमानस्य सम्बन्धिनीः ‘ प्रजाः ’ ‘ जाताः, ’ ‘ याश्च ’ ‘ अजाताः ’ प्रजनिष्यमाणाः, ‘ ताः ’ ‘ सर्वाः ’ ‘ उभयीः ’ उभयविधाः प्रजाः ‘ रुद्रियात् ’ रुद्रकृताद्धिंसनात् ‘ प्रमुञ्चति ’ । प्रतिपुरुषं सङ्ख्याय क्रियमाणैरेतैः त्रियम्बकैर्हविर्भिस्तस्य रुद्रस्य प्रीणितत्वात् । **ता अस्येत्यादि**, गतम् ॥ २ ॥

तेषां देवतां विधाय प्रशंसति—**ते वै रौद्रा भवन्तीति** । रुद्रो देवता एषाम् । “ सास्य देवता ”—

१—त्रैयम्बकहविषां इति त्रियंबकहविषां इति च पा. । इहोत्तरत्राप्येवमेव । २—उद्धृतवन्तः इति पा. ।

ते वै प्रतिपुरुषम् । यावन्तो गृह्याः स्युस्तावन्त एकेनातिरिक्ता भवन्ति तत्प्रतिपुरुषमेवैतदेकैकेन या अस्य प्रजा जातास्ता रुद्रियात्प्रमुञ्चत्येके-नातिरिक्ता भवन्ति तद्या एवास्य प्रजा अजातास्ता रुद्रियात्प्रमुञ्चति तस्मादेकेनातिरिक्ता भवन्ति ॥ ४ ॥

स जघनेन गार्हपत्यम् । यज्ञोपवीती भूत्वोदङ्ङासीन एतान्गृह्णाति स तत एवोपोत्थायोदङ् तिष्ठन्नवहन्त्युदीच्यौ दृषदुपले ऽउपदधात्युत्तरार्द्धे गार्हपत्यस्य कपालान्युपदधाति तद्यदेव तामुत्तरां दिशᳬं सचन्त ऽएषा ह्येतस्य देवस्य दिक्तस्मादेतामुत्तरां दिशᳬं सचन्ते ॥ ५ ॥

---

ते वै प्रतिपुरुषं—यावन्तो गृह्याः स्युः—तावन्त एकेनातिरिक्ता भवन्ति । तत् प्रतिपुरुषमेवैतदेकै-केन—या अस्य प्रजा जातास्ता रुद्रियात् प्रमुञ्चति । एकेनातिरिक्ता भवन्ति—तद् या एवास्य प्रजाः अजाताः—ता रुद्रियात् प्रमुञ्चति । तस्मादेकेनातिरिक्ता भवन्ति ॥ ४ ॥

स जघनेन गार्हपत्यं यज्ञोपवीती भूत्वोदङ्ङासीन एतान् गृह्णाति । स तत एव उपोत्थायोदङ् तिष्ठन्नवहन्ति । उदीच्यौ दृषदुपले उपदधाति । उत्तरार्द्धे गार्हपत्यस्य कपालान्युपदधाति । तद् यदेव तामुत्तरां दिशं सचन्ते—एषा ह्येतस्य देवस्य दिक् । तस्मादेतामुत्तरां दिशं सचन्ते ॥ ५ ॥

---

( पा. सू. ४ । २। २४ ) इत्यण् । तत्र कारणमाह—**रुद्रस्येति** । 'हि' यस्माद्रुद्रसम्बन्धी 'इषुः' त्रिपुरविज-यार्थं रुद्रस्यायुधत्वेन निर्म्मितः, तस्मात् । अत एवान्यत्र रुद्रस्य त्रिपुरविजयप्रस्तावे श्रूयते—" त इषुं समस्कु-र्वत "—( तै. सं. ६ । २ । ३ । १ ) इति । हविषामेककपालसंस्कार्यत्वं विधाय स्तौति—**एककपाला** इति । 'एकदेवत्याः' एकदेवतार्थाः सर्वे इमे पुरोडाशाः 'असन्' भवन्त्वित्यनेनाभिप्रायेण ॥ ३ ॥

कियन्तस्ते त्र्यम्बकाः कार्या इति तत्परिमाणमाह—**ते वै प्रतिपुरुष**मिति । 'यावन्तः' यावत्परिमाणविशिष्टा यजमानस्य 'गृह्याः' गृहसम्बन्धिनो ज्ञातयो भवेयुः, तत्र प्रतिपुरुषमेकैकस्य पुरुषस्यैकैकः पुरोडाश इति गणयित्वा 'तावन्तः' ते पुरोडाशा एकेनाधिकाश्च कर्त्तव्याः । एतत्प्रशंसति—**तत्प्रतिपुरुष**मिति । पुरुषं पुरुषं प्रति प्रतिपुरुषम्, वीप्सायामव्ययीभावः । **एकैकेने**ति । " एकं बहुव्रीहिवत्" ( पा. सू. ८ ; १ । ९ ) इति वीप्सायां द्विर्वचनम्, बहुव्रीहिवद्भावात् सुपो लोपः । अन्यदुक्तार्थम् । एकातिरेकमनूद्य तस्य प्रयोजन-माह—**एकेने**ति ॥ ४ ॥

यावदुक्तचोदना ह्येते पुरोडाशाः अतस्तेषां संस्कारप्रकारमाह—**स जघनेने**ति । गार्हपत्यस्य पश्चात् 'यज्ञो-पवीती भूत्वा', 'उदङ्मुख आसीनः' 'एतान्' पुरोडाशान् निर्वपेत् । अवषट्कारा[ण]त्वेनैष्टिकधर्माणामप्राप्ते-र्निर्वपणादिकं सर्वं तूष्णीमेव कर्तव्यम् । अत एवोक्तं सूत्रकृता—" त्रैयम्बकान्निर्वपति " इति प्रक्रम्य, " जुहो-तयोऽवषट्काराः " इति । तत्र अवषट्कारा इति च्छेदः । हविरुत्पत्त्यन्यथानुपपत्त्याऽऽक्षिप्तानि तद्धर्म्मकान्यवहन-

---

१—'त्रैयंबकान्निर्वपति रौद्रानेककपालान् यावंतो यजमानगृह्या एकाधिकान् ॥ ( का. श्रौ. सू. ५ । २५६ ) उदङ्मुखः सर्वम् । का. श्रौ. सू. ५ । २५८ । देशांश्च । का. श्रौ. सू. ५ । २५९ । आखूत्करचतुष्पथस्थाणुवृक्षवंशादयो देशाः । जुहोतयोऽवषट्-कारान् । का. श्रौ. सू. ५ । २६० ।

ते वा ऽअक्ताः स्युः । ( २ ) अक्तꣳ हि हविस्त ऽउ वा ऽअनक्ता ऽएव स्युरभिमानुको ह रुद्रः पशून्त्स्याद्यदङ्ख्यात्तस्मादनक्ता ऽएव स्युः ॥ ६ ॥

( स्तं ) तान्त्सार्द्धं पात्र्याꣳ समुद्वास्य । ( स्यान्वा ) अन्वाहार्यपचना-दुल्मुकमादायोदङ् परेत्य जुहोत्येषा ह्येतस्य देवस्य दिक्पथि जुहोति पथा हि स देवश्चरति चतुष्पथे जुहोत्येतद्ध वा ऽअस्य जान्धितं प्रज्ञातमव-सानं यच्चतुष्पथं तस्माच्चतुष्पथे जुहोति ॥ ७ ॥

---

ते वा अक्ताः स्युः । अक्तं हि हविः । त उ वा अनक्ता एव स्युः । अभिमानुको ह रुद्रः पशू-न्त्स्याद् यदङ्ख्यात् । तस्मादनक्ता एव स्युः ॥ ६ ॥

तान्त्सार्द्धं पात्र्यां समुद्वास्य, अन्वाहार्यपचनादुल्मुकमादाय—उदङ् परेत्य जुहोति । एषा ह्येतस्य देवस्य दिक् । पथि जुहोति । पथा हि स देवश्चरति । चतुष्पथे जुहोति । एतद्ध वा अस्य जान्धितं प्रज्ञातमवसानं यच्चतुष्पथम् । तस्माच्चतुष्पथे जुहोति ॥ ७ ॥

---

नादीनि । वैकृतं विशेषं वक्तुमनुक्रामति—**स तत एवे**त्यादिना । प्रागुदीच्यां रुद्राधिष्ठितत्वेनोत्तरदिशो रुद्रसम्ब-न्धात् तद्दिक्त्वाच्च रुद्रदैवताख्या, अतस्तत्कर्मस्ववहननादिषु सर्वत्रोदक्संबन्धः कर्तव्य इति । तत्र ' तद्यत् ' यस्माद्रुद्रदेवत्या । तस्मात् ' ताम् ' एताम् ' उत्तरां दिशं ' 'सचन्ते' सर्वेषु व्यापारेषु ऋत्विजः समवयन्ति॥ ९॥

एषां हविषामक्ततार्थमभिघारणपक्षमाह—**ते वा अक्ताः स्यु**रिति । ' वै ' शब्दोऽवधारणे । खलु ' ते ' पुरोडाशाः ' अक्ताः ' अज्येनाभिघारिता एव ' स्युः'। तत्र हेतुमाह—**अक्तं ही**ति । ' हि ' यस्मात् ' अक्तम् ' अभिघारितमेव हविर्भवति । तथा च तैत्तिरीयकम्—"प्रच्युतं वा एतदस्माल्लोकादगतं देवलोकं यच्छृतं हविरन-भिघारितमभिघार्योद्वासयति ( तै. सं. २ । ६ । ३ । ९ ) इति । अनभिघारितपक्षमाह—**त उ वा** इति । तत्र कारणमाह—**अभिमानुक** इति । पशुप्रभवेनाज्येन यदि रौद्रान् पुरोडाशानञ्ज्यात् ततः स रुद्रः आज्यसम्ब-न्धद्वारा तत्कारणभूतान् पशून् ' अभिमानुकः ' अभिमन्तुं बाधितुं शक्तः स्यात् ॥ ६ ॥

**तान् सार्द्धमि**त्यादि । निगदसिद्धम् । उत्तरदिशि विशेषं विधत्ते—**पथी**ति । उत्तरस्यां दिशि यः पन्था विद्यते, तत्रोल्मुकं विधाय, तस्मिन् पुरोडाशान् जुहुयात् । पथि होमे कारणमाह—**पथा ही**ति । ' सः ' खलु रुद्रो ' देवः ' ' पथा ' मार्गेण हि ' चरति ' तत्रावतिष्ठत इत्यर्थः । पथ्यपि किञ्चिद् विशेषं विधत्ते—**चतुष्पथ** इति । चतुर्णां पथां समाहारश्चतुष्पथः, चतसृभ्यो दिग्भ्य आगताश्चत्वारः पन्थानो यत्र सङ्गच्छन्ते, तत्र जुहुयादित्यर्थः । एतदुपपादयति—**एतद्ध वा** इति । ' एतत् ' खलु ' अस्य ' रुद्रस्य ' जान्धितम् ' । जनैः परिकल्पितम्, ' प्रज्ञातम् ' प्रसिद्धम्, ' अवसानं ' स्थानम्, यच्चतुष्पथाख्यम् । अत एवोक्तमभियुक्तैः—" वटे वटे वैश्रवणश्चत्वरे चत्वरे शिवः "—इति ॥ ७ ॥

---

१–अक्तान् वा । पात्र्यांकृत्वा दक्षिणाग्न्युल्मुकमादाय चतुष्पथे पलाशपत्रमध्यमेन होमः । सर्वेषामवदानं सकृत्सकृदति-रेकवर्जम् । अक्तेषु मिश्रणम् । का० श्रौ० सू० ५ । २६१–२६४ ।

पलाशस्य पलाशेन मध्यमेन जुहोति । ब्रह्म वै पलाशस्य पलाशं ब्रह्मणै-वैतज्जुहोति स सर्वेषामेवावद्यत्येकस्यैव नावद्यति य एषोऽतिरिक्तो भवति॥८

स जुहोति । ( त्ये ) एष ते रुद्र भागः सह स्वस्राऽम्बिकया तं जुषस्व स्वाहेत्युम्बिका ह वै नामास्य स्वसा तयाऽस्यैष सह भागस्तद्यदस्यैष स्त्रिया सह भागस्तस्मात्र्यम्बका नाम तद्या ऽअस्य प्रजा जातास्ता रुद्रियात्प्रमुञ्चति ॥ ९ ॥

( त्यु ) अथ य ऽएष ऽएकोऽतिरिक्तो भवति । तमाखूत्कर ऽउपकिर-त्येष ते रुद्र भाग ऽआखुस्ते पशुरिति तदस्मा ऽआखुमेव पशूनामनुदि-

---

पलाशस्य पलाशेन मध्यमेन जुहोति । ब्रह्म वै पलाशस्य पलाशम् । ब्रह्मणैवैतज्जुहोति। स सर्वेषा-मेवावद्यति । एकस्यैव नावद्यति । य एषोऽतिरिक्तो भवति ॥ ८ ॥

स जुहोति–“ एष ते रुद्र भागः सह स्वस्राऽम्बिकया तं जुषस्व–स्वाहा ”–( वा. सं. ३।५७ ) इति । अम्बिका ह वै नामास्य स्वसा । तयाऽस्यैष सह भागः । तद् यदस्यैष स्त्रिया सह भागः–तस्मात् त्र्यम्बका नाम । तद् या अस्य प्रजा जाताः–ता रुद्रियात् प्रमुञ्चति ॥ ९ ॥

अथ य एष एकोऽतिरिक्तो भवति–तमाखूत्कर उपकिरति । “ एष ते रुद्र भाग आखुस्ते

---

अथैतस्मिन् होमे साधनं विधत्ते–पलाशस्य पलाशेनेति । पलाशवृक्षस्य पर्णेनेत्यर्थः । ब्रह्म वै पलाशस्य पलाशमिति । पलाशवृक्षस्य ब्रह्म(त्व)श्रवणात् ' तदीयं पर्णमपि ब्रह्मात्मकम् । ब्रह्मश्रवणञ्च तैत्तिरीयके समाम्ना-तम्–“ देवा वै ब्रह्मन्नवदन्त तत्पर्ण उपाशृणोत् ”–( तै. सं. ३ । ५ । ७ । ३ ) इति । अवदाने विशेष-माह–स सर्वेषामिति । यावन्तः पुरोडाशाः कृताः तत्र एकमतिरिक्तं विहाय तेषां सर्वेषामेव सकाशात् तस्मिन् मध्यमपर्णेऽवद्येदित्यर्थः ॥ ८ ॥

इत्थं सर्वेभ्यः समवत्तस्य हविषः समन्त्रकं होमं विधत्ते–स जुहोतीति । मन्त्रस्यायमर्थः–हे ' रुद्र ! ' ' ते ' तव ' एष भागः ' । कथम्भूतस्य ? अम्बिकानामास्य स्वसा, तया सहितस्य । अतः ' तं ' भागं ' जुषस्व ' सेवस्व । इदं हविः ' स्वाहा ' सुहुतमस्त्विति ( वा. सं. ३।५७ )। तत्र “ सह स्वस्राऽम्बिकया–” इति मन्त्र-भागस्याभिप्रायमाविष्कुर्वन्नेतेषां हविषां त्र्यम्बकनाम निर्ब्रूते–अम्बिका ह वा इति । तद्यदस्यैष इति । ' तत् ' तथा सति ' यद् ' यस्मात् ' अस्य ' रुद्रस्य तया ' स्त्रिया ' ' सह ' ' एष भागः ' कल्पितः, ' तस्मात् ' स्त्रीरूपाम्बिकासम्बन्धाद्रुद्रस्यैते पुरोडाशाः( आदिवर्णलोपेन ) ' त्र्यम्बकाः '–इत्याख्यायन्ते । तद्या अस्येति, व्याख्यातम् ॥ ९ ॥

अवदानकालपरिशेषितस्यातिरिक्तस्यैकस्य विनियोगमाह–अथ य एष इति । उत्किरति पांसूनित्युत्करः; आखुभिः कृते ' आखूत्करे ' ' तम् ' अतिरिक्तमेकं पुरोडाशम् ' उपकिरति ' उपक्षिपति । “ कॄ विक्षेपे”–

---

१–' एष त इति जुहोति ' । का. श्रौ. सू. ५ । २६५ । २–अतिरिक्तमाखूत्कर उपकिरत्येष त इति । का० श्रौ० सू० ५।२६६ ।

शति तेनो ऽइतरान्पशून्न हिनस्ति तद्युदुपकिरति तिर ऽइव वै गर्भास्तिर ऽइवैतद्यदुपकीर्णं तस्माद्वा ऽउपकिरति तद्या ऽएवास्य प्रजा ऽअजातास्ता रुद्रियात्प्रमुञ्चति ॥ १० ॥

( त्यु ) अथ पुनरेत्य जपन्ति । ( न्त्यु ) अव रुद्रमदीमह्यव देवं त्र्यम्बकम् ॥ यथा नो वस्यसस्करद्यथा नः श्रेयसस्करद्यथा नो व्यवसाययात् ॥ भेषजमसि भेषजं गवेऽश्वाय पुरुषाय भेषजꣳ सुखं मेषाय मेष्या ऽइत्याशीरेवैषैतस्य कर्मणः ॥ ११ ॥

---

पशुः"–( वा. सं. ३ । ५७ ) इति । तदस्मा आखुमेव पशूनामनुदिशति । तेनो इतरान् पशून् न हिनस्ति । तद्यदुपकिरति–तिर इव वै गर्भाः, तिर इवैतद्–यदुपकीर्णम् । तस्माद्वा उपकिरति । तद्या एवास्य प्रजा अजाताः–ता रुद्रियात् प्रमुञ्चति ॥ १० ॥

अथ पुनरेत्य जपन्ति " अव रुद्रमदीमहि, अव देवं त्र्यम्बकम् । यथा नो वस्यसस्करत्, यथा नः श्रेयसस्करत्, यथा नो व्यवसाययात् भेषजमसि भेषजम्, गवेऽश्वाय पुरुषाय भेषजं, सुखं मेषाय, मेष्यै"–इति । (वा. सं. ३।५८।५९) आशीरेवैतस्य कर्मणः ॥ ११ ॥

---

( धा. पा. तु. १२८ ) इति धातुः । " एष ते "–इति मन्त्रः ( वा. सं. ३ । ५७ ) । तदर्थस्तु–हे 'रुद्र !' 'ते' तव 'एषः' पुरोडाशो भागः, अस्मिन्नुत्करे स्थितो यः 'आखुः' असौ 'ते पशुः इति' । एतन्मन्त्रपाठस्य प्रयोजनमाह–तदस्मा इति । 'तत्' तेन मन्त्रेण 'पशूनां' मध्ये 'आखुमेव' 'अस्मै' रुद्राय पशुत्वेन निर्दिशति । 'तेन' कारणेन 'इतरान्' गवाश्वादिपशून् स रुद्रो 'न हिनस्ति' । अतिरिक्तस्यैकस्य पुरोडाशस्य यदुपक्षेपणं विहितम्, तदुपपादयति–तद्यदिति । तिर इवेति । 'गर्भाः' तिरोहिता इव भ[illegible] उपकीर्णश्च द्रव्यं विगलितं सत् तिरोहितमेव भवति, अतो गर्भस्थानामजातानां प्रजानां रुद्रः कृतहिंसनवि[illegible]नाय क्रियमाणस्योपकीर्णत्वं युक्तमिति भावः ॥ १० ॥

जपं विधत्ते–अथेति । 'अथ' तदनन्तरम्, पुनश्चतुष्पथादग्निसमीपमेत्य " अव रुद्रम् " इत्यादिमन्त्रौ सर्वे जपेयुः । तयोः प्रथममन्त्रस्यायमर्थः–'रुद्रम्' 'अवादीमहि' अपदीयामहे, हविर्भागेन रुद्रमवयुज्य पृथक्कृत्य प्रजाः रक्षामहे । " दीङ् रक्षणे "–इत्यस्मात् लोटि, " बहुलं छन्दसि " (पा. सू. २ । ३ । ६२) इति शब्लुकि " घुमास्था "–( पा. सू. ६ । ४ । ६६ ) इतीत्वम् । तथा 'देवं' देवनशीलं 'त्र्यम्बकं' स्वियाऽम्बिकाख्यया सहितम्, अवादीमहीत्यनुषङ्गः । अम्बिकासाहित्यप्रतिपादनपरमेतद् द्वितीयं वाक्यम् । स च रुद्रो 'यथा' येन प्रकारेण 'नः' अस्मान् 'वस्यसः' वसीयसः वसुमत्तमान् 'करत्' कुर्यात्, 'नः' अस्मान् 'यथा' येन प्रकारेण च 'श्रेयसः' प्रशस्यतरान् 'करत्' कुर्यात्, 'यथा' च 'नः' अस्मान् 'व्यवसाययात्' व्यवसयेत्, व्यवसितार्थान् कुर्यात्; तथा 'अवादीमहि' इति सम्बन्धः ॥

---

१–अवाम्बावरुद्रमदीमहीति जपंति । का. श्रौ. सू. ५ । २६७ ।

( ण्ो३ऽया ) अ॒थाप॑सल॒वि त्रिः परि॑यन्ति । सव्यानूरूनुपाघ्नानाास्त्र्यम्बकं यजामहे सुग॒न्धिं पुष्टि॒वर्द्ध॑नम् ॥ उ॒र्वा॒रु॒कमि॑व बन्धनान्मृ॒त्योर्मु॑क्षीय मामृ॒तादित्या॒शीरे॒वैषैतस्य कर्म॑ण आशिषमे॒वैतदाशासते तद्ु ह्ये॒व शमिव॒ यो मृत्योर्मुच्याते॒ नामृताात्तस्मादाह मृत्योर्मु॑क्षीय मामृतादिति ॥ १२ ॥

तद्ु ह्या॒पि कुमा॒र्यः॑ पुरीयुः । ( भुं ) भग॑स्य भजामहा ऽइति या ह वै सा रुद्रस्य स्वसाऽम्बिका नाम सा ह वै भग॑स्येष्टे तस्मादु ह्या॒पि कुमा॒र्यः॑ पुरी॑युर्भग॑स्य भजामहा ऽइति ॥ १३ ॥

---

अथापसलवि त्रिः परियन्ति सव्यानूरूनुपाघ्नानाः । "त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्"—इति ( वा. सं. ३ । ६० ) आशीरेवैषैतस्य कर्मणः । आशिषमेवैतदाशासते । तद्ु ह्येव शमिव यो मृत्योर्मुच्याते, नामृतात् । तस्मादाह—मृत्योर्मुक्षीय मामृतादिति ॥ १२ ॥

तद्ु हापि कुमार्यः परीयुः—'भगस्य भजामहे'—इति । या ह वै सा रुद्रस्य स्वसाऽम्बिका नाम—सा ह वै भगस्येष्टे । तस्माद्ु हापि कुमार्यः परीयुः—'भगस्य भजामहे'—इति ॥ १३ ॥

---

अथ द्वितीयस्य—हे रुद्र ! त्वं स्वरूपेणैव 'भेषजम्' औषधम् 'असि'; सर्वदुरितनिबर्हणहेतुत्वात् । अतस्त्वं 'सुखं ( गं )' सुप्राप्तं भेषजम् अस्मदीयेभ्यो गवाश्वादिभ्यः प्रदेहीति शेषः । आशीरेवेति । एतस्य त्र्यम्बकाख्यस्य 'कर्मणः' 'एषा' जप्यमन्त्रस्य 'आशीः' फलप्रार्थनम्; गवाश्वादीनामारोग्यमेतस्य कर्मणः फलमित्यर्थः ॥ ११ ॥

अथाप्रदक्षिणं त्रिरग्नेः परिगमनं विधत्ते—अथापसलवीति[१] । त्र्यम्बकस्य हविषः कर्त्तारः सर्वे चतुष्पथे अग्निमपसलवि अपसव्यं त्र्यम्बकमिति मन्त्रेण 'त्रिः परियन्ति' किं कुर्वन्तः ? 'सव्यान्' वामान् 'ऊरून्' 'उपाघ्नानाः'[२] हस्तेन वादयन्तः । मन्त्रस्य चायमर्थः—त्रीणि अम्बकानि नेत्राणि यस्य, यद्वा स्त्री अम्बिका स्वसा यस्य तथोक्तः । शोभनो गन्धो यस्यासौ सुगन्धिः । "गन्धस्येदुत्पूतिसुसुरभिभ्यः"—( पा. सू. ५ । ४ । १३५ ) इति इकारादेशः । 'पुष्टिवर्द्धनम्' पुष्टेर्वर्द्धयितारम् । रुद्रं वयं 'यजामहे' पूजयामः । तत्प्रसादादहम् 'उर्वारुकं' कर्कटीफलं पक्वं सत् यथा प्रसवबन्धनात् स्वयमेव मुच्यते, तथा 'मृत्योः' मरणात् 'मुक्षीय' मुक्तो भूयासम्; 'अमृतात्' अमरणात् 'मा' वियोगो भवत्विति । आशीरेवेत्यादि, सिद्धम् । अन्तिमपादस्य तात्पर्यमाह—तद्ु ह्येवेति । 'यः' 'मृत्योः' मरणात् 'मुच्याते' मुक्तो भवेत्, सः 'अमृतात्' अमरणात् 'न' मुक्तो भवति; एतदेव हि 'शमिव' प्राणिनां सुखं भवति ॥ १२ ॥

अस्य परिगमनस्य भगप्रसिद्धिहेतुत्वमुपपादयति—तद्ु हापीति । 'तत्' तदा 'कुमार्यः' अपि तमग्निमुक्तप्रकारेण 'परीयुः,'[३] 'भगस्य' सौभाग्यस्य । कर्मणि षष्ठी । सौभाग्यम् 'भजामहे' प्राप्नुयामहे 'इति' अनेनाभिप्रायेण । यो ह वा इति । अम्बिका नाम 'या' खलु 'रुद्रस्य स्वसा,' 'सा' 'भगस्य ईष्टे'

---

१—अग्निं त्रिः परियंति पितृवत्सव्योरूनाघ्नानास्त्र्यंबकमिति । देववचेति प्रदक्षिणम् । एतेनैव दक्षिणानाघ्नानाः ॥ का. श्रौ. सू. ५ २६८–२७० । २—"अपघ्नानाः" इ. पा. । ३—कुमार्यश्चोत्तरेणोभयत्र पतिकामा भगकामा वा । का. श्रौ. सू. ५ । २७१ ।

तासामुतासां मन्त्रोऽस्ति । त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम् । उर्वारुकमिव बन्धनादितो मुक्षीय मामुत इति सा यदित इत्याह ज्ञातिभ्यस्तदाह मामुत इति पतिभ्यस्तदाह पतयो ह्येव स्त्रियै प्रतिष्ठा तस्मादाह मामुत इति ॥ १४ ॥

( त्यु ) अथ पुनः प्रसलवि त्रिः परियन्ति । दक्षिणानूरूनुपाघ्नाना ऽएतेनैव मन्त्रेण तद्यत्पुनः प्रसलवि त्रिः परियन्ति प्रसलवि न इदं कर्मानुसन्तिष्ठाता ऽइति तस्मात्पुनः प्रसलवि त्रिः परियन्ति ॥ १५ ॥

( न्त्यु ) अथैतान्यजमानोऽञ्जलौ समोप्य । ( प्यो ) ऊर्ध्वानुदस्यति यथा गौर्नोदाप्नुयात्तदात्मभ्य एवैतच्छल्याग्निर्मिमते तान्विलिप्सन्त ऽउपस्पृशन्ति भेषजमेवैतत्कुर्वते तस्माद्विलिप्सन्त ऽउपस्पृशन्ति ॥ १६ ॥

---

तासामुतासां मन्त्रोऽस्ति—" त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम् । उर्वारुकमिव बन्धनात् इतो मुक्षीय माऽमुतः"— इति (वा. सं.३।६०)। सा यदित इत्याह—ज्ञातिभ्यस्तदाह । मामुत इति—पतिभ्यस्तदाह । पतयो ह्येव स्त्रियै प्रतिष्ठा । तस्मादाह माऽमुत इति ॥ १४ ॥

अथ पुनः प्रसलवि त्रिः परियन्ति दक्षिणानूरूनुपाघ्नानाः—एतेनैव मन्त्रेण । तद् यत् पुनः प्रसलवि त्रिः परियन्ति । ' प्रसलवि न इदं कर्मानुसन्तिष्ठाते' इति । तस्मात् पुनः प्रसलवि त्रिः परियन्ति १५

अथैतान्यजमानोऽञ्जलौ समोप्य, ऊर्ध्वानुदस्यति । यथा गौर्नोदाप्नुयात् । तदात्मभ्य एवैतच्छल्याग्निर्मिमते । तान्विलिप्सन्त उपस्पृशन्ति । भेषजमेवैतत् कुर्वते । तस्माद्विलिप्सन्त उपस्पृशन्ति ॥ १६ ॥

---

सौभाग्यस्य स्वामिनी भवति । " ईश ऐश्वर्ये "—इति धातुः ( धा. पा. अ. आ. १० ) । भगस्येति " गर्थदयेशां कर्मणि "—( पा. सू. ४ । ३ । ५२ ) इति कर्मणि षष्ठी । ' तस्मात् ' अम्बिकासहितस्य सम्बन्धिनि कर्मणि भगप्राप्तिकामाः कुमार्योऽपि परीयुरित्यर्थः ॥ १३ ॥

कुमारीणां परिगमनेऽन्योऽपि मन्त्रो विद्यत इत्याह—तासामिति । ' आसां ' पूर्वोक्तानाम् 'तासां' कुमारीणामपि परिगमनेऽन्यो ' मन्त्रः ' विद्यते । कः पुनरसाविति, तं पठति—त्र्यम्बकमिति । पतिर्विद्यते लभ्यते अनेन इति पतिवेदनो रुद्रः । अन्यदुक्तार्थम् । चतुर्थपादस्य तात्पर्यमाह—सा यदित इति । ' इदं ' शब्देन पितृकुलं परामृश्यते । ' इतः ' अस्मात् पितृकुलात् ' ज्ञातिभ्यः ' सकाशादहं ' मुक्षीय ' मुक्ता भूयासम्; ' अमुतः ' अमुष्मात् कुलात् पतिसकाशात् ' मा मुक्षीय ' विप्रयुक्ता न भवेयम् इति तात्पर्यार्थः । पतयो ह्येवेति । अग्निहोत्रादिधर्मेषु पत्या सहैव स्त्रिया अधिकारः नतु स्वातन्त्र्येण ' हि ' यतः, अतः स्त्रीणां ' पतय एव ' ' प्रतिष्ठा ' आश्रयभूता इत्यर्थः ॥ १४ ॥

तेनैव मन्त्रेण पुनः प्रदक्षिणं त्रिः परिगमनं विधत्ते—अथ पुनरिति । ' प्रसलवि ' प्रदक्षिणम् । एतेनैवेति । त्र्यम्बकमिति प्रागुक्तेनोभयविधेन मन्त्रेणेत्यर्थः । तद्यत्पुनरित्यादिवाक्यशेषः पितृयज्ञवद् व्याख्येयः ॥ १५ ॥

हुतशिष्टानां पुरोडाशानां प्रतिपत्तिं विधत्ते—अथैतानित्यादि । ' एतान् ' पुरोडाशान् यजमानस्याञ्जलाव-

तान्द्वयोर्मूतकयोरुपनह्य । वेणुयष्ट्यां वा कुपे वोभयत आबध्योदङ् परेत्य यदि वृक्षं वा स्थाणुं वा वेणुं वा वल्मीकं वा विन्देत्तस्मिन्नासजत्येतत्ते रुद्रावसं तेन परो मूजवतोऽतीहीत्यवसेन वाऽअध्वानं यन्ति तदेनꣳ सावसमेवान्ववार्जति यत्र यत्रास्य चरणं तदनु तत्र ह वाऽअस्य परो मूजवद्भ्यश्चरणं तस्मादाह तेन परो मूजवतोऽतीहीत्यवततधन्वा पिनाकावस इत्यहिꣳसन्नः शिवोऽतीहीत्येवैतदाह कृत्तिवासा इति निष्वापयत्येवैनमेतत्स्वपन्हि न कंचन हिनस्ति तस्मादाह कृत्तिवासाऽइति ॥ १७ ॥

---

तान् द्वयोर्मूतकयोरुपनह्य, वेणुयष्ट्यां वा, कुपे वा उभयत आबध्य, उदङ् परेत्य, यदि वृक्षं वा स्थाणुं वा वेणुं वा वल्मीकं वा विन्देत्—तस्मिन्नासजति । "एतत्ते रुद्रावसम्, तेन परो मूजवतोऽतीहि"—इति ( वा. सं. ३।६१ )। अवसेन वा अध्वानं यन्ति । तदेनं सावसमेवान्ववार्जति यत्र-यत्रास्यचरणं तदनु । अत्र ह वा अस्य परो मूजवद्भ्यश्चरणम् । तस्मादाह—परो मूजवतोऽतीहीति । "अवततधन्वा पिनाकावसः"—इति । "अहिंसन् नः शिवोऽतीहि"—इत्येवैतदाह । "कृत्तिवासाः"—इति । निष्वापयत्येवैनमेतत् । स्वपन् हि न कंचन हिनस्ति । तस्मादाह—कृत्तिवासा इति ॥ १७ ॥

---

ध्वर्युः संवपेत् । यजमानश्च तान् 'ऊर्ध्वान् उदस्यति' उत्क्षिपति । 'यथा गौः' पृथिवीनामैतत्; पृथिवी तान् पुरोडाशान् 'नोदाप्नुयात्' उत्क्षिप्ताः पुरोडाशाः यथा भूमौ न पतन्ति तथाऽन्तरिक्षे, पुनरञ्जलिना धारयेत्। तदुक्तं कात्यायनेन—"रौद्रान् यजमानोऽञ्जलिनोदस्यत्यगोः प्रापणम्, 'प्रतिगृह्णात्येनान्' (का. श्रौ. सू. ५।२७२-२७३) इति । आत्मभ्य एवैतदिति । 'एतत्' एतेनोदसनेन 'आत्मभ्यः' ऋत्विग्यजमानाः 'स्व-स्व-शरीरेभ्यः' 'एव' 'शल्यान्' निर्मिमते । निर्हरन्ति तेषां पुनर्ग्रहणाशक्तौ स्पर्शनं विधत्ते—तान् विलिप्सन्त इति । लब्धुमिच्छन्तो लिप्सन्तस्तद्विपरीतो 'विलिप्सन्तः' लब्धुमशक्ताः सन्तः, भूमौ पतितान् 'तान्' पुरोडाशान् पश्चादुपस्पृशन्ति । उक्तं हि कात्यायनेन—"पततः प्रतिगृह्णात्येनानशक्यऽउपस्पर्शनम्"—( का. श्रौ. सू. ५।२७३ ) इति । भेषजमेवैतदिति । एतेन स्पर्शनेन निर्हृते शल्ये स्वशरीरदेशस्य पुनर्भेषजमेव कृतवन्तो भवन्ति ॥ १६ ॥

तान् द्वयोरित्यादि । 'द्वयोर्मूतकयोः' । यत्र तृणमये आवपने धान्यं बध्यते तन्मूतम्, मूतमेव मूतकम् । स्वार्थे क-प्रत्ययः । 'तान्' रौद्रान् पुरोडाशान् 'द्वयोर्मूतकयोः' 'उपनह्य' वेणुयष्ट्यां वेणुमय्यां यष्टयाम् 'उभयतः आबध्य'; यद्वा 'कुपे' वेणुनिर्मितभाजनद्वययुक्तो दारुविशेषो वीवधापरपर्यायः कुपः तस्मिन्; 'उभयतः' उभयपार्श्वयोः वैणवभाजनयोः 'तान्' रौद्रान् 'आबध्य' तेन सार्द्धम् 'उदङ् परेत्य' उदङ्मुखोऽदूरं गत्वा, वृक्षस्थाण्वादीनामन्यतमस्मिन्नुपलब्धे, वीवधम् 'आसजति' आलगयति । तस्मिन्ना-

---

१–मूतयोः कृत्वा वेणुयष्ट्यां कुपे वाऽऽसज्योभयतः स्थाणुवृक्षवंशवल्मीकानामन्यतमस्मिन्नुत्क्षेपणवदासजत्येतत् । इति । ( का. श्रौ. सू. ५ । २७४ ) कुपे-यज्ञियवृक्षजे तुलादण्डे, इति या० दे० ।

(त्यु) अथ दक्षिणान्बाहूनन्वावर्तन्ते । तेऽ प्रतीक्षं पुनरायन्ति पुनरेत्याप ऽउपस्पृशन्ति रुद्रियेणेव वाऽएतदचारिषुः शान्तिरापस्तदद्भिः शान्त्या शमयन्ते ॥ १८ ॥

(न्तेऽ)अथ केशश्मश्रूप्त्वा।समारोह्याग्नी ऽउदवसायेव ह्येतेन यजते न हि तदवकल्पते यदुत्तरवेदावग्निहोत्रं जुहुयात्तस्मादुदवस्यति गृहानित्वा निर्म-

---

अथ दक्षिणान् बाहूनन्वावर्तन्ते । तेऽप्रतीक्षं पुनरायन्ति । पुनरेत्याप उपस्पृशन्ति । रुद्रियेणेव वा एतदचारिषुः । शान्तिरापः । तदद्भिः शान्त्या शमयन्ते ॥ १८ ॥

अथ केशश्मश्रूप्त्वा, समारोह्य, अग्नी उदवसायेव ह्येतेन यजते । न हि तदवकल्पते—यदुत्तर-

---

सजने मन्त्रमाह—एतत्त इति । तस्यायमर्थः । हे 'रुद्र !' 'ते' तव 'एतत्' तृप्तिकरम् 'अवसम्' पाथेय-मन्नम्; तत् स्वीकृत्य 'तेन' साधनेन 'मूजवतः परः' मूजवान्नामोदीच्यः पर्वतः, तस्य 'परः' परस्ताद्भागम् 'अतीहि' अतिक्रम्य गच्छ; माऽस्मानधितिष्ठ इति भावः ॥

मन्त्रगतमवसशब्दं प्रशंसति—अवसेन वा इति । लोके 'अवसेन' अन्नेन पाथेयेन हि जनाः दूरम् 'अध्वानं' 'यन्ति', 'तत्' तथा सति 'एनं' रुद्रं 'सावसम्' अवससहितम 'एव' अस्मात् स्थानात् 'अन्ववार्जति' अनुगमयति । अस्य रुद्रस्य गन्तव्यप्रदेशमाह—यत्र-यत्रेति । यस्मिन् यस्मिन् स्थाने 'अस्य' देवस्य 'चरणं' वर्त्तनं भवति, 'तत्' स्थानम् 'अनु' लक्ष्येत्यर्थः । "परो मूजवतः"—इति मन्त्रभागस्याभिप्रायमाह—अत्र ह वा इति । 'अस्य' रुद्रस्य 'अत्र' अस्मिन् मूजवत्पर्वतसम्बन्धिनि 'परः' परस्ताद्भागे 'चरणं' वर्त्तनं भवति, 'तस्मात्' तेन "परो मूजवतः"—इति मन्त्रभागस्य पठनं युक्तमित्यर्थः । द्वितीयभागमनूद्य व्याचष्टे—अवततधन्वेति । अवततमवरोपितज्यं धनुर्यस्य स तथोक्तः—पिनाकावस इति । पिनाक इति तस्यैव रुद्रधनुषो नामधेयम् । तस्य अवसः व्यापारो परमो यस्य स तथा । एतेन विशेषणद्वयेन फलितमर्थ-माह—अहिंसन्निति । हे 'रुद्र !' 'नः' अस्माकं हिंसामकुर्वन् 'शिवः' सुखकरः सन् "अतीहि"—इति 'एतत्', अयं मन्त्रभागः प्रतिपादयतीत्यर्थः । अन्तिमं भागम् अनूद्य तात्पर्यमाह—कृत्तीति । कृत्तिः त्वग्वास आच्छादनं यस्य स तथोक्तः । अनेन च विशेषणेन 'एनं' नितरां स्वापयेत् । कृत्तेर्मृदुतरत्वेन सुख-करत्वात् रुद्रस्वापो भवत्येवेत्यनेनाभिप्रायेण विशेष्यते । स्वापोऽपि किमर्थ इत्यत आह—स्वपन् न्विति । 'नु' अत्र खलु लोके 'स्वपन्' निद्रालुः पुरुषः 'कञ्चन' कमपि 'न हिनस्ति' न पीडयति । अतो रुद्रकृतबाध-विरहाय तस्य स्वापः प्रार्थ्यत इत्यर्थः ॥ १७ ॥

तेषां पुनरागमनं विधत्ते—अथ दक्षिणानिति । रौद्रपुरोडाशानां वृक्षादावासञ्जनानन्तर्य्यमथशब्दार्थः । रौद्रैर्हविर्भिः ये अचारिषुः, 'ते' सर्वे स्वं स्वं दक्षिणं बाहुम् 'अनु'-लक्ष्य प्रादक्षिण्येनावर्त्तेरन्; आवृत्य च 'अप्रतीक्षं' रौद्रहविःप्रचरणस्थानमनवलोकयन्तः 'पुनः' वेदिसमीपमागच्छेयुः; आगत्य च रुद्रदेवताकहविः-प्रचरणकृतौष्ण्यनिवारणाय 'अपः' उपस्पृशेयुः । तदद्भिः शान्त्येति । उष्णशमनहेतुभिः 'अद्भिः' तत् रौद्रहविःप्रचरणजनितं स्व-स्वात्मगतमौष्ण्यं 'शमयन्ते' निवर्त्तयन्तीत्यर्थः ॥ १८ ॥

वरुणप्रघासान्त इव केशश्मश्रुवपनादिकं साकमेधान्तेऽपि कर्त्तव्यमित्यनुक्रामति—अथ केशश्मश्रूप्त्वेति ।

---

१—कृत्तिवासा इति च (का. श्रौ. सू. ५ । २७५) । २—अनपेक्षमेत्योपस्पृशंत्यपः। का. श्रौ. सू. ५ । २७६ ।

थ्याग्नी पौर्णमासेन यजत ऽउत्सन्नयज्ञऽइव वा ऽएष यच्चातुर्मास्यान्यथैष क्लृप्तः प्रतिष्ठितो यज्ञो यत्पौर्णमासं तत्क्लृप्तेनैवैतद्यज्ञेनान्ततः प्रतितिष्ठति तस्मादुदवस्यति ॥ १९ ॥

इति पञ्चमप्रपाठके तृतीयं ब्राह्मणम् ॥ ५ ॥ ३ ॥ (६।२)

अक्षय्यꣳ ह वै सुकृतं चातुर्मास्ययाजिनो भवति । संवत्सरꣳ हि जयति तेनास्याक्षय्यं भवति तं वै त्रेधा विभज्य यजति त्रेधा विभज्य प्रजयति सर्वं वै संवत्सरः सर्वं वा ऽअक्षय्यमेतेनो हास्याक्षय्यꣳ सुकृतं भवत्यृतुरु हैवैतद्भूत्वा देवानप्येत्यक्षय्यमु वै देवानामेतेनो हैवास्याक्षय्यꣳ सुकृतं भवत्येतन्नु तद्यस्माच्चातुर्मास्यैर्यजते ॥ १ ॥

---

वेदावग्निहोत्रं जुहुयात् । तस्मादुदवस्यति । गृहानित्वा, निर्मथ्याग्नी, पौर्णमासेन यजते । उत्सन्नयज्ञ इव वा एषः—यच्चातुर्मास्यानि । अथैष क्लृप्तः प्रतिष्ठितो यज्ञो यत् पौर्णमासम् । तत् क्लृप्तेनैवै तद्यज्ञेनान्ततः प्रतितिष्ठति । तस्मादुदवस्यति ॥ १९ ॥ इति साकमेधपर्वणि त्र्यम्बकयागः ।

इति साकमेधयागश्चातुर्मास्ये तृतीयं पर्व ॥

अथ शुनासीरीयपर्व ।

अक्षय्यं ह वै सुकृतं चातुर्मास्ययाजिनो भवति । संवत्सरं हि जयति । तेनास्याक्षय्यं भवति । तं वै त्रेधा विभज्य यजति । त्रेधा विभज्य प्रजयति । सर्वं वै सम्वत्सरः । सर्वं वा अक्षय्यम् । एतेनो हास्याक्षय्यं सुकृतं भवति । ऋतुरु हैवैतद्भूत्वा देवानप्येति । अक्षय्यमु वै देवानाम् । एतेनो हैवास्याक्षय्यं सुकृतं भवति । एतन्नु तद्—यस्माच्चातुर्मास्यैर्यजते ॥ १ ॥

---

केशश्मश्रूणि वापयित्वा ‘ अग्नी ’ गार्हपत्याहवनीयौ ‘ समारोह्य ’ समारोप्य, दक्षिणाग्नेरप्युपलक्षणम् । यदि सर्वे धार्या भवेयुः । समारोपणेन गृहं गच्छतीति शेषः ॥

उदवसायेत्यादिना साकमेधस्यान्तकर्त्तव्यता अत्रापि प्रतिपाद्यते—उदवसायेति । स्नानानन्तरं खलु ‘ एतेन ’ साकमेधान्तेन ‘ यजते ’ तदङ्गत्वेन योत्तरवेदिर्निर्मिता, तस्यामग्निहोत्रहोमो न युक्त इति पुनः स्वस्थानगमनं कर्त्तव्यमित्यादि शेषं पूर्ववद् ( श. प. २ । ५ । ३ । ४८ ) ॥ ( तै. सं. १ । ८ । ६ तै. ब्रा. १।६।१० ) व्याख्येयम् ॥ १९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वितीयकाण्डे षष्ठाध्यायस्य द्वितीयं ब्राह्मणम् ॥ ( २–६–२ )

अथ शुनासीरीयं विधित्सुस्तस्य शुनासीर्यस्य चतुर्थपर्वणः संवत्सरसलक्षणफलसाधनत्वं प्रतिपादयिष्यंस्ताव-दुपोद्घातत्वेन चातुर्मास्यानामक्षय्यफलसाधनत्वमाह—अक्षय्यं ह वा इति । चतुर्ष्व-चतुर्षु मासेषु क्रियन्त इति

---

१–शुनासीरीयमतः । का. श्रौ. सू ५ । २७७ । यदेच्छेत् । का. श्रौ. सू. ५ । २७८ ।

( तेऽथ ) अथ यस्माच्छुनासीर्येण यजेत । या वै देवानाᳪ श्रीरासीत्सा- कमेधैरीजानानां विजिग्यानानां तच्छुनमथ यः संवत्सरस्य प्रजितस्य रस आसीत्तत्सीरᳪ सा या चैव देवानाᳪ श्रीरासीत्साकमेधैरीजानानां विजिग्यानानां य उ च संवत्सरस्य प्रजितस्य रस आसीत्तमेवैतदुभयं परिगृह्यात्मन्कुरुते तस्माच्छुनासीर्येण यजते ॥ २ ॥

---

अथ यस्माच्छुनासीर्येण यजेत । या वै देवानां श्रीरासीत्–साकमेधैरीजानानां विजिग्याना- नाम्–तच्छुनम् । अथ यः संवत्सरस्य प्रजितस्य रस आसीत्–तत्सीरम् । सा या चैव देवानां श्रीरासीत्–साकमेधैरीजानानां विजिग्यानानाम्, य उ च संवत्सरस्य प्रजितस्य रस आसीत्–तमे- वैतदुभयं परिगृह्यात्मन् कुरुते । तस्माच्छुनासीर्येण यजते ॥ २ ॥

---

चातुर्मास्यानि प्रागुक्तानि वैश्वदेवादीनि, तैरिष्टवांश्चातुर्मास्ययाजी । "करणे यजः"–( पा. सू. ३।२।८९ ) इति भूतकाले यजतेर्णिनिः । तस्य 'चातुर्मास्ययाजिनः' 'सुकृतं' यागजनितफलसाधनधर्मापरपर्याय- मपूर्वम् 'अक्षय्यम्' क्षेतुमशक्यम्; न कदाचिदपि भोगेन क्षपयितुं शक्यते । "क्षय्यजय्यौ शक्यार्थे"– ( पा. सू. ६।१।८१ ) इति । "क्षि क्षये"–( धा. पा. अ. प. २३६ ) इति अस्मान्निपातितः । अक्ष- य्यत्वमुपपादयति–संवत्सरं हीति । 'हि' यस्मादुदीरितैस्त्रिभिर्वैश्वदेवादिभिः पर्वभिः संवत्सरपरिमितकालं 'जयति' 'तेन' संवत्सरजयेन तदतिरिक्तस्य कालस्याभावात् 'अस्य' सार्वकालिकस्य चातुर्मास्ययाजिनः सुकृतमक्षय्यं भवतीत्यर्थः । "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" इति ( आप. श्रौ. सू. ८।१।१ ) ।

संवत्सरं कथमेतेन जयतइति तदाह–तं वा इति । 'तं' संवत्सरं त्रिधा 'विभज्य' चतुर्षु-चतुर्षु मासेषु वैश्वदेवादिभिः 'यजते', अतस्तं संवत्सरं त्रेधा 'विभज्य' एव 'प्रजयति' प्रकर्षेण लभते । अस्तु संवत्स- रस्य जयः, एतावता कथं फलस्याक्षय्यत्वसिद्धिरिति, तदाह–सर्वं वा इति ! भूतवर्त्तमानभविष्यत्कालत्रयाव- च्छिन्नं सर्वं वस्तु संवत्सरमध्य एवान्तर्भूतम्, संवत्सरस्तु कृत्स्नव्यापितया अनादिरनन्त इति तज्ज[illegible] फलमपि अक्षय्यं भवतीत्यर्थः । प्रकारान्तरेणाप्यक्षय्यत्वं प्रतिपादयति–ऋतुरु हैवैतदिति । 'एतत्' एतेन च यजनेन वसन्ताद्यृत्वात्मक एव 'भूत्वा' 'देवानप्येति' चातुर्मास्ययाजी अपि गच्छति, देवानाञ्च सुकृतमक्षय्य- मेव भवति । अतः 'एतेन' देवत्वप्रापणेन 'अस्य' यजमानस्य 'सुकृतम्' अपि 'अक्षय्यम्' एव 'भवति' ॥ १ ॥

इत्थं वैश्वदेवादीनां त्रयाणां फलमुपपाद्य शुनासीर्य्ययागस्य श्र्यादिकं फलं दर्शयति–अथ यस्मादिति । 'यस्मात्' फलात् हेतोः यजमानः 'शुनासीर्येण' पर्वणा 'यजते', तस्मात् तत्फलमुच्यत इत्यर्थः । या वै देवानामित्यादि । 'साकमेधैः' प्रागुक्तैर्यागैः 'ईजानानाम्' इष्टवतां 'विजिग्यानानां' वृत्रा- सुरं जितवतां देवानां 'या' 'श्रीः' सम्पत् 'आसीत्', 'तत्' 'शुनम्' सुखनामैतत् ( निघ. ३ । १ । ११ ) सुखहेतुत्वात् शुनमित्युच्यत इत्यर्थः । 'अथ' वैश्वदेवादिभिस्त्रिभिस्त्रिभिश्चातुर्मास्यैः 'प्रजितस्य' 'संवत्सरस्य' 'यो रस आसीत्' सुखहेतुः सारभूतोंऽशोऽभवत्, तत् 'सीरम्' इत्युच्यते । या चैव देवाना- मित्यादिः, उक्तार्थानुवादः । तमेवैतदुभयमिति । यदेतत् शुनं सीरं चोक्तम्, 'एतदुभयम्' एतेन शुना-

तुस्यावृत् । ( ग्रो ) नोपकिरन्त्युत्तरवेदिं न गृह्णन्ति पृषदाज्यं न मन्थन्त्यग्निं पञ्च प्रयाजा भवन्ति त्रयोऽनुयाजाऽएकᳩं समिष्टयजुः ॥ ३ ॥

( उ ) अथैतान्येव पञ्च हवीᳫंषि भवन्ति । ( न्त्ये ) एतैर्वै हविर्भिः प्रजापतिः प्रजा ऽअसृजतैतैरुभयतो वरुणपाशात्प्रजाः प्रामुञ्चदेतैर्वै देवा वृत्रमघ्नन्नेतैर्वैव व्यजयन्त येयमेषां विजितिस्तां तथो ऽएवैषऽएतैर्या चैव देवानाᳩं श्रीरासीत्साकमेधैरीजानानां विजिग्यानानां य उ च संवत्सरस्य प्रजितस्य रस ऽआसीत्तमेवैतदुभयं परिगृह्यात्मन्कुरुते तस्माद्वा ऽएतानि पञ्च हवीᳫंषि भवन्ति ॥ ४ ॥

---

तस्यावृत् । नोपकिरन्त्युत्तरवेदिम् । न गृह्णन्ति पृषदाज्यम् । न मन्थन्त्यग्निम् । पञ्च प्रयाजा भवन्ति । त्रयोऽनुयाजाः । एकं समिष्टयजुः ॥ ३ ॥

अथैतान्येव पञ्च हवींषि भवन्ति । एतैर्वै हविर्भिः प्रजापतिः प्रजा असृजत । एतैरुभयतो वरुणपाशात् प्रजाः प्रामुञ्चत् । एतैर्वै देवा वृत्रमघ्नन् । एतैर्वैव व्यजयन्त—येयमेषां विजितिः—ताम् । तथो एवैष एतैः—या चैव देवानां श्रीरासीत्—साकमेधैरीजानानां विजिग्यानानाम्, य उ च संवत्सरस्य प्रजितस्य रस आसीत्—तमेवैतदुभयं परिगृह्यात्मन् कुरुते । तस्माद् वा एतानि पञ्च हवींषि भवन्ति ॥ ४ ॥

---

सीर्य्ययागेन 'परिगृह्य' यजमानः 'आत्मन्' स्वात्मनि 'कुरुते' धारयति । इत्थं प्रवृत्तिहेतुफलमुपपाद्य तत्साधनभूतं यागं विधत्ते—तस्मादिति । उक्तलक्षणौ शुनासीरौ अधिदैववाय्वादिरूपेणावस्थितौ । साऽस्य देवतेत्यर्थे शुनासीरशब्दाद् यत् ; तद्धविर्योगाद् वक्ष्यमाणं हविस्समुदायसाध्यं कृत्स्नं कर्मानेन व्यपदिश्यते । यस्मादुक्तफलसाधनत्वम्, तस्माच्छुनासीरीयाख्येनानेन चतुर्थेन पर्वणा यजेतेत्यर्थः ॥ २ ॥

प्रयोगक्रमं वक्तुं प्रतिजानीते—तस्यावृदिति । 'तस्य' शुनासीर्यस्य 'आवृत्' क्रिया उच्यत इति शेषः । पूर्वेषु पर्वस्विव प्रसक्तमुत्तरवेदिनिर्वपणादिकं निषेधति—नोपकिरन्तीत्यादिना । प्रयाजानुयाजादयोऽपि प्रकृतिवदेवेत्याह—पञ्चेति ॥ ३ ॥

पञ्च हवींषि विधत्ते—अथैतान्येवेति । वैश्वदेवादिषु पर्वस्वनुष्ठितानि 'एतानि' आग्नेयादीनि पञ्च हवींष्यत्रापि कर्त्तव्यानि भवन्तीत्यर्थः । कृत्स्नफलत्वेनैतानि प्रशंसति—एतैर्वा इति । वैश्वदेवेष्वनुष्ठितैः 'एतैर्हविर्भिः' खलु पुरा 'प्रजापतिः' 'प्रजाः' सृष्टवान् । वरुणप्रघासेष्वनुष्ठितैरेव ताः 'प्रजाः' 'उभयतो वरुणपाशात्' ऊर्ध्वाधःकायस्थितात् 'प्रामुञ्चत्' प्रमुक्तवान् । तथा साकमेधेष्वनुष्ठितैरेव पञ्चभिर्हविर्भिः 'देवाः' 'वृत्रम्' असुरम् 'अघ्नन्,' हत्वा च 'एतैः' एव 'व्यजयन्त' विजयं प्राप्तवन्तः । यथैवैतानि कृत्स्नाभिलषितफलसाधनानि, 'तथो' तथैव खलु 'एषः' यजमानः 'एतैः' शुनासीर्याख्ये चतुर्थे पर्वणि

---

१–पौर्णमासधर्म्मा बर्हिर्व्वर्ज्जम् । का. श्रौ. सू. ५ । २७९ ।

( न्यु ) अथ शुनासीर्यो द्वादशकपालः पुरोडाशो भवति । स बन्धुः शुनासीर्यस्य यं पूर्वमवोचाम ॥ ५ ॥

( म्रा ) अथ वायव्यं पयो भवति पयो ह वै प्रजा जाता अभिसञ्जानते विजिग्यानं मा प्रजाः श्रियै यशसेऽन्नाद्यायाभिसञ्जानान्ता ऽइति तस्मात्पयो भवति ॥ ६ ॥

तद्यद्वायव्यं भवति । ( न्य ) अयं वै वायुर्योऽयं पवत ऽएष वा ऽइदꣳ सर्वं प्रप्याययति यदिदं किञ्च वर्षति वृष्टादोषधयो जायन्त ऽओषधीर्जग्ध्वाऽपः पीत्वा तत एतद्रसोऽधि पयः सम्भवत्येष हि वा ऽएतज्जनयति तस्माद्वायव्यं भवति ॥ ७ ॥

---

अथ शुनासीर्यो द्वादशकपालः पुरोडाशो (१) भवति । स बन्धुः शुनासीर्यस्य यं पूर्वमवोचाम॥५॥

अथ वायव्यं पयो ( २ ) भवति । पयो ह वै प्रजा जाता अभिसञ्जानते । 'विजिग्यानं मा प्रजाः श्रियै' 'यशसे, अन्नाद्याय, अभिसञ्जानान्तै'–इति । तस्मात् पयो भवति ॥ ६ ॥

तद् यद्वायव्यं भवति । अयं वै वायुः–योऽयं पवते । एष वा इदं सर्वं प्रप्याययति–यदिदं किञ्च

---

अनुष्ठीयमानैः, आग्नेयादिभिः पञ्चभिर्हविर्भिः शुनासीरीयं यदेतदनुक्रान्तम्, 'तदुभयं' फलम् 'आत्मन्' आत्मनि 'परिगृह्य' स्वाधीनं 'कुरुते' । तस्मादिति प्रतिपादितार्थनिगमनम् ॥ ४ ॥

षष्ठं हविर्विधत्ते–अथ शुनासीर्य इति । शुनासीरौ वाय्वादित्यौ देवते अस्य स शुनासीर्यः । 'शुनो वायुः' 'सीर आदित्यः'–इति हि यास्कः । द्विवचनेन कात्यायनोऽपीममर्थमसूचयत्–"शुनासीराभ्यां द्वादशकपालः" इति । उक्तं वाक्यशेषमत्राप्यतिदिशति–स बन्धुरिति । कृत्स्नस्य पर्वणः फलप्रतिपादनसमये 'यं' वाक्यशेषं "या वै देवानाम्"–इत्यादिकम् 'अवोचाम' उक्तवन्तः, 'स एव अस्यापि' 'शुनासीरस्य' हविषः स्तावकः, उक्तविधयोरेव वाय्वादित्यरूपेणावस्थितत्वादिति भावः ॥ ५ ॥

सप्तमं हविर्विधत्ते–अथ वायव्यमिति । वायुर्देवता अस्य तद् 'वायव्यम्' । "वाय्वृतुपित्रुषसो यत्"– (पा. सू. ४ । २ । ३१ ) इति यत् । पयसस्तावदत्रानुकूल्यं दर्शयति–पयो ह वा इति । 'जाताः' सर्वाः 'प्रजाः' 'पयः' खलु 'अभि' लक्ष्य 'सञ्जानते' सञ्जानाना भवन्ति । अतः पयसः सम्पत्तिहेतुत्वाद् 'विजिग्यानं' साकमेधैर्विजितवन्तम् 'एनं' यजमानं 'श्रियै' सम्पदे, 'यशसे' कीर्त्यै 'अन्नाद्याय' अन्नादनसामर्थ्याय च सर्वाः 'प्रजाः' 'अभिसञ्जानान्तै' अभिसञ्जानीरन्, अनुमन्यन्तामिति; अनेनाभिप्रायेण पयसः करणमित्यर्थः ॥ ६ ॥

तस्य वायुदेवत्यत्वमनूद्य स्तौति–तद्यदिति । एष वा इत्यादि । 'यदिदं किञ्च' भूम्यां स्थितं स्थावरादिकं

---

१–" शुनासीरौ शुनो वायुः शु इत्यन्तरिक्षे; सीर आदित्यः, सरणात् "–इति निरु० ९ । ४ । ६ । २–" नित्येभ्योऽधिकानि शुनासीराभ्यां द्वादशकपालः । का. श्रौ. सू. ५ । २८० । ३–वायव्यं पयः । लौकिकं । प्रतिधुक्श्रुतेः । नाविरोधात् । प्रकृतिदर्शनात् । यवागूर्वा । का. श्रौ. सू. ५ । २८१–२८६ ।

( त्यु ) अथ सौर्यं एककपालः पुरोडाशो भवति । ( त्ये ) एष वै सूर्यो य एष तपत्येष वा ऽइदꣳ सर्वमभिगोपायति साधुना त्वदसाधुना त्वदेष इदꣳ सर्वं विदधाति साधौ त्वदसाधौ त्वदेष मा विजिग्यानं प्रीतः साधुना त्वदभिगोपायत्साधौ त्वद्विदधदिति तस्मात्सौर्य एककपालः पुरोडाशो भवति ॥ ८ ॥

---

वर्षति । वृष्टादोषधयो जायन्ते । ओषधीर्जग्ध्वाऽपः पीत्वा तत एतदद्भ्योऽधि पयः सम्भवति । एष हि वा एतज्जनयति । तस्माद् वायव्यं भवति ॥ ७ ॥

अथ सौर्य एककपालः पुरोडाशो ( ३ ) भवति । एष वै सूर्यो-य एष तपति । एष वा इदं सर्वं-मभिगोपायति-साधुना त्वद्, असाधुना त्वत् । एष इदं सर्वं विदधाति-साधौ त्वद् असाधौ त्वत् । एष मा विजिग्यानं प्रीतः-साधुना त्वदभिगोपायत्, साधौ त्वद्विदधद्-इति । तस्मात्सौर्य एक-कपालः पुरोडाशो भवति ॥ ८ ॥

---

' वर्षति ' पर्जन्यवृष्ट्या सिञ्चति, इदं सर्वम् ' एषः ' खलु पवमानः ' प्रप्याययति ' प्रवर्द्धयति रसभरितं करोति "ओप्यायी वृद्धौ"-(धा.पा.भ्वा.आ.४७९) इति धातुः । तस्माद् वृष्टात् पवमानेन प्रप्यायितात् ' ओषधयो जायन्ते ', ताश्च ' ओषधीः ' ' जग्ध्वा ' भक्षयित्वा "अदो जग्धिर्ल्यप्ति किति"-(पा. सू. २ । ४ । ३६) इत्यदेर्जग्ध्यादेशः । ओषधिभक्षणानन्तरम् ' अपः पीत्वा ' पशवः पयो दुहन्ति । ' एतदद्भ्यः ' सकाशात् ' पयः ' ' सम्भवति ' उत्पद्यते तस्मात् परम्परया ' एष हि ' पवमानः ' एतत् ' पयो 'जनयति' उत्पादयति । तस्मादस्य वायुर्देवतेत्येतद्युक्तमित्यर्थः ॥ ७ ॥

अष्टमं हविर्विधत्ते-अथ सौर्य इति । अस्य हविषः सूर्योऽभिगोप्तेत्याह-एष वै सूर्य इत्यादिना । साधुना त्वदित्यादि । ' साधुना ' शोभनेन कर्मणा ' त्वत् ' एकं पुण्यकृतं जनम् ' एषः ' सूर्यः ' अभिगोपायति ' अभिरक्षति । तथा ' असाधुना ' अशोभनेन कर्मणा ' त्वत् ' एकं पापिजनम् ' अभिगोपायति ' । न केवलं रक्षणमात्रं शोभनात्मकम् । ' इदं सर्वं ' जगत्, एष एव सूर्यो ' विदधाति ' करोति; विदधानः सः ' त्वत् ' एकं ' साधौ ' पुण्ये कर्मणि स्थापयति, ' त्वत् ' एकम् अन्यत् ' असाधौ ' पापकर्मणि स्थापयति । एषः खलु हिरण्यगर्भरूपः स परमात्मा । अस्य हि साध्वसाधुकर्मणः कारयितृत्वमन्यत्र चाम्नायते-" एष ह्येव साधु-कर्म कारयति, तेषामेभ्यो लोकेभ्य उर्ध्वं निनीषते; एष ह्यसाधु कर्म कारयति, तेषामेभ्यो लोकेभ्योऽधो-निनीषते "-इति ( कौ. ब्रा. उ. ३।९ ) ॥

एष मेत्यादि । योऽयमुक्तविधः सूर्यः 'एषः' अनेन हविषा ' प्रीतः ' सन् ' विजिग्यानं ' साकमेधैः विजि-तवन्तं ' मा ' मां ' साधुना ' कर्मणा ' अभिगोपायत् ' अभिरक्षतु, तथा तस्मिन् ' साधौ ' शोभने कर्मणि मां ' विदधात् ' विदधातु, प्रेरयतु ' इति ' अनेनाभिप्रायेण यजमानः सौर्यं हविः कुर्यात् । ' त्वम् '-इति, एतदत्र क्रियाविशेषणत्वेन योज्यम् ॥ ८ ॥

---

१-" सौर्य एककपालः । " का. श्रौ. सू. ५ । ३८७ ।

तस्याश्वः श्वेतो दक्षिणा । तदेतस्य रूपं क्रियते य एष तपति यद्यश्वᳪ श्वेतं न विन्देदपि गौरेव श्वेतः स्यात्तदेतस्य रूपं क्रियते य एष तपति ॥९॥

स यत्रैव साकमेधैर्यजते । तच्छुनासीर्येण यजेत यद्वै त्रिः संवत्सरस्य यजते तेनैव संवत्सरमाप्नोति तस्माद्यदेव कदा चैतेन यजेत ॥ १० ॥

तद्धैके । रात्रीरापिपयिषन्ति स यदि रात्रीरापिपयिषेद्यददः पुरस्तात्फाल्गुन्यै पौर्णमास्या उद्दृष्टं तच्छुनासीर्येण यजेत ॥ ११ ॥

---

तस्याश्वः श्वेतो दक्षिणा । तदेतस्य रूपं क्रियते—य एष तपति । यद्यश्वं श्वेतं न विन्देद् अपि गौरेव श्वेतः स्यात् । तदेतस्य रूपं क्रियते य एष तपति ॥ ९ ॥

स यत्रैव साकमेधैर्यजते—तत् शुनासीर्येण यजेत । यद्वै त्रिः संवत्सरस्य यजते—तेनैव संवत्सरमाप्नोति । तस्माद्यदेव कदाचैतेन यजेत ॥ १० ॥

तद्धैके रात्रीरापिपयिषन्ति । स यदि रात्रीरापिपयिषेद्—यददः पुरस्तात् फाल्गुन्यै पौर्णमास्या उद्दृष्टं—तच्छुनासीर्येण यजेत ॥ ११ ॥

---

तस्यैककपालस्य दक्षिणां विधत्ते—तस्याश्वः श्वेत इति । 'तस्य' सौर्यस्य हविषः श्वेतोऽश्वविशेषो 'दक्षिणा' शुनासीर्यस्य तु षड्भिरनडुद्भिर्युक्तं सीरं दक्षिणा । तदुक्तं सूत्रकारेण—"सीरं षड्योगं दक्षिणा ओष्टारौवा (का. श्रौ. सू. ५।२८८।२८९ ) इति । तदेतस्येत्यादि । 'एतस्य' सूर्यस्य सितभास्वररूपत्वात् श्वेताश्वदानमेतदीयमुपकरणमित्यर्थः । तादृशाश्वालाभे तादृशो गौर्देय इत्याह—यद्यश्वमित्यादि ॥ ९ ॥

अथ शुनासीर्ययागस्य कालं विधत्ते—स यत्रैवेत्यादिना । 'यत्र' यस्मिन् 'एव' काले 'साकमेधैर्यजते' 'तत्' तदानीम्, तदनन्तरकाले एव स यजमानः शुनासीर्येण 'यजेत' । न तु शुनासीर्यस्यापि चातुर्मास्यत्वान्मासचतुष्टयस्य व्यवधानमपेक्षितमित्यत आह—यद्वा इति । चतुर्षु चतुर्षु मासेषु संवत्सरस्य मध्ये वैश्वदेववरुणप्रधाससाकमेधभेदेन 'त्रिः' त्रिवारं 'यजते' इति यत्, 'तेनैव' संवत्सरमाप्नोति । वैश्वदेवादयस्त्रयः चातुर्मास्ययुक्ता इति तदनुष्ठानेनैव तेषां द्वादशानामवाप्तत्वात् तत्समुदायरूपः संवत्सरोऽपि यजमानस्य स्वायत्तो जात इत्यर्थः । उक्तमर्थं निगमयति—तस्मादिति । यस्मात् चतुर्थपर्वणः शुनासीर्य्यस्य संवत्सरातिरिक्तः प्रातिस्विकः कालो नास्ति तस्माद् यदा कदाचिदेव साकमेधानन्तरं यजेतेत्यर्थः । एतदेवानन्तर्य्यं सूत्रकृताप्युक्तम्—"शुनासीर्यमतः"—( का. श्रौ. सू. ५ । २७७ )—इति ॥ १० ॥

सोमेन यक्ष्यमाणस्य पक्षान्तरमाह—तद्धैक इति । 'तत्' तत्र खलु शुनासीर्यानुष्ठाने 'एके शाखिनः' 'रात्रीः आपिपयिषन्ति' अनेन च यागेन कतिचिद् रात्रीः आप्तुमिच्छन्ति । अत एवोक्तमापस्तम्बेन—"ततो द्व्यहे त्र्यहे चतुरहे ऽर्द्धमासे मासे चतुर्षु वा मासेषु शुनासीरीयेण यजते"—( आ. श्रौ.सू. ८ । २। १ ) इति । तेषां मतं सोमेन यक्ष्यमाणस्य शुनासीर्यकाल उच्यत इत्यर्थः । यदि हि 'रात्रीः' आपिपयिषेत्' आप्तुमिच्छेत्, तदा आगामिनीभ्यां फल्गुनीभ्यां युक्ता पौर्णमासी फाल्गुनी; षष्ठ्यर्थे चतुर्थी; 'फाल्गुन्यै' फाल्गुन्याः पौर्णमास्याः 'पुर-

---

१—"श्वेतोऽश्वः सौर्यस्य । अभावे गौः । " का. श्रौ. सू. ५ । २९०—२९१ ।

( त्रा ) अथ दीक्षेत । तं नानीजानं पुनः फाल्गुनी पौर्णमास्यभिपर्य्येया-त्पुनःप्रयोगरूप इव ह स यदेनमनीजानं पुनः फाल्गुनी पौर्णमास्य-भिपर्य्येयात्तस्मादेनं नानीजानं पुनः फाल्गुनी पौर्णमास्यभिपर्य्येयादिति नूत्सृजमानस्य ॥ १२ ॥

( स्या ) अथ पुनः प्रयुञ्जानस्य । पूर्व्वेद्युः फाल्गुन्यै पौर्णमास्यै शुना-सीर्य्येण यजेताथ प्रातर्व्वैश्वदेवेनाथ पौर्णमासेनैतद्दु पुनः प्रयुञ्जानस्य ॥ १३ ॥

---

अथ दीक्षेत । तं नानीजानं पुनः फाल्गुनी पौर्णमास्यभिपर्येयात् । पुनःप्रयोगरूप इव ह सः—यदे-नमनीजानं पुनः फाल्गुनी पौर्णमास्यभिपर्येयात् । तस्मादेनं नानीजानं पुनः फाल्गुनी पौर्णमास्यभि-पर्येयात् । इति नूत्सृजमानस्य ॥ १२ ॥

अथ पुनः प्रयुञ्जानस्य । पूर्वेद्युः फाल्गुन्यै पौर्णमास्यै शुनासीर्येण यजेत—अथ प्रातर्वैश्वदेवेन—अथ पौर्णमासेन एतद्दु । पुनः प्रयुञ्जानस्य ॥ १३ ॥

---

स्तात्' यत्, 'अदः'—इति विप्रकृष्टे, 'उत्' ऊर्द्ध्वं चन्द्रमाः अस्मिन् दृश्यते इति उद्दृष्टं शुक्लपक्षः, 'तत्' तत्र प्रतिपदाद्यन्यतमस्यां तिथौ शुनासीर्येण यजेत ॥ ११ ॥

अथ दीक्षेतेति । 'अथ' अनन्तरमेव सोमयागार्थं 'दीक्षेत' कालविलम्बो न कार्य इत्यर्थः । दैवान्मानुषाद्वा विघ्नाद् विलम्बेऽपि तस्यावधिमाह—तं नानीजानमिति । इमामेव श्रुतिमभिप्रेत्यापस्तम्बोऽप्याह—" चातुर्मास्यै-रिष्ट्वा सोमेन पशुना वा यजते, फाल्गुन्या उद्दृष्टे सोमाय दीक्षते, तं ततो नानीजानमपरा फाल्गुनी पर्यवेयात् " ( आप. श्रौ. सू. ८ । २१ । २—४ ) इति । तदत्यये दोषमाह—पुनरिति । 'अनीजानम्' 'एनम्' यजमानम् 'पुनः' फाल्गुनी पौर्णमासी न अतिक्रामेद् इति यत्, स 'पुनः प्रयोगरूप इव ह' भवति चातुर्मास्यानां पुनः प्रयोगस्य एतस्मिन् काले कर्त्तव्यत्वात्, तस्य चानाचरितत्वात् पुनः प्रयोगाङ्गभूतोऽयं कालो भवेदित्यर्थः । प्रति-पादितं प्रतिषेधं निगमयति—तस्मादिति । अयञ्च पक्षोऽधिकारिविशेषस्यैवेति निगमयति—इति न्विति । द्विविधौ हि चातुर्मास्ययाजिनौ सकृदनुष्ठायोत्सृजमानः पुनःप्रयुञ्जानश्च । तत्र 'उत्सृजमानस्य' खल्वयं-मुक्तः पक्ष इत्यर्थः ॥ १२ ॥

कस्तर्हि तानि पुनः प्रयुञ्जानस्य पक्ष इति दर्शयति—अथ पुनरिति ( आप. श्रौ. सू. ८ । २१ । ६ ) । चातुर्मास्यानि सकृत् संयुज्य अनन्तरमेव यस्तानि पुनरारभते तस्य पुनरारभमाणस्य 'फाल्गुन्यै पौर्णमास्यै' षष्ठ्यर्थे चतुर्थी, तस्याः 'पूर्वेद्युः' पूर्वदिवसे चतुर्दश्यां शुनासीर्येण यजेत, 'अथ' अनन्तरमेव 'प्रातः' काले पौर्णमास्यां वैश्वदेवेन 'यजेत' तदनन्तरम् नित्येन पौर्णमासयागेनेत्ययं प्रयोगक्रमः ; तदुक्तं कात्यायनेन " फाल्गुन्युपवसथे शुनासीरीयम्, प्रातर्वैश्वदेवम् "—( का.श्रौ.सू. ५।२९४ ) । एतद्दु पुनरिति । प्रतिज्ञातार्थनिगमनम् ॥ १३ ॥

---

१—संवत्सरेप्सोः फाल्गुन्युद्दृष्टे शुनासीरीयेणेष्ट्वा सोमेन पशुनेष्टया वा यजेत पौर्णमास्याम् । का. श्रौ. सू. ५ । २९२ ।
२—आवृत्तिरनीजानस्य । का. श्रौ. सू. ५ । २९३ ।

( स्पृ ) अथातः । परिवर्तनस्यैव सर्व्वतोमुखो वा ऽअसावादित्य एष वा ऽइदꣳ सर्वं निर्द्धयति यदिदं किञ्च शुष्यति तेनैष सर्व्वतोमुखस्तेनान्नादः १४

सर्व्वतोमुखोऽयमग्निः । ( स्पृं ) यतो ह्येव कुतश्चाग्नावभ्यादधति तत एव प्रदहति तेनैष सर्व्वतोमुखस्तेनान्नादः ॥ १९ ॥

(लोऽथा) अथायमन्यतोमुखः पुरुषः । स एतत्सर्व्वतोमुखो भवति यत्परिवर्तयते स एवमेवान्नादो भवति अथैतावेतद्य एवं विद्वान्परिवर्तयते तस्माद्वै परिवर्त्तयेत ॥ १६ ॥

---

अथातः परिवर्तनस्यैव । सर्वतोमुखो वा असावादित्यः । एष वा इदं सर्वं निर्द्धयति यदिदं किञ्च शुष्यति । तेनैष सर्वतोमुखः । तेनान्नादः ॥ १४ ॥

सर्वतोमुखोऽयमग्निः । यतो ह्येव कुतश्चाग्नावभ्यादधाति–तत एव प्रदहति । तेनैष सर्वतोमुखः । तेनान्नादः ॥ १९ ॥

अथायमन्यतोमुखः पुरुषः । स एतत् सर्वतोमुखो भवति यत् परिवर्तयते । स एवमेवान्नादो भवति– यथैतावेतद्–य एवं विद्वान् परिवर्तयते । तस्माद्वै परिवर्तयेत ॥ १६ ॥

---

चातुर्मास्याङ्गभूतं वपनं मीमांस्यते–अथात इत्यादिना । अत इति वक्ष्यमाणार्थपरामर्शः । 'अतः' अस्माद्वक्ष्यमाणाद्धेतोः परिवर्त्तनस्य परितः केशश्मश्र्वादीनां वर्त्तनस्य वपनस्य विचारोऽधिक्रियत इत्यर्थः । एतत् परिवर्तनं विधातुमन्नादत्वेनादित्यमग्निं च स्तौति–सर्वतोमुखो वा असावादित्य इत्यादिना । सर्वतः सर्वासु दिक्षु मुखं रसादानसामर्थ्यं यस्य स तथोक्तः । सर्वतोमुखत्वमुपपादयति–एष वा इति । 'निर्द्धयति' रसं निष्कृष्य पिबति । अत एतत् सर्वं घर्मकाले 'शुष्यति' शोषणं प्राप्नोति, सर्वं जगद्व्याप्य स्थितस्य सूर्यस्य स्वकिरणेनेत्यर्थः॥ १४ ॥

सर्वतोमुखोऽयमग्निरिति । अत्रापि तथैव योजना । यतो ह्येवेति । यतः कुतश्चिदपि दिग्भागादित्यर्थः । 'अभ्यादधति' अभिप्रक्षिपति । तत एवेति । तस्मिन्नपि दिग्भागे इत्यर्थः ॥ १९ ॥

एवमग्न्यादित्ययोः सर्वतोमुखत्वेन अन्नादत्वं प्रतिपाद्य पुरुषस्य स्वाभाविकं तद्वैपरीत्यमाह–अथायमिति । 'अथ'–शब्दस्त्वर्थे । 'अयं' तु 'पुरुषः' यजमानः 'अन्यतोमुखः' । अन्यशब्द एकशब्दपर्यायः । अन्यतः एकत्र स्थितमेव मुखं यस्य स तथोक्तः । तस्य सर्वतोमुखत्वसम्पत्तिमाह–स एतदिति । 'यद्' यस्मात् परितः शिरो वर्त्तयते, केशान् वापयति 'एतत्' एतेन अलोमकत्वसाम्यात् शिरसः प्रान्तदेशा अपि मुखमिव भवन्तीति स यजमानः सर्वतोमुखो भवति । इत्थं पुरुषस्य सर्वतोमुखत्वं प्रतिपाद्य प्रागुक्तं दृष्टान्तद्वयसिद्धमर्थं दार्ष्टान्तिके योजयति–स एवमेवेति । 'यथा' 'एतौ' आदित्योऽग्निश्च सर्वतोमुखत्वात् अन्नादौ 'एवमेव' यजमानोऽपि 'अन्नादः' सर्वतोदिक्कः समत्तुं समर्थो भवति । तस्मादिति, उपपादितस्य परिवर्त्तनस्य विधानम् ॥ १६ ॥

---

१–हस्तयज्ञान्ते वपनम् । का. श्रौ. सू. ५। ३०२ । हस्तयज्ञान्ते–हस्तयज्ञसमिदाधानान्ते इति याज्ञिकदेवः ।

तदु होवाचासुरिः । किन्नु तत्र मुखस्य यदपि सर्वाण्येव लोमानि वपेत यद्वै त्रिः संवत्सरस्य यजते तेनैव सर्वतोमुखस्तेनान्नादस्तस्मान्नाद्रियेत परिवर्तयितुमिति ॥ १७ ॥

इति पञ्चमप्रपाठके चतुर्थं ब्राह्मणम् ॥ ५ ॥ ४ ॥ ( ६. ३. ) ॥

तद्यदाहुः । साकमेधैर्वै देवा वृत्रमघ्नंस्तैर्वेव व्यजयन्त येयमेषां विजिति-स्तामिति सर्वैर्ह त्वेव देवाश्चातुर्मास्यैर्वृत्रमघ्नन्त्सर्वैर्वेव व्यजयन्त येयु-मेषां विजितिस्ताम् ॥ १ ॥

( न्ते ) ते होचुः । केन राज्ञा केनानीकेन योत्स्याम इति स हाग्निरुवाच मया राज्ञा मयाऽनीकेनेति तेऽग्निना राज्ञाऽग्निनाऽनीकेन चतुरो मासः प्राजयँस्तान्ब्रह्मणा च त्रय्या च विद्यया पर्यगृह्णन् ॥ २ ॥

---

तदु होवाचासुरिः । किन्नु तत्र मुखस्य । यदपि सर्वाण्येव लोमानि वपेत । यद्वै—त्रिः संवत्सरस्य यजते । तेनैव सर्वतोमुखः, तेनान्नादः । तस्मान्नाद्रियेत परिवर्तयितुमिति ॥ १७ ॥

इति शुनासीरीययागश्चातुर्मास्ये चतुर्थं पर्व ॥

अथ सर्वशेषः ।

तद्यदाहुः । साकमेधैर्वै देवा वृत्रमघ्नन्, तैर्वेव व्यजयन्त येयमेषां विजितिः—ताम्—इति । सर्वैर्ह त्वेव देवाश्चातुर्मास्यैर्वृत्रमघ्नन् । सर्वैर्वेव व्यजयन्त—येयमेषां विजितिः—ताम् ॥ १ ॥

ते होचुः—' केन राज्ञा केनानीकेन योत्स्यामः ' इति । स हाग्निरुवाच—मया राज्ञा, मयाऽनी-

---

प्रकारान्तरेण सर्वतोमुखत्वं प्रतिपादयन् परिवर्त्तनं न कर्तव्यमिति पक्षान्तरमाह—तदु होवाचेति । ' तत् ' तत्र, तस्मिन् परिवर्त्तनविषये ' आसुरिः ' नाम महर्षिः आह स्म । ' यदपि ' यदि नाम ' सर्वाण्येव लोमानि ' परितो ' वपेत, ' तथापि तत्तन्मुण्डिते देशे ' मुखस्य ' सम्बन्धि किं नामावयवजातं निष्पन्नं भवति ? न खलु कत्वमात्रेण मुखमिति व्यवहर्तुं शक्यते, किन्तु बहुश्रोत्राद्यवयवमत्त्वैव; अतो नैतेन परिवर्त्तनेन सर्वतोमुखत्वं लभ्यत इत्यर्थः । कथं तर्हि सर्वतोमुखत्वं पुरुषस्य ? तत्राह—त्रिः संवत्सरस्येति । ' संवत्सरस्य ' मध्ये वैश्व-देवादिभेदेन ' त्रिः यजते, ' ' तेनैव ' अयं यजमानः ' सर्वतोमुखः; ' कृत्स्नस्य संवत्सरस्य यागेन प्राप्तत्वात् । तेनैवेति । अन्नादहेतुभूतं सर्वतोमुखत्वं प्रकारान्तरेणैव सिध्यति । तस्मादिति । ' तस्मात् ' परिवर्त्तनं ' न आद्रियेत ' इत्यासुरेर्मतस्य निगमनम् ॥ १७ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये

द्वितीयकाण्डे षष्ठाध्यायस्य तृतीयं ब्राह्मणम् ॥ ३ ॥

वैश्वदेवादिषु सर्वेषु परिवर्त्तनं सेतिकर्त्तव्यताकं विधित्सुस्तेषां सर्वेषां वृत्रवधहेतुत्वं विजयहेतुत्वं च समान-मिति प्रतिपादयति—तद्यदाहुरिति । ' तत् ' तत्र उक्तविषये साकमेधानामेव वृत्रवधहेतुत्वं जयहेतुत्वञ्चेति ' यद् ' आहुः ' कथयन्ति, तन्न; तथा ' सर्वैरेव ' हि ' चातुर्मास्यैः ' चतुर्षु—चतुर्षु मासेषु प्रयुज्यमानैर्वैश्वदेवादि-भिर्वृत्रहननं विजयञ्च प्राप्तवन्तो ' देवाः ' इत्यर्थः ॥ १ ॥

तत्र वैश्वदेवेन जितमर्थमाख्यायिकया दर्शयति—ते होचुरिति । ' ते ' देवाः खलु प्रजापतिं पितरमभिलक्ष्य

(हंस्ते) ते होचुः । केनैव राज्ञा केनानीकेन योत्स्याम इति स ह वरुण उवाच मया राज्ञा मयाऽनीकेनेति ते वरुणेनैव राज्ञा वरुणेनानीकेनापरांश्चतुरो मासः प्राजयंस्तान्ब्रह्मणा चैव त्रय्या च विद्यया पर्यगृह्णन् ॥ ३ ॥

(हंस्ते) ते होचुः । केनैव राज्ञा केनानीकेन योत्स्याम इति स हेन्द्र उवाच मया राज्ञा मयाऽनीकेनेति त इन्द्रेणैव राज्ञेन्द्रेणानीकेनापरांश्चतुरो मासः प्राजयंस्तान्ब्रह्मणा चैव त्रय्या च विद्यया पर्यगृह्णन् ॥ ४ ॥

(न्स)स यद्वैश्वदेवेन यजते । (तेऽग्नि) अग्निनैवैतद्राज्ञाऽग्निनाऽनीकेन चतुरो मासः प्रजयति तच्छ्येनी शल्ली भवति लोहः क्षुरः सा या श्येनी शल्ली सा त्रय्यै विद्यायै रूपं लोहः क्षुरो ब्रह्मणो रूपमग्निर्हि ब्रह्म लोहित इव ह्यग्निस्तस्माल्लोहः क्षुरो भवति तेन परिवर्तयते तद्ब्रह्मणा चैवैनमेतत्त्रय्या च विद्यया परिगृह्णाति ॥ ५ ॥

---

केन' इति । तेऽग्निना राज्ञा, अग्निनाऽनीकेन चतुरो मासः प्राजयन् । तान् ब्रह्मणा च त्रय्या च विद्यया पर्यगृह्णन् ॥ २ ॥

ते होचुः–'केनैव राज्ञा केनानीकेन योत्स्यामः' इति । स ह वरुण उवाच–'मया राज्ञा, मयाऽनीकेन' इति । ते वरुणेनैव राज्ञा वरुणेनानीकेनापरांश्चतुरो मासः प्राजयन् । तान् ब्रह्मणा चैव त्रय्या च विद्यया पर्यगृह्णन् ॥ ३ ॥

ते होचुः–'केनैव राज्ञा केनानीकेन योत्स्याम' इति । स हेन्द्र उवाच–'मया राज्ञा मयाऽनीकेन' इति । त इन्द्रेणैव राज्ञा, इन्द्रेणानीकेनापरांश्चतुरो मासः प्राजयन् । तान् ब्रह्मणा चैव त्रय्या च विद्यया पर्यगृह्णन् ॥ ४ ॥

स यद्वैश्वदेवेन यजते–अग्निनैवैतद्राज्ञाऽग्निनाऽनीकेन चतुरो मासः प्रजयति । तत् श्येनी शल्ली भवति । लोहः क्षुरः । सा या श्येनी शल्ली–सा त्रय्यै विद्यायै रूपम् । लोहः क्षुरो ब्रह्मणो रूपम् ।

---

परस्परं वाचम् 'ऊचुः' । केनानीकेनेति । अनीकं सेनामुखम्, अत्र सेनान्यां वर्तते । तेन सेनान्येत्यर्थः चतुरो मास इति । "पद्न०" (पा. सू. ६ । १ । ६३) इत्यादिना मासशब्दस्य मास्–इत्ययमादेशः । तान् ब्रह्मणा चेति । 'तान्' विजितान् मासान् 'ब्रह्मणा' "अग्निर्हि ब्रह्म–" इत्यग्रे विवरिष्यते । अतो ब्रह्मणा अग्निना, 'त्रय्या' वेदत्रयरूपया 'विद्यया च' देवाः 'पर्यगृह्णन्' परितोऽधारयन् ॥ २ ॥

एवं वैश्वदेवस्याग्निप्रमुखत्वमुक्त्वा वरुणप्रघासेषु वरुणस्य प्रामुख्यमेतैर्विजितत्वञ्चाह–ते होचुरिति । अपरांश्चतुर इति । आषाढादीनित्यर्थः । अन्यत् पूर्ववत् । अथ साकमेधेष्विन्द्रस्य प्राधान्यं तैर्विजितत्वं चाह–ते होचुरिति । अपरांश्चतुर इति । 'अपरान्' कार्त्तिकादीनित्यर्थः । अन्यत्पूर्ववत् ॥ ३ ॥ ४ ॥

इत्थं प्रतिकृत्युपन्यासेन वैश्वदेवादिषु त्रिषु पर्वसु प्रतिपादितमर्थं यजमानेऽपि क्रमेण योजयति–स यद्वैश्वदेवेनेत्यादिना । "ब्रह्मणा च त्रय्या च विद्यया पर्यगृह्णन्"–इति यदुक्तम्, तस्य प्रतिकृतिमाह–श्येनीति ।

---

१–'सामान्यं पूर्वेण'–ह० पा० ।

(त्यु) अथ यद्वरुणप्रघासैर्यजते । वरुणेनैवैतद्राज्ञा वरुणेनानीकेनाप-रांश्चतुरो मासः प्रजयति तत्र्येनी शलली भवति लोहः क्षुरस्तेन परि-वर्तयते तद्ब्रह्मणा चैवैनमेतत्त्रय्या च विद्यया परिगृह्णाति ॥ ६ ॥

(त्यु) अथ यत्साकमेधैर्यजते । (त८) इन्द्रेणैवैतद्राज्ञेन्द्रेणानीकेनापरां-श्चतुरो मासः प्रजयति तत्र्येनी शलली भवति लोहः क्षुरस्तेन परिवर्तयते तद्ब्रह्मणा चैवैनमेतत्त्रय्या च विद्यया परिगृह्णाति ॥ ७ ॥

स यद्वैश्वदेवेन यजते । ([1]त८प्रि) अग्निरेव तर्हि भवत्यग्नेरेव सायुज्यꣳ

---

अग्नि र्हि ब्रह्म। लोहित इव ह्यग्निः । तस्माल्लोहः क्षुरो भवति । तेन परिवर्तयते। तद् ब्रह्मणा चैवैन-मेतत्त्रय्या च विद्यया परिगृह्णाति ॥ ९ ॥

अथ यद्वरुणप्रघासैर्यजते । वरुणेनैवैतद्राज्ञा वरुणेनानीकेनापरांश्चतुरो मासः प्रजयति । तत् त्र्येनी शलली भवति । लोहः क्षुरः । तेन परिवर्तयते । तद् ब्रह्मणा चैवैनमेतत् त्रय्या च विद्यया परिगृह्णाति ॥ ६ ॥

अथ यत्साकमेधैर्यजते। इन्द्रेणैवैतद्राज्ञेन्द्रेणानीकेनापरांश्चतुरो मासः प्रजयति। तत् त्र्येनी शलली भवति । लोहः क्षुरः । तेन परिवर्तयते । तद् ब्रह्मणा चैवैनमेतत्त्रय्या च विद्यया परिगृह्णाति ॥ ७ ॥

स यद्वैश्वदेवेन यजते--अग्निरेव तर्हि भवति । अग्नेरेव सायुज्यं सलोकतां जयति। अथ यद् वरुण-

---

त्रिषु स्थानेषु 'एतः' श्वेतवर्णो यस्याः सा त्र्येनी । "वर्णादनुदात्तात्"–(पा. सू. ४ । १ । ३९) इति एतशब्दात् ङीप्, तकारस्य नकारादेशश्च । श्वाविन्नामकस्य मृगस्य लोम 'शलली' । उक्तलक्षणा सा वक्ष्य-माणपरिवर्त्तनहेतुत्वेन स्वीकार्या । तत्र शलल्यास्त्रयीप्रतिरूपत्वमाह–सा येति । 'सा' पूर्वोक्ता 'या' 'त्र्येनी शलली', सा त्रित्वसङ्ख्याविशिष्टगुणोपेतत्वात् त्रय्या विद्यायाः स्वरूपम् । योऽयं 'लोहः' लोहितवर्णस्ताम्र-मयः 'क्षुरः', स 'ब्रह्मणो रूपम्' । कथं ब्रह्मणो लोहितवर्णत्वमिति तदाह–अग्निर्हीति । स च ब्रह्मशब्द-वाच्योऽग्निर्लोहितवर्णः 'इव' हि भवति; 'तस्मात्' लोहितवर्णः 'क्षुरः' ब्रह्मणः प्रतिरूपमित्यर्थः । तेने-त्यादि । 'तेन' क्षुरेण, तया शलल्या च 'परिवर्तयते' शलल्या केशान् विभज्य क्षुरेण परितो वापयेदि-त्यर्थः । ब्रह्मणा चैवेति । 'एनं' यजमानम् 'एतत्' एतेन शललीलोहक्षुरकृतेन परिवर्त्तनेन, अग्निरूपेण तेन 'ब्रह्मणा' क्षुरनिदानभूतेन, 'त्रय्या' वेदत्रयरूपया 'विद्यया' च सर्वतोमुखत्वसम्पादनद्वारा अनया 'परि-गृह्णाति' परितः सर्वासु दिक्षु धारयतीत्यर्थः ॥ ९ ॥

वरुणप्रघासयागस्य वरुणप्रधानकत्वात्तेन जेतव्यं फलमनुक्रामति–अथ यद् वरुणप्रघासैरिति । त्र्येनी शललीत्यादि उक्तार्थम् ॥ ६ ॥

साकमेधयागस्येन्द्रप्रधानकत्वात् तेन जेतव्यं फलमनुक्रामति–अथ यत् साकमेधैरिति ॥ ७ ॥

इत्थं वैश्वदेवादिभिस्त्रिभिः पर्वभिर्द्वादशमासात्मकसंवत्सरस्वरूपावाप्तिं फलत्वेन प्रतिपाद्य, अग्न्यादिदेवता-सायुज्यमपि तेषां फलत्वेन क्रमेणाचष्टे–स यदिति । अग्निरेव तर्हीति । 'तर्हि' तस्मिन् वैश्वदेवे यागेऽनुष्ठिते

---

१–'शल्यकमृगस्याङ्गरुहा सूचिः शलली–इति (८।४।१) आप. श्रौ. सू. व्याख्यायां रुद्रदत्तः ।; २–' द्वितीयस्य वरुणप्रघासपर्वणः फलम् तै. ब्रा. १।४।१०।६।७। द्रष्टव्यम् । ३–'तृतीयस्य साकमेधपर्वणः फलम् तै. ब्रा. १।४।१।४।१०।८। द्रष्टव्यम् । ४–'चतुर्थस्य शुनासीरीयपर्वणः फलमपि तै. ब्रा. १।४।१०।३। अवलोकनीयम् ।

सलोकतां जयत्यथ यद्वरुणप्रघासैर्यजते वरुण एव तर्हि भवति वरुणस्यैव सायुज्यᳫँ सलोकतां जयत्यथ यत्साकमेधैर्यजत ऽइन्द्र एव तर्हि भवतीन्द्रस्यैव सायुज्यᳫँ सलोकतां जयति ॥ ८ ॥

स यस्मिन्ह ऋतावमुं लोकमेति । स एनमृतुः परस्मा ऽऋतवे प्रयच्छति पर उ परस्मा ऽऋतवे प्रयच्छति स परममेव स्थानं परमां गतिं गच्छति चातुर्मास्ययाजी तदाहुर्न चातुर्मास्ययाजिनमनुविन्दन्ति परमᳫँ ह्येव खलु स स्थानं परमां गतिं गच्छतीति ॥ ९ ॥

इति पञ्चमप्रपाठके पञ्चमं ब्राह्मणम् ॥५॥५॥ ( ६. ४. ) ॥ कण्डिका १४०.

---

प्रघासैर्यजते—वरुण एव तर्हि भवति । वरुणस्यैव सायुज्यं सलोकतां जयति । अथ यत्साकमेधैर्यजते—इन्द्र एव तर्हि भवति । इन्द्रस्यैव सायुज्यं सलोकतां जयति ॥ ८ ॥

स यस्मिन् ह ऋतावमुं लोकमेति । स एनमृतुः परस्मा ऋतवे प्रयच्छति । पर उ परस्मा ऋतवे प्रयच्छति । स परममेव स्थानं, परमां गतिं गच्छति—चातुर्मास्ययाजी । तदाहुः—न चातुर्मास्ययाजिनमनुविन्दन्ति—परमं ह्येव खलु स स्थानं, परमां गतिं गच्छतीति ॥ ९ ॥ इति चातुर्मास्ययागाधिकारः ।

---

'सः' यजमानः 'अग्निः' अग्न्यात्मक 'एव भवति' । 'अग्नेरेव सायुज्यम्'—इति, अस्यैव विवरणम् । प्रथममग्नेः सालोक्यं जयति, पश्चात् सायुज्यमिति योजनाक्रमः । "वरुण एव तर्हि"—इत्यादावप्येवं योज्यम् ॥ ८ ॥

अथ म्रियमाणस्य चातुर्मास्ययाजिनो मार्गं ब्रुवन् ब्रह्मलोकप्राप्तिपर्यन्तं फलमाह—स यस्मिन्निति । 'सः' खलु चातुर्मास्ययाजी 'यस्मिन् ऋतौ' 'अमुं' विप्रकृष्टं परं 'लोकम्' 'एति' म्रियते, 'सः' ऋतुः 'एनं' यजमानं स्वस्मात् 'परस्मै ऋतवे' 'प्रयच्छति' इत्यनेन क्रमेण कृत्स्नं संवत्सरं तदात्मकस्य प्रजापतेः संबन्धि परममुत्कृष्टं स्थानमवाप्नोति । प्राप्य च परमामुत्कृष्टां पुनरावृत्तिरहितां गतिं गच्छति । उक्तेऽर्थे विद्वत्प्रसिद्धिं संवादयति—तदाहुरिति । यस्माच्चातुर्मास्ययाजी परमां गतिं प्राप्तवान् 'तत्' तस्मात् अभिज्ञाः 'आहुः' कथयन्ति । किमिति, तदुच्यते—'चातुर्मास्ययाजिनम्' चातुर्मास्येनेष्टवन्तं यजमानम् अन्विष्यन्तो जनाः ब्रह्मलोकादर्वाचीनेषु लोकेषु 'न विन्दन्ति' न लभन्ते । 'परमं ह्येव' इति. तत्र कारणाभिधानम् ॥ ९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये
द्वितीयकाण्डे षष्ठाध्यायस्य चतुर्थं ब्राह्मणम् ॥२॥६॥४॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्ड गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥ २ ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः कार्पासीयं कृपावान् गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृगः शार्करं चार्कतेजा रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ३

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे षष्ठोऽध्यायः समाप्तः ॥२॥६॥

अत्रादितः पंच[illegible]ध्यायसंमितः काण्डद्वयात्मको हविर्यज्ञ ( ऐष्टिकप्रकरण ) प्रतिपादकः
शतपथब्राह्मणान्तर्गतः पंचदशपथसंज्ञको ब्राह्मणभागः समाप्तः ।

इत्येकपादिकानाम द्वितीयं काण्डं समाप्तम् ॥ २ ॥

THE AITAREYA BRĀHMAṆA

(WITH SUKHRPRDĀ SANSKRIT COMMENARY)

Ed. Ananta Krishna Shastri

The Aitareya Brāhamaṇa belong the Aitareya Āraṇyaka and Aitareya Ūpaniṣad. It is written about 600 B. C. The Aitareya Brāhmaṇa is divided into eight books (Panjikas) each containing five lectures. These are subdivided into 285 Kāṇdas. The work is mostly written in verse and only partly in prose The first 16 chapters treat of some sacrifice called Agniṣṭoma lasting for one day. The next two chepters speak of Gavamayana which last for whole year. Chapter 19-24 treat of Dvadasha, chapter 25-32 are connected with-Agnihotra and the last chapters (33-40) with Sāyaṇa Commentery describe Abhiṣeka ceremony, The thirty eighth chapter describes a supposed consecration of Indra and fortieth chapter refers to the benefit of entertaining a purohita. The longest and the most interesting legend found in the Aitareya Brāhmaṇa is the story of Sunahśepha.

ISBN 81-7081-224-0 (1991)

NAG PUBLISHERS

11A/U. A. Jawahar Nagar, Delhi-7 (India).